# ऋक्संहिता

पदपाठसहिता

श्रीस्कन्दस्वामिविरचितं भाष्यम् - वेङ्कटमाधवाचार्यविरचितं भाष्यम् - मुद्गलविरचितं भाष्यम्
- श्रीमत्सायणाचार्यविरचितं भाष्यम् - कपालिशास्त्रिविरचितं ऋक्संहिताव्याख्यानं सिद्धाञ्जनम् -
श्रीद्यादेवविरचिता नीतिमञ्जरी इत्येताभिः व्याख्याभिः सहिता

## चतुर्थं सम्पुटम्

चतुर्थाध्यायस्य सप्तचत्वारिंशत् सूक्तमारभ्य एकषष्ठिसूक्तपर्यन्तम्
पञ्चमाध्यायस्य द्विषष्ठिसूक्तमारभ्य अशीतिसूक्तपर्यन्तम्


प्रधानसम्पादकः
डा. सत्यध्यानाचार्य कट्टी
म्यानेजिंग्‌ट्रस्टी, विद्याधीशस्नातकोत्तरसंस्कृतशोधकेन्द्रः

सम्पादकः
विद्वान् वामनाचार्य आलूर
उपनिदेशकः, विद्याधीशस्नातकोत्तरसंस्कृतशोधकेन्द्रः



प्रकाशनम्
विद्याधीशस्नातकोत्तरसंस्कृतशोधकेन्द्रः, बेङ्गळूरु
(कर्नाटकसंस्कृतविश्वविद्यालयेन मानिता शोधसंस्था)

# ऋक्संहिता

पदपाठसहिता

श्रीस्कन्दस्वामिविरचितं भाष्यम् - वेङ्कटमाधवाचार्यविरचितं भाष्यम् - मुद्गलविरचितं भाष्यम्
- श्रीमत्सायणाचार्यविरचितं भाष्यम् - कपालिशास्त्रिविरचितं ऋक्संहिताव्याख्यानं सिद्धाञ्जनम्
- श्रीयादेवविरचिता नीतिमञ्जरी इत्येताभिः व्याख्याभिः सहिता

## चतुर्थं सम्पुटम्

चतुर्थाध्यायस्य सप्तचत्वारिंशत् सूक्तमारभ्य एकषष्टिसूक्तपर्यन्तम्
पञ्चमाध्यायस्य द्विषष्टिसूक्तमारभ्य अशीतिसूक्तपर्यन्तम्


प्रधानसम्पादकः

डा. सत्यध्यानाचार्य कट्टी

म्यानेजिङ्गट्रस्टी, विद्याधीशस्नातकोत्तरसंस्कृतशोधकेन्द्रः

सम्पादकः

विद्वान् वामनाचार्य आलूर

उपनिदेशकः, विद्याधीशस्नातकोत्तरसंस्कृतशोधकेन्द्रः



***This Volume is published with the grant from the Govt. of Karnataka***





प्रकाशनम्

विद्याधीशस्नातकोत्तरसंस्कृतशोधकेन्द्रः, बेङ्गळूरु

(कर्नाटकसंस्कृतविश्वविद्यालयेन मानिता शोधसंस्था)

**Ṛk Samhitā** Vol.4 - Ṛg Bhāṣyam of Śrī Skandhaswāmy, Śrī Venkatamādhava, Śrī Mudgala, Śrī Sāyaṇāchārya, Siddhāñjana by Śrī Kapāliśāstry, Nītimañjari by Śrīdyādeva

*Chief Editor*
**Dr. Satyadhyanacharya Katti,**

*Editor*
**Vidwan Vamanacharya Alur**

*Published by :*
**Vidyadhisha Post-Graduate Sanskrit Research Centre,**
No.11, Uttaradi Matha Road, Basavanagudi, Bangalore-04.
Phone: 080-79689974. email : vidyadheeshashodha@gmail.com

No. of Pages : xvi+572

No. of Copies : 500

Year of Publication : 2022

Price : Rs.400



Printed at : **Vāgartha,** Hanumanthnagar, Bangalore-560 019.

॥ श्रीदिग्विजयरामो विजयते ॥

श्रीमत्परमहंसपरिव्राजकाचार्यत्वाद्यनेकगुणगणालङ्कृत
श्रीमन्मूलसीतासमेतश्रीमन्मूलरामदिग्विजयरामवेदव्यासादिपादपद्माराधक
श्रीमद्वैष्णवसिद्धान्तप्रतिष्ठापनाचार्यजगद्गुरुश्रीमन्मध्वाचार्यमूलमहासंस्थान
श्रीमदुत्तरादिमठाधीश
श्री श्री १००८ श्रीसत्याभिज्ञतीर्थकरकमलसञ्जात श्री श्री १००८ श्रीसत्यप्रमोदतीर्थवरकुमार
श्री श्री १००८ श्रीसत्यात्मतीर्थश्रीपादानां

## अनुग्रहसन्देशः

"अदुःखमितरत्सर्वं जीवा एव तु दुःखिनः । तेषां दुःखप्रहाणाय श्रुतिरेषा प्रवर्तते" इत्युद्घोषयत्याम्नायः स्वप्रवृत्तिप्रयोजनम् । दुःखं जिहासमानानां सुखं प्रेप्समानानां साधूनाम् अधिकारिणां दुःखहानसुखप्राप्तिसाधनानि समुपदेष्टुं प्रववृतिरे निगमा इति निश्चप्रचम् ।

"यस्य प्रसादात् परमार्तिरूपादस्मात् संसारान्मुच्यते नापरेण", "बन्धको भवपाशेन भवपाशाच्च मोचकः", "त्वं मुक्तिदो बन्धदोऽतो मतो नस्त्वं ज्ञानदोऽज्ञानदश्चासि विष्णो" इत्यादिप्रमाणपर्यालोचनया प्रसन्नः परमेश्वरो नारायण एव संसारान्मोचकः इत्यपि सुद्रढिम्ना समसैत्सीत् ।

सत्येवं, यथा प्रतिपादने भगवान्नारायणः प्रसन्नः स्यात्तथैव श्रुतयः प्रतिपादयन्तीत्येवाङ्गीक्रियेत । "न तादृशी प्रीतिरीड्यस्य विष्णोः गुणोत्कर्षज्ञातरि यादृशी स्यात्" इति भाव[1]भावबोधकप्रमाणचरणशरणीकरणेन तु गुणभृद्गु[2]णोत्कर्ष एव सकलनिगममहातात्पर्यगोचर इत्यत्र नास्ति संशीतिगन्धः ।

यथाहुष्टीकाकृत्पादा जयतीर्थश्रीमच्चरणाः – सर्वाण्यपि हि वेदवाक्यान्यसङ्ख्येयकल्याणगुणाकरं सकलदोषगन्धविधुरमेकरूपमेव ब्रह्म नारायणाख्यं प्रतिपादयन्ति । किन्तु कानिचित् सर्वज्ञत्वसर्वेश्वरत्वसर्वान्तर्यामित्वसौन्दर्यौदार्यवीर्यादिगुणविशिष्टतया, कानिचिदपहतपाप्मात्वनिर्दुःखत्वप्राकृतभौतिकविग्रहरहितत्वादिदोषाभावविशिष्टतया, कानिचिदतिगहनताज्ञापनाय वाङ्मनसाद्यगोचरत्वाद्याकारेण, कानिचित् सर्वपरिहारेण तस्यैवोपादानायाद्वितीयत्वेन, कानिचित् सर्वसत्ताप्रतीतिप्रवृत्तिनिमित्तताप्रतिपत्त्यर्थं सर्वात्मकत्वे-

---

१. भावः - विष्णुः । २. गुणभृद् - विष्णुः ।

नेत्येवमाद्यनेकप्रकारैः परमपुरुषं बोधयन्ति । ततो व्याकुलबुद्धयो गुरुसम्प्रदायविकला अश्रुतवेदव्याख्यातारः सर्वत्राप्येकरूपतामननुसन्दधाना वेदं छिन्दन्ती''त्यादि ।

तथा अन्यत्रापि– ''यो हि सात्विकप्रकृतिर्लोकप्रवादात् कार्यत्वादिलिङ्गानुसन्धानाद्वा स्वतनुभवनादेः कर्तारं सामान्यतो जानन् स्नेहमाहात्म्यज्ञानाभ्यां तद्विशेषज्ञानार्थमुत्कण्ठितमानसस्तत्संस्कारवशाचान्यदगणयन् वर्तते तं प्रत्याप्तो बन्धुरिवायं समस्तो वेदस्तत्स्वरूपं स्वप्राधानमेव प्रतिपादयति । ततो वाक्यार्थज्ञानादवाप्तपरमानन्दस्तत्साक्षात्कारं कामयते । तं प्रति तदुपासना विधीयते । सा च प्रक्षीणान्तःकरणमलस्यैव सम्भवतीति तदर्थं कर्मविधयः । अथवा यः सांसारिकविविधदुःखं जिहासुः परमानन्दं च प्रेप्सुस्तत्साधनं जिज्ञासते, तं प्रति परमेश्वर एव प्रसन्नः परमेष्टसाधनतयोपदिश्यते । ततः कथमसौ प्रसीदतीत्यपेक्षायां तत्साक्षात्कारस्तदङ्गतया कर्माणीत्युभयथा स्वप्रधान एव परमेश्वरो वेदार्थः इति'' ।

तदेतद्वैदिकं महातात्पर्यं श्रीमदानन्दतीर्थकृतभाष्याधीत्यैव ज्ञायते । भाष्यश्चानन्दतीर्थीयं श्रीमज्जयतीर्थकृतटीकासहायेनैव परिज्ञाततात्पर्यं भवतीति विदितमेव विपश्चिदपश्चिमानाम् । अतः सकलवेदाध्ययनप्रक्रमप्रदर्शनाय ऋग्वेदसंहिताया आद्याध्यायत्रयं समन्त्रार्थमञ्जरीटीकमध्वभाष्योपेतप्रकाश्यमानमस्ति । समग्रापि संहिता सविमर्शतौलनिकाध्ययनसौकर्याय स्कन्दस्वामि-वेङ्कटमाधव-मुद्गल-सायणभाष्य-सिद्धाञ्जन-नीतिमञ्जर्यादियुता प्रकाश्यते । तदिदं प्रकाशनं सुप्रसिद्धनाम्ना विद्याधीशस्नातकोत्तरसंस्कृतशोधकेन्द्रेण क्रियत इति महान् सन्तोषपारावारः । विद्याधीशस्नातकोत्तर शोधकेन्द्रस्य धर्मदर्शिनां मार्गदर्शकानां डा. पं. कट्टि सत्यध्यानाचार्याणां मार्गदर्शने संशोधकाः विद्वान् वामनाचार्य आलूर् चतुर्थपञ्चमाध्यायोः संशोधने सम्पादने च कृतभूरिपरिश्रमः । वैदिकग्रन्थसंशोधनं नाल्पस्य तपसः फलम् । सम्यग्व्याख्यानयोजनां विधाय मुद्राराक्षसान् परिहृत्य यथा पिपठिषवः पठेयुः सपटिम, तथा समपाद्यैतैरिति महानानन्दथुः । अस्याः संस्थायाः स्थापकान् दि. प्रो. कृष्णाचार्यान् पाण्डुरङ्ग्युपनामधेयानपि साभिमानं संस्मरामः । तथा अन्येऽपि अस्याः संस्थायाः विश्वस्ताः धर्मदर्शिनः अस्य ग्रन्थस्य प्रकाशने महतीं सेवां व्यधुः । सर्वानेतान् अस्मदुपास्याः श्रीमूलसीतासमेतश्रीमन्मूलरामदिग्विजयरामवेदव्यासवंशरामप्रसन्नविठ्ठलाः ज्ञानभक्तिवैराग्यादिदानेन सच्छास्त्रपाठप्रवचनसंशोधनसम्पादनादिवाङ्मयसेवासौभाग्यदानेन च समनुगृह्णन्त्विति सम्प्रार्थयामहे ।

श्रीमत्सत्यात्मतीर्थ श्रीपादङ्गळवरु
उत्तरादिमठ

## प्राक्वो वाचः

"वेदानधीत्य वेदौ वा वेदं वाऽपि यथाक्रमम् ।" इति वचनानुसारेण वेदानां सर्वेषां अन्यतमस्य वा स्वप्रज्ञानुसारेणाध्ययनमुपनीतेन कर्तव्यम् । एकवेदपक्षे पितृपितामहादिपरम्पराप्राप्त एव वेदोऽध्येतव्य इत्यभिप्रेत्य "स्वाध्यायोऽध्येतव्यः" इति श्रुतिरस्मान् श्रावयत्यध्ययनाय स्वशब्दाम्नानेन । तच्चाध्ययनं न काम्यं किन्तु नित्यम् । अन्यथा पातित्यं स्यात् । "वेदस्याध्ययनं नित्यमनध्ययने पातात्" इति हि पुरुषार्थानुशासने सूत्रम् ।

यद्यप्ययमुपनीतो वटुः काव्यनाटकादिकं शृणोति तथापि निरर्थकमेव तच्छ्रवणम् । तेन सुकृतमार्गज्ञानाभावात् । अत एव मनुरप्यनुमन्यते–

**योऽनधीत्य द्विजो वेदानन्यत्र कुरुते श्रमम् ।**
**स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः ।।** इति ।

अत एव स्वाध्यायोऽवश्यमध्येतव्यः । परं भारतभणितिरेवं श्रूयते–

**चतुर्वेद्यपि यो विप्रः सूक्ष्मं ब्रह्म न विन्दति ।**
**वेदभारभराक्रान्तः स वै ब्राह्मणगार्दभः ।।** इति ।

केवलं वेदाध्ययनेन यो भारं बिभर्ति स भारवाही गार्दभः एव । वेदार्थभूतस्य ब्रह्मणोऽविज्ञानेनेति निन्दैव कृता महाभारते । अतो वेदार्थज्ञानमावश्यकम् । तच्चार्थज्ञानं व्याख्यानसापेक्षम् । वेदार्थस्तु विना सर्वज्ञोपदेशं देवानामपि दुरधिगम इति परमदयालुभिः श्रीमदानन्दतीर्थभगवत्पादैः तज्ज्ञापनाय ऋग्भाष्यं निरमायि । तच्च श्रीहरेरतितुष्टिकरं परममाङ्गलिकमिति तन्मङ्गलपद्य एव व्यक्तम् । ऋक्संहितार्थकथनमुखेन तत्र सर्वोऽपि वेदार्थो निर्णीयते । तदिदमुक्तं श्रीमच्चन्द्रिकाचार्यैः–

**ऋग्भाष्यं च चकारासौ सर्ववेदार्थनिर्णयम् ।**

शब्दसंक्षेपेऽपि बह्वर्थपरस्यास्य भाष्यस्य टीका श्रीमज्जतीर्थश्रीचरणैर्विनिर्मिता । तस्या अपि दुरधिगमत्वात् श्रीराघवेन्द्रश्रीचरणैः मन्त्रार्थमञ्जरी व्यरचि । सायणपूर्वा नैके व्याचक्रिरे ऋग्वेदम् । सायणाचार्योऽपि व्याचकार ऋक्संहिताम् । परं सम्पूर्णं व्याख्यानं सायणाचार्यवेङ्कटमाधवाचार्ययोरेव विराजते । परमेता व्याख्याः विशकलिततया नैकाः संस्थाः मुद्रापयामासुः । इदानीं अध्ययन-

विमर्शनसौकर्याय विद्याधीशस्नातकोत्तरसंस्कृतशोधकेन्द्रेण ऋग्भाष्यं, जयतीर्थीया टीका मन्त्रार्थमञ्जरी, स्कन्दस्वामिभाष्यं, वेङ्कटमाधवीयं भाष्यं, मुद्गलभाष्यं, सायणभाष्यं, कपालिशास्त्रि-भाष्यं, नीतिमञ्जरीति नव व्याख्याः एकत्रैव क्रोडीकृत्य मुद्राप्यन्ते इत्येतन्महन्मोदावहमस्माकम् ।

तदिदं भाष्यं मुद्रापयितुं अनुज्ञाय सन्देशं वितीर्य महदनुग्रहं चक्रुर्मान्याः धन्याः संस्थायाः प्रधानपोषकाः श्रीमदुत्तरादिमठाधीशाः **श्रीश्रीमत्सत्यात्मतीर्थश्रीचरणाः** । तेभ्यो नतिशत-तर्तीरर्पयामि ।

**प्रो. के.टि. पाण्डुरङ्गि** महोदयानां आशयः आसीत् यद्वेदव्याख्यानं शोधकेन्द्रेण प्रकाशनीयमिति । तदिदं वेदव्याख्यानं शोधकेन्द्रेण कृतमस्ति । तेषामाशयः पूरितः तेभ्यः प्रणमाञ्जलिं समर्पयामि ।

मुद्रणमिदं यथाशोभं पठनानुकूलं समपीपदत् कोविदः अस्याः संस्थाया संशोधकः विद्वान् आलूरु वामनः । अयञ्च विद्वान् नैकग्रन्थान् समपादयत् । ते च मुद्रापिता विद्याधीशशोधकेन्द्रेण द्वैतवेदान्ताध्ययनसंशोधनप्रतिष्ठानेन च । तमेनं बुधवरमभिनन्दामः । इतोऽपि नैके ग्रन्थाः अनेन विदुषा सम्पाद्यन्तामित्याशास्महे ।

अस्या ऋक्संहिताया मुद्रापणे नैकसंस्थानां ग्रन्था उपायुज्यन्त । ताभ्यः संस्थाभ्यः, संस्थाधिकारिभ्यश्च हार्दान्यभिनन्दनानि संसूचयामः ।

तामेतां संहितां अल्पीयसि काले व्यमुद्रापयन् वागर्थमुद्रणालयाधिकारिणः । तान् सर्वान् अभिनन्दामः ।

सैषा संहिता अध्येतृणां विदुषां विद्यार्थिनाञ्चोपकृतये भूयादित्याशास्महे ।

**डा. कट्टि सत्यध्यानाचार्यः**
*म्यानेजिङ्गट्रस्टी-प्रधान व्यवस्थापकः*
**विद्याधीशशोधकेन्द्रः, बेङ्गलूरु-४.**

# निदेशकवचांसि

## वेदः

संस्कृतसाहित्ये वेदानां स्थानं सर्वोपरि वर्तते । भारते धर्मव्यवस्था वेदायत्तैव । वेदो धर्म-निरूपणे स्वतन्त्रभावेन प्रमाणम्, स्मृत्यादयस्तु तन्मूलकतया । श्रुतिस्मृत्योर्विरोधे श्रुतिरेव गरीयसी । न केवलं धर्ममूलतयैव वेदाः समादृताः, अपि तु विश्वस्मिन् सर्वप्राचीनग्रन्थतयाऽपि । प्राचीनानि धर्मसमाजव्यवहारप्रभृतीनि वस्तुजातानि बोधयितुं श्रुतय एव क्षमन्ते ।

प्रधानतया वेदो द्विविधः मन्त्ररूपो ब्राह्मणरूपश्च । मन्त्रसमुदाय एव संहिताशब्देन व्यवहृतः । ब्राह्मणरूपो वेदभागस्तु संहिताभागस्य व्याख्यारूप एव । स चायं ब्राह्मणभागो यागस्वरूपबोधकतया प्रथितः । ब्राह्मणग्रन्थोऽपि त्रिधा विभक्तो भवति– ब्राह्मणम्, आरण्यकम्, उपनिषदश्च । यज्ञस्वरूपप्रतिपादको ब्राह्मणभागः । अरण्ये पठिताः यज्ञस्याध्यात्मिकं रूपं विवेचयन्तो वेदभागा आरण्यकानि । उपनिषदो ब्रह्मबोधिकाः मोक्षसाधनानि, अयमेव भागो वेदस्यान्तरूपतया वेदान्त इत्युच्यते । ब्राह्मणभागो गृहस्थानामुपयोगी, आरण्यकभागो वान-प्रस्थमाश्रितानाम्, उपनिषद्भागश्च सन्यस्तानामुपयोगीत्यपि कथयितुं शक्यते । न केवलं सन्यासिनां किन्तु सर्वेषां साधकानामपि उपयोगी ।

## वेदशब्दार्थः

वेद्यन्ते धर्मादयः पुरुषार्था यैस्ते वेदाः, इति बह्वृचप्रातिशाख्यम् । सायणस्तु अपौरुषेयं वाक्यं वेद इत्याह । इष्टप्राप्त्यनिष्टपरिहारयोरलौकिकमुपायं यो वेदयति स वेद इति भाष्यभूमिकायामुक्तम् । तत्र प्रमाणमपि तत्रैवोक्तम्–

**'प्रत्यक्षेणानुमित्या वा यस्तूपायो न विद्यते ।**
**एनं विदन्ति वेदेन तस्माद् वेदस्य वेदता ॥'**

आम्नायः, आगमः, श्रुतिः वेदः, इति सर्वे शब्दाः पर्यायाः ।

यथोक्तं 'वेदास्ते नित्यविन्नत्वात् श्रुतयश्चाखिलैः श्रुतेः । आम्नायोऽनन्ययापाठात्' इति । नित्यं विद्यमानत्वात् नाम नित्यत्वात् वेदाः इति कथ्यन्ते । अनादिकालादारभ्य सर्वैः पुरुषैः श्रुता एव । न तु कृताः । अतः श्रुतय इत्यच्यन्ते । एकयैव रीत्या निरन्तरं आम्नातत्वात् पठितत्वात्

आम्नाय इत्युच्यन्ते । ''पान्ति शंसाधनाश्चेति वेदाः पशव ईरिताः'' इत्युक्तेः परतत्वस्य ज्ञानमापाद्य निरन्तरं पालनात् सुखसाधनत्वाच्च वेदाः पशवः इतीर्यन्ते ।

सोऽयं वेदस्त्रयीति पदेनापि व्यवह्रियते, वेदरचनायास्त्रिप्रकारकत्वेन त्रयीति कथ्यते । या खलु रचना पद्यमयी सा ऋक्, या गद्यमयी सा यजुः, या पुनः समग्रा गानमयी रचना सा सामेति कथ्यते, तदुक्तं जैमिनिना–

'तेषामृग् यत्रार्थवशेन पादव्यवस्था । गीतिषु सामाख्या । शेषे यजुः शब्दः' इति । द्वितीयाध्याये प्रथमपादे ३२–३३–३४ सूत्राणि ।

यास्कस्तु– 'ता ऋचः परोक्षकृताः प्रत्यक्षकृताः आध्यात्मिक्यश्चेति भेदात् त्रिविधाः । ऋक्शब्दोऽत्र मन्त्रवचनः । यासु प्रथमपुरुषक्रियास्ताः परोक्षकृताः, यासु मध्यमपुरुषक्रियास्ताः प्रत्यक्षकृताः यासु चोत्तमपुरुषक्रियास्ता आध्यात्मिक्यः' इति ।

अतः यत्र कुत्रापि प्राचीनग्रन्थे वेदार्थे 'त्रयी'ति पदं प्रयुक्तं तत्र सर्वत्र रचनात्रैविध्यं मनसि कृतं बोध्यम् ।

यत्तु 'ऋग्यजुः सामाख्यास्त्रय एव वेदाः पूर्वमासन्, तद्यथा–'

**'अग्नेर्ऋचो वायोर्यजूंषि सामादित्यात् ।' छा.ब्रा.६.१७**

**'अग्निवायुरविभ्यस्तु त्रयं ब्रह्म सनातनम् ।'**
**दुदोह यज्ञसिध्यर्थमृग्यजुःसामलक्षणम् ।। मनु.१.१३**

अतो वेदानां त्रित्वादेव तत्र त्रयीति व्यवहारो वास्तवो न प्रकारभेदकृतः' इति तदयुक्तम्, ऋग्वेदेऽपि अथर्ववेदनामोल्लेखदर्शनात् । भगवता पतञ्जलिनाऽपि 'चत्वारो वेदाः साङ्गाः सरहस्याः' इति पस्पशाह्निके स्पष्टमुक्तम् । छान्दोग्यब्राह्मणे मनुस्मृतौ च यज्ञोपयोगिनो वेदा एव परामृष्टाः, नाभिचारिकः सामवेद इति त्रित्वमेवोक्तम्, एवं परत्रापि । जैमिनिस्तु मन्त्राणां त्रिप्रकारकतामेव लक्षितवान्, न वेदसङ्ख्यां व्यवस्थापितवान् । अतो वेदाश्चत्वार एव, त्रयीति व्यवहारस्तु प्रकारकृतः । अथर्ववेदीयमन्त्रा अपि पूर्वोक्तप्रकारत्रयान्यतमरूपा एवेति बोध्यम् ।

## ऋग्वेदः

ऋच्यते स्तूयते यया सा ऋक् । तादृशीनामृचां समूह एव ऋग्वेदः । यत्रार्थवशेन

पादव्यवस्था सा ऋगिति मीमांसकाः । स ऋग्वेदः सूक्तमण्डलभेदेन द्विधा विभक्तः । तत्र सूक्तं चतुर्विधम्– ऋषिसूक्तदेवतासूक्तच्छन्दःसूक्तार्थसूक्तभेदात् । एकर्षिदृष्टमन्त्राणां समूहो ऋषिसूक्तम् । एकदेवताकमन्त्राणां समूहो देवतासूक्तम् । समानच्छन्दसां मन्त्राणां समूहो नाम च्छन्दःसूक्तम् । यावदर्थसमाप्तानां मन्त्राणां समूहोऽर्थसूक्तम् । सुष्ठूक्तत्वात्सर्वं सूक्तमित्याख्यायते ।

ऋग्वेदः सोऽयं मण्डलानुवाकवर्गभेदेन अष्टकाध्यायसूक्तभेदेन च द्विधा। बालखिल्यसूक्तानि विहाय सम्पूर्णायामृग्वेदसंहितायां दशमण्डलानि, पञ्चाशीतिश्चानुवाकाः, अष्टोत्तरशतद्वयमिताश्च वर्गाः इति प्रथमो भेदः । अष्टौ अष्टकानि, चतुष्षष्टिरध्यायाः, सप्तदशोत्तरसहस्राणि च सूक्तानि इति द्वितीयो भेदः । सर्वेऽपि मन्त्राः चतुर्दशसु छन्दस्सु विभक्ता बोध्याः । ऋग्वेदगतमन्त्रद्रष्टारो ऋषयः गृत्समद विश्वामित्र वामदेव अत्रिभरद्वाजवसिष्ठादयः सन्ति ।

ऋग्वेदस्य दशसु मण्डलेषु नवमं मण्डलं पवमानमण्डलनाम्ना प्रथितम् । तत्र हि सोमविषयकमन्त्राणां सङ्कलनं कृतम् । पवमानः–सोमः । पूर्वोक्ताः सप्तापि मन्त्रद्रष्टारो ऋषयो द्वितीयमण्डलतः सप्तमण्डलपर्यन्तगताभिः ऋग्भिः सम्बद्धाः, दशममण्डले मन्त्रा नानर्षिसम्बद्धाः । दशमे मण्डले न केवलं देवतास्तुतय एव, अन्यप्रकारका अपि मन्त्रा दृश्यन्ते ।

वेदार्थहीनस्य भारवाहत्वमुक्तं वेदाङ्गे निरुक्ते–

**स्थाणुरयं भारहारः किलाभूदधीत्य वेदं न विजानाति योऽर्थम् ।**
**योऽर्थज्ञ इत्सकलं भद्रमश्नुते नाकमेति ज्ञानविधूतपाप्मा ।।**

स्वयं ऋग्वेदेऽपि श्रूयते अर्थज्ञानस्य प्राशस्त्यम् ।

**उत त्वः पश्यन् न ददर्श वाचमुत त्वः शृण्वन् न शृणोत्येनाम् ।**
**उतो त्वस्मै तन्वं विसस्रे जायेव पत्य उशती सुवासाः ।। १०.७१.४ ।।**

अविज्ञातवागर्थ एकः मनसा पर्यालोचयन्नपि ऋग्यजुस्सामादिलक्षणां वाचं न ददर्श । उत अविज्ञातार्थ एकः सुमुखेनोच्चार्यमाणं वाचं शृण्वन्नपि न शृणोत्येव । कुतः? श्रवणफलं अर्थमानमेव। तन्नास्ति अतो न शृणोति ।

अप्येकस्मै विज्ञातवागर्थाय सबाह्याभ्यन्तरं तन्वं स्वशरीरं प्रकाशयति । कथम्? यथा भार्या सम्भोगं, अपत्यं भर्तारं च कामयमाना शोभनवासाः ऋतुकाले चतुर्थेऽहनि निर्णिक्तवस्त्रा सती सम्भोगकाले भर्त्रे स्वशरीरं सबाह्याभ्यन्तरं दर्शयति एवम् ।

वाक्सङ्घ्ये वाचा क्रियमाणे सखिकर्मणि विद्वत्सखिसंकथनलक्षणे स्थिरपीतं स्थिरज्ञानं परिनिष्ठितविद्यं प्रशंसन्ति विद्वांसः । सारभूतेषु निरूपणीयेष्वर्थेषु नैनमर्थज्ञं बहिष्कुर्वन्ति ।

यथा वन्ध्या पीना गौः किमियं द्रोणदुघेति मायामुत्पादयन्ती चरति एवं वेदपाठं ब्रुवाणश्चरतीत्यपि वेदो निगदति ।

वेदमधीत्य वेदार्थो ज्ञातव्यः । श्रौतस्मार्तकर्म कर्तव्यं फलत्यागपूर्वकम् । कृतेन स्वशाखोक्तकर्मणा चित्तशुद्धिर्भविष्यति । तत्कारणात् वेदार्थज्ञानमवश्यं साधयितव्यम् ।

## वेदैश्च सर्वैरहमेव वेद्यः

वेदार्थस्तु भगवानेव । भगवानेव परममुख्यवृत्यावेदप्रतिपाद्यः । मुख्यवृत्या यज्ञादिरपि प्रतिपाद्यो भवति । तदेतत् आथर्वणोपनिषदि उक्तम्–

तस्मै स होवाच द्वे विद्ये वेदितव्ये परा चैवापरा च ।

तत्रापरा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति । अथ परा यया तदक्षरमधिगम्यते ।

वेदानां भगवतो बोधकत्वे परविद्यात्वम् । अन्यदा अपरविद्यात्वम् ।

ता एव परमा विद्या यदा विष्णोस्तु वाचकाः ।।

श्रुतिस्मृतीतिहासपुराणेषु दरीदृश्यते भगवान् सर्ववेदप्रतिपाद्य इति ।

१) काठके श्रूयते– सर्वे वेदा यत्पदमामनन्ति; इति ।

२) ऐतरेये च– ता वा एताः सर्वा ऋचः सर्वे वेदाः सर्वे घोषाः एकैव व्याहृतिः प्राण एवेति ।

गीतायां, वेदैश्च सर्वैरहमेववेद्यः'' श्रीकृष्णेनाप्युक्तम् ।

वेदे रामायणे चैव पुराणे भारते तथा ।

आदावन्ते च मध्ये च विष्णुः सर्वत्र गीयते ।

**सर्वे शब्दा विष्णुबोधकाः**

नामवाचिनः अग्न्यादिशब्दा अपि हरिमेव प्रतिपादयन्ति ।

यो देवानां नामधा एक एव ।

इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः ससुपर्णो गरुत्मान् ।

सर्वनामा सर्वकर्मा सर्वलिङ्गः ।

सर्वच्छन्दोभिधो ह्येषः सर्वदेवाभिधो ह्यसौ ।

बृंहणाद् ब्रह्मनामासौ ऐश्वर्यादिन्द्र उच्यते

आसमन्तात् काशते यदाकाशो मुख्यतो हरिः

बलज्ञानस्वरूपत्वाद्वायुरग्निरगं नयन् ।

आप आपालनाच्चैव पृथिवी प्रथितो यतः ॥

एवं नानाविधैः शब्दैः एक एव त्रिविक्रमः ।

वेदेषु सपुराणेषु गीयते पुरुषोत्तमः ॥

सर्वे वेदाः परममुख्यवृत्या विष्णुं बोधयन्ति । तच्चेत्थम्–

ओङ्कारो ब्रह्मवाचकः । ओमिति ब्रह्मेति श्रुतेः । ओङ्कारस्यार्थः गुणपूर्णत्वम् । ब्रह्मशब्दस्यापि स एवार्थः । अतः ओंकारो गुणपूर्णस्य ब्रह्मणो वाचकः ।

ओंकारार्थः एव व्याहृतयः । तिस्रो व्याहृतयः अ, उ, म, इति वर्णत्रयस्य व्याख्यानरूपाः । व्याहृतयश्चेमाः भूः भुवः सुवः । गुणपूर्णाभिधायकाः । अतो भगवद्वाचिकाः । प्रणवार्था व्याहृतयः । व्याहृतेर्व्याख्यानं त्रिपदा गायत्री । त्रिपदाया गायत्रेर्व्याख्यानं वर्गत्रयात्मकं पुरुषसूक्तम् । वर्गत्रयात्मकस्य पुरुषसूक्तस्य व्याख्यानं त्रयो वेदाः । सर्वो वेदः ओङ्कारार्थरूपः । ओङ्कारार्थश्च ब्रह्म, विष्णुः । ओङ्कारेणैव सर्वा वाक् सन्तृण्णा । वेदाः विष्णुपराः विष्णपरोङ्कार-व्याख्यानत्वात् इति सर्वो वेदः विष्णुपर इति बोधयामास श्रीमदानन्दतीर्थभगवत्पादाचार्यः स्वीये ऋग्भाष्ये ।

अङ्गीचकार सायणाचार्यो न व्याचकार

सायणोऽप्याचार्यो मनुते सर्वो वेदः परमेश्वरस्य भगवतो हरेः प्रतिपादक इति । तथा हि तस्य वाक्यानि आदावेवोपाद्धाते–

अत्र केचिदाहुः ऋग्वेदस्यैव प्राथम्येन सर्वत्राम्नानात्, अभ्यर्हितं पूर्वं इति न्यायेनाभ्यर्हितत्वात् तद्व्याख्यानमादौ युक्तम् । प्राथम्यञ्च पुरुषसूक्ते स्पष्टम्–

तस्माद्यज्ञात् सर्वहुतः ऋचःसामानि जज्ञिरे ।
छन्दांसि जज्ञिरे तस्माद्यजुस्तस्मादजायत ।। इति ।

तस्मात् "सहस्रशीर्षा पुरुषः" इत्युक्तात् परमेश्वरात् यज्ञात् यजनीयात् पूजनीयात् सर्वहुतः सर्वैः हूयमानात् । यद्यपि इन्द्रादयः तत्र तत्र हूयन्ते तथापि परमेश्वरस्यैव इन्द्रादिरूपेण अवस्थानादविरोधः । तथा च मन्त्रवर्णः–

इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः ससुपर्णो गरुत्मान् ।
एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः ।। ऋ.१.१६४.४६

वाजसनेयिनश्चामनन्ति–

तत्तदिदमाहुरमुं यजामुं यजेत्येकैकं देवम् ।
एकस्यैव सा विसृष्टिः एष उ ह्येव सर्वे देवाः ।।
तस्मात् सर्वैरपि परमेश्वर एव हूयते ।

इत्येव सर्ववेदप्रतिपाद्यो भगवान्नारायण इत्याह परं न व्याचख्यौ तत्परतया । केवलं कर्मपरतया रचयामास व्याख्याम् ।

ऋषिच्छन्दोदेवताः–

अविदितार्षछन्दोदैवतब्राह्मणेन मन्त्रेण यजनयाजनादिकं अध्ययनाध्यापनञ्च अनर्थनिदानम् । अतो ऋष्यादिज्ञानमावश्यकम् । तच्च ज्ञापयामास श्रीमदानन्दतीर्थभगवत्पादाचार्यः । सर्वविद्यानां मुनिः भगवान् पुरुषोत्तमः । अस्य महतो भूतस्य निःश्वसितमेतदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरसः इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि

व्याख्यानान्यस्यैवेतानि निःश्वसितानीति श्रुतिः ऋग्वेदादिकमस्य विष्णोरेव निश्वसितं प्राह । निश्वसितमिति हि निश्वसितमिव अनायासेन आदिकाले तेनोच्चरितमिति । हयग्रीवादिमा विद्या निश्वासिताः उपदिष्टाः स एव प्रथमदृष्टा ।

परमेश्वरेण युगपत्समुदीरितं अखिलं विद्याजातं सकृन्निगदमात्रेण ब्रह्मा चतुर्मुखो जग्राह । रुद्रशेषविपाः ब्रह्मणो जगृहुः । तेभ्यो शक्राद्याः । तेभ्यः दक्षाद्याः । तेभ्यः सनकादयः मनवश्च । सनकादयश्च जगति उपदिदिशुः ।

१. हयग्रीवरूपी परमात्मा श्रीः
२. चतुर्मुखब्रह्मा वायुः ब्रह्माणी भारती च
३. रुद्रशेषविपाः तेषां पत्न्यः
४. शक्राद्याः एतेषां पत्न्यः
५. दक्षाद्याः
६. सनकाद्याः
७. मनवः । इतीयमृषिपरम्परा ।

**हयग्रीवादिमा विद्या श्वसितत्वेन निःसृताः ।**
**ब्रह्मणा स्वीकृतास्ताश्च रुद्रशेषविपा अपि ।**
**दक्षाद्या सनकाद्याश्च शक्राद्या मनवस्तथा ।**
**जगृहुस्ते च विश्वस्मिन् चक्रुर्व्याप्तास्ततोऽखिलाः ।**
**सकृन्निगदमात्रेण गृहीतं ब्रह्मणाऽखिलम्**
**अन्तर्गतस्य व्याप्तस्य प्रसादान्नित्यशक्तितः ।**

वेदाः परममुख्यवृत्या भगवद्बोधकाः मुख्यवृत्या अग्न्यादिबोधकाः । तदिदं मनसि निधाय श्रीमदानन्दतीर्थभगवत्पादाचार्याः अग्न्यादिदेवतापरत्वेन, तदन्तर्गतविष्णुपरत्वेन, अध्यात्म-परत्वेनार्थं प्रदर्शयामासुः । पुराणञ्च इदं रीतित्रयं प्रदर्शयति ।

**त्रयोऽर्थाः सर्ववेदेषु दशार्थाः सर्वभारते ।**
**विष्णोः सहस्रनामाऽपि निरन्तरशतार्थकम् ।।**

देवताश्च ज्ञापयामास श्रीमदानन्दतीर्थभगवत्पादाचार्यः सर्वस्यापि वेदस्य ।

नारायणः साक्षात् सर्ववेदप्रतिपाद्यः ।

भगवति प्रसिद्धाः पुरुषसूक्तादिविद्या वर्जयित्वा अन्यासां विद्यानां श्रीश्च देवता ।

श्रीदेव्यां प्रसिद्धाः अम्भृणीसूक्ताद्या वर्जयित्वा अन्यासां ब्रह्मैव देवता ।

पूर्वस्यां देवतायां प्रसिद्धा विद्या वर्जयित्वा अन्यासां विद्यानां तारतम्यक्रमेणैव शक्रान्ता देवता मताः ।

**देवता सर्वविद्यानां स्वयं नारायणः प्रभुः ।**
**ऋते तत्र प्रसिद्धाश्च देवता श्रीस्तथाऽत्र च ।**
**ऋते प्रसिद्धा ब्रह्मैव ततस्तेन क्रमेण च ।**
**पूर्वप्रसिद्धवर्जं तु शक्रान्ता देवता मताः ॥**

एतत्सर्वं विव्रियते श्रीमज्जयतीर्थश्रीचरणैः भाष्यटीकायाम् ।

छन्दांसि छन्दोऽभिमानिदेवताश्च प्रदर्श्यन्ते भाष्यकारैः ।

१) गायत्री, बृहती– श्रीः, ब्रह्माणी, भारती गरुडः, स्वाहा, तारा,
२) अनुष्टुप्– ब्रह्माणी, रोहिणी,
३) त्रिष्टुप्– इन्द्राणी
४) जगती– वारुणी
५) पङ्क्तिः– शची
६) उष्णिक्– सौरी ।
७) जगती– सर्वदेवस्त्रियः
८) विराट्– मित्रावरुणभार्ये

नात्र देवतानां छन्दसामैक्यमुच्यते किन्तु तदभिमानितया तत्तन्नामवत्वम् । तच्च बह्वीनां देवतानामेकच्छन्दोऽभिमानित्वेन एकनामवत्वं न विरुध्यते । इत्येवमादिरूपेण बहवो विषया निरूपिताः स्वीये ऋग्भाष्ये ।

तदिदं श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितं ऋग्भाष्यं प्रथममण्डले चत्वरिंशत्सूक्तपर्यन्तमस्ति ।

श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितं ऋग्भाष्यं, श्रीमज्जयतीर्थश्रीचरणविरचिता ऋग्भाष्यटीका, श्रीराघवेन्द्रतीर्थविरचिता मन्त्रार्थमञ्जरीटीका, श्रीस्कन्दस्वामिविरचितं भाष्यं, वेङ्कटमाधवाचार्यभाष्यं, मुद्गलभाष्यं, सायणभाष्यं द्यादेवविरचिता नीतिमञ्जरी, कपालिशास्त्रिविरचितं सिद्धाञ्जनं इति उद्गीथ इति च नैका ऋग्वेदस्य व्याख्याः सन्ति । स्कन्दस्वामिभाष्यं, मुद्गलभाष्यं, सिद्धाञ्जनश्च प्रथमाष्टकपर्यन्तमस्ति । वेङ्कटमाधवभाष्यं पूर्णतया उपलभ्यते । सायणश्च सम्पूर्णं वर्तते । दशममण्डले उद्गीथभाष्यमस्ति ।

इतःपूर्वमेता व्याख्या विशकलिततया नैकाभिः संस्थाभिः मुद्रापिताः । ता व्याख्या इदानीं एकस्मिन् सम्पुटे विद्याधीशशोधकेन्द्रद्वारा मुद्राप्यते इत्येतन्मोदावहम् अस्माकम् । नैकेषु सम्पुटेषु वरीवर्ति इयं ऋक्संहिता पदपाठसहिता सव्याख्या च । ऋक्संहितायाः प्रथमसम्पुटत्वेन प्रथमाध्यायोऽयं मुद्रापितः । अस्मिन् प्रथमाध्याये एकोनविंशतिसूक्ताः सन्ति ।

अस्या ऋक्संहिताया मुद्रापणे धृतमनस्काः जितमनस्काः अस्य शोधकेन्द्रस्य प्रधानसम्पोषकाः गाढावगाढसुधादिनैकग्रन्थाः पाठपीठाः श्रीपद्मनाभतीर्थादिश्रीमज्जयतीर्थाद्यधिष्ठितश्रीमदुत्तरादिमठपीठाः वृष्टिखेटाधिष्ठितश्रीमज्जयतीर्थश्रीचरणनलिनचञ्चरीकायिताः श्रीश्री श्रीमत्सत्यात्मतीर्थाः । तेषामादेशेन अनुग्रहेण च सम्पादितेयम् । तेभ्यो गुरुवर्येभ्यः नतिशतततीरर्प्यन्ते ।

जयतीर्थविद्यापीठस्य कुलपतयः सुधाविशारदाः, सच्छास्त्रपाठप्रवचनेषु रताः मम आबाल्यं सुधान्तं वेदान्तं उपदिश्य भगवन्मार्गोपदेशकाः पूज्या गुरवः श्रीगुत्तलाचार्याः । तेभ्यो गुरुवर्येभ्यः नमनानि अर्पयामि ।

विद्याधीशशोधकेन्द्रप्रवर्तकाः अभिवर्धकाश्च मान्याः यशःशरीराः प्रो. के.टि. पाण्डुरङ्गीमहोदयाः । तेषमपि भूयांसि नमांसि निवेदयामि ।

साधनशरीरनिदानान् श्रीमदाचार्यशास्त्रे दीक्षाप्रदान् श्रीपादचरणासक्तान् तातपादान् श्रीप्रल्हादाचार्यान् शिलातनयोऽहं सभक्ति नमस्कुर्वे ।

मुद्रापणे सम्पादने च दत्तावकाशेभ्यः द्वैतवेदान्ताध्ययनसंशोधनप्रतिष्ठानाध्यक्षेभ्यः विद्याधीश-स्नातकोत्तरसंस्कृतशोधकेन्द्रधर्मदर्शिभ्यो जनादरणीयपाठप्रवचनदीक्षेभ्यः संस्थायाः सर्वविधकार्येषु अनवरतमनितरसाधारण्येन प्रोत्साहकेभ्यो मान्येभ्यः डा. सत्यध्यानाचार्यकट्टिमहाभागेभ्यः मम हार्दानि नमनानि निवेदयामि ।

चतुर्थं सम्पुटं विद्वान् वामनाचार्य आलूरु समपीपदत् । अयं च विद्वान् शोधकेन्द्रस्य संशोधकः नैकान् ग्रन्थान् समपादयत् । युवा विद्वान् कार्यकुशलः पाठप्रवचनदीक्षश्च । तस्यापि हार्दानि अभिनन्दनानि संसूचयामि ।

विद्याधीशस्नातकोत्तरसंस्कृतशोधकेन्द्रविश्वस्थ-धर्मदर्शिभ्यश्च हार्दानि अभिनन्दनानि । इतः पूर्वं विशकलिततया मुद्रापिताभ्यो नैकाभ्यः संस्थाभ्यश्च हार्दानि अभिनन्दनानि आवेदयामि ।

संहितामिमां सश्रद्धं अल्पीयसि काले सुष्ठु मुद्रापकेभ्यो वागर्थमुद्रणालयाधिकारिभ्यः धन्यवादान् वितरामि ।

सव्याख्यासपदपाठऋक्संहितासम्पादनं मुद्रापणञ्च विदुषां विद्यार्थिनाञ्चोपकृतये भवतीति विश्वासिमि । इदं कृतिकुसुमं भगवच्चरणनलिनार्पणाय गुरुणां श्रीमत्सत्यात्मश्रीचरणानां करकमलयोरर्पयामि । अध्येतृकरकमलयोश्चोपहारीकरोमि । अनेन कर्मणा गुरुहृद्गो भगवान् प्रीतोऽस्तु दिग्विजयरामाभिन्नो श्रीमन्मूलसीतासमेतः श्रीमन्मूलरामः श्रीमत्सत्यात्मतीर्थाराधितः ।

सुधीजनविधेयः

**डा. कृष्णाचार्य उपाध्यायः**

निदेशकः, विद्याधीशस्नातकोत्तरसंस्कृतशोधकेन्द्रः

श्रीः

# ऋक्संहिता

## ।। अथ चतुर्थोऽध्यायः ।।

### ।। अथ प्रथमो वर्गः ।।

### ऋक्संहिता पदपाठसहिता

(सूक्तम् ४७)

(१० प्रस्कण्वः काण्वः । अश्विनौ । प्रगाथः=विषमा बृहत्यः, समाः सतो बृहत्यः)

**अयं वां मधुमत्तमः सुतः सोम ऋतावृधा ।**
**तमश्विना पिबतं तिरोअह्न्यं धत्तं रत्नानि दाशुषे ।। १ ।।**
अयम् । वाम् । मधुमत्ऽतमः । सुतः । सोमः । ऋतऽवृधा ।
तम् । अश्विना । पिबतम् । तिरःऽअह्न्यम् । धत्तम् । रत्नानि । दाशुषे ।। १ ।।

### श्रीस्कन्दस्वामिविरचितं ऋग्भाष्यम्

'आश्विनं प्रथमं सूक्तम्' । आश्विनमेतदध्यायस्य प्रथमं सूक्तम् । 'तम् अश्विना' इति तच्छब्दश्रुतेर्यच्छब्दोऽध्याहर्तव्यः । **अयम्, वाम्** तादर्थ्य एषा चतुर्थी । युवयोरर्थाय । **मधुमत्तमः** मधुरस्वादतमः । **सुतः सोमः** । हे **ऋतावृधा!** यज्ञस्य वर्धयितारौ! तं सुतं सोमं हे अश्विनौ! **पिबतम्** । **तिरोअह्न्यं** तार्तीयसवनिकः सोमविशेषः तिरोअह्न्य उच्यते । तं तिरोअह्न्यम् । अथवा 'तिरः, सतः' इति प्राप्तस्य नामनी (तु.या.३,२०) । प्राप्तयागाहे भवः तिरोअह्न्यः, तं तिरोअह्न्यम् । पीत्वा च **धत्तं** दत्तम् । **रत्नानि** धनानि **दाशुषे** यजमानाय ।। १ ।।

### वेङ्कटमाधवाचार्यविरचितं ऋग्भाष्यम्

'अयं वा मधुमत्तमः' माधवो व्याचिकीर्षति ।
प्रदर्शयन् समस्तानां स्वरव्यत्यासकारणम् ।। १ ।।

आद्युदात्ताः समासस्था अन्तोदात्ता भवन्ति च ।
अन्तोदात्ताश्चाद्युदात्तास्त्यजन्तः प्राकृतं स्वरम् ।। २ ।।

विश्वशब्दः आद्युदात्तो **'विश्वे देवासो अस्रिधः'** ।
**'विश्वं सुमत्रिणं दह, 'पतिर्विश्वस्य भूमनः'** ।। ३ ।।

अन्तोदात्तः समासस्थो **'विश्वामित्रस्य रक्षति'** ।
**'अग्निं च विश्वशम्भुवमापश्च विश्वभेषजीः'** ।। ४ ।।

तत्राऽऽहुः कारणमिदं विश्यर्थः केवले स्फुटः ।
समस्ते तु प्रत्ययार्थः प्रकृत्यर्थोपसर्जनः ।। ५ ।।

दर्शयेदसमस्तार्थम् अयं व्याप्त इतीदृशम् ।
मित्रं व्याप्तस्य सर्वस्य समस्तेऽर्थं प्रदर्शयेत् ।। ६ ।।

अन्तोदात्तो वीरशब्दः **'स घा वीरो न रिष्यति'** ।
आद्युदात्तो बहुव्रीहौ **'रयिं वहतं सुवीरम्'** ।। ७ ।।

अमित्रान् वीरयत्येष इत्यर्थः केवले भवेत् ।
कल्याणवीरमित्यर्थं समस्तस्य प्रदर्शयेत् ।। ८ ।।

तात्पर्यं यदि पूर्वस्मिंस्तदा तत्र स्वरो भवेत् ।
**'ऋष्ववीरस्य बृहतः'** इति तत्र निदर्शनम् ।। ९ ।।

सर्वेष्वेषु समासेषु कार्या सूक्ष्मेक्षिका बुधैः ।
पदेषु चासमस्तेषु शुद्धमर्थमभीप्सुभिः ।। १० ।।

प्रकृतौ प्रत्यये वाऽपि स्वरो यत्र व्यवस्थितः ।
तात्पर्यं तत्र शब्दस्य स्थापयेदिति निर्णयः ।। ११ ।।

प्रस्कण्वः । **अयम्** युवयोः सुतः सोमः, **तम् पिबतम्** इति ।। १ ।।

## मुद्गलविरचितभाष्यम्

'अयं वाम्' इति दशर्चं चतुर्थं सूक्तं प्रागाथम् । कण्वपुत्रः प्रस्कण्वऋषिः । प्रथमा तृतीयाद्या अयुजो बृहत्यः । द्वितीयाचतुर्थ्याद्या युजः सतोबृहत्यः । अश्विनौ देवते ।

हे **ऋतावृधा** यज्ञस्य वर्धयितारौ । **अश्विना** अश्विनौ । **वाम्** युवयोः । **अयम्** पुरोवर्ती **सोमः, सुतः** अभिषुतः । कीदृशः । **मधुमत्तमः** अतिशयेन माधुर्यवान् । **तिरो अह्न्यम्** तिरोभूते पूर्वस्मिन् दिने अभिषुतम् **तम्** सोमम् **पिबतम्** । **दाशुषे** हविर्दत्तवते यजमानाय **रत्नानि** रमणीयानि धनानि **धत्तम्** प्रयच्छतम् ।। १ ।।

## श्रीमत्सायणाचार्यविरचितं ऋग्भाष्यम्

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ।।

अथ प्रथमाष्टके चतुर्थोऽध्याय आरभ्यते । 'अयं वाम्' इति नवमानुवाकस्य चतुर्थं सूक्तं दशर्चम् । अनुक्रान्तम्– 'अयं दश प्रागाथं तु' इति । 'ऋषिश्चान्यस्मादृषेः' इति परिभाषितत्वात् कण्वपुत्रः प्रस्कण्व ऋषिः । तथा पूर्वत्र 'आश्विनं तु' इत्युक्तत्वात् तुह्यादिपरिभाषया इदमपि सूक्तमश्विदेवताकम् । अनयैव परिभाषया इदमुत्तरं च प्रागाथम् । अतः प्रथमातृतीयाद्या अयुजो बृहत्यः । द्वितीयाचतुर्थ्याद्या युजः सतोबृहत्यः । प्रातरनुवाके आश्विने ऋतौ बार्हते छन्दस्येतत्सूक्तम् । 'अथाश्विनः' इति खण्डे सूत्रितम्– 'इमा उ वामयं वाम्' (आश्व.श्रौ.४.१५) इति । आश्विन-शस्त्रेऽप्येतत्सूक्तं, 'प्रातरनुवाकन्यायेन' (आश्व.श्रौ.६.५) इत्यनिर्दिष्टत्वात् ।

हे **ऋतावृधा** ऋतस्य सत्यस्य यज्ञस्य वा वर्धयितारौ **अश्विना** अश्विनौ! **वां** युवयोः **अयं** पुरोवर्ती **सोमः, सुतः** अभिषुतः । कीदृशः । **मधुमत्तमः** अतिशयेन माधुर्यवान् । **तिरो अह्न्यं** तिरोभूते पूर्वस्मिन् दिने अभिषुतं **तं** सोमं **पिबतम्** । **दाशुषे** हविर्दत्तवते यजमानाय **रत्नानि** रमणीयानि धनानि **धत्तं** प्रयच्छतम् ।। **वाम्** । 'युष्मदस्मदोः षष्ठीचतुर्थी द्वितीयास्थयोर्वांनावौ' (पा.सू.८.१.२०) इति षष्ठीद्विवचनस्य वामादेशः । स चानुदात्तः । **मधुमत्तमः** । 'मन ज्ञाने' । मन्यते इति मधु । 'फलिपाटिनमि' इत्यादिना उप्रत्ययः । 'नित्' इत्यनुवृत्तेराद्युदात्तत्वम् । धकारश्चान्तादेशः । अतिशयेन मधुमान् मधुमत्तमः । मतुप्तमपोः पित्त्वादनुदात्तत्वे पदस्वर एव शिष्यते । **ऋतावृधा** । वृधेरन्तर्भावितण्यर्थात् 'क्विप् च' इति क्विप् । 'अन्येषामपि दृश्यते' इति पूर्वपदस्य दीर्घत्वम् । **तिरोअह्न्यम्** । अह्नि भवः अह्न्यः । 'भवे छन्दसि' इति यत् । 'अह्नष्टखोरेव' (पा.सू.६.४.१४५) इति नियमात् 'नस्तद्धिते' इति टिलोपाभावः । 'सर्वे

विषयश्छन्दसि विकल्प्यन्ते' इति वचनात् 'ये चाभावकर्मणोः' (पा.सू.६.४.१३८) इति प्रकृतिभावाभावे 'अल्लोपोऽनः' इति अकारलोपः । तिरोहितः अह्नचः तिरो अह्नचः । 'तिरोऽन्तर्धौ' (पा.सू.१.४.७१) इति गतित्वेन निपातत्वात् अव्ययत्वे प्रादिसमासे अव्ययपूर्वपदप्रकृतिस्वरत्वम् । **दाशुषे** । 'दाश्वान् साह्वान्' इत्यादिना कसुप्रत्ययान्तो निपातितः । चतुर्थ्येकवचने 'वसोः सम्प्रसारणम्' इति सम्प्रसारणम् । 'शासिवसिघसीनां च' इति षत्वम् ।। १ ।।

## कपालिशास्त्रिविरचितं ऋक्संहिताव्याख्यानं सिद्धाञ्जनम्

हे **ऋतावृधा** ऋतस्य सत्यस्य वर्धयितारौ अश्विनौ! **वाम्** युवयोः । **अयं** पुरोवर्ती । **मधुमत्तमः** अतिशयेन माधुर्यवान्, अत्यन्तमधुरः । **सोमः**, **सुतः** अभिषुतो भवति । हे **अश्विना** अश्विनौ! **तिरोअह्नयम्** तिरोभूते पूर्वस्मिन्नहनि भवं अभिषुतं **तम् पिबतम्** । **दाशुषे** यथाभागं दत्तवते यजमानाय **रत्नानि** रमणीयानि हर्षाधायकानि रतिशब्दवाच्यानि **धत्तम्** धारयतम् ।। **तिरोअह्नयम्–** पूर्वसूक्ते व्याख्यातम् । अन्ये गताः ।। १ ।।

## ऋक्संहिता पदपाठसहिता

**त्रिवन्धुरेण त्रिवृता सुपेशसा रथेना यातमश्विना ।**
**कण्वासो वां ब्रह्म कृण्वन्त्यध्वरे तेषां सु शृणुतं हवम् ।। २ ।।**
त्रिऽवन्धुरेण । त्रिऽवृता । सुऽपेशसा । रथेन । आ । यातम् । अश्विना ।
कण्वासः । वाम् । ब्रह्म । कृण्वन्ति । अध्वरे । तेषाम् । सु । शृणुतम् । हवम् ।।२।।

**स्कन्द– त्रिवन्धुरेण त्रिवृता** । सारथिस्थानं बन्धुर उच्यते । त्रयो बन्धुरा यस्मिन् स त्रिवन्धुरः, तेन त्रिवन्धुरेण । त्रिवृता त्रिभिश्चक्रैर्वर्तते गच्छतीति त्रिवृत्, तेन त्रिवृता । **सुपेशसा** 'पेशः' (निघ.३,७) इति रूपनाम । सुरूपेण । **रथेन आ यातम्** । हे अश्विनौ । किं कारणम् । उच्यते । **कण्वासः** कण्वपुत्रा मत्प्रभृतयः । **वाम्** युवयोः स्तुतिलक्षणम् **ब्रह्म कृण्वन्ति अध्वरे** यज्ञे । **तेषाम्**, सुष्ठु **शृणुतं हवं** आह्वानम् ।। २ ।।

**वेङ्कटमाधव–** त्रयो यस्य बन्धुरास्तेन त्रिकोणेन सुरूपेण **रथेन आ यातम्** । अश्विनौ!, **कण्वासः** युवयोः स्तोत्रं कुर्वन्ति यज्ञे, **तेषाम्** सुष्ठु **शृणुतम्** ह्वानम् ।। २ ।।

**मुद्गल–** हे **अश्विना** अश्विनौ! **त्रिबन्धुरेण** उन्नतानतरूपेण त्रिविधबन्धनकाष्ठयुक्तेन **त्रिवृता** अप्रतिहतगतितया लोकत्रये वर्तमानेन **सुपेशसा** शोभनसुवर्णयुक्तेन **रथेन आ यातम्** इहागच्छतम् । **कण्वासः** कण्वपुत्राः **वाम्** युवयोः **अध्वरे** यागे **ब्रह्म** स्तोत्ररूपं मन्त्रम् **कृण्वन्ति** कुर्वन्ति । **तेषाम्** कण्वानाम् **हवम्** आह्वानम् **सु शृणुतम्** सुष्ठु आदरेण शृणुतम् ।। २ ।।

**सायण–** हे **अश्विना** अश्विनौ! **त्रिबन्धुरेण** उन्नतानतरूपेण त्रिविधबन्धनकाष्ठयुक्तेन **त्रिवृता** अप्रतिहतगतितया लोकत्रये वर्तमानेन **सुपेशसा** शोभनसुवर्णयुक्तेन **रथेन आ यातम्** इहागच्छतम् । **कण्वासः** कण्वपुत्राः मेधाविन ऋत्विजो वा **वाम्** युवयोः **अध्वरे** यागे **ब्रह्म** स्तोत्ररूपं मन्त्रं हविर्लक्षणमन्नं वा **कृण्वन्ति** कुर्वन्ति । **तेषाम्** कण्वानाम् **हवम्** आह्वानम् **सु शृणुतम्** सुष्ठु आदरेण शृणुतम् ।। **त्रिबन्धुरेण** । बध्नन्तीति बन्धुराः । बन्धेः औणादिक उरन्प्रत्ययः । त्रयो बन्धुरा यस्यासौ त्रिबन्धुरः । त्रिचक्रादिषु पाठात् 'त्रिचक्रादीनां छन्दस्युपसङ्ख्यानम्' (पा.सू.६.२.१९९.१) इत्युत्तरपदान्तोदात्तत्वम् । **त्रिवृता** । त्रिषु लोकेषु वर्तते इति त्रिवृत् । 'क्विप् च' इति क्विप् । **सुपेशसा** । पेश इति हिरण्यनाम । शोभनं पेशो यस्यासौ सुपेशाः । 'आद्युदात्तं द्व्यच्छन्दसि' इत्युत्तरपदाद्युदात्तत्वम् । **शृणुतम्** । 'श्रु श्रवणे' । 'श्रुवः शृ च' इति श्नुः; तत्सन्नियोगेन धातोः शृभावश्च । **हवम्** । ह्वयतेः 'भावेऽनुप-सर्गस्य' (पा.सू.३.३.७५) इति अप् । सम्प्रसारणं च गुणावादेशौ । प्रत्ययस्य पित्त्वादनुदात्तत्वे धातुस्वरः ।। २ ।।

**सिद्धाञ्जनम्–** हे **अश्विना** अश्विनौ! **त्रिबन्धुरेण** त्रिविधबन्धनयुक्तेन **त्रिवृता** लोकत्रये अप्रतिहतगमनतया वर्तमानेन, **सुपेशसा** शोभनरूपयुक्तेन **रथेन** युष्मदीयेन यानसाधनेन **आयातम्** आगच्छतम् । **कण्वासः** कण्वपुत्राः (मेधाविनः) **अध्वरे** यजने **वाम्** युष्मदर्थं **ब्रह्म** मन्त्रात्मकं स्तोत्रं **कृण्वन्ति** कुर्वन्ति । **तेषाम्** कण्वपुत्राणां **हवम्** आह्वानं **सु शृणुतम्** सुष्ठु आकर्णयतम् ।। **त्रिबन्धुरेण–** बन्धेरौणादिक उरन्प्रत्ययः । त्रिश्चित्रो अद्येति (३४.सू.) सूक्तस्य व्याख्यायां त्रिकस्य विचारः कृतः । **सुपेशसा**–शोभनं पेशो रूपं (हिरण्यं वा) ययोस्तौ । अन्ये गताः ।।

## ऋक्संहिता पदपाठसहिता

**अश्विना मधुमत्तमं पातं सोममृतावृधा । अथाद्य दस्रा वसु बिभ्रता रथे दाश्वांसमुप गच्छतम् ।। ३ ।।**

**अश्विना । मधुमत्ऽतमम् । पातम् । सोमम् । ऋतऽवृधा ।**
**अथ । अद्य । दस्रा । वसु । बिभ्रता । रथे । दाश्वांसम् । उप । गच्छतम् ।। ३ ।।**

**स्कन्द– अश्विना** हे अश्विनौ! **मधुमत्तमम् पातम्** पिबतम् सोमम् । हे **ऋतावृधा! अथ** अथेत्यानन्तर्ये । पानानन्तरं च **अद्य** हे **दस्रा! वसु** यजमानाय यदीप्सितं धनं तत् **बिभ्रता** धारयन्तौ । आत्मीये **रथे दाश्वांसम्** यजमानं दानार्थम् **उप गच्छतम्** । उपगम्य यजमानाय धनं दत्तमित्यर्थः ।। ३ ।।

**वेङ्कटमाधव–** सोमपानानन्तरम् **दाश्वांसम्** धनेन सह **उप गच्छतम्** इति ।। ३ ।।

**मुद्गल–** हे **ऋतावृधा!** यज्ञस्य वर्धकौ । **अश्विना** अश्विनौ! **मधुमत्तमम्** अतिशयेन माधुर्योपेतम् **सोमं पातम्** पिबतम् । हे **दस्रा** अश्विनौ! **अथ** सोमपानार्थम् अस्मदाह्वानानन्तरम् **अद्य** अस्मिन् दिने **रथे** स्वकीये **वसु बिभ्रता** अस्मदुपयुक्तं धनं धारयन्तौ **दाश्वांसम्** हविष्प्रदं यजमानम् **उप गच्छतम्** समीपे प्राप्नुतम् ।। ३ ।।

**सायण–** हे **ऋतावृधा** यज्ञस्य वर्धकौ अश्विनौ! **मधुमत्तमं सोमं पातं** पिबतम् । हे **दस्रा** अश्विनौ! सोमपानार्थम् । **अथ** अस्मदाह्वानानन्तरम् **अद्य** अस्मिन् दिने **रथे** स्वकीये **वसु बिभ्रता** अस्मदुपयुक्तं धनं धारयन्तौ । **दाश्वांसं** हविष्प्रदं यजमाननम् **उप गच्छतं** समीपे प्राप्नुतम् ।। **बिभ्रता** । 'डु भृञ् धारणपोषणयोः' । शतरि जुहोत्यादित्वात् शपः श्लुः । 'भृञामित्' इति अभ्यासस्य इत्वम् । शतुर्ङित्त्वात् गुणाभावे यणादेशः । 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम् ।। ३ ।।

**सिद्धाञ्जनम्–** हे **ऋतावृधा** सत्यस्य वर्धयितारौ, **अश्विना** अश्विनौ! **मधुमत्तमम्** अत्यन्तमाधुर्योपेतं **सोमम्, पातम्** पिबतम् । **अथ** सोमपानात्परं **अद्य** इदानीम् । हे **दस्रा** अश्विनौ! **रथे** स्वकीये **वसु** सत्त्वात्मकं धनं **बिभ्रता** बिभ्रतौ बहन्तौ सन्तौ **दाश्वांसम्** दत्तवन्तं यजमानं **उप गच्छतम्** समीपे प्राप्नुतम् ।। सर्वे शब्दा गताः ।। ३ ।।

## ऋक्संहिता पदपाठसहिता

**त्रिषधस्थे बर्हिषि विश्ववेदसा मध्वा यज्ञं मिमिक्षतम् ।**
**कण्वासो वां सुतसोमा अभिद्यवो युवां हवन्ते अश्विना ।। ४ ।।**

**त्रिऽसधस्थे । बर्हिषि । विश्वऽवेदसा । मध्वा । यज्ञम् । मिमिक्षतम् ।**
**कण्वासः । वाम् । सुतऽसोमाः । अभिऽद्यवः । युवाम् । हवन्ते । अश्विना ॥ ४ ॥**

**स्कन्द–** **त्रिषधस्थे** सह तिष्ठन्ति येषु देवतास्तानि सधस्थानि सवनान्यत्र अभिप्रेतानि । तानि त्रीणि यस्मिन् तत् त्रिषधस्थं सौमिकवेदिस्तरणं बर्हिः । अथवा आहवनीयादयोऽग्नयः सधस्थाः सहस्थातृत्वात् त्रयो यस्मिन् तत्त्रिषधस्थम् । तस्मिन् त्रिषधस्थे **बर्हिषि** सप्तमीनिर्देशात् व्यवस्थितमिति शेषः । हे **विश्ववेदसा** सर्वज्ञौ! अथवा 'विश्वम्' (निघ.३,१) इति बहुनाम । 'वेदः' (निघ.३,१०) इत्यपि धननाम । **विश्ववेदसा** बहुधनौ! **मध्वा** उदकनामैतत् (तु.निघ.१,१२) उदकेन अस्मदीयम् **यज्ञम् मिमिक्षतम्** 'मिह सेचने' सेक्तुमिच्छतम् । अभिवर्षितुमिच्छतमित्यर्थः । किं कारणम् । उच्यते । यस्मात् **कण्वासः वाम्** युवयोरर्थाय **सुतसोमाः** कृतसोमाभिषवाः । **अभिद्यवः** द्युशब्दो दिवेर्दीप्त्यर्थस्य दीप्तिवचनः । अभिगता दीप्तिर्यैस्ते अभिद्यवः । ब्राह्म्या दीप्त्या दीप्ता इत्यर्थः । अथवा 'द्युः' (निघ.१,९) इत्यहर्नाम । अत्यन्तदुष्प्रापः प्राप्तः यागाहो यैस्ते अभिद्यवः । **युवाम् हवन्ते, अश्विना** हे अश्विनौ! ॥

**वेङ्कटमाधव–** यस्मिन् **बर्हिषि** त्रयाणां धातूनां सहावस्थानं तत्राऽसीनौ सर्वज्ञौ मधुना इमम् **यज्ञम्** सेक्तुमिच्छतम् । कण्वाः **वाम्** अभिषुतसोमाः स्तोत्रादभिषवाच्च अभिगतदीप्तयः अश्विनौ! **हवन्ते** । पादान्तरे **युवाम्** इति प्रयुक्तम् ॥ ४ ॥

**मुद्गल–** हे **विश्ववेदसा** सर्वज्ञौ अश्विनौ! **त्रिषधस्थे** कक्ष्यात्रयेणास्तीर्णतया त्रिषु स्थानेषु अवस्थिते **बर्हिषि** दर्भे स्थित्वा **मध्वा** मधुरेण रसेन **यज्ञम् मिमिक्षतम्** सेक्तुमिच्छतम् । हे **अश्विना** अश्विनौ! **वाम्** युष्मदर्थम् **सुतसोमाः** अभिषुतसोमयुक्ताः **अभिद्यवः** अभिगतदीप्तयः **कण्वासः युवाम्** उभौ **हवन्ते** आह्वयन्ते ॥ ४ ॥

**सायण–** हे **विश्ववेदसा** सर्वज्ञौ अश्विनौ! **त्रिषधस्थे** कक्ष्यात्रयेणास्तीर्णतया त्रिषु स्थानेषु अवस्थिते **बर्हिषि** दर्भे स्थित्वा **मध्वा** मधुरेण रसेन **यज्ञम् मिमिक्षतम्** सेक्तुमिच्छतम् । हे **अश्विना** अश्विनौ! **वां** युष्मदर्थम् **सुतसोमाः** अभिषुतसोमयुक्ताः **अभिद्यवः** अभिगतदीप्तयः **कण्वासः, युवाम्** उभौ **हवन्ते** आह्वयन्ते । **त्रिषधस्थे** । त्रिषु स्थानेषु सह तिष्ठतीति त्रिषधस्थं बर्हिः । 'सुपि स्थः' इति कप्रत्ययः । 'आतो लोप इटि च' इति आकारलोपः । 'सधमाद-

स्थयोश्छन्दसि' (पा.सू.६.३.९६) इति सहशब्दस्य सधादेशः । **मध्वा** । आगमानुशासनस्यानित्यत्वात् नुमभावः । 'जसि च' इत्यत्र 'जसादिषु च्छन्दसि वा वचनम्' (पा.सू.७.३.१०९.१) इति वचनात् नाभावाभावश्च । **मिमिक्षतम्** 'मिह सेचने' सनि 'एकाचः' इति इट्प्रतिषेधः । 'हलन्ताच्च' इति सनः कित्त्वात् लघूपधगुणाभावः । अभ्यासहलादिशेषौ । ढत्वकत्वषत्वानि । **सुतसोमाः** । सुतः सोमो यैः । बहुव्रीहिस्वरः । **अभिद्यवः** । द्युः इति अहर्नाम । तेन तत्सम्बन्धी प्रकाशो लक्ष्यते । अभिगता द्युम् । 'अत्यादयः क्रान्ताद्यर्थे द्वितीयया' (पा.म. २.२.१८.४) इति समासः । अव्ययपूर्वपदप्रकृतिस्वरत्वम् ।। ४ ।।

**सिद्धाञ्जनम्–** हे **विश्ववेदसा** विश्वस्य वेदितारौ सर्वज्ञौ! **त्रिषधस्थे** त्रिविधे स्थानत्रये सहावस्थिते, बहिस्त्रिलोक्यां, अन्तः अन्नमयादिस्थानत्रये, **बर्हिषि** सिद्धे आसने (कक्षात्रयरूपेण आस्तीर्णे दर्भे इति याज्ञिकपक्षे बोध्यम्) स्थितौ सन्तौ युवां, **यज्ञम्** अस्मदीयं **मध्वा** मधुना मधुरेण रसेन **मिमिक्षतम्** सेक्तुमिच्छतम्, इदं नो यजनं रसार्द्रं कुरुतम् । **वाम्** युष्मदर्थं **सुतसोमाः** सोमाभिषवं कृतवन्तः **अभिद्यवः** अभिगतदीप्तयः **कण्वासः** कण्वपुत्राः ऋषयः मेधाविनो वा हे **अश्विना** अश्विनौ! **युवाम्** उभौ **हवन्ते** आह्वयन्ति ।। **त्रिषधस्थे**– त्रिषु स्थानेषु सह तिष्ठतीति त्रिषधस्थम्, छन्दसि सहशब्दस्य सधादेशः । **मध्वा**–तुगभावः छन्दसि । **मिमिक्षतम्** 'मिह सेचने' सनि लोट्, मध्यमद्विवचनम् । **अभिद्यवः**–द्युरित्यहर्नाम, तेन प्रकाशो लक्ष्यते, अभिगता द्युं इति अभिद्यवः ।। ४ ।।

## ऋक्संहिता पदपाठसहिता

**याभिः कण्वमभिष्टिभिः प्रावतं युवमश्विना ।**
**ताभिः ष्व१स्माँ अवतं शुभस्पती पातं सोममृतावृधा ।। ५ ।।**
याभिः । कण्वम् । अभिष्टिऽभिः । प्र । आवतम् । युवम् । अश्विना ।
ताभिः । सु । अस्मान् । अवतम् । शुभः । पती इति । पातम् । सोमम् । ऋतऽवृधा ।।

**स्कन्द–** अत्रेतिहासमाचक्षते– कण्वः ऋषिरन्धो बभूव । स चक्षुष्कामोऽश्विनौ तुष्टाव । तस्मा अश्विनौ चक्षुर्ददतुरिति । तदेतत् कक्षीवान् वक्ष्यति– 'युवं कण्वायापिरिप्ताय चक्षुः प्रत्यधत्तं सुष्टुतिं जुजुषाणा' (ऋ.सं.१,११८,७) इति । तदेवेहाप्युच्यते– 'याभिः कण्वम्' इत्यादिना ।

**याभिः** अस्मत्पितरम् **कण्वम् अभिष्टिभिः** इषेरेतद्रूपम् । युष्मदभ्येषणशीलाभिः युष्मदन्वेषण-पराभिः स्तुतिभिरित्यर्थः । **प्र आवत** चक्षुः प्रदानेन प्रकर्षेण रक्षितवन्तौ स्थः **युवम् हे** अश्विनौ! **ताभिः** एव सुष्ठु **अस्मान्** अपि **अवतम्** हे **शुभस्पती!** उदकस्य स्वामिनौ! **पातम्** चास्मदीयेषु यज्ञेषु **सोमम्** हे **ऋतावृधा** ।। ५ ।।

**वेङ्कटमाधव–** यैः **कण्वम्** अभिगमनैः **प्र आवतम्** युवाम् अश्विनौ! तैः अस्मानपि रक्षतम् । उदकस्य पती! पिबतश्च **सोमम्** । यज्ञस्य वर्धयितारौ! सु इति पदपूरणः ।। ५ ।।

**मुद्गल–** हे **अश्विना** अश्विनौ! **युवम्** युवाम् उभौ **याभिः अभिष्टिभिः** अपेक्षिताभिः रक्षाभिः **कण्वम्** महर्षिम् **प्र आवतम्** रक्षितवन्तौ । हे **शुभस्पती!** शोभनस्य कर्मणः पालकौ! **ताभिः** रक्षाभिः **अस्मान्** अनुष्ठातॄन् **सु अवतम्** सुष्ठु रक्षतम् । स्पष्टमन्यत् ।। ५ ।।

**सायण–** हे **अश्विना** अश्विनौ! **युवम्** युवाम् उभौ **याभिः अभिष्टिभिः** अपेक्षिताभिः रक्षाभिः **कण्वम्** महर्षिम् **प्र आवतम्** रक्षितवन्तौ । हे **शुभस्पती!** शोभनस्य कर्मणः पालकौ! **ताभिः** रक्षाभिः **अस्मान्** अनुष्ठातॄन् **सु अवतम्** सुष्ठु रक्षतम् । स्पष्टमन्यत् । **अभिष्टिभिः** । आभिमुख्येनेष्यन्ते इति अभिष्टयः फलानि । 'इषु इच्छायाम्' कर्मणि क्तिनि 'तितुत्र' इत्यादिना इट्प्रतिषेधः । 'एमन्नादिषु च्छन्दसि पररूपं वक्तव्यम्' (पा.सू.६.१.९४.६) इति पररूपत्वम् । 'तादौ च' इति गतेः प्रकृतिस्वरत्वम् । 'उपसर्गाश्चाभिवर्ज्यम्' (फि.सू.८१) इति अभिः अन्तोदात्तः । **शुभस्पती** । 'शुभ दीप्तौ' । 'क्विप् च' इति क्विप् । 'षष्ठ्याः पतिपुत्र' इति विसर्जनीयस्य सत्त्वम् । 'सुबामन्त्रिते' इति षष्ठ्यन्तस्य पराङ्गवद्भावात् षष्ठ्यामन्त्रितसमुदायस्य आष्टमिकं सर्वानुदात्तत्वम् ।। ५ ।।

**सिद्धाञ्जनम्–** हे **अश्विना** अश्विनौ! **युवम्** युवां उभौ **याभिः अभिष्टिभिः** आभिमुख्येन इष्टिभिः इच्छाभिः **कण्वम्** महर्षिं मेधाविप्रतिमानभूतं **प्रावतम्** प्रकर्षेण रक्षितवन्तौ । हे **शुभस्पती** (शोभनस्य कर्मणः पालकौ, इति सायणः) शोभमानायाः सर्वस्या दीप्तेः पालकौ **ताभिः** 'अभिष्टिभिः' **अस्मान् सु** सुष्ठु **अवतम्** रक्षतम् । हे **ऋतावृधा सोमम् पातम्,** स्पष्टमेतत् ।। **अभिष्टयः–** अभिमुखं इष्यन्ति इति अभिष्टयः, कर्मणि क्तिन्, एमन्नादिषु छन्दसि पररूपम् । शुभस्पतीत्यादयो गताः ।। ५ ।।

**।। इति प्रथमाष्टके चतुर्थाध्याये प्रथमो वर्गः ।।**

## ।। अथ द्वितीयो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

**सुदासे दस्रा वसु बिभ्रता रथे पृक्षो वहतमश्विना ।**
**रयिं समुद्रादुत वा दिवस्पर्यस्मे धत्तं पुरुस्पृहम् ।। ६ ।।**
**सुऽदासे । दस्रा । वसु । बिभ्रता । रथे । पृक्षः । वहतम् । अश्विना ।**
**रयिम् । समुद्रात् । उत । वा । दिवः । परि । अस्मे इति । धत्तम् । पुरुऽस्पृहम् ।।६।।**

**स्कन्द–** अत्रेतिहासमाचक्षते– सुदाः नाम पैजवनो राजा । यस्य विश्वामित्र ऋषिः पुरोहितो बभूव । स यष्टुकामः सारवत् प्रभूतं च धनमन्नं चाश्विनौ ययाचे । तस्मै रथेन आनीय अश्विनौ धनमन्नं च ददतुरिति । तदेतदिहोच्यते– **'सुदासे दस्रा'** इति । सुदासो राज्ञोऽर्थाय हे दस्रा! **वसु बिभ्रता रथे पृक्षः** अन्नानि च **वहतम्** प्रापितवन्तौ स्थः । हे अश्विनौ! तदेतत् कुत्सोऽपि वक्ष्यति– 'याभिस्सुदास ऊहथुः सुदेव्यम्' (ऋ.१,११२,१९) इति । परस्त्वर्धर्चो याच्ञार्थत्वाद् भिन्नं वाक्यम् । यत्तच्छब्दावध्याहृत्यैकवाक्यता योज्या । यौ सुदासे वहतं तौ **रयिम्** धनम् **समुद्रात्** 'समुदः' (निघ.१,३) इत्यन्तरिक्षनाम । अन्तरिक्षात् । **उत वा दिवः** अपि वा द्युलोकात् । पञ्चमीनिर्देशादाहृत्येति वाक्यशेषः । परिशब्दस्तु 'अधिपरी अनर्थकौ' (पा.१,४,९३) इत्येवं कर्मप्रवचनीयः पदपूरणः । **अस्मे** अस्मभ्यम् **धत्तम्** दत्तम् । कीदृशम् । **पुरुस्पृहम्** बहूनां स्पृहणीयम् ।। ६ ।।

**वेङ्कटमाधव–** पैजवनाय **सुदासे** दर्शनीयौ! धनम् **रथे** बिभ्रतौ अश्विनौ! अन्नं च आवहतम् । अस्मभ्यम् अपि अन्तरिक्षाद्दिवः वा आहृत्य बहुभिः स्पृहणीयम् **रयिम् धत्तम्** ।। ६ ।।

**मुद्गल–** हे **दस्रा** दर्शनीयौ **अश्विना** अश्विनौ! **सुदासे** शोभनदानयुक्ताय राज्ञे पिजवनपुत्राय । **रथे वसु बिभ्रता** युवाम् **पृक्षः** अन्नम् **वहतम्** प्रापितवन्तौ । **समुद्रात्** अन्तरिक्षात् **उत वा दिवः परि** अथवा स्वर्गात् पर्याहृत्य **पुरुस्पृहम्** बहुभिः स्पृहणीयम् **रयिम्** धनम् **अस्मे धत्तम्** अस्मासु स्थापयतम् ।। ६ ।।

**सायण–** हे **दस्रा** दर्शनीयावश्विनौ **सुदासे** शोभनदानयुक्ताय राज्ञे पिजवनपुत्राय । **रथे वसु बिभ्रता** युवाम् **पृक्षः** अन्नम् **वहतम्** प्रापितवन्तौ । **समुद्रात्** अन्तरिक्षात् । समुद्रम्

इति अन्तरिक्षनाम । 'समुद्रः अध्वरम्' (नि.१.३.१५) इति तन्नामसु पाठात् । **उत वा दिवः परि** अथवा स्वर्गात् पर्याहृत्य **पुरुस्पृहम्** बहुभिः स्पृहणीयम् **रयिम्** धनम् **अस्मे धत्तम्** अस्मासु स्थापयतम् ।। सुदोस– सुष्टु ददातीति सुदाः । असुनि कृदुत्तरपदप्रकृतिस्वरत्वम् । **दिवस्परि** । 'पञ्चम्याः परावध्यर्थे' (पा.सू.८.३.५१) इति विसर्जनीयस्य सत्वम् । **पुरुस्पृहम्** । 'स्पृह ईप्सायाम्' । चुरादिरदन्तः । पुरुभिः स्पृह्यते इति पुरुस्पृहः । कर्मणि घञ् । अतो लोपस्य स्थानिवत्त्वात् लघूपधगुणाभावः । ञित्स्वरेण उत्तरपदस्याद्युदात्तत्वे कृदुत्तरपदप्रकृतिस्वरेण तदेव शिष्यते ।। ६ ।।

**सिद्धाञ्जनम्–** हे **दस्रा** कर्मनिष्पादनसमर्थौ **अश्विना** अश्विनौ! **सुदासे** शोभनदानयुक्ताय, एतन्नामकाय राज्ञे वा । **रथे वसु बिभ्रता** युवां **पृक्षः** प्रीणनं, पूरयितृ सर्वं **वहतम्** प्रापितवन्तौ, तथा उदारौ युवां **समुद्रात्** सत्त्वसमृद्धादखण्डमूलस्थानात् । **उत वा** अथवा **दिवः** द्युलोकात् **परि** पर्याहृत्य **पुरुस्पृहम्** बहुभिर्बहुधा वा स्पृहणीयं **रयिम्** धनं **अस्मे धत्तम्** अस्मासु धारयतम् ।। **सुदासे**– सुष्ठु ददातीति सुदाः, असुन्, तस्मै । **पुरुस्पृहम्**– पुरुभिः बहुभिः स्पृह्यते, कर्मणि घञ् । **पृक्षः**– पृ पालनपूरणयोः अस्मात् (पृची संपर्के प्रीणने वा इत्यस्मादित्येके) असुनि सुडागमः ।। ६ ।।

## ऋक्संहिता पदपाठसहिता

**यन्नासत्या परावति यद्वा स्थो अधि तुर्वशे । अतो रथेन सुवृता न आ गतं साकं सूर्यस्य रश्मिभिः ।। ७ ।।**

**यत् । नासत्या । पराऽवति । यत् । वा । स्थः । अधि । तुर्वशे । अतः । रथेन । सुऽवृता । नः । आ । गतम् । साकम् । सूर्यस्य । रश्मिऽभिः ।। ७ ।।**

**स्कन्द– यत्** शब्दोऽत्र यदिशब्दस्यार्थे । यदि हे **नासत्या** । **परावति** दूरे । अमुष्मिन् लोक इत्यर्थः । यदि वा स्थः **अधि तुर्वशे** अधिशब्दः 'अधिपरी अनर्थकौ' (पा.१,४,९३) इत्येवं कर्मप्रवचनीयः पदपूरणः । 'तुर्वशे' (निघ.२,१६) इत्यन्तिकनाम । अन्तिके सन्निकृष्टे । अस्मिन्नेव लोके इत्यर्थः । **अतो**ऽस्माद् दूरात् अन्तिकाद्वा **रथेन सुवृता** सुगतिना **नः** अस्मान् प्रति **आ गतम्** आगच्छतम् । **साकम् सूर्यस्य रश्मिभिः** । सहयोगित्वमात्रमत्र रश्मीनाम्, अश्विनोरेव तु प्राधान्यम् ।। ७ ।।

**वेङ्कटमाधव–** यदि नासत्यौ दूरे भवथः, **यद् वा स्थः** अन्तिके । ततः **रथेन** सुवर्तनेन अस्मान् आगच्छतम् । सह **सूर्यस्य रश्मिभिः** उषसि प्रादुर्भूतैः ।। ७ ।।

**मुद्गल–** हे **नासत्या** असत्यरहितौ अश्विनौ! **यत्** यदि युवाम् **परावति** दूरदेशे **स्थः** वर्तेथे । **यद् वा** अथवा **अधि तुर्वशे** अधिके समीपे स्थः । **अतः** अस्मात् दूरात् समीपाद्वा **सूर्यस्य रश्मिभिः साकम्** सूर्योदयकाले **सुवृता** शोभनवर्तनयुक्तेन **रथेन नः** अस्मान् प्रति **आ गतम्** आगच्छतम् ।। ७ ।।

**सायण–** हे **नासत्या** असत्यरहितौ अश्विनौ! **यत्** यदि युवाम् **परावति** दूरदेशे **स्थः** वर्तेथे । **यत् वा** अथवा **अधि तुर्वशे** अधिके समीपे स्थः । **अतः** अस्मात् दूरात् समीपाद्वा **सूर्यस्य रश्मिभिः साकम्** सूर्योदयकाले **सुवृता** शोभनवर्तनयुक्तेन **रथेन नः** अस्मान् प्रति **आ गतम्** आगच्छतम् ।। **नासत्या** । सत्सु भवौ सत्यौ । न सत्यौ असत्यौ । न असत्यौ नासत्यौ । 'नभ्राण्नपात्' इत्यादिना नञः प्रकृतिभावः । **स्थः** । 'अस भुवि' । 'श्नसोरल्लोपः' इति अकारलोपः । यद्वृत्तयोगादनिघातः । **गतम्** । गमेर्लोटि 'बहुलं छन्दसि' इति शपो लुक् । 'अनुदात्तोपदेश' इत्यादिना अनुनासिकलोपः ।। ७ ।।

**सिद्धाञ्जनम्–** हे **नासत्या** अश्विनौ! **यत्** यदि युवां **परावति** परस्तात् परस्मिन् स्थाने अतिदूरे **स्थः** वर्तेथे । **यद्वा** अथवा **अधितुर्वशे** अधिके समीपे **स्थः** । **अतः** अस्माद्दूरात् समीपाद्वा **सूर्यस्य रश्मिभिः साकम्** ऋतज्योतिषोंऽशुभिः सह **सुवृता** शोभनवर्तनेन **रथेन नः** अस्मान् प्रति **आगतम्** आगच्छतम् ।। ७ ।।

अधितुर्वशे अधिके समीपे इति सायणीयम् । तुर्वशशब्दार्थो न कथितः, दूरे समीपे वेति तात्पर्यं तूपपन्नमेव । अत्र वयम्– ऋग्वेदे यदुना सह पठ्यते तुर्वशः एतत्संज्ञको यदोर्भ्राता तुर्वशः तुर्वसुर्वा । संज्ञाशब्दस्यापि अवयवार्थानुसारेणोपपत्तिर्गूढार्थविचार इति स्मारयामः । तर्हि तुर्वशः तुतोर्तेः हिंसार्थात् वष्टेः कान्त्यर्थाच्च निष्पन्नः, वीरः कान्तः कमनीयो वा । तस्मात् जित्वरो वीरः कमनीयो हि स पुरुषः यो देवभावकामः यज्वा अदैव्यान् अरीन् हिंसित्वा जयति, देवप्रियो भवति । अत एव ''अधितुर्वशे'' इत्यत्र वीरपुरुषस्य यजमानस्य अधिके समीपे वेति व्याख्येयम् ।। सुवृता– सुष्ठु वर्तत इति सुवृत् तेन ।। ७ ।।

## ऋक्संहिता पदपाठसहिता

**अर्वाञ्चा वां सप्तयोऽध्वरश्रियो वहन्तु सवनेदुप । इषं पृञ्चन्ता सुकृते सुदानव आ बर्हिः सीदतं नरा ॥ ८ ॥**

**अर्वाञ्चा । वाम् । सप्तयः । अध्वरऽश्रियः । वहन्तु । सवना । इत् । उप । इषम् । पृञ्चन्ता । सुऽकृते । सुऽदानवे । आ । बर्हिः । सीदतम् । नरा ॥ ८ ॥**

**स्कन्द–** **अर्वाञ्चा वाम्** अस्मदभिमुखौ युवाम् **सप्तयः** 'सप्तिः' (निघ.१,१४) इति अश्वनाम । अश्वाः । **अध्वरश्रियः** अध्वरं संश्रयन्ति इत्यध्वरश्रियः । यज्ञसम्बन्धा इत्यर्थः । अथवा अध्वरः इति ध्वरतेः हिंसाकर्मणः क्रियावचनः । अनुपहिंसिता श्रीर्येषान्तेऽध्वरश्रियो लक्ष्मीवन्तः । दर्शनीया इत्यर्थः । **वहन्तु सवना इत् उप** सवनशब्दो यज्ञनाम वा तदवयव-प्रातस्सवनमाध्यन्दिनसवनतृतीयसवनवचनो वा । इच्छब्दः पदपूरणः । सवनान्युप । यज्ञानां वा तदवयवानां प्रातस्सवनादीनां वा समीपे इत्यर्थः । ऊढौ च सन्तौ युवाम् **इषम्** अन्नम् **पृञ्चन्ता** पृचिरत्र सामर्थ्याद्दानार्थे । ददतौ तस्मै **सुकृते सुदानवे** शोभनानां स्तुतीनां कर्त्रे, शोभनानां च हविषां दात्रे यजमानाय **आ बर्हिः सीदतम्** आसीदतमिदं बर्हिः । हे **नरा!** ॥

**वेङ्कटमाधव–** अभिमुखौ **वाम्** अश्वाः । यज्ञं ये श्रयन्ति, ते सवनानां समीपे **वहन्तु** । अन्नं सुष्ठु कुर्वते शोभनदानाय यजमानानाय संयोजयन्तौ **आ सीदतम् बर्हिः** । नेतारौ ॥

**मुद्गल–** हे अश्विनौ । **अध्वरश्रियः** यागसेविनः । **सप्तयः** अश्वाः । **सवना इत् उप** अस्मदनुष्ठेयानि त्रीणि सवनान्येव उपलक्ष्य **अर्वाञ्चा** अभिमुखौ **वाम्** युवाम् **वहन्तु** प्रापयन्तु । हे **नरा!** अश्विनौ **सुकृते** सुष्टु कर्मकारिणे **सुदानवे** शोभनदानयुक्ताय यजमानाय **इषम्** अन्नम् **पृञ्चन्ता** संयोजवन्तौ युवाम् **बर्हिः आ सीदतम्** दर्भं प्राप्नुतम् ॥ ८ ॥

**सायण–** हे अश्विनौ । **अध्वरश्रियः** यागसेविनः । **सप्तयः** अश्वाः । **सवना इत् उप** अस्मदनुष्ठेयानि त्रीणि सवनान्येव उपलक्ष्य **अर्वाञ्चा** अभिमुखौ **वाम्** युवाम् **वहन्तु** प्रापयन्तु । हे **नरा!** अश्विनौ **सुकृते** सुष्टु कर्मकारिणे **सुदानवे** शोभनदानयुक्ताय यजमानाय **इषम्** अन्नम् **पृञ्चन्ता** संयोजवन्तौ युवाम् **बर्हिः आ सीदतम्** दर्भं प्राप्नुतम् ॥ **अर्वाञ्चा** । 'सुपां सुलुक्' इति विभक्तेः आकारः । **अध्वरश्रियः** । अध्वरं श्रयन्तीति अध्वरश्रियः । 'क्विब्वचिप्रच्छि'

(उ.सू.२.२१५) इत्यादिना क्विप् दीर्घश्च । **वहन्तु** । 'वह प्रापणे' । शपः पित्त्वादनुदात्तत्वम् । तिदृश्च लसार्वधातुकस्वरेण धातुस्वरेणाद्युदात्तत्वम् । पादादित्वात् निघाताभावः । **सवना** । 'षूञ् अभिषवे' । अभिषूयते सोम एष्विति सवनानि । अधिकरणे ल्युट् । योरनादेशः । गुणावादेशौ । 'लिति' इति प्रत्ययात् पूर्वस्योदात्तत्वम् । 'शेश्छन्दसि बहुलम्' इति शेर्लोपः । **पृञ्चन्ता** । 'पृची सम्पर्के' । शतरि रुधादित्वात् श्नम् । 'श्नसोरल्लोपः' इति अकारलोपः । प्रत्ययस्वरः । **सुकृते** । 'सुकर्मपाप' (पा.सू.३.२.८९) इत्यादिना करोतेः भूते काले क्विप् । 'ह्रस्वस्य पिति' (पा.सू.६.१.७१) इति तुक् । **सुदानवे** । शोभनं दानु दानं यस्यासौ सुदानुः । दानुशब्दो नुप्रत्ययान्त आद्युदात्तः । 'आद्युदात्तं व्यच्छन्दसि' इति बहुव्रीहौ उत्तरपदाद्युदात्तत्वम् । **सीदतम्** । 'षद्लृ विशरणगत्यवसादनेषु' ।। ८ ।।

**सिद्धाञ्जनम्–** हे अश्विनौ! **अध्वरश्रियः** अध्वरं श्रयन्ते, यज्ञसेविन इत्यर्थः । **सप्तयः** अश्वाः **सवना इत् उप** सवनानि अस्मदीयान्युपलक्ष्यैव **अर्वाञ्चा** अर्वाञ्चौ अभिमुखौ **वाम्** युवां **वहन्तु** प्रापयन्तु । हे **नरा** नरौ नेतारौ देवौ, **सुकृते** शोभनकर्मकारिणे **सुदानवे** शोभनदानयुक्ताय यजमानाय **इषम्** एषणां प्रेरणात्मिकां शक्तिं **पृञ्चन्ता** पृञ्चन्ती संयोजयन्तौ युवां **बर्हिः** आस्तीर्णं सिद्धमासनं **आसीदतम्** प्राप्नुतम् ।। **अर्वाञ्चा–** विभक्तेराकारः । **पृञ्चन्ता–** पृची सम्पर्के, शतरि रुधादित्वात् श्नम् । अन्ये गताः ।। ८ ।।

## ऋक्संहिता पदपाठसहिता

**तेन॑ नास॒त्या ग॑तं॒ रथे॑न॒ सूर्य॑त्वचा । येन॒ शश्व॑दू॒हथु॑र्दा॒शुषे॒ वसु॒ मध्वः॒ सोम॑स्य पी॒तये॑ ।।**
**तेन॑ । ना॒स॒त्या॒ । आ । ग॒त॒म् । रथे॑न । सूर्य॑ऽत्वचा । येन॑ । शश्व॑त् । ऊ॒हथुः॑ । दा॒शुषे॑ । वसु॑ । मध्वः॑ । सोम॑स्य । पी॒तये॑ ।। ९ ।।**

**स्कन्द– तेन नासत्या** हे नासत्यौ! **आ गतम् रथेन, सूर्यत्वचा** सूर्यसदृशवर्णेन । हिरण्यखचितत्वादत्यन्तोज्ज्वलेनेत्यर्थः । **येन शश्वत्** बहुनामैतत् (तु.निघ.३,१) । बहु **ऊहथुः** प्रापितवन्तौ स्थः । दत्तवन्तावित्यर्थः । **दाशुषे वसु** । किमर्थम् । **मध्वः सोमस्य पीतये** मधुस्वादस्य सोमस्य पानाय ।। ९ ।।

**वेङ्कटमाधव– तेन** नासत्यौ! आगच्छतम् । **रथेन** सूर्यसदृशरूपेण, **येन** बहु धनम् **ऊहथुः** यजमानाय मधुसदृशं सोमं पातुम् ।। ९ ।।

**मुद्गल–** हे **नासत्या** अश्विनौ! **सूर्यत्वचा** सूर्यसंवृतेन **तेन** प्रसिद्धेन **रथेन आ गतम्** आगच्छतम् । **दाशुषे** हविर्दत्तवते यजमानाय **वसु** धनम् **शश्वत्** सर्वदा **येन** रथेन **ऊहथुः** प्रापितवन्तौ । तेन रथेनेति पूर्वत्रान्वयः । किमर्थम् आगतमिति । तदुच्यते । **मध्वः** मधुरस्य **सोमस्य पीतये** सोमपानार्थम् ।। ९ ।।

**सायण–** हे नासत्या! **सूर्यत्वचा** सूर्यसंवृतेन सूर्यरश्मिसदृशेन वा **तेन** प्रसिद्धेन **रथेन आ गतं** आगच्छतम् । **दाशुषे** हविर्दत्तवते यजमानाय **वसु** धनं **शश्वत्** सर्वदा **येन** रथेन **ऊहथुः** प्रापितवन्तौ । तेन रथेनेति पूर्वत्रान्वयः । किमर्थमागमनमिति तदुच्यते । **मध्वः** मधुरस्य **सोमस्य पीतये** सोमपानार्थम् ।। **सूर्यत्वचा** । 'त्वच संवरणे' । त्वचति संवृणोतीति त्वक् रश्मिः । सूर्यस्य त्वगिव त्वग्यस्य । 'सप्तम्युपमान' (पा.सू.२.२.२४,१२) इत्यादिना बहुव्रीहिः उत्तरपदलोपश्च । सूर्यशब्दः 'षू प्रेरणे' इत्यस्मात् क्यपि 'राजसूयसूर्य' इत्यादिना रुडागमसहितो निपातितः । ततः प्रत्ययस्य पित्त्वादनुदात्तत्वे धातुस्वरेणाद्युदात्तः । स एव बहुव्रीहौ पूर्वपदप्रकृतिस्वरेण शिष्यते । **ऊहथुः** । 'वह प्रापणे' । लिटि 'असंयोगाल्लिट् कित्' (पा.सू.१.२.५) इति लिटः कित्त्वे 'वचिस्वपि' इत्यादिना सम्प्रसारणम् । अभ्यासहलादिशेषौ सवर्णदीर्घः । प्रत्ययस्वरः । यद्वृत्तयोगादनिघातः ।। ९ ।।

**सिद्धाञ्जनम्–** हे **नासत्या** अश्विनौ! **सूर्यत्वचा** सूर्यः त्वक् चर्मसंवरणं यस्य तेन सूर्यप्रभासंवृतेन **तेन** प्रसिद्धेन **रथेन आगतम्** युवां आगच्छतम् । **दाशुषे** दत्तवते यजमानाय **वसु** सत्त्वात्मकं द्रव्यं **शश्वत्** सर्वदा **येन** रथेन **ऊहथुः** वोढवन्तौ प्रापितवन्तौ, तेन रथेनेति पूर्वेण सम्बन्धः । किमर्थमागमनम्? **मध्वः** मधुरस्य **सोमस्य पीतये** पानाय ।। ९ ।।

## ऋक्संहिता पदपाठसहिता

**उक्थेभिरर्वागवसे पुरूवसू अर्कैश्च नि ह्वयामहे ।**
**शश्वत्कण्वानां सदसि प्रिये हि कं सोमं पपथुरश्विना ।। १० ।।**
उक्थेभिः । अर्वाक् । अवसे । पुरुवसू इति पुरुऽवसू । अर्कैः । च । नि । ह्वयामहे ।
शश्वत् । कण्वानाम् । सदसि । प्रिये । हि । कम् । सोमम् । पपथुः । अश्विना ।।१०।।

**स्कन्द– उक्थेभिः अर्वाक्** स्तोत्रैः शस्त्रैश्च अर्वाक् आत्माभिमुखम् । **अवसे** सोमेन तर्पणायः **पुरुवसू** बहुधनौ **अर्कैश्च** मन्त्रैश्चान्यैरपि यजुर्लक्षणैः **नि ह्वयामहे** नियतं ह्वयामः । किं कारणम् । उच्यते । यस्मान् **शश्वत्** नित्यपर्यायोऽयं शश्वच्छब्दः । नित्यम् अस्माकम् **कण्वानाम्** स्वभूते **सदसि प्रिये** इष्टे । कस्य । सामर्थ्याद् युवयोरश्विनोरस्माकमेव वा कण्वानाम् । हिशब्दस्तु पदपूरणः । **कम्** सुखम् **सोमम् पपथुः** । हे अश्विनौ! यस्मात् पूर्वेष्वपि कालेषु नित्यमस्मादीयेषु सदस्सु सोमान् पीतवन्तौ स्थः, तस्मादुत्पन्नप्रणयत्वादिदानीमपि नियतं ह्वयाम इत्यर्थः ।। १० ।।

**वेङ्कटमाधव–** स्तोत्रशस्त्रैः रक्षणाय अस्मदभिमुखं बहुधनावश्विनौ **नि ह्वयामहे** । नित्यं हि **कण्वानाम् सदसि प्रिये** यज्ञे अश्वनौ! युवां खलु **सोमम्** पीतवन्ताविति ।। १० ।।

**मुद्गल– पुरूवसु** प्रभूतधनौ अश्विनौ । **अवसे** अस्मद्रक्षणार्थम् । **उक्थेभिः** उक्थैः शस्त्रैः **अर्कैश्च** अर्चनसाधनैः स्तोत्रैश्च **अर्वाक्** अस्मदाभिमुख्येन **नि ह्वयामहे** नितरामाह्वयामः । हे **अश्विना** अश्विनौ! **कण्वानाम्** कण्वपुत्राणाम् **प्रिये सदसि** यज्ञस्थाने **शश्वत्** सर्वदा **सोमम् पपथुः हि कम्** युवां पीतवन्तौ खलु ।। १० ।।

**सायण– पुरूवसु** प्रभूतधनौ अश्विनौ । **अवसे** अस्मद्रक्षणार्थम् । **उक्थेभिः** उक्थैः शस्त्रैः **अर्कैश्च** अर्चनसाधनैः स्तोत्रैश्च **अर्वाक्** अस्मदाभिमुख्येन **नि ह्वयामहे** नितरामाह्वयामः । हे **अश्विना** अश्विनौ! **कण्वानाम्** कण्वपुत्राणाम्मेधाविनां वा **प्रिये सदसि** यज्ञस्थाने **शश्वत्** सर्वदा **सोमम् पपथुः हि कम्** युवां पीतवन्तौ खलु । **उक्थेभिः** । 'बहुलं छन्दसि' इति भिसः ऐसादेशाभावः । 'बहुवचने झल्येत्' इति एत्वम् । **अर्कैः** । 'ऋच स्तुतौ' । 'पुंसि संज्ञायां घः प्रायेण' इति करणे घः । 'चजोः कुघिण्ण्यतोः' इति कुत्वम् । **नि ह्वयामहे** । 'निसमुपविभ्यो ह्वः' (पा.सू.१.३.३०) इत्यात्मनेपदम् । **सदसि** । सीदन्त्यस्मिन्निति सदः । असुनो नित्त्वादाद्युदात्तत्वम् । **पपथुः** । 'पा पाने' । लिटि 'आतो लोप इटि च' इति आकारलोपः । प्रत्ययस्वरः । 'हि च' इति निघातप्रतिषेधः ।। १० ।।

**सिद्धाञ्जनम्– पुरुवसू** बहुधनौ अश्विनौ । **अवसे** अस्मदभिवृद्ध्यर्थम् । **उक्थेभिः** शंसनात्मकैः शस्त्रैर्मन्त्रैः **अर्कैश्च** दीप्तैः, ऋग्रूपैः स्तोत्रैश्च **अर्वाक्** अस्मदाभिमुख्येन **निह्वयामहे**

नितरामाह्वयामः । हे **अश्विना! कण्वानाम्** कण्वपुत्राणां, मेधाविनां वा **प्रिये सदसि** इष्टे यजनस्थाने **शश्वत्** सर्वदा **सोमम् पपथुः हि कम्** युवां सोमं पीतवन्तौ खलु ।। **उक्थेभिः**– भिस एसादेशाभावः । **अर्कैः**– ऋच स्तुतौ, पुंसि संज्ञायामिति करणे घः । **निह्वयामहे**– निपूर्वो ह्वयतिरात्मनेपदम् । **पपथुः**– पा पाने, लिटि मध्यमपुरुषद्विवचनम् ।। १० ।।

**।। इति प्रथमाष्टके चतुर्थाध्याये द्वितीयो वर्गः ।।**

## ।। अथ तृतीयो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

**(सूक्तम् ४८)**

**(१६ प्रस्कण्वः काण्वः । उषाः । प्रगाथः=विषमा बृहत्यः, समाः सतोबृहत्यः ।)**

**सह वामेन न उषो व्युच्छा दुहितर्दिवः । सह द्युम्नेन बृहता विभावरि राया देवि दास्वती ।। १ ।।**

**सह । वामेन । नः । उषः । वि । उच्छ । दुहितः । दिवः । सह । द्युम्नेन । बृहता । विभाऽवरि । राया । देवि । दास्वती ।। १ ।।**

**स्कन्द**– 'उषस्ये द्वे' एते सूक्ते उषोदेवत्ये । **वामम्** अत्रान्नमभिप्रेतम् । **सह वामेन** वननीयेनात्यन्तोत्कृष्टेनान्नेन **नः** अस्माकमर्थाय हे **उषः! वि उच्छा** विविधं तमांसि विवासय प्रकाशं कुर्वित्यर्थः । हे **दुहितः दिवः!** आदित्यतेजसो दिवि जायमानत्वादुषा दिवो दुहिता । तेनैवमामन्त्यते– हे दिवो दुहितः इति । न च केवलेनान्नेनैव । किं तर्हि । **सह द्युम्नेन** द्युम्नं द्योततेः, यश इहाभिप्रेतम् । यशसा च सह । कीदृशेन । **बृहता** महता । हे **विभावरि!** दीप्तिमति **राया** धनेन च हे **देवि! दास्वती** दानवती । अन्नयशोधनानि अस्मभ्यं ददती व्युच्छेत्यर्थः ।। १ ।।

**वेङ्कटमाधव– सह** वननीयेन अस्माकम् । **उषः वि उच्छ दिव दुहितः!** सह अन्नेन महता । दीप्तिमति! धनेन च **देवि!** दानवति । अन्नं धनं च वाममिति ।। १ ।।

**मुद्गल**– 'सह वामेन' इति षोडशर्चं पञ्चमं सूक्तम् । प्रस्कण्व ऋषिः । बार्हतत्वात् अयुजो

बृहत्यः । युजः सतो बृहत्यः । उषो देवता ।। हे **दुहितः दिव** द्युदेवताया पुत्रि! **उषः** उषः कालदेवते! **नः अस्मदर्थम् वामेन** रम्येण धनेन **सह वि उच्छ** प्रभातं कुरु । हे **विभावरि** उषोदेवते! **बृहता** प्रभूतेन **द्युम्नेन** अन्नेन सह व्युच्छ । हे **देवि! त्वम् दास्वती** दानयुक्ता सती **राया** यशोलक्षणेन धनेन सह व्युच्छ ।। १ ।।

सह वामेन' इति षोडशर्चं पञ्चमं सूक्तम् । प्रस्कण्व ऋषिः । बार्हनत्वात् अयुजो बृहत्यो युजः सतोबृहत्यः । उषा देवता । 'सह षोळशोषस्यं तु' इति अनुक्रमणिका । प्रातरनुवाके उषस्ये क्रतौ बार्हते छन्दसीदं सूक्तम् । 'अथोषस्यः' इति खण्डे सूत्रितं– 'प्रत्यु अदर्शि सह वामेनेति बार्हतम्' (आश्व.श्रौ.४.१४) इति । तथा आश्विनशस्त्रेऽप्येतस्सूक्तं, 'प्रातरनुवाकन्यायेन' (आश्व.श्रौ.६.५) इत्यतिदिष्टत्वात् ।। १ ।।

**सायण–** हे **दुहितर्दिवः** द्युदेवतायाः पुत्रि **उषः** उषःकालदेवते! **नः** अस्मदर्थं **वामेन** धनेन सह **व्युच्छ** प्रभातं कुरु । हे **विभावरि** उषोदेवते! **बृहता** प्रभूतेन **द्युम्नेन** अन्नेन सह व्युच्छ । हे **देवि** त्वं **दास्वती** दानयुक्ता सती **राया** पशुलक्षणेन धनेन सह व्युच्छ ।। उच्छ । 'उछी विवासे' । **दुहितर्दिवः** । 'सुबामन्त्रिते पराङ्गवत्स्वरे' इत्यत्र 'परमपि च्छन्दसि' (पा.सू.२.१.२.६) इति वचनात् दिवः इत्यस्य पूर्वाङ्गवद्भावे सति 'आमन्त्रितस्य च' इति षष्ठ्यामन्त्रितसमुदायस्य आष्टमिकं सर्वानुदात्तत्वम् । **बृहता** । 'बृहन्महतोरुपसङ्ख्यानम्' इति विभक्तेरुदात्तत्वम् । **विभावरि** । 'भा दीप्तौ' । 'आतो मनिन्' इत्यादिना वनिप् । 'वनो र च' इति ङीप्; तत्सन्नियोगेन नकारस्य रेफादेशः । सम्बुद्धौ ह्रस्वत्वम् । **दास्वती** । 'डुदाञ् दाने' । भावे असुन्प्रत्ययः । तदस्यास्तीति दास्वती । 'मादुपधायाः' इति मतुपो वत्वम् । 'उगितश्च' इति ङीप् ।। १ ।।

**सिद्धाञ्जनम्–** हे **दिवो दुहितः** द्युलोकस्य पुत्रि । **उषः** उषोदेवि! **वामेन सह** वननीयेन सौभाग्येन सह **नः** अस्माकमर्थे **व्युच्छ** विभाहि, प्रभातं कुरु । हे **विभावरि** उषः! **बृहता** बृहच्छब्दवाच्येन सत्यसम्बन्धिना महता **द्युम्नेन सह** दिव्यप्रकाशेन सह **व्युच्छ** । हे देवि, **दास्वती** त्वं दानयुक्ता सती **राया** धनेन दिव्यलक्षणेन व्युच्छ ।। उच्छ–उच्छी विवासे । **विभावरि–** भा दीप्तौ, आतो मनिन्नित्यादिना वनिप्, वनो र चेति ङीप्, नकारस्य रेफादेशः, सम्बोधने ह्रस्वः । **दास्वती**–डु दाञ् दाने, भावे असुन्, तदस्याः अस्तीति दास्वती ।।

## ऋक्संहिता पदपाठसहिता

**अश्वावतीर्गोमतीर्विश्वसुविदो भूरि च्यवन्त वस्तवे । उदीरय प्रति मा सूनृता उषश्चोद राधो मघोनाम् ।। २ ।।**

**अश्वऽवतीः । गोऽमतीः । विश्वऽसुविदः । भूरि । च्यवन्त । वस्तवे । उत् । ईरय । प्रति । मा । सूनृताः । उषः । चोद । राधः । मघोनाम् ।। २ ।।**

**स्कन्द– अश्वावतीः** अश्वैस्तद्वत्य उषसः । **गोमतीः** गोभिश्च तद्वत्यः । अश्वान् गाश्च स्तोतृभ्यो ददत्य इत्यर्थः । **विश्वसुविदः** सर्वस्य भूतजातस्य सुष्ठु वेदयित्र्यः । प्रकाशिका इत्यर्थः । स्वयमेव वा वेदित्र्यः । **भूरि** बहु **च्यवन्त** च्यवतिर्गतिकर्मा (तु.निघ.२,१४) । गतवत्य । समस्तं त्रैलोक्यं व्याप्तवत्य इत्यर्थः । किमर्थम् । **वस्तवे** वस आच्छादने । स्वज्योतिषा तमसामाच्छादनाय, प्रकाशनायेत्यर्थः । परोऽर्धर्चः प्रत्यक्षकृतत्वाद् भिन्नं वाक्यम् । **उत् इरय** प्रेरय **प्रति मा** मां प्रति **सूनृताः** अपठितमपि वाङ्नामैतत् । स्तुतिलक्षणा वाचः । मम वाचं प्रेरय येनाहं त्वां प्रभूताभिः स्तुतिभिः स्तौमीत्यर्थः । अथवा 'सूनृता' (निघ.१,८) इति उषोनाम । यत्तच्छब्दावध्याहृत्य पूर्वेणार्धर्चेन सहैकवाक्यता एवं योज्या– या अश्वावतीत्यादिगुणा भूरि च्यवन्त वस्तवे तास्त्वमुदीरय मां प्रति सूनृताः प्रकाशरूपा उषसः । हे **उषः!** प्रकाश-रूपाणामुषसाम् अधिष्ठात्र्या अधिदेवताया इदमुषश्शब्देन सम्बोधनम् । **चोद राधः** । धनं च देहीत्यर्थः । **मघोनाम्** धनवतामयष्टॄणां स्वभूतम् । ये धनवन्तो न यजन्ते तेभ्योऽपहृत्येत्यर्थः । अथवा मघशब्दोऽत्र हविर्लक्षणे धने वर्तते । षष्ठीनिर्देशाद् योग्यमिति शेषः । हविर्लक्षणेन धनेन धनवताम् अस्मादृशां योग्यम् । यष्टॄणां यद्योग्यमित्यर्थः ।। २ ।।

**वेङ्कटमाधव–** अश्ववत्यः गोमत्यः विश्वस्य धनस्य सुष्ठु वेदयित्र्यः अत्यन्तं दिवः **च्यवन्त** दिवसकरणाय । इदानीं मां **प्रति सूनृताः** वाचः **उत् ईरय** । **उषः!** चोदय धनम् आढ्यानां तत आहृत्य भिक्षुभ्यः ।। २ ।।

**मुद्गल– अश्वावतीः** बह्वश्वोपेताः । **गोमतीः** बहुभिर्गोभिर्युक्ताः । **विश्वसुविदः** कृत्स्नस्य धनस्य सुष्ठु लम्भयित्र्यः उषोदेवताः । **वस्तवे** प्रजानां निवासाय **भूरि** प्रभूतं यथा भवति तथा **च्यवन्त** प्राप्ताः । हे उषोदेवते! **मा प्रति** मामुद्दिश्य **सूनृताः** प्रियहितवाचः **उत् ईरय** ब्रूहि । **मघोनाम्** धनवतां सम्बन्धि **राधः** धनम् **चोद** अस्मदर्थे प्रेरय ।। २ ।।

**सायण– अश्वावतीः** बह्वश्वोपेताः । **गोमतीः** बहुभिर्गोभिर्युक्ताः । **विश्वसुविदः** कृत्स्नस्य धनस्य सुष्ठु लम्भयित्र्यः उषोदेवताः । **वस्तवे** प्रजानां निवासाय **भूरि** प्रभूतं यथा भवति तथा **च्यवन्त** प्राप्ताः । हे उषोदेवते! **मा प्रति** मामुद्दिश्य **सूनृताः** प्रियहितवाचः **उत् ईरय** ब्रूहि । **मघोनाम्** धनवतां सम्बन्धि **राधः** धनम् **चोद** अस्मदर्थे प्रेरय ।। **अश्वावतीः** । 'मन्त्रे सोमाश्वेन्द्रियविश्वदेव्यस्य मतौ' (पा.सू.६.३.१३१) इति पूर्वपदस्य दीर्घत्वम् । 'वा छन्दसि' इति पूर्वसवर्णदीर्घनिषेधस्य पाक्षिकत्वो(त्वस्यो)क्तेः पूर्वसवर्णदीर्घत्वम् । **च्यवन्त** । 'च्युङ् गतौ' । लङि 'बहुलं छन्दस्यमाङ्योगेऽपि' इति अडभावः । **वस्तवे** । 'वस निवासे' । 'तुमर्थे सेसेन्' इति तवेन्प्रत्ययः । नित्त्वादाद्युदात्तत्वम् । **ईरय** । 'ईर गतौ कम्पने च' । हेतुमति णिच् । **चोद** । 'चुद संचोदने' चौरादिकः, लोटि 'छन्दस्युभयथा' इति शपः आर्धधातुकत्वात् 'णेरनिटि' इति णिलोपः । शपः पित्त्वादनुदात्तत्वे धातुस्वरः । पादादित्वात् निघाताभावः । **मघोनाम्** । षष्ठीबहुवचने 'श्वयुवमघोनामतद्धिते' (पा.सू.६.४.१३३) इति सम्प्रसारणम् ।। २ ।।

**सिद्धाञ्जनम्– अश्वावतीः** भोगक्रियासमर्थप्राणबलस्य सङ्केतयितारः अश्वाः तद्वत्यः । **गोमतीः** चित्प्रकाशमरीचयो गावः तद्वत्यः । उभयत्र मतुप् भूमार्थे । **विश्वसुविदः** विश्वस्य कृत्स्नस्य सुष्ठु वेदित्र्यः लम्भयित्र्यो वा । उषसः **वस्तवे** अस्माकं भानाय, वासायेत्येके । तर्हि दिव्याय वासाय **भूरि** प्रभूतं यथा तथा **च्यवन्त** प्राप्ताः । हे **उषः** उषोदेवि! **मा प्रति** मामुद्दिश्य **सूनृताः** शोभनाः सत्या वाचः **उदीरय** ब्रूहि । **मघोनाम्** धनवतां सम्बन्धि **राधः** साधकं धनं **चोद** अस्मदर्थं चोदय प्रेरय । 'सं चोदय चित्रं राधः विभु प्रभु' (१.९.५) इत्यत्र यद्राधः चोदयेति प्राह ऋषिः तदेवेहापि राधसो लक्षणं बोध्यम् ।। **अश्वावतीः**– मन्त्रे सोमादेः मतौ पूर्वपददीर्घत्वं छन्दसि पाक्षिकम् । **च्यवन्त**–च्युङ् गतौ, लङि अडभावः । **वस्तवे**– 'वस विवासे' उच्छत्यर्थे, तुमर्थे तवेन् । **चोद**–, चुद सञ्चोदने, चुरादिः छन्दसि शप् ।।

## ऋक्संहिता पदपाठसहिता

**उवासोषा उच्छाच्च नु देवी जीरा रथानाम् । ये अस्या आचरणेषु दध्रिरे समुद्रे न श्रवस्यवः ।। ३ ।।**

**उवास । उषाः । उच्छात् । च । नु । देवी । जीरा । रथानाम् । ये । अस्याः । आऽचरणेषु । दध्रिरे । समुद्रे । न । श्रवस्यवः ।। ३ ।।**

**स्कन्द– उवास उषाः** प्रागपररात्रात् उवास रात्र्या सहोषितवत्युषाः । रात्रावेवानुप्रविष्टाऽदृश्यरूपाऽभवदित्यर्थः । **उच्छात् च** व्युष्टवती चापररात्रे । **नु** क्षिप्रम् । कीदृशी । **देवी** दानादिगुणा । **जीरा रथानाम्** जीर इति क्षिप्रनाम (तु.निघ.२,१५) । **रथो** रंहतेर्गतिकर्मणः, गन्तेहाभिप्रेतः । निर्धारणे च षष्ठी । क्षिप्रा गन्तॄणां मध्ये । अथवा रथानामिति षष्ठीनिर्देशात् सकाशादिति वाक्यशेषः । क्षिप्रा रथानामपि सकाशात् । कस्य उवासोषा उच्छाच्च । उच्यते । **ये अस्याः आचरणेषु दध्रिरे** आ इत्येष परीत्येतस्य स्थाने । परिचरणेषु **दध्रिरे** आत्मानं धारितवन्तः । परिचर्यायां स्थिता इत्यर्थः । कथम् । **समुद्रे न श्रवस्यवः** 'श्रवः' (निघ.२,१०) इति धननाम । तत्कामाः श्रवस्यवः वणिजः । यथाऽत्यन्तधनाशया समुद्रे वणिजो व्यवतिष्ठन्ते तद्वत् । य एवोषसं परिचरन्ति तेषामेव सा उवास उच्छाच्च तत्कार्यकरत्वात्, नेतरेषामयष्टॄणामित्यर्थः ।। ३ ।।

**वेङ्कटमाधव–** पुराऽपि व्युष्टवती, सम्प्रति च व्यौच्छत् क्षिप्रम् । **उषाः** क्षेप्त्री **रथानाम्** । **ये** रथाः उषसः आगमनेषु तिष्ठन्ति अन्नमाजिहीर्षवः **समुद्रे** इव नाविकाः ।। ३ ।।

**मुद्गल– उषाः देवी उवास** पुरा निवासमकरोत् । प्रभातं कृतवतीत्यर्थः । **च नु** अद्यापि **उच्छात्** व्युच्छति प्रभातं करोति । कीदृशी देवी । **रथानाम् जीरा** प्रेरयित्री । उषःकाले हि रथाः प्रेर्यन्ते । **अस्याः** उषसः **आचरणेषु** आगमनेषु **ये** रथा **दध्रिरे** धृताः सज्जीकृता भवन्ति तेषां रथानामिति पूर्वत्रान्वयः । रथप्रेरणे दृष्टान्तः । **श्रवस्यवः** धनकामा **समुद्रे न** यथा समुद्रमध्ये नावः सज्जीकृत्य प्रेरयन्ति तद्वत् ।। ३ ।।

**सायण– उषाः देवी उवास** पुरा निवासमकरोत् । प्रभातं कृतवतीत्यर्थः । **च नु** अद्यापि **उच्छात्** व्युच्छति प्रभातं करोति । कीदृशी देवी । **रथानाम्** जीरा प्रेरयित्री । उषःकाले हि रथाः प्रेर्यन्ते । **अस्याः** उषसः **आचरणेषु** आगमनेषु ये रथा **दध्रिरे** धृताः सज्जीकृता भवन्ति तेषां रथानामिति पूर्वत्रान्वयः । रथप्रेरणे दृष्टान्तः । **श्रवस्यवः** धनकामा **समुद्रे न** यथा समुद्रमध्ये नावः सज्जीकृत्य प्रेरयन्ति तद्वत् ।। **उवास** 'वस निवासे' णलि 'लिट्यभ्यासस्योभयेषाम्'

(पा.सू.६.१.१७) इति **अभ्यासस्य सम्प्रसारणम्** । लित्स्वरेण प्रत्ययात् पूर्वस्योदात्तत्वम् । **उच्छात्** । लेटि आडागमः । 'इतश्च लोपः' इति इकारलोपः । तुदादित्वात् शप्रत्ययः । आगमानुदात्तत्वे प्रत्ययस्वरः । उषाः इत्यस्य वाक्यान्तरगतत्वात् तदपेक्षयास्य निघातो न भवति, 'समानवाक्ये निघातयुष्मदस्मदादेशा वक्तव्याः' (पा.सू.८.१.१८.५) इति वचनात् । **जीरा** । जु इति गत्यर्थः सौत्रो धातुः । 'जोरी च' (उ.सू.२.१८१) इति रक्प्रत्ययः । **अस्याः** । 'इदमोऽन्वादेशे' इति अशादेशोऽनुदात्तः विभक्तिरपि सुस्वादनुदात्तेति सर्वानुदात्तत्वम् । **आचरणेषु** । चरः गत्यर्थः । 'ल्युट् च' (पा.सू.३.३.११५) इति भावे ल्युट् । लित्स्वरेण प्रत्ययात् पूर्वस्योदात्तत्वम् । कृदुत्तरपदप्रकृतिस्वरत्वम् । **दध्रिरे** । 'धृङ् अवस्थाने' । लिटः कित्त्वाद्गुणाभावे यणादेशः । चित्त्वादन्तोदात्तत्वम् । यच्छब्दयोगादनिघातः । **श्रवस्यवः** । श्रूयते इति श्रवो धनम् । असुन् । तदात्मन इच्छन्तीति श्रवस्यवः । 'सुप आत्मनः क्यच्' । 'क्याच्छन्दसि' इति उप्रत्ययः ।। ३ ।।

## ऋक्संहिता पदपाठसहिता

**उषो ये ते प्र यामेषु युञ्जते मनो दानाय सूरयः । अत्राह तत्कण्व एषां कण्वतमो नाम गृणाति नृणाम् ।। ४ ।।**

**उषः । ये । ते । प्र । यामेषु । युञ्जते । मनः । दानाय । सूरयः । अत्र । अह । तत् । कण्वः । एषाम् । कण्वऽतमः । नाम । गृणाति । नृणाम् ।। ४ ।।**

**स्कन्द– उषो ये त** हे उषः । ये ते तुभ्यम् । **यामेषु** यज्ञेषु **प्र युञ्जते** आत्मीयम् **मनः** हविषाम् **दानाय** । ये तुभ्यं यज्ञेषु हवींषि ददतीत्यर्थः । **सूरयः** स्तोतारः । **अत्र** पृथिव्यास्सन्निहिताया अयं प्रतिनिर्देशः । अत्र पृथिव्याम् । **अह** अहशब्दो विनिग्रहार्थीय एवशब्दस्यार्थे कण्वशब्दाच्च परो द्रष्टव्यः । **तत् एषाम् नृणाम्** इति समानाधिकरणास्त्रयो निर्धारणषष्ठ्यन्ताः । तेषामेषां मनुष्याणां मध्ये **कण्व** एव **कण्वतमो नाम गृणाति** कण्व इति सोऽयमित्यभिसम्बन्धात् पितृशब्दः पुत्रे प्रयुज्यते । आत्मन एवायं परोक्षरूपेण प्रथमपुरुषेणाभिधानम् । कण्वतमः इति कण्वशब्दो मेधाविनाम (तु.निघ.३,१५) । अतिशयेन मेधावी कण्वतमः । अयं कण्वपुत्रः प्रस्कण्वो नाम मेधावितमस्तव नाम स्तौतीत्यर्थः । नामस्तुत्या चात्र नामवतामेव स्तुतिः प्रतिपाद्यते । त्वां स्तौतीत्यर्थः । ये स्तोतारस्तुभ्यं यज्ञेषु हवींषि

ददति समस्तायामेतस्यां पृथिव्यां तेषां मध्ये अहमेव कण्वपुत्रस्त्वामतिशयेन स्तौमि, नान्यः कश्चिदिति समस्तार्थः ॥ ४ ॥

**वेङ्कटमाधव–** उषसि शयने शयानः प्रस्कण्व उदाराणां नामान्यसावसाविति ब्रूते इति समुदायार्थः । उषः! तव आगमनेषु **ये** प्राज्ञा **मनः दानाय** प्रायुञ्जत । **अत्र** एव कण्वानां वरिष्ठः कण्वपुत्रः **एषाम् नृणाम् तत् नाम** उच्चारयति ॥ ४ ॥

**मुद्गल–** हे **उषः! ते** तव **यामेषु** गमनेषु सत्सु **ये सूरयः** विद्वांसः दानाभिज्ञा **दानाय** धनादिदानार्थम् । **मनः** स्वकीयम् **प्र युञ्जते** प्रेरयन्ति । दानशीला उदाराः प्रभवः प्रातःकाले दातुमिच्छन्तीत्यर्थः । **एषाम्** दातुमिच्छताम् **नृणाम्, तत् नाम** दानविषये लोकप्रसिद्धं नाम **कण्वतमः** अतिशयेन मेधावी कण्वो महर्षिः । **अत्र अह** अत्रैव उषःकाले **गृणाति** उच्चारयति । यो दातुमिच्छति यश्च नामग्रहणेन दातारं प्रशंसति तौ उभौ अपि उषःकाल एव तथा कुरुत इत्युषसः स्तुतिः ॥ ४ ॥

**सायण–** हे **उषः! ते** तव **यामेषु** गमनेषु सत्सु **ये सूरयः** विद्वांसः दानाभिज्ञा **दानाय** धनादिदानार्थम् । **मनः** स्वकीयम् **प्र युञ्जते** प्रेरयन्ति । दानशीला उदाराः प्रभवः प्रातःकाले दातुमिच्छन्तीत्यर्थः । **एषाम्** दातुमिच्छताम् **नृणाम्, तत् नाम** दानविषये लोकप्रसिद्धं नाम **कण्वतमः** अतिशयेन मेधावी कण्वो महर्षिः । **अत्र अह** अत्रैव उषःकाले **गृणाति** उच्चारयति । यो दातुमिच्छति यश्च नामग्रहणेन दातारं प्रशंसति तौ उभौ अपि उषःकाल एव तथा कुरुत इत्युषसः स्तुतिः ॥ **गृणाति** 'गॄ शब्दे' क्रैयादिकः । 'प्वादीनां ह्रस्वः' इति ह्रस्वत्वम् । **नृणाम्** । नामि 'नृ च' (पा.सू.६.४.६) इति दीर्घप्रतिषेधः । 'नृ चान्यतरस्याम्' (पा.सू.६.१.१८४) इति विभक्तेरुदात्तत्वम् ॥ ४ ॥

**सिद्धाञ्जनम्–** हे **उषः! ते** तव **यामेषु** गमनेषु सत्सु **ये सूरयः** विद्वांसः प्रेरणाबलयुक्ताः दानतत्त्वज्ञाः । **दानाय** देवेभ्यो दानार्थम् । **मनः** स्वकीयं **प्रयुञ्जते** प्रेरयन्ति । **एषां** सूरीणां दानदक्षाणां **कण्वतमः** अतिशयेन कण्वः मेधावी कण्वः महर्षिः । **नृणाम्** दानशीलानां यजमानानां लोके **तत्** प्रसिद्धं **नाम अत्र अह** अस्मिन्नेव काले स्थाने वा **गृणाति** उच्चारयति । देवभावं प्राप्तानां विदुषां दानक्रियाफलरहस्यविदां श्रेष्ठतमो मेधावी कण्वो महर्षिरिव उषसि प्रादुर्भूतायां

दानप्रथितानां नामोच्चारयति । तयोच्चारणेन दाता यजमानश्च उद्दीपितदानप्रेरणाबलः दानफल भूतदिव्यप्रबोधशाली अनन्तरकरणीयाय सन्नद्धो भवति । उषसः प्रादुर्भावस्यायं स्तुत्या महिमा यदत्र देवेभ्यो दानप्रेरणा सूरिभिः कृता यजमानेषु सुफला भवति । अस्यामृचि 'एषां' सूरीणामिति व्याख्यातं, यत्तदोर्नित्यसम्बन्धात् । 'ये सूरयः' इति पूर्वत्र स्थितेश्च । अन्यथा कथयन्ति पूर्वे 'यो दातुमिच्छति यश्च नामग्रहणेन दातारं प्रशंसति तावुभावप्युषःकाल एव तथा कुरुतः' इति स्थूलः पक्षः ।। **अह**– अवधारणार्थो निपातः । **गृणाति**– गृ शब्दे ।। ४ ।।

## ऋक्संहिता पदपाठसहिता

**आ घा योषेव सूनर्युषा याति प्रभुञ्जती । जरयन्ती वृजनं पद्वदीयत उत्पातयति पक्षिणः ।। ५ ।।**

**आ । घ । योषाऽइव । सूनरी । उषाः । याति । प्रऽभुञ्जती । जरयन्ती । वृजनम् । पत्ऽवत् । ईयते । उत् । पातयति । पक्षिणः ।। ५ ।।**

**स्कन्द– आ घा योषेव** आ इत्युपसर्गो यातीत्याख्यातेन सम्बध्यते । घेति पदपूरणः । **योषेव** यथा काचित् स्त्री एवम् **सूनरी** शोभना नरा यस्याः स्तोतृत्वेन यष्टृत्वेन च सन्ति सा सूनरी **उषाः आ याति** आगच्छति । उदितेत्यर्थः । **प्रभुञ्जती** 'भुज पालनाभ्यवहारयोः' । स्वेन ज्योतिषा कृत्स्नं जगत् प्रकर्षेण पालयन्ती । **जरयन्ती वृजनम्** बलं कालेन हि प्राणिनां जीर्यति । कालं चोषा अतिपातयति । अत एवमुच्यते– जरयन्ती वृजनमिति । कथं पुनरायाति । उच्यते । **पद्वत् ईयते** शुद्धोऽप्ययमीयतिः सोपसर्गार्थो द्रष्टव्यः । यथा कश्चित्पादवानागच्छे-त्तद्वदागच्छति । **उत्पातयति** च चटकप्रभृतीन् । **पक्षिणः** चटकादयो हि पक्षिणः उषउदय वेलायां स्वेभ्यः आवासकेभ्य उत्पतन्ति । अतस्तानुषा एवोत्पातयति इत्युच्यते ।। ५ ।।

**वेङ्कटमाधव– आ याति उषाः** स्त्रीव प्रकर्षेण रक्षन्ती **सूनरी** 'सूनरी' (निघ.१,८) इत्यप्युषोनाम । शोभननरेति । मनुष्याणाम् उपद्रवम् **जरयन्ती** । उषस्यागतायां **पद्वत्** पुरुषादिकं चलति । **पक्षिणः** चेयम् उद्गमयति ।। ५ ।।

**मुद्गल–** उषाः देवी **प्रभुञ्जती** प्रकर्षेण सर्वं पालयन्ती **आ याति** घ प्रतिदिनमागच्छति खलु । दृष्टान्तः । **सूनरी** सुष्ठु गृहकृत्यस्य नेत्री **योषा** इव गृहिणीव । कीदृश्युषाः । **वृजनम्**

गमनशीलम् जङ्गमं प्राणिजातं **जरयन्ती** जरां प्रापयन्ती । असकृदुषस्यावृत्तायां वयोहान्या प्राणिनो जीर्णा भवन्ति । किञ्च उषःकाले **पद्वत्** पादयुक्तं प्राणिजातम् **ईयते** निद्रां परित्यज्य स्वस्वकृत्यार्थं गच्छति । किञ्च इयम् उषाः **पक्षिणः उत्पातयति** पक्षिणो ह्युषःकाले समुत्थाय तत्र तत्र व्रजन्ति ।। ५ ।।

**सायण–** **उषाः** देवी **प्रभुञ्जती** प्रकर्षेण सर्वं पालयन्ती **आ याति घ** प्रतिदिनमागच्छति खलु ।। तत्र दृष्टान्तः । **सूनरी** सुष्ठु गृहकृत्यस्य नेत्री **योषा इव** गृहिणीव । कीदृशी उषाः । **वृजनम्** गमनशीलम् जङ्गमं प्राणिजातं **जरयन्ती** जरां प्रापयन्ती । असकृदुषस्यावृत्तायां वयोहान्या प्राणिनो जीर्णा भवन्ति । किञ्च उषःकाले **पद्वत्** पादयुक्तं प्राणिजातम् **ईयते** निद्रां परित्यज्य स्वस्वकृत्यार्थं गच्छति । किञ्च इयमुषाः **पक्षिणः उत्पातयति** । पक्षिणो ह्युषःकाले समुत्थाय तत्र तत्र व्रजन्ति ।। **घा** 'ऋचितुनुघ' इत्यादिना संहितायां दीर्घः । सुष्ठु नयतीति सूनरी । 'नॄ नये' । 'अच इः' इति इप्रत्ययः । गतिसमासे 'कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम्' (परिभा.२८) इति वचनात् 'कृदिकारादक्तिनः' (पा.सू.४.१.४५ ग) इति ङीप् । 'परादिश्छन्दसि बहुलम्' इत्युत्तरपदाद्युदात्तत्वम् । 'निपातस्य च' इति पूर्वपदस्य दीर्घः ।

**प्रभुञ्जती** 'भुज पालनाभ्यवहारयोः' लटः शतृ । रुधादित्वात् श्नम् । 'श्नसोरल्लोपः' इति अकारलोपः । **'उगितश्च'** इति ङीप् । 'शतुरनुमः' इति नद्या उदात्तत्वम् । **वृजनम्** 'वृजी वर्जने' वर्ज्यते इति वृजनं प्राणिजातम् । 'कॄपॄवृजिमन्दिनिधाञ्भ्यः क्युः' (उ.सू.२.२३९) इति क्युप्रत्ययः । कित्त्वात् लघूपधगुणाभावः । योरनादेशे प्रत्ययस्वरः । **पद्वत्** । पत् पादः तदस्यातीति पद्वत् । 'झयः' इति मतुपो वत्वम् । व्यत्ययेन मतुप उदात्तत्वम् । न च 'स्वरविधौ व्यञ्जनमविद्यमानवत्' (परिभा.७९) इति व्यञ्जनस्य अविद्यमानवत्त्वे सति 'ह्रस्वनुड्भ्यां मतुप्' इति मतुप उदात्तत्वमिति वाच्यम् । ह्रस्वादित्येव सिद्धे पुनर्नुड्ग्रहणसामर्थ्यदिषा परिभाषा नाश्रीयते इति वृत्तावुक्तम् (का.६.१.१७६) । इतरथा हि मरुत्वान् इत्यत्रापि मतुप् उदात्तत्वं स्यात् ।।

**सिद्धाञ्जनम्–** **उषाः** देवी **प्रभुञ्जती** प्रकर्षेण पालयन्ती । विश्वमिति शेषः । **आयाति घ** आगच्छति खलु । केव? **सूनरी** सुष्ठु नेत्री गृहकृत्यस्य । **योषेव** गृहिणी इव । कीदृशी उषाः? **वृजनम्** वर्ज्यं वर्जनीयं वा आवरकं तमःप्रदेशं **जरयन्ती** जरां प्रापयन्ती, क्षपयन्तीत्यर्थः । अत्र वृजनं प्राणिजातमिति सायणः, अन्यत्र (१.१६४.९) स एव 'वृजनीष्वन्तः मेघपङ्क्तिष्वन्तः'

इति व्याचष्टे । वृजनं प्रावरणं दुर्गस्थानं वा भवति, तत्रापि वर्ज्यत्वाद्धेतोरिति धात्वर्थानुगमो बोध्यः । किञ्च **पद्वत्** पादयुक्तं प्राणिजातं गमनशीलं **ईयते** स्वकृत्यार्थं प्रबोधसम्पदा सह गच्छति । **पक्षिणः उत्पातयति** पतत्त्रिणः उत्पतनसमर्थान् करोति । अत्र प्रातःकाले प्राणिनः मनुष्याश्च सुप्तोत्थिताः स्वस्वकृत्ये प्रवर्तन्ते, तथा पक्षिणश्च उड्डयन्ते, अयं बाह्योऽर्थः । दिव्यज्ञानप्रभाते अन्तर्याजिनो जनस्य तीव्रा गतिः, ऊर्ध्वगतिसम्पन्नस्य लोकान्तरगतिरत्रस्थस्यैव देहिनः सिध्यतीति रहस्यम् ।। **घा**– संहितायां दीर्घः । **सूनरी**–सुष्ठु नयति, नृ नये । **प्रभुञ्जती**– भुज पालनाभ्यवहरणयोः रुधादिः, लटः शतृ, उगितश्चेति ङीप् । **वृजनम्**– वृजी वर्जने, वर्ज्यत इति वृजनम्, कृपृवृजिप्रभृतिभ्यः क्युरिति क्युप्रत्ययः । **पद्वत्**– पद् पादः तद्वत्, झयः मतुपो वत्वम् ।। ५ ।।

**।। इति प्रथमाष्टके चतुर्थाध्याये तृतीयो वर्गः ।।**

## ।। अथ चतुर्थो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

**वि या सृजति समनं व्य१र्थिनः पदं न वेत्योदती । वयो नकिष्टे पप्तिवांस आसते व्युष्टौ वाजिनीवति ।। ६ ।।**

**वि । या । सृजति । समनम् । वि । अर्थिनः । पदम् । न । वेति । ओदती । वयः । नकिः । ते । पप्तिऽवांसः । आसते । विऽउष्टौ । वाजिनीऽवति ।। ६ ।।**

**स्कन्द– वि या सृजति** या विसृजति विसर्गो ह्यनुज्ञा । अनुज्ञानाति । किम् । **समनम्** सङ्ग्रामनामैतत् (तु.निघ.२,१७) । सङ्ग्रामम् । उषउदयोत्तरकालं ह्युक्षादयो योद्धारो युध्यन्ते । अत उषा एव सङ्ग्राममनुजानातीत्युच्यते । अथवा 'समनम्' इति सम्पूर्वस्य मनेर्वा ज्ञानार्थस्य, अनेर्वा प्राणार्थस्य रूपम् । ज्ञानं प्राणं वेत्यर्थः । उभयमपि ह्येतदुष उदयोत्तरकालं प्रवर्तते । न च केवलं समनम् । किं तर्हि । **वि अर्थिनः** । अर्थिनः कार्यवन्तः । कार्यवन्तश्च कार्येषु विसृज्यन्ते । सर्वे हि कार्यवन्तः स्वकार्येषूषउदयोत्तरकालं प्रवर्तन्ते । यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः । सा **पदं न वेति** वेतिर्गतिकर्मा । यथा कश्चिदेकं पदं गच्छेत् तद्वत् क्षणेन गच्छति । का । **ओदती** उषोनामैतत् (तु.निघ.१,८) । उषा । परोऽर्धर्चः प्रत्यक्षकृतो भिन्नं वाक्यम् । **वयो नकिष्टे पप्तिवांस** पप्तिवांसः इति ताच्छील्ये कसुर्द्रष्टव्यः । पक्षिणः पतनशीलाः तव **व्युष्टौ**

स्वेष्वावासकेषु न **आसते** । त्वदुदयवेलायां स्वेभ्य आवासकेभ्य उत्पतन्तीत्यर्थः । हे **वाजिनी-वति** । उषोनामैतत् । उषः ।। ६ ।।

**वेङ्कटमाधव– वि सृजति या** सङ्ग्रामं युयुत्सून् प्रेरयति या भिक्षून् । सा **पदम्** इव निदधाति शनैः शनैरागच्छन्ती उषा इति रश्म्यभिप्रायम् । पक्षिणो न केचन पतनशीला वृक्षेषु **आसते** तव व्युच्छने उषः ।। ६ ।।

**मुद्गल– या** देवता **समनम्** समीचीनचेष्टावन्तं पुरुषम् **वि सृजति** प्रेरयति । गृहारामादि चेष्टाकुशलान् पुरुषान् उषःकालः शयनादुत्थाप्य स्वस्वव्यापारे प्रेरयतीति प्रसिद्धम् । किञ्च उषाः **अर्थिनः** याचकान् **वि सृजति** । तेऽपि उषःकाले समुत्थाय स्वकीयदातृगृहे गच्छन्ति । **ओदती** उषोदेवता **पदम्** स्थानम् **न वेति** न कामयते । उषःकालः शीघ्रं गच्छतीत्यर्थः । हे **वाजिनीवति** । उषोदेवते! **ते व्युष्टौ** त्वदीये प्रातःकाले **पप्तिवांसः** पत्तनयुक्ताः **वयः** पक्षिणः **नकिः आसते** न तिष्ठन्ति किन्तु स्वस्वनीडाद् विनिर्गत्य गच्छन्तीत्यर्थः ।। ६ ।।

**सायण– या** देवता **समनम्** समीचीनचेष्टावन्तं पुरुषम् **वि सृजति** प्रेरयति । गृहारामादि चेष्टाकुशलान् पुरुषान् उषःकालः शयनादुत्थाप्य स्वस्वव्यापारे प्रेरयतीति प्रसिद्धम् । किञ्च उषाः **अर्थिनः** याचकान् **वि सृजति** । तेऽपि उषःकाले समुत्थाय स्वकीयदातृगृहे गच्छन्ति । **ओदती** उषोदेवता **पदम्** स्थानम् **न वेति** न कामयते । उषःकालः शीघ्रं गच्छतीत्यर्थः । हे **वाजिनीवति** । उषोदेवते! **ते व्युष्टौ** त्वदीये प्रभातकाले **पप्तिवांसः** पतनयुक्ता **वयः** पक्षिणः **नकिः आसते** न तिष्ठन्ति । किन्तु स्वस्वनीडाद्विनिर्गत्य गच्छन्तीत्यर्थः ।।

**सृजति** 'सृज विसर्गे' तुदादित्वात् शः । तस्य ङित्त्वात् लघूपधगुणाभावः । प्रत्ययस्य पित्त्वादनुदात्तत्वे विकरणस्वरः । यद्वृत्तयोगादनिघातः । **ओदती** । 'उन्दी क्लेदने' । उनत्ति सर्वं नीहारेण इति ओदती उषाः । शतरि व्यत्ययेन शप् । व्यत्ययेन अनुनासिकलोपे लघूपध-गुणः । 'उगितश्च' इति ङीप् । आगमानुशासनस्यानित्यत्वात् नुमभावः । शपः पित्त्वादनुदा-त्तत्वम् । शतुः अदुपदेशात् लसार्वधातुकानुदात्तत्वे धातुस्वरेणाद्युदात्तत्वम् । न च 'शतुरनुमः' इति नद्या उदात्तत्वम्, अन्तोदात्तात् शतुः परस्यास्तद्विधानात् । **नकिष्टे** । 'युष्मत्तत्ततक्षुः-ष्वन्तःपादम्' इति षत्वम् । **पप्तिवांसः** । 'पत्लृ गतौ' लिटः क्वसुः । क्र्यादिनियमात् प्राप्त

इट् 'वस्वेकाजाद्घसाम्' इति नियमात् न प्राप्नोति । तत्क्रियते सर्वविधीनां छन्दसि विकल्पितत्वात् । 'तनिपत्योश्छन्दसि' (पा.सू.६.४.९९) इति उपधालोपः । 'द्विर्वचनेऽचि' इति स्थानिवद्भावात् द्विर्भावः । प्रत्ययस्वरः । **वाजिनीवति** । वाजोऽन्नमस्या अस्तीति वाजिनी क्रिया । मत्वर्थीय इनिः । 'ऋन्नेभ्यः' इति ङीप् । तादृशी क्रिया यस्याः सा । 'तदस्यास्ति' इति मतुप् । 'संज्ञायाम्' इति मतुपो वत्वम् ।। ६ ।।

**सिद्धाञ्जनम्– या** देवी **समनम्** सम्यक् अनिति चेष्टत इति समनः तं समीचीनचेष्टायुक्तं उद्योगिनं पुरुषं **वि सृजति** विशेषेण प्रेरयति । किं च **अर्थिनः** मनुष्यान् उत्तममर्थं प्रार्थयतः महत्त्वकाङ्क्षिण इति यावत् **वि सृजति** प्रेरयति, प्रार्थनाशीलान् न त्वलसान् । तमोऽभिभूतान् प्रेरयतीति बोध्यम् । सा **ओदती** उन्दनशीला स्वांशुभिः क्लेदयन्ती सुखयन्ती उषोदेवी **पदम्** स्थानं **न वेति** न कामयते, न क्वापि स्थातुमिच्छति, सत्वरं गच्छत्येव । हे **वाजिनीवति** बहुविधसमृद्धियुक्ते उषोदेवते! **ते** तव **व्युष्टौ** प्रभाते **पप्तिवांसः** पतनयुक्ताः **वयः** दक्षिणः **नकिरासते** न तिष्ठन्ति, किन्तु ऊर्ध्वं पतन्त्येव । वयः पक्षिण इति बाह्योऽर्थः । विशब्दो धीवृत्त्यादिषु अर्थेषु वर्तते, तथा प्रागुक्तम् (१.२५.४.७), तस्माद्वयः ज्ञानांशवः ऊर्ध्वं गच्छन्तीति ग्राह्यम् । **ओदती**–उन्दी क्लेदने, श्नम्विकरणो धातुः । शतरि व्यत्ययेन शप्, ङीप् । **नकिष्टे**– युष्मत्तत्ततक्षुष्वन्तः पादमिति षत्वम् । **पप्तिवांसः**–पत्लृ गतौ, लिटः, क्वसुः, अन्यत् छान्दसम् । **वाजिनीवति–** व्याख्यातम् (१.३.१०) ।। ६ ।।

## ऋक्संहिता पदपाठसहिता

**ए॒षायु॑क्त परा॒वतः॒ सूर्य॑स्योद॒य॑ना॒दधि॑ । श॒तं रथे॑भिः सु॒भगो॒षा इ॒यं वि या॒त्य॒भि मानु॑षान् ।। ७ ।।**

**ए॒षा । अ॒यु॒क्त । प॒रा॒ऽवतः॑ । सूर्य॑स्य । उ॒त्ऽअय॑नात् । अधि॑ । श॒तम् । रथे॑भिः । सु॒ऽभगा॑ । उ॒षाः । इ॒यम् । वि । या॒ति॒ । अ॒भि । मानु॑षान् ।। ७ ।।**

**स्कन्द– एषा अयुक्त** युक्तवती अश्वान् रथेषु । युक्त्वा च **परावतः** दूरनामैतत् (तु.निघ.३,२६) । दूरात् । कुतः । सूर्यस्योदयनात् 'कृत्यल्युटो बहुलम्' (पा.३,३,११२) इति अपादानेऽयं ल्युट् द्रष्टव्यः । यतः स्थानात् सूर्य उदेति ततः । अधिशब्दस्तु 'अधिपरी

अनर्थकौ' (पा.१,४,९३) इति कर्मप्रवचनीयः पदपूरणः । **शतं रथेभिः** शतमिति तृतीयार्थे द्वितीया । शतेन रथैः । **सुभगा** सुधना । **उषा इयम् वि याति** विविधं गच्छति । **अभि मानुषान्** मनुष्यान् प्रति । इतश्चेतश्च पार्थिवं लोकं स्वभासा व्याप्नोतीत्यर्थः ।। ७ ।।

**वेङ्कटमाधव–** एषा उद्युक्ता दूरात् **सूर्यस्य उदयनात्** दिवः **शतं** रथानधिरुह्य सुधना **उषा मानुषान् अभि** विविधम् **याति** ।। ७ ।।

**मुद्गल– एषा** उषोदेवता **शतम् अयुक्त** स्वकीयानां रथानां शतं योजितवती । **सुभगा** सौभाग्ययुक्ता **इयम् उषाः परावतः** दूरस्थात् **सूर्यस्य उदयनात् अधि** सूर्योदयस्थानात् अधिकात् द्युलोकात् **मानुषान् अभि** मनुष्यानुद्दिश्य **रथेभिः** शतसङ्ख्याकैः युक्तैः रथैः **वि याति** विशेषेण गच्छति ।। ७ ।।

**सायण– एषा** उषोदेवी **शतम् अयुक्त** स्वकीयानां रथानां शतं योजितवती । **सुभगा** सौभाग्ययुक्ता **इयम् उषाः परावतः** दूरस्थात् **सूर्यस्य उदयनात् अधि** सूर्योदयस्थानात् अधिकात् द्युलोकात् **मानुषान् अभि** मनुष्यानुद्दिश्य **रथेभिः** शतसङ्ख्याकैः युक्तैः रथैः **वि याति** विशेषेण गच्छति ।। **अयुक्त** 'युजिर् योगे' लुङि 'झलो झलि' (पा.सू.८.२.२६) इति सिचो लोपः । **उदयनात्** । उदेत्यत्रेति उदयनम् । 'इण् गतौ' अधिकरणे ल्युट् । कृदुत्तर पदप्रकृतिस्वरत्वम् । **सुभगा** । शोभनो भगो यस्याः सा । 'आद्युदात्तं द्व्यच्छन्दसि' इत्युत्तर पदाद्युदात्तत्वम् । **मानुषान्** । मनोः पुत्रा मानुषाः । 'मनोर्जातावञ्यतौ षुक् च' इति अञ् षुगागमश्च । ञित्त्वादाद्युदात्तत्वम् ।। ७ ।।

**सिद्धाञ्जनम्– एषा** प्रस्तुता देवता **अयुक्त** योजितवती । किं अयुक्त? **शतम्** स्वकीयरथानामिति शेषः । **सुभगा** शोभनो भग ऐश्वर्यं यस्याः सा सौभाग्यवती **इयम्** उषाः देवी **परावतः** दूरस्थात् **सूर्यस्य उदयनात् अधि** सूर्योदयस्थानादधिकादूर्ध्वप्रदेशात् **मानुषान् अभि** मनुष्यानभिलक्ष्य **रथेभिः** स्वीयैर्युक्तैः **वि याति** विशेषेण गच्छति । **अयुक्त**–'युजिर् योगे' लुङ् । **उदयनात्**–उदेत्यत्रेति उदयनं, इण् गतौ, अधिकरणे ल्युट् । **मानुषान्**–मनोः पुत्राः मानुषाः, 'मनोर्जातौ अञ्यतौ षुक् च' इति अञ् षुगागमश्च ।। ७ ।।

## ऋक्संहिता पदपाठसहिता

**विश्वमस्या नानाम चक्षसे जगज्ज्योतिष्कृणोति सूनरी ।**
**अप द्वेषो मघोनी दुहिता दिव उषा उच्छदप स्रिधः ।। ८ ।।**
**विश्वम् । अस्याः । ननाम । चक्षसे । जगत् । ज्योतिः । कृणोति । सूनरी । अप । द्वेषः । मघोनी । दुहिता । दिवः । उषाः । उच्छत् । अप । स्रिधः ।। ८ ।।**

**स्कन्द– विश्वम् अस्याः** विश्वं सर्वमस्याः **ननाम** प्रणतम् **चक्षसे** दर्शनाय **जगत्** । सर्वस्य जगतः एतदायत्तं दर्शनमित्यर्थः । **ज्योतिः** चेयम् **कृणोति सूनरी** । किञ्च **द्वेषः** सर्वप्राणिद्वेष्यं तमः **मघोनी** धनवती **दुहिता दिवः** उषाः **अप उच्छन्** अपोच्छति । तमश्च विवासयतीत्यर्थः । न च केवलं तमः । किं तर्हि । **अप स्रिधः** स्रेधतिः क्षयार्थः शोषणार्थो वा । क्षपयितॄन् शोषयितॄन् वा । कान् । सामर्थ्यात् नक्तंचरान् रक्षआदीन् । रक्षआदीनपि विवासयतीत्यर्थः ।।

**वेङ्कटमाधव– अस्याः** उषसः दर्शनाय सर्वमेव **जगत्** शिरो नमयति । **ज्योतिः** च **कृणोति** उषाः । सा **दिवः दुहिता** सर्वान् द्वेष्टॄन् क्षपयितॄंश्च तिरस्कुर्वती प्रादुर्भवतु ।। ८ ।।

**मुद्गल– विश्वम्** सर्वम् **जगत्** जङ्गमं प्राणिजातम् **अस्याः** उषसः **चक्षसे** प्रकाशनाय **ननाम** प्रह्वीभवति । रात्रौ तमसि निमग्नाः सर्वे जनाः तन्निवारयित्रीम् उषसम् उपलभ्य नमस्कुर्वन्तीत्यर्थः । कुतः । यस्मादेषा **सूनरी** सुष्ठु नेत्री अभिमतफलस्य प्रापयित्री उषाः **ज्योतिः कृणोति** सर्वं प्रकाशयति । किञ्च **मघोनी** मघवती धनवती **दिवः दुहिता** द्युलोक सकाशादुत्पन्ना **उषाः, द्वेषः** द्वेष्टॄन् **अप उच्छत्** अपवर्जयति । किञ्च **स्रिधः** हिंसकान् **अप उच्छत्** । तस्मादिष्टप्राप्त्यनिष्टपरिहारहेतुभूताम् उषोदेवतां विश्वं जगत् नमस्करोतीत्यर्थः ।। ८ ।।

**सायण– विश्वम्** सर्वम् **जगत्** जङ्गमं प्राणिजातम् **अस्याः** उषसः **चक्षसे** प्रकाशनाय **ननाम** प्रह्वीभवति । रात्रौ तमसि निमग्नाः सर्वे जनाः तन्निवारयित्रीम् उषसम् उपलभ्य नमस्कुर्वन्तीत्यर्थः । कुतः । यस्मादेषा **सूनरी** सुष्ठु नेत्री अभिमतफलस्य प्रापयित्री उषाः **ज्योतिः कृणोति** सर्वं प्रकाशयति । किञ्च **मघोनी** मघवती धनवती **दिवः दुहिता** द्युलोक सकाशादुत्पन्ना **उषाः, द्वेषः** द्वेष्टॄन् **अप उच्छत्** अपवर्जयति । तथा स्रिधः शोषयितॄन् **अप उच्छत्** अपवर्जयति । तस्मादिष्टप्राप्त्यनिष्टपरिहारहेतुभूतामुषोदेवतां विश्वं जगन्नमस्करोती त्यर्थः ।।८।।

**अस्याः** । 'इदमोऽन्वादेशे' इति अशादेशः अनुदात्तः विभक्तिश्च सुप्त्वादनुदात्तेति सर्वानुदात्तत्वम् । **नानाम** । संहितायाम् 'अन्येषामपि दृश्यते' इति अभ्यासस्य दीर्घत्वम् । तुजादित्वे हि तूतुजानः इत्यादाविव पदकालेऽपि दीर्घः श्रूयते । **ज्योतिः** 'इणः षः' इत्यनुवृत्तौ 'इसुसोः सामर्थ्ये' (पा.सू.८.३.४४) इति विसर्जनीयस्य षत्वम् । **द्वेषः** 'द्विष अप्रीतौ' । 'अन्येभ्योऽपि दृश्यन्ते' इति विच् । लघूपधगुणः । **मघोनी** । मघं वनति सम्भजते इति मघोनी । 'श्वन्नुक्षन्' इत्यादिना मघवञ्छब्दः कनिन्प्रत्ययान्तो निपातितः । स्त्रियाम् 'ऋन्नेभ्यो ङीप्' इति ङीप् । भसंज्ञायां 'श्वयुवमघोनामतद्धिते' इति सम्प्रसारणम् । **उच्छत्** । 'उच्छी विवासे' । विवासो वर्जनम् । 'छन्दसि लुङ्लङ्लिटः' इति वर्तमाने लङ् । बहुलं 'छन्दस्य माङ्योगेऽपि' इति अडागमाभावः । **स्रिधः** । 'स्रिधु शोषणे' । 'क्विप् च' इति क्विप् ।। ८ ।।

**सिद्धाञ्जनम्– विश्वम्** सर्वं **जगत्** जङ्गमं प्राणिजातं **अस्याः** उषसः **चक्षसे** दर्शनाय **ननाम** नतं भवति, भक्तिपुरःसरं प्रणतमित्यर्थः । कुत एवं प्रणतिरस्यै भक्तलोकेन क्रियते? आह । एषा **सूनरी** सुष्ठु नेत्री, अभिमतं वस्तु स्थानं वा प्रापयति द्युषोदेवी **ज्योतिः कृणोति** करोति, सूर्यात्मकसत्यज्योतिः प्रादुर्भावयति । किञ्च **मघोनी** आढ्या दिव्यधनसम्पन्ना **दिवः दुहिता** द्युलोकस्य पुत्री उषाः देवी **द्वेषः** द्वेष्टॄन् ज्योतिर्द्वेषिणः तामसान् असुरादीन् वा **अप उच्छत्** अपवर्ज्य प्रभाति, तथा **स्रिधः** शोषयितॄन् रसस्य, शुष्णादीन् अप उच्छत् ।। **द्वेषः**– द्विष अप्रीतौ, विच्, लघूपधगुणः । **मघोनी**–मघं वनति, मघवन्शब्दः कनिन्प्रत्ययान्तो निपातितः, श्वयुवमघोनां सम्प्रसारणं, स्त्रियां ङीप् । **उच्छत्**–उच्छी विवासे, छन्दसि वर्तमाने लङ् । **स्रिधः**–स्रिधु शोषणे, क्विप् ।। ८ ।।

## ऋक्संहिता पदपाठसहिता

**उष आ भाहि भानुना चन्द्रेण दुहितर्दिवः । आवहन्ती भूर्यस्मभ्यं सौभगं व्युच्छन्ती दिविष्टिषु ।। ९ ।।**

उषः । आ । भाहि । भानुना । चन्द्रेण । दुहितः । दिवः । आऽवहन्ती । भूरि । अस्मभ्यम् । सौभगम् । विऽउच्छन्ती । दिविष्टिषु ।। ९ ।।

**स्कन्द–** हे **उषः! आ भाहि** दीप्यस्व । **भानुना** दीप्तिर्भानुरुच्यते, तेन भानुना । **चन्द्रेण** 'चदि आह्लादे' । ह्लादयित्रा । सुखकरेणेत्यर्थः । हे **दुहितः दिवः** । कथं च पुनराभाहि ।

**आवहन्ती** आनयन्ती **भूरि** बहु **अस्मभ्यम्** अस्मदर्थम् **सौभगम्** शोभनं धनम् । प्रभूतमस्मभ्यं शोभनं धनं ददतीत्यर्थः । **व्युच्छन्ती च दिविष्टिषु** दिवमिष्यते याभिर्गन्तुं ता दिविष्टयः तासु । अस्मदीयेषु यज्ञेष्वित्यर्थः ।। ९ ।।

**वेङ्कटमाधव– उषः!** अभिमुखम् **भाहि** तेजसा ह्लादकेन । **दिवः दुहितः! आवहन्ती,** बहु धनम् । **अस्मभ्यम्** प्रादुर्भवन्ती दिवसानामन्वेषणेषु ।। ९ ।।

**मुद्गल–** हे **दिवः दुहितः!** द्युलोकस्य पुत्रि! **उषः** उषोदेवते! **चन्द्रेण** सर्वेषामाह्लादकेन **भानुना** प्रकाशेन **आ** समन्तात् **भाहि** प्रकाशस्व । किं कुर्वती । **दिविष्टिषु** दिवसेषु **भूरि** प्रभूतम् **सौभगम्** सौभाग्यम् । **अस्मभ्यम् आ वहन्ती** सम्पादयन्ती तथा **व्युच्छन्ती** तमांसि वर्जयन्ती ।। ९ ।।

**सायण–** हे **दिवः दुहितः!** द्युलोकस्य पुत्रि! **उषः** उषोदेवते! **चन्द्रेण** सर्वेषामाह्लादकेन **भानुना** प्रकाशेन **आ** समन्तात् **भाहि** प्रकाशस्व । किं कुर्वती । **दिविष्टिषु** दिवसेषु **भूरि** प्रभूतम् **सौभगम्** सौभाग्यम् । **अस्मभ्यम् आ वहन्ती** सम्पादयन्ती तथा **व्युच्छन्ती** तमांसि वर्जयन्ती ।। **उषः** । पाष्ठिकमामन्त्रिताद्युदात्तत्वम् । **दुहितर्दिवः** । 'परमपि च्छन्दसि' इति दिवः इत्यस्य परस्य षष्ठ्यन्तस्य पूर्वामन्त्रिताङ्गवद्भावे सति षष्ठ्यामन्त्रितसमुदायस्य आष्टमिकं सर्वानुदात्तत्वम् । आवहन्ती । ङीप्शपौ पित्त्वादनुदात्तौ । शतुश्च अदुपदेशात् लसार्वधातुक स्वरेणानुदात्तत्वम् । अतो धातुस्वरः शिष्यते । समासे कृदुत्तरपदप्रकृतिस्वरत्वम् । **भूरि** । प्रभवति न विनश्यतीति भूरि । 'अदिशदिभूशुभिभ्यः क्रिन्' (उ.सू.४.५०५) इति क्रिन् । नित्त्वादाद्युदात्तत्वम् । सुभगस्य भावः सौभगम् । 'सुभगान्मन्त्रे' इति उद्गात्रादिषु पाठात् अञ्प्रत्ययः । 'हृद्भगसिन्ध्वन्ते पूर्वपदस्य च' इति उभयपदवृद्धौ प्राप्तायां 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' इति वचनात् अत्रोत्तरपदवृद्धिर्न भवतीति वृत्तावुक्तम् (का.७.३,१९) । **व्युच्छन्ती** 'उछी विवासे' । विवासो वर्जनम् । तौदादिकः । अदुपदेशात् लसार्वधातुकानुदात्तत्वे विकरण-स्वरः । **दिविष्टिषु** । दिवूशब्देन दिविष्टः आदित्यो लक्ष्यते । तस्य इष्टयः एषणानि गमनानि येषु दिवसेषु ते दिविष्टयः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् ।। ९ ।।

**सिद्धाञ्जनम्–** हे **दिवो दुहितः उषः** उषोदेवि! **चन्द्रेण** आह्लादकेन **भानुना** उस्रेण **आ**

**भाहि** सर्वतः प्रकाशस्व । किं कुर्वती? **दिविष्टिषु** दिव्शब्दलक्षितस्य सूर्यस्य इष्टयः एषणानि येषु दिवसेषु अन्तर्यागेषु वा तेषु **अस्मभ्यम्** अस्मदर्थं **भूरि** प्रभूतं **सौभगम्** सौभाग्यम् **आवहन्ती** सम्पादयन्ती, तथा **व्युच्छन्ती** व्युष्टा प्रभाता भवन्ती ॥ **सौभगम्**– सुभगस्य भावः । सुभगान्मन्त्रे इत्युद्गात्रादिषु पाठात् अञ्प्रत्ययः । हृद्भगादेः उभयपदवृद्धौ प्राप्तायां उत्तरपदवृद्धिर्न भवति । विधीनां छन्दसि विकल्पात् । अन्ये गताः ॥ ९ ॥

## ऋक्संहिता पदपाठसहिता

**विश्वस्य हि प्राणनं जीवनं त्वे वि यदुच्छसि सूनरि । सा नो रथेन बृहता विभावरि श्रुधि चित्रामघे हवम् ॥ १० ॥**

**विश्वस्य । हि । प्राणनम् । जीवनम् । त्वे इति । वि । यत् । उच्छसि । सूनरि । सा । नः । रथेन । बृहता । विभाऽवरि । श्रुधि । चित्रऽमघे । हवम् ॥ १० ॥**

**स्कन्द– विश्वस्य हि** हिशब्दः पदपूरणः । सर्वस्य प्राणिजातस्य । **प्राणनम्** जीवनम् च **त्वे** त्वयि त्वदायत्तम् । सर्वे प्राणिनस्त्वत्प्रसादात् प्राणन्ति जीवन्ति चेत्यर्थः । या त्वं किं करोषि । उच्यते । **वि यत् उच्छसि** यत् या त्वं, **वि उच्छसि** तमांसि विवासयसि । हे **सूनरि!** । या चैवंरूपाऽसि **सा, नः** अस्माकम् **रथेन बृहता** तृतीयानिर्देशादत्र आगन्तुमिति शेषः । महता रथेन अस्मान् प्रत्यागन्तु हे **विभावरि** दीप्तिमति! **श्रुधि** शृणु । हे **चित्रामघे** हे चित्रधने! उषः! उषोनामैव वा चित्रामघाशब्दः (तु.निघ.१,८) **हवम्** आह्वानम् ॥ १० ॥

**वेङ्कटमाधव– विश्वस्य हि** प्राणिनः **प्राणनम्** जीवनम् च त्वयि भवति यदा त्वम् **वि उच्छसि** उषः! प्रकाशं कुर्वती **सा,** अस्माकम् **रथेन बृहता** आगता दीप्तिमति! शृणु चित्रधने! ह्वानम् ॥ १० ॥

**मुद्गल–** हे **सूनरि** उषोदेवि! **विश्वस्य** सर्वस्य प्राणिजातस्य । **प्राणनम्** चेष्टनम् जीवनम् प्राणधारणं च । **त्वे** हि त्वय्येव वर्तते । **यत्** यस्मात् त्वम् **वि उच्छसि** तमो वर्जयसि । हे **विभावरि** विशिष्टप्रकाशयुक्ते! **सा** तादृशी **त्वम् नः** अस्मान् प्रति **बृहता** प्रौढेन **रथेन** आयाहीति शेषः । तथा हे **चित्रामघे** विचित्रधनयुक्ते उषोदेवते । अस्मदीयम् **हवम्** आह्वानम् **श्रुधि** शृणु ॥ १० ॥

**सायण–** हे **सूनरि** उषोदेवि! **विश्वस्य** सर्वस्य प्राणिजातस्य । **प्राणनम्** चेष्टनम् जीवनम् प्राणधारणं च । **त्वे** हि त्वय्येव वर्तते । **यत्** यस्मात् त्वम् **वि उच्छसि** तमो वर्जयसि । हे **विभावरि** विशिष्टप्रकाशयुक्ते! **सा** तादृशी **त्वम् नः** अस्मान् प्रति **बृहता** प्रौढेन **रथेन** आयाहीति शेषः । तथा हे **चित्रामघे** विचित्रधनयुक्ते उषोदेवते । अस्मदीयम् **हवम्** आह्वानम् **श्रुधि** शृणु ।। १० ।।

**प्राणनम्**- 'अन चेष्टायाम्' 'ल्युट् च' इति भावे ल्युट् । योरनादेशः । समासे 'अनितेः' (पा.सू.८.४.१९) इति उपसर्गस्थाद् रकारान्निमित्ताद् उत्तरस्य नकारस्य णत्वम् । ननु 'अनितेः' इति इटा निर्देशात् कथम् 'अन चेष्टायाम्' इत्यस्य णत्वम् । तर्हि जीवनस्य पृथगुपादानात् तेनैव धातुना चेष्टा लक्ष्यते । समासे कृदुत्तरपदप्रकृतिस्वरत्वम् । संहितायाम् एकादेशस्वरेण एकादेशस्योदात्तत्वम् । **त्वे** । 'सुपां सुलुक्' इति सप्तम्याः शेआदेशः । **उच्छसि** । 'उछी विवासे' तौदादिकः । सिपः पित्त्वादनुदात्तत्वे विकरणस्वरः । 'निपातैर्यद्यदिहन्त' इति निघात प्रतिषेधः । **सूनरि** । सुष्ठु नयतीति सूनरी । 'नॄ नये' इत्यस्मात् 'अच इः' इति औणादिक इप्रत्ययः । गतिसमासे कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणात् 'कृदिकारादक्तिनः' इति ङीष् । 'निपातस्य च' इति ङीप्; तत्सन्नियोगेन नकारस्य रेफादेशश्च । **श्रुधि** । 'श्रुशृणुपकृवृभ्य श्छन्दसि' इति हेर्धिरादेशः । 'बहुलं छन्दसि' इति विकरणस्य लुक् । हेरपित्त्वेन प्रत्ययस्वरेणा न्तोदात्तत्वम् । पादादित्वात् निघाताभावः । मघम् इति धननाम । चित्रं मघं यस्याः सा चित्रमघा । 'अन्येषामपि दृश्यते' इति संहितायां पूर्वपदस्य दीर्घत्वम् । **हवम्** । 'ह्वेञ् स्पर्धायां शब्दे च' । 'भावेऽनुपसर्गस्य' इति अप्प्रत्ययः । तत्सन्नियोगेन सम्प्रसारणं च ।। १० ।।

**सिद्धाञ्जनम्–** हे **सूनरि** सुष्ठु नेत्रि उषोदेवि! **विश्वस्य** सर्वस्य प्राणिलोकस्य **प्राणनम्** चेष्टनं जीवनम् प्राणधारणं च **त्वे हि** त्वय्येव वर्तते । **यत्** यस्मात् त्वं, **वि उच्छसि** व्युष्टा भवसि । हे **विभावरि** विशिष्टभायुक्ते! **सा** तथाभूता त्वं, **नः** अस्मान् प्रति **बृहता रथेन** महता रथेन **आ याहि** इति शेषः । हे **चित्रमघे** चित्रं विविधं मघं धनं यस्याः सा चित्रमघा । संहितायां दीर्घः, तस्याः सम्बुद्धिः । **हवम्** आह्वानं अस्मदीयं **श्रुधि** शृणु ।। **प्राणनम्**– 'अन चेष्टायाम्' भावे ल्युट् ।। १० ।।

।। इति प्रथमाष्टके चतुर्थाध्याये चतुर्थो वर्गः ।।

## ।। अथ पञ्चमो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

**उषो वाजं हि वंस्व यश्चित्रो मानुषे जने । तेना वह सुकृतो अध्वराँ उप ये त्वा गृणन्ति वह्नयः ।। ११ ।।**

**उषः । वाजम् । हि । वंस्व । यः । चित्रः । मानुषे । जने । तेन । आ । वह । सुऽकृतः । अध्वरान् । उप । ये । त्वा । गृणन्ति । वह्नयः ।। ११ ।।**

**स्कन्द–** हे **उषः! वाजम्** अन्नम् । हिशब्दस्तु पादपूरणः । **वंस्व** सामर्थ्यात् 'वस्वा नो वार्या पुरु' (ऋ.८,२३,२७) इत्यादिप्रयोगदर्शनाच्च वनिरत्र दानार्थः । देहि । कीदृशो वाजः । उच्यते । **यः चित्रः** पूज्यः **मानुषे जने** मनुष्यलोके । **तेन** दत्तेन **उप आ वह सुकृतः** शोभनान्नान् स्वर्गादिफलावाप्तिकरणान् । **अध्वरान्** यज्ञान् । कस्य । **ये त्वा गृणन्ति** स्तुवन्ति **वह्नयः** स्तुतीनां वोढारो मत्प्रभृतयः । यच्छब्दश्रुतेः तेषामित्यध्याहार्यः । तेनान्नेन स्तोतॄन् यज्ञकरणसमर्थान् कुर्वित्यर्थः । अथवा तेनेति हेतौ तृतीया । तेन हविर्भूतेन हेतुना । तदन्नं हविर्भूतमुपभोक्तुमित्यर्थः । **आ वह** । कान् । आत्मसहचारिणो विश्वान् देवान् । कुत एतत् । 'विश्वान् देवान् आ वह' इत्युत्तरस्यामृचि दर्शनात् । कीदृशान् । **सुकृतः** शोभनकर्मकारिणः । क, अध्वरान् **उप** उपशब्दः सामर्थ्यात् प्रतिशब्दस्यार्थे । यज्ञान् प्रति । यज्ञेष्वित्यर्थः । कस्य स्वभूतेषु । उच्यते । ये त्वा गृणन्ति वह्नयः तेषाम् ।। ११ ।।

**वेङ्कटमाधव–** **उषः! हि** अन्नं देहि । **यः** पूजनीयः मनुष्येषु भवति । अथ **तेन** अन्नेन सुकर्मणः यज्ञान् **उप आ वह** ये त्वां स्तुवन्ति स्तोतारः ।। ११ ।।

**मुद्गल–** हे **उषः! वाजम्** हविर्लक्षणमन्नम् । **हि** श्रुतिषु प्रसिद्धम् । **वंस्व** याचस्व । स्वीकुर्वित्यर्थः । **यः** वाजः **चित्रः** चायनीयः **मानुषे** मनुष्ये **जने** यजमाने वर्तते तं वाजमिति पूर्वत्रान्वयः । **तेन** कारणेन **सुकृतः** सुष्ठु कृतवतो यजमानान् **अध्वरान्** हिंसारहितान् यागान् **उप आ वह** प्रापय । ये यजमानाः **वह्नयः** यज्ञनिर्वाहकाः **त्वा** त्वाम् **गृणन्ति** स्तुवन्ति तान् सुकृत इति पूर्वेण सम्बन्धः ।। ११ ।।

**सायण–** हे **उषः! वाजम्** हविर्लक्षणमन्नम् । **हि** श्रुतिषु प्रसिद्धम् । **वंस्व** याचस्व ।

स्वीकुर्वित्यर्थः । **यः** वाजः **चित्रः** चायनीयः **मानुषे** मनुष्ये **जने** जाते यजमाने वर्तते तं वाजमिति पूर्वत्रान्वयः । **तेन** कारणेन **सुकृतः** सुष्ठु कृतवतो यजमानान् **अध्वरान्** हिंसारहितान् यागान् **उप आ वह** प्रापय । **ये** यजमानाः **वह्नयः** यज्ञनिर्वाहकाः **त्वा** त्वाम् **गृणन्ति** स्तुवन्ति तान् सुकृत इति पूर्वेण सम्बन्धः । एतदुक्तं भवति । यजमानैः प्रत्तं हविः स्वीकृत्य पुनरपि तेषां यज्ञं सम्पादयेति ।। ११ ।।

**वाजम्** । 'वज व्रज गतौ' । कर्मणि घञ् । 'अजिव्रज्योश्च' (पा.सू.७.३.६०) इत्यत्र चशब्दस्य अनुक्तसमुच्चयार्थत्वात् वाजो वाज्यमित्यत्रापि कुत्वाभाव इति वृत्तावुक्तत्वात् कुत्वाभावः । 'कर्षात्वतः' इत्यन्तोदात्तत्वे प्राप्ते वअषादित्वादाद्युदात्तत्वम् । **वंस्व** 'वनु याचने' । अत्र याचनवाचिना धातुना तदुत्तरभावी स्वीकारो लक्ष्यते । 'बहुलं छन्दसि' इति विकरणस्य लुक् । अनुदात्तेत्त्वात् लसार्वधातुकानुदात्त्वत्वे धातुस्वरः । 'हि च' इति निघातप्रतिषेधः । **सुकृतः** । 'सुकर्मपाप' इत्यादिना करोतेः भूतार्थे क्विप् । तुगागमः । कृदुत्तरपदप्रकृतिस्वरत्वम् । **अध्वरान्** । ध्वरो हिंसा नास्त्यस्मिन्निति बहुव्रीहौ 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । अध्वरान् इत्यस्य ईप्सिततमत्वात् 'कर्तुरीप्सिततमम्' (पा.सू.१.४.४९) इति कर्मसंज्ञा, सुकृत इत्यस्य तु 'अकथितं च' (पा.सू.१.४.५१) इति, 'नीवह्योर्हरतेश्च' (पा.म.१.४.५१) इति द्विकर्मकेषु वहतेः परिगणितत्वात् । अध्वरान् इत्यत्र नकारस्य संहितायां 'दीर्घादटि' इति रुत्वम् । 'आतोऽटि नित्यम्' इति पूर्वस्य आकारस्य सानुनासिकता । **गृणन्ति** 'गृ शब्दे' । 'क्त्यादिभ्यः श्ना' । 'प्वादीनां ह्रस्वः' इति ह्रस्वत्वम् । 'श्नाभ्यस्तयोरातः' इति आकारलोपः । प्रत्ययस्वरः । यद्वृत्तयोगादनिघातः ।। ११ ।।

**सिद्धाञ्जनम्–** हे उषः! **वाजं हि** समृद्धिप्रतिपादकं बलादिकं भोग्यं प्रसिद्धम् । **वंस्व** वनुष्व, अर्थय, स्वीकुरु । **यः** वाजः **मानुषे** मनुष्ये **जने** जाते यजमाने **चित्रः** विविधः चायनीयो वा वर्तते तं 'वाजं वंस्व' इति सम्बन्धः । **तेन** तथा त्वया करणेन, यजमानगतवाजस्वीकरणेन **सुकृतः** सुष्ठु कृतवतो यजमानान् **अध्वरान्** स्वर्मार्गप्रदान् यज्ञान् **उपावह** प्रापय । **ये** यजमानाः वह्नयः वोढारः, त्वदीयमनुग्रहं बिभ्रतः (यज्ञनिर्वाहका इति सायणः) **त्वा** त्वां **गृणन्ति** स्तुवन्ति । यजमानदत्तं वाजं स्वीकृत्य तं दिव्यमार्गप्रदं अध्वरशब्दवाच्यं फलविशेषं प्रापयत्युषाः ।। **वंस्व**– वनु याचने, विकरणस्य लुक् । **सुकृतः**– सुकर्मेत्यादिना करोतेः क्विप् । अन्ये गताः ।। ११ ।।

## ऋक्संहिता पदपाठसहिता

**विश्वान्देवाँ आ वह सोमपीतयेऽन्तरिक्षादुषस्त्वम् । सास्मासु धा गोमदश्वावदुक्थ्य१मुषो वाजं सुवीर्यम् ॥ १२ ॥**

**विश्वान् । देवान् । आ । वह । सोमऽपीतये । अन्तरिक्षात् । उषः । त्वम् । सा । अस्मासु । धाः । गोऽमत् । अश्वऽवत् । उक्थ्यम् । उषः । वाजम् । सऽवीर्यम् ॥ १२ ॥**

**स्कन्द–** **विश्वान् देवान्** आत्मसहचारिणो विश्वान् देवान् **आ वह सोमपीतये अन्तरिक्षात्** हे **उषः! त्वम्** । उषसः एवात्र प्राधान्यम् । सहचारित्वमात्रं विश्वेषां देवानाम् । **सा अस्मासु** इति तच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽध्याहार्यः । यां त्वामेवमवोचाम सा अस्मासु **धाः** स्थापय । अस्मभ्यं देहीत्यर्थः । **गोमत् अश्वावत्** च **उक्थ्यम्** प्रशस्यं, हे **उषः! वाजं सुवीर्यं** शोभनवीर्यसहितं शोभनवीर्यं वा ॥ १२ ॥

**वेङ्कटमाधव–** **विश्वान् देवान् आ वह** सोमपानाय **अन्तरिक्षात् उषः! त्वम्, सा अस्मासु** धेहि । **गोमत् अश्वावत्** प्रशस्यम् **उषः! वाजम्** शोभनवीर्यम् ॥ १२ ॥

**मुद्गल–** हे **उषः!** त्वम् **सोमपीतये** सोमपानार्थम् । **अन्तरिक्षात्** अन्तरिक्षलोकात् **विश्वान्** सर्वान् **देवान् आ वह** अस्मदीयं देवयजनदेशं प्रापय । हे **उषः! सा** तादृशी त्वम् **गोमत्** गोमन्तम् बहुभिर्गोभिर्युक्तम् **अश्वावत्** अश्वैरुपेतम् । **उक्थ्यम्** प्रशस्यम् **सुवीर्यम्** शोभनवीर्योपेतम् । **वाजम्** अन्नम् **अस्मासु धा** निधेहि स्थापयेत्यर्थः ॥ १२ ॥

**सायण–** हे **उषः!** त्वम् **सोमपीतये** सोमपानाय **अन्तरिक्षात्** अन्तरिक्षलोकात् **विश्वान्** सर्वान् **देवान् आ वह** अस्मदीयं देवयजनदेशं प्रापय । हे **उषः! सा** तादृशी त्वम् **गोमत्** गोमन्तम् बहुभिर्गोभिर्युक्तम् **अश्वावत्** अश्वैरुपेतम् । **उक्थ्यम् सुवीर्यम्** शोभनवीर्योपेतम् । **वाजम्** अन्नम् **अस्मासु धाः** निधेहि स्थापयेत्यर्थः ॥ **धाः** । दधातेः 'छन्दसि लुङ्लङ्लिटः' इति प्रार्थनायां लुङ् । 'गातिस्था' इति सिचो लुक् । 'बहुलं छन्दस्यमाङ्योगेऽपि' इति अडभावः । **गोमत् । अश्वावत्** । 'मन्त्रे सोमाश्वेन्द्रिय' इति मतुपि दीर्घत्वम् । उभयत्र 'सुपां सुलुक्' इति विभक्तेर्लुक् । **उक्थ्यम्** उक्थं स्तोत्रम् । तत्र भवमुक्थ्यम् । 'भवे छन्दसि' इति यत् । 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' इति 'यतोऽनावः' इत्याद्युदात्तत्वाभावे 'तित्स्वरितम्' इति

स्वरितत्वम् । **उषः** । आमन्त्रिताद्युदात्तत्वम् । पादादित्वात् निघाताभावः । **सुवीर्यम्** । शोभनं वीर्यं यस्य । 'वीरवीर्यौ च' इत्युत्तरपदाद्युदात्तत्वम् ।। १२ ।।

**सिद्धाञ्जनम्– हे उषः! त्वम् सोमपीतये** सोमपानाय । **अन्तरिक्षात्** आकाशात्, ऊर्ध्वस्थानोपलक्षणं अन्तरिक्षं बोध्यम्, ऊर्ध्वस्थाना हि देवाः । **विश्वान् देवान्, आ वह** प्रापय, अस्मद्यजनमिति शेषः । हे **उषः! सा** तादृशी त्वम् **गोमत्** गोभिः चिद्रश्मिभिर्युक्तं **अश्वावत्** अश्वैः उक्तलक्षणैः प्राणबलसङ्केतभूतैर्युक्तम् । **उक्थ्यम्** उक्थे स्तोत्रे भवं प्रशस्यं **सुवीर्यम्** शोभनवीर्योपेतम् । **वाजम्** समृद्धिसम्पन्नं भोग्यं वस्तु । **अस्मासु** यजमानेषु **धाः** निधेहि, स्थापयेत्यर्थः ।। **गोमत्**–गोमन्तं, विभक्तेर्लोपः । एवं **अश्वावत्,** संहितायां मतुपि दीर्घत्वम् ।। १२ ।।

## ऋक्संहिता पदपाठसहिता

**यस्या रुशन्तो अर्चयः प्रति भद्रा अदृक्षत । सा नो रयिं विश्ववारं सुपेशसमुषा ददातु सुग्म्यम् ।। १३ ।।**

**यस्याः । रुशन्तः । अर्चयः । प्रति । भद्राः । अदृक्षत । सा । नः । रयिम् । विश्वऽवारम् । सुऽपेशसम् । उषाः । ददातु । सुग्म्यम् ।। १३ ।।**

**स्कन्द– सुपेशसम्** 'पेश इति रूपनाम' (या.८,११) । सुरूपम् **उषा ददातु** । **सुग्म्यम्** सुखनामैतत् (तु.निघ. ३,६) । सुखं च । अथवा रयेरेवैतद् विशेषणम् । सुखकरं रयिम् ।।

**वेङ्कटमाधव– यस्याः** दीप्यमानाः । **अर्चयः प्रति अदृक्षत** । कल्याणाः । **सा नः रयिम्** सर्ववरणीयं सुरूपम् उषाः ददातु सुखकरम् ।। १३ ।।

**मुद्गल– यस्याः** उषसः **अर्चयः** प्रकाशाः **रुशन्तः** शत्रून् हिंसन्तः । **भद्राः** कल्याणाः **प्रति अदृक्षत** प्रतिदृश्यन्ते । **सा** तथाभूता **उषाः, नः** अस्मभ्यम् **रयिं ददातु** । कीदृशं रयिम् । **विश्ववारं** विश्वस्य वारकम् । **सुपेशसं** शोभनरूपोपेतम् । **सुग्म्यम्** सुष्ठु गन्तव्यम् ।। १३ ।।

**सायण– यस्याः** उषसः **अर्चयः** प्रकाशाः **रुशन्तः** शत्रून् हिंसन्तः । **भद्राः** कल्याणाः **प्रति अदृक्षत** प्रतिदृश्यन्ते । **सा** तथाभूता **उषाः, नः** अस्मभ्यम् **रयिं ददातु** । कीदृशं रयिम् ।

**विश्ववारं** विश्वस्य वारकम् । विश्वैर्वरणीयम् । **सुपेशसं** पेश इति रूपनाम । शोभनरूपोपेतम् । **सुग्म्यम्** सुष्ठु गन्तव्यम् । यद्वा सुग्म्यमिति सुखनाम । तद्धेतुत्वात् ताच्छब्द्यम् ।। **रुशन्तः** । 'रुश रिश हिंसायाम्' । शतरि तुदादित्वात् शः । अदुपदेशात् लसार्वधातुकानुदात्तत्वे सति शिष्टत्वात् विकरणस्वरे प्राप्ते व्यत्ययेनाद्युदात्तत्वम् । **अदृक्षत** । दृशेः कर्मणि लुङि झस्य अदादेशः । च्लेः सिच् । 'न दृशः' (पा.सू.३.१.४७) इति क्सप्रतिषेधः । 'एकाचः' इति इट्प्रतिषेधः । 'लिङ्सिचावात्मनेपदेषु' (पा.सू.१.२.११) इति सिचः कित्त्वात् लघूपधगुणाभावः । 'सृजिदृशोर्झल्यमकिति' (पा.सू.६.१.५८) इति अमागमाभावश्च कित्त्वादेव । षत्वकत्वपत्वानि । अडागम उदात्तः । यद्वृत्तयोगादनिघातः । **विश्ववारम्** । विश्वं वृणोतीति विश्ववारः । 'वृञ् वरणे' कर्मणि अण् । यद्वा । विश्वैर्व्रियते इति विश्ववारः । कर्मणि घञ् । मरुद्वृधादित्वात् पूर्वपदान्तोदात्तत्वम् । **सुग्म्यम्** सुष्ठु गन्तव्यः सुग्मः । गमेः 'घञर्थे कविधानम्' इति कप्रत्ययः । 'गमहन' इत्यादिना उपधालोपः । तत्र भवं सुग्म्यम् । 'भवे छन्दसि' इति यत् । 'यतोऽनावः' इत्याद्युदात्तत्वम् ।। १३ ।।

**सिद्धाञ्जनम्– यस्याः** उषसः **अर्चयः** प्रकाशाः रुशन्तः दीप्यमानाः सन्तः **भद्राः** कल्याणाः **प्रत्यदृक्षत** प्रतिदृश्यन्ते, **सा** तादृशी **उषाः नः** अस्मभ्यं **रयिम्** वक्ष्यमाणलक्षणं **धनं ददातु** । कीदृशं रयिम्? **विश्ववारम्** विश्वैर्वरणीयं सर्वोत्तमं **सुपेशसम्** शोभनस्वरूपं **सुग्म्यम्** सुखनाम, सुखेन गन्तव्यम् ।। **रुशन्तः**–दीप्त्यर्थो धातुः हिंसार्थे गृहीतः सायणीये । **अदृक्षत**– दृशेः कर्मणि लुङ् । झस्यादादेशः, च्लेः सिच्, अन्यच्च छान्दसम् । **विश्ववारम्–** विश्वैर्व्रियत इति विश्ववारः, कर्मणि घञ् । **सुग्म्यम्**– सुष्ठु गन्तव्यः सुग्मः गमेः घञर्थे कविधानं, उपधालोपः, तत्र भवं सुग्म्यं, भवे छन्दसि ।। १३ ।।

## ऋक्संहिता पदपाठसहिता

**ये चिद्धि त्वामृषयः पूर्व ऊतये जुहूरेऽवसे महि । सा नः स्तोमाँ अभि गृणीहि राधसोषः शुक्रेण शोचिषा ।। १४ ।।**

**ये । चित् । हि । त्वाम् । ऋषयः । पूर्वे । ऊतये । जुहूरे । अवसे । महि । सा । नः । स्तोमान् । अभि । गृणीहि । राधसा । उषः । शुक्रेण । शोचिषा ।। १४ ।।**

**स्कन्द– सा न** इति तच्छब्देन उषसः प्रतिनिर्देशात्, **ये** इति यच्छब्दः उषोविषयो द्रष्टव्यः । व्यत्ययेन पुल्लिङ्गता । द्वितीयैकवचनस्य स्थाने प्रथमाबहुवचनम् । चित् शब्दः पदपूरणः । याम् **त्वाम् ऋषयः पूर्वे ऊतये** अवतिरत्र गत्यर्थः । स्वयज्ञान् प्रति गमनाय **जुहूरे** हूतवन्तः । **अवसे** तर्पणाय हविर्भिः । हे **महि** महति **सा नः स्तोमान् अभि गृणीहि** अभिष्टुहि **राधसा** धनेन । धनं देहीत्यर्थः । धनदानेन तुष्टिप्रकाशनात् स्तोमा अभिष्टुता भवन्ति । न च केवलम् राधसा । किं तर्हि । हे **उषः! शुक्रेण शोचिषा** शुक्रवर्णया च स्वदीप्त्या । नित्यं चास्मान् प्रति शुक्रेण ज्योतिषा व्युच्छेत्यर्थः । अथवा 'ये चिद्धि त्वाम्, 'सा न स्तोमान्' इति श्रुतौ यच्छब्दतच्छब्दौ परस्परसम्बन्धासम्भवाद्योग्यार्थसम्बन्धौ अन्यौ यच्छब्दतच्छब्दावध्याहृत्य निराकाङ्क्षीकर्तव्यौ । ये त्वामृषयः पूर्वे जुहुरे तेषामिव यां त्वाम् अस्तोष्म सा त्वम् नः अस्माकमपि स्तोमान् अभिगृणीहि राधसेति ।। १४ ।।

**वेङ्कटमाधव– ये चित् हि त्वाम् ऋषयः पूर्वे** रक्षणाय आहूतवन्तः । महति! । **सा** अस्माकम् **स्तोमान् अभि गृणीहि** धनेन । **उषः! शुक्रेण** तेजसा युक्तेति ।। १४ ।।

**मुद्गल–** हे **महि** महिते पूजनीये वा उषोदेवते! **त्वाम् ये चित् हि** ये खलु प्रसिद्धाः **पूर्वे** चिरन्तनाः **ऋषयः** मन्त्रदृष्टारः । **ऊतये** रक्षणाय **अवसे** अन्नाय च **जुहूरे** जुह्विरे आहूतवन्तः, सूक्तरूपैः मन्त्रैः स्तुतैवन्तः इत्यर्थः । हे **उषः! सा** तादृशी त्वम् **राधसा** अस्माभिर्दत्तेन हविर्लक्षणेन धनेन **शुक्रेण शोचिषा** दीप्तेन तमो निवारयितुं समर्थेन तेजसा चोपलक्षिता सती तेषाम् ऋषीणामिव **नः** अस्माकम् **स्तोमान् अभि** स्तुतीः अभिलक्ष्य **गृणीहि** सम्यक् स्तुतमिति शब्दय ।। १४ ।।

**सायण–** हे **महि** महिते पूजनीये वा उषोदेवते! **त्वाम् ये चित् हि** ये खलु प्रसिद्धाः **पूर्वे** चिरन्तनाः **ऋषयः** मन्त्रदृष्टारः । **ऊतये** रक्षणाय । अव इति अन्ननाम । **अवसे** अन्नाय च **जुहूरे** जुह्विरे आहूतवन्तः, सूक्तरूपैः मन्त्रैः स्तुतवन्तः इत्यर्थः । हे **उषः! सा** तादृशी त्वम् **राधसा** अस्माभिर्दत्तेन हविर्लक्षणेन धनेन **शुक्रेण शोचिषा** दीप्तेन तमो निवारयितुं समर्थेन तेजसा चोपलक्षिता सती तेषाम् ऋषीणामिव **नः** अस्माकम् **स्तोमान् अभि** स्तुतीः अभिलक्ष्य **गृणीहि** सम्यक् स्तुतमिति शब्दय । अस्मदीयाभिः स्तुतिभिः सन्तुष्टा भवेत्यर्थः ।। १४ ।।

**ऊतये**- अवतेः क्तिनि 'ज्वरत्वर' इत्यादिना वकारस्य उपधायाश्च ऊठ् । 'ऊतियूति' इत्यादिना क्तिन् उदात्तो निपातितः । **जुहूरे** । 'ह्वेञ् स्पर्धायां शब्दे च' लिटि 'अभ्यस्तस्य च' इति द्विर्वचनात् पूर्वमेव अभ्यस्तकारणभूतस्य ह्वयतेः सम्प्रसारणम् । 'अभ्यस्तस्य यो ह्वयतिः कश्चाभ्यस्तस्य ह्वयतिः यस्तस्य कारणम्' (का.६.१.३३) इति व्याख्यातत्वात् । परपूर्वत्वे 'हलः' इति दीर्घत्वम् । द्विर्वचनादीनि । 'इरयो रे' इति इरेचो रेआदेशः । 'चितः' इत्यन्तोदात्तत्वम् । यद्वृत्तयोगादनिघातः । तत्र हि पञ्चमीनिर्देशेऽपि व्यवहितेऽपि कार्यं भवतीत्युक्तम् (का.८.१.६६) । **महि** 'मह पूजायाम्' औणादिकः इप्रत्यत्यः । 'कृदिकारादक्तिनः' इति ङीष् । सम्बुद्धौ 'अम्बार्थ' (पा.सू.७.३.१०७) इति ह्रस्वत्वम् । **स्तोमान्** । संहितायां नकारस्य रुत्वाद्युक्तम् । नित्त्वादाद्युदात्तत्वम् । **गृणीहि** 'गॄ शब्दे' क्रेयादिकः । शिति 'प्वादीनां ह्रस्वः' इति ह्रस्वत्वम् । **राधसा**- राध्नोत्यनेनेति राधः । असुनो नित्त्वादाद्युदात्तत्वम् । **उषः** । पादादित्वात् आष्टमिकनिघाताभावे पाष्ठिकमामन्त्रिताद्युदात्तत्वम् ।। १४ ।।

**सिद्धाञ्जनम्**– हे **महि** महिते, उषोदेवि! **ये चिद्धि** ये खलु विश्रुताः **पूर्वे** चिरन्तनाः **ऋषयः** मन्त्रद्रष्टारः **त्वाम्, ऊतये** रक्षणाय **अवसे** स्वाभिवर्धनाय च **जुहूरे** जुह्विरे आहूतवन्तः मन्त्रात्मकैः स्तोत्रैरिति शेषः । हे **उषः! सा** तादृशी त्वं **राधसा** 'चित्रं राधो अमर्त्य' 'चित्रं राधो......विभु प्रभु' इत्यादौ कीर्तितस्वरूपेण धनेन । **शुक्रेण शोचिषा** दीप्तेन तेजसा चोपलक्षिता सती, सहयोगलक्षणा तृतीया । **नः** अस्माकं सम्बन्धिनः **स्तोमान्** स्तुतीः **अभि गृणीहि** अभिलक्ष्य शब्दय, प्रतिवचनं 'स्वीकृताः स्तोमाः' इति देहि ।। **जुहूरे**–ह्वयतेर्लिट्, 'इरयो रे' इति इरेचो रे आदेशः छन्दसि । **महि** 'मह पूजायाम्' औणादिक इप्रत्ययः । ङीष् सम्बुद्धौ ह्रस्वत्वम् । **गृणीहि**–गृणातेः लोट् । अन्ये गताः ।। १४ ।।

## ऋक्संहिता पदपाठसहिता

**उषो यद्द्य भानुना वि द्वारावृणवो दिवः । प्र नो यच्छतादवृकं पृथु च्छर्दिः प्र देवि गोमतीरिषः ।। १५ ।।**

उषः । यत् । अद्य । भानुना । वि । द्वारौ । ऋणवः । दिवः । प्र । नः । यच्छतात् । अवृकम् । पृथु । छर्दिः । प्र । देवि । गोऽमतीः । इषः ।। १५ ।।

**स्कन्द– उषः यत्** हे उषः! या त्वम् **अद्य** स्वेन **भानुना द्वारौ** पूर्वापरे द्वे अपि द्वारे **वि ऋणवः** 'अणु गतौ' विविधं गच्छसि । कस्य द्वारौ । **दिवः** द्युलोकस्य । कृत्स्नां दिवं स्वज्योतिषा व्याप्नोषीत्यर्थः । यच्छब्दश्रुतेस्तच्छब्दोऽध्याहर्तव्यः । **सा प्र नः यच्छतात्** प्रयच्छतात् । प्रयच्छ अस्मभ्यम् । **अवृकम्** 'वृक वृक आदने' परैरनादेयम् । **पृथु** विस्तीर्णम् । **च्छर्दिः** गृहम् । न च केवलम् । किं तर्हि । प्रयच्छ हे **देवि! गोमतीः इषः** गोसंयुक्तानि अन्नान्यपि ।। १५ ।।

**वेङ्कटमाधव– उषः! यत् अद्य** तेजसा **दिवः द्वारौ** पूर्वापरे सूच्येव विद्धवती तदानीं **प्र** यच्छ अस्मभ्यं स्तेनरहितं विस्तीर्णं गृहम् प्रयच्छ च **देवि** । गोमन्ति अन्नानि ।। १५ ।।

**मुद्गल–** हे **उषः!** त्वम् **अद्य** अस्मिन् प्रभातसमये । **यत्** यस्मात् **भानुना** प्रकाशेन **दिवः** अन्तरिक्षस्य **द्वारौ** द्वारभूतौ पूर्वापरदिग्भागौ अन्धकारेण आच्छादितौ **वि ऋणवः** विश्लिष्य प्राप्नोषि । तस्मात् त्वम् **नः** अस्मभ्यम् **छर्दिः** तेजस्वि गृहम् **प्र यच्छतात्** देहि । कीदृशं च्छर्दिः । **अवृकम्** हिंसकरहितम् **पृथु** विस्तीर्णम् । अपि च हे **देवि** देवनशीले! **गोमतीः** बहुभिर्गोभिर्युक्ताः **इषः** अन्नानि । 'प्र' इत्युपसर्गस्य आवृत्तेः यच्छतात् इत्यनुषज्यते । प्र यच्छतात् देहि ।। १५ ।।

**सायण–** हे **उषः!** त्वम् **अद्य** अस्मिन् प्रभातसमये । **यत्** यस्मात् **भानुना** प्रकाशेन **दिवः** अन्तरिक्षस्य **द्वारौ** द्वारभूतौ पूर्वापरदिग्भागौ अन्धकारेण आच्छादितौ **वि ऋणवः** विश्लिष्य प्राप्नोषि । तस्मात् त्वम् **नः** अस्मभ्यम् **छर्दिः** तेजस्वि गृहम् **प्र यच्छतात्** देहि । कीदृशं च्छर्दिः । **अवृकम्** हिंसकरहितम् **पृथु** विस्तीर्णम् । अपि च हे **देवि** देवनशीले! **गोमतीः** बहुभिर्गोभिर्युक्ताः **इषः** अन्नानि । 'प्र' इत्युपसर्गस्य आवृत्तेः यच्छतात् इत्यनुषज्यते । प्र यच्छतात् देहि । त्वदागमनस्यास्मद्रक्षणार्थत्वादस्मदभीष्टं गृहादिकं प्रयच्छेत्यर्थः । छर्दिः इति गृहनाम, 'छर्दिः छदिः' (नि.३.४.१८) इति तन्नामसु पाठात् ।। **ऋणवः** । 'ऋणु गतौ' । छान्दसे लङि सिपि तनादित्वात् उप्रत्ययः । ततो व्यत्ययेन शपि गुणावादेशौ । शपः पित्त्वादनुदात्तत्वे उप्रत्ययस्वरः शिष्यते । यद्वृत्तयोगादनिघातः । **दिवः** । 'ऊडिदम्' इत्यादिना विभक्तेरुदात्तत्वम् । **प्र नः** । 'उपसर्गाद्बहुलम्' इति बहुलवचनात् नसो णत्वाभावः । **यच्छतात्** । 'दाण् दाने' ।

शपि 'पाघ्रा' इत्यादिना यच्छादेशः । **अवृकम्** । नास्ति वृकोऽस्मिन्निति बहुव्रीहौ 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । **पृथु** 'प्रथ प्रख्याने' । 'प्रथिम्रदिभ्रस्जां सम्प्रसारणं सलोपश्च' (उ.सू.१.२८) इति कुप्रत्ययः सम्प्रसारणं च । छर्दिः इति गृहनाम । 'उछृदिर् दीप्तिदेवनयोः' । 'अर्चिशुचिहुसृपिच्छादिच्छर्दिभ्य इसिः' (उ.सू.२.२६५) इति इसिप्रत्ययः । लघूपधगुणः । प्रत्ययस्वरः ।। १५ ।।

**सिद्धाञ्जनम्–** हे **उषः!** त्वं **यत्** यस्मात् **अद्य** इदानीं **भानुना** प्रकाशेन **दिवः** द्युलोकस्य **द्वारौ व्यृणवः** विश्लिष्य प्राप्नोषि तस्मात् त्वं **नः** अस्मभ्यं **छर्दिः** दिव्यं गृहं (छर्दिः छदिरिति गृहनामसु पाठात्) **प्र यच्छतात्** प्रदेहि । कीदृशं छर्दिः? **अवृकम्** छेदकरहितं अच्छेद्यं **पृथु** विस्तीर्णं च । अपि च हे **देवि** देवनशीले! **गोमतीः** चिद्रश्मिसम्पन्नाः **इषः** प्रेरणाशक्तीः **नः प्र** प्रकर्षेण **यच्छतात्** देहि । 'द्वारौ' पूर्वापरदिगन्तौ अन्धकारेणाच्छादितौ इति बाह्योऽर्थः । अन्तर्यजने तु स्वर्लोकस्य बहिर्द्वारम्–अन्तर्द्वारमिति द्वारद्वयमपि उषसा उद्धाटितं भवतीति बोध्यम् ।। **ऋणवः**–गत्यर्थाद् ऋणोतेः तनादित्वादुप्रत्ययः, लङ्, छान्दसः अडभावादिः । **छर्दिः**– गृहनाम । उच्छृदिर् दीप्तिदेवनयोः ।। १५ ।।

## ऋक्संहिता पदपाठसहिता

**सं नो॑ रा॒या बृ॑ह॒ता वि॒श्वपे॑शसा मिमि॒क्ष्वा समिळा॑भि॒रा ।**
**सं द्यु॒म्नेन॑ विश्व॒तुरो॑षो महि॒ सं वाजै॑र्वाजिनीवति ।। १६ ।।**
**सम् । नः॒ । रा॒या । बृ॒ह॒ता । वि॒श्वऽपे॑शसा । मि॒मि॒क्ष्व । सम् । इळा॑भिः । आ ।**
**सम् । द्यु॒म्नेन॑ । वि॒श्वऽतु॒रा॑ । उ॒षः॒ । म॒हि॒ । सम् । वाजैः॑ । वा॒जि॒नी॒ऽव॒ति॒ ।। १६ ।।**

**स्कन्द– सम् नः राया** नः अस्मान् प्रति राया **बृहता विश्वपेशसा** बहुरूपेण सर्वरूपेण वा । **सम् मिमिक्ष्व** म्यक्षतेर्गतिकर्मणः (तु.निघ.२,१४) एतद्रूपम् । सामर्थ्याच्चात्र म्यक्षतिरन्तर्णीतण्यर्थो द्रष्टव्यः । सङ्गमय सम्बन्धय । धनम् अस्मभ्यं देहीत्यर्थः । न च केवलेन राया । किं तर्हि । **सम् इळाभिः आ** 'इळा' (निघ.२,७) इत्यन्ननाम । आकारः समुच्चयार्थः । 'देवेभ्यश्च पितृभ्य आ' (ऋ.१०,१६,११) इति यथा । अन्नैश्च संमिमिक्ष्व । **सम् द्युम्नेन** द्युम्नं द्योततेः यश इहाभिप्रेतम् । यशसा च संमिमिक्ष्व । कीदृशेन । **विश्वतुरा** तूर्वतिः हिंसार्थः ।

सर्वशत्रूणां हिंसिता । अन्तकर्त्रेत्यर्थः । हे **उषः! महि! सम् वाजैः** वाजशब्दोऽत्र बलवचनः । बलैश्च संमिमिक्ष्व । हे **वाजिनीवति** उषोनामैतत् । (तु.निघ.१,८) उषः! प्रत्युपसर्गं चाख्यातानुषङ्गादाख्यानभेदाच्च वाक्यभेदाद् वाजिनीवतीत्येतस्योष इत्येतेन सह पर्यायत्वेऽप्यपुन रुक्तत्वम् । सम्बन्धिशब्दो वोषस एव विशेषणम् । वाजिनीशब्दोऽन्ननामधेयम् । अन्नवती । अथवा 'वाजी' (निघ.१,१४) इत्यश्वनाम । तस्मात् स्त्रियामीकारः । वाजिन्यो वडवास्तद्वती वाजिनीवती ॥

**वेङ्कटमाधव–** संयोजय अस्मान् धनेन महता सर्वरूपेण । **सम् मिमिक्ष्व** च गोभिः । **सम्** योजय यशसा । सर्वशत्रूणां हिंसकेन । **सम्** योजय अन्नैश्च अन्नवति ॥ १६ ॥

**मुद्गल–** हे उषः! **नः** अस्मान् **राया** धनेन **सम् मिमिक्ष्व** संसिञ्च । संयोजयेत्यर्थः । कीदृशेन धनेन । **बृहता** प्रभूतेन **विश्वपेशसा** बहुविधरूपयुक्तेन । तथा **इळाभिः आ** गोभिश्च अस्मान् सम् मिमिक्ष्व । आकारः समुच्चये । किं च हे **महि** महनीये उषोदेवते! **द्युम्नेन** यशसा सम् मिमिक्ष्व । कीदृशेन द्युम्नेन । **विश्वतुरा** सर्वेषां शत्रूणां हिंसकेन । तथा हे **वाजिनीवति** अन्नसाधनभूतक्रियायुते! । **वाजैः** अन्नैः अस्मान् सम् मिमिक्ष्व ॥ १६ ॥

**सायण–** हे उषः! **नः** अस्मान् **राया** धनेन **सम् मिमिक्ष्व** संसिञ्च । संयोजयेत्यर्थः । कीदृशेन धनेन । **बृहता** प्रभूतेन **विश्वपेशसा** । पेश इति रूपनाम । बहुविधरूपयुक्तेन । तथा **इळाभिः आ** गोभिश्च अस्मान् सम् मिमिक्ष्व । इळा इति गोनाम । 'इळा जगती' (नि. २.११.७) इति तन्नामसु पाठात् । आकारः समुच्चये पदान्ते वर्तमानत्वात् । उक्तं च– 'एतस्मिन्नेवार्थे देवेभ्यश्च पितृभ्य एत्याकारः' (निरु.१.४) इति । किञ्च हे **महि** महनीये उषोदेवते! **द्युम्नेन** यशसा सं मिमिक्ष्व । 'द्युम्नं द्योततेर्यशो वान्नं वा' (निरु.५.५) इति यास्कः । कीदृशेन द्युम्नेन । **विश्वतुरा** सर्वेषां शत्रूणां हिंसकेन । तथा हे **वाजिनीवति** अन्नसाधनभूतक्रियायुक्ते! **वाजैः** अन्नैः अस्मान् सं मिमिक्ष्व । 'अन्नं वै वाजः' (श.ब्रा.९.३.४.१) इति श्रुत्यन्तरात् ॥ **राया** । 'ऊडिदम्' इत्यादिना विभक्तेरुदात्तत्वम् । **बृहता** । 'बृहन्महतोरुपसङ्ख्यानम्' इति विभक्तिरुदात्ता । **विश्वपेशसा** । विश्वानि पेशांसि यस्यासौ विश्वपेशाः । 'बहुव्रीहौ विश्वं संज्ञायाम्' इति व्यत्ययेन असंज्ञायामपि पूर्वपदान्तोदात्तत्वम् । यद्वा । मरुद्वृधादिर्द्रष्टव्यः । **मिमिक्ष्व** 'मिह सेचने' व्यत्ययेन आत्मनेपदम् । लोटि 'बहुलं छन्दसि' इति शपः श्लुः । द्विर्भावहलादिशेषौ । ढत्वकत्वषत्वानि । प्रत्ययस्वरस्य सतिशिष्टत्वात् स एव शिष्यते । पूर्वपदस्य असमान-

वाक्यस्थत्वात् 'तिङ्ङतिङः' इति निघातो न भवति । 'समानवाक्ये निघातयुष्मदस्मदादेशा वक्तव्याः' इति वचनात् । **विश्वतुरा** । तूर्वतीति तूः । तुर्वी हिंसार्थः । 'क्विप् च' इति क्विप् । 'राल्लोपः' इति वलोपः । विश्वेषां तूः विश्वतूः । 'समासस्य' इत्यन्तोदात्तत्वम् । **वाजिनीवति** । वाजोऽन्नमस्या अस्तीति वाजिनी क्रिया । तादृशी क्रिया यस्याः सा तथोक्ता ॥ १६ ॥

**सिद्धाञ्जनम्–** हे **उषः! नः** अस्मान् **राया** धनेन वक्ष्यमाणलक्षणेन **संमिमिक्ष्व** सम्यक् सिञ्च, संयोजयेत्यर्थः । कीदृशेन राया? **बृहता** महता **विश्वपेशसा** विश्वानि विविधानि सर्वाणि पेशांसि यस्य तेन । तथा **इळाभिः आ** पश्यन्ती वाक् इळा इति प्रागुक्तम्, (गौः, अन्नं, वाक् इत्यादयः सायणीयः स्थूलोऽर्थः), आ समुच्चये, पश्यन्तीभिर्वाग्भिश्च सम् मिमिक्ष्व । किञ्च, हे **महि** महनीये **उषः! द्युम्नेन** द्योतेन सम् मिमिक्ष्व । कीदृशेन द्युम्नेन? **विश्वतुरा** विश्वं तुर्वति हिनस्ति जयतीति विश्वतूः तेन विश्वजयशीलेन । तथा हे **वाजिनीवति** समर्थनक्रियासम्पन्ने! **वाजैः** समृद्धिभिः तेजोबलैश्वर्यादीनामिति शेषः, **नः** सम् मिमिक्ष्व ॥ **मिमिक्ष्व**–'मिह सेचने', व्यत्ययेन आत्मनेपदम् । **वाजिनीवति**–गतम् ॥ १६ ॥

॥ इति प्रथमाष्टके चतुर्थाध्याये पञ्चमो वर्गः ॥

## ॥ अथ षष्ठो वर्गः ॥

## ऋक्संहिता पदपाठसहिता

(सूक्तम् ४९)

(४ प्रस्कण्वः काण्वः । उषाः । अनुष्टुप् ।)

**उषो भद्रेभिरा गहि दिवश्चिद्रोचनादधि । वहन्त्वरुणप्सव उप त्वा सोमिनो गृहम् ॥ १ ॥**
उषः । भद्रेभिः । आ । गहि । दिवः । चित् । रोचनात् । अधि । वहन्तु । अरुणऽप्सवः । उप । त्वा । सोमिनः । गृहम् ॥ १ ॥

**स्कन्द–** हे उषः! **भद्रेभिः** कल्याणैरश्वैः **आ गहि** आगच्छ । कुतः । **दिवः चिद् रोचनादधि** चिच्छब्दः पदपूरणः । रोचनशब्दो दीप्तिवचनः । अधीत्युपरिभावे, दिव इत्यनेन च सम्बन्धयितव्यः । दिवोऽधि दिव उपर्यवस्थिताद्रोचनात् दीप्तादादित्यमण्डलादागच्छ । किञ्च **वहन्तु अरुणप्सवः** अरुणः आरक्तो वर्णः । 'प्सुः' (निघ.३,७) इति रूपनाम । आरक्तरूपा

अश्वाः । कम् । **त्वा** त्वाम् । क । **उप सोमिनो गृहम्** उपशब्दः प्रतिशब्दस्यार्थे, गृहमित्यनेन च सम्बन्धयितव्यः । सोमवतो यजमानस्य गृहं प्रति ॥ १ ॥

**वेङ्कटमाधव–** **उषः!** भद्रैः आगच्छ दीप्तात् लोकात् । **उप वहन्तु** त्वाम् अरुणरूपा अश्वाः **सोमिनः गृहम्** ॥ १ ॥

**मुद्गल–** उषो भद्रेभिः इति चतुर्ऋचं षष्ठं सूक्तम् । कण्वपुत्रः प्रस्कण्व ऋषिः । अनुष्टुप् छन्दः । उषो देवता ॥

हे **उषः** उषोदेवते! **भद्रेभिः** भन्दनीयैः शोभनैर्मार्गैः **दिवः** अन्तरिक्षलोकात् **रोचनात्** रोचमानात् दीप्यमानात् **अधि** उपरि वर्तमानात् **चित्** पूजितात् एवंविधादन्तरिक्षलोकात् **आ गहि** आगच्छ । हे उषः! **अरुणप्सवः** अरुणवर्णा गावः **सोमिनः** सोमयुक्तस्य यजमानस्य **गृहम्** देवयजनरूपं यज्ञगृहम् **त्वा** त्वाम् **उप वहन्तु** प्रापयन्तु ॥ १ ॥

**सायण–** 'उषो भद्रेभिः' इति चतुर्ऋचं षष्ठं सूक्तम् । अत्रानुक्रम्यते– 'उपश्चतुष्कमानुष्टुभं तु' इति कण्वपुत्रः प्रस्कण्व ऋषिः । तुह्यादिपरिभाषया इदमुत्तरं चानुष्टुभम् । पूर्वत्र 'उषस्यं तु' इत्युक्तत्वात् इदमपि सूक्तम् उषस्यम् । प्रातरनुवाकस्योषस्ये क्रतावानुष्टुभे छन्दस्येतत्सूक्तम् । सूत्र्यते हि– 'उषो भद्रेभिरित्यानुष्टुभम्' (आश्व.श्रौ.४.१४) इति । आश्विनशस्त्रेऽप्येतत्सूक्तं, 'प्रातरनुवाकन्यायेन' (आश्व.श्रौ.६.५) इत्यतिदेशात् ॥

हे उषः! उषोदेवते! **भद्रेभिः** भन्दनीयैः शोभनैर्मार्गैः **दिवः** अन्तरिक्षलोकात् । **रोचनात्** रोचमानात् दीप्यमानात् । अधिः उपर्यर्थः । उपरि वर्तमानात् । **चित्** इति पूजितार्थः । पूजितात् एवंविधादन्तरिक्षलोकात् **आ गहि** आगच्छ । हे उषः! **अरुणप्सवः** अरुणवर्णा गावः **सोमिनः** सोमयुक्तस्य यजमानस्य **गृहं** देवयजनरूपं यज्ञगृहं **त्वा** त्वाम् **उप वहन्तु** प्रापयन्तु ॥ **गहि** । गमेर्लोटि 'बहुलं छन्दसि' इति शपो लुक् । हेरपित्त्वेन ङित्त्वे 'अनुदात्तोपदेश' इत्यादिना अनुनासिकलोपः । 'अतो हेः' इति लुक् न भवति, 'असिद्धवदत्रा भात्' इति अनुनासिकलोपस्यासिद्धत्वात् । **रोचनात्** । 'रुच दीप्तौ' । 'अनुदात्तेतश्च हलादेः' इति युच् । योरनादेशे 'चितः' इत्यन्तोदात्तत्वम् । **अरुणप्सवः** 'प्सा भक्षणे' प्सान्ति भक्षयन्ति स्तनं पिबन्तीति प्सवो वत्साः । औणादिकः कुप्रत्ययः । 'आतो लोप इटि च' इति आकारलोपः ।

अरुणाः प्सवो यासां तास्तथोक्ताः । अत्र वत्सानामारुण्यप्रतिपादनात् मातॄणामपि तथात्वं गम्यते । 'पैतृकमश्वा अनुहरन्ते । मातृकं गावोऽनुहरन्ते' (पा.म.१.३.२१.५) इति गोनर्दीयः । तासां च उषोवाहनत्वं निघण्टावुक्तम्– 'आरुण्यो गाव उषसाम्' (नि.१.१५.७) इति । अरुणशब्दः 'अर्तेश्च' (उ.सू.५.३६५) इति उनन्प्रत्ययान्तः । 'तृणाख्यायां चित्' (उ.सू.३.३३९) इत्यतः 'चित्' इत्यनुवृत्तेरन्तोदात्तः । स एव बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वेन शिष्यते ।। १ ।।

**सिद्धाञ्जनम्–** 'उषो भद्रेभिः' इति चतुर्ऋचं षष्ठं सूक्तम् उषस्यं आनुष्टुभं कण्वपुत्रस्य प्रस्कण्वस्यार्षम् ।।

हे **उषः! भद्रेभिः** कल्याणैः पथिभिः **दिवः** द्युलोकात् **चित्** पूजितार्थे, पूजितात् **रोचनात्** रोचमानात् दीप्यमानात् **अधि** उपरि वर्तमानात् स्थानात् **आ गहि** आगच्छ । हे उषः! **अरुणप्सवः** अरुणवर्णा गावः चित्प्रकाशरश्मयः **सोमिनः** सोमयुक्तस्य शरीरिणः अन्तर्याजिनो **गृहम्** यज्ञगृहभूतं शरीरं **त्वा** त्वां **उप वहन्तु** प्रापयन्तु । गवामरुणवर्णस्तु प्रज्ञानप्रभात कालयोग्यतां द्योतयेत् ।। **अरुणप्सवः–** प्सा भक्षणे, प्सान्तीति प्सवः (औणादिकः कुप्रत्ययः) स्तनं पिबन्तो वत्साः, अरुणाः प्सवो वत्सा यासां ताः अरुणप्सवो गावः ।। १ ।।

## ऋक्संहिता पदपाठसहिता

**सुपेशसं सुखं रथं यमध्यस्था उषस्त्वम् । तेना सुश्रवसं जनं प्रावाद्य दुहितर्दिवः ।।**
सुऽपेशसम् । सुऽखम् । रथम् । यम् । अधिऽअस्थाः । उषः । त्वम् । तेन । सुऽश्रवसम् । जनम् । प्र । अव । अद्य । दुहितः । दिवः ।। २ ।।

**स्कन्द– सुपेशसं** सुरूपं, **सुखं** च **रथं यम् अध्यस्थाः** अधिष्ठितवती आरूढवती असि । हे **उषः! त्वम् तेन सुश्रवसम्** 'श्रवः' (निघ.२,७) इत्यन्ननाम । शोभनं हविर्लक्षणम् अन्नं यस्य स सुश्रवाः, तं सुश्रवसं सुहविष्कं यजमानं, **जनं प्र अव** प्रकर्षेण आगच्छ । **अद्य** हे **दुहितः दिवः!** ।। २ ।।

**वेङ्कटमाधव–** सुरूपं सुद्वारम् । **रथं यम् अध्यस्थाः** । **उष! त्वम्** । **तेन** शोभनान्नं हविष्मन्तं यजमानम् **अद्य प्र** रक्ष । **दिवः दुहितः!** ।। २ ।।

**मुद्गल–** हे **उषः! त्वं यं रथम् अध्यस्था** अधितिष्ठसि । कीदृशं रथम् । **सुपेशसं** शोभनावयवम् । **सुखं** शोभनेन खेन आकाशेन युक्तम् । विस्तृतमित्यर्थः । हे **दिवः दुहितः!** द्युलोकसकाशात् उत्पन्ने उषोदेवते! **तेन** रथेन **अद्य** अस्मिन् काले **सुश्रवसं** शोभनहविर्युक्तं **जनं** यजमानम् । **प्र अव** प्रकर्षेण गच्छ ।। २ ।।

**सायण–** हे **उषः! त्वं यं रथम् अध्यस्था** अधितिष्ठसि । कीदृशं रथम्- **सुपेशसं** शोभनावयवम् शोभनरूपयुक्तं वा । 'पेश इति रूपनाम' (निरु.८.११) इति यास्कः । यद्वा । शोभनहिरण्ययुक्तम् । 'पेशः कृशनम्' (नि.१.२.६) इति तन्नामसु पाठात् । **सुखं** शोभनेन खेन आकाशेन युक्तम् । विस्तृतमित्यर्थः । यद्वा, सुखहेतुभूतम् । अथवा सुखमिति क्रियाविशेषणम् । सुखं यथा भवति तथेत्यर्थः । हे **दिवः दुहितः** द्युलोकसकाशादुत्पन्ने उषोदेवते! **तेन** रथेन **अद्य** अस्मिन् काले **सुश्रवसं** शोभनहविर्युक्तं **जनं** यजमानम् । **प्र अव** प्रकर्षेण गच्छ ।।

**सुपेशसम्** । 'पिश अवयवे' अस्मात् असुन्प्रत्ययः । नित्त्वादाद्युदात्तः पेशस्शब्दः । शोभनं पेशो यस्यासौ सुपेशाः । 'आद्युदात्तं द्व्यच्छन्दसि' इत्युत्तरपदाद्युदात्तत्वम् । **अध्यस्थाः** । तिष्ठतेः 'छन्दसि लुङ्लङ्लिटः' इति वर्तमाने लुङि 'गातिस्था' इति सिचो लुक् । अडागम उदात्तः । यद्वृत्तयोगादनिघातः । 'तिङि चोदात्तवति' इति गतेरनुदात्तत्वम् । **तेना** । 'अन्येषामपि दृश्यते' इति संहितायां दीर्घः । **सुश्रवसम्**- 'श्रव इत्यन्ननाम श्रूयत इति सतः' (निरु.१०.३) इति यास्कः । सुपेशसमितिवदुत्तरपदाद्युदात्तत्वम् । **अव** 'अव रक्षणगतिप्रीतितृप्ति' इत्युक्तत्वात् अत्र अवतिर्गत्यर्थः । **दुहितर्दिवः** । 'परमपि च्छन्दसि' इति षष्ठ्यन्तस्य पूर्वामन्त्रिताङ्गवद्भावे सति पदद्वयसमुदायस्य आष्टमिकं सर्वानुदात्तत्वम् ।। २ ।।

**सिद्धाञ्जनम्–** हे **उषः! त्वं सुपेशसं** शोभनरूपयुक्तं, **सुखं** सुखहेतुभूतं, अथवा सुखं यथा तथेति क्रियाविशेषणम् । **यं रथम् अध्यस्थाः** अधितिष्ठसि, **तेन** रथेन साधनेन । **अद्य** इदानीम् । **दिवो दुहितः** हे उषः! **सुश्रवसं** शोभनश्रवणसम्पन्नं **जनं** यजमानं **प्राव** प्रकर्षेण वर्धय । यजमानस्य दिव्यश्रुतिसम्पन्नस्य शीघ्रमूर्ध्वयानसाधनभूत उषसो रथः । तथा सत्वरा दिव्यगतिरेव तस्य वर्धनं भवति ।। **प्राव**–अवधातुर्वर्धनेऽपि वर्तते, प्राग्विचारितश्च प्रथमानुवाके ।।

## ऋक्संहिता पदपाठसहिता

**वर्यश्चित्ते पतत्रिणो द्विपच्चतुष्पदर्जुनि । उषः प्रारन्नृतूँरनु दिवो अन्तेभ्यस्परि ॥ ३ ॥**
**वयः । चित् । ते । पतत्रिणः । द्विऽपत् । चतुःऽपत् । अर्जुनि । उषः । प्र । आरन् । ऋतून् । अनु । दिवः । अन्तेभ्यः । परि ॥ ३ ॥**

**स्कन्द– वयः चित् ते** चिच्छब्दोऽत्र उपमायाम् । **वय** इव पक्षिण इव **ते** तव स्वभूताः । **पतत्रिणः** पतनशीला गमनशीला अश्वाः । **द्विपत् चतुष्पत्** द्विपात् चतुष्पाच्च । हे **अर्जुनि!** अर्जुनः शुक्लो वर्ण उच्यते । शुक्लवर्णे हे **उषः! प्रारन्** अर्तिर्गत्यर्थः । प्रकर्षेण गच्छन्ति । **ऋतून् अनु** ऋतुशब्दः कालवचनः । अनुशब्दो लक्षणे कर्मप्रवचनीयः प्रतिशब्देन समानार्थः । कालान् प्रति । यो यो गमनकालस्तत्र तत्रेत्यर्थः । कुतः प्रारन् । उच्यते– **दिवः अन्तेभ्य** द्युलोकस्यान्तेभ्यः । परिशब्दस्तु 'अधिपरी अनर्थकौ' (पा.१,४,९३) इति कर्मप्रवचनीयः पदपूरणः । अथवा परिशब्दोऽन्तशब्दात् पूर्वो द्रष्टव्यः । अकृतसमासोऽपि च कृतसमासार्थे । दिवः पर्यन्तेभ्यः प्रारन् ॥ ३ ॥

**वेङ्कटमाधव–** पक्षिणः पत्रयुक्ता द्विपात् चतुष्पाच्च । **उष!** शुक्रवर्णे तव आगमनकालान् प्रति प्रगच्छन्ति अन्तरिक्षपर्यन्तेभ्यः ॥ ३ ॥

**मुद्गल–** हे **अर्जुनि** शुभ्रवर्णे! **उषः** उषोदेवते! **ते** तव **ऋतून् अनु** गमनानि अनुलक्ष्य **द्विपत्** द्विपात् मनुष्यादिकम् **चतुष्पत्** चतुष्पात् गवादिकं तथा **पतत्रिणः** पतत्रवन्तः पक्षोपेता **वयः चित्** पक्षिणश्च । **दिवः अन्तेभ्यः** आकाशप्रान्तेभ्यः **परि** उपरि **प्र अरन्** प्रकर्षेण गच्छन्ति । रात्रावन्धकारेणाभिभूताः सर्वे प्राणिनः त्वदागमनानन्तरं चेष्टावन्तो भवन्तीत्यर्थः ॥

**सायण–** हे **अर्जुनि** शुभ्रवर्णे! **उषः** उषोदेवते! **ते** तव **ऋतून् अनु** गमनानि अनुलक्ष्य **द्विपत्** द्विपात् मनुष्यादिकम् **चतुष्पत्** चतुष्पात् गवादिकं तथा **पतत्रिणः** पतत्रवन्तः पक्षोपेता **वयः चित्** पक्षिणश्च । **दिवः अन्तेभ्यः** आकाशप्रान्तेभ्यः **परि** उपरि **प्र अरन्** प्रकर्षेण गच्छन्ति । रात्रावन्धकारेणाभिभूताः सर्वे प्राणिनः त्वदागमनानन्तरं चेष्टावन्तो भवन्तीत्यर्थः ॥ **पतत्रिणः** । 'पत्लृ गतौ' पतत्यनेनेति पतत्रम् । 'अमिनक्षि' (उ.सू.३.३८५) इत्यादिना अत्रन्प्रत्ययः । ततो मत्वर्थीय इनिः । **द्विपत्** द्वौ पादावस्येति 'सङ्ख्यासुपूर्वस्य' (पा.सू.५.४.

**मुद्गल–** हे **उषः! त्वं यं रथम् अध्यस्था** अधितिष्ठसि । कीदृशं रथम् । **सुपेशसं** शोभनावयवम् । **सुखं** शोभनेन खेन आकाशेन युक्तम् । विस्तृतमित्यर्थः । हे **दिवः दुहितः!** द्युलोकसकाशात् उत्पन्ने उषोदेवते! **तेन** रथेन **अद्य** अस्मिन् काले **सुश्रवसं** शोभनहविर्युक्तं **जनं** यजमानम् । **प्र अव** प्रकर्षेण गच्छ ।। २ ।।

**सायण–** हे **उषः! त्वं यं रथम् अध्यस्था** अधितिष्ठसि । कीदृशं रथम्- **सुपेशसं** शोभनावयवम् शोभनरूपयुक्तं वा । 'पेश इति रूपनाम' (निरु.८.११) इति यास्कः । यद्वा । शोभनहिरण्ययुक्तम् । 'पेशः कृशनम्' (नि.१.२.६) इति तन्नामसु पाठात् । **सुखं** शोभनेन खेन आकाशेन युक्तम् । विस्तृतमित्यर्थः । यद्वा, सुखहेतुभूतम् । अथवा सुखमिति क्रियाविशेषणम् । सुखं यथा भवति तथेत्यर्थः । हे **दिवः दुहितः** द्युलोकसकाशादुत्पन्ने उषोदेवते! **तेन** रथेन **अद्य** अस्मिन् काले **सुश्रवसं** शोभनहविर्युक्तं **जनं** यजमानम् । **प्र अव** प्रकर्षेण गच्छ ।।

**सुपेशसम्** । 'पिश अवयवे' अस्मात् असुन्प्रत्ययः । नित्त्वादाद्युदात्तः पेशस्शब्दः । शोभनं पेशो यस्यासौ सुपेशाः । 'आद्युदात्तं द्व्यच्छन्दसि' इत्युत्तरपदाद्युदात्तत्वम् । **अध्यस्थाः** । तिष्ठतेः 'छन्दसि लुङ्लङ्लिटः' इति वर्तमाने लुङि 'गातिस्था' इति सिचो लुक् । अडागम उदात्तः । यद्वृत्तयोगादनिघातः । 'तिङि चोदात्तवति' इति गतेरनुदात्तत्वम् । **तेना** । 'अन्येषामपि दृश्यते' इति संहितायां दीर्घः । **सुश्रवसम्**- 'श्रव इत्यन्ननाम श्रूयत इति सतः' (निरु.१०.३) इति यास्कः । सुपेशसमितिवदुत्तरपदाद्युदात्तत्वम् । **अव** 'अव रक्षणगतिप्रीतितृप्ति' इत्युक्तत्वात् अत्र अवतिर्गत्यर्थः । **दुहितर्दिवः** । 'परमपि च्छन्दसि' इति षष्ठ्यन्तस्य पूर्वामन्त्रिताङ्गवद्भावे सति पदद्वयसमुदायस्य आष्टमिकं सर्वानुदात्तत्वम् ।। २ ।।

**सिद्धाञ्जनम्–** हे **उषः! त्वं सुपेशसं** शोभनरूपयुक्तं, **सुखं** सुखहेतुभूतं, अथवा सुखं यथा तथेति क्रियाविशेषणम् । **यं रथम् अध्यस्थाः** अधितिष्ठसि, **तेन** रथेन साधनेन । **अद्य** इदानीम् । **दिवो दुहितः** हे उषः! **सुश्रवसं** शोभनश्रवणसम्पन्नं **जनं** यजमानं **प्राव** प्रकर्षेण वर्धय । यजमानस्य दिव्यश्रुतिसम्पन्नस्य शीघ्रमूर्ध्वयानसाधनभूत उषसो रथः । तथा सत्वरा दिव्यगतिरेव तस्य वर्धनं भवति ।। **प्राव**–अवधातुर्वर्धनेऽपि वर्तते, प्राग्विचारितश्च प्रथमानुवाके ।।

## ऋक्संहिता पदपाठसहिता

**वयश्चित्ते पतत्रिणो द्विपच्चतुष्पदर्जुनि । उषः प्रारन्नृतूँरनु दिवो अन्तेभ्यस्परि ।। ३ ।।**
**वयः । चित् । ते । पतत्रिणः । द्विऽपत् । चतुःऽपत् । अर्जुनि । उषः । प्र । आरन् । ऋतून् । अनु । दिवः । अन्तेभ्यः । परि ।। ३ ।।**

**स्कन्द– वयः चित् ते** चिच्छब्दोऽत्र उपमायाम् । **वय** इव पक्षिण इव **ते** तव स्वभूताः । **पतत्रिणः** पतनशीला गमनशीला अश्वाः । **द्विपत् चतुष्पत्** द्विपात् चतुष्पाच्च । हे **अर्जुनि!** अर्जुनः शुक्लो वर्ण उच्यते । शुक्लवर्णे हे **उषः! प्रारन्** अर्तिर्गत्यर्थः । प्रकर्षेण गच्छन्ति । **ऋतून् अनु** ऋतुशब्दः कालवचनः । अनुशब्दो लक्षणे कर्मप्रवचनीयः प्रतिशब्देन समानार्थः । कालान् प्रति । यो यो गमनकालस्तत्र तत्रेत्यर्थः । कुतः प्रारन् । उच्यते– **दिवः अन्तेभ्य** द्युलोकस्यान्तेभ्यः । परिशब्दस्तु 'अधिपरी अनर्थकौ' (पा.१,४,९३) इति कर्मप्रवचनीयः पदपूरणः । अथवा परिशब्दोऽन्तशब्दात् पूर्वो द्रष्टव्यः । अकृतसमासोऽपि च कृतसमासार्थे । दिवः पर्यन्तेभ्यः प्रारन् ।। ३ ।।

**वेङ्कटमाधव–** पक्षिणः पत्रयुक्ता द्विपात् चतुष्पाच्च । **उष!** शुक्लवर्णे तव आगमनकालान् प्रति प्रगच्छन्ति अन्तरिक्षपर्यन्तेभ्यः ।। ३ ।।

**मुद्गल–** हे **अर्जुनि** शुभ्रवर्णे! **उषः** उषोदेवते! **ते** तव **ऋतून् अनु** गमनानि अनुलक्ष्य **द्विपत्** द्विपात् मनुष्यादिकम् **चतुष्पत्** चतुष्पात् गवादिकं तथा **पतत्रिणः** पतत्रवन्तः पक्षोपेता **वयः चित्** पक्षिणश्च । **दिवः अन्तेभ्यः** आकाशप्रान्तेभ्यः **परि** उपरि **प्र अरन्** प्रकर्षेण गच्छन्ति । रात्रावन्धकारेणाभिभूताः सर्वे प्राणिनः त्वदागमनानन्तरं चेष्टावन्तो भवन्तीत्यर्थः ।।

**सायण–** हे **अर्जुनि** शुभ्रवर्णे! उषः उषोदेवते! **ते** तव **ऋतून् अनु** गमनानि अनुलक्ष्य **द्विपत्** द्विपात् मनुष्यादिकम् **चतुष्पत्** चतुष्पात् गवादिकं तथा **पतत्रिणः** पतत्रवन्तः पक्षोपेता **वयः चित्** पक्षिणश्च । **दिवः अन्तेभ्यः** आकाशप्रान्तेभ्यः **परि** उपरि **प्र अरन्** प्रकर्षेण गच्छन्ति । रात्रावन्धकारेणाभिभूताः सर्वे प्राणिनः त्वदागमनानन्तरं चेष्टावन्तो भवन्तीत्यर्थः ।। **पतत्रिणः** । 'पत्लृ गतौ' पतत्यनेनेति पतत्रम् । 'अमिनक्षि' (उ.सू.३.३८५) इत्यादिना अत्रन्प्रत्ययः । ततो मत्वर्थीय इनिः । **द्विपत्** द्वौ पादावस्येति 'सङ्ख्यासुपूर्वस्य' (पा.सू.५.४.

१४०) इति पादशब्दस्य अन्त्यलोपः समासान्तः । अयस्मयादित्वेन भत्वात् 'पादः पत्' (पा.सू. ६.४.१३०) इति पद्भावः । 'द्वित्रिभ्यां पाद्दन्मूर्धसु बहुव्रीहौ' (पा.सू.६.२.१९७) इत्युत्तर-पदान्तोदात्तत्वम् । **चतुष्पात्-** चत्वारः पादाः अस्य । स्वरव्यतिरिक्तं पूर्ववत् । बहुव्रीहौ पूर्वपद-प्रकृतिस्वरत्वम् । 'इणः षः' इत्यनुवृत्तौ 'इदुदुपधस्य चाप्रत्ययस्य' (पा.सू.८.३.४१) इति विसर्जनीयस्य षत्वम् । न च परत्वेनास्य असिद्धत्वात् 'कुप्वोः ≍क≍पौ च' (पा.सू.८.३.३७) इति उपध्मानीयादेशः शङ्कनीयः । येन नाप्राप्तिन्यायेन तस्यापवादत्वात् । 'अपवादस्तु परमपि पूर्वं बाधते एव' इति वृत्तावुक्तम् । **आरन्** 'ऋ गतौ' 'छन्दसि लुङ्लङ्लिटः' इति वर्तमाने लुङि 'सर्तिशास्त्यर्तिभ्यश्च' इति च्लेः अङादेशः । 'ऋदृशोऽङि गुणः' इति गुणः । आडागमः । **ऋतून्** 'ऋ गतौ' अस्मात् औणादिको भावे कुप्रत्ययः । **अनु** 'अनुर्लक्षणे' (पा.सू.१.४.८४) इति अनोः कर्मप्रवचनीयत्वम् । 'कर्मप्रवचनीययुक्ते' (पा.सू.२.३.८) इति द्वितीया । संहितायां 'दीर्घादटि समानपादे' इति नकारस्य रुत्वम् । 'अत्रानुनासिकः पूर्वस्य तु वा' इति रोः पूर्वस्य वर्णस्य सानुनासिकत्वम् । **दिवः** 'ऊडिदम्' इति विभक्तिरुदात्ता । **अन्तेभ्यः** 'पञ्चम्याः परावध्यर्थे' इति विसर्जनीयस्य सत्वम् ।। ३ ।।

**सिद्धाञ्जनम्–** अस्या ऋचः बाह्योऽर्थः उषःकालीनप्राणिजातगतिवर्णनपरः स्पष्टः । रहस्यार्थस्तु– हे **अर्जुनि** शुभ्रवर्णे **उषः! चित्** प्रकाशोदयस्य नैर्मल्यद्योतकं सम्बोधनम् । **ते** तव **ऋतून् अनु** दिव्याः प्रादुर्भाववेलाः अनुलक्ष्य (बह्वीनां उषसां आगतिः अवश्या प्रागवस्था सूर्यात्मनः सत्यज्योतिषः प्रादुर्भावस्येति प्रपञ्चितं पूर्वम्) **द्विपत्** द्विपात् पदद्वयवान् यजमानः, अप्रकाशावस्था प्रकाशावस्था इति अवस्थाद्वयानुसारेण द्वे पदे स्थाने वर्तेते यस्य स द्विपात् । **चतुष्पत्** चतुष्पात् चत्वारि पदानि स्थानानि आविष्कृतानि यस्य स यजमानः भूः भुवः स्वः महः इति व्याहृतिपदवेदनीयेषु स्थानेषु पदं लब्धवान् । तथा **पतत्रिणः** पतत्रवन्तः उत्पतनशीलाः ऊर्ध्वगमनसमर्थाः **वयः चित्** प्रज्ञानवृत्तिविशेषाश्च । **दिवः अन्तेभ्यः** द्युलोकप्रान्तेभ्यः **परि** उपरि **प्रारन्** प्रकर्षेण गच्छन्ति । एवं सर्वेऽपि द्विपात्प्रभृतयः चित्प्रभाते दिवं प्रति उद्यता भवन्ति ।। **द्विपत्–** द्वौ पादौ अस्येति पादशब्दस्य अन्त्यलोपः समासान्तः । अयस्मयादित्वेन भत्वात् 'पादः पत्' इति पद्भावः । एवं चतुष्पत् । **आरन्**–'ऋ गतौ' छन्दसि लुङ् लडर्थे । **ऋतून्**-'ऋ गतौ' अस्मात् औणादिको भावे कुप्रत्ययः ।। ३ ।।

## ऋक्संहिता पदपाठसहिता

**व्युच्छन्ती हि रश्मिभिर्विश्वमाभासि रोचनम् । तां त्वामुषर्वसूयवो गीर्भिः कण्वा अहूषत ॥**
विऽउच्छन्ती । हि । रश्मिऽभिः । विश्वम् । आऽभासि । रोचनम् । ताम् । त्वाम् । उषः । वसुऽयवः । गीःऽभिः । कण्वाः । अहूषत ॥ ४ ॥

**स्कन्द– व्युच्छन्ती हि** हिशब्दः पदपूरणः । **तां त्वाम्** इति च तच्छब्दाद्यच्छब्दोऽध्याहर्तव्यः । 'या त्वम्' व्युच्छन्ती आत्मीयै **रश्मिभिः विश्वम् आभासि** । अन्तर्णीतण्यर्थोऽयं भातिः सामर्थ्याद् द्रष्टव्यः । सर्वं जगदाभासयसि । प्रकाशयसीत्यर्थः । **रोचनं** प्रकाशस्वभावकम् । **ताम् त्वाम्** हे **उषः! वसूयवः** धनकामाः **गीर्भिः** स्तुतिलक्षणाभिः गीर्भिः । **कण्वाः** कण्वपुत्राः **अहूषत** आहूतवन्तः । आत्मन एवेदं परोक्षरूपेण प्रथमपुरुषेणाभिधानम् । अहं कण्वपुत्रः प्रस्कण्वनामा आहूतवानित्यर्थः ॥ ४ ॥

**वेङ्कटमाधव– व्युच्छन्ती हि रश्मिभिः** सर्वं लोकं भासयसि । **ताम् त्वाम् उषः!** धनकामा गीर्भिः **कण्वा** आहूतवन्तः ॥ ४ ॥

**मुद्गल–** हे **उषः! व्युच्छन्ती** तमो वर्जयन्ती **त्वं, रश्मिभिः** स्वकीयैस्तेजोभिः **विश्वं** सर्वं भूतजातम् । **रोचनं** रोचमानं प्रकाशयुक्तं यथा भवति तथा **आ भासि** आ समन्तात् प्रकाशसे । **हि** यस्मादेवं तस्मात् **तां** तादृशीम् **त्वां, वसूयवः** वसुकामाः **कण्वाः** मेधाविनः ऋत्विजः । **गीर्भिः** स्तुतिलक्षणैर्वचोभिः **अहूषत** आहूतवन्तः । स्तुतवन्त इत्यर्थः ॥ ४ ॥

**सायण–** हे **उषः! व्युच्छन्ती** तमो वर्जयन्ती **त्वं, रश्मिभिः** स्वकीयैस्तेजोभिः **विश्वं** सर्वं भूतजातम् । **रोचनं** रोचमानं प्रकाशयुक्तं यथा भवति तथा **आभासि** आ समन्तात् प्रकाशसे । **हि** यस्मादेवं तस्मात् **तां** तादृशीम् **त्वां, वसूयवः** वसुकामाः **कण्वाः** मेधाविनः ऋत्विजः । कण्वगोत्रोत्पन्ना वा महर्षयः **गीर्भिः** स्तुतिलक्षणैर्वचोभिः **अहूषत** स्तुतवन्त इत्यर्थः ।

कण्व इति मेधाविनाम, 'कण्वः ऋभुः' (नि.३.१५.७) इति तन्नामसु पाठात् । **आभासि** 'भा दीप्तौ' अदादित्वात् शपो लुक् । सिपः पित्त्वादनुदात्तत्वे धातुस्वरः । 'हि च' इति निघातप्रतिषेधः । 'तिङि चोदात्तवति' इति गतेरनुदात्तत्वम् । **रोचनम्** 'रुच दीप्तौ' 'अनुदात्तेतश्च हलादेः' इति युच् । 'चितः' इत्यन्तोदात्तत्वम् । **वसूयवः** । वसु धनमात्मन इच्छन्तः । 'सुप

आत्मनः क्यच्' । 'अकृत्सार्वधातुकयोः' इति दीर्घः । 'क्याच्छन्दसि' इति उप्रत्ययः । **गीर्भिः** । 'सावेकाचः' इति विभक्तेरुदात्तत्वम् । **कण्वाः** । कणशब्दार्थः । 'अशिप्रुषि लटिकणि' इत्यादिना क्नप्रत्ययः । नित्त्वादाद्युदात्तत्वम् । **अहूषत** । ह्वेञो लुङि 'ह्वः सम्प्रसारणम्' इत्यनुवृत्तौ 'बहुलं छन्दसि' इति सम्प्रसारणम् । परपूर्वत्वे 'हलः' इति दीर्घत्वम् । च्लेः सिच् । 'एकाचः' इति इट्प्रतिषेधः । संज्ञापूर्वकस्य विधेरनित्यत्वाद् गुणाभावः ।। ४ ।।

**सिद्धाञ्जनम्–** हे **उषः! व्युच्छन्ती** व्युष्टा भवन्ती त्वं, **रश्मिभिः** तेजोभिः स्वकीयैः **विश्वं** सर्वं जगद् भूतजातं वा । **रोचनं** रोचमानं यथा भवति तथा **आ भासि** सर्वतः प्रकाशसे । **हि** यस्मादेवं तस्मात् **तां** तथाभूतां **त्वां, वसूयवः** वसु सत्त्वात्मकं धनं आत्मन इच्छन्तः **कण्वाः** मेधाविप्रतिमानभूताः महर्षयः **गीर्भिः** स्तुतिलक्षणैर्वचोभिः **अहूषत** आह्वयन्ति ।। **अहूषत**– ह्वेञो लुङि ह्वः सम्प्रसारणं, परपूर्वत्वे 'हलः' इति दीर्घत्वं, संज्ञापूर्वकस्य विधेरनित्यत्वाद् गुणाभावः ।। ४ ।।

**।। इति प्रथमाष्टके चतुर्थाध्याये षष्ठो वर्गः ।।**

## ।। अथ सप्तमो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

**(सूक्तम् ५०)**

**(१३ प्रस्कण्वः काण्वः । सूर्यः (११-१३ रोगघ्न्य उपनिषदः, १३ अन्त्योऽर्धर्चः द्विषद्घ्नश्च) । गायत्री, १०-१३ अनुष्टुप् ।)**

**उदु त्यं जातवेदसं देवं वहन्ति केतवः । दृशे विश्वाय सूर्यम् ।। १ ।।**
उत् । ऊँ इति । त्यम् । जातऽवेदसम् । देवम् । वहन्ति । केतवः । दृशे । विश्वाय । सूर्यम् ।। १ ।।

**स्कन्द**–'उदु त्यम् सौर्यमुत्तरम्' (तु.बृदे.३,११३) । सूर्यदैवतमुत्तरं सूक्तम् । तच्छब्द श्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽध्याहार्यः । यं सर्वप्राणिनो नमस्यन्ति, **त्यम्** तम् । **जातवेदसं** जातप्रज्ञानं देवं दानादिगुणम् । **उत् वहन्ति** ऊर्ध्वं वहन्ति । के । सामर्थ्यादश्वाः । कीदृशाः । **केतवः** 'केतुः' (निघ.३,९) इति प्रज्ञानाम । प्रज्ञानसत्वाः । सूर्यस्य हि स्वयं प्रज्ञानसत्त्वत्वाद्

अश्वैरपि प्रज्ञानसत्त्वैरेव भवितव्यम् । अथवा 'केतवो' रश्मयः । प्रज्ञानसत्त्वत्वात् ते उद्वहन्ति । किमर्थम् । **दृशे** द्रष्टुम् । दर्शनार्थमित्यर्थः । कस्य । **विश्वाय** षष्ठ्यर्थ एषा चतुर्थी । सर्वस्य भूतजातस्य । उदिते हि सूर्ये सर्वं भूतजातं द्रष्टुं समर्थं भवति, नानुदिते । कमुद्वहन्ति । **सूर्यम्** ।।

**वेङ्कटमाधव– उत् वहन्ति** । तं **जातवेदसम्** । **केतवः** अश्वा रश्मयो वा सर्वेषां भूतानां दर्शनाय ।। १ ।।

**मुद्गल–** 'उदु त्यम्' इति त्रयोदशर्चं सप्तमं सूक्तम् । कण्वपुत्रः प्रस्कण्व ऋषिः । आदौ नव गायत्र्यः । शिष्टाश्चतस्रोऽनुष्टुभः । सूर्यो देवता ।

**केतवः** प्रज्ञापका सूर्याश्वाः । **सूर्यम्** आदित्यम् **उत् उ वहन्ति** ऊर्ध्वं वहन्ति । उः पूरणः । उक्तं च– 'मिताक्षरेष्वनर्थका कमीमिद्विति' (या.१,९) । किमर्थम् । **विश्वाय** विश्वस्मै भुवनाय । **दृशे** द्रष्टुम् । यथा सर्वे जनाः सूर्यं पश्यन्ति तथोर्ध्वं वहन्तीत्यर्थः । कीदृशं सूर्यम् । **त्यम्** तं प्रसिद्धम् **जातवेदसं** जातानां प्राणिनां वेदितारम् । **देवं** द्योतमानम् ।। १ ।।

**सायण–** 'उदु त्यम्' इति त्रयोदशर्चं सप्तमं सूक्तं प्रस्कण्वस्यार्षं सूर्यदेवत्यम् । आदौ नव गायत्र्यः शिष्टाश्चतस्रोऽनुष्टुभ इत्युक्तम् । तथा चानुक्रान्तम्– 'उदु त्यं सप्तोना सौर्यं नवाद्या गायत्र्यः' इति । आश्विनशस्त्रे सौर्ये क्रतौ 'उदु त्यम्' इत्यादयो नवर्चः शंसनीयाः । 'संस्थितेष्वाश्विनाय' इति खण्डे सूत्रितं– 'सूर्यो नो दिव उदु त्यं जातवेदसमिति नव' (आश्व.श्रौ.६.५) इति ।।

**केतवः** प्रज्ञापका सूर्याश्वाः । यद्वा सूर्यरश्मयः । **सूर्यं** सर्वस्य प्रेरकमादित्यम् । **उदु वहन्ति** ऊर्ध्वं वहन्ति । उ इति पादपूरणः । उक्तं च– 'मिताक्षरेष्वनर्थकाः कमीमिद्विति' (निरु.१.९) । किमर्थम् । **विश्वाय** विश्वस्मै भुवनाय **दृशे** द्रष्टुम् । यथा सर्वे जनाः सूर्यं पश्यन्ति तथोर्ध्वं वहन्तीत्यर्थः । कीदृशं सूर्यम् । **त्यं** प्रसिद्धं **जातवेदसं** जातानां प्राणिनां वेदितारं जातप्रज्ञं जातधनं वा । **देवं** द्योतमानम् । अत्र निरुक्तम्– 'उद्वहन्ति तं जातवेदसं देवमश्वाः केतवो रश्मयो वा सर्वेषां भूतानां सन्दर्शनाय सूर्यम्' (निरु.१२.१५) इति ।। **जातवेदसम्**- जातानि वेत्तीति जातवेदाः । 'गतिकारकयोरपि पूर्वपदप्रकृतिस्वरत्वं च' इति असुन् पूर्वपदप्रकृतिस्वरत्वं च । **दृशे** 'दृशे विख्ये च' (पा.सू.३.४.११) इति तुमर्थे निपातितः । **सूर्यम्** । 'राजसूयसूर्य'

इत्यादिना 'षू प्रेरणे' इत्यस्मात् क्यपि रुडागमसहितो निपातितः । अतः प्रत्ययस्य पित्त्वादनुदात्तत्वे धातुस्वरेणाद्युदात्तत्वम् ।। १ ।।

**सिद्धाञ्जनम्–** 'उदु त्यम्' इति त्रयोदशर्चं सूर्यदेवत्यं सप्तमं सूक्तं प्रस्कण्वस्यार्षम् । प्रथमादिनवम्यन्ताः गायत्र्यः । शिष्टाश्चतस्रोऽनुष्टुभः । सर्वेषां देवानामादिरन्तश्च सूर्यात्मना प्रतीकेन बहिर्मुखानामनुग्रहाय बहिरुपास्यतया चिरन्तनैर्मन्त्रद्रष्टृभिरुपदिश्यते । "स परमः पुरुषः तत् परं ज्योतिः, तमसः परस्तान्नित्य आत्मा जगतस्तस्थुषश्चे"ति श्रुतीनामुद्घोषः प्रसिद्धः । यद्यपि ऊर्ध्वमूलाद्विश्वस्मात् परस्तादेव तत्पदं भवति, तथापि परिपक्वे यजमाने देवताप्रसादलाभस्यावकाशे सति, परस्य ज्योतिषः प्रादुर्भावः सम्पद्यते । स च सूर्योदयपदवेदनीयः साक्षात्कारो वैदिके योगे आरोहणरूपो यजमानमूर्ध्वं उत्तमं पदं नयतीति रहस्यम् । इतः अधः समुद्रात् 'अप्रकेतात् सलिलात्' तमःशब्दवाच्य-अचित्प्रकाशावस्थायाः रात्रेरन्ते ऋतज्योतिषः उदयारोहादिमन्त्रवर्णेषु तथा वर्ण्यते यथा बहिः सूर्यस्योदयादावपि तात्पर्यं सङ्गच्छेत । अत एव वैदिकयोगनिष्ठारहस्यबाह्या मुह्यन्ति साधारणसूर्योदयादिवर्णनमात्रपरा मन्त्रा इति ।। १ ।।

**त्यं** तं प्रसिद्धं **जातवेदसं** जातानि सर्वाणि वेत्तीति जातवेदाः तम् । **देवं सूर्यं** सर्वस्य प्रेरकं आदित्यं, **केतवः** प्रज्ञापका रश्मयः सूर्याश्वस्थानीयाः चिदंशव इति यावत् । **उद्वहन्ति** ऊर्ध्वं वहन्ति । उः पादपूरणः । किमर्थम्? **विश्वाय** विश्वस्मै भुवनाय **दृशे** द्रष्टुम् । यथा विश्वं भुवनं सूर्यं पश्येत् तथा केतवस्तमुद्वहन्तीत्यर्थः ।। **दृशे**–'दृशे विख्ये च' इति तुमर्थे निपातितः । **सूर्यम्**–'षू प्रेरणे' अस्मात् क्यप् निपातितः, रुडागमश्च ।। १ ।।

## ऋक्संहिता पदपाठसहिता

**अप त्ये तायवो यथा नक्षत्रा यन्त्यक्तुभिः । सूराय विश्वचक्षसे ।। २ ।।**
**अप । त्ये । तायवः । यथा । नक्षत्रा । यन्ति । अक्तुऽभिः । सूराय । विश्वऽचक्षसे ।।**

**स्कन्द– त्ये** इति नक्षत्रसामानाधिकरण्याद् व्यत्ययेन पुल्लिङ्गता । तानीत्यर्थः । तच्छब्दश्रुतेश्च योग्यार्थसम्बन्धो यच्छब्दोऽध्याहार्यः । यानि रात्रावदृश्यन्त तानि **तायवः** यथा 'तायुः' (निघ. ३,२४) इति स्तेननाम । चोरा इव । नक्षत्राणि **अप यन्ति** अपगच्छन्ति । अदृश्यतां प्रतिपद्यन्त इत्यर्थः । न च केवलानि । किं तर्हि । अक्तुभिः 'अक्तुः' (निघ.१,७) इति

रात्रिनाम । सहयोगलक्षणा चैषा तृतीया । रात्रिभिस्सह । कुतोऽपयन्ति । **सूराय** सूरशब्दः सूर्यपर्यायः । पञ्चम्यर्थे चतुर्थी । सूर्यात् । सूर्योदयोत्तरकाले हि नक्षत्राणि रात्र्यश्च न दृश्यन्ते । कीदृशात् सूर्यात् । **विश्वचक्षसे** स्वज्योतिषा सर्वस्य दर्शयितुर्द्रष्टुर्वा ॥ २ ॥

**वेङ्कटमाधव– अप यन्ति** नक्षत्राणि रात्रिभिः सहाऽऽगच्छन्तीभिः, अमी स्तेना इव, सूर्यम् विश्वस्य द्रष्टारं दृष्ट्वा ॥ २ ॥

**मुद्गल– त्ये तायवः** यथा प्रसिद्धाः तस्करा इव **नक्षत्रा** नक्षत्राणि देवगृहरूपाणि **अक्तुभिः** रात्रिभिः सह **अप यन्ति** अपगच्छन्ति । **विश्वचक्षसे** विश्वस्य सर्वस्य प्रकाशकस्य **सूराय** सूर्यस्य आगमनं दृष्ट्वेति शेषः । तस्करा नक्षत्राणि च रात्रिभिः सह सूर्य आगमिष्यतीति भीत्या पलायन्त इत्यर्थः ॥ २ ॥

**सायण– त्ये तायवः** यथा प्रसिद्धाः तस्करा इव **नक्षत्रा** नक्षत्राणि देवगृहरूपाणि । 'देवगृहा वै नक्षत्राणि' (तै.ब्रा.१.५.२.६) इति श्रुत्यन्तरात् । यद्वा । इह लोके कर्मानुष्ठाय ये स्वर्गं प्राप्नुवन्ति ते नक्षत्ररूपेण दृश्यन्ते । तथा च श्रूयते– 'यो वा इह यजतेऽमुँ स लोकं नक्षते तन्नक्षत्राणां नक्षत्रत्वम्' (तै.ब्रा.१.५.२.५) इति । यद्वा । तेषां सुकृतिनां ज्योतींषि नक्षत्राण्युच्यन्ते, 'सुकृतां वा एतानि ज्योतींषि यन्नक्षत्राणि' (तै.सं.५.४.१.३) इत्याम्नानात् । यास्कस्त्वाह– 'नक्षत्राणि नक्षतेर्गतिकर्मणो नेमानि क्षत्राणीति च ब्राह्मणम्' (निरु.३.२०) इति । तथाविधानि नक्षत्राणि **अक्तुभिः** रात्रिभिः सह **अप यन्ति** अपगच्छन्ति । **विश्वचक्षसे** विश्वस्य सर्वस्य प्रकाशकस्य **सूराय** सूर्यस्यागमनं दृष्ट्वेति शेषः । तस्करा नक्षत्राणि च 'रात्रिभिः सह सूर्य आगमिष्यति' इति भीत्या पलायन्ते इत्यर्थः । तायुरिति स्तेननाम, 'तायुः तस्करः' (नि.३.२४.७) इति तन्नामसु पाठात् । अक्तुरिति रात्रिनाम, 'शर्वरी अक्तुः' (नि.१.७.४) इति तत्र पाठात् ॥ **यथा** 'यथेति पादान्ते' इति सर्वानुदात्तत्वम् । **नक्षत्रा** । 'नक्ष गतौ' । 'अमिनक्षियजिबन्धिपतिभ्योऽत्रन्' (उ.सू.३.३८५) इति अत्रन्प्रत्ययः । नित्त्वादाद्युदात्तत्वम् । 'नभ्राण्नपात्' इत्यत्र वृत्तौ त्वेवमुक्तं– 'न क्षरति न क्षीयत इति वा नक्षत्रम् । क्षीयतेः क्षरतेर्वा नक्षत्रमिति निपात्यते' (का.६.३.७५) इति । 'शेश्छन्दसि बहुलम्' इति शेर्लोपः । **यन्ति** 'इण् गतौ' । 'इणो यण्' इति यणादेशः । **सूराय विश्वचक्षसे** । विश्वं चष्टे प्रकाशयतीति विश्वचक्षाः । 'चक्षेर्बहुलं शिच्च' (उ.सू.४.६७२) इति असुन्प्रत्ययः । शित्त्वेन सार्वधातुकत्वात् ख्याञादेशाभावः । उभयत्र 'षष्ठ्यर्थे चतुर्थी वक्तव्या' (पा.म.२.३.६२.१) इति चतुर्थी ॥

**सिद्धाञ्जनम्– विश्वचक्षसे** विश्वं चष्टे प्रकाशयतीति विश्वचक्षाः (असुन्) तस्मै । **सूराय** सूर्याय । विभक्तिव्यत्ययः, सूर्यस्यागमने इति शेषः । **नक्षत्रा** नक्षत्राणि रात्रौ दृश्यमानानि ज्योतींषि **अक्तुभिः** रात्रिभिः सह **अप यन्ति** अपगच्छन्ति । **त्ये तायवः यथा** यथा ते तस्कराः अन्यद्रव्यापहारिणः द्रव्यस्वामिनः पुरस्तान्न तिष्ठन्ति, तथा ज्योतिषां स्वामिनः पुरः यजमानस्य अप्रकाशदशासु अन्धकारस्वामिनीषु रात्रिषु अल्पप्रकाशविधायीनि ज्योतींषि पलायितानि भवन्ति ।।

## ऋक्संहिता पदपाठसहिता

**अदृ॑श्रमस्य के॒तवो॒ वि र॒श्मयो॒ जनाँ॒ अनु॑ । भ्राज॑न्तो अ॒ग्नयो॑ यथा ।। ३ ।।**
**अदृ॑श्रम् । अ॒स्य । के॒तवः॑ । वि । र॒श्मयः॑ । जना॑न् । अनु॑ । भ्राज॑न्तः अ॒ग्नयः॑ । य॒था ।।**

**स्कन्द– अदृश्रम्** लडर्थेऽयं लुङ् 'छन्दसि लुङ्लङ्लिटः' (पा.सू.३,४,६) इति । कर्मणि च प्रथमपुरुषबहुवचनस्य स्थाने व्यत्ययेनेदमुत्तमपुरुषैकवचनम् । दृश्यन्त इत्यर्थः । कुत एतत् । 'केतवः' इत्यादिष्वभिहितकर्मत्वे निमित्तायाः प्रथमाया दर्शनात् । के दृश्यन्ते । उच्यते । **अस्य** सूर्यस्य स्वभूताः **केतवः** प्रज्ञानसत्त्वा रश्मयः । वि-शब्दस्तु 'भ्राजन्तः' इत्येतेन सम्बन्धयितव्यः । क्व दृश्यन्ते । **जनान्** मनुष्यान् **अनु** प्रति । मनुष्यान् व्याप्य अवस्थिता इत्यर्थः । **वि भ्राजन्तः** विविधं भ्राजमाना दीप्यमानाः । कथम् । **अग्नयः यथा** अग्नय इव । अथवा 'अदृश्रम्' इत्युत्तमपुरुषश्रुतिसामर्थ्याद् रश्मीनां च दर्शनकर्मत्वात् केतव इत्यादिषु द्वितीयार्थे व्यत्ययेन प्रथमा । अदर्शमहमस्य क्रेतून् रश्मीन् जनाननु विभ्राजमानानग्नीनिव ।। ३ ।।

**वेङ्कटमाधव–** अदर्शम् अहम् अस्य केतून् । विभवन्ति जनान् प्रति **रश्मयः भ्राजन्तः अग्नयः** इव दीप्यमाना इति ।। ३ ।।

**मुद्गल– अस्य सूर्यस्य केतवः** प्रज्ञापकाः **रश्मयः** दीप्तयः **जनान् अनु वि अदृश्रम्** जातान् सर्वान् अनुक्रमेण प्रेक्षन्ते । सर्वं जगत् प्रकाशयन्तीत्यर्थः । दृष्टान्तः । **भ्राजन्तः** दीप्यमानाः **अग्नयः यथा** अग्नय इव ।। ३ ।।

**सायण– अस्य सूर्यस्य केतवः** प्रज्ञापकाः **रश्मयः** दीप्तयः **जनान् अनु वि अदृश्रम्** जातान् सर्वान् अनुक्रमेण प्रेक्षन्ते । सर्वं जगत् प्रकाशयन्तीत्यर्थः । तत्र दृष्टान्तः । **भ्राजन्तः** दीप्यमानाः **अग्नयः यथा** अग्नय इव ।। **अदृश्रम्** । 'दृशिर् प्रेक्षणे' । वर्तमाने लुङ् । 'इरितो वा'

(पा.सू.३.१.५७) इति च्लेः अडादेशः । 'रुट्' इत्यनुवृत्तौ 'बहुलं छन्दसि' (पा.सू.७.१.८) इति रुडागमः । अत एव बहुलवचनात् 'ऋदृशोऽङि गुणः' इति गुणाभावः इत्युक्तम् । 'तिङां तिङो भवन्ति' इति प्रथमपुरुषबहुवचनस्योत्तमपुरुषैकवचनादेशः । प्रथमपुरुषान्त एव शाखान्तरे श्रूयते– 'अदृश्रन्नस्य केतवः' (अ.सं.१३.२.१८) इति । **जनान्** इत्यस्य नकारस्य संहितायां रुत्वयत्वादि पूर्ववत् । **भ्राजन्तः** । शपः पित्त्वादनुदात्तत्वम् । शतुश्च लसार्वधातुकस्वरेण धातुस्वर एव शिष्यते ।। ३ ।।

**सिद्धाञ्जनम्–** **अस्य** सूर्यस्य **केतवः** प्रज्ञापका **रश्मयः** अंशवः **जनान्** जातान् सर्वान् **अनु** अनुक्रमेण तेषां परिपाकविशेषप्राप्तयोग्यतानुसारेण क्रमश इत्यर्थः । **व्यदृश्रम्** प्रेक्षन्ते । तथा प्रेक्षणमेव प्रकाशनं भवति । तत्र दृष्टान्तः– **यथा भ्राजन्तः अग्नयः** दीप्यमानाः अग्नयो यथा प्रकाशयन्ति तद्वत् ।। **अदृश्रम्** 'दृशिर् प्रेक्षणे' वर्तमाने लुङ् । इरितः च्लेरङादेशः, रुडागमः, 'तिङां तिङो भवन्ति' इति प्रथमपुरुषबहुवचनस्य उत्तमपुरुषैकवचनादेशः । 'अदृश्रम्' इति वाजसनेयिसंहितापाठः (८.अ., ४.म.) ।। ३ ।।

## ऋक्संहिता पदपाठसहिता

**तरणिर्विश्वदर्शतो ज्योतिष्कृदसि सूर्य । विश्वमा भासि रोचनम् ।। ४ ।।**
**तरणिः । विश्वऽदर्शतः । ज्योतिःकृत् । असि । सूर्य । विश्वम् । आ भासि । रोचनम् ।।**

**स्कन्द– तरणिः** 'तरणिः' (निघ.२,१५) इति क्षिप्रनाम । क्षिप्रः । **विश्वदर्शतः** सर्वस्य हि दर्शनीयो द्रष्टा वा । **ज्योतिष्कृत्** ज्योतिषश्च कर्ता त्वम् **असि** । हे **सूर्य! विश्वम् आ भासि** सर्वं च जगदाभासयसि । **रोचनं** प्रकाशस्वभावकम् ।। ४ ।।

**वेङ्कटमाधव–** क्षिप्रगन्ता विश्वस्य दर्शकः ज्योतिषः कर्ता **असि सूर्य** । **विश्वं** च दिवं प्रकाशयसि ।। ४ ।।

**मुद्गल–** हे **सूर्य!** त्वम् **तरणिः** तरिता अन्येन गन्तुम् अशक्यस्य महतोऽध्वनो गन्ता **असि** । तथा **विश्वदर्शतः** विश्वैः सर्वैः प्राणिभिः दर्शनीयः । तथा **ज्योतिष्कृत्** प्रकाशस्य कर्ता । **विश्वं** सर्वं दृश्यजातम् । **रोचनं** रोचमानं दीप्यमानं यथा भवति तथा **आ भासि** प्रकाशयसि ।। ४ ।।

**सायण–** चातुर्मास्येषु शुनासीर्ये पर्वण्यस्ति सौर्यं एककपालः । तस्य 'तरणिः' इत्येषा अनुवाक्या । तथा च सूत्रितं– 'तरणिर्विश्वदर्शतश्चित्रं देवानामुदगादनीकमिति याज्यानुवाक्याः' (आश्व.श्रौ.२.२०) इति । तथा अतिमूर्तिनाम्न्येकाहे कृष्णपक्षे सौरीष्टिः कर्तव्या । तस्यामप्येषा अनुवाक्या । 'अतिमूर्तिना' इति खण्डे सूत्रितं– 'नवो नवो भवति जायमानस्तरणिर्विश्वदर्शतः' (आश्व.श्रौ.९.८) इति ।। ४ ।।

हे **सूर्य!** त्वम् **तरणिः** तरिता अन्येन गन्तुम् अशक्यस्य महतोऽध्वनो गन्ता **असि** । तथा च स्मर्यते– 'योजनानां सहस्रे द्वे द्वे शते द्वे च योजने । एकेन निमिषार्धेन क्रममाण नमोऽस्तु ते' इति । यद्वा उपासकानां रोगात् तारयितासि । 'आरोग्यं भास्करादिच्छेत्' इति स्मरणात् । तथा **विश्वदर्शतः** विश्वैः सर्वैः प्राणिभिर्दर्शनीयः । आदित्यदर्शनस्य चण्डालादिदर्शन-जनितपापनिर्हरणहेतुत्वात् । तथा च आपस्तम्बः– 'दर्शने ज्योतिषां दर्शनम्' इति । यद्वा । विश्वं सकलं भूतजातं दर्शतं द्रष्टव्यं प्रकाश्यं येन स तथोक्तः । तथा **ज्योतिष्कृत्** ज्योतिषः प्रकाशस्य कर्ता । सर्वस्य वस्तुनः प्रकाशयितेत्यर्थः । यद्वा । चन्द्रादीनां रात्रौ प्रकाशयिता । रात्रौ हि अम्मयेषु चन्द्रादिबिम्बेषु सूर्यकिरणाः प्रतिफलिताः सन्तोऽन्धकारं निवारयन्ति । यथा द्वारस्थदर्पणोपरि निपतिताः सूर्यरश्मयो गृहान्तर्गतं तमो निवारयन्ति तद्वदित्यर्थः । यस्मादेवं तस्माद् **विश्वं** व्याप्तं **रोचनं** रोचमानमन्तरिक्षम् **आ** समन्तात् **भासि** प्रकाशयसि ।

यद्वा । हे **सूर्य** अन्तर्यामितया सर्वस्य प्रेरक! परमात्मन्! **तरणिः** संसाराब्धेस्तारकः असि । यस्मात् त्वं **विश्वदर्शतः** विश्वैः सर्वैर्मुमुक्षुभिः दर्शतः द्रष्टव्यः साक्षात्कर्तव्यः इत्यर्थः । अधिष्ठान साक्षात्कारे ह्यारोपितं निवर्तते । **ज्योतिष्कृत्** ज्योतिषः सूर्यादेः कर्ता । तथा चाम्नायते– 'चन्द्रमा मनसो जातश्चक्षोः सूर्यो अजायत' (तै.आ.३.१२.६) इति । ईदृशस्त्वं चिद्रूपतया **विश्वं** सर्वं दृश्यजातं **रोचनं** रोचमानं दीप्यमानं यथा भवति तथा **आ भासि** प्रकाशयसि । चैतन्यस्फुरणे हि सर्वं जगत् दृश्यते । तथा चाम्नायते–'तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति (क.उ.५.१५) इति ।। **तरणिः** । 'तॄ प्लवनतरणयोः' अस्मादन्तर्भावितण्यर्थात् 'अर्तिसृभृधृ-धम्यश्यवितॄभ्योऽनिः' इति अनिप्रत्ययः । प्रत्ययाद्युदात्तत्वम् । ज्योतिः करोतीति ज्योतिष्कृत् । 'क्विप् च' इति क्विप् । 'नित्यं समासेऽनुत्तरपदस्थस्य' इति विसर्जनीयस्य षत्वम् । **भासि** 'भा दीप्तौ' अन्तर्भावितण्यर्थात् लटि अदादित्वात् शपो लुक् ।। ४ ।।

**सिद्धाञ्जनम्**– हे **सूर्य** सर्वस्य प्रेरक परमात्मन्! त्वं, **तरणिः** तारयिता यजमानं तमसस्पारं इति शेषः (तरिता महतोऽध्वनो गन्ता इति स्थूलोऽर्थः) **विश्वदर्शतः** विश्वैः सर्वैर्द्रष्टव्यः । सर्वैर्यजमानैः साक्षात्कर्तव्यो हि स परमेश्वरः । **ज्योतिष्कृत्** ज्योतिषां कर्ता प्रकाशयिता च **असि** । 'आत्मा वा अरे द्रष्टव्यः,' 'तमेव भान्तमनु भाति सर्वं तस्य भासा सर्वमिदं विभाति' इत्याद्युपनिषद्वाक्यानां मूलं एतादृशेषु मन्त्रेषु स्फुटं लक्ष्यते । किं च त्वं **विश्वं** सर्वं **रोचनम्** रोचमानं यथा भवति तथा **आ भासि** सर्वतः प्रकाशसे प्रकाशयसि इति अन्तर्भावितण्यर्थो वा ।। 'तॄ–प्लवनसन्तरणयोः अस्मात् अनिप्रत्ययः । अन्ये गताः ।। ४ ।।

## ऋक्संहिता पदपाठसहिता

**प्रत्यङ् देवानां विशः प्रत्यङ्ङुदेषि मानुषान् । प्रत्यङ्विश्वं स्वर्दृशे ।। ५ ।।**
प्रत्यङ् । देवानाम् । विशः । प्रत्यङ् । उत् । एषि । मानुषान् । प्रत्यङ् । विश्वम् । स्वः । दृशे ।। ५ ।।

**स्कन्द**– 'प्रत्यङ्' इत्येतस्य 'उदेषि' इत्येतेन सम्बन्धः । उदेतुश्चेदं सूर्यस्य विशेषणं नोदयतिक्रियायाः । कुत एतत् । पुल्लिङ्गत्वात् प्रतीच्यां च दिशि सूर्योदयस्यासम्भवात् । **प्रत्यङ् उदेषि** प्राच्यां दिशि पश्चान्मुखः स्थित्वा त्वमुदेषीत्यर्थः । किमर्थम् । **देवानाम् विशः** साकाङ्क्षत्वाद् 'दृशे' इत्येतत् पुरस्ताच्छ्रुतं सर्वत्रानुषक्तव्यम् । दृशेशब्दश्च द्रष्टुमित्यस्यार्थे वर्तते । 'दृशे विख्ये च' (पा.३,४,११) इति तुमर्थे निपातनात् । देवानां स्वभूता या **विशः** ता **दृशे** द्रष्टुम् । पुरस्तादुदितस्य भवतः पश्चादवस्थितान् सर्वदेवान् द्रष्टुमित्यर्थः । न च देवविश एव केवलाः । किं तर्हि । **प्रत्यङ् उदेषि मानुषान्** मनुष्यानपि द्रष्टुम् । **प्रत्यङ् विश्वम्** सर्वं जगत् द्रष्टुम् । **स्वः दृशे** स्वर्शब्दोऽत्र द्युनाम । द्युलोकं च द्रष्टुम् । यावदिदं किञ्चित् सर्वं पश्चादवस्थितं द्रष्टुं सर्वतः पूर्वं पश्चान्मुखः त्वमुदेषीति समस्तार्थः ।। ५ ।।

**वेङ्कटमाधव**– 'तस्मात् सर्व एव मन्यते मा प्रत्युदगात्' (तै.६,५,४,२) इति ब्राह्मणम् । **देवानाम् विशः** देवानित्यर्थे । देवान् मनुष्यांश्च त्वम् अभिमुखः **उदेषि** । किं बहुना । सर्वं जगद् अपि **प्रत्यङ् उदेषि** सर्वस्य पदार्थस्य दर्शनाय ।। ५ ।।

**मुद्गल**– हे सूर्य! त्वम् **देवानां विशः** मरुन्नामकान् देवान् । **प्रत्यङ् उदेषि** प्रतिगच्छन्

उदयं प्राप्नोषि । तेषामभिमुखं यथा भवति तथेत्यर्थः । तथा **मानुषान्** मनुष्यान् **प्रत्यङ्** उदेषि । तेऽपि अस्मदभिमुख एव सूर्य उदेतीति मन्यन्ते । तथा **विश्वं** व्याप्तम् **स्वः** स्वर्लोकम् **दृशे** द्रष्टुम् **प्रत्यङ्** उदेषि । यथा स्वर्लोकवासिनो जनाः स्वस्वाभिमुख्येन पश्यन्ति तथा उदेषीत्यर्थः ।।

**सायण–** हे सूर्य! त्वम् **देवानां विशः** मरुन्नामकान् देवान् । 'मरुतो वै देवानां विशः' (तै.सं.२.२.५.७) इति श्रुत्यन्तरात् । तान् मरुत्संज्ञकान् देवान् **प्रत्यङ् उदेषि** तान्प्रति गच्छन्नुदयं प्राप्नोषि । तेषामभिमुखं यथा भवति तथेत्यर्थः । तथा **मानुषान्** मनुष्यान् **प्रत्यङ्ङुदेषि** । तेऽपि यथा अस्मदभिमुख एव सूर्य उदेतीति मन्यन्ते । तथा **विश्वं** व्याप्तं **स्वः** स्वर्लोकम् **दृशे** द्रष्टुम् **प्रत्यङ्** उदेषि । यथा स्वर्लोकवासिनो जनाः स्वस्वाभिमुख्येन पश्यन्ति तथा उदेषीत्यर्थः । एतदुक्तं भवति । लोकत्रयवर्तिनो जनाः सर्वेऽपि स्वस्वाभिमुख्येन सूर्यं पश्यन्तीति । तथा चाम्नायते– 'तस्मात्सर्व एव मन्यते मां प्रत्युदगात्' ('तै.सं.६.५.४.२) इति ।।

**प्रत्यङ्** । प्रति अञ्चतीति प्रत्यङ् । 'अञ्चु गतिपूजनयोः' । 'ऋत्विक्' इत्यादिना क्विन् । 'अनिदिताम्' इति नलोप! । 'उगिदचाम्' इति नुम् । हल्ङ्यादिसंयोगान्तलोपौ । संयोगान्तलोपस्यासिद्धत्वात् उपधादीर्घनलोपयोरभावः । **'क्विन्प्रत्ययस्य कुः'** (पा.सू.८.२.६२) इति कुत्वम् । **'अनिगन्तोऽञ्चतौ'** (पा.सू.६.२.५२) इति अनिगन्तः इति पर्युदासात् पूर्वपदप्रकृतिस्वराभावे कृदुत्तरपदप्रकृतिस्वरत्वम् । **एषि** । 'इण् गतौ' सिपि अदादित्वात् शपो लुक् । 'आदेशप्रत्यययोः' इति षत्वम् । **स्वः** । सुपूर्वात् अर्तेः विच् । गुणे यणादेशः । 'न्यङ्स्वरौ स्वरितौ च' इति स्वरितत्वम् । **दृशे** 'दृशिर् प्रेक्षणे' इत्यस्मात् 'दृशे विख्ये च' इति तुमर्थे निपातितः ।। ७ ।।

**सिद्धाञ्जनम्–** हे सूर्य! **देवानां विशः** द्युलोकवासिनो जनान् दैवान् (मरुत इत्येके, तथा अन्यत्र श्रुतेरित्याहुः) **प्रत्यङ्** प्रतिगच्छन् **उदेषि** उदयं प्राप्नोषि । तथा **मानुषान्** मनुष्यान् **प्रत्यङ्** प्रतिगच्छन् **उदेषि** उदयं प्राप्नोषि । तथा **विश्वं स्वः** सर्वं स्वर्-आख्यं ज्योतिः, **दृशे** द्रष्टुं **प्रत्यङ्** प्रतिगच्छन् **उदेषि** । इह मानुषो जनः यजमानः, अमुत्र दैव्यो जनः ततश्च स्वर्लोकः तत्र सयुग्जनो वा, एवं सर्वोऽपि 'स्वाभिमुखो भगवान् प्रादुर्भवति ज्योतिषां पतिः' इति यथा पश्येत् तथा त्वमुदेषीत्युक्तं भवति ।। **प्रत्यङ्**–प्रतिपूर्वाद्गत्यर्थादञ्चतेः क्विन्, प्रत्ययस्य कुत्वम् ।।

**।। इति प्रथमाष्टके चतुर्थाध्याये सप्तमो वर्गः ।।**

## ।। अथ अष्टमो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

**येना॑ पाव॒क॒ चक्ष॑सा भु॒र॒ण्यन्तं॒ जनाँ॒ अनु॑ । त्वं व॑रुण॒ पश्य॑सि ।। ६ ।।**

**येन॑ । पा॒व॒क॒ । चक्ष॑सा । भु॒र॒ण्यन्त॑म् । जना॑न् । अनु॑ । त्वम् । व॒रु॒ण॒ । पश्य॑सि ।।६।।**

**स्कन्द– येन** हे **पावक** पावयितः! **चक्षसा** दर्शनेन ज्योतिराख्येन । **भुरण्यन्तम्** भुरण्यतिर्गतिकर्मा (तु.निघ.२,१४) । गच्छन्तं सूर्यं **जनान् अनु** मनुष्यान् प्रति । मनुष्यलोकं प्राप्तवन्तमित्यर्थः । **त्वं** हे **वरुण! पश्यसि** । यच्छब्दश्रुतेः तच्छब्दोऽध्याहार्यः । साकाङ्क्षत्वाच्च वाक्यस्य तेनाद्य वयं स्तुम इति वाक्यशेषः । एवमत्र सत्यपि वरुणस्यामन्त्रणे 'अथापि प्रत्यक्षकृताः स्तोतारो भवन्ति परोक्षकृतानि स्तोतव्यानि' (या.७,२) इत्येतेन न्यायेन सूर्यस्यैव प्राधान्यं न वरुणस्य । सौर्यं हीदं सूक्तम्, न वारुणम् । अथवा सूर्यस्य सूक्तभाक्त्वाद् वरुण इति क्रियाशब्देन सूर्यस्यैवामन्त्रणम् । भुरण्यच्छब्दस्तु क्षिप्रकारिवचनः । क्षिप्रनामसु भुरण्युनामशब्दस्य पाठात् (तु.निघ.२,१५) । सर्वनाम्नां चाख्यातजत्वात् भुरण्यतिः क्षिप्रत्वार्थोऽपि न गतिकर्मैवेति गम्यते । येन हे पावक! चक्षसा अनुग्रहात्मकेन दर्शनेन भुरण्यन्तं क्षिप्रं यागान् स्तुतीश्च कुर्वन्तं मनुष्यं **जनान् अनु** मनुष्यान् प्रति वर्तमानम् । मनुष्यमध्यागतमित्यर्थः । त्वं हे वरुण! ज्योतिषां कृत्स्नस्य जगत आवरितः सूर्य! **पश्यसि** । साकाङ्क्षत्वाद् वाक्यस्य पूर्ववत् तेनाद्य वयं स्तुम इति वाक्यशेषः । आशीरर्थो वा वाक्यशेषोऽध्याहर्तव्यः । तेनास्मानपि पश्येति । अथवा यच्छब्दश्रुतेस्तच्छब्दमध्याहृत्य पूर्वर्चैकवाक्यता योज्या । येन चक्षसा भुरण्यन्तं पश्यसि तेन प्रत्यङ्ङुदेषीति । परया वा येन चक्षसा भुरण्यन्तं पश्यसि तेन 'वि द्यामेषि' इति ।।

**वेङ्कटमाधव– येन** शोधयितः! तेजसा **जनान्** प्रत्यर्थार्थं गच्छन्तम् । **त्वम्** आच्छादयितः! **पश्यसि** । 'तत् ते वयं स्तुम इति वाक्यशेषः' इति यास्कः (१२,२२) ।। ६ ।।

**मुद्गल–** हे **पावक** सर्वस्य शोधक! **वरुण** अनिष्टवारक सूर्य! त्वम् **जनान्** प्राणिनः **भुरण्यन्तं** धारयन्तम् इमं लोकम् । **येन चक्षसा** प्रकाशेन **अनु पश्यसि** अनुक्रमेण प्रकाशयसि, तं प्रकाशं स्तुम इति शेषः ।। ६ ।।

**सायण–** हे **पावक** सर्वस्य शोधक! **वरुण** अनिष्टवारक सूर्य! त्वम् **जनान्** जातान् प्राणिनः

**भुरण्यन्तं** धारयन्तम् पोषयन्तं वा । इमं लोकं **येन चक्षसा** प्रकाशेन **अनु पश्यसि** अनुक्रमेण प्रकाशयसि, तं प्रकाशं स्तुम इति शेषः । यद्वा । उत्तरस्यामृचि सम्बन्धः । तेन चक्षसा व्येषीति । तथा च यास्केनोक्तं– 'तत्ते वयं स्तुम इति वाक्यशेषोऽपि वोत्तरस्यामन्वयस्तेन व्येषि' (निरु. १२.२२) इति ।। **भुरण्यन्तम्** । 'भुरण धारणपोषणयोः' । कण्ड्वादित्वाद् यक् । ततः शतरि कर्तरि शप् । अदुपदेशात् लसार्वधातुकानुदात्तत्वे यक एव स्वरः शिष्यते । **वरुण** 'वृञ् वरणे' अस्मादन्तर्भावितण्यर्थात् 'कृवृदारिभ्य उनन्' (उ.सू.३.३३३) इति उनन्प्रत्ययः । अत्र वरुणशब्देनादित्य एवोच्यते । तथा चान्यत्राम्नातं– 'तस्यै मित्रश्च वरुणश्चाजायेताम्' (तै.ब्रा. १.१.९.२) इति । 'मित्रश्च वरुणश्च धाता चार्यमा च' (तै.आ.१.१३.३) इति च ।।

**सिद्धाञ्जनम्–** हे **पावक** शोधक! **वरुण!** वरुणात्मक सूर्य! **त्वम् जनान्** जन्मिनः **भुरण्यन्तं** धारयन्तं पोषयन्तं वा लोकं, **येन चक्षसा** येन चक्षुषा **अनु पश्यसि** अनुक्रमेण वीक्षसे । तेन 'व्येषि' इति उत्तरस्यामृचि सम्बन्धः । पावकेति सम्बोधनाद् वरुणस्य पारिशुद्ध्य-प्रदत्वेन प्रसिद्धेश्च वरुणात्मकः सूर्य आमन्त्रित इति व्याख्यातम् । अनिष्टनिवारकेति सायणीयम् । अवयवार्थानुसारेणैवं गृहीतं चेत्, वृञ् वरणे इति निष्पन्नत्वात् सर्वमप्यावृत्य स्थितो वरुणो विपुलः सर्वव्यापीति साधीयानर्थः ।। **भुरण्यन्तम्**– 'भुरण धारणपोषणयोः' कण्ड्वादिः, तस्माद् यक् ।। ६ ।।

## ऋक्संहिता पदपाठसहिता

**वि द्यामे॑षि रज॑स्पृथ्वहा॒ मिमा॑नो अ॒क्तुभि॑ः । पश्य॒ञ्जन्मा॑नि सूर्य ।। ७ ।।**

**वि । द्याम् । ए॒षि । रज॑ः । पृ॒थु । अहा॑ । मिमा॑नः । अ॒क्तुऽभि॑ः । पश्य॑न् । जन्मा॑नि । सू॒र्य ।। ७ ।।**

**स्कन्द–** **द्याम्** द्युलोकम् **वि एषि** विविधं गच्छसि । **रजः पृथु** विस्तीर्णं चान्तरिक्षलोकम् । **अहा** अहानि **मिमानः** निर्मिमाणः कुर्वन् । केन । **अक्तुभिः** अक्तुशब्दोऽयं ज्योतिर्वचनः । 'अक्तुनाऽह्नां वयुनानि साधत्' (ऋ.२,१९,३) इति यथा । आत्मीयैः ज्योतिर्भिः । रश्मिभिर्हि सूर्योऽहानि करोति । अथवा अक्तुशब्दो रात्रिनामैव । (तु.निघ.१,७) । सहयोगलक्षणा च तृतीया । अहानि निर्मिमाणोऽक्तुभिः रात्रिभिः सह । केन निर्मिमाणः । स्वोदयास्तमयाभ्याम् ।

उदयेन हि सूर्योऽहानि करोति अस्तमयेन रात्रीः । **पश्यन्** अनुग्राह्यतया अनुगृह्णन्नित्यर्थः । **जन्मानि** जननधर्माणि भूतजातानि । हे **सूर्य** ।। ७ ।।

**वेङ्कटमाधव–** **पृथु रजः** अन्तरिक्षम् । रात्रिभिः सह अहानि कुर्वन् । **द्याम्** अन्तरिक्षं च **पश्यन्** । सर्वाण्येव जातानि । **वि एषि** मध्ये गच्छसि ।। ७ ।।

**मुद्गल–** हे **सूर्य!** त्वम्, **पृथु** विस्तीर्णम् **रजः** लोकम्, **द्याम्** अन्तरिक्षलोकम् । **वि एषि** विशेषेण गच्छसि । किं कुर्वन् । **अहा** अहानि **अक्तुभिः** रात्रिभिः सह **मिमानः** उत्पादयन् । आदित्यगत्यधीनत्वाद् अहोरात्रविभागस्य । तथा **जन्मानि** जननवन्ति भूतजातानि **पश्यन्** प्रकाशयन् ।। ७ ।।

**सायण–** हे **सूर्य!** त्वम्, **पृथु** विस्तीर्णम् **रजः** लोकम् । 'लोका रजांस्युच्यन्ते' (निरु.४.१९) इति यास्कः । कं लोकम् । **द्याम्** अन्तरिक्षलोकं **वि एषि** विशेषेण गच्छसि । किं कुर्वन् । **अहा** अहानि **अक्तुभिः** रात्रिभिः सह **मिमानः** उत्पादयन् । आदित्यगत्य धीनत्वाद् अहोरात्रविभागस्य । तथा **जन्मानि** जननवन्ति भूतजातानि **पश्यन्** प्रकाशयन् ।। **रजस्पृथु** इत्यत्र 'छन्दसि वाप्राम्रेडितयोः' (पा.सू.८.३.४९) इति विसर्जनीयस्य सत्वम् । **अहा** 'शेश्छन्दसि बहुलम्' इति शेर्लोपः । **मिमानः** 'माङ् माने' जौहोत्यादिकः । शानचि श्लौ द्विर्भावे 'भृञामित्' इति अभ्यासस्य इत्वम् । 'श्नाभ्यस्तयोरातः' इति आकारलोपः । 'अभ्यस्तानामादिः' इति अभ्यस्तस्याद्युदात्तत्वम् । **जन्मानि** 'जनी प्रादुर्भावे' 'अन्येभ्योऽपि दृश्यन्ते' इति मनिन् । नित्त्वादाद्युदात्तत्वम् ।। ७ ।।

**सिद्धाञ्जनम्–** हे **सूर्य!** त्वं **पृथु** विस्तीर्णं **रजः** अन्तरिक्षम् **द्याम्** दिवं च **व्येषि** विशेषेण गच्छसि । किं कुर्वन्? **अक्तुभिः** त्वदीयैरंशुभिः । **अहा** अहानि **मिमानः** अह्नां मानं कुर्वन्, तथा **जन्मानि** जन्मवन्ति, दिव्ये प्रकाशे लब्धजन्मनोऽन्तर्याजिनो जनान् । **पश्यन्** प्रेक्षमाणः । अत्र 'अक्तुभिः (सह) अहानि मिमानः उत्पादयन्' इति बाह्योऽर्थः सूर्यायत्तत्वात् अहोरात्र-मानस्य । क्वचित् अक्तवोंऽशव इति प्रागुक्तमवधेयम् । सूर्यांशुभिरेव अहः सम्भवति । बह्वचः अन्तःप्रकाशदशाः अन्तर्याजिनो भवन्ति । इदं च तत्त्वं उषस्यविचारे प्रतिपादितम् । **मिमानः** 'माङ् माने' जुहोत्यादिः, शानच् । **जन्मानि** 'जनी प्रादुर्भावे' मनिन्, जन्मवन्ति इति अन्तर्भावितमतुबर्थः ।। ७ ।।

## ऋक्संहिता पदपाठसहिता

**सप्त त्वा हरितो रथे वहन्ति देव सूर्य । शोचिष्केशं विचक्षण ॥ ८ ॥**
**सप्त । त्वा । हरितः । रथे । वहन्ति । देव । सूर्य । शोचिःकेशम् । विऽचक्षण ॥८॥**

**स्कन्द– सप्त त्वा** सप्तसङ्ख्याकाः त्वाम् । **हरितः** हरिच्छब्दो हरितशब्दपर्यायो नीलवर्णवचनः । हरितवर्णा वडवाः । **रथे** सप्तमीनिर्देशात् अत्र 'स्थितम्' इति वाक्यशेषः । रथे स्थितम् । **वहन्ति** । हे **देव! सूर्य!** । कीदृशम् । **शोचिष्केशम्** शोचिर्दीप्तिः रश्म्याख्या, सा केशस्थानीया यस्य स शोचिष्केशः तं शोचिष्केशम् । दीप्तरश्मिकमित्यर्थः । हे **विचक्षण!** सर्वस्य द्रष्टः! ॥ ८ ॥

**वेङ्कटमाधव– सप्त** त्वाम् वडवाः । **रथे** आरोप्य **वहन्ति देव! सूर्य!** । ज्वलद्रश्मिं विद्रष्टः! 'केशा रश्मयः' इति यास्कः (१२,२५) । केशसादृश्याद्वेति ॥ ८ ॥

**मुद्गल–** हे **सूर्य देव विचक्षण!** सर्वस्य प्रकाशयितः! । **सप्त** सप्तसङ्ख्याकाः **हरितः** अश्वाः । **त्वा** त्वाम् **वहन्ति** प्रापयन्ति । कीदृशम् । **रथे** अवस्थितमिति शेषः । तथा **शोचिष्केशम्** शोचींषि तेजांस्येव यस्मिन् केशा इव दृश्यन्ते स तम् ॥ ८ ॥

**सायण–** हे **सूर्य देव** द्योतमान! **विचक्षण** सर्वस्य प्रकाशयितः! **सप्त** सप्तसङ्ख्याकाः **हरितः** अश्वाः रसहरणशीला रश्मयो वा । **त्वा** त्वां **वहन्ति** प्रापयन्ति । कीदृशम् । **रथे** अवस्थितमिति शेषः । तथा **शोचिष्केशम्** शोचींषि तेजांस्येव यस्मिन् केशा इव दृश्यन्ते स तथोक्तः तम् । 'हरितः' इति आदित्याश्वानां संज्ञा । 'हरित आदित्यस्य' (नि.१.१५.३) इति निघण्टावुक्तत्वात् ॥ **शोचिष्केशम्** 'शुच दीप्तौ' 'अर्चिशुचिहुसृपि' इत्यादिना इसिप्रत्ययान्तः अन्तोदात्तः । स एव बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वेन शिष्यते । 'नित्यं समासेऽनुत्तरपदस्थस्य' इति विसर्जनीयस्य षत्वम् ॥ ८ ॥

**सिद्धाञ्जनम्–** हे **सूर्य, देव, विचक्षण!** विशेषेण द्रष्टः! 'सर्वस्य प्रकाशयितः' इति सायणः । **सप्त** सप्तसङ्ख्याकाः । **हरितः** सूर्याश्वा रश्मयः । तत्त्वसप्तकावद्योतकं सप्तविधत्वं बोध्यम् । **शोचिष्केशम्** शोचींषि तेजांसि केशा इव यस्मिन् लक्ष्यन्ते तम् । **त्वा** त्वां **रथे वहन्ति** प्रापयन्ति ॥ ८ ॥

## ऋक्संहिता पदपाठसहिता

**अयुक्त सप्त शुन्ध्युवः सूरो रथस्य नप्त्यः । ताभिर्याति स्वयुक्तिभिः ।। ९ ।।**
**अयुक्त । सप्त । शुन्ध्युवः । सूरः । रथस्य । नप्त्यः । ताभिः । याति । स्वयुक्तिऽभिः ।।**

**स्कन्द–** 'ताभिः याति' इति तच्छब्दश्रुतेर्यच्छब्दोऽध्याहार्यः । या **अयुक्त** युक्तवान् **सप्त** सप्तसङ्ख्याका वडवाः **शुन्ध्युवः** शुन्ध्युरादित्यो भवति शोधनात् । तस्य स्वभूताः । आत्मन एव स्वभूता इत्यर्थः । अथवा उदकचरो मरुन्नाम यश्शकुनिः स शुन्ध्युरुच्यते । द्वितीया बहुवचनान्तं चेदम् । मरुत्सदृशीरित्यर्थः । क्रियाशब्दो वा शुन्ध्युशब्दः । शोधयित्रीः शुन्ध्युवः । कोऽयुक्त । उच्यते । **सूरः** सूर्यः । **रथस्य नप्त्यः** नपाच्छब्दस्यापत्यनाम्नोऽयं नप्त्यादेशः । रथस्यापत्यभूताः । अत्र चेतिहासमाचक्षते– 'पुरा किलानश्वः सूर्यरथः आसीत् । सूर्योऽह्नाऽस्तं गन्तुं नाशक्नोत् । तं सूर्योऽह्नाऽस्तं गन्तुमैच्छत् । तस्माद् रथात् सप्त हरितवर्णा वडवा अजायन्त । ता एनमहाऽस्तमनयन्' इति । तदेतदुच्यते– **रथस्य नप्त्य** इति । अथवा 'नप्त्यः' इति तु नप्तृशब्दपर्यायः प्रथमैककवचनान्तं सूर्यस्य विशेषणम् । नप्ता सूर्य इति । कस्य नप्ता । सामर्थ्याद् अपाम् । अद्भ्यो हि वैद्युतात्मना अग्निर्जायते, अग्नेः सूर्यः । 'अग्नेर्वा आदित्योऽजायत' इति श्रुतेः । अथवा 'नप्त्यः' इति क्रियाशब्दो द्वितीयाबहुवचनान्तो वडवानामेव विशेषणार्थः । न न पतन्ति पतन्त्येव यास्ता नप्त्यः । सततगामिनीरित्यर्थः । **ताभिः याति** । कीदृशीभिः । **स्वयुक्तिभिः** स्वयमेव या रथे युज्यन्ते ताः स्वयुक्तयः, ताभिः स्वयुक्तिभिः ।। ९ ।।

**वेङ्कटमाधव–** युक्तवान् **सप्त** वडवाः । **सूरः रथस्य** नेत्रीः । **ताभिः याति** । स्वेन युज्यमानाभिः । शोधनादश्वाः **शुन्ध्युवः** ।। ९ ।।

**मुद्गल– सूरः** सर्वस्य प्रेरकः सूर्यः । **शुन्ध्युवः** शोधिका अश्वस्त्रियः तादृशीः सप्तसङ्ख्याकाः । **अयुक्त** स्वरथे योजितवान् । कीदृशीः । **रथस्य नप्त्यः** न पातयित्र्यः । याभिर्युक्ताभिः रथो याति न पतति तादृशीरित्यर्थः । एवम्भूताभिः **ताभिः** अश्वस्त्रीभिः **स्वयुक्तिभिः** स्वकीययोजनेन रथे सम्बद्धाभिः **याति** यज्ञगृहं प्रत्यागच्छति । अतः तस्मै हविर्दातव्यमिति वाक्यशेषः ।। ९ ।।

**सायण– सूरः** सर्वस्य प्रेरकः सूर्यः । **शुन्ध्युवः** शोधिका अश्वस्त्रियः तादृशीः सप्तसङ्ख्याकाः । **अयुक्त** स्वरथे योजितवान् । कीदृश्यः । **रथस्य नप्त्यः** न पातयित्र्यः । याभिर्युक्ताभिः रथो

यांति न पतति तादृशीभिरित्यर्थः । एवम्भूताभिः **ताभिः** अश्वस्त्रीभिः **स्वयुक्तिभिः** स्वकीययोजनेन रथे सम्बद्धाभिः **याति** यज्ञगृहं प्रत्यागच्छति । अतः तस्मै हविर्दातव्यमिति वाक्यशेषः ।।

**अयुक्त** 'युजिर् योगे' । स्वरितेत्त्वात् कर्त्रभिप्राये आत्मनेपदम् । लुङि 'च्लेः सिच्' । 'एकाचः' इति इट्प्रतिषेधः । 'लिङ्सिचावात्मनेपदेषु' (पा.सू.१.२.११) इति सिचः कित्त्वात् लघूपधगुणाभावः । 'झलो झलि' इति सिचः सकारलोपः । 'चोः कुः' इति कुत्वम् । **शुन्ध्युवः** । 'शुन्ध विशुद्धौ' । 'यजिमनिशुन्धिदसिजनिभ्यो युः' (उ.सू.३.३००) इति युप्रत्ययः । शसि 'तन्वादीनां छन्दसि बहुलमुपसङ्ख्यानम्' (पा.सू.६.४.७७.१) इति उवङादेशः । **सूरः** 'षू प्रेरणे' । 'सुसूधागृधिभ्यः क्रन्' (उ.सू.२.१८२) इति क्रन्प्रत्ययः । नित्त्वादाद्युदात्तत्वम् । **नप्त्यः** । न पातयतीत्यर्थे 'नप्तृनेष्टृ' (उ.सू.२.२५२) इत्यादिना उणादिषु नप्तृशब्दस्तृजन्तो निपातितः । 'ऋन्नेभ्यो ङीप्' इति ङीप्, यणादेशे 'उदात्तयणो हल्पूर्वात्' इति ङीप उदात्तत्वम् । 'सुपां सुपो भवन्ति' इति शसो जसादेशः । ततो यणादेशे 'उदात्तस्वरितयोर्यणः' इति स्वरितत्वम् । रेफलोपश्छान्दसः । उक्तं च– 'द्वौ चापरौ वर्णविकारनाशौ' (का.६.३.१०९) इति । 'शाखान्तरे तु नप्त्र्यः' इत्येव पठ्यते । **स्वयुक्तिभिः** । स्वकीयाः सूर्यसम्बन्धिन्यो युक्तयो योजनानि यासाम् । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् ।। ९ ।।

**सिद्धाञ्जनम्– सूरः** सर्वस्य प्रेरकः सूर्यो देवः । **रथस्य** स्वीयस्य । **नप्त्यः** नप्त्रीः पुत्रिकाः रथादेव सम्भूता इत्यर्थः । **सप्त** सप्तसङ्ख्याकाः **शुन्ध्युवः** विशुद्धाः शोधिका वा अश्वस्त्रियः **अयुक्त** योजितवान् रथे । **स्वयुक्तिभिः** स्वकीयाः सूर्यसम्बन्धिन्यः युक्तयः योजनानि यासां अश्वस्त्रियां, **ताभिः** अश्वाभिः **याति** गच्छति ।। **अयुक्त** 'युजिर् योगे' लुङ् । **शुन्ध्युवः** 'शुन्ध विशुद्धौ' 'यजिमनी'त्यादिभ्यो युप्रत्ययः । शुन्ध्युवः नप्त्यः इति द्वितीयार्थे प्रथमाविभक्तिव्यत्ययः । **नप्त्यः–** रेफलोपश्छान्दसः । न पातयतीति नप्तृशब्दनिर्वचनं चिन्त्यमेव । रेफलोपो न भवति शाखान्तरपाठे (तै.ब्रा.२.४.५) ।। ९ ।।

## ऋक्संहिता पदपाठसहिता

**उद्वयं तमसस्परि ज्योतिष्पश्यन्त उत्तरम् । देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम् ।।१०।।**
उत् । वयम् । तमसः । परि । ज्योतिः । पश्यन्तः । उत्ऽतरम् । देवम् । देवऽत्रा । सूर्यम् । अगन्म । ज्योतिः । उत्ऽतमम् ।। १० ।।

**स्कन्द–** 'उत्' इत्युपसर्गं 'अगन्म' इत्याख्यातेन सम्बन्धयितव्यः । **वयं तमसः परि** तमोऽभिभूय व्यवस्थितमित्यर्थः । सौर्यम् । **ज्योतिः पश्यन्त उत्तरम्** उन्नततरमत्यन्तोत्कृष्टम् । 'पश्यन्तः' इति चायम् 'लक्षणहेत्वोः क्रियायाः (पा,३२,१२६) इत्येवं शतृप्रत्ययो हेतौ द्रष्टव्यः । सौर्यस्य ज्योतिषोऽत्यन्तोत्कृष्टस्य दर्शनेन हेतुनेत्यर्थः । **देवं देवत्रा** 'देवमनुष्यपुरुषपुरुमर्त्येभ्यो द्वितीयासप्तम्योर्बहुलम्' (पा.५,४,५६) इत्येवमयं निर्धारणसप्तम्यां द्रष्टव्यः । देवेषु देवानां मध्ये । **सूर्यम् उदगन्म** ऊर्ध्वं गताः प्राप्ताः । सूर्येण सहैकात्मकतां सूर्यलोकं वा प्राप्ताः स्म इत्यर्थः । प्राप्तिहेतोश्च दर्शनस्य भूतकालत्वात् प्राप्तेरेवायं 'हेतुभूतकालसंप्रेषितवाद्वा' (पावा.३,३,१३३) इत्येव । भूतकालप्रत्ययेनापदेशः । 'देवश्चेदद्य वर्षिष्यति सपन्नाः शालयः' इति यथा । कीदृशम् सूर्यम् । उच्यते । **ज्योतिः उत्तमम्** उत्तमं हि ज्योतिर्भगवान् सूर्यः । तथा हि- वाजसनेयिनाम् इयमेका ऋक् अवभृथब्राह्मणे पठ्यते– 'उद्वयं तमसस्परि इति पाप्मा वै तमः । पाप्मानमेव तमोऽपहते । स्वः पश्यन्त उत्तरम् इति  अयं वै लोकोऽद्भ्य उत्तरोऽस्मिन्नेव लोके प्रतितिष्ठति । देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम् इति स्वर्गो वै लोकः । सूर्यो ज्योतिरुत्तमं स्वर्ग एव लोकेऽन्ततः प्रतितिष्ठति अनपेक्षमेत्याहवनीयमुपतिष्ठत' (माश.१२,९,२,८) इति ।। १० ।।

**वेङ्कटमाधव– उत् अगन्म वयम्** तमः विहाय उपरि स्थितम् । **ज्योतिः पश्यन्तः** । किं तज्ज्योतिरित्याह– दीप्यमानं देवेषु **सूर्यम् ज्योतिः उत्तमम्** इति ।। १० ।।

**मुद्गल– वयम्** अनुष्ठातारः । **तमसः परि** तमसः उपरि रात्रेरूर्ध्वं वर्तमानम् । **ज्योतिः** तेजस्विनम् । **उत्तरम्** उद्गततरम् । **देवत्रा** देवेषु मध्ये **देवम्** दानादिगुणयुक्तम् **सूर्यम् पश्यन्तः** स्तुतिभिर्हविर्भिश्चोपासीनाः सन्तः **उत्तमम्** उत्कृष्टतमम् **ज्योतिः** सूर्यरूपम् **उत् अगन्म** प्राप्नवाम ।।

**सायण–** अवभृथेष्टौ होत्रकाः जलान्निष्क्रम्य 'उद्वयं तमसस्परि' इति मन्त्रं ब्रूयुः । तथा च 'पत्नीसंयाजैश्चरित्वा' इति खण्डे सूत्रितम्– 'उद्वयं तमसस्परीत्युदेत्य' (आश्व.श्रौ.६.१३) इति ।।

**वयम्** अनुष्ठातारः । **तमसः परि** तमसः उपरि रात्रेरूर्ध्वं वर्तमानम् । तमसः पापात् परि उपरि वर्तमानं वा पापरहितमित्यर्थः । तथा चाम्नायते– 'उद्वयं तमसस्परीत्याह पाप्मा वै तमः पाप्मानमेवास्मादप हन्ति' (तै.सं.५.१.८.६) इति । **ज्योतिः** तेजस्विनम् **उत्तरम्** उद्गततर-

मुत्कृष्टतरं वा । **देवत्रा** देवेषु मध्ये **देवम्** दानादिगुणयुक्तम् **सूर्यम् पश्यन्तः** स्तुतिभिर्हविर्भिश्चो-पासीनाः सन्तः **उत्तमम्** उत्कृष्टतमम् **ज्योतिः** सूर्यरूपम् **उत् अगन्म** प्राप्नवाम । तथा च श्रूयते– 'अगन्म ज्योतिरुत्तममित्याहासौ वा आदित्यो ज्योतिरुत्तममादित्यस्यैव सायुज्यं गच्छति' (तै.सं.५.१.८.६) इति । युक्तं चैतत्, 'तं यथा यथोपासते तदेव भवति' इति श्रुत्यन्तरात् ॥ **तमसस्परि** 'पञ्चम्याः परावध्यर्थे' इति विसर्जनीयस्य सत्वम् । **ज्योतिष्पश्यन्तः** । 'इसुसोः सामर्थ्ये' (पा.सू.८.३.४४) इति विसर्जनीयस्य षत्वम् । व्यपेक्षालक्षणं सामर्थ्यं तत्राङ्गीक्रियते । **देवत्रा** । 'देवमनुष्यपुरुषपुरुमर्त्येभ्यो द्वितीयासप्तम्योर्बहुलम्' (पा.सू.५.४.५६) इति सप्तम्यर्थे त्राप्रत्ययः । प्रत्ययस्वरः । **अगन्म** । 'छन्दसि लुङ्लङ्लिटः' इति प्रार्थनायां लङि 'बहुलं छन्दसि' इति शपो लुक् । 'म्वोश्च' (पा.सू.८.२.६५) इति धातोः मकारस्य नकारः । अडागम उदात्तः । पादादित्वात् निघाताभावः । **उत्तमम्** । तमपः पित्त्वादनुदात्तत्वे प्राप्ते 'उत्तमशश्वत्तमौ सर्वत्र' इति उञ्छादिषु पाठादन्तोदात्तत्वम् ॥ १० ॥

**सिद्धाञ्जनम्– वयम्** उपासकाः अन्तर्याजिनः । **तमसस्परि** तमसः उपरि अचिन्मयान्ध कारादुपरि । उत् उद्गतं, ततः **उत्तरम्** उद्गततरं **ज्योतिः** तेजःपुञ्जं **पश्यन्तः** सन्तः । ततः **उत्तमम्** उद्गततमं अत एव सर्वोत्कृष्टं **ज्योतिः** ज्योतिःस्वरूपं **सूर्यम्** सर्वप्रेरकं परमात्मानं **देवत्रा** देवेषु मध्ये **देवम्** द्योतमानं **अगन्म** प्राप्ताः स्मः । अत्र प्रतिपादितः सूर्यो न लौकिक इति नव्या अपि प्रतियन्ति । सायणव्याख्याबलेनापि एवमेवेति निरूपयितुं भूमिकायामियमृगस्माभि रुदाहृता (पृ.६८) ॥ **अगन्म**–गमेः लङः, छन्दसि शपो लुक्, धातोर्मकारस्य नकारः ॥

## ऋक्संहिता पदपाठसहिता

**उद्यन्नद्य मित्रमह आरोहन्नुत्तरां दिवम् । हृद्रोगं मम सूर्य हरिमाणं च नाशय ॥११॥**
उत्ऽयन् । अद्य । मित्रऽमह । आऽरोहन् । उत्ऽतराम् । दिवम् । हृत्ऽरोगम् । मम । सूर्य । हरिमाणम् । च । नाशय ॥ ११ ॥

**स्कन्द–** 'उद्यन्नद्येत्युपनिषत्' । 'उद्यन्नद्य' इत्ययं तृच उपनिषत् । उपनिषदिति विद्योच्यते । रोगघ्नी चेयं विद्याऽभिप्रेता । तथा ह्यैतिहासिकास्तावदाचक्षते– 'हृद्रोगदुर्वर्णतामापन्नः प्रस्कण्व-स्तृचमपश्यत्' इति । बृहद्देवताकारोऽप्याह– 'रोगघ्नस्तृच उत्तमः' (बृदे.३,११३) इति **उद्यन्**

उद्गच्छन् **अद्य** । हे मित्रमहः! 'मह पूजायाम्' मित्राणां पूजयितः! पूज्य! वा । **आरोहन्** च **उत्तराम्** उदात्ततराम् ऊर्ध्वाम् **दिवम्** । **हृद्रोगम्** हृदयरोगम् **मम** हे **सूर्य! हरिमाणम्** च हरितवर्णं च **नाशय** ।। ११ ।।

**वेङ्कटमाधव– उद्यन् अद्य** । मित्राणां पूजयितः! **आरोहन्** उद्गततरां च द्याम् **मम** हृदयस्य रोगम् त्वचि **हरिमाणम् च नाशय** । दुर्वर्णत्वं प्राप्तः त्वचि प्रस्कण्वः तृचमपश्यदिति ।। ११ ।।

**मुद्गल–** हे **सूर्य** सर्वस्य प्रेरक! **मित्रमहः** सर्वेषाम् अनुकूलदीप्तियुक्त! **अद्य** अस्मिन् काले । **उद्यन्** उदयं गच्छन् । **उत्तराम्** उद्गततराम् । **दिवम्** अन्तरिक्षम् । **आरोहन्** आभिमुख्येन प्राप्नुवन् । एवंविधस्त्वम् **मम हृद्रोगम्** हृदयगतम् आन्तरं रोगम् **हरिमाणम्** च शरीरगत-कान्तिहरणशीलं बाह्यरोगं तदुभयमपि **नाशय** । मां स्तोतारमुभयविधाद् रोगात् मोचयेत्यर्थः ।।

**सायण–** 'उद्यन्' इत्ययं तृचो रोगशान्त्यर्थः । तथा च अनुक्रमण्यामुक्तम्– 'अन्त्यस्तृचो रोगघ्न उपनिषत्' इति । युक्तं चैतत् । यस्मादनेन तृचेन त्वग्दोषशान्तये प्रस्कण्वः सूर्यमस्तौत् । तेन तृचेन स्तुतः सूर्यस्तमृषिं रोगान्निरगमयत् । तस्मादिदानीमपि रोगशान्तयेऽनेन तृचेन सूर्य उपासनीयः । तदुक्तं शौनकेन–'उद्यन्नद्येति मन्त्रोऽयं सौरः पापप्रणाशनः । रोगघ्नश्च विषघ्नश्च भुक्तिमुक्तिफलप्रदः' इति ।।

हे **सूर्य** सर्वस्य प्रेरक! **मित्रमहः** सर्वेषाम् अनुकूलदीप्तियुक्त! **अद्य** अस्मिन् काले । **उद्यन्** उदयं गच्छन् । **उत्तराम्** उद्गततराम् । **दिवम्** अन्तरिक्षम् । **आरोहन्** आभिमुख्येन प्राप्नुवन् । यद्वा **दिवम्** अन्तरिक्षम् । **उत्तराम् आरोहन्** उत्कर्षेण प्राप्नुवन् । एवंविधस्त्वम् **मम हृद्रोगम्** हृदयगतम् आन्तरं रोगम् **हरिमाणम् च** शरीरगतकान्तिहरणशीलं बाह्यरोगं । यद्वा शरीरगतं हरिद्वर्णं रोगप्राप्तं वैवर्ण्यमित्यर्थः । तदुभयमपि **नाशय** । मां स्तोतारमुभयविधाद्रोगान्मोचयेत्यर्थः ।।

**मित्रमहः** । मित्रम् अनुकूलं महस्तेजो यस्यासौ । आमन्त्रितनिघातः । **उत्तराम्** । उत् इत्यनेन उपसर्गेण स्वसंसृष्टधात्वर्थो लक्ष्यते । तस्मादातिशायनिकः तरप्प्रत्ययः । प्रथमपक्षेऽन्तरिक्ष-विशेषणत्वेन द्रव्यप्रकर्षप्रतीतेः आम् न भवति । द्वितीये त्वारोहणक्रियायाः प्रकर्षो गम्यते इति 'किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे' (पा.सू.५.४.११) इति आमुः । प्रथमपक्षे टाप्सरपोः पित्त्वा-दनुदात्तत्वे उपसर्गस्वर एव शिष्यते । द्वितीये तु आम्प्रत्ययस्य सतिशिष्टत्वात् तस्यैव स्वरे

प्राप्ते व्यत्ययेनाद्युदात्तत्वम् । वृषादिर्वा द्रष्टव्यः । स ह्याकृतिगणः । **हृद्रोगम्** । 'वा शोकप्यञ्-रोगेषु' (पा.सू.६.३.५१) इति हृदयशब्दस्य हृदादेशः । **मम** 'युष्मदस्मदोर्ङसि' इत्याद्युदात्तत्वम् । **हरिमाणम्** । 'हृञ् हरणे' 'जनिहृभ्यामिमनिन्' (उ.सू.४.५८८) इति औणादिक इमनिन्प्रत्ययः । व्यत्ययेनान्तोदात्तत्वम् । यद्वा हरिच्छब्दस्य वर्णवाचित्वात् 'वर्णदृढादिभ्यः ष्यञ् च' (पा.सू.५.१.१२३) इति चकारात् इमनिन्प्रत्ययः । 'इष्ठेमेयस्सु' इत्यनुवृत्तौ 'टेः' इति टिलोपः ॥

**सिद्धाञ्जनम्**– हे **सूर्य** प्रेरक! **मित्रमहः!** मित्रं सुहृत् अनुकूलं महस्तेजो यस्यासौ त्वं, **अद्य** इदानीं **उद्यन्** उदितो भवन्, **उत्तराम्** उत्कृष्टतरां **दिवम्** बृहद्दिवमित्यर्थः **आरोहन्** आरूढः सन् **मम हृद्रोगं** मदीयं हृदयगतं अस्वस्थतारूपं अशान्त्यात्मकं रोगं **हरिमाणम्** हरिद्वर्णतां रक्तदोषाभिव्यञ्जिकां रुजं, तदुपलक्षितं सर्वं शारीरं रोगं च **नाशय** ध्वंसय । बहिरन्तश्च स्वस्थता बृहद्दिवं गच्छतः सूर्यस्य प्रसादाल्लभ्या । बाह्यशरीरस्यापि काचन सिद्धिरावश्यकीति मन्त्रद्रष्टृणां मतम् । भौतिकं पिण्डं हि प्रतिष्ठा भवत्यत्र देवकामस्य मनुष्यस्य । अत एव 'स्थिरैरङ्गैः ....... व्यशेम देवहितं यदायुः,' 'शतं जीवेम शरदः सवीराः' इत्येवञ्जातीयकैः मन्त्रवर्णैर्देवान् ऋषय उपतिष्ठन्ते ॥ **हरिमाणम्**– हरित् वर्णवाची, तस्य भावे इमनिन्प्रत्ययः टेर्लोपश्च ॥ ११ ॥

## ऋक्संहिता पदपाठसहिता

**शुकेषु मे हरिमाणं रोपणाकासु दध्मसि । अथो हारिद्रवेषु मे हरिमाणं नि दध्मसि ॥१२**
शुकेषु । मे । हरिमाणम् । रोपणाकासु । दध्मसि । अथो इति । हारिद्रवेषु । मे । हरिमाणम् । नि । दध्मसि ॥ १२ ॥

**स्कन्द– शुकेषु मे** मम स्वभूतम् । **हरिमाणं रोपणाकासु** रोपणाकाः नाम हरितचटकाः तासु च **दध्मसि** आशिषि लिङर्थेऽयं लट् द्रष्टव्यः । निधेयास्म इत्याशास्महे । **अथो हारिद्रवेषु** हारिद्रवा नाम अत्यन्तशीघ्रगामिनः पक्षिणः । अथोशब्दश्चार्थे । हारिद्रवेषु च **मे** मम **हरिमाणम् नि दध्मसि** ॥ १२ ॥

**वेङ्कटमाधव**– हरितवर्णेषु **शुकेषु रोपणाकासु** च मदीयमपि **हरिमाणम्** वयं निदध्मः । अपि च **हारिद्रवेषु** पक्षिषु । सर्वेऽमी मदर्थमपि हरिताः भवन्त्वित्यर्थः । 'सिंहे मे मन्युर्व्याघ्रे मेऽन्तरामयः' (बौश्रौ,२,५,१) इति यजुः ॥ १२ ॥

**मुद्गल– मे** मदीयम् । **हरिमाणं** शरीरगतं हरिद्वर्णस्य भावम् । **शुकेषु** तादृशं वर्णं कामयमानेषु पक्षिषु, तथा **रोपणाकासु** शारिकासु पक्षिविशेषेषु **दध्मसि** स्थापयामः । **अथो** अपि च **हारिद्रवेषु** तादृग्वर्णवत्सु **मे** मदीयम् **हरिमाणम् नि दध्मसि** निदधीमहि । स च हरिमा सुखेन तत्रैवास्ताम् । अस्मान् मा बाधिष्टेत्यर्थः ।। १२ ।।

**सायण– मे** मदीयम् । **हरिमाणं** शरीरगतं हरिद्वर्णस्य भावम् । **शुकेषु** तादृशं वर्णं कामयमानेषु पक्षिषु, तथा **रोपणाकासु** शारिकासु पक्षिविशेषेषु **दध्मसि** स्थापयामः । **अथो** अपि च **हारिद्रवेषु** हरितालद्रुमेषु तादृग्वर्णवत्सु **मे** मदीयम् **हरिमाणम् नि दध्मसि** निदधीमहि । स च हरिमा सुखेन तत्रैवास्ताम् । अस्मान् मा बाधिष्टेत्यर्थः ।। **दध्मसि** । 'इदन्तो मसि' इति मस इकारागमः ।। १२ ।।

**सिद्धाञ्जनम्– मे** मदीयं **हरिमाणम्** हरिद्वर्णस्य भावं **शुकेषु** तादृशवर्णयोग्येषु **दध्मसि** दध्मः निवेशयामः । तथा **रोपणाकासु** शारिकासु पक्षिविशेषेषु हरिमाणं दध्मः । **अथो** अपि च **हारिद्रवेषु** तादृग्वर्णयुक्तेषु वृक्षविशेषेषु **मे** मदीयं **हरिमाणम् निदध्मसि** निक्षिपामः । हरिमा मनुष्ये वैवर्ण्याय कल्पते । स एव शोभनो भवति तद्योग्येषु जङ्गमेषु पक्षिषु, स्थावरेषु वृक्षेषु । अनेन शरीरस्वस्थता प्रार्थ्यते ।। **दध्मसि**– मस इकारागमः ।। १२ ।।

## ऋक्संहिता पदपाठसहिता

**उद॑गाद॒यमा॑दि॒त्यो विश्वे॑न॒ सह॑सा स॒ह । द्वि॒षन्तं॒ मह्यं॑ र॒न्धय॒न्मो अ॒हं द्वि॑ष॒ते र॑धम् ।।**
**उत् । अ॒गा॒त् । अ॒यम् । आ॒दि॒त्यः । विश्वे॑न । सह॑सा । स॒ह । द्वि॒षन्त॑म् । मह्य॑म् । र॒न्धय॑न् । मो इति॑ । अ॒हम् । द्वि॒ष॒ते । र॒ध॒म् ।। १३ ।।**

**स्कन्द– उत् अगात्** उद्गतः । **अयम् आदित्यः** अदितेः पुत्रः । **विश्वेन** सर्वेण **सहसा** रश्मिसमूहलक्षणेन' बलेन सह । अथवा ये यक्षगन्धर्वादयः आदित्यमण्डले निवसन्ति तत्समूहलक्षणमत्र सहोऽभिप्रेतम् । यक्षादिभिः परिवृत इत्यर्थः । **द्विषन्तम्** शत्रुम् **मह्यम् रन्धयन्** 'रध्यतिर्वशगमने' (या.६,३२) । मम वशं नयन्नित्यर्थः । **मो** अहम् **द्विषते रधम्** अस्य भगवतः प्रसादान्माऽहं शत्रोः वशं गमम् ।। १३ ।।

**वेङ्कटमाधव–** उदितः **अयम् आदित्यः** सर्वेण बलेन सह **द्विषन्तं मह्यम्** वशीकुर्वन् । मैव **अहम् द्विषते** वशो भवामीति ।। १३ ।।

**मुद्गल– अयम्** पुरोवर्ती **आदित्यः** अदितेः पुत्रः सूर्यः । **विश्वेन सहसा** सर्वेण बलेन सह **उत् अगात्** उदयं प्राप्तवान् । किं कुर्वन् । **मह्यम् द्विषन्तम् रन्धयन्** ममोपद्रवकारिणं रोगं हिंसन् । अपि च **अहम् द्विषते** अनिष्टकारिणे रोगाय **मो रधम्** नैव हिंसां करोमि । सूर्य एव रोगं नाशयत्वित्यर्थः ।। १३ ।।

**सायण– अयम्** पुरोवर्ती **आदित्यः** अदितेः पुत्रः सूर्यः । **विश्वेन सहसा** सर्वेण बलेन सह **उदगात्** उदयं प्राप्तवान् । किं कुर्वन् । **मह्यम् द्विषन्तम् रन्धयन्** ममोपद्रवकारिणं हिंसन् । अपि च **अहम् द्विषते** अनिष्टकारिणे रोगाय **मो रधम्** नैव हिंसां करोमि । सूर्य एव रोगं नाशयत्वित्यर्थः ।। **अगात्** एतेर्लुङि 'इणो गा लुङि' इति गादेशः । 'गातिस्था' इति सिचो लुक् । **आदित्यः** 'दित्यदित्यादित्य' इति अपत्यार्थे प्राग्दीव्यतीयो ण्यप्रत्ययः । **रन्धयन्** 'रध हिंसासंराद्धयोः' । ण्यन्तात् लटः शतृ । 'रधिजभोरचि' (पा.सू.७.१.६१) इति णौ धातोः नुमागमः । **मो** । मा उ निपातद्वयसमुदायो मैवेत्यस्यार्थे । 'ओत्' (पा.सू.१.१.१५) इति प्रगृह्यत्वे 'प्लुतप्रगृह्या अचि' इति प्रकृतिभावः । **द्विषते** 'शतुरनुमः' इति विभक्तेरुदात्तत्वम् । **रधम्**- रधेर्लुङि पुषादित्वात् च्लेः अङादेशः । 'रधिजभोरचि' इति धातोः नुम् । 'अनिदिताम्' इति अनुषङ्गलोपः । 'न माङ्योगे' इति अडभावः ।। १३ ।।

**सिद्धाञ्जनम्– अयम्** साक्षाद् दृश्यमानः **आदित्यः** सूर्यः । **विश्वेन** सकलेन **सहसा** बलेन सह **उदगात्** उदयं गतः । किं कुर्वन्? **मह्यम्** मदर्थं **द्विषन्तम्** ममोपद्रवकारिणं शत्रुं रोगं वा **रन्धयन्** हिंसन् **अहम्** भक्तोऽहं भगवति न्यस्तसर्वभारः **द्विषते** मदनिष्टकारिणे अमानुषाय मानुषाय रोगरूपाय वा **मा उ रधम्** मैव कार्षं हिंसाम् । भगवानेव मह्यं कर्तव्यं करोतु द्विषद्विषये ।। **रन्धयत्**–'रध हिंसासंराद्धयोः' ण्यन्ताल्लटः शतृ, रधेर्नुमागमः । **मो**–मा उ इति निपातद्वयसमुदायो मैवेत्यर्थे ।। १३ ।।

**।। इति प्रथमाष्टके चतुर्थाध्याये अष्टमो वर्गः ।।**

**।। इति प्रथमे मण्डले नवमोऽनुवाकः ।।**

## ।। अथ नवमो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

### (सूक्तम् ५१)

१५ सव्य आङ्गिरसः । इन्द्रः । जगती, १४-१५ त्रिष्टुप् ।

**अभि त्यं मेषं पुरुहूतमृग्मियमिन्द्रं गीर्भिर्मदता वस्वो अर्णवम् ।**
**यस्य द्यावो न विचरन्ति मानुषा भुजे मंहिष्ठमभि विप्रमर्चत ।। १ ।।**

**अभि । त्यम् । मेषम् । पुरुऽहूतम् । ऋग्मियम् । इन्द्रम् । गीःऽभिः । मदत । वस्वः । अर्णवम् । यस्य । द्यावः । न । विऽचरन्ति । मानुषा । भुजे । मंहिष्ठम् । अभि । विप्रम् । अर्चत ।। १ ।।**

**स्कन्द–** 'इच्छन्निन्द्रसमं पुत्रमभ्यध्यादङ्गिरा ऋषिः । सव्योऽभीतीन्द्र एवास्य पुत्रोऽस्मादभ्यजायत' (तु.बृदे.३,१३५) । इन्द्रतुल्यं पुत्रं कामयमानोऽभिध्यानमकरोदङ्गिरा ऋषिः । तस्य सव्यो नाम 'अभि त्वं मेषम्' इत्येवमादेर्द्रष्टा इन्द्र एव योगबलेन तस्मादभिध्यानात् पुत्रोऽजायत पुत्रतामापन्न इत्यर्थः । तस्येन्द्रस्य सव्यतामापन्नस्यैतदार्षम् । 'ऐन्द्रः सव्यः शतर्चिषु' 'प्रथमे मण्डले ज्ञेया ऋषयस्तु शतर्चिनः' (बृदे.३,११४,११६) इति । प्रथमे मण्डले ऋषयः शतर्चिन उच्यन्ते । निर्धारणे चैषा सप्तमी द्रष्टव्या । शतर्चिनां मध्ये सव्यसंस्तव ऐन्द्रः प्रत्येतव्यः । 'अभि' इत्युपसर्गो 'मदत' इत्याख्यातेन सम्बन्धयितव्यः । **त्यम् मेषम्** इत्यत्रेतिहासमाचक्षते– मेध्यातिथिः किलेन्द्रमुवाच मेषरूपो भूत्वा मामुपागच्छेति । स तं मेषो भूत्वा उपजगाम । तद्वक्ष्यति– 'इत्था धीवन्तमद्रिवः काण्वं मेध्यातिथिम् । मेषो भूतोऽभि यन्नयः' (ऋ.८,२,४०) इति । तदिदमत्रोच्यते 'मेष' इतीन्द्रस्याभिधानम् । तं मेषं मेषरूपम् । **पुरुहूतम्** बहुभिर्यजमानैराहूतम् । **ऋग्मियम्** ऋच स्तुतौ । अर्चनम् ऋक् स्तुतिः, तद्वन्तं ऋग्मियम्, अर्चनीयं वा । **इन्द्रं गीर्भिः** स्तुतिलक्षणाभिर्वाग्भिः **अभि मदत** 'मनति ......मदति रसति' (निघ.३,१४) इत्यर्चतिकर्मसु पाठादर्चतिकर्माऽयम् । पुत्रादीनां वाऽयं प्रैषः, सहायानां वा ऋत्विजाम् । मया सहाभिष्टुत हे मत्पुत्रादयः! ऋत्विजः! वा । कीदृशम् । **वस्वः** धनस्य **अर्णवम्** समुद्रस्थानीयम् । समुद्रवत् धनानामाश्रयमित्यर्थः । तस्य इन्द्रस्य किं मुच्यते । **यस्य द्यावः** द्युलोकाः न विचरन्ति न विगच्छन्ति । नातिक्रामन्तीत्यर्थः । किम् । **मानुषा** मननानि ज्ञानानि अभिप्रायलक्षणानि ।

यस्य सर्वो द्युलोको वशवर्त्ती इत्यर्थः । अथवा द्यावो न इति नशब्द उपरिष्टादुपचारः उपमार्थीयः । मानुषशब्दोऽपि मनुष्यजातिवचनः । यस्य स्वभूतानि यष्टॄणि मानुषाणि **द्यावो न** द्युलोका इव । यथा द्युलोका दीप्तिमन्त एवं दीप्तयुक्तानि विचरन्ति । समस्तायां पृथिव्यां परिभ्रमन्तीत्यर्थः । किमर्थमभिष्टवाम । उच्यते । **भुजे** पालनायात्मनः । **मंहिष्ठम्** संहतिर्दानकर्मा (तु.निघ.३,२०) दातृतमम् । **विप्रम्** मेधाविनम् । **अभि अर्चत** अभिष्टुत ।। १ ।।

**वेङ्कटमाधव–** सव्य आङ्गिरसः । **अभि मदत** तं मेधातिथेः । **मेषं पुरुहूतं** ऋगर्हम् **इन्द्रम्** स्तुतिभिः धनस्य आकरम् । **यस्य** रश्मयः इव इतस्ततश्चरन्ति मनुष्यहितानि कर्माणि भोगाय, तम् अभिष्टुत मेधाविनम् । अत्र शाठ्यायनकम् 'अथ मैधातिथम् । मेधातिथिगृहपतयो वै विभिन्दुकीयाः मन्त्रमासत । तेषां दृढच्युत् आगस्तिरुद्गातासीद्, गौरीवितिः प्रस्तोता, अच्युतच्युत् प्रतिहर्ता, वसुक्षयो होता, सनकनवकौ काव्यादध्वर्यू । पशुकामो मेधातिथिः, जनिकामौ सनक नवकौ । यत्कामा इतरे तत्कामाः । नानाकामा ह स्म वै पुरा सत्त्रमासते । ते ह स्म नानैव कामान् ऋद्ध्वास्वोत्तिष्ठन्ति । तेषां ह स्मेन्द्रो मेधातिथिर्मेषस्य रूपं कृत्वा सोमं व्रतयति । तं ह स्म बाधन्ते । मेधातिथेर्नो मेषः सोमं व्रतयतीति । स उ ह स्मैषां स्वमेव रूपं कृत्वा सोमं व्रतयति । ततो ह वा इदमर्वाचीनं मेधातिथेर्मेष इत्याह्वयन्ति' (तु.जैमि.३,२३४) इति ।।

**मुद्गल–** दशमेऽनुवाके सप्त सूक्तानि । तत्र 'अभि त्यम्' इति पञ्चदशर्चं प्रथमं सूक्तम् । सव्य आङ्गिरस ऋषिः । चतुर्दशी पञ्चदशी च त्रिष्टुभौ । शिष्टा जगत्यः । इन्द्रो देवता । अङ्गिरा इन्द्रतुल्यं पुत्रमिच्छन् अभ्यध्यायत्, सव्य इतीन्द्र एवास्य पुत्रोऽजायतेतीतिहासः ।।

**त्यम्** तं प्रसिद्धम् **मेषम्** शत्रुभिः स्पर्धमानम् । यद्वा कण्वपुत्रं मेधातिथिं यजमानम् इन्द्रो मेषरूपेणागत्य तदीयं सोमं पपौ । स ऋषिः तं मेष इत्यवोचत् । अत इदानीमपि मेष इति इन्द्रोऽभिधीयते । **पुरुहूतम्** बहुभिर्यजमानैराहूतम् । **ऋग्मियम्** ऋग्भिः विक्रियमाणम् स्तूयमानमित्यर्थः । स्तुत्वा हि देवता विक्रियन्ते । तम् **वस्वः अर्णवम्** धनानामावासभूमिम् एवंगुणविशिष्टम् **इन्द्रम्** हे स्तोतारः **गीर्भिः** स्तुतिभिः **अभि मदत** आभिमुख्येन हर्षं प्रापयत । **यस्य** इन्द्रस्य कर्माणि **मानुषा** मनुष्याणां हितानि **विचरन्ति** विशेषेण वर्तन्ते । दृष्टान्तः- **द्यावा न** यथा सूर्यरश्मयः सर्वेषां हितकराः । **भुजे** भोगाय **मंहिष्ठम्** अतिशयेन प्रवृद्धम् **विप्रम्** मेधाविनं तथाविधमिन्द्रम् **अभि अर्चत** अभिपूजयत ।। १ ।।

**सायण–** दशमेऽनुवाके सप्त सूक्तानि । तत्र 'अभि त्यम्' इति पञ्चदशर्चं प्रथमं सूक्तम् । अत्रेतिहासमाचक्षते– अङ्गिरा इन्द्रसदृशं पुत्रमात्मनः कामयमानो देवता उपासाञ्चक्रे । तस्य सव्याख्येन पुत्ररूपेणेन्द्र एव स्वयं जज्ञे । जगति मत्तुल्यः कश्चिन्मा भूदिति । स सव्य आङ्गिरसोऽस्य सूक्तस्य ऋषिः । चतुर्दशीपञ्चदश्यौ त्रिष्टुभौ । 'त्रिष्टुबन्तस्य सूक्तस्य शिष्टा जगत्यः' इति परिभाषयाऽवशिष्टास्त्रयोदशर्चो जगत्यः । इन्द्रो देवता । तदेतत्सर्वम् अनुक्रमण्या-मुक्तम्– 'अभि त्यं पञ्चोना सव्यो द्वित्रिष्टुबन्तमङ्गिरा इन्द्रतुल्यं पुत्रमिच्छन्नभ्यध्यायत्सव्य इतीन्द्र एवास्य पुत्रोऽजायत' इति । अतिरात्रे प्रथमे रात्रिपर्याये होतुः शस्त्रे इदं सूक्तं शंसनीयम् । 'अतिरात्रे पर्यायाणाम्' इति खण्डे सूत्रितम्– 'अभि त्यं मेषमध्वर्यवो भरतेन्द्राय सोममिति याज्या' (आश्व.श्रौ.६.४) इति । गवामयनस्य मध्यभूते विषुवत्संज्ञकेऽहन्यपि निष्केवल्ये इदं सूक्तं शंसनीयम् । तथा च सूत्रितं– 'यस्तिग्मशृङ्गोऽभि त्यं मेषमिन्द्रस्य नु वीर्याणीत्येतस्मिन्नैन्द्रीं निविदं शस्त्वा' (आश्व.श्रौ.८.६) इति ॥

**त्यम्** तं प्रसिद्धम् **मेषम्** शत्रुभिः स्पर्धमानम् । यद्वा कण्वपुत्रं मेधातिथिं यजमानम् इन्द्रो मेषरूपेणागत्य तदीयं सोमं पपौ । स ऋषिः तं मेष इत्यवोचत् । अत इदानीमपि मेष इति इन्द्रोऽभिधीयते । 'मेधातिथेर्मेष' इति सुब्रह्मण्यमन्त्रैकदेशस्य व्याख्यानरूपं ब्राह्मणमेवमाम्नायते– 'मेधातिथिं हि कण्वायनिं मेषो भूत्वाजहार' इति । आगत्य सोममपहृतवानित्यर्थः । **पुरुहूतं** पुरुभिर्यजमानैराहूतं **ऋग्मियम्** ऋग्भिर्विक्रियमाणं स्तूयमानमित्यर्थः । स्तुत्या हि देवता विक्रियते । यद्वा ऋग्भिर्मीयते शब्द्यते इति ऋग्मीः । तम् । **वस्वो अर्णवं** धनानामावासभूमिं एवंगुणविशिष्टम् **इन्द्रं,** हे स्तोतारः! **गीर्भिः** स्तुतिभिः **अभि मदत** आभिमुख्येन हर्षं प्रापयत । **यस्य** इन्द्रस्य कर्माणि **मानुषा** मनुष्याणां हितानि **विचरन्ति** विशेषेण वर्तन्ते । तत्र दृष्टान्तः- **द्यावो न** यथा सूर्यरश्मयः सर्वेषां हितकराः । **भुजे** भोगाय **मंहिष्ठम्** अतिशयेन प्रवृद्धं **विप्रं** मेधाविनं तथाविधम् इन्द्रम् **अभि अर्चत** अभिपूजयत ॥

**मेषम्** 'मिष स्पर्धायाम्' इगुपधलक्षणे के प्राप्ते 'देवसेनमेषादयः पचादिषु द्रष्टव्याः' इति वचनात् अच्प्रत्ययः । **ऋग्मियम्** । 'तस्य विकारः' इत्यर्थे ' एकाचो नित्यं मयटमिच्छन्ति' (का.४.३.१४४) इति मयट्प्रत्ययः । अकारस्य इकारश्छान्दसः । प्रत्ययस्वरः । यद्वा 'माङ् माने शब्दे च' । ऋग्भिर्मीयते इति ऋग्मीः । क्विपि वलि, लोपात् पूर्वमेव परत्वात् 'घुमास्था'

इति ईत्वम् । 'अचिश्नुधातु' इत्यादिना इयङादेशः । कृदुत्तरपदप्रकृतिस्वरत्वम् । **मदत** 'मदी हर्षे' । हेतुमति णिच् । 'मदी हर्षग्लपनयोः' इति घटादिषु पाठात् हर्षार्थे वर्तमानस्य 'घटादयो मितः' इति मित्त्वे सति 'मितां ह्रस्वः' (पा.सू.६.४.९२) इति ह्रस्वत्वम् । लोण्मध्यमपुरुष बहुवचने शपि 'छन्दस्युभयथा' इति आर्धधातुकत्वात् 'णेरनिटि' इति णिलोपः । तशब्दस्य 'सार्वधातुकमपित्' इति ङित्त्वे 'ऋचि तुनुघमक्षुतङ्कुत्रोरुष्याणाम्' इति दीर्घः ।

**वस्वः** । ङस्य आगमानुशासनस्यानित्यत्वान्नुमभावः । 'जसादिषु च्छन्दसि वावचनम्' (पा.सू.७.३.१०९.१) इति वचनात् 'घेर्ङिति' (पा.सू.७.३.१११) इति गुणाभावे यणादेशः । **अर्णवम्** । अर्ण उदकमस्मिन्नस्तीति अर्णवः समुद्रः । 'अर्णसो लोपश्च'(का.६.२.१०९.२) इति मत्वर्थीयो वप्रत्ययः सलोपश्च । तेन शब्देन जलाश्रयवाचिना आश्रयमात्रं लक्ष्यते । प्रत्यय स्वरः । **विचरन्ति** । चरः गत्यर्थः । अदुपदेशात् लसार्वधातुकानुदात्तत्वे धातुस्वरः । 'तिङि चोदात्तवति' इति गतिरनुदात्ता । यद्वृत्तयोगादनिघातः । **मानुषा**- 'शेश्छन्दसि बहुलम्' इति शेर्लोपः । **भुजे** 'भुज पालनाभ्यवहारयोः' सम्पदादिलक्षणो भावे क्विप् । 'सावेकाचः' इति विभक्ते-रुदात्तत्वम् । **मंहिष्ठम्** 'महि वहि वृद्धौ' अतिशयेन मंहिता मंहिष्ठः 'तुश्छन्दसि' इति इष्ठन्प्रत्ययः । 'तुरिष्ठेमेयःसु' इति तृलोपः, नित्त्वादाद्युदात्तत्वम् । **अर्चत** 'अर्च पूजायाम्' भौवादिकः ।।

**सिद्धाञ्जनम्–** अथ दशमेऽनुवाके सप्त सूक्तानि । तत्र 'अभि त्यम्' इति पञ्चदशर्चं प्रथमं सूक्तम् । आङ्गिरसः सव्य ऋषिः, चतुर्दशीपञ्चदश्यौ त्रिष्टुभौ शिष्टास्त्रयोदशर्चो जगत्यः । इन्द्रो देवता । अत्रेदमाहुः । ऋषिरङ्गिरा इन्द्रसदृशं पुत्रमिच्छन् देवतोपास्तिं चक्रे । देवताप्रसादादिन्द्रः स्वयं सव्यनाम्ना पुत्ररूपेण जज्ञे इति । सव्येन्द्रयोरभेदभावोऽनेनाख्यानेन विवक्षितः । सर्वथा सव्यः इन्द्रप्रसादादिन्द्रसायुज्यं प्राप्तवान् महानृषिरिति बोध्यम् ।।

**त्यम्** तं प्रसिद्धं **मेषम्** नित्योन्मेषं अविच्छिन्नजागरणं **इन्द्रम्** । **गीर्भिः** स्तुतिभिः **अभि मदत** आभिमुख्येन मादयत हर्षयत । कीदृशम्? **पुरुहूतम्** बहुभिराहूतम् । **ऋग्मियम्** ऋग्भिः स्तुत्यम् । **वस्वः** अर्णवम् वसुनः सर्वसत्त्वात्मकस्य धनस्य समुद्रम् अपरिमितं निधिम् । **यस्य** इन्द्रस्य **मानुषा** मानुषाणि मनुष्यत्वानि मनुष्याणां हितानि वैभवानि **द्यावो न** सूर्यरश्मय इव **विचरन्ति** विशेषेण प्रसरन्ति, तं **भुजे** भोगाय **मंहिष्ठम्** अतिशयेन प्रवृद्धं **विप्रम्** मेधाविनं इन्द्रं **अभ्यर्चत** अभिपूजयत ।।

**मेषम्** 'मिष स्पर्धायाम्' इति धातोर्निष्पादयति सायणः । उन्मीलनार्थात् मिषतेर्निष्पन्न इति वयम् । मेषरूप इन्द्रो मेधातिथेः सोमं पपौ इति आख्यानमुदाहृत्य मेषं चतुष्पाद्रूपमिन्द्रमिति व्याचष्टे, इदं चाकिञ्चित्करं नः ।। **ऋग्मियम्**– गतम् (१.९.९) । **मदत**–मदी हर्षे, हेतुमति णिच् । **वस्वः**– ङसि नुमभावः, गुणाभावे यणादेशः । **अर्णवम्**–अर्णः उदकमस्मिन्नस्तीति अर्णवः, मत्वर्थीयः वप्रत्ययः । **मंहिष्ठम्**–महि वृद्धौ, तुश्छन्दसि इष्ठन्प्रत्ययः ।। १ ।।

## श्रीयादेवविरचिता नीतिमञ्जरी

याश्चा रूपहानिकरी भवतीत्याह– 'प्रभोरपि धिगर्थित्वं रूपहानिं करोति यत् । मेधातिथिं यदाऽयाचदिन्द्रो मेषोऽभवत्ततः' ।। प्रभोरपि अर्थित्वं धिक् । कुतः । यदर्थित्वं रूपहानिं करोति । इन्द्रदृष्टान्तेन द्रढयति । यथा इन्द्रस्यापि अर्थित्वं रूपहानिकरं भवतीति । इन्द्ररूपहानिकरत्वं दर्शयति । यदा इन्द्रो मेधातिथिं सोमम् अयाचत् ययाचे । ततोऽनन्तरं ऐश्वर्यरूपं त्यक्त्वा मेषो भूत्वा मेधातिथिसम्बन्धिसोमं पपौ । ततः इन्द्रो मेषोऽभवदिति । तदर्थेयमृक् । (ऋ.१.५१.१.) सव्यो जगत्या इन्द्रं तुष्टाव । प्रथमे होतुः पर्याये विनियुक्तम् । **अभि त्यं मेषमिति** । (ऋ.१.५१) जागतमिति सूत्रम् । ऋचोऽयमर्थः– **त्यं** तं प्रसिद्धमिन्द्रम् । त्यच्छब्दः छन्दसि तदर्थः । उद्वहन्ति तमितिवत् । हे ऋत्विजः! **गीर्भिः** स्तुतिभिः **मदत** हर्षं प्रापयत । 'मदी हर्षे' । कीदृशम् । **मेषं** मेधातिथेर्मेषम् । कण्वपुत्रं मेधातिथिं ऋषिं इन्द्रः आगत्य एवम् अवोचत्– मह्यम् देहीति सोमम् । त्वं मेषरूपं यदि करोषि तर्हि सोमं दद्याम् इति । ततो मेषरूपमास्थाय इन्द्रः तदीयं सोमं पपौ । स ऋषिस्तं मेषः इत्यवोचत् । अत इदानीमपि इन्द्रः 'मेषः' इत्यभिधीयते । मेधातिथिर्मेष इति सुब्रह्मण्यायाम् । मेधातिथिं हि काण्वायनिं मेषो भूत्वाऽऽजहारेति मेषत्वं बहुभिः प्रतिपादितम् । पुनः कीदृशम् । **पुरुहूतं** बहुभिर्यजमानैराहूतम् । पुनः कीदृशम् । **ऋग्मियम्** ऋग्भिर्मीयते शब्द्यते इति ऋग्मीः । 'अचिश्नुधातुभ्रुवा०' (पा.सू. ६.४.७७.) इतीयङ् । पुनः कीदृशम् । **वस्वो अर्णवम्** । वस्वो धनस्य अर्णवं वासभूतम् । **यस्य** इन्द्रस्य कर्माणि **मानुषा** मनुष्याणां हितानि **भुजे** भोगाय **विचरन्ति** विशेषेण प्रवर्तन्ते । तत्र दृष्टान्तः– **द्यावो न** । अयं न उपमार्थीयः । ' उपमार्थीय उपरिष्टादुपचारस्तस्य' इति यास्कः (नि.१.४.१०) अश्व न त्वेतिवत् । यथा **द्यावः** सूर्यस्य रश्मयः सर्वेषां हितकराः भवन्ति, तं **मंहिष्ठम्** अतिशयेन मंहिता मंहिष्ठः तम् ।'तुश्छन्दसि' (पा.सू.५.३.५९) इति इष्टन्

प्रत्ययः । **विप्रं** मेधाविनम् । विप्रः विग्रः (निघण्टु ३.१५) इति तन्नाम । **अर्चत** पूजयत हे ऋत्विजः! 'अर्च पूजायाम्' । **मदत**-दधिममदत (ऋ,प्रा. ८.१५) इति दीर्घः ।

## ऋक्संहिता पदपाठसहिता

**अभीमवन्वन्त्स्वभिष्टिमूतयोऽन्तरिक्षप्रां तविषीभिरावृतम् ।**
**इन्द्रं दक्षास ऋभवो मदच्युतं शतक्रतुं जवनी सूनृतारुहम् ।। २ ।।**
**अभि । ईम् । अवन्वन् । सुऽअभिष्टिम् । ऊतयः । अन्तरिक्षऽप्राम् । तविषीभिः । आऽवृतम् । इन्द्रम् । दक्षासः । ऋभवः । मदऽच्युतम् । शतऽक्रतुम् । जवनी । सूनृता । आ । अरुहत् ।। २ ।।**

**स्कन्द–** 'ईम्' शब्द एनमित्यस्यार्थे । एनम् **अभि अवन्वन्** वनतेः सम्भक्त्यर्थस्यैतद्रूपम् । सम्भक्तवत्यः । सेवितवत्य इत्यर्थः । **स्वभिष्टिम्** यजेरिषेर्वैतद्रूपम् । सुष्ठु अभियष्टव्यं सुष्ठु वाऽभ्येषणशीलं शत्रूणाम् । **ऊतयः** ऊतिशब्दोऽत्र पालनाद् गमनाद्वा मरुदादिसेनासु प्रवर्तते । मरुदादिसेनाः । **अन्तरिक्षप्राम्** 'प्रा पूरणे' । स्वबलेनान्तरिक्षस्य पूरयितारम् । **तविषीभिः** अन्यैरपि बलैः **आवृतम्** परिवृतम् । कम् । **इन्द्रम्** । न च केवला ऊतयः । किं तर्हि । **दक्षासः ऋभवः** दक्षतिरुत्साहार्थीयः (तु.या.१७) । उत्साहिनः ऋभवः । अथवा दक्षशब्दोऽत्रात्मपर्यायः । 'श्रेयांसं दक्षं मनसा जगृभ्यात्' (ऋ.१०,३१,२) इति यथा । सामर्थ्याच्चान्तर्णीतमत्वर्थः । आत्मवन्तः । आत्मवत्तया चात्र यत्नवत्ता लक्ष्यते । सर्वार्थेषु यत्नवन्त ऋभव इत्यर्थः । **मदच्युतम्** मदः सोमः मदकरत्वात्, तं प्रति च्यवते गच्छतीति मदच्युत्, तं मदच्युतम् । अथवा मदो गर्वः । च्यवतिरपि सामर्थ्यादन्तर्णीतण्यर्थः । शत्रूणां मदस्य गर्वस्य च्यावयितारम् । किञ्च **शतक्रतुम्** बहुकर्माणं बहुप्रज्ञं वा इन्द्रम् । **जवनी** वेगेन गन्त्री **सूनृता** स्तुतिलक्षणा वाक् स्तोतुम् **आ अरुहत्** आरोहति आरूढवती वा । अथवा सूनृता माध्यमिका वाक् । सा इन्द्रमारुहत्, मेघवधकाले व्याप्नोतीत्यर्थः ।। २ ।।

**वेङ्कटमाधव–** अभ्यसेवन्त एनं सुष्ठु शत्रूणाम् अन्वेष्टारं मरुतः अन्तरिक्षस्य पूरयितारं बलैः **आवृतम् इन्द्रम्** वृद्धाः **ऋभवश्च** । शत्रुमदस्य च्यावयितारं तमिमम् **शतक्रतुम्** वेगस्य कारयित्री स्तुतिः आरोहति ।। २ ।।

**मुद्गल– ऊतयः** अवितारो रक्षितारः । **दक्षासः** दक्षयितारः प्रवर्धयितारः **ऋभवः** मरुतः **इन्द्रम् अभि ईम् अवन्वन्** आभिमुख्येन खलु अभजन्त । वृत्रेण सह युध्यमानमिन्द्रं सर्वे देवाः पर्यत्यजन् । मरुतस्तु तथा न पर्यत्याक्षुः । कीदृशम् इन्द्रम् । **स्वभिष्टिम्** शोभनाभ्येषणवन्तं शोभनाभिगमनमित्यर्थः । **अन्तरिक्षप्राम्** अन्तरिक्षं द्युलोकं स्वतेजसा प्राति पूरयतीति अन्तरिक्षप्राः तम् । **तविषीभिः आवृतम्** बलैरावृतम् । अतिबलिनमित्यर्थः । अत एव **मदच्युतम्** शत्रूणां मदस्य गर्वस्य च्यावयितारम् । किञ्च **शतक्रतुम्** शतसङ्ख्यानां क्रतूनामाहर्तारं पूर्वोक्तं तम् इन्द्रम् **जवनी** वृत्रवधं प्रति प्रेरयित्री **सूनृता** तैः मरुद्भिः प्रयुक्ता 'प्रहर भगवो जहि वीरयस्व' (ऐ.ब्रा.३,२०) इति ब्राह्मणोक्तरूपा प्रियसत्यात्मिका वाक् **आरुहत्** आरूढवती । वृत्रवधं प्रति सा वाक् इन्द्रस्योत्साहकारिणी अभूदित्यर्थः ।। २ ।।

**सायण– ऊतयः** अवितारो रक्षितारः । **दक्षासः** दक्षयितारः प्रवर्धयितारः **ऋभवः** । उरु भान्ति इति नैरुक्तव्युत्पत्त्या ऋभवोऽत्र मरुत उच्यन्ते । एवम्भूता मरुतः **इन्द्रम् अभि ईम् अवन्वन्** आभिमुख्येन खलु अभजन्त । वृत्रेण सह युध्यमानमिन्द्रं सर्वे देवाः पर्यत्यजन् । मरुतस्तु तथा न पर्यत्याक्षुः । तथा चाम्नास्यते– 'विश्वे देवा अजहुर्ये सखायः । मरुद्भिरिन्द्र सख्यं ते अस्तु' (ऋ.सं.८.९६.७) इति । ब्राह्मणेऽप्याम्नातं– 'मरुतो हैनं नाजहुः' (ऐ.ब्रा.३.२०) इति । कीदृशमिन्द्रम् । **स्वभिष्टिं** शोभनाभ्येषणवन्तं शोभनाभिगमनमित्यर्थः । **अन्तरिक्षप्राम्** । अन्तरिक्षं द्युलोकं स्वतेजसा प्राति पूरयतीति अन्तरिक्षप्राः । द्वादशस्वादित्येषु इन्द्रस्य विद्यमानत्वात् । शाखान्तरेऽपि श्रूयते– 'तस्या इन्द्रश्च विवस्वाँश्चाजायेताम्' (तै.ब्रा.१.१.९.३) इति । 'इन्द्रश्च विवस्वांश्चेत्येते (तै.आ.१.१३.३) इति च । **तविषीभि-रावृतम्** । तविषीति बलनाम । 'तविषी शुष्मम्' (नि.२.९.१०) इति तन्नामसु पाठात् । बलैरावृतम् । अतिबलिनमित्यर्थः । अत एव **मदच्युतम्** शत्रूणां मदस्य गर्वस्य च्यावयितारम् । किञ्च **शतक्रतुम्** शतसङ्ख्यानां क्रतूनामाहर्तारं बहुविधकर्माणं वा । पूर्वोक्तं तम् इन्द्रम् **जवनी** वृत्रवधं प्रति प्रेरयित्री **सूनृता** तैः मरुद्भिः प्रयुक्ता 'प्रहर भगवो जहि वीरयस्व' (ऐ.ब्रा.३,२०) इति ब्राह्मणोक्तरूपा प्रियसत्यात्मिका वाक् **आरुहत्** आरूढवती । वृत्रवधं प्रति सा वाक् इन्द्रस्योत्साहकारिणी अभूदित्यर्थः ।

**अवन्वन्** 'वन षण सम्भक्तौ' लङि शपि प्राप्ते व्यत्ययेन उप्रत्ययः । **स्वभिष्टिम्** 'इष

गतौ' भावे क्तिन्प्रत्ययः । 'तितुत्र' इत्यादिना इट्प्रतिषेधः । एमन्नादित्वात्पररूपत्वम् (पा.सू. ६.१.९४.६) । शोभना अभिष्टयो यस्येति बहुव्रीहौ 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । **ऊतयः** । अवतेः 'कृत्यल्युटो बहुलम्' इति कर्तरि क्तिन्प्रत्ययः । यद्वा 'क्तिच्क्तौ च संज्ञायाम्' इति क्तिच् । 'ज्वरत्वर' इत्यादिना ऊठ् । 'चितः' इत्यन्तोदात्तत्वम् । **अन्तरिक्षप्राम्** 'प्रा पूरणे' अन्तरिक्षं प्राति पूरयतीति अन्तरिक्षप्राः । 'आतो मनिन्' इत्यत्र चशब्दात् विच् । **आवृतम्** 'वृञ् वरणे' आव्रियते इति आवृतः । कर्मणि निष्ठा । 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् । **दक्षासः** 'दक्ष वृद्धौ' दक्षन्ते एभिरिति दक्षाः । करणे घञ्, ञित्त्वादाद्युदात्तत्वम् । 'आज्जसेरसुक्' । **मदच्युतम्** 'च्युङ् गतौ' अन्तर्भावितण्यर्थात् 'क्विप् च' इति क्विप् । 'ह्रस्वस्य पिति कृति' इति तुक् । **शतक्रतुम्** । शतं क्रतवो यस्य । बहुव्रीहौ पूर्वपद प्रकृतिस्वरत्वम् । **जवनी** । जु इति सौत्रो धातुः । करणे ल्युट् । 'टिड्ढाणञ्' इत्यादिना ङीप् । लित्स्वरेण जकारात् परस्योदात्तत्वम् । **अरुहत्** । रुहेर्लुङि 'कृमृदृरुहिभ्यश्छन्दसि' इति च्लेः अङादेशः ।। २ ।।

**सिद्धाञ्जनम्– ऊतयः** प्रवर्धयितारः । **दक्षासः** विवेचनकुशलाः । **ऋभवः** एतन्नामकाः यजमानहिताय इन्द्रसाहाय्यकारिणो देवाः । **इन्द्रम् अभि ईम् अवन्वन्** अभिमुखं यथा तथा खलु अभजन्त । कीदृशमिन्द्रम्? **स्वभिष्टिम्** शोभना अभिष्टयः अभ्येषणाः यस्य तम् । **अन्तरिक्षप्राम्** अन्तरिक्षं सर्वमाकाशं प्राति पूरयतीति अन्तरिक्षप्राः तम् । **मदच्युतम्** मदं हर्षं च्यावयतीति मदच्युत् तं सोमपानजन्यहर्षातिरेकविसारिणमित्यर्थः । **तविषीभिः आवृतम्** बहुविधैर्बलैरावृतम् बलपरिपूर्णम् । **शतक्रतुम्** बहुकर्माणम् । तथाभूतं इन्द्रं **जवनी** प्रेरयित्री इन्द्रं शत्रुवधं प्रति इति शेषः । **सूनृता** शोभना सत्या वाक् **आरुहत्** आरूढवती । इन्द्रस्य प्रोत्साहनाय यजमानस्तुतिफलभूता ऋभूणां वा अप्रतिहतवीर्या दिव्या वाक् इन्द्रं आविवेशेत्यर्थः । अत्र ऋभवो मरुत इति व्याचष्टे सायणः । इदं च चिन्त्यम् । मरुतामप्रसक्तेः, ऋभूणां देवसाहाय्यकारित्वाच्च । ऋभवो विचारिताः (१.२० सू.) ।। **अवन्वन्** 'वन षण सम्भक्तौ' व्यत्ययेन उप्रत्ययः । **स्वभिष्टिम्** 'इषु गतौ' भावे क्तिन् । एमन्नादित्वात् पररूपत्वम् । **दक्षासः**– दक्षशब्दार्थो विचारितः (१.२.७,९) । **मदच्युतम्** 'च्युङ् गतौ' अन्तर्भावितण्यर्थात् क्विप् । **जवनी**–जु इति सौत्रो धातुः, करणे ल्युट् ।। २ ।।

## ऋक्संहिता पदपाठसहिता

**त्वं गोत्रमङ्गिरोभ्योऽवृणोरपोतात्रये शतदुरेषु गातुवित् । ससेन चिद्विमदायावहो वस्वाजावद्रिं वावसानस्य नर्तयन् ॥ ३ ॥**

त्वम् । गोत्रम् । अङ्गिरःऽभ्यः । अवृणोः । अप । उत । अत्रये । शतऽदुरेषु । गातुऽवित् । ससेन । चित् । विऽमदाय । अवहः । वसु । आजौ । अद्रिम् । ववसानस्य । नर्तयन् ॥

**स्कन्द– त्वम् गोत्रम्** मेघनामैतत् (तु.निष.१,१०) । त्वं गोत्रम् । **अङ्गिरोभ्यः** अङ्गिरसामर्थाय । **अवृणोः अप** अपावृणोः उद्घाटितवान् । **उत अत्रये** । अत्रेतिहासमाचक्षते– 'अत्रिम् असुरा शतमोहनद्वारेषु यन्त्रगृहेषु प्राक्षिपन् । तत्र मूढो निर्गन्तुमशक्नुवन्निन्द्रमस्तौत् । तमिन्द्रो निरगमयत्' इति । तदेतदुच्यते– उतात्रये । अत्रेरप्यर्थाय । **शतदुरेषु** शतं दुराणि मोहनद्वाराणि येषु तानि शतदुराणि तेषु । **गातुविद्** गातुर्निर्गमनमार्गः। विदिर्लाभार्थो ज्ञानार्थो वा । निर्गमनमार्गस्य लब्धा ज्ञाता वा । अथवा शतदुराः सोमयागाः अत्रोच्यन्ते । तेषु हि प्राग्वंशसदोहविर्धानसम्बन्धीनि बहूनि द्वाराणि । गातुविदित्यपि गातुशब्दो गमनवचनः । अत्र स्वभूतेषु शतदुरेषु बहुद्वारेषु सोमयागेषु गातुवित् गमनज्ञः अनुभूतगमनः । नित्यगमन इत्यर्थः । किञ्च **ससेन चित्** 'ससम्' (निघ.२,७) इत्यन्ननाम । सहयोगलक्षणा चैषा तृतीया । चिच्छब्दः पदपूरणः चार्थे वा । अन्नेन च सह । **विमदाय** ऋषये **अवहः** प्रापितवान् । दत्तवानित्यर्थः । **वसु** धनम् । **आजौ** तदीयैः शत्रुभिस्सह सङ्ग्रामे । **अद्रिम्** अद्रिविकारत्वात् अद्रिर्वज्रः अत्राभिप्रेतः । पाषाणमयं वज्रम् । **वावसानस्य** स्वबलेनाऽऽच्छादयतः आत्मन एव स्वभूतम् **नर्तयन्** हस्ततलस्थमुत्पातयन्नित्यर्थः ॥ ३ ॥

**वेङ्कटमाधव– त्वम्** बलं मेघरूपम् अङ्गिरसामर्थाय **अप अवृणोः** उद्घाटितवान् पशूनाहर्तुम् । अपि च असुरैः शतद्वारेषु यन्त्रगृहेषु प्रक्षिप्ताय **अत्रये** मार्गस्य लम्भयिता । तथा अन्नेन सह ऋषये धनं च **अवहः** । युद्धे वर्तमानस्य विमदस्यार्थाय वज्रं भ्रामयन् ॥ ३ ॥

**मुद्गल–** हे इन्द! **त्वम् गोत्रम्** अव्यक्तशब्दवन्तम् वृष्ट्युदकस्यावरकं मेघम् । **अङ्गिरोभ्य** अङ्गिरसामृषीणामर्थाय **अप अवृणोः** अपवरणं कृतवानसि । वृष्टेरावरकं मेघं वज्रेणोद्घाट्य वर्षणं कृतवानित्यर्थः । **उत** अपि च **अत्रये** महर्षये । कीदृशाय । **शतदुरेषु** शतद्वारेषु यन्त्रेषु असुरैः पीडार्थे प्रक्षिप्ताय **गातुवित्** मार्गस्य लम्भयिता तथा **विमदाय चित्** विमदनाम्ने महर्षयेऽपि **ससेन**

अन्नेन युक्तम् **वसु** धनम् **अवहः** प्रापितवान् । तथा **आजौ** सङ्ग्रामे जयार्थम् । **ववसानस्य** निवसतो वर्तमानस्यान्यस्यापि स्तोतुः **अद्रिम्** वज्रम् **नर्तयन्** रक्षणं कृतवानसीति शेषः । अतस्तव महिमा केन वर्णयितुं शक्यत इति भावः ।। ३ ।।

**सायण–** हे इन्द! **त्वम् गोत्रम्** अव्यक्तशब्दवन्तम् वृष्ट्युदकस्यावरकं मेघम् । **अङ्गिरोभ्य** अङ्गिरसामृषीणामर्थाय **अप अवृणोः** अपवरणं कृतवानसि । वृष्टेरावरकं मेघं वज्रेणोद्घाट्य वर्षणं कृतवानसीत्यर्थः । यद्वा । **गोत्रं** गोसमूहं पणिभिरपहृतं गुहासु निहितम् **अङ्गिरोभ्यः** ऋषिभ्यः **अप अवृणोः** गुहाद्वारोद्घाटनेन प्राकाशयः । **उत** अपि च **अत्रये** महर्षये । कीदृशाय । **शतदुरेषु** शतद्वारेषु यन्त्रेष्वसुरैः पीडार्थं प्रक्षिप्ताय **गातुवित्** मार्गस्य लम्भयिताभूः । तथा **विमदाय चित्** विमदनाम्ने महर्षयेऽपि **ससेन** अन्नेन युक्तं **वसु** धनम् **अवहः** प्रापितवान् । तथा **आजौ** सङ्ग्रामे जयार्थं **ववसानस्य** निवसतो वर्तमानस्यान्यस्यापि स्तोतुः **अद्रिं** वज्रं **नर्तयन्** रक्षणं कृतवानसीति शेषः । अतस्तव महिमा केन वर्णयितुं शक्यते इति भावः ।।

गोत्रम् । 'गुङ् अव्यक्ते शब्दे' । औणादिकः त्रप्रत्ययः । यद्वा । 'खलगोरथात्' इत्यनुवृत्तौ 'इनित्रकट्यचश्च' (पा.सू.४.२.५१) इति समूहार्थे त्रप्रत्ययः । **शतदुरेषु** । शतं दुरा द्वाराण्येषाम् । द्रु इत्येके द्रूर्यन्ते संव्रियन्ते इति दुराः । 'घञर्थे कविधानम्' इति कप्रत्ययः । छान्दसं सम्प्रसारणं परपूर्वत्वम् । तच्च यो ह्युभयोः स्थाने भवति स लभतेऽन्यतरेणापि व्यपदेशम् इति 'उरण् रपरः' (पा.सू.१.१.५१) इति रपरं भवति । यद्वा । द्वारशब्दस्यैव छान्दसं सम्प्रसारणं द्रष्टव्यम् । **गातुवित्** 'गाङ् गतौ' अस्मात् 'कमिमनिजनिभागापायाहिभ्यश्च' (उ.सू.१.७२) इति तुप्रत्ययः । तं वेदयति लम्भयतीति गातुवित् । 'विद्लृ लाभे' । अन्तर्भावितण्यर्थात् क्विप् । कृदुत्तरपदप्रकृतिस्वरत्वम् । **ससेन** । ससम् इति अन्ननाम । 'ससं नमः आयुः' (नि.२.७.२१) इति तन्नामसु पाठात् । आजिः इति सङ्ग्रामनाम । 'आहवे आजौ' (नि.२.१७.८) इति तत्र पाठात् । **अद्रिम्** । अत्ति भक्षयति वैरिणम् इति अद्रिर्वज्रः । 'अदिशदिभूशुभिभ्यः क्रिन्' इति क्रिन्प्रत्ययः । नित्त्वादाद्युदात्तत्वम् । यास्कस्त्वेवम् अद्रिशब्दं व्याचख्यौ– 'अद्रिरादृणात्यनेनापि वात्तेः स्यात्' (निरु.४.४) इति । **ववसानस्य** 'वस निवासे' कर्तरि ताच्छीलिकः चानश् । 'बहुलं छन्दसि' इति शपः श्लुः । द्विर्भावहलादिशेषौ । चित्त्वादन्तोदात्तत्वम् ।। ३ ।।

**सिद्धाञ्जनम्–** हे इन्द्र! **त्वम्, अङ्गिरोभ्यः** ऋषिभ्यः । **गोत्रम्** गवां समूहं, पणिभिरपहृत्य गुहासु निहितं **अपावृणोः** गुहाद्वारोद्घाटनेन प्रकाशितवान् । **उत** अपि च **शतदुरेषु** शतद्वारेषु यन्त्रेषु असुरैः प्रक्षिप्ताय **अत्रये** महर्षये **गातुवित्** मार्गस्य लम्भयिता बहिर्निर्गमनाय । तथा **विमदाय** महर्षये **ससेन चित्** निद्रातुल्येन विगलितवेद्यान्तरेण सुखेनापि **वसु** सत्त्वात्मकं धनं **अवहः** प्रापितवान् । तथा **आजौ** सङ्ग्रामे **ववसानस्य** वसतो वर्तमानस्य कस्यापि स्तोतुस्त्वामाश्रितस्य **अद्रिम्** वज्रं **नर्तयन्** अभिनयेन प्रदर्शयन्, रक्षणं कृतवानसि करोषि शश्वदित्यर्थः ।।

**अङ्गिरोभ्यः–** अङ्गिरोविचारे वक्तव्यमुक्तम् (पृ.३२७) । **अत्रये** ऋषिरत्रिरैतिहासिको मन्त्रद्रष्टा पुरुषः, तथा **विमदश्च** । तत्त्वार्थे तु अत्त्रिर्भक्षयिता भोक्ता देवताभिर्दत्तस्य, न त्वहं-पूर्विकया धिया क्रियया वाऽर्जितस्य । एवं शुद्धः सिद्धो जीव आत्मा भोक्ता भवत्यत्रिः । तन्निदर्शनाय प्रतिष्ठा भवत्यत्रिः । **विमदः**–विशिष्टो मदो हर्षो यस्य सः । दैवप्रसादलभ्यमद-वैशिष्ट्यस्य निदर्शनं भवति विमदः ।। **गोत्रम्**–समूहार्थे त्रप्रत्ययः । **शतदुरेषु**– शतं दुराः द्वाराणि येषाम्, छान्दसं सम्प्रसारणम् । **गातुवित्**–गाङ् गतौ, अस्मात् तुप्रत्ययः, गातुं वेदयति लम्भयतीति गातुवित्, विद्लृ लाभे, अन्तर्भावितण्यर्थात् क्विप् । **ससेन**-ससमित्यन्ननामसु पाठात् अन्नेनेति सायणः । आनन्दे सुखे मदे वा ससशब्दो वर्तत इति वयम्, ''ऋतस्य योनिमासदः ससस्य योनिमासदः'' (५.२१.४), सत्यस्य मूलस्थानं सुखस्य मूलस्थानमित्येवार्थः । अत्र सस ऋषेर्नामेति व्याख्यातं सायणीये, तेन धात्वर्थनिर्णये क्लेशो निवारितः । 'षस स्वप्ने' इति धातोरेव निष्पन्नः स्यात् । एवमुपपन्नं स्यात् ससशब्दव्याख्यानं निद्रातुल्यमित्यादिकं, विशेषतः प्रयोगान्तरेष्वसत्सु । **अद्रिम्**– अत्ति भक्षयति वैरिणमिति वज्रः, क्तिनूप्रत्ययः । **ववसानस्य**– 'वस निवासे' ताच्छीलिकश्चानश्, शपः शलुः ।। ३ ।।

## ऋक्संहिता पदपाठसहिता

**त्वमपामपिधानावृणोरपाधारयः पर्वते दानुमद्वसु । वृत्रं यदिन्द्र शवसावधीरहिमादित्सूर्यं दिव्यारोहयो दृशे ।। ४ ।।**

**त्वम् । अपाम् । अपिऽधाना । अवृणोः । अप । अधारयः । पर्वते । दानुऽमत् । वसु । वृत्रम् । यत् । इन्द्र । शवसा । अवधीः । अहिम् । आत् । इत् । सूर्यम् । दिवि । आ । अरोहयः । दृशे ।। ४ ।।**

**स्कन्द–** **त्वम्** मेघस्थानाम् **अपाम्** **अपिधाना** निर्गमनविलघट्टनानि **अवृणोः** **अप** अपावृणोः उद्घाटितवान् । **अधारय** धारितवांश्चासि । **पर्वते** मेघनामैतत् (तु.निघ.१,१०) । मेघे । **दानुमत्** दानुरत्र माध्यमिका वाक्, तद्वत् । **वसु** वृष्ट्युदकलक्षणं धनम् । यथाकालमुदक निर्गमनार्थं त्वमेव मेघस्य द्वाराणि अपावृणोः । त्वमेव च मेघे उदकमधारय इत्यर्थः । अथवा **अधारयः** **पर्वत** इति पर्वतोऽत्र शिलोच्चय एवाभिप्रेतः । धारितवानस्यात्मीये दुर्गपर्वते । किम् । **दानुमत्** **वसु** । दानुर्नामासुराणां माता, सा यस्मिन् अन्तर्गता अस्ति तदिदं दानुमत् । वसु धनम् । असुरान् पराजित्य तेषां मातरं धनं च स्वर्गे निहितवानित्यर्थः । किं च **वृत्रम्** **यत्** **इन्द्र–** अत्रेतिहासमाचक्षते– 'वृत्रः किल महत्तमस्ततान । तमसाऽऽवृतं सर्वमन्धमप्रज्ञातं बभूव । तदिन्द्रो वृत्रं हत्वा तमसोऽपनोदनार्थं सूर्यं दिव्यारोहयाञ्चकारेति' । तदेतदुच्यते– **वृत्रं** **यद्** यदा हे **इन्द्र!** **शवसा** बलेन **अवधीः** हतवानसि । **अहिम्** अहन्तव्यम् अन्येन हन्तुमशक्यम् । **आत्** **इत्** यत् इति वचनादाच्छब्दोऽयं तदेत्यस्यार्थे । इच्छब्दः पदपूरणः । **सूर्यम्** **दिवि** **आ** **रोहयः**, **दृशे** सर्वप्राणिनां दर्शनाय । तदेतन्मधुच्छन्दसाऽप्युक्तम् । 'इन्द्रो दीर्घाय चक्षसे आ सूर्यं रोहयद्दिवि' (ऋ.१,७,३) इति ।। ४ ।।

**वेङ्कटमाधव–** **त्वम्** मेघस्थानाम् **अपाम्** अपिधानानि **अप** **अवृणोः** । तथा शिलोच्चये असुरसम्बन्धि **वसु** धारितवान् मेघे वा । **वृत्रम्** **यत्** **इन्द्र!** बलेन **अवधीः**, **अहिम्** च । अनन्तरम् एव **सूर्यम्** **दिवि** **आरोहयः** सर्वेषां दर्शनाय ।। ४ ।।

**मुद्गल–** हे इन्द्र! **त्वम्** **अपाम्** उदकानाम् **अपिधाना** अपिधानानि आच्छादकान् मेघान् **अप** **अवृणोः** अपावरीष्ठाः । तथा **पर्वते** पर्ववति पूरयितव्यप्रदेशयुक्ते स्वकीयनिवासस्थाने **दानुमत्** दानुमतो हिंसायुक्तस्य तादृशस्य वृत्रादेः **वसु** धनम् **अप** **अधारयः** शत्रून् जित्वा तदीयं धनम् अपहृत्य स्वगृहे न्यचिक्षिपः इत्यर्थः । हे **इन्द्र!** त्वम् **यत्** यदा **शवसा** बलेन **वृत्रम्** त्रयाणां लोकानाम् आवरीतारम् **अहिम्** **आ** समन्तात् हन्तारम् असुरम् **अवधीः** वधं प्रापयः । **आत्** **इत्** अनन्तरमेव **दिवि** द्युलोके **दृशे** द्रष्टुम् **सूर्यम्** **आ** **अरोहयः** । वृत्रेणावृतं सूर्यं तस्माद् वृत्राद् अमूमुचः इत्यर्थः ।। ४ ।।

**सायण–** हे इन्द्र! **त्वम्** **अपाम्** उदकानाम् **अपिधाना** अपिधानानि आच्छादकान् मेघान् **अप** **अवृणोः** अपावरीष्ठाः । तथा **पर्वते** पर्ववति पूरयितव्यप्रदेशयुक्ते स्वकीयनिवासस्थाने **दानुमत्**

दानुमतो हिंसायुक्तस्य । यद्वा । दनुः असुरमाता सैव दानुः । तद्वतः तादृशस्य वृत्रादेः **वसु** धनम् **अप अधारयः** शत्रून् जित्वा तदीयं धनम् अपहृत्य स्वगृहे न्यचिक्षिपः इत्यर्थः । यद्वा । दानुमत् इति वसुविशेषणम् । शोभनदानयुक्तमित्यर्थः । हे इन्द्र! त्वं **यत्** यदा **शवसा** बलेन **वृत्रं** त्रयाणां लोकानामावरीतारम् । तथा च शाखान्तरे समाम्नातं– 'यदिमान् लोकानवृणोत्तद्वृत्रस्य वृत्रत्वम्' (तै.सं.२.४.१२.२) इति । **अहिं आ** समन्ताद् हन्तारम् । तथा च वाजसनेयिनः समामनन्ति– 'सोऽग्नीषोमावभिसम्बभूव सर्वां विद्यां सर्वं यशः सर्वमन्नाद्यं सर्वां श्रियं स यत्सर्वमेतत्समभवत्तस्मादहिः' इति । एवम्भूतम् असुरम् **अवधीः** वधं प्रापयः । **आदित्** अनन्तरमेव **दिवि** द्युलोके **दृशे** द्रष्टुं **सूर्यम् आरोहयः** । वृत्रेणावृतं सूर्यं तस्माद्वृत्रात् अमूमुचः इत्यर्थः ।

**अपाम्** । 'ऊडिदम्' इत्यादिना विभक्तेरुदात्तत्वम् । **अपिधाना** अपिधीयते आच्छाद्यते एभिरिति अपिधानानि । करणे ल्युट् । 'लिति' इति प्रत्ययात्पूर्वस्य धात्वाकारस्योदात्तत्वम् । तत एकादेशस्वरः, कृदुत्तरपदप्रकृतिस्वरत्वम् । 'सुपां सुलुक्' इति विभक्तेः पूर्वसवर्णदीर्घत्वम् । **अधारयः** । पादादित्वान्निघाताभावः । **पर्वते** । पर्ववान् पर्वतः । 'पर्व पुनः पृणातेः प्रीणातेर्वा' (निरु.१.२०) इति यास्कः । **दानुमत्** 'दो अवखण्डने' इत्यस्माद्वा 'दाण् दाने' इत्यस्माद्वा 'दाभाभ्यां नुः' इति औणादिको नुप्रत्ययः । असुरविशेषणत्वे 'सुपां सुलुक्' इति षष्ठ्या लुक् ।।

**सिद्धाञ्जनम्**– हिरण्यस्तूपस्य ऐन्द्रसूक्तार्थविचारे प्रतिपादितं तत्त्वमत्र स्मार्यम् । हे इन्द्र! **त्वम् अपाम्** उदकानां **अपिधाना** आच्छादकानि मेघशब्दलक्षितानि **अपावृणोः** अपावृतवानसि । तथा **पर्वते** पर्वभिर्युक्ते त्वदधीने स्थाने **दानुमत्** शोभनदानयुक्तं आश्रितेभ्यो यजमानेभ्यो दानयोग्यमित्यर्थः । **वसु** धनं **अधारयः** निक्षिप्तवानसि । 'दानुमत् वसु' वृत्रादेर्वसु इति सायणीया वापक्षव्याख्या । हे इन्द्र! **यत्** यदा **वृत्रम्** त्रैलोक्यस्य आवरीतारं **अहिम्** आहन्तारं असुरं तमोघनमधिशयानं **शवसा** दीप्येन बलेन **अवधीः** हतवानसि । **आत् इत्** अनन्तरमेव **सूर्यम् दिवि** द्युलोके **दृशे** द्रष्टुं **आरोहयः** । वृत्रवधात्परं सूर्यं दिवि आरोहयदिन्द्र इत्येवमर्थकाः मन्त्राः सरहस्याः प्राग्व्याख्याताः 'विगोभिरद्रिमैरयत्' इत्यादयः ।। **अपिधाना**–अपिधीयन्ते, करणे ल्युट् । अन्ये गताः ।। ४ ।।

**स्कन्द– त्वम्** मेघस्थानाम् **अपाम् अपिधाना** निर्गमनविलघट्टनानि **अवृणोः अप** अपावृणोः उद्घाटितवान् । **अधारय** धारितवांश्चासि । **पर्वते** मेघनामैतत् (तु.निघ.१,१०) । मेघे । **दानुमत्** दानुरत्र माध्यमिका वाक्, तद्वत् । **वसु** वृष्ट्युदकलक्षणं धनम् । यथाकालमुदक निर्गमनार्थं त्वमेव मेघस्य द्वाराणि अपावृणोः । त्वमेव च मेघे उदकमधारय इत्यर्थः । अथवा **अधारयः पर्वत** इति पर्वतोऽत्र शिलोच्चय एवाभिप्रेतः । धारितवानस्यात्मीये दुर्गपर्वते । किम् । **दानुमत् वसु** । दानुर्नामासुराणां माता, सा यस्मिन् अन्तर्गता अस्ति तदिदं दानुमत् । वसु धनम् । असुरान् पराजित्य तेषां मातरं धनं च स्वर्गे निहितवानित्यर्थः । किं च **वृत्रम् यत् इन्द्र–** अत्रेतिहासमाचक्षते– 'वृत्रः किल महत्तमस्ततान । तमसाऽऽवृतं सर्वमन्धमप्रज्ञातं बभूव । तदिन्द्रो वृत्रं हत्वा तमसोऽपनोदनार्थं सूर्यं दिव्यारोहयाश्चकारेति' । तदेतदुच्यते– **वृत्रं यद्** यदा हे **इन्द्र! शवसा** बलेन **अवधीः** हतवानसि । **अहिम्** अहन्तव्यम् अन्येन हन्तुमशक्यम् । **आत् इत्** यत् इति वचनादाच्छब्दोऽयं तदेत्यस्यार्थे । इच्छब्दः पदपूरणः । **सूर्यम् दिवि आ रोहयः, दृशे** सर्वप्राणिनां दर्शनाय । तदेतन्मधुच्छन्दसाऽप्युक्तम् । 'इन्द्रो दीर्घाय चक्षसे आ सूर्यं रोहयद्दिवि' (ऋ.१,७,३) इति ।। ४ ।।

**वेङ्कटमाधव– त्वम्** मेघस्थानाम् **अपाम्** अपिधानानि **अप अवृणोः** । तथा शिलोच्चये असुरसम्बन्धि **वसु** धारितवान् मेघे वा । **वृत्रम् यत् इन्द्र!** बलेन **अवधीः, अहिम्** च । अनन्तरम् एव **सूर्यम् दिवि आरोहयः** सर्वेषां दर्शनाय ।। ४ ।।

**मुद्गल–** हे इन्द्र! **त्वम् अपाम्** उदकानाम् **अपिधाना** अपिधानानि आच्छादकान् मेघान् **अप अवृणोः** अपावरीष्ठाः । तथा **पर्वते** पर्ववति पूरयितव्यप्रदेशयुक्ते स्वकीयनिवासस्थाने **दानुमत्** दानुमतो हिंसायुक्तस्य तादृशस्य वृत्रादेः **वसु** धनम् **अप अधारयः** शत्रून् जित्वा तदीयं धनम् अपहृत्य स्वगृहे न्यचिक्षिपः इत्यर्थः । हे **इन्द्र!** त्वम् **यत्** यदा **शवसा** बलेन **वृत्रम्** त्रयाणां लोकानाम् आवरीतारम् **अहिम् आ** समन्तात् हन्तारम् असुरम् **अवधीः** वधं प्रापयः । **आत् इत्** अनन्तरमेव **दिवि** द्युलोके **दृशे** द्रष्टुम् **सूर्यम् आ अरोहयः** । वृत्रेणावृतं सूर्यं तस्माद् वृत्राद् अमूमुचः इत्यर्थः ।। ४ ।।

**सायण–** हे इन्द्र! **त्वम् अपाम्** उदकानाम् **अपिधाना** अपिधानानि आच्छादकान् मेघान् **अप अवृणोः** अपावरीष्ठाः । तथा **पर्वते** पर्ववति पूरयितव्यप्रदेशयुक्ते स्वकीयनिवासस्थाने **दानुमत्**

दानुमतो हिंसायुक्तस्य । यद्वा । दनुः असुरमाता सैव दानुः । तद्वतः तादृशस्य वृत्रादेः **वसु** धनम् **अप अधारयः** शत्रून् जित्वा तदीयं धनम् अपहृत्य स्वगृहे न्यचिक्षिपः इत्यर्थः । यद्वा । दानुमत् इति वसुविशेषणम् । शोभनदानयुक्तमित्यर्थः । हे इन्द्र! त्वं **यत्** यदा **शवसा** बलेन **वृत्रं** त्रयाणां लोकानामावरीतारम् । तथा च शाखान्तरे समाम्नातं– 'यदिमान् लोकानवृणोत्तद्वृत्रस्य वृत्रत्वम्' (तै.सं.२.४.१२.२) इति । **अहिं आ** समन्ताद् हन्तारम् । तथा च वाजसनेयिनः समामनन्ति– 'सोऽग्नीषोमावभिसम्बभूव सर्वां विद्यां सर्वं यशः सर्वमन्नाद्यं सर्वां श्रियं स यत्सर्वमेतत्समभवत्तस्मादहिः' इति । एवम्भूतम् असुरम् **अवधीः** वधं प्रापयः । **आदित्** अनन्तरमेव **दिवि** द्युलोके **दृशे** द्रष्टुं **सूर्यम् आरोहयः** । वृत्रेणावृतं सूर्यं तस्माद्वृत्रात् अमूमुचः इत्यर्थः ।

**अपाम्** । 'ऊडिदम्' इत्यादिना विभक्तेरुदात्तत्वम् । **अपिधाना** अपिधीयते आच्छाद्यते एभिरिति अपिधानानि । करणे ल्युट् । 'लिति' इति प्रत्ययात्पूर्वस्य धात्वाकारस्योदात्तत्वम् । तत एकादेशस्वरः, कृदुत्तरपदप्रकृतिस्वरत्वम् । 'सुपां सुलुक्' इति विभक्तेः पूर्वसवर्णदीर्घत्वम् । **अधारयः** । पादादित्वान्निघाताभावः । **पर्वते** । पर्ववान् पर्वतः । 'पर्व पुनः पृणातेः प्रीणातेर्वा' (निरु.१.२०) इति यास्कः । **दानुमत्** 'दो अवखण्डने' इत्यस्माद्वा 'दाण् दाने' इत्यस्माद्वा 'दाभाभ्यां नुः' इति औणादिको नुप्रत्ययः । असुरविशेषणत्वे 'सुपां सुलुक्' इति षष्ठ्या लुक् ॥

**सिद्धाञ्जनम्–** हिरण्यस्तूपस्य ऐन्द्रसूक्तार्थविचारे प्रतिपादितं तत्त्वमत्र स्मार्यम् । हे इन्द्र! **त्वम् अपाम्** उदकानां **अपिधाना** आच्छादकानि मेघशब्दलक्षितानि **अपावृणोः** अपावृतवानसि । तथा **पर्वते** पर्वभिर्युक्ते त्वदधीने स्थाने **दानुमत्** शोभनदानयुक्तं आश्रितेभ्यो यजमानेभ्यो दानयोग्यमित्यर्थः । **वसु** धनं **अधारयः** निक्षिप्तवानसि । 'दानुमत् वसु' वृत्रादेर्वसु इति सायणीया वापक्षव्याख्या । हे इन्द्र! **यत्** यदा **वृत्रम्** त्रैलोक्यस्य आवरीतारं **अहिम्** आहन्तारं असुरं तमोघनमधिशयानं **शवसा** दीप्येन बलेन **अवधीः** हतवानसि । **आत् इत्** अनन्तरमेव **सूर्यम् दिवि** द्युलोके **दृशे** द्रष्टुं **आरोहयः** । वृत्रवधात्परं सूर्यं दिवि आरोहयदिन्द्र इत्येवमर्थकाः मन्त्राः सरहस्याः प्राग्व्याख्याताः 'विगोभिरद्रिमैरयत्' इत्यादयः ॥ **अपिधाना**–अपिधीयन्ते, करणे ल्युट् । अन्ये गताः ॥ ४ ॥

## ऋक्संहिता पदपाठसहिता

**त्वं मायाभिरप मायिनोऽधमः स्वधाभिर्ये अधि शुप्तावजुह्वत ।**
**त्वं पिप्रोर्नृमणः प्रारुजः पुरः प्र ऋजिश्वानं दस्युहत्येष्वाविथ ।। ५ ।।**
त्वम् । मायाभिः । अप । मायिनः । अधमः । स्वधाभिः । ये । अधि । शुप्तौ । अजुह्वत ।
त्वम् । पिप्रोः । नृऽमनः । प्र । अरुजः । पुरः । प्र । ऋजिश्वानम् । दस्युऽहत्येषु ।
आविथ ।। ५ ।।

**स्कन्द– त्वम्** स्वाभिः **मायाभिः, मायिनः** मायावतोऽसुरान् **अप अधमः** स्वस्थानेभ्यो निष्कालितवान् । ते किमकुर्वन् । उच्यते । **ये स्वधाभिः** 'स्वधा' (निघ.२,७) इत्यन्ननाम । **अधि** 'अधिपरी अनर्थकौ' (पा.१,४,९३) इति कर्मप्रवचनीयः पदपूरणः । **शुप्तौ** शुप्तिशब्द आस्यवचनः । आत्मीये आस्ये **अजुह्वत** प्रक्षिप्तवन्तः । स्वशरीरभोगपरा इत्यर्थः । किञ्च **त्वम् पिप्रोः** पिप्रुनाम्नोऽसुरस्य स्वभूताः । हे **नृमणः!** नृषु मनो यस्य स नृमणाः, तस्य सम्बोधनं हे नृमणः! **प्र अरुजः** रुजिः भङ्गे । प्रकर्षेण भङ्गवानसि । **पुरः** नगराणि । तच्च कुर्वन् **ऋजिश्वानम्** ऋजिश्वनामानमृषिं विदथिनः पुत्रम् । **दस्युहत्येषु** दस्यवो हन्यन्ते येषु ते दस्युहत्याः सङ्ग्रामाः तत्काला वा तेषु **प्र आविथ** प्रकर्षेण रक्षितवान् । तदेतद् वामदेवोऽपि वक्ष्यति– 'त्वं पिप्रुं मृगयं शूशुवांसमृजिश्वने वैदथिनाय रन्धीः'(ऋ.४,१६,१३) इति ।। ५ ।।

**वेङ्कटमाधव– त्वम्** कृत्रिमैः कृत्रिमान् **अप अधमः** । **ये** अन्नैर्देवान् अपहाय वयमेव देवा इति स्वस्मिन् आस्ये होमं कृतवन्तः । **त्वम् पिप्रोः** असुरस्य । हे नृमणः! नृषु मनो यस्य । पुराणि **प्र अरुजः** । प्ररक्षितवानसि ऋजिश्वानम् च सङ्ग्रामेषु ।। ५ ।।

**मुद्गल–** हे इन्द्र! **त्वम् मायाभिः** जयोपायज्ञानैः । **मायिनः** उक्तलक्षणमायोपेतान् वृत्रादीन् असुरान् । **अप अधमः** अजयः । **ये** असुराः **स्वधाभिः** हविर्लक्षणैरन्नैः **शुप्तौ अधि** शोभमाने स्वकीये मुखे एव **अजुह्वत** अहौषुः नाग्नौ, तान् असुरानिति पूर्वेण सम्बन्धः । तथा हे **नृमणः!** । नृषु यजमानेषु रक्षितव्येषु अनुग्रहबुद्धियुक्त! **त्वम् पिप्रोः** पूरयितुः एतन्नाम्नोऽसुरस्य **पुरः** पुराणि निवासस्थानानि **प्र अरुजः** प्राभाङ्क्षीः । एवं कृत्वा तेनासुरेणोपद्रुतम् ऋजिश्वानम् ऋजुगमनम् एतत्संज्ञकं स्तोतारं **दस्युहत्येषु** दस्यूनाम् उपक्षपयितॄणां हननयुक्तेषु सङ्ग्रामेषु प्र **आविथ** प्रकर्षेण ररक्षिथ ।। ५ ।।

**सायण–** हे इन्द्र! **त्वम् मायाभिः** जयोपायज्ञानैः । मायेति ज्ञाननाम, 'शची माया' (नि.३.९.९) इति तन्नामसु पाठात् । यद्वा । मायाभिः लोकप्रसिद्धैः कपटैः । **मायिनः** उक्त-लक्षणमायोपेतान् वृत्रादीन् असुरान् । **अप अधमः** अपाजीगमः । 'धमतिर्गतिकर्मा' (निरु.६.२) इति यास्कः । **ये** असुराः **स्वधाभिः** हविर्लक्षणैरन्नैः **शुप्तौ अधि** शोभमाने स्वकीये मुखे एव **अजुह्वत** अहौषुः नाग्नौ, तान् असुरानिति पूर्वेण सम्बन्धः । तथा च कौषीतकिभिराम्नायते– 'असुरा वा आत्मन्नजुहवुरुद्वातेऽग्नौ ते पराभवन्' इति । वाजसनेयिभिरप्याम्नातं– 'देवाश्च ह वा असुराश्चास्पर्धन्त ततो हासुरा अभिमानेन कस्मै च न जुहुम इति स्वेष्वेवास्येषु जुह्वतश्चेरुस्ते पराबभूवुः' इति । तथा हे **नृमणः!** । नृषु यजमानेषु रक्षितव्येषु अनुग्रहबुद्धियुक्त! **त्वम् पिप्रोः** पूरयितुः एतन्नाम्नोऽसुरस्य **पुरः** पुराणि निवासस्थानानि **प्र अरुजः** प्राभाङ्क्षीः । एवं कृत्वा तेनासुरेणोपद्रुतम् ऋजिश्वानम् ऋजुगमनम् एतत्संज्ञकं स्तोतारं **दस्युहत्येषु** दस्यूनाम् उपक्षपयितॄणां हननेन युक्तेषु सङ्ग्रामेषु । यद्वा । दस्यूनां हनने निमित्तभूतेषु **प्र आविथ** प्रकर्षेण ररक्षिथ ।।

**मायिनः** । मायाशब्दस्य व्रीह्यादिषु पाठात् 'व्रीह्यादिभ्यश्च' इति मत्वर्थीय इनिः । **शुप्तौ** 'शुभ दीप्तौ' कर्मणि क्तिन् । 'तितुत्र' इत्यादिना इट्प्रतिषेधः । 'झषस्तथोः' इति धत्वाभाव श्छान्दसः । 'खरि च' (पा.सू.८.४.५५) इति चर्त्वम् । **अजुह्वत** । जुहोतेर्लङि व्यत्ययेन आत्मनेपदम् । 'अदभ्यस्तात्' (पा.सू.७.१.४) इति झस्य अदादेशः । 'हुश्नुवोः सार्वधातुके' इति यणादेशः । **पिप्रोः** 'पृ पालनपूरणयोः' । 'पॄभिदिव्यधि' (उ.सू.१.२३) इत्यादिना कुप्रत्ययः । 'उदोष्ठ्यपूर्वस्य' इत्यत्र 'बहुलं छन्दसि' इत्युक्तत्वाद् उत्वाभावः । छान्दसं द्विर्वचनम् । अभ्यासस्य उरदत्वहलादिशेषाः । 'अर्तिपिपर्त्योश्च, बहुलं छन्दसि' इति अभ्यासस्य इत्वम् । यणादेशः । **नृमणः** । नृषु मनो यस्य । 'छन्दस्यृदवग्रहात्' (पा.सू.८.४.२६) इति णत्वम् । **अरुजः** 'रुजो भङ्गे' । शस्य ङित्त्वाद् गुणाभावः । **ऋजिश्वानम्** । ऋजु अश्नुते प्राप्नोतीति ऋजिश्वा । पृषोदरादिः । **दस्युहत्येषु** 'हन हिंसागत्योः' । 'हनस्त च' (पा.सू.३.१.१०८) इति भावे क्यप्प्रत्ययः तकारश्चान्तादेशः । दस्यूनां हत्या येषु सङ्ग्रामेषु । 'परादिश्छन्दसि बहुलम्' इत्युत्तरपदाद्युदात्तत्वम् । तत्पुरुषपक्षे तु कृदुत्तरपदप्रकृतिस्वरत्वम् । **आविथ** 'अव रक्षणे' ।।

**सिद्धाञ्जनम्–** हे इन्द्र! **त्वम् मायाभिः** ज्ञानैः । **मायिनः** कपटज्ञानोपेतान् असुरान् **अपाधमः** अपध्मातवान् अपसारितवानसि । **ये** असुराः **स्वधाभिः** स्वभावधारणसमर्थाभिः

शक्तिभिः दृप्ताः (स्वधाभिः अन्नैरिति सायणः) । **शुप्तौ अधि** स्वकीये (मुखे इति सायणः) **अजुह्वत** अहौषुः । अदत्त्वा देवेभ्यः स्वयं अजुह्वतेति ब्राह्मणवाक्यबलाद् व्याख्या पूर्वेषाम् । अन्यथा वा स्यात् तात्पर्यम् । अधिरुपर्यर्थः, 'शुप्तौ' सकृदेव प्रयोगः ऋक्संहितायाम् । 'अजुह्वत' इति होमक्रियार्थकक्रियापदसाहचर्यात् शुप्तिर्मुखमिति सायणीयं न्याय्यं लक्ष्यते । आह्वानार्थश्चेत् अजुह्वतेति छान्दसः क्रियापदप्रयोगः । 'अधि शुप्तौ' भुजस्योपरि भूजादूर्ध्वं वा इति ग्रहणा-यावकाशो भवति । प्राचीनार्यभाषाशाखीयः 'सुप्ति'शब्दः भुजार्थे वर्तते । तर्हि इदमुक्तं भवति– ये असुराः भुजोत्क्षेपेण इन्द्रं आजुहवुरिति, तान् अपाधम इति पूर्वेण सम्बन्धः । तथा हे **नृमणः!** नृषु यजमानेषु मनः अनुग्रहबुद्धिर्यस्य स **त्वम्, पिप्रोः** एतन्नामकस्य पूरयितुः असुरस्य **पुरः** पुराणि **प्रारुजः** प्राभाङ्क्षीः । अपि च, **दस्युहत्येषु** दस्यूनां उपक्षपयितॄणां देव द्वेषिणां असुराणां हत्या हननं येषु तेषु सङ्ग्रामेषु निमित्तभूतेषु । **ऋजिश्वानम्** एतन्नामकं स्तोतारं, ऋजुगमनयुक्तं सर्वथा आर्जवसम्पन्नं भक्तं, **प्राविथ** ररक्षिथ ।। **मायिनः**– मत्वर्थीय इनिः । **शुप्तौ** 'शुभ दीप्तौ' कर्मणि क्तिन् इति सायणः । **अजुह्वत**–जुहोतेर्लङ्, व्यत्ययेनात्मनेपदम् । **पिप्रोः**– पिपर्तेः कु-प्रत्ययः । स्वीयमुदरं पूरयत्यसुरः पिप्रुः । **नृमणः**– नृषु मनो यस्य । 'छन्दसि ऋदवग्रहात्' इति णत्वम् । **अरुजः** 'रुज भङ्गे' । **ऋजिश्वानम्**–ऋजु अश्नुते, पृषोदरादिः ।। ५ ।।

।। इति प्रथमाष्टके चतुर्थाध्याये नवमो वर्गः ।।

## ।। अथ दशमो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

**त्वं कुत्सं शुष्णहत्येष्वाविथारन्धयोऽतिथिग्वाय शम्बरम् । महान्तं चिदर्बुदं नि क्रमीः पदा सनादेव दस्युहत्याय जज्ञिषे ।। ६ ।।**

**त्वम् । कुत्सम् । शुष्णऽहत्येषु । आविथ । अरन्धयः । अतिथिऽग्वाय । शम्बरम् । महान्तम् । चित् । अर्बुदम् । नि । क्रमीः । पदा । सनात् । एव । दस्युऽहत्याय । जज्ञिषे ।। ६ ।।**

**स्कन्द– त्वम् कुत्सम्** कुत्सनामानमृषिम् । **शुष्णहत्येषु** शुष्णो नामासुरः तस्य हननेषु सङ्ग्रामेषु तत्कालेषु वा **आविथ** रक्षितवान् । **अरन्धयः** 'रध्यतिर्वशगमने' (या.६,३०) । वशं च नीतवानसि । अतिथीन् प्रति परिचारकतया गच्छतीति अतिथिग्वो दिवोदासः । कुत एतत् ।

'दिवोदासमतिथिग्वं यत्' (ऋ.४,२६,३) इत्यादिषु दर्शनात् । तस्मै **अतिथिग्वाय शम्बरम्** शम्बरनामानम् असुरम् । **महान्तम् चित्** चिच्छब्दः पदपूरणः । चार्थे वा । महान्तं च **अर्बुदम्** अर्बुदनामानमसुरम् । **नि क्रमीः** नि इत्येष आ इत्येतस्य स्थाने । आक्रान्तवान् **पदा** पदेन । किं बहुना । **सनात् एव** सनाच्छब्दश्चिरादित्यस्यार्थे । पञ्चमीनिर्देशाच्च प्रभृतीति वाक्यशेषः । चिरादेव प्रभृति **दस्युहत्याय** दस्युहननाय **जज्ञिषे** जातस्त्वम् । जन्मन एव प्रभृति त्वं शत्रून् अवधीरित्यर्थः ।। ६ ।।

**वेङ्कटमाधव– त्वम् कुत्सम्** तस्य शत्रोः शुष्णासुरस्य सङ्ग्रामेषु रक्षितवानसि । तथा **अतिथिग्वाय** दिवोदासाय । **शम्बरम्** असुरम् वशमनयः । तथा **महान्तम्** अर्बुदासुरम् पदा **नि क्रमीः** । किं बहुना । चिरात् एव आरभ्य दस्युहननाय आयासीः ।। ६ ।।

**मुद्गल–** हे इन्द्र! **त्वम् कुत्सम्** कुत्ससञ्ज्ञकम् ऋषिम् । **शुष्णहत्येषु** शुष्णः शोषयिता । एतन्नाम्नोऽसुरस्य हननयुक्तेषु सङ्ग्रामेषु **आविथ** ररक्षिय । यथा **अतिथिग्वाय** अतिथिभिर्गन्तव्याय दिवोदासाय **शम्बरम्** एतन्नामानम् असुरम् **अरन्धयः** हिंसां प्रापयः । तथा **महान्तं चित्** अतिप्रवृद्धमपि **अर्बुदम्** एतत्संज्ञकम् असुरम् **पदा नि क्रमीः** नितरामाक्रमिताऽभूः । यस्मादेवं तस्मात् **सनात् एव** चिरकालादेवारभ्य **दस्युहत्याय** उपक्षपयितॄणां हननाय **जज्ञिषे** उत्पन्नोऽसि । सर्वदा त्वं दस्युहन्तेत्यर्थः ।। ६ ।।

**सायण–** हे इन्द्र! **त्वम् कुत्सम्** कुत्ससञ्ज्ञकम् ऋषिम् । **शुष्णहत्येषु** शुष्णः शोषयिता । एतन्नाम्नोऽमुरस्य हननयुक्तेषु सहग्रामेषु **आविथ** ररक्षिय । यथा **अतिथिग्वाय** अतिथिभिर्गन्तव्याय दिवोदासाय **शम्बरम्** एतन्नामानम् असुरम् **अरन्धयः** हिंसां प्रापयः । तथा **महान्तं चित्** अतिप्रवृद्धमपि **अर्बुदम्** एतत्संज्ञकम् असुरम् **पदा** पादेन **नि क्रमीः** नितरामाक्रमिताऽभूः । यस्मादेवं तस्मात् **सनात् एव** चिरकालादेवारभ्य **दस्युहत्याय** उपक्षपयितॄणां हननाय **जज्ञिषे** उत्पन्नोऽसि । सर्वदा त्वं दस्युहननशीलो भवसीत्यर्थः ।। ६ ।।

**अरन्धयः** 'रध हिंसासंराद्ध्योः' । 'रधिजभोरचि' (पा.सू.७.१.६१) इति धातोः नुम् । **अतिथिग्वाय** । गमेः औणादिको ड्वप्रत्ययः । **क्रमीः** । 'क्रमु पादविक्षेपे' । 'ह्यन्तक्षण' (पा.सू.७.२.५) इति वृद्धिप्रतिषेधः । 'बहुलं छन्दस्यमाङ्योगेऽपि' इति अडभावः । **पदा** ।

'सावेकाचः' इति वा 'ऊढिदम्पदादि' इति वा विभक्तेरुदात्तत्वम् । **जज्ञिषे** 'जनी प्रादुर्भावे' लिटि 'गमहन' इत्यादिना उपधालोपः ।। ६ ।।

**सिद्धाञ्जनम्–** हे इन्द्र! **त्वम् कुत्सम्** प्रसिद्धमृषिम् । **शुष्णहत्येषु** शुष्णनामकासुरहनन निमित्तभूतेषु सङ्ग्रामेषु **आविथ** ररक्षिथ । **अतिथिग्वाय** अतिथिभिर्गन्तव्याय एतत्संज्ञकाय भक्ताय तदनुग्रहार्थं **शम्बरम्** एतत्संज्ञकम् असुरम् । **अरन्धयः** हिंसां प्रापितवान् । **महान्तं चित्** प्रवृद्धमपि **अर्बुदम्** एतत्संज्ञकम् असुरं **पदा** पादेन **नि क्रमीः** नितरामाक्रमिताऽभूः । एवं **सनात् एव** बहोः कालादारभ्य **दस्युहत्याय** उपक्षपयितॄणां हननाय **जज्ञिषे** प्रादुर्भूतोऽसि । अत्र कुत्सशुष्णादीनां गूढोऽर्थः ज्ञेयः ।। कुत्सः–उक्तः (१.३३.१४) । शुष्णः–गतः (१.११.७) । **अतिथिग्वाय**–गमेरौणादिको ड्वप्रत्ययः । अतिथीनां अग्निप्रभृतीनां देवानां स्वस्मिन् स्थानाशनादिसुखविधायकः पुरुषो यजमानः दिवो दास्ये वर्तत इति दिवोदास उच्यते, तत्संज्ञको वा ऐतिहासिकः पुरुषः । **शम्बरम्**– अतिथिग्वशत्रुरसुरः, शं सुखं वृणोति, सुखस्य आवरक इति ऊहमात्रम् । **अर्बुदः**–अर्बतेर्हिंसार्थात्, काद्रवेयः कीर्त्यते । **क्रमीः**–'क्रमु पादविक्षेपे, लुङ् । **जज्ञिषे**–'जनी प्रादुर्भावे' लिट् ।। ६ ।।

## ऋक्संहिता पदपाठसहिता

**त्वे विश्वा तविषी सध्र्यग्घिता तव राधः सोमपीथाय हर्षते । तव वज्रश्चिकिते बाह्वोर्हितो वृश्चा शत्रोरव विश्वानि वृष्ण्या ।। ७ ।।**

**त्वे इति । विश्वा । तविषी । सध्र्यक् । हिता । तव । राधः । सोमऽपीथाय । हर्षते । तव । वज्रः । चिकिते । बाह्वोः । हितः । वृश्च । शत्रोः । अव । विश्वानि । वृष्ण्या ।।**

**स्कन्द– त्वे** त्वयि **विश्वा** सर्वा **तविषी** बलम् **सध्र्यक्** सहाञ्चति गच्छतीति सध्रीचीति स्त्रीलिङ्गता । तविषीसामानाधिकरण्यात् । सध्र्यगिति व्यत्ययेनात्र नपुंसकता । सध्र्यक् सध्रीची सर्वैरवयवैः सहगामिनी । पिण्डितेत्यर्थः । **हिता** निहिता । यावत् किञ्चित् बलं सर्वं पिण्डीकृतं त्वयि निहितमित्यर्थः । किञ्च **तव राधः** सोमलक्षणं धनम् **सोमपीथाय** सोमपानाय **हर्षते** 'इन्द्रो मा पास्यति' इति अतिप्रीत्या हृष्यतीव । किञ्च **तव वज्रः चिकिते** शत्रुहननेन ज्ञायते **बाह्वोः हितः** निहितः । निहितं वज्रं गृहीत्वा शत्रून् घ्नन् निर्व्यापारो न तिष्ठसीत्यर्थः । य ईदृशोऽसि

स त्वम् **वृश्च शत्रोः अव** अववृश्च अवच्छिन्धि आत्मीयस्यास्मदीयस्य वा शत्रोः **विश्वानि** सर्वाणि **वृष्ण्या** अपठितमपि बलनामैतत् द्रष्टव्यम् । बलानि ।। ७ ।।

**वेङ्कटमाधव–** त्वयि सर्वाणि बलानि सह निहितानि । तव धनम् सोमपानार्थे हृष्यति बहु भवति । **तव वज्रः** प्रख्यात आसीत् । **बाह्वोः** निहितः । स त्वम् **शत्रोः** सर्वाणि वीर्याणि **अव वृश्च** ।। ७ ।।

**मुद्गल– हे इन्द्र! त्वे** त्वयि **विश्वा तविषी** सर्वं बलम् **सध्र्यक्** सध्रीचीनम् अपराङ्मुखं यथा भवति तथा **हिता** निहितम् । तथा **तव राधः** मनः **सोमपीथाय** सोमपानाय **हर्षते** हृष्यति । किञ्च **तव बाह्वोः** हस्तयोः **हितः** अवस्थितः **वज्रः चिकिते** अस्माभिर्ज्ञायते । अतः **शत्रोः** शातयितुः वैरिणः **विश्वानि** सर्वाणि **वृष्ण्या** वृष्ण्यानि वीर्याणि **अव वृश्च** छेदनं कुरु ।। ७ ।।

**सायण– हे इन्द्र! त्वे** त्वयि **विश्वा तविषी** सर्वं बलम् **सध्र्यक्** सध्रीचीनम् अपराङ्मुखं यथा भवति तथा **हिता** निहितम् । तथा **तव राधः** मनः **सोमपीथाय** सोमपानाय **हर्षते** हृष्यति । किञ्च **तव बाह्वोः** हस्तयोः **हितः** अवस्थितः **वज्रः चिकिते** अस्माभिर्ज्ञायते । अतः **शत्रोः** शातयितुः वैरिणः **विश्वानि** सर्वाणि **वृष्ण्या** वृष्ण्यानि वीर्याणि **अव वृश्च** छेदनं कुरु ।। **सध्र्यक्** सहाञ्चतीति सध्र्यक् । अञ्चतेः 'ऋत्विक्' इत्यादिना किन् । 'अनिदिताम्' इति नलोपः । समासे 'सहस्य सध्रिः' इति सहशब्दस्य सध्र्यादेशः । 'चोः कुः' इति कुत्वम् । कृदुत्तरपदप्रकृतिस्वरत्वे प्राप्ते 'अद्रिसध्र्योरन्तोदात्तत्वनिपातनं कृत्स्वरनिवृत्त्यर्थम्' (पा.सू.६.३.९५.१) इति वचनात् सध्र्यादेशः अन्तोदात्तः । तस्य यणादेशे 'उदात्तस्वरितयोर्यणः' इति परस्यानुदात्तस्य स्वरितत्वम् । **राधः** । राध्नोति समृद्धो भवत्यनेन । राधोऽत्र मन उच्यते । असुनो नित्त्वादाद्युदात्तत्वम् । **सोमपीथाय** 'पा पाने' । 'पातृतुदिवचि' इत्यादिना थक्प्रत्ययः । 'घुमास्था' इति ईत्वम् । **हर्षते** 'हृष तुष्टौ' । श्यनि प्राप्ते व्यत्ययेन शप् आत्मनेपदं च । **चिकिते** 'कित ज्ञाने' । 'छन्दसि लुङ्लङ्लिटः' इति वर्तमाने कर्मणि लिट् । **बाह्वोः** । 'उदात्तयणः' इति विभक्तेरुदात्तत्वम् । **वृश्च** 'ओ व्रश्चू छेदने' तौदादिकः । 'ग्रहिज्या'दिना सम्प्रसारणम् । विकरणस्वरः । संहितायां 'द्व्यचोऽतस्तिङः' इति दीर्घत्वम् । **वृष्ण्या** । 'वृष सेचने' औणादिको नक्प्रत्ययः । तत्र भवानि वृष्ण्यानि । 'भवे छन्दसि' इति यत् । 'यतोऽनावः' इत्याद्युदात्तत्वम् । 'शेश्छन्दसि' इति शेर्लोपः ।। ७ ।।

**सिद्धाञ्जनम्–** हे इन्द्र! **त्वे** त्वयि **विश्वा तविषी** सर्वं बलं **सध्र्यक्** सध्रीचीनं सहगतं सम्भूय स्थितं यथा भवति तथा **हिता** निहितम् । तथा **तव राधः** समृद्धं मनः हृदयं वा **सोमपीथाय** सोमपानाय **हर्षते** हृष्यति । **तव बाह्वोः** हस्तयोः **हितः** निहितोऽवस्थितः **वज्रः** आयुधं **चिकिते** ज्ञायते, अस्माभिरिति शेषः । तस्मात् **शत्रोः** शातयितुर्विरोधिनः **विश्वानि** सर्वाणि **वृष्ण्या** वृष्ण्यानि वीर्याणि **अववृश्च** छिन्धि, छित्त्वा अधः पातय ।। **सध्र्यक्**– सह अञ्चतीति सध्र्यक्, सहशब्दस्य सध्रिरादेशः । **राधः**– राध्नोति समृद्धो भवत्यनेन । अत्र राधसा हृदयं लक्ष्यते । **सोमपीथाय** 'पा पाने' थक्प्रत्ययः । **हर्षते** 'हृष तुष्टौ' श्यनः शप्, व्यत्ययेन आत्मनेपदं च । **चिकिते** 'कित ज्ञाने' कर्मणि लिट् लडर्थे । **वृश्च**-'ओव्रश्चू छेदने' संहितायां दीर्घत्वम् । **वृष्ण्या**–'वृष सेचने', औणादिको नक्प्रत्ययः, तत्र भवानि वृष्ण्यानि, छन्दसि यत्प्रत्ययः, शेर्लोपः ।। ७ ।।

## ऋक्संहिता पदपाठसहिता

**वि जा॑नीह्यार्या॒न्ये च॒ दस्य॑वो ब॒र्हिष्म॑ते रन्धया॒ शास॑दव्र॒तान् ।**
**शाकी॑ भ॒वा यज॑मानस्य चोदि॒ता विश्वेत्ता ते॑ सध॒मादे॑षु चाकन ।। ८ ।।**
**वि । जा॒नी॒हि॒ । आर्या॑न् । ये । च॒ । दस्य॑वः । ब॒र्हिष्म॑ते । र॒न्ध॒य॒ । शास॑त् । अ॒व्र॒तान् ।**
**शाकी॑ । भ॒व॒ । यज॑मानस्य । चो॒दि॒ता । विश्वा॑ । इत् । ता । ते॒ । स॒ध॒ऽमादे॑षु । चा॒क॒न॒ ।।**

**स्कन्द–** वि जानाहि, **आर्यान्** साधुवृत्तान् । यागपरानित्यर्थः । **ये च दस्यवः** यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः । **ये च दस्यवः** देवानां शत्रुभूता अयागपरास्तान् । यष्टॄनयष्टॄंश्च विजानीहीत्यर्थः । ज्ञात्वा च **बर्हिष्मते** यजमानाय **रन्धय** वशं गमय । **शासत्** अनुशासत् । निगृह्णन्नित्यर्थः । कान् । **अव्रतान्** अकर्मणः यागकर्मवर्जितान् । अयष्टॄनित्यर्थः । किञ्च **शाकी भव** 'शग्धि पूर्धि' (निघ.३,१९) इति याञ्चाकर्मसु पाठात् शकिरिह याञ्चाकर्मा । याञ्चया चात्र तत्पूर्वकं दानं लक्ष्यते । दाता भवेत्यर्थः । कस्मै । सामर्थ्याद् यजमानाय । न च दातैव केवलम् । किं तर्हि । **यजमानस्य** यागकर्मणि **चोदिता** चोदयिता प्रेरयिताऽपि भव । यानि चैतानि मयोक्तानि **विश्वा इत् ता** इच्छब्दः पदपूरणः । सर्वाणि तानि । **ते** तव स्वभूतानि **सधमादेषु** सह माद्यन्ति येषु देवतास्ते सधमादा यज्ञास्तेषु । आत्मनोऽप्यर्थायाहं **चाकन** कान्तिकर्माऽयम् (तु.निघ.२,६) । कामये प्रार्थये इत्यर्थः ।। ८ ।।

**वेङ्कटमाधव–** विविच्य **जानीहि आर्यान्** दस्यून् च । तत **अव्रतान्** अनुशासत् त्वं यजमानाय वशं नय । सहायः भव । **यजमानस्य** धनस्य चोदयिता । सर्वाणि एव तानि यज्ञेषु वक्तुमहं कामितवान् अस्मि ॥ ८ ॥

**मुद्गल–** हे इन्द्र! त्वम् **आर्यान्** विदुषः अनुष्ठातॄन् **वि जानीहि** विशेषेण बुध्यस्व । **ये च दस्यवः** तेषामनुष्ठातॄणाम् उपक्षपयितारः शत्रवः तानपि वि जानीहीति शेषः । ज्ञात्वा च **बर्हिष्मते** बर्हिषा यज्ञेन युक्ताय यजमानाय **अव्रतान्** कर्मविरोधिनस्तान् दस्यून् **रन्धय** हिंसां प्रापय । किं कुर्वन् । **शासत्** दुष्टानाम् अनुशासनं निग्रहं कुर्वन् । अत **शाकी** शक्तियुक्तः त्वं यजमानस्य **चोदिता** प्रेरकः भव । यज्ञविघातकान् असुरान् निगृह्य यज्ञान् यजमानैः सम्यगनुष्ठापयेति भावः । अहमपि स्तोता **ते** तव **ता** तानि पूर्वोक्तानि कर्माणि **विश्वा इत्** सर्वाण्येव **सधमादेषु** सहमदनयुक्तेषु यज्ञेषु स्तोतुम् **चाकन** कामये ॥ ८ ॥

**सायण–** हे इन्द्र! त्वम् **आर्यान्** विदुषः अनुष्ठातॄन् **वि जानीहि** विशेषेण बुध्यस्व । **ये च दस्यवः** तेषामनुष्ठातॄणाम् उपक्षपयितारः शत्रवः तानपि वि जानीहीति शेषः । ज्ञात्वा च **बर्हिष्मते** बर्हिषा यज्ञेन युक्ताय यजमानाय **अव्रतान्** । व्रतमिति कर्मनाम । कर्मविरोधिनस्तान् दस्यून् **रन्धय** हिंसां प्रापय । यद्वा यजमानस्य वशं गमय । 'रध्यतिर्वशगमने' (निरु.६.३२) इति यास्कः । किं कुर्वन् । **शासत्** दुष्टानामनुशासनं निग्रहं कुर्वन् । अतः **शाकी** शक्तियुक्तस्त्वं यजमानस्य **चोदिता** प्रेरको भव । यज्ञविघातकान् असुरांस्तिरस्कृत्य यज्ञान् यजमानैः सम्यगनुष्ठापय इति भावः । अहमपि स्तोता **ते** तव **ता** तानि पूर्वोक्तानि कर्माणि **विश्वेत्** सर्वाण्येव **सधमादेषु** सहमदनयुक्तेषु यज्ञेषु स्तोतुं **चाकन** कामये ॥

**जानीहि** 'ज्ञा अवबोधने' क्रैयादिकः । 'ज्ञाजनोर्जा' इति जादेशः । अत्र 'प्ली गतौ वृत्' इति वृत्करणं ल्वादिपरिसमाप्त्यर्थमेव न प्वादिपरिसमाप्त्यर्थमिति येषां दर्शनं तेषां 'प्वादीनां ह्रस्वः' इति ह्रस्वत्वेन भवितव्यम् । मैवम् । 'ज्ञाजनोर्जा' इति दीर्घोच्चारणसामर्थ्यात् । 'जनी प्रादुर्भावे' इत्यस्य तु दीर्घोच्चारणमन्तरेणापि 'अतो दीर्घो यञि' (पा.सू.७.३.१०१) इत्यनेनैव दीर्घः सिध्यति । तस्माद्दीर्घोच्चारणवैयर्थ्यप्रसङ्गादत्र ह्रस्वो न भवतीति सिद्धम् । **बर्हिष्मते** । 'तसौ मत्वर्थे' इति भत्वात् रुत्वजश्त्वयोरभावः । **रन्धय** 'रध हिंसासंराद्ध्योः' । **शासत्** । 'शासु अनुशिष्टौ' । शतरि अदादित्वात् शपो लुक् । 'जक्षित्यादयः षट्' (पा.सू.६.१.६) इत्यभ्यस्त-

**सिद्धाञ्जनम्**– हे इन्द्र! **त्वे** त्वयि **विश्वा तविषी** सर्वं बलं **सध्र्यक्** सध्रीचीनं सहगतं सम्भूय स्थितं यथा भवति तथा **हिता** निहितम् । तथा **तव राधः** समृद्धं मनः हृदयं वा **सोमपीथाय** सोमपानाय **हर्षते** हृष्यति । **तव बाह्वोः** हस्तयोः **हितः** निहितोऽवस्थितः **वज्रः** आयुधं **चिकिते** ज्ञायते, अस्माभिरिति शेषः । तस्मात् **शत्रोः** शातयितुर्विरोधिनः **विश्वानि** सर्वाणि **वृष्ण्या** वृष्ण्यानि वीर्याणि **अववृश्च** छिन्धि, छित्त्वा अधः पातय ।। **सध्र्यक्**– सह अञ्चतीति सध्र्यक्, सहशब्दस्य सध्रिरादेशः । **राधः**– राध्नोति समृद्धो भवत्यनेन । अत्र राधसा हृदयं लक्ष्यते । **सोमपीथाय** 'पा पाने' थक्प्रत्ययः । **हर्षते** 'हृष तुष्टौ' श्यनः शप्, व्यत्ययेन आत्मनेपदं च । **चिकिते** 'कित ज्ञाने' कर्मणि लिट् लडर्थे । **वृश्च**-'ओव्रश्चू छेदने' संहितायां दीर्घत्वम् । **वृष्ण्या**–'वृष सेचने', औणादिको नक्प्रत्ययः, तत्र भवानि वृष्ण्यानि, छन्दसि यत्प्रत्ययः, शेर्लोपः ।। ७ ।।

## ऋक्संहिता पदपाठसहिता

**वि जा॑नीह्यार्या॒न्ये च॒ दस्य॑वो ब॒र्हिष्म॑ते रन्धया॒ शास॑दव्र॒तान् ।**
**शाकी॑ भव॒ यज॑मानस्य चोदि॒ता विश्वेत्ता ते॑ सध॒मादे॑षु चाकन ।। ८ ।।**
**वि । जा॒नी॒हि॒ । आर्या॑न् । ये । च॒ । दस्य॑वः । ब॒र्हिष्म॑ते । र॒न्ध॒य॒ । शास॑त् । अ॒व्र॒तान् ।**
**शाकी॑ । भ॒व॒ । यज॑मानस्य । चो॒दि॒ता । विश्वा॑ । इत् । ता । ते॒ । स॒ध॒ऽमादे॑षु । चा॒क॒न॒ ।।**

**स्कन्द**– **वि जानाहि, आर्यान्** साधुवृत्तान् । यागपरानित्यर्थः । **ये च दस्यवः** यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः । **ये च दस्यवः** देवानां शत्रुभूता अयागपरास्तान् । यष्टॄनयष्टॄंश्च विजानीहीत्यर्थः । ज्ञात्वा च **बर्हिष्मते** यजमानाय **रन्धय** वशं गमय । **शासत्** अनुशासत् । निगृह्णन्नित्यर्थः । कान् । **अव्रतान्** अकर्मणः यागकर्मवर्जितान् । अयष्टॄनित्यर्थः । किञ्च **शाकी भव** 'शग्धि पूर्धि' (निघ.३,१९) इति याञ्चाकर्मसु पाठात् शकिरिह याञ्चाकर्मा । याञ्चया चात्र तत्पूर्वकं दानं लक्ष्यते । दाता भवेत्यर्थः । कस्मै । सामर्थ्याद् यजमानाय । न च दातैव केवलम् । किं तर्हि । **यजमानस्य** यागकर्मणि **चोदिता** चोदयिता प्रेरयिताऽपि भव । यानि चैतानि मयोक्तानि **विश्वा इत् ता** इच्छब्दः पदपूरणः । सर्वाणि तानि । **ते** तव स्वभूतानि **सधमादेषु** सह माद्यन्ति येषु देवतास्ते सधमादा यज्ञास्तेषु । आत्मनोऽप्यर्थायाहं **चाकन** कान्तिकर्माऽयम् (तु.निघ.२,६) । कामये प्रार्थये इत्यर्थः ।। ८ ।।

**वेङ्कटमाधव–** विविच्य **जानीहि आर्यान्** दस्यून् च । तत **अव्रतान्** अनुशासत् त्वं यजमानाय वशं नय । सहायः भव । **यजमानस्य** धनस्य चोदयिता । सर्वाणि एव तानि यज्ञेषु वक्तुमहं कामितवान् अस्मि ।। ८ ।।

**मुद्गल–** हे इन्द्र! त्वम् **आर्यान्** विदुषः अनुष्ठातॄन् **वि जानीहि** विशेषेण बुध्यस्व । **ये च दस्यवः** तेषामनुष्ठातॄणाम् उपक्षपयितारः शत्रवः तानपि वि जानीहीति शेषः । ज्ञात्वा च **बर्हिष्मते** बर्हिषा यज्ञेन युक्ताय यजमानाय **अव्रतान्** कर्मविरोधिनस्तान् दस्यून् **रन्धय** हिंसां प्रापय । किं कुर्वन् । **शासत्** दुष्टानाम् अनुशासनं निग्रहं कुर्वन् । अत **शाकी** शक्तियुक्तः त्वं यजमानस्य **चोदिता** प्रेरकः भव । यज्ञविघातकान् असुरान् निगृह्य यज्ञान् यजमानैः सम्यगनुष्ठापयेति भावः । अहमपि स्तोता **ते** तव **ता** तानि पूर्वोक्तानि कर्माणि **विश्वा इत्** सर्वाण्येव **सधमादेषु** सहमदनयुक्तेषु यज्ञेषु स्तोतुम् **चाकन** कामये ।। ८ ।।

**सायण–** हे इन्द्र! त्वम् **आर्यान्** विदुषः अनुष्ठातॄन् **वि जानीहि** विशेषेण बुध्यस्व । **ये च दस्यवः** तेषामनुष्ठातॄणाम् उपक्षपयितारः शत्रवः तानपि वि जानीहीति शेषः । ज्ञात्वा च **बर्हिष्मते** बर्हिषा यज्ञेन युक्ताय यजमानाय **अव्रतान्** । व्रतमिति कर्मनाम । कर्मविरोधिनस्तान् दस्यून् **रन्धय** हिंसां प्रापय । यद्वा यजमानस्य वशं गमय । 'रध्यतिर्वशगमने' (निरु.६.३२) इति यास्कः । किं कुर्वन् । **शासत्** दुष्टानामनुशासनं निग्रहं कुर्वन् । अतः **शाकी** शक्तियुक्तस्त्वं यजमानस्य **चोदिता** प्रेरको भव । यज्ञविघातकान् असुरांस्तिरस्कृत्य यज्ञान् यजमानैः सम्यगनुष्ठापय इति भावः । अहमपि स्तोता **ते** तव **ता** तानि पूर्वोक्तानि कर्माणि **विश्वेत्** सर्वाण्येव **सधमादेषु** सहमदनयुक्तेषु यज्ञेषु स्तोतुं **चाकन** कामये ।।

**जानीहि** 'ज्ञा अवबोधने' क्रैयादिकः । 'ज्ञाजनोर्जा' इति जादेशः । अत्र 'ॠ गतौ वृत्' इति वृत्करणं ल्वादिपरिसमाप्त्यर्थमेव न प्वादिपरिसमाप्त्यर्थमिति येषां दर्शनं तेषां 'प्वादीनां ह्रस्वः' इति ह्रस्वत्वेन भवितव्यम् । मैवम् । 'ज्ञाजनोर्जा' इति दीर्घोच्चारणसामर्थ्यात् । 'जनी प्रादुर्भावे' इत्यस्य तु दीर्घोच्चारणमन्तरेणापि 'अतो दीर्घो यञि' (पा.सू.७.३.१०१) इत्यनेनैव दीर्घः सिध्यति । तस्माद्दीर्घोच्चारणवैयर्थ्यप्रसङ्गादत्र ह्रस्वो न भवतीति सिद्धम् । **बर्हिष्मते** । 'तसौ मत्वर्थे' इति भत्वात् रुत्वजश्त्वयोरभावः । **रन्धय** 'रध हिंसासंराद्ध्योः' । **शासत्** । 'शासु अनुशिष्टौ' । शतरि अदादित्वात् शपो लुक् । 'जक्षित्यादयः षट्' (पा.सू.६.१.६) इत्यभ्यस्त-

संज्ञायां 'नाभ्यस्ताच्छतुः' इति नुम् प्रतिषेधः । 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम् । **शाकी** 'शक्लृ शक्तौ' भावे घञ् । ततो मत्वर्थीय इनिः । व्यत्ययेनाद्युदात्तत्वम् । यद्वा वृषादिर्द्रष्टव्यः । **विश्वा, ता** । उभयत्र 'शेश्छन्दसि' इति शेर्लोपः । **सधमादेषु** । सह माद्यन्त्येष्विति सधमादा यज्ञाः । अधिकरणे घञ्प्रत्ययः । ननु 'मदोऽनुपसर्गे' इति अप्प्रत्ययेन भवितव्यम् । मैवम् । 'व्यधजपोरनुपसर्गे' (पा.सू.३.३.६१) इत्यत्रैव मद इति वक्तव्ये यत् 'मदोऽनुपसर्गे' इति पृथगुपादानं तत् घञपि पक्षे यथा स्यादिति न्यासकारेण प्रत्यपादीत्यस्माभिः धातुवृत्तावुक्तम् । 'सध मादस्थयोश्छन्दसि' इति सहशब्दस्य सधादेशः । **चाकन** 'कन दीप्ति कान्तिगतिषु' । अत्र कान्त्यर्थः । 'छन्दसि लुङ्लङ्लिटः' इति वर्तमाने लिट् । 'णलुत्तमो वा' (पा.सू. ७.१.९१) इति णित्त्वस्य विकल्पनाद् वृद्ध्यभावः । तुजादित्वाद् अभ्यासस्य दीर्घत्वम् ।।

**सिद्धाञ्जनम्–** हे इन्द्र! **आर्यान्** देवयाजिनः देवार्थं नित्योद्योगिनः । **वि जानीहि** विशेषेण बुध्यस्व, अनुगृहाणेत्यर्थः । **ये च दस्यवः** उपक्षपयितारः देवयाजिनामिति शेषः, देववैरिणस्तान् अपि विजानीहि । ज्ञात्वा च निगृहाणेति भावः । अपि च त्वं **शासत्** अनुशासनं कुर्वन्,दुष्टान् निगृह्णन् **अव्रतान्** व्रतशून्यान् देवाराधनविरोधिनोऽसुरान् दस्यून् **बर्हिष्मते** यज्ञयुक्ताय यजमानाय तदनुग्रहाय **रन्धय** हिंसां प्रापय । **शाकी** शक्तः सन् यजमानस्य **चोदिता भव** प्रेरयिता भव । अहमपि **ते** तव **ता** तानि **विश्वा इत्** सर्वाणि वैभवान्येव **सधमादेषु** सहमादनयुक्तेषु यज्ञेषु **चाकन** कामये कीर्तयितुमिति शेषः ।। **बर्हिष्मते**–बर्हिर्यज्ञोऽस्यास्तीति बर्हिष्मान् 'तसौ मत्वर्थे' इति भत्वम्, रुत्वजश्त्वे न भवतः । **शासत्** 'शासु अनुशिष्टौ' अदादिः, शतृ । **शाकी**- शक्नोतेः घञ्, शाकः, ततो मत्वर्थीय इनिः । **सधमादेषु**-सह माद्यन्त्येषु इति सधमादाः यज्ञाः । **चाकन** 'कनी दीप्तिकान्तिगतिषु' अत्र कान्त्यर्थः, छन्दसि वर्तमाने लिट्, तुजादित्वाद्दीर्घोऽभ्यासस्य ।।

## ऋक्संहिता पदपाठसहिता

**अनुव्रताय रन्धयन्नपव्रतानाभूभिरिन्द्रः श्नथयन्ननाभुवः ।**
**वृद्धस्य चिद्वर्धतो द्यामिनक्षतः स्तवानो वम्रो वि जघान संदिहः ।। ९ ।।**

अनुऽव्रताय । रन्धयन् । अपऽव्रतान् । आऽभूभिः । इन्द्रः । श्नथयन् । अनाभुवः । वृद्धस्य । चित् । वर्धतः । द्याम् । इनक्षतः । स्तवानः । वम्रः । वि । जघान । समऽदिहः ।।

**स्कन्द–** **'अनुव्रताय'** अनुव्रतशब्दो भक्तपर्यायः । **अनुव्रताय** भक्ताय **रन्धयन्, अपव्रतान्** अपगतयागकर्मणः । अभक्तानित्यर्थः । **आभूभिः** आभूशब्दोऽपठितः सर्वत्र महन्नाम द्रष्टव्यः । करणे चैषा तृतीया सहयोगलक्षणा वा । 'महद्भिः प्रहारैः महद्भिर्वा मरुद्भिस्सह **इन्द्रः श्नथयन्** ताडयन् **अनाभुवः** अमहतः **वृद्धस्य चित् वर्धतः** वृद्धस्यापि पुनरतिशयेन वर्धमानस्य शत्रोः । कियत्या वृद्ध्या । उच्यते । **द्याम् इनक्षतः** 'इन्वति नक्षति' (नि.२.१८) इत्यस्य, व्याप्ति कर्मसु पठितस्य, वा 'तृक्ष स्तृक्ष णक्ष गतौ' इत्यस्य वा गत्यर्थस्य इनक्षतः । अयम् इकारश्छान्दस आगमो द्रष्टव्यः । व्याप्नुवतः गच्छतो वेत्यर्थः । **स्तवानः** स्तूयमानः । **वम्रः** ह्रस्वनामैतद् द्रष्टव्यम् । 'वम्रवः' (निघ.३,२) इति हि स्वार्थीकृतम् । ह्रस्वनामसु पठितम् । ह्रस्वोऽपि परिमाणतः । **वि जघान** विविधं हन्ति हतवान् वा । **सन्दिहः** 'दिह उपचये' उपचयान् । एतदुक्तं भवति– ये तावदभक्ता अमहान्तः तान् महद्भिः प्रहारैर्महद्भिर्वा मरुद्भिस्सह ताडयन्, ये च भक्ता अत्यन्तमहान्तस्तेषामपि भक्तैः स्तूयमान उपचयान् विहन्तीति ।। ९ ।।

**वेङ्कटमाधव–** अनुगतकर्मणे यजमानाय वशं नयन् अयजमानान् आभवद्भिर्वर्धमानैः विपरीतान् विश्लथयन् इन्द्रः **वृद्धस्य** च वर्धमानस्य च शत्रोः दिवं व्याप्नुवतः स्तूयमानः वमितेषूणां विहन्ति समुपचयान् ।। ९ ।।

**मुद्गल–** यः **इन्द्रः अनुव्रताय** अनुकूलकर्मणे यजमानाय । **अपव्रतान्** अपगतकर्मणः अयजमानान् **रन्धयन्** हिंसयन् । तथा **आभूभिः** आभिमुख्येन भवन्तीति आभुवः स्तोतारः तैः । **अनाभुवः** तद्विपरीतान् **श्नथयन्** हिंसयन् वर्तते । **वृद्धस्य चिद्वर्धतः** पूर्ववृद्धस्यापि पुनर्वर्धमानस्य **द्याम् इनक्षतः** स्वर्गं व्याप्नुवतः तस्येन्द्रस्य **स्तवानः** स्तुतिं कुर्वाणः **वम्रः** स्तुत्युद्गिरणशील एतत्संज्ञक ऋषिः **सन्दिहः** सम्यगुपचिता पृथिव्याः वल्मीकवपाः **वि जघान** । इन्द्रेण परिहृतान्तरायः सन् पृथिव्याः सारभूतं वल्मीकवपालक्षणं यज्ञसम्भारमाहार्षीदित्यर्थः ।।

**सायण–** यः **इन्द्रः अनुव्रताय** अनुकूलकर्मणे यजमानाय । **अपव्रतान्** अपगतकर्मणः अयजमानान् **रन्धयन्** हिंसयन् वशीकुर्वन् वा । तथा **आभूभिः** आभिमुख्येन भवन्तीति आभुवः स्तोतारः तैः । **अनाभुवः** तद्विपरीतान् **श्नथयन्** हिंसयन् वर्तते । **वृद्धस्य चिद्वर्धतः** पूर्ववृद्धस्यापि पुनर्वर्धमानस्य **द्यामिनक्षतः** स्वर्गं व्याप्नुवतः तस्येन्द्रस्य **स्तवानः** स्तुतिं कुर्वाणः **वम्रः** स्तुत्युद्गिरणशील एतत्संज्ञक ऋषिः **सन्दिहः** सम्यगुपचिता वल्मीकवपाः **वि जघान** । इन्द्रेण

परिहृतान्तरायः सन् पृथिव्याः सारभूतं वल्मीकवपालक्षणं यज्ञसम्भारमाहार्षीदित्यर्थः । तथा च शाखान्तरे समाम्नातं– 'यद्वल्मीकवपासम्भारो भवति ऊर्जमेव रसं पृथिव्या अवरुन्धे' (तै.ब्रा. १.१.३.४) इति ॥

**अनुव्रताय** । अनुकूलं व्रतं यस्य । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । **श्नथयन्** । 'श्नथ हिंसायाम्' णिचि घटादित्वात् मित्त्वे 'मितां ह्रस्वः' इति ह्रस्वत्वम् । **वर्धतः** । व्यत्ययेन परस्मैपदम् । **इनक्षतः** 'नक्ष गतौ' । इकारोपजनश्छान्दसः । यद्वा । इनक्षतिर्गत्यर्थः प्रकृत्यन्तरम् अन्वेष्टव्यम् । **स्तवानः** 'सम्यानच् स्तुवः' (उ.सू.२.२४६) इति स्तौतेर्बहुलवचनात् निरुपपदादपि आनच्प्रत्ययः । व्यत्ययेनाद्युदात्तत्वम् । **जघान** । 'अभ्यासाच्च' इति अभ्यासादुत्तरस्य हन्तेर्हकारस्य कुत्वम् । **सन्दिहः** 'दिह उपचये' । 'कृत्यल्युटो बहुलम्' इति बहुलवचनात् कर्मणि क्विप् । कृदुत्तरपदप्रकृतिस्वरत्वम् ॥ ९ ॥

**सिद्धाञ्जनम्–** य **इन्द्रः अनुव्रताय** अनुकूलकर्मणे यजमानाय । **अपव्रतान्** अपगतकर्मणः यज्ञविरोधिनः **रन्धयन्** हिंसां प्रापयन् । तथा **आभूभिः** आभिमुख्येन भवन्तीति आभुवः अनुकूला भक्ताः तैः । **अनाभुवः** तद्विपरीतान् यज्ञप्रतिकूलान् देवद्विषः **श्नथयन्** हिंसयन् वर्तते तस्येन्द्रस्येति सम्बन्धः । **वृद्धस्य चित्** देवतात्मत्वात् पूर्वमेव विश्वाधिकाराय प्रादुर्भूतात् वृद्धस्यापि **वर्धतः** पुनर्वर्धमानस्य । यजमाने पुनर्लब्धजन्मानो हि देवाः यजनेन स्तोत्रेण च वर्धन्ते । **द्याम्** द्युलोकम् । **इनक्षतः** प्राप्नुवतः । यजमाने प्रादुर्भूय दिवमारोहत इत्यर्थः । तथाभूतस्य इन्द्रस्य **स्तवानः** स्तुतिं कुर्वन् **वम्रः** स्तुत्युद्गिरणशीलः सिद्धः स्तोता, तस्य निदर्शनभूतो वम्रसंज्ञक ऋषिः । **सन्दिहः** सम्यगुपचितान् वप्रवदवस्थितानन्तरायान् **वि जघान** विहतवान् । स्तोत्रोद्गारशीलो वम्रः स्तोता इन्द्रं स्तुवन् तत्प्रसादमहिम्ना क्षुद्रपर्वतवद् अवस्थितान् अन्तरायान् पर्यहार्षीदित्यर्थः । ऋचोऽस्यास्तात्पर्यं दुर्घटं मन्यन्ते नव्याः । तत्र मुख्यं कारणं सायणव्याख्यानम् । यत्र हि पङ्क्तिरियं दृश्यते ''वम्रः सन्दिहो विजघान'' 'स्तुत्युद्गिरणशीलः एतत्संज्ञक ऋषिः सम्यगुपचिता वल्मीकवपाः जघान । इन्द्रेण परिहृतान्तरायः सन् पृथिव्याः सारभूतं वल्मीकवपालक्षणं यज्ञसम्भारम् अहार्षीदित्यर्थः' । किमपि ब्राह्मणवाक्यम् अस्य तात्पर्यस्याधारतयोदाहरति सायणः । अमूलम् अप्रकृतं चेदं कथनं मन्त्रार्थविचारे व्याकुलतामेवाधत्त इति नात्र चित्रम् । सायणव्याख्यायामेवोपक्षिप्तान् अर्थान् कतिचनोपादाय तात्पर्यमुपपादितम् अस्माभिः ॥

**अनुव्रताय** अनुकूलं व्रतं यस्य तस्मै । **श्नथयन्** 'श्नथ हिंसायाम्' । **वर्धतः**– व्यत्ययेन परस्मैपदम् । **इनक्षतः**– 'नक्ष गतौ' इकारोपजनः छान्दसः । **सन्दिहः** 'दिह उपचये' 'कृत्यल्युटो बहुलम्' इति बहुलवचनात् कर्मणि क्विप्, सन्दिह्यन्ते समुपचीयन्ते इति सन्दिहः ।। ९ ।।

## ऋक्संहिता पदपाठसहिता

**तक्षद्यत्त उशना सहसा सहो वि रोदसी मज्मना बाधते शवः ।**
**आ त्वा वातस्य नृमणो मनोयुज आ पूर्यमाणमवहन्नभि श्रवः ।। १० ।।**
तक्षत् । यत् । ते । उशना । सहसा । सहः । वि । रोदसी इति । मज्मना । बाधते । शवः । आ । त्वा । वातस्य । नृऽमनः । मनःऽयुजः । आ । पूर्यमाणम् । अवहन् । अभि । श्रवः ।। १० ।।

**स्कन्द**– तक्षत् तक्षतिः करोतिकर्मा (या.४,१९) । शुद्धोऽपि चात्र .... ..... ..... ।।

**वेङ्कटमाधव**– यदा तव बलम्, **उशना** स्तुतिबलेन समस्करोत् तदा महत्तया द्यावापृथिव्यौ **वि बाधते** । तदानीं त्वाम् अश्वाः **वातस्य** श्रवणम् **अभि आ वहन्** बलेन **आ पूर्यमाणम् नृमणः** मनोवेगाः । शुष्णान्महान् वातो निर्गतस्तमभ्यावहन्निति ।। १० ।।

**मुद्गल**– हे इन्द्र! **यत्** यदा **उशना** काव्यः । **सहसा** आत्मीयेन बलेन । **ते सहः** त्वदीयं बलम् । **तक्षत्** तनूकृतवान् । सम्यक् तीक्ष्णम् अकार्षीदित्यर्थः । तदा **शवः** त्वदीयं बलम् । **मज्मना** सर्वस्य शोधकेन स्वतैक्ष्ण्येन **रोदसी** द्यावापृथिव्यौ **वि बाधते** । ते भीते इत्यर्थः । हे **नृमणः!** नृषु रक्षितव्येषु यजमानेषु अनुग्रहबुद्धियुक्त! इन्द्र! **आ पूर्यमाणम्** पूर्वोक्तेन बलेन आ समन्तात् पूर्यमाणम्, **त्वा** त्वाम्, **मनोयुजः** मनोव्यापारमात्रेण युक्ताः **वातस्य** वायोः सम्बन्धिनः । तद्वद्वेगेन गच्छन्त इत्यर्थः । एवम्भूता अश्वाः **श्रवः अभि** हविर्लक्षणमन्नम् अभिलक्ष्य **आ अवहन्** आभिमुख्येन प्रापयन्तु ।। १० ।।

**सायण**– हे इन्द्र! **यत्** यदा **उशना** काव्यः । **सहसा** आत्मीयेन बलेन । **ते सहः** त्वदीयं बलम् । **तक्षत्** तनूकृतवान् । सम्यक् तीक्ष्णम् अकार्षीदित्यर्थः । तदा **शवः** त्वदीयं बलम् । **मज्मना** सर्वस्य शोधकेन स्वतैक्ष्ण्येन **रोदसी** द्यावापृथिव्यौ **वि बाधते** । ते बिभीतः इत्यर्थः । तथा चान्यत्राम्नातं–'यस्य शुष्माद्रोदसी अभ्यसेताम्' (ऋ.सं.२.१२.१) इति । यद्वा । रोदसी

यस्माद्वृत्रादेः बिभीतः तं बाधते इत्यर्थः । हे **नृमणः** नृषु रक्षितव्येषु यजमानेषु अनुग्रहबुद्धियुक्त इन्द्र! **आ पूर्यमाणम्** पूर्वोक्तेन बलेन आ समन्तात् पूर्यमाणम्, **त्वा** त्वाम्, **मनोयुजः** मनोव्यापारमात्रेण युक्ताः **वातस्य** वायोः सम्बन्धिनः । तद्वद्वेगेन गच्छन्त इत्यर्थः । एवम्भूता अश्वाः **श्रवः अभि** हविर्लक्षणमन्नम् अभिलक्ष्य **आ अवहन्** आभिमुख्येन प्रापयन्तु ।।

**तक्षत्** 'तक्षू त्वक्षू तनूकरणे' लङि, 'बहुलं छन्दस्यमाङ्योगेऽपि' इति अडभावः । शपः पित्त्वादनुदात्तत्वे धातुस्वरः शिष्यते । **उशना** 'वश कान्तौ' 'वशेः कनसिः' (उ.सू.४.६७८) इति कनस् । 'ग्रहिज्या' इत्यादिना सम्प्रसारणम् । 'ऋदुशनस्पुरुदंसोऽनेहसां च' (पा.सू.७.१.९४) इति अनङादेशः । 'सर्वनामस्थाने च' (पा.सू.६.४.८) इति उपधादीर्घत्वम् । हल्ङ्याादि-नलोपौ । **मज्मना** 'टुमस्जो शुद्धौ' औणादिको मनिप्रत्ययः । **नृमणः** 'छन्दस्यृदवग्रहात्' इति णत्वम् । **अवहन्** 'छन्दसि लुङ्लङ्लिटः' इति प्रार्थनायां लङ् ।। १० ।।

**सिद्धाञ्जनम्–** हे इन्द्र! **यत्** यदा **उशना** कामयमानः, कान्तः, काव्यः कवेः जातः उशनस्संज्ञक ऋषिः । **सहसा** स्वीयेन बलेन **ते** तव **सहः** बलं **तक्षत्** तनूकृतवान् तीक्ष्णीकुर्यात् तदा त्वदीयं **शवः** दीप्तं बलं **मज्मना** शोधकेन ओजसा । **रोदसी** द्यावापृथिव्यौ **वि बाधते** क्षोभयति । इन्द्रस्य बलं सर्वक्षोभणमिति बलोत्कर्षविवक्षा । हे **नृमणः!** नृषु अनुग्राह्येषु यजमानेषु अनुग्रहबुद्धियुक्त हे इन्द्र! **आ पूर्यमाणम्** समन्तात् पूर्यमाणं बलेनेति शेषः । **त्वा** त्वाम् **मनोयुजः** मनसा युक्ताः त्वदीयेच्छामात्रेण प्रयुक्ताः गतिवेगोपलक्षणभूता अश्वाः **वातस्य** वायोः सम्बन्धिना बलवेगेन **श्रवः** श्रवणं, अन्तर्दिव्यां वा श्रुतिं **अभि** अभिलक्ष्य **आवहन्** वहन्तु । मनोयुजोऽश्वास्त्वां वातवेगेन अस्माकं श्रवणसम्पत्तये आवहन्त्वित्युक्तम् ।। **उशना**– उशनाः काव्य ऋषिः, अन्तर्यागे मन्त्रद्रष्टुः कवेः सञ्जातः, देवान् अत्यन्तं कामयमानो यजमानः, तथाभूतस्य निदर्शनभूतस्तत्संज्ञक ऋषिः । 'वश कान्तौ' वशेः कनस्, अनङादेशः । **तक्षत्**–'तक्षू तनूकरणे' लङ्, अडभावः । **मज्मना** 'टु मस्जो शुद्धौ' औणादिको मनिप्रत्ययः । **नृमणः**–गतम् । **अवहन्**–छन्दसि प्रार्थनायां लङ् ।। १० ।।

**।। इति प्रथमाष्टके चतुर्थाध्याये दशमो वर्गः ।।**

## ।। अथ एकदशो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

**मन्दिष्ट यदुशने काव्ये सचाँ इन्द्रो वङ्कू वङ्कुतराधि तिष्ठति । उग्रो ययिं निरपः स्रोतसासृजद्वि शुष्णस्य दृंहिता ऐरयत्पुरः ।। ११ ।।**

**मन्दिष्ट । यत् । उशने । काव्ये । सचा । इन्द्रः । वङ्कू इति । वङ्कुऽतरा । अधि । तिष्ठति । उग्रः । ययिम् । निः । अपः । स्रोतसा । असृजत् । वि । शुष्णस्य । दृंहिताः । ऐरयत् । पुरः ।। ११ ।।**

**स्कन्द–** इतः आरभ्यः चतुर्दशमन्त्रपर्यन्तम् अस्य व्याख्यानं नोपलब्धम् ।। ११ ।।

**वेङ्कटमाधव–** कविपुत्रे उशनसि स्तोत्रेण यदा सहाय इन्द्रः **मन्दिष्ट** तदानीम् इन्द्रः वङ्कू वङ्कुतरौ अश्वौ गमनार्थम् अध्यतिष्ठत् । अथ उद्गूर्ण इन्द्रः मेघरूपं शुष्णासुरम् स्रोतसा **अपः** निरसृजत् । **वि ऐरयत्** शुष्णासुरस्य शिलासङ्घटिताः पुरः ।। ११ ।।

**मुद्गल– यत्** यदा **इन्द्रः, उशने** कामयमाने **काव्ये सचा** सह **मन्दिष्ट** स्तुतोऽभूत् । तदानीम् **वङ्कू वङ्कुतरा** अतिशयेन कुटिलं गच्छन्तावश्वौ **अधि तिष्ठति** । रथे सयोज्य तमारोहतीत्यर्थः । **उग्रः** उद्गूर्णः तादृश इन्द्रः, **ययिम्** गमनयुक्तात् मेघात् **स्रोतसा** प्रवाहरूपेण **अपः निः असृजत्** जलानि निरगमयत् । तथा **शुष्णस्य** सर्वस्य शोषयितुः असुरस्य **दृंहिता** प्रवृद्धाः **पुरः** नगराणि निवासस्थानानि **वि ऐरयत्** विविधं प्रेरितवान् ।। ११ ।।

**सायण– यत्** यदा **इन्द्रः, उशने** कामयमाने **काव्ये सचा** सह **मन्दिष्ट** स्तुतोऽभूत् । तदानीम् **वङ्कू वङ्कुतरा** अतिशयेन कुटिलं गच्छन्तावश्वौ **अधि तिष्ठति** । रथे सयोज्य तमारोहतीत्यर्थः । यद्वा **वङ्कुतरा** अतिशयेन वक्रं गच्छति रथे **वङ्कू** वक्रगमनशीलावश्वौ संयोज्यति योजनीयम् । **उग्रः** उद्गूर्णस्तादृशः इन्द्रः **ययिं** गमनयुक्तात् **स्रोतसा** प्रवाहरूपेण **अपः निः असृजत्** जलानि निरगमयत् । तथा **शुष्णस्य** सर्वस्य शोषयितुः असुरस्य **दृंहिता** प्रवृद्धाः **पुरः** नगराणि निवासस्थानानि **वि ऐरयत्** विविधं प्रेरितवान् ।।

**मन्दिष्ट** 'मदि स्तुतिमोदमदस्वप्रकान्तिगतिषु' लुङि, 'बहुलं छन्दस्यमाङ्योगेऽपि' इति अडभावः । **उशने** । वशेः औणादिकः क्युप्रत्ययः । 'ग्रहिज्या'दिना सम्प्रसारणम् । योरनादेशः ।

**सचा** 'पच समवाये' सम्पदादिलक्षणो भावे क्विप् । 'आङ्याजयारां चोपसङ्ख्यानम्' (पा.म. ७.१.३९.१) इति विभक्तेः आङादेशः । संहितायां 'आङोऽनुनासिकश्छन्दसि' (पा.सू.६.१. १२६) इति तस्य सानुनासिकत्वम् । **वङ्कू** 'वञ्चु गतौ' औणादिक उप्रत्ययः । बहुलवचनात् कुत्वम् । **वङ्कुतरा** अतिशयेन वङ्कू वङ्कुतरा । 'सुपां सुलुक्' इति विभक्तेः आकारः । अत्र गतिसामान्यवाचिना गतिविशेषो लक्ष्यते । **ययिम्** 'या प्रापणे' 'आदृगम हनजनः' इति किप्रत्ययः । लिड्वद्भावात् द्विर्वचनह्रस्वत्वे । 'आतो लोप इटि च' इति आकारलोपः । प्रत्ययस्वरः । 'सुपां सुपो भवन्ति' इति पञ्चम्या अमादेशः । **दृंहिताः** । 'दृहि वृद्धौ' इदित्त्वा-न्नुम् । **ऐरयत्** 'ईर प्रेरणे' चौरादिकः । लङि आडागमः । 'आटश्च' (पा.सू.६.१.९०) इति वृद्धिः ।। ११ ।।

**सिद्धाञ्जनम्– यत्** यदा **इन्द्रः उशने काव्ये** कामयमाने, यजमाने, (कवेर्जाते ऋषौ काव्यसंज्ञके च समन्वेतव्यः) **सचा** सह **मन्दिष्ट** मुदितो भवति तदा **वङ्कू वङ्कुतरा** अतिशयेन कुटिलौ अश्वौ, अत्यन्तवेगेन गमनात् कौटिल्यमिन्द्राश्वयोः, न तु मार्गादपयानं, गमनेऽनृजुता वा वक्रार्थकवङ्कुशब्देन ग्राह्या । तथा अन्यत्रापि 'वङ्कुं कविं यज्ञसाधम्' (१.११४.४) इत्यादौ अत्यन्तशीघ्रगतिको यज्ञसाधकः कविरिति विवक्षितः, न तु कुटिल इति । तथाभूतौ अश्वौ **अधितिष्ठति** अधिरोहति । **उग्रः** उद्गूर्णस्तादृश ओजस्वी इन्द्रः **ययिम्** गमनयुक्तात् मेघात्, विभक्तिव्यत्ययः । **स्रोतसा** प्रवाहरूपेण **अपः** जलानि **निरसृजत्** निर्गमितवान् । तथा **शुष्णस्य** शोषयितुरसुरस्य **दृंहिताः** प्रवृद्धाः **पुरः** पुराणि **व्यैरयत्** विविधं प्रेरितवान् । विभिन्नानि खण्डशः करोतीत्यर्थः ।। इदमुक्तं भवति । कामयमाने यजमाने तेन सह यदा मुदितो भवतीन्द्रः तदा अत्यन्तशीघ्रगतिकौ स्वीयौ हरी अधिष्ठाय ज्योतिर्बलादिवाहिनीः अप्छब्दलक्षिताः शक्तीः तदावरकाद् ययिशब्दवाच्याद् विमोचयति । रसानां शोषकस्यासुरविभवस्य दुर्गस्थानानि ध्वंसयति च । ययिपदप्रयोगेण अपां विमोचनाय प्रत्यासन्ना दशा सूच्यते, न तु घनीभूततमोरूपोऽद्रिभूतो भवति 'ययिः' ।। **मन्दिष्ट**–'मदिः मोदार्थे' लुङ् लडर्थे । **वङ्कू** 'वकि कौटिल्ये' औणादिकः उप्रत्ययः । **ययिम्**– 'या प्रापणे' किप्रत्ययः । **दृंहिताः**– 'दृहि वृद्धौ' इदित्वान्नुम् ।। ११ ।।

## ऋक्संहिता पदपाठसहिता

**आ स्मा रथं वृषपाणेषु तिष्ठसि शार्यातस्य प्रभृता येषु मन्दसे ।**
**इन्द्र यथा सुतसोमेषु चाकनोऽनर्वाणं श्लोकमा रोहसे दिवि ।। १२ ।।**
आ । स्म । रथम् । वृषऽपानेषु । तिष्ठसि । शार्यातस्य । प्रऽभृताः । येषु । मन्दसे ।
इन्द्र । यथा । सुतऽसोमेषु । चाकनः । अनर्वाणम् । श्लोकम् । आ । रोहसे । दिवि ।।

**स्कन्द–** ............. ।। १२ ।।

**वेङ्कटमाधव– आ तिष्ठसि रथम्** सोमपानार्थम् । **शार्यातस्य** अनिन्द्रं सोमम् आजिहीर्षतो हविर्धानात् **प्रभृताः** सोमाः । **येषु** त्वम् **मन्दसे** । ततो रथमास्थितवानसि । ततो यथाऽन्येषु **सुतसोमेषु** सोमं कामितवान् असि । त्रन्तावप्रस्खलितम् **श्लोकम् दिवि** आरोहयस्तत्रापि पानादिति ।। १२ ।।

**मुद्गल–** अत्र कौषीतकिन इतिहासमाचक्षते– शार्यातनाम्नो राजर्षेः यज्ञे भृगुगोत्रोत्पन्नः च्यवनो महर्षिः आश्विनं ग्रहमगृह्णात् । इन्द्रस्तं दृष्ट्वा क्रुद्धोऽभूत् । तमिन्द्रमनुनीय पुनः सोमं तस्मै प्रादादित्यर्थोऽत्र प्रतिपाद्यते ।

हे **इन्द्र!** त्वम् **वृषपाणेषु** वृष्णः सेचनसमर्थस्य सोमस्य पानानि वृषपाणानि तेषु निमित्त भूतेषु । **रथम् आ तिष्ठति स्म** । स्वयमेव रथमारुह्य गच्छसि, न त्वन्यः कश्चित् प्रवर्तयितेति भावः । एवं च सति **येषु** सोमेषु त्वम् **मन्दसे** हर्षं प्राप्नोषि, तादृशाः सोमाः **शार्यातस्य** एतन्नाम्नो राजर्षेः सम्बन्धिनः **प्रभृताः** प्रकर्षेण सम्पादिताः । अभिषवादिसंस्कारैः संस्कृता इत्यर्थः । अतः **सुतसोमेषु** अभिषुतसोमयुक्तेषु अन्यदीयेषु यज्ञेषु **यथा चाकनः** यथा कामयसे एवम् अस्यापि शार्यातस्य सोमान् कामयस्व । तथा सति **दिवि** द्युलोक **अनर्वाणम्** गमनरहितं स्थिरम् **श्लोकम्** स्तोत्रलक्षणं वचः **आ रोहसे** प्राप्नोषि ।। १२ ।।

**सायण–** अत्र कौषीतकिन इतिहासमाचक्षते– शार्यातनाम्नो राजर्षेर्यज्ञे भृगुगोत्रोत्पन्नश्च्यवनो महर्षिराश्विनं ग्रहम् अगृह्णात् । इन्द्रस्तं दृष्ट्वा क्रुद्धोऽभूत् । तमिन्द्रम् अनुनीय पुनः सोमं तस्मै प्रादादिति । अयमर्थोऽस्यां प्रतिपाद्यते । हे **इन्द्र!** त्वम् **वृषपाणेषु** वृष्णः सेचनसमर्थस्य सोमस्य पानानि वृषपाणानि तेषु निमित्तभूतेषु । **रथम् आ तिष्ठति स्म** । स्वयमेव रथमारुह्य गच्छसि,

न त्वन्यः कश्चित् प्रवर्तयितेति भावः । एवं च सति **येषु** सोमेषु त्वम् **मन्दसे** हर्षं प्राप्नोषि, तादृशाः सोमाः **शार्यातस्य** एतन्नाम्नो राजर्षेः सम्बन्धिनः **प्रभृताः** प्रकर्षेण सम्पादिताः । अभिषवादिसंस्कारैः संस्कृता इत्यर्थः । अतः **सुतसोमेषु** अभिषुतसोमयुक्तेषु अन्यदीयेषु यज्ञेषु **यथा चाकनः** यथा कामयसे एवम् अस्यापि शार्यातस्य सोमान् कामयस्व । तथा सति **दिवि** द्युलोक **अनर्वाणम्** गमनरहितं स्थिरम् **श्लोकम्** स्तोत्रलक्षणं वचः यशो वा **आ रोहसे** प्राप्नोषि । यद्वा । इमं यजमानं दिवि द्युलोके उक्तलक्षणं यशः प्रापयसि ।।

**स्म** । 'निपातस्य च' इति दीर्घत्वम् । **वृषपाणेषु** 'पा पाने' भावे ल्युट् । 'वा भावकरणयोः' (पा.सू.८.४.१०) इति पूर्वपदस्थान्निमित्तादुत्तरस्य पानशब्दनकारस्य णत्वम् । **प्रभृताः** 'भृञ् भरणे' कर्मणि निष्ठा । 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् । **मन्दसे** 'मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु' । अदुपदेशात् लसार्वधातुकानुदात्तत्वे धातुस्वरः । **चाकनः** । 'कन दीप्तिकान्तिगतिषु' । अत्र कान्त्यर्थः । कान्तिश्चाभिलाषः । लेटि सिपि अडागमः । 'बहुलं छन्दसि' इति शपः श्लुः । तुजादित्वात् अभ्यासस्य दीर्घत्वम् । 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' इति अभ्यस्तस्य आद्युदात्तत्वाभावे 'धातोः' इति धात्वन्तस्योदात्तत्वम् । **अनर्वाणम्** । अर्तेः 'अन्येभ्योऽपि दृश्यन्ते' इति दृशिग्रहणाद्भावे वनिप् । नञा बहुव्रीहौ अमि 'अर्वणस्त्रसावनञः' इति पर्युदासात् तृआदेशाभावे 'सर्वनामस्थाने च' इति उपधादीर्घत्वम् । 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । **श्लोकम्** 'श्लोकृ सङ्घाते' । श्लोक्यते इति श्लोकः । कर्मणि घञ् । ञित्त्वादाद्युदात्तत्वम् । **रोहसे** । रुहेः व्यत्ययेन आत्मनेपदम् ।। १२ ।।

**सिद्धाञ्जनम्–** हे **इन्द्र!** त्वं, **वृषपाणेषु** वृष्णः सेचनशीलस्य सोमस्य पानेषु निमित्तभूतेषु । **रथम्, आ तिष्ठसि स्म** स्वयमेव रथारूढो गच्छसि । यत्र सोमः सुतो भवति तत्र स्वयमेवागत्य यजमानम् अनुगृह्णासि दिव्यारोहाय, यजमानस्य सोमाभिषवान्नान्यस्तव प्रवर्तयिता अपेक्ष्यत इत्यर्थः । **येषु** सोमेषु त्वं **मन्दसे** मोदसे तादृशाः । **शार्यातस्य योद्धुः** मानवस्य यजमानस्य सम्बन्धिनः **प्रभृताः** प्रकर्षेण सम्पादिताः । तस्मात् **सुतसोमेषु** अभिषुतसोमसम्पन्नेषु यज्ञेषु **यथा** येन प्रकारेण **चाकनः** सोमान् कामयसे तथा अत्रापि कामयस्व । तथा कृते सति, **दिवि** द्युलोके **अनर्वाणम्** गमनरहितं स्थिरतरं **श्लोकम्** स्तोत्रलक्षणं वचो यशो वा **आरोहसे** प्राप्नोषि' इति सायणः, यजमानं दिवि स्थिरं यशः प्रापयसीति वा ।। अत्रेदम् अवधेयम् । अर्वा अश्वः

वाहनभूतः, अनर्वेति श्लोकविशेषणं, बहुव्रीहिः, न विद्यते अर्वा यस्य सः श्लोकः स्तोत्रेऽपि वर्तते । द्युलोकं प्रति प्रापणसाधनान्तरनिरपेक्षं स्तोत्रं यशो वा इन्द्रः यजमानमुपगतः स्वयं आरोहयति ॥

**स्म**–निपातस्य दीर्घत्वं संहितायाम् । **वृषपाणेषु** 'पा पाने' भावे ल्युट्, 'वा भावकरण-यो'रिति उत्तरपदस्थस्य नस्य णत्वम् । **मन्दसे**–'मदि मोदार्थे' । **चाकनः**–'कनी कान्त्यर्थे' कान्तिश्चाभिलाषः, शपः श्लुः छन्दसि, अन्यदुक्तम् । **श्लोकम्**–श्लोक्यत इति श्लोकः, 'श्लोकृ सङ्घाते' । **रोहसे**–व्यत्ययेन आत्मनेपदम्, अन्तर्भावितण्यर्थश्च अर्थान्तरपक्षे ॥ शार्यातः राजर्षिरिति ब्राह्मणमुदाहृत्य व्याचष्टे सायणः । शर्यातिरपत्यं शार्यातो मनुसन्ततिरिति चैके । शरवत् शर्योऽपि बाणार्थे वेदे, शर्यो योद्धा च बाणैः । शर्यहा बाणैः शत्रूणां हन्ता इत्यन्यत्र सायणीयम् अवधेयम् । आर्यः अरणशीलः नित्योद्योगी, यजमानः सर्वोऽपि यज्ञशत्रुभिः योद्धा भवति । ऐतिहासिकः शर्यातिः शार्यातो वा देवपक्षपाती योद्धृत्वनिदर्शनभूत इति बोध्यम् ॥

## ऋक्संहिता पदपाठसहिता

**अददा अर्भां महते वचस्यवे कक्षीवते वृचयामिन्द्र सुन्वते ।**
**मेनाभवो वृषणश्वस्य सुक्रतो विश्वेत्ता ते सवनेषु प्रवाच्या ॥ १३ ॥**
अददाः । अर्भाम् । महते । वचस्यवे । कक्षीवते । वृचयाम् । इन्द्र । सुन्वते । मेना । अभवः । वृषणश्वस्य । सुक्रतो इति सुऽक्रतो । विश्वा । इत् । ता । ते । सवनेषु । प्रऽवाच्या ॥ १३ ॥

**स्कन्द–** ................. ॥ १३ ॥

**वेङ्कटमाधव–** दत्तवानसि कन्याम् **महते** स्तुतिवच इच्छते । **कक्षीवते वृचयाम्** नाम भार्याम् **इन्द्र! सुन्वते** । तथा **मेना** च **अभवः वृषणश्वस्य सुक्रतो!** विश्वानि तानीमानि ते यज्ञेषु प्रवाच्यानि । अत्र शाठ्यायनकम्–'वृषणश्वस्य मेने इति । वृषणश्वस्य ह मेना भूत्वा मघवा कुल उवास' (जैमि.२,७९) इति । अथ ताण्ड्यकम्–'वृषणश्वस्य मेनं इति । वृषणश्वस्य ह मेनस्य मेनका नाम दुहिताऽऽस । तां हेन्द्रश्चकमे' (ष. ब्रा.२.१) इति । वृषणश्वस्य राज्ञो मेना नाम दुहिता त्वम् अभवः स्वांशेन । अथ तां चकमे चेन्द्र इत्यर्थः ॥ १३ ॥

**मुद्गल–** अत्रेयमाख्यायिका– अङ्गराजः कस्मिंश्चिद्दिवसे स्वकीयाभिर्योषिद्भिः सह गङ्गायां जलक्रीडां चक्रे । तस्मिन् समये दीर्घतमा नाम ऋषिः स्वभार्यया पुत्रभृत्यादिभिश्च दुर्बलत्वात् किमपि कर्तुं न शक्नोतीति द्वेषेण गङ्गामध्ये प्रचिक्षिपे । स च ऋषिः केनचित् प्लवेन अङ्गराजस्य क्रीडादेशं प्रति समाजगाम । स च राजा सर्वज्ञं तम् ऋषिम् अवगत्य प्लवादवतार्यैवम् अवोचत् । 'हे भगवन्! मम पुत्रो नास्ति, एषा महिषी, अस्यां कश्चित् पुत्रमुत्पादय' इति । स च तथेत्यत्रब्रवीत् । सा महिषी तु राजानं प्रति तथेत्युक्त्वाऽयं वृद्धतरो जुगुप्सितो मम योग्यो न भवतीति बुद्ध्या स्वकीयामुशिक्संज्ञां दासीं प्राहैषीत् । तेन च सर्वज्ञेन ऋषिणा मन्त्रपूतेन वारिणाऽभ्युक्षिता सती सैव ऋषिपत्नी बभूव । तस्यामुत्पन्नः कक्षीवान्नाम ऋषिः । स एव राज्ञः पुत्रोऽभूत् । स च बहुविधेन राजसूयादिना ईजे । तस्मै राज्ञे तत्कृतैः यज्ञैः परितुष्ट इन्द्रो वृचयाख्यां तरुणीं योषितं प्रादात् । अयमर्थः पूर्वार्धे प्रतिपाद्यते । हे **इन्द्र!** त्वम् **महते** प्रवृद्धाय **वचस्यवे** त्वदीयस्तोत्रलक्षणं वच आत्मन इच्छते **सुन्वते** त्वद्देवताकेषु यज्ञेषु सोमाभिषवं कुर्वते **कक्षीवते** एतान्नाम्ने राज्ञे । **वृचयाम्** वृचयाख्याम् **अर्भाम्** अल्पाम् । युवतिमित्यर्थः । एवम्भूतां स्त्रियम् **अददाः** दत्तवानसि । तथा **सुक्रतो** शोभनकर्मन्! हे इन्द्र! त्वम् **वृषणश्वस्य** एतदाख्यस्य राज्ञः **मेना अभवः** मेना नाम कन्यका अभूः । तां च प्राप्तयौवनां स्वयमेवेन्द्रश्चकमे । अतः उक्तरूपाणि यानि कर्माणि त्वया कृतानि, **ते ता** त्वदीयानि तानि **विश्वा इत्** सर्वाण्येव **सवनेषु** यज्ञेषु **प्रवाच्या** प्रकर्षेण वक्तव्यानि । स्तुतिभिः स्तोतव्यानीत्यर्थः ।। १३ ।।

**सायण–** अत्रेयमाख्यायिका– अङ्गराजः कस्मिंश्चिद्दिवसे स्वकीयाभिर्योषिद्भिः सह गङ्गायां जलक्रीडां चक्रे । तस्मिन् समये दीर्घतमा नाम ऋषिः स्वभार्यया पुत्रभृत्यादिभिश्च दुर्बलत्वात् किमपि कर्तुं न शक्नोतीति द्वेषेण गङ्गामध्ये प्रचिक्षिपे । स च ऋषिः केनचित् प्लवेन अङ्गराजस्य क्रीडादेशं प्रति समाजगाम । स च राजा सर्वज्ञं तम् ऋषिम् अवगत्य प्लवादवतार्यैवम् अवोचत् । 'हे भगवन्! मम पुत्रो नास्ति, एषा महिषी, अस्यां कश्चित् पुत्रमुत्पादय' इति । स च तथेत्यत्रब्रवीत् । सा महिषी तु राजानं प्रति तथेत्युक्त्वाऽयं वृद्धतरो जुगुप्सितो मम योग्यो न भवतीति बुद्ध्या स्वकीयामुशिक्संज्ञां दासीं प्राहैषीत् । तेन च सर्वज्ञेन ऋषिणा मन्त्रपूतेन वारिणाऽभ्युक्षिता सती सैव ऋषिपत्नी बभूव । तस्यामुत्पन्नः कक्षीवान्नाम ऋषिः । स एव राज्ञः पुत्रोऽभूत् । स च बहुविधेन राजसूयादिना ईजे । तस्मै राज्ञे तत्कृतैः यज्ञैः परितुष्ट इन्द्रो वृचयाख्यां तरुणीं योषितं प्रादात् । अयमर्थः पूर्वार्धे प्रतिपाद्यते ।

हे **इन्द्र!** त्वम् **महते** प्रवृद्धाय **वचस्यवे** त्वदीयस्तोत्रलक्षणं वच आत्मन इच्छते **सुन्वते** त्वद्देवताकेषु यज्ञेषु सोमाभिषवं कुर्वते **कक्षीवते** एतान्नाम्ने राज्ञे । **वृचयाम्** वृचयाख्याम् **अर्भाम्** अल्पाम् । युवतिमित्यर्थः । एवम्भूतां स्त्रियम् **अददाः** दत्तवानसि । तथा **सुक्रतो** शोभनकर्मन्! शोभनप्रज्ञ वा हे इन्द्र! त्वं **वृषणश्वस्य** एतदाख्यस्य राज्ञः **मेनाऽभवः** मेना नाम कन्यकाऽभूः । तथा च शाट्यायनिभिः सुब्रह्मण्यामन्त्रैकदेशव्याख्यानरूपं ब्राह्मणमेवमाम्नायते– 'वृषणश्वस्य मेन इति वृषणश्वस्य मेना भूत्वा मघवा कुल उवास' इति । तां च प्राप्तयौवनां स्वयमेवेन्द्रश्चकमे । तथा च ताण्डिभिराम्नातं– 'वृषणश्वस्य मेना नाम दुहितास । तामिन्द्रश्चकमे' इति । अतः उक्तरूपाणि यानि कर्माणि त्वया कृतानि, **ते ता** त्वदीयानि तानि **विश्वा इत्** सर्वाण्येव **सवनेषु** यज्ञेषु **प्रवाच्या** प्रकर्षेण वक्तव्यानि । स्तुतिभिः स्तोतव्यानीत्यर्थः ॥

**महते** 'बृहन्महतोरुपसङ्ख्यानम्' इति विभक्तेरुदात्तत्वम् । **वचस्यवे** । 'सुप आत्मनः क्यच्' । 'क्याच्छन्दसि' इति उप्रत्ययः । **कक्षीवते** । अश्वबन्धनहेतवो रज्जवः कक्ष्याः । 'कक्षीवान् कक्ष्यावान्' (निरु.६.१०) इति यास्कः । 'आसन्दीवदष्ठीवच्चक्रीवत्कक्षीवत्' (पा.सू.८.२.१२) इति सम्प्रसारणं मतुपो वत्वं च संज्ञायां निपात्यते । मेनेति स्त्रीनाम । 'मेना ग्नाः' (नि.रु.३.२१) इति पाठात् । 'मन ज्ञाने' । मन्यते गृहकृत्यं जानातीति मेना । पचाद्यच् । 'नशिमन्योरलिट्येत्वं वक्तव्यम्' (पा.सू.६.४.१२०.५) इति एत्वम् । वृषादि र्द्रष्टव्यः । 'मेना मानयन्त्येनाः' (निरु.३.२१) इति यास्कः । **सवनेषु** । सवनमिति यज्ञनाम । सूयतेऽभिषूयते एष्विति अधिकरणे ल्युट् । **प्रवाच्या** 'वच परिभाषणे' ण्यति 'यजयाचरुच प्रवचर्चश्च' (पा.सू.७.३.६६) इति कुत्वाभावः । तित्स्वरिते प्राप्ते व्यत्ययेनाद्युदात्तत्वम् । यद्वा, वाचयतेः 'अचो यत्' इति यत् । 'यतोऽनावः' इत्याद्युदात्तत्वम् । कृदुत्तरपदप्रकृतिस्वरत्वम् ॥ १३ ॥

**सिद्धाञ्जनम्–** हे **इन्द्र!** त्वं **महते** प्रवृद्धाय **वचस्यवे** स्तुतिलक्षणं वचः आत्मन इच्छते **सुन्वते** सोमाभिषवं कुर्वते **कक्षीवते** एतत्संज्ञकाय ऋषये, परदैवतरहस्यविज्ञानां निदर्शनभूताय (१.१८ अत्रोपपत्तिः प्रदर्शिता) **वृचयां** एतदाख्यां, वर्चोविलासक्षेत्रभूताम्, **अर्भाम्** तन्वीं स्त्रियम् । **अददाः** दत्तवानसि, ददासीति लडर्थे । महते कक्षीवते 'अर्भां' तत्तेजोविलासाय क्षेत्रभूतां शक्तिमल्पां ददासि इति, कक्षीवानृषिरधिकः पुरुषः, तत्प्रभावापेक्षया शक्तिरनधिका न्यूनैव भवति । तस्मान्नेह 'अर्भा अल्पे'ति निकृष्टार्थो विवक्षितः । तथा **सुक्रतो** शोभनकर्मन्! **वृषणश्वस्य** वृषणैः

सेचनसमर्थैरश्वैः प्राणबलोपलक्षणभूतैर्युक्तस्य (एवमेव अन्यत्र सायणीयम् ८.२०.१०) यजमानस्य, (राज्ञ इति सायणः किमपि ब्राह्मणस्थमाख्यानमवलम्ब्य) **मेना** स्त्री, शक्तिविलासक्षेत्रभूता । **अभवः** भवसीति लडर्थे । **ते ता** त्वदीयानि उक्तविधानि **विश्वा इत्** सर्वाण्येव वैभवानि **सवनेषु** यज्ञेषु **प्रवाच्या** प्रकर्षेण वक्तव्यानि स्तोतव्यानि ।।

अत्र कक्षीवदादीनां नाम्नामन्तर्योगेऽर्थान्तराण्युपपादितानि व्याख्यायाम् । वृचयाशब्दस्य सकृदेव ऋक्संहितायां प्रयोगात् । अत्र प्रतिपादितोऽर्थ ऊहमात्रम् । वर्चःसम्बन्धी वृचशब्द इति कृत्वा वृचं वर्चो याति वृचयाः तां वृचयामिति ब्रूमः । तथा नास्ति कष्टं मेनापदार्थनिर्णये 'मेना' स्त्री तन्नामसु पाठात् । 'मन ज्ञाने' इति धातोर्निष्पादयन्ति, 'मननीयां, मानयन्त्येनां' इत्यादि निर्वचनं पूर्वैरुक्तम् । यथा देवानां कारयितॄणां पुरुषाणां शक्तयः कार्यनिर्वाहिकाः कर्त्र्यः स्त्रियो भवन्ति ताश्च देवपत्न्य उच्यन्ते । एवं चिरन्तनार्षसम्प्रदाये यजमानस्य आवश्यक्यभूद् यजमानपत्नी । इदमेव रहस्यं मूलं भवति कर्मठव्यवहारप्रसिद्धस्य धर्मार्थं पत्नीति सम्प्रदायस्य । अर्वाक्तनेषु शक्तेर्वैशिष्ट्यमुद्घोषयत्सु शाक्तागमप्रामाणिकेषु इदमेव तत्त्वं मूर्धन्यभावेन मूर्छितं लक्ष्यते । इदमत्रावधेयम् । सर्वशक्तो भगवानिन्द्र एव 'कक्षीवते' समुचितां शक्तिभूतां 'वृचयां' अनुगृह्णाति । स शक्तः स्वयमेव शक्तिः स्त्री 'मेना' च भवति 'वृषणश्वस्य' । अन्यच्च तत्त्वानुसारेण धीमद्भिरनुसन्धेयम् । प्रवाच्या–'वच परिभाषणे' ण्यत्प्रत्ययः, 'यजयाचरुचप्रवचर्चश्च' इति कुत्वाभावः । अन्ये गताः ।। १३ ।।

**नीतिमञ्जरी–** निस्पृहदानदातारं स्तुवन्नाह–

**स इन्द्रादधिको दानं यो दद्यान्निस्पृहः पुमान् ।**
**इन्द्रोऽदाद्वृचयां पुत्रीं सुन्वते सोमवल्लभः ।।**

यः पुमान् पुरुषः निस्पृहः निर्गता स्पृहा यस्यासौ निस्पृहः । 'गोस्त्रियोरुपसर्जनस्य'(पा.सू. १.२.४८) स्पृहायाः ह्रस्वत्वम् । स्पृहां त्यक्त्वा दानं दद्यात् । स एष इन्द्रादधिको ज्ञेयः । इन्द्रोऽपि वृचयां कन्यां ददौ । तदाह (ऋ.१.५१.१३) (मन्त्र--अददा अर्भां..........प्रवाच्या) इन्द्रः **वृचयां** पुत्रीं आत्मजां सोमाकाङ्क्षया **सुन्वते** सोमाभिषवं कुर्वते **कक्षीवते** ऋषये वृचयाख्याम् **अर्भाम्** अल्पाम् । 'दर्भमर्भकमल्पस्य' इति यास्कः । (निघण्टु. ३.२)युवतिमित्यर्थः । एवंविधां पुत्रीम् **अददाः** अदाः । तथा **सुक्रतो** सुकर्मन् सुप्रज्ञ! वा । क्रतुः कर्मनामसु पठितः ।

(निघण्टु.२.१) प्रज्ञानामसु वा (निघण्टु.३.९) त्वं, **वृषणश्वस्य** राज्ञो **मेनाऽभवः** मेने नाम कन्याऽभूः । तथा शाट्यायनिभिः सुब्रह्मण्यायां मन्त्रैकदेशे ब्राह्मणमेवमाम्नायते 'वृषणश्वस्य मेन' इति । 'वृषणश्वस्य मेना भूत्वा मघवा कुलमुवासेति तां च प्राप्तयौवनां स्वयमेवेन्द्रश्चकमे' इति । 'वृषणश्वस्य मेना दुहिताऽऽस तामिन्द्रश्चकम' इति ताण्ड्ये स्पष्टमुक्तम् । अत उक्तानि कर्माणि **ते** त्वदीयानि तानि **विश्वेत्** सर्वाण्येव **सवनेषु** यज्ञेषु **प्रवाच्या** प्रकर्षेण वक्तव्यानि । स्तुतिभिर्वक्तव्यानीत्यर्थः ।। १३ ।।

## ऋक्संहिता पदपाठसहिता

**इन्द्रो॑ अश्रायि सु॒ध्यो॑ निरे॒के प॒ज्रेषु॒ स्तोमो॒ दुर्यो॒ न यूपः॑ । अ॒श्व॒युर्ग॒व्यू र॑थ॒युर्व॑सू॒युरिन्द्र॒ इद्रा॒यः क्ष॑यति प्र॒यन्ता ।। १४ ।।**

**इन्द्रः॑ । अ॒श्रा॒यि॒ । सु॒ऽध्यः॑ । नि॒रे॒के । प॒ज्रेषु॑ । स्तोमः॑ । दुर्यः॑ । न । यूपः॑ । अ॒श्व॒ऽयुः । ग॒व्युः । र॒थ॒ऽयुः । व॒सु॒ऽयुः । इन्द्रः॑ । इत् । रा॒यः । क्ष॒य॒ति॒ । प्र॒ऽय॒न्ता ।।**

**स्कन्द–** (एतावत्पर्यन्तं स्कन्दस्वामिभाष्यं न दृश्यते ।) स यथा स्तवनार्हो वेदिद्वारे भवो यूपो वेदिं यज्ञं वाश्रितः तद्वदङ्गिरसो हीन्द्रस्य सहायाः । तथा हि सरमा इन्द्रमङ्गिरसश्च तुल्यवत् प्रसङ्गाय वक्ष्यति– 'नाहं वेद भ्रातृत्वं नो स्वसृत्वमिन्द्रो विदुरङ्गिरसश्च घोराः' (ऋ.१०,१०८, १०) इति । तस्मादुपपन्नमिन्द्रस्य सङ्ग्रामेष्वङ्गिरआश्रयत्वम् । अथवैवमन्यथाऽस्यार्धर्चस्य अर्थयोजना । **अश्रायि** इति चिण् स्वार्थ एव कर्मणि । श्रयतिः शुद्धोऽपि सामर्थ्यादुत्पूर्वार्थे । उदश्रायि । अतिशयवद्गुणाभिधानेन गुणैरुच्छ्रितः कृत इत्यर्थः । क्व । **सुध्यः** सुप्रज्ञस्य सुकर्मणो वा मम स्वभूते **निरेके** रमेरिदम् । नियमेन रम्यते येन यत्र वा तन्निरमणं निरेकं स्तोत्रमिहाभिप्रेतम् । तत्र । कथमुदश्रायि । उच्यते । **पज्रेषु स्तोम** अङ्गिरस ऋत्विजो वा पज्रा अभिप्रेताः । लुप्तोपमं चेदं द्रष्टव्यम् । पज्रेष्विव स्तोमः । **दुर्यः न यूपः** द्वारि भव इव च यूपः । यथाऽङ्गिरस ऋषयः ऋत्विजो वा उच्छ्रितं महान्तं स्तोमं कुर्वन्ति, यथा च यूपमुच्छ्रितं कुर्वन्ति तद्वदित्यर्थः । कीदृश इन्द्रः । उच्यते । **अश्वयुः गव्युः रथयुः वसूयुः** अन्यत्रेच्छायां क्यज्विधानात् तदन्ताच्च 'क्याच्छन्दसि' (पा.३,२,१७०) इति कर्तर्युकारविधानाद् युशब्द एषितृवचनः । इह तु देवतानां पर्याप्तकामत्वात् एषणाऽसभवाद् युशब्दः सामर्थ्यान्मत्वर्थे । अश्वैर्गोभीरथैर्धनैश्च तद्वानित्यर्थः । किञ्च **इन्द्रः इत्** इच्छब्द एवार्थे । इन्द्र एव **रायः** यावत् किञ्चित् त्रैलोक्ये धनं तस्य सर्वस्य **क्षयति** ईष्टे । **प्रयन्ता** दाता च स्तोतृभ्यः ।। १४ ।।

**वेङ्कटमाधव–** **इन्द्रः** स्तोतृभिः आश्रीयते । सुकर्मणस्तस्य निर्गमने पज्रकुलजातेष्विन्द्रस्य स्तोम **दुर्यः यूपः** इवोच्छ्रितस्तिष्ठति । दुर्यभवो दुर्यो यज्ञस्थः । 'अङ्गिरसः पज्राः,' 'पज्रो वाऽऽङ्गिरसः पुत्र(पशु)कामस्तपोऽतप्यत' इति च शाट्यायनकम् । अश्वादीन् स्तोतृभ्य इच्छन् इन्द्र एव धनस्य प्रदाता निवसति ।। १४ ।।

**मुद्गल–** **इन्द्रः** देवः **सुध्यः** शोभनकर्मणो यजमानान् **निरेके** नैर्धन्ये निमित्तभूते सति तान् रक्षितुम् **अश्रायि** असेविष्ट । **पज्रेषु** अङ्गिरस्सु यजमानेषु **स्तोमः** स्तोत्रं निश्चलं तिष्ठति । **दुर्यः न यूपः** द्वारि निखाता स्थूणेव । तान् सुध्य इति पूर्वेणान्वयः । तस्मादिदानीम् अपि **रायः प्रयन्ता** धनस्य प्रदाता **इन्द्रः इत्** इन्द्र एव यजमानानां दातुम् **अश्वयुः** अश्वान् इच्छन् तथा **गव्युः** गा इच्छन् **रथेयुः** रथानिच्छन् **वसूयुः** एवम् अन्यदपि यद्धनमस्ति तदपीच्छन् **क्षयति** वर्तते ।। १४ ।।

**सायण–** **इन्द्रः** देवः **सुध्यः** शोभनकर्मणो यजमानान् शोभनप्रज्ञान् वा **निरेके** नैर्धन्ये निमित्तभूते सति तान् रक्षितुम् **अश्रायि** असेविष्ट । **पज्रेषु** । पज्रा इत्यङ्गिरसामाख्या । तथा च शाठ्यायनिभिराम्नातं– 'पज्रा वा अङ्गिरसः पशुकामास्तपोऽतप्यन्त' इति । येषु यजमानेष्वङ्गि-रस्सु **स्तोमः** स्तोत्रं निश्चलं तिष्ठति । **दुर्यः न यूपः** द्वारि निखाता स्थूणेव । तान् सुध्य इति पूर्वेणान्वयः । तस्मादिदानीम् अपि **रायः प्रयन्ता** धनस्य प्रदाता **इन्द्रः इत्** इन्द्र एव यजमानानां दातुम् **अश्वयुः** अश्वान् इच्छन् तथा **गव्युः** गा इच्छन् **रथेयुः** रथानिच्छन् **वसूयुः** एवम् अन्यदपि यद्धनमस्ति तदपीच्छन् **क्षयति** वर्तते ।।

**अश्रायि** 'श्रिञ् सेवायाम्' कर्तरि लुङि व्यत्ययेन च्लेः चिणादेशः । **सुध्यः** । धीरिति कर्मनाम । शोभना धीर्येषाम् । 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । शसि 'छन्दस्युभयथा' इति यणादेशः । 'उदात्तस्वरितयोर्यणः' इति स्वरितत्वम् । **निरेके** । नितरां रेचनं निरेकः । 'रिचिर् विरेचने' । भावे घञ् । थाथादिना उत्तरपदान्तोदात्तत्वम् । **दुर्यः** । दुरे भवो दुर्यः । 'भवे छन्दसि' इति यत् । 'यतोऽनावः' इत्याद्युदात्तत्वम् । **यूपः** । 'यु मिश्रणे' (यूयते युज्यतेऽस्मिन्निति यूपः । 'कुयुभ्यां च' (उ.सू.३.३०७) इति पप्रत्ययः । दीर्घः इत्यनुवृत्तेः दीर्घत्वम् । **अश्वयुः** । यजमानेभ्योऽश्वानिच्छन् । 'छन्दसि परेच्छायाम्' (का.३.१.८.२) इति क्यच् । 'न च्छन्दस्यपुत्रस्य' इति ईत्वदीर्घयोर्निषेधः । 'अश्वाघस्यात्' इति आत्वं तु छान्दसत्वान्न

भवति । 'क्याच्छन्दसि' इति उप्रत्ययः । एवमुत्तरत्रापि । एतावांस्तु विशेषः । गव्युरित्यत्र 'वान्तो यि प्रत्यये' इति अवादेशः । यास्कस्त्वेवं व्याचष्टे– 'इदंयुरिदं कामयमानोऽथापि तद्वदर्थे भाष्यते । वसूयुरिन्द्रो वसुमानित्यर्थः । अश्वयुर्गव्यू रथयुर्वसूयुरित्यपि निगमो भवति' (निरु.६.३१) इति । **क्षयति** 'क्षि क्षये' भौवादिकः । **प्रयन्ता** 'यम उपरमे' तृचि 'एकाचः' इति इट्प्रतिषेधः । 'चितः' इत्यन्तोदात्तत्वम् । कृदुत्तरपदप्रकृतिस्वरत्वम् ।। १४ ।।

**सिद्धाञ्जनम्– इन्द्रः** देवः **सुध्यः** सुधियः शोभनप्रज्ञान् । **निरेके** नितरां रेचने, तेषां रिक्त दशायां **अश्रायि** असेविष्ट, साहाय्यकरणेन सेवत इत्यर्थः । येषु **पज्रेषु** बलवत्सु दृढेषु वा यजमानेषु **स्तोमः** मन्त्रात्मकं स्तोत्रं **दुर्यो यूपो न** द्वारस्थो यूपस्तम्भ इव, दृढो निश्चलस्तिष्ठति तान् सुध्य इति सम्बन्धः । येषां गृहद्वारस्थस्तम्भ इव दृढो भवति स्तोमः तेषां **इन्द्र इत्** इन्द्र एव **अश्वयुः** अश्वान् इच्छन्, **गव्युः** गा इच्छन्, **रथयुः** रथानिच्छन्, **वसूयुः** अन्यद्वा धनमिच्छन्, **स रायः प्रयन्ता** समृद्धेः प्रदाता देवः **क्षयति** वर्तते ।। रिक्तानां भक्तानां गवाश्वादि लाभैषणं नावश्यकं भवति । इन्द्रो भगवानेव तान् यजमानान् स्वयमेवाश्रित्य तेषामावश्यकानि विविधानि धनानि सम्पादयति । गवाश्वादिः चित्प्रकाशप्राणबलाद्यर्थको न विस्मार्यः ।।

**पज्रेषु**– पज्र इत्यङ्गिरसामाख्येति ब्राह्मणमुदाहरति सायणः, अन्यत्र च 'पज्रासः अङ्गिरोगोत्रोत्पन्नाः' इत्युक्तम् । बलं दृढं इति पज्रशब्दार्थो ग्राह्यः । अङ्गिरसश्च पज्राः, बलिनो दृढा भवन्ति । आह च सायण एवान्यत्र 'पज्रः पाजसा बलेन' (१.१५८.३) । **अश्रायि** 'श्रिञ् सेवायां' कर्तरि लुङ् । **सुध्यः**–शसि 'छन्दस्युभयथा' इति यणादेशः । **निरेके**–'रिचिर् विरेचने' भावे घञ् । **दुर्यः** दुरे भवः । **यूपः**–'यु मिश्रणे' यूयते युज्यतेऽस्मिन्, पप्रत्ययः । **अश्वयुः**–छन्दसि परेच्छायां क्यच् । एवं **गव्युः** । विशेषस्तु 'वान्तो यि प्रत्यये' इति अवादेशः । **प्रयन्ता**–'यम उपरमे' तृच् । **क्षयति**–'क्षि क्षये' भौवादिकः ।। १४ ।।

## ऋक्संहिता पदपाठसहिता

**इ॒दं नमो॑ वृष॒भाय॑ स्व॒राजे॑ स॒त्यशु॑ष्माय त॒वसे॑ऽवाचि । अ॒स्मिन्नि॑न्द्र वृ॒जने॒ सर्व॑वीराः॒ स्मत्सू॒रिभि॒स्तव॒ शर्म॑न्त्स्याम ।। १९ ।।**

इ॒दम् । नमः॑ । वृ॒ष॒भाय॑ । स्व॒ऽराजे॑ । स॒त्यऽशु॑ष्माय । त॒वसे॑ । अ॒वा॒चि॒ । अ॒स्मिन् । इ॒न्द्र॒ । वृ॒जने॑ । सर्व॑ऽवीराः । स्मत् । सू॒रिऽभिः॑ । तव॑ । शर्म॑न् । स्या॒म॒ ।। १९ ।।

**स्कन्द–** **'इदम् नमः'** इत्यन्तेन सूक्तेन नमः स्तुतिलक्षणम् । **वृषभाय** वर्षित्रे **स्वराजे** स्वयमेव दीप्ताय । **सत्यशुष्माय** सत्यबलाय । **तवसे** 'तु वृद्धौ' वृद्धाय । **अवाचि** उक्तम् अस्माभिः । यत एवमतो ब्रूमः । **अस्मिन्** हे **इन्द्र! वृजने** बलनामैतत् (तु.निघ.२,९) । सामर्थ्याच्चान्तर्णीतमत्वर्थः । बलवति संसारे सङ्ग्रामे वा । अथवा वर्ज्यते यत्र वैगुण्यं स वृजनो यज्ञ इहाभिप्रेतः, तत्र । सर्ववीराः सर्वैः पुत्रैः पौत्रैश्चोपेताः । **स्मत् सूरिभिः** स्मच्छब्दोऽत्र सहार्थे । सह सर्वैः स्तोतृभिः । **तव शर्मन्** शरणे वा गृहे वा सुखे वा **स्याम** । त्वया दत्तं शरणं गृहं सुखं वा प्राप्नुयामेत्यर्थः ।। १५ ।।

**वेङ्कटमाधव–** **इदम्** नमनसाधनं स्तोत्रम् **वृषभाय** स्वयमेव सर्वेषामीश्वराय सत्यबलाय वृद्धायाऽस्माभिः उक्तम् । **अस्मिन् इन्द्र!** उपद्रवे सर्वैर्वीरैर्युक्ता अस्माकं स्तोतृभिश्च सह **तव** सुखे कल्याणे **स्याम** ।। १५ ।।

**मुद्गल–** **इदम्** पुरोवर्ति **नमः** स्तुतिलक्षणं वचः हे **इन्द्र!** तुभ्यम् **अवाचि** अस्माभिः प्रायोजि । कीदृशाय । **वृषभाय** वर्षणशीलाय **स्वराजे** स्वकीयेन तेजसा राजमानाय **सत्यशुष्माय** शत्रूणां शोषकत्वात् अवितथबलयुक्ताय । **तवसे** अत्यन्तप्रवृद्धाय । यस्मादेवं तस्मात् **अस्मिन् वृजने** वर्जनवति सङ्ग्रामे **सर्ववीराः** सर्वैर्भटैरुपेता वयम् । **स्मत्** इति निपातः सुशब्दार्थः । **तव स्मत् शर्मन्** त्वया दत्ते शोभने गृहे **सूरिभिः** विद्वद्भिः पुत्रादिभिः सह **स्याम** भवेम निवसेमेत्यर्थः ।। १५ ।।

**सायण–** **इदम्** पुरोवर्ति **नमः** स्तुतिलक्षणं वचः हे **इन्द्र!** तुभ्यम् **अवाचि** अस्माभिः प्रायोजि । कीदृशाय । **वृषभाय** वर्षणशीलाय **स्वराजे** स्वकीयेन तेजसा राजमानाय **सत्यशुष्माय** शुष्ममिति बलनाम । शत्रूणां शोषकत्वात् अवितथबलयुक्ताय । **तवसे** अत्यन्तं प्रवृद्धाय । यस्मादेवं तस्मात् **अस्मिन् वृजने** वर्जनवति सङ्ग्रामे **सर्ववीराः** । विशेषेण ईरयन्त्यमित्रानिति वीरा भटाः । तादृशैः सर्वैर्भटैरुपेता वयम् । **स्मत्** इति निपातः सुशब्दार्थः । **तव स्मत् शर्मन्** त्वया दत्ते शोभने गृहे सूरिभिः विद्वद्भिः पुत्रादिभिः सह **स्याम** भवेम निवसेमेत्यर्थः । यद्वा त्वत्सम्बन्धिनि शोभने यज्ञगृहे सूरिभिः विद्वद्भिर्ऋत्विग्भिः सह स्याम । शर्मेति गृहनाम, 'शर्म वर्म' (नि.३.४.२१) इति पठितत्वात् ।।

**स्वराजे** 'राजृ दीप्तौ' । 'सत्सूद्विष' इति क्विप् । **सत्यशुष्माय** । सत्यं शुष्मं बलं यस्य । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । **तवसे** । तवतिः सौत्रो धातुः । अस्मात् औणादिकः असि-प्रत्ययः । **वृजने** 'वृजी वर्जने' । 'कृपृवृजिमन्दिनिधाञ्भ्यः क्युः' (उ.सू.२.२३९) इति क्युः प्रत्ययः । **शर्मन्** । 'सुपां सुलुक्' इति सप्तम्या लुक् । 'न ङि सम्बुद्ध्योः' (पा.सू.८.२.८) इति नलोपप्रतिषेधः । **स्याम** । 'नश्च' (पा.सू.८.३.३०) इति संहितायां सकारस्य धुडागमः । 'खरि च' इति चर्त्वम् । 'चयो द्वितीयाः शरि पौष्करसादेः' (पा.सू.८.४.४८.३) इति तकारस्य थकारः ॥ १५ ॥

**सिद्धाञ्जनम्–** हे **इन्द्र!** तुभ्यं, **इदं नमः** इदानीं क्रियमाणं नमस्कारात्मकं स्तोत्रं, **अवाचि** प्रायोजि प्रयुक्तम् अस्माभिः । कीदृशाय तुभ्यम्? **वृषभाय** वर्षणशीलाय **स्वराजे** स्वेन तेजसा राजमानाय **सत्यशुष्माय** अवितथबलाय **तवसे** प्रवृद्धाय । हे इन्द्र! तस्मात् **अस्मिन्** उपस्थिते **वृजने** सङ्ग्रामे, अरातिभिः यज्ञविघातिभिः सह कर्तव्ये इत्यर्थः । वयं **सर्ववीराः** समस्तवीरबल युक्ताः सन्तः, **तव स्मत् शर्मन्** तव सम्बन्धिनि शोभने शरणे, त्वदनुग्रहपात्रभूते, निवासस्थाने, **स्मत्** सुशब्दार्थो निपातितः । **सूरिभिः** विद्वद्भिः देवैर्मानुषैर्वा सह **स्याम** वसेम । **सत्यशुष्माय** सत्यं शुष्मं बलं यस्य तस्मै । **तवसे**-तवतिः सौत्रो धातुः । तस्मादौणादिकोऽसिप्रत्ययः । **शर्मन्**–सप्तम्या लुक् । अन्ये गताः ॥ १५ ॥

॥ इति प्रथमाष्टके चतुर्थाध्याये एकादशो वर्गः ॥

## ॥ अथ द्वादशो वर्गः ॥

## ऋक्संहिता पदपाठसहिता

(सूक्तम् ५२)

१५ सव्य आङ्गिरसः । इन्द्रः । जगती, १३-१५ त्रिष्टुप् ।

**त्यं सु मेषं महया स्वर्विदं शतं यस्य सुभ्वः साकमीरते ।**
**अत्यं न वाजं हवनस्यदं रथमेन्द्रं ववृत्यामवसे सुवृक्तिभिः ॥ १ ॥**

त्यम् । सु । मेषम् । महय । स्वःऽविदम् । शतम् । यस्य । सुऽभ्वः । साकम् । ईरते । अत्यम् । न । वाजम् । हवनऽस्यदम् । रथम् । आ । इन्द्रम् । ववृत्याम् । अवसे । सुवृक्तिऽभिः ॥ १ ॥

**स्कन्द– त्यम्** तम् इन्द्रम् । **मेषम्** मेषरूपम्, **सु महय** अर्चतिकर्माऽयम् (तु.निघ.३.१४) । आत्मन एव चायम् अन्तरात्मनः प्रैषः ऋत्विगन्तरस्य वा । सुष्ठु स्तुहि हे अन्तरात्मन् ऋत्विग्वा! **स्वर्विदम्** स्वशब्दः सर्वपर्यायः । विदिर्ज्ञानार्थो लाभार्थो वा । सर्वस्य ज्ञातारं लब्धारं वा । **शतम्** बहुनामैतत् (तु.निग.३,१) बहवः । **यस्य सुभ्वः** अपठितमपि महन्नामैतत्, महान्तः । के ते । सामर्थ्यात् स्तोतारः । **साकम्** सह **ईरते** प्रेरयन्ति, उच्चारयन्तीत्यर्थः । किं तत् । सामर्थ्यात् स्तुतीः । बहवो महान्तश्च स्तोतारो यं सह स्तुवन्तीत्यर्थः । अथवा सुभ्व इति स्त्रीलिङ्गमेतत् । शतं यस्य स्वभूताः सुभ्वो महत्यः । कास्ताः । मरुदादिसेनाः । **साकमीरते** सह गच्छन्ति शत्रूणामुपरि । अहमपि **अत्यम् न** अश्वमिव । यथा कश्चिदश्वम् आवर्तयेत् तद्वत् । **वाजम्** द्वितीयाश्रुतेश्चात्र कर्मप्रवचनीयः प्रतिशब्दोऽध्याहार्यः । सोमलक्षणमन्नं प्रति । अथवा वाजमित्यपठितमपि बलनामैतत् । सामर्थ्याच्चान्तर्णीतमत्वर्थम् । बलवन्तम् । **हवनस्यदम्** आह्वानानि प्रति गन्तारम् । केन । **रथम्** तृतीयार्थे द्वितीयैषा रथेन । कम् । **इन्द्रम् आ ववृत्याम्** अत्यर्थं पुनः पुनः आवर्तयेयमित्याशासे । किमर्थम् । **अवसे** तर्पणाय । केन । **सुवृक्तिभिः** सुष्ठु वर्जितदोषाभिः स्तुतिभिः ।। १ ।।

**वेङ्कटमाधव–** तं सुष्ठु पूजय सर्वज्ञम् । मेधातिथेः **मेषम्, शतम् यस्य** प्राज्ञाः सह उत्तिष्ठन्ति । वेगवन्तम् इव अश्वम् **रथम्** प्रति, हवनं प्रति गन्तारम् । आवर्तयामि **इन्द्रम्** रक्षणाय स्तोत्रैः ।। १ ।।

**मुद्गल–** 'त्यं सु मेषम्' इति पञ्चदशर्चं द्वितीयं सूक्तम् । सव्य ऋषिः । त्रयोदशीपञ्चदश्यौ त्रिष्टुभौ । शिष्टाः जगत्यः । इन्द्रो देवता ।

**त्यम्** तं प्रसिद्धम् **मेषम्** शत्रुभिः सह स्पर्धमानम् । **स्वर्विदम्** आदित्यस्य वेदितारम् एवंगुणविशिष्टम् इन्द्रम् हे अध्वर्यो! **सु महय** सम्यक् पूजय । **यस्य** इन्द्रस्य **शतम्** शतसङ्ख्याकाः **सुभ्वः** स्तोतारः । **साकम्** सहैव युगपदेव **ईरते** स्तुतौ प्रवर्तन्ते । तम् **इन्द्रम् अवसे** अस्मद्रक्षणाय । **सुवृक्तिभिः** सुष्ठु आवर्जकैः स्तोत्रैः । **रथम् आ ववृत्याम्** रथं प्रति आवर्तयामि । कीदृशं रथम् । **हवनस्यदम्** आह्वानं प्रति वेगेन गच्छन्तम् । दृष्टान्तः । **अत्यम् न वाजम्** गमनसाधनमश्वमिव ।। १ ।।

**सायण–** 'त्वं सु मेषम्' इति पञ्चदशर्चं द्वितीयं सूक्तं सव्यस्यार्षमैन्द्रम् । त्रयोदशी पञ्चदशी त्रिष्टुभौ । शिष्टा जगत्यः । तथा चानुक्रान्तं–'त्वं सु त्रयोदश्यन्त्ये त्रिष्टुभौ' इति गवामयनस्य मध्यमेऽहनि विषुवत्संज्ञके मरुत्वतीयशस्त्रे इदं सूक्तम् । 'विषुवान्दिवाकीर्त्यः' इति खण्डे सूत्रितं– 'त्वं सु मेषं कया शुभेति च मरुत्वतीयम्' (आश्व.श्रौ.८.६) इति ।।

**त्वं** तं प्रसिद्धं **मेषं** शत्रुभिः सह स्पर्धमानम् । **स्वर्विदम्** । स्वरादित्यो द्यौर्वा । तस्य वेदितारं लब्धारं वा । यद्वा । स्वः सुष्ठ्वरणीयं धनं तस्य लम्भयितारम् । एवंगुणविशिष्टमिन्द्रं हे अध्वर्यो! **सु महय** सम्यक् पूजय । **यस्य** इन्द्रस्य **शतं** शतसङ्ख्याकाः **सुभ्वः** स्तोतारः **साकं** सहैव युगपदेव **ईरते** स्तुतौ प्रवर्तन्ते । यद्वा । यस्येन्द्रस्य रथं शतं सुभ्वः शतसङ्ख्याका अश्वाः साकं सह ईरते गमयन्ति । तम् **इन्द्रम् अवसे** अस्मद्रक्षणाय **सुवृक्तिभिः** सुष्ठ्वावर्जकैः स्तोत्रैः **रथम् आ ववृत्यां** रथं प्रत्यावर्तयामि । कीदृशं रथम् । **हवनस्यदं** हवनमाह्वानं यागं वा प्रति वेगेन गच्छन्तम् । वेगगमने दृष्टान्तः । **अत्यं न वाजं** गमनसाधनमश्वमिव ।।

**महय** 'मह पूजायाम्' चुरादिरदन्तः । संहितायाम् 'अन्येषामपि दृश्यते' इति दीर्घत्वम् । **सुभ्वः** । सुष्ठु भवन्तीति सुभ्वः स्तोतारः । 'क्विप् च' क्विप् । कृदुत्तरपदप्रकृतिस्वरत्वम् । जसि 'ओः सुपि' इति यणादेशस्य 'न भूसुधियोः' इति प्रतिषेधे प्राप्ते 'छन्दस्युभयथा' इति उभयथाभावाद् यणादेशः । 'उदात्तस्वरितयोर्यणः' इति परस्य जसोऽनुदात्तस्य स्वरितत्वम् । **ईरते** 'ईर गतौ कम्पने च' 'अदादित्वाच्छपो लुक् । झस्य अदादेशः । टेरेत्वम् । अनुदात्तेत्त्वात् लसार्वधातुकानुदात्तत्वे धातुस्वरः शिष्यते । यद्वृत्तयोगादनिघातः । तत्र हि पञ्चमीनिर्देशेऽपि व्यवहितेऽपि कार्यमिष्यते (का.८.१.६६) इत्युक्तम् । **अत्यम्** । अत्य इत्यश्वनाम. 'अत्यः हयः' (नि.१.१४.१) इति पाठात् । **वाजम्** । वाज्यते गम्यतेऽनेनेति वाजः । 'व्रज गतौ' करणे घञ् । 'अजिव्रज्योश्च' (पा.सू.७.३.६०) इत्यत्र चशब्दस्य अनुक्तसमुच्चयार्थत्वाद् वाजः वाज्यम् इत्यत्रापि कुत्वाभावः इत्युक्तम् । **हवनस्यदम्** । 'स्यन्दू प्रस्रवणे' । 'स्यदो जवे' (पा.सू.६.४.२८) इति वेगे गम्यमाने घञन्तो निपातितः । अत एव नलोपो वृद्ध्यभावश्च । न च 'न धातुलोप आर्धधातुके' (पा.सू.१.१.४) इति वृद्धेः प्रतिषेधः । इग्लक्षणा हि वृद्धिस्तत्र प्रतिषिध्यते । न चेयमिग्लक्षणा । घञो ञित्त्वात् उत्तरपदस्याद्युदात्तत्वम् । कृदुत्तरपद प्रकृतिस्वरत्वेन तदेव शिष्यते । **ववृत्याम्** 'वृतु वर्तने' । लिङि व्यत्ययेन परस्मैपदम् । 'बहुलं

छन्दसि' इति शपः श्लुः । द्विर्वचनादि । यासुटो ङित्वात् लघूपधगुणाभावः । 'तिङ्ङतिङः' इति निघातः ।। १ ।।

**सिद्धाञ्जनम्–** त्यं सु मेषम् इति पञ्चदशर्चं द्वितीयं सूक्तं सव्यस्यार्षम् ऐन्द्रम् । त्रयोदशी पञ्चदश्यौ त्रिष्टुभौ, शिष्टा जगत्यः ।।

**त्यम्** प्रसिद्धं **मेषम्** नित्यं मिषन्तं, नित्यजागरणं (अन्यत् प्रागुक्तम् १.५१.१) **स्वर्विदम्** स्वर्ज्योतिषो वेदितारं लम्भयितारं वा इन्द्रं, **सु महय** सम्यक् पूजय, अन्तरात्मनः सम्बोधनम् । **यस्य** इन्द्रस्य **शतम्** शतसङ्ख्याकाः **सुभ्वः** सुभुवः, स्तोतार इति सायणः । दिविषदः सहकारिणः अनुचरा इति युक्तम् । तथा हि 'यं पृणन्ति दिवि सद्मबर्हिषः सुभ्वः' इति चतुर्थ्यामृचि स्पष्टं श्रूयते । **साकम्** सह युगपदेव **ईरते** गच्छन्ति, तं **इन्द्रम्, अवसे** अस्मद्वर्धनाय **सुवृक्तिभिः** सुष्ठु आवर्जकैः स्तोत्रैः । **रथम्** रथं प्रति **आ ववृत्याम्** आवृत्तं करोमि । कीदृशं रथम्? **हवनस्यदम्** हवनं आह्वानं प्रति स्यन्दमानं वेगेन गच्छन्तम् । तत्र दृष्टान्तः–**वाजम्** बलसमृद्धियुक्तं **अत्यम् न** अश्वमिव स्थितं रथं प्रति । वाजम् वाजवन्तम् अन्तर्भावितमतुबर्थः ।। **महय** 'मह पूजायाम्' । **सुभ्वः** सुभुवः, छन्दस्युभयथेति यणादेशः । **ईरते** 'ईर गतौ' अदादिः । **हवनस्यदम्** 'स्यन्दू प्रस्रवणे' स्यदो जवे घञन्तो निपातितः । अत एव नलोपः वृद्ध्यभावश्च । **ववृत्याम्** 'वृतु वर्तने' लिङि व्यत्ययेन परस्मैपदं, शपः श्लुः ।। १ ।।

## ऋक्संहिता पदपाठसहिता

**स पर्वतो न धरुणेष्वच्युतः सहस्रमूतिस्तविषीषु वावृधे ।**
**इन्द्रो यद्वृत्रमवधीन्नदीवृतमुब्जन्नर्णांसि जर्हृषाणो अन्धसा ।। २ ।।**
**सः । पर्वतः । न । धरुणेषु । अच्युतः । सहस्रम्ऽऊतिः । तविषीषु । ववृधे ।**
**इन्द्रः । यत् । वृत्रम् । अवधीत् । नदीऽवृतम् । उब्जन् । अर्णांसि । जर्हृषाणः । अन्धसा ।।**

**स्कन्द– स पर्वतः न धरुणेषु** 'पर्वतः' (निघ.१,१०) इति मेघनाम । 'धरुणम्' (निघ. १,१२) इत्युदकनाम । तृतीयार्थे चैषा सप्तमी । **वावृधे** इत्यस्य चेदमुपमानम् । मेघ इवोदकैर्वावृधे । यथा मेघोऽत्यन्तबहुनोदकेन वर्धते अत्यन्तं महान् भवति । एवम् **अच्युतः** यत्र स्थितः तस्मात् स्थानादप्रच्युतः । तत्रैव स्थितस्सन्नित्यर्थः । **सहस्रमूतिः** 'सहस्रम्' (निघ.३,१) इति

बहुनाम । ऊतिः सेना पालनं वा । बहुसेनो बहुपालनो वा । **तविषीषु** बलनामैतत् (तु.निघ.२,९) । तृतीयार्थे चात्र सप्तमी । शारीरैः सामर्थ्यलक्षणैर्बलैः । **वावृधे** अवर्धिष्ट वर्धते वा । अथवा 'स पर्वतो न' इति पर्वतः शिलोच्चय एवाभिप्रेतः । अच्युतः इत्येतस्य त्विदमुपमानम् । यथा पर्वतोऽच्युतः स्थिरस्तद्वद्योऽच्युत इति । धरणेष्वित्यपि 'यस्य च भावेन' (पा.२.३.३७) इत्येवं सप्तमी । तच्छ्रुतेश्च लक्षणभूतयोग्यक्रियापदाध्याहारः । उदकेषु प्राप्तव्येषु । उदकार्थमित्यर्थः । किं करोति । उच्यते । **सहस्रमूतिस्तविषीषु वावृधे** । कः । उच्यते । **इन्द्रः** । कदा । उच्यते । **यत्** यदा **वृत्रम्** मेघम् **अवधीत्** हतवान् हन्ति वा । **नदीवृतम्** नद्यः शब्दकारिण्य आपः, तासामावरीतारम् । **उब्जन्** ऋजूनि कुर्वन् । भूमि पाताभिमुखानि कुर्वन्नित्यर्थः । कानि । **अर्णांसि** मेघस्थान्युदकानि । **जर्हृषाणः** अत्यर्थं हृष्यन् । केन । **अन्धसा** सोमलक्षणेन अन्नेन ।। २ ।।

**वेङ्कटमाधव– सः** शिलोच्चय इव उदकधारासु अक्षीणः बहुरक्षणः शत्रुबलेषु प्रविष्टः **ववृधे** इन्द्रः, **यद् वृत्रम् अवधीत्** नदीनाम् आवरीतारं वृत्रनिरुद्धानि उदकानि तेजोभिः विध्यन् हृष्यन् सोमेन ।। २ ।।

**मुद्गल– अन्धसा** सोमलक्षणेनान्नेन । **जर्हृषाणः** अत्यर्थं हृष्यन्, इन्द्रः, **यत्** यदा **वृत्रम्** त्रयाणां लोकानामावरितारम् असुरम् **अवधीत्** हतवान् । कीदृशं वृत्रम् । **नदीवृतम्** नदनात् नद्य आपः । तासामावरितारम् । किं कुर्वन्निन्द्रः । **अर्णांसि** जलानि **उब्जन्** अधः पातयन् । तदानीं स इन्द्रः **पर्वतः न** पर्ववान् शिलोच्चय इव **धरुणेषु** सर्वस्य धारकेषूदकेषु मध्ये **अच्युतः** चलनराहित्येन स्थितः **सहस्रमूतिः** बहुविधरक्षणवान् **तविषीषु** बलेषु **वावृधे** प्रवृद्धो बभूव ।।

**सायण– अन्धसा** सोमलक्षणेनान्नेन । **जर्हृषाणः** अत्यर्थं हृष्यन्, इन्द्रः. **यत्** यदा **वृत्रम्** त्रयाणां लोकानामावरितारम् असुरम् **अवधीत्** हतवान् । कीदृशं वृत्रम् । **नदीवृतम्** नदनात् नद्य आपः । तासामावरितारम् । किं कुर्वन्निन्द्रः । **अर्णांसि** जलानि **उब्जन्** अधः पातयन् । तदानीं स इन्द्रः **पर्वतः न** पर्ववान् शिलोच्चय इव **धरुणेषु** सर्वस्य धारकेषूदकेषु मध्ये **अच्युतः** चलनराहित्येन स्थितः **सहस्रमूतिः** बहुविधरक्षणवान् **तविषीषु** बलेषु **वावृधे** प्रवृद्धो बभूव ।।

**धरुणेषु** 'धारयतेर्णिलुक् च' इति उनप्रत्ययः । प्रत्ययस्वरः । **सहस्रमूतिः** । सहस्रम् ऊतयो

यस्यासौ । लुगभावश्छान्दसः । **ववृधे** । संहितायाम् अभ्यासस्य 'अन्येषामपि दृश्यते' इति दीर्घत्वम् । **नदीवृतम्** । नदीं वृणोतीति नदीवृत् । क्विप् । तुगागमः । **उब्जन्** 'उब्ज आर्जवे' । विकरणस्वरः । **अर्णांसि** । 'उदके नुट् च' (उ.सू.४.६३६) इति अर्तः असुन् प्रत्ययः, तत्सन्नियोगेन नुडागमश्च । नित्त्वादाद्युदात्तत्वम् । **जर्हृषाणः** 'हृष तुष्टौ' यङ्लुगन्ताद् व्यत्ययेन शानच् । 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम् । यद्वा । यङन्तादेव शानचि 'बहुलं छन्दसि' इति शपो लुक् । 'छन्दस्युभयथा' इति शानचः आर्धधातुकत्वात् अतोलोपयलोपौ । सार्वधातुकत्वाच्च अभ्यस्तस्याद्युदात्तत्वम् । **अन्धसा** । अद्यते इत्यन्धः । 'अदेर्नुम् धश्च' (उ.सू.४.६४५) इति असुन्, धातोः नुमागमो धकारान्तादेशश्च । नित्त्वादाद्युदात्तत्वम् ।।

**सिद्धाञ्जनम्– अन्धसा** अन्नभूतेन सोमेन । **जर्हृषाणः** अत्यर्थं हृष्यन् **इन्द्रः यत्** यदा **वृत्रम्** विश्वस्य आवरकं **अवधीत्** हतवान् । कीदृशं वृत्रम्? **नदीवृतम्** नदीनां अपां आवरीतारम् । किं कुर्वन्निन्द्रः? **अर्णांसि** जलानि **उब्जन्** हिंसन् निःसारणाय तुदन्नित्यर्थः (उब्जतिर्वधकर्मा) । यदा सोमेन प्रहृष्ट इन्द्रः तेजोबलादिवाहिनीः अपो निस्सार्य पातयन् सर्वस्यावरीतारं वृत्रं हन्ति, तदा **स** इन्द्रः **पर्वतो न** पर्ववान् बहुप्रस्थयुक्तः शिलोच्चय इव **धरुणेषु** सर्वस्य धारकेषु प्रवहत्सु उदकेषु मध्ये **अच्युतः** चलनराहित्येनावस्थितः **सहस्रमूतिः** बहुविधाभिवर्धनविधायकः **तविषीषु** बलेषु **ववृधे** प्रवृद्धो भवति । वृत्रवधात्परं तेजोबलादिषु शक्तिषु मध्ये स्वयम् अचलतयाऽवस्थितः । ताभिर्युक्तः अत एव बहुबलप्रवृद्धो भक्तस्य यजमानस्य बहुविधवृद्धिं कर्तुं क्षमः इत्युक्तं भवति ।।

**धरुणेषु** 'धारयतेर्णिलुक् च' इत्युनप्रत्ययः । **सहस्रमूतिः** सहस्रं ऊतयो यस्य सः । लुगभावश्छान्दसः । **ववृधे**–संहितायां अभ्यासस्य दीर्घत्वम् । **नदीवृतम्** नदीं वृणोति, क्विप्, तुगागमः । **जर्हृषाणः**–हृष्यतेः यङ्लुगन्ताद् व्यत्ययेन शानच् । **अन्धसा**–अद्यत इत्यन्धः, अदेर्नुम् धश्चेत्यसुन् ।। २ ।।

## ऋक्संहिता पदपाठसहिता

**स हि द्वरो द्वरिषु वव्र ऊधनि चन्द्रबुध्नो मदवृद्धो मनीषिभिः ।**
**इन्द्रं तमह्वे स्वपस्यया धिया मंहिष्ठरातिं स हि पप्रिरन्धसः ।। ३ ।।**

**सः । हि । द्वरः । द्वरिषु । वव्रः । ऊधनि । चन्द्रबुघ्नः । मदऽवृद्धः । मनीषिऽभिः । इन्द्रम् । तम् । अह्वे । सुऽअपस्यया । धिया । मंहिष्ठऽरातिम् । सः । हि । पप्रिः । अन्धसः ॥ ३ ॥**

**स्कन्द–** हिशब्दः पदपूरणः । **सः** इन्द्रः **द्वरः द्वरिषु** 'द्वृ वरणे' । शुद्धोऽपि चात्र आङ्पूर्वार्थे द्रष्टव्यः । द्वरिष्विति च निर्धारणे सप्तमी । आवरीतॄणां मध्ये । यावन्तः केचन आवरीतारः तेषां सर्वेषां मध्येऽतिशयेन आवरीतेत्यर्थः । **वव्रः** अत्यर्थं च वरणीयः याचितव्यः । किम् । सामर्थ्याद् यद्यदिष्टम् । क । **ऊधनि** सोमलक्षणरसानुप्रदानसामान्याद्यज्ञोऽत्र ऊध उच्यते, तत्र । कीदृशः । **चन्द्रबुघ्नः** चन्द्रः, चन्दतेः कान्तिकर्मणः कान्तिरुच्यते । बुध्नम् अन्तरिक्षं निवासस्थानतया यस्य सम्भूतं स चन्द्रबुध्नः । **मदवृद्धः** सोममदेन परिवृद्धः सन् । केन वव्रः । **मनीषिभिः** मेधाविभिर्ऋषिभिः ऋत्विग्भिर्वा । **इन्द्रं तम् अह्वे** आह्वयामि । **स्वपस्यया** शोभनकर्मेच्छया युक्तः । **धिया** प्रज्ञया । कीदृशम् । **मंहिष्ठरातिम्** मंहतिः पूजार्थोऽत्र । पूज्यतमदानम् । किं कारणम् । उच्यते । **सः हि पप्रिः अन्धसः** हिशब्दोऽत्र यस्मादर्थे । पृणातिश्च दानार्थः । यस्मात् स दाता अन्नस्य ॥ ३ ॥

**वेङ्कटमाधव– स हि इन्द्रः** वारयिता वारयितॄणां मध्ये वरणीयः । श्रद्धेयेऽपि अर्थे कमनीय-बुध्नस्तोत्रैर्वृद्धः **मनीषिभिः । तम् इन्द्रम्** अहम् शोभनकर्मेच्छया बुद्ध्या ह्वयामि पूज्यतमदानम् । **स हि** अन्नेन मां पूरयति ॥ ३ ॥

**मुद्गल– सः** पूर्वोक्तगुणविशिष्ट इन्द्रः **द्वरिषु** आवरीतृषु शत्रुषु **द्वरः हि** अतिशयेनावरीता खलु । शत्रुजयशील इत्यर्थः । यस्मात् **ऊधनि** उद्धृतजलवति अन्तरिक्षे **वव्रः** सम्भक्तः व्याप्य वर्तते । अत एव **चन्द्रबुघ्नः** सर्वासां प्रजानामाह्लादकमूलः अन्तरिक्षस्य सर्वाह्लादकत्वात् । **मदवृद्धः** सोमैः वर्धितः । एवम्भूतो य इन्द्रः **मंहिष्ठरातिम्** प्रवृद्धधनम् **तम् इन्द्रम् मनाषिभिः** प्राज्ञैः ऋत्विग्भिः सह **स्वपस्यया धिया** शोभनकर्मयोग्यबुद्ध्या **अह्वे** आह्वयामि । **हि** यस्मात् **सः** इन्द्रः **अन्धसः** अन्नस्य अस्मदपेक्षितस्य **पप्रिः** पूरयिता ॥ ३ ॥

**सायण– सः** पूर्वोक्तगुणविशिष्ट इन्द्रः **द्वरिषु** आवरीतृषु शत्रुषु **द्वरः हि** अतिशयेनावरीता खलु । शत्रुजयशील इत्यर्थः । यस्मात् **ऊधनि** उद्धृतजलवति अन्तरिक्षे **वव्रः** सम्भक्तः व्याप्य वर्तते । अत एव **चन्द्रबुघ्नः** सर्वासां प्रजानामाह्लादकमूलः अन्तरिक्षस्य सर्वाह्लादकत्वात् । **मदवृद्धः**

माद्यन्ति एभिरिति मदाः सोमाः तैर्वर्धितः । एवम्भूतो य इन्द्रः **मंहिष्ठरातिम्** प्रवृद्धधनमं प्रवृद्धदानं वा । **तम् इन्द्रं मनीषिभिः** मनस ईषितृभिः प्राज्ञैर्ऋत्विग्भिः सह **स्वपस्यया धिया** शोभनकर्मयोग्यया बुद्ध्या **अह्वे** आह्वयामि । **हि** यस्मात् **सः** इन्द्रः **अन्धसः** अन्नस्य अस्मदपेक्षितस्य **पप्रिः** पूरयिता ।।

**द्वरः** । द्वृ इत्येके । द्वरति आवृणोतीति द्वरः । पचाद्यच् । चित्स्वरेणान्तोदात्तत्वम् । **द्वरिषु** । 'अच इः' इति कर्तरि इप्रत्ययः । **वव्रः** 'वृङ् सम्भक्तौ' व्रियते सम्भज्यते इति वव्रः । 'घञर्थे कविधानं स्थास्नापाव्यधिहनियुध्यर्थम्' (पा.सू.३.३.५८.४) इति परिगणनस्य उपलक्षणार्थत्वात् कर्मणि कप्रत्ययः । द्विर्भावश्छान्दसः । **ऊधनि** । उत् ऊर्ध्वं ध्रियतेऽस्मिन् जलमिति ऊधः । सप्तम्येकवचने 'अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः, छन्दस्यपि दृश्यते' (पा.सू. ७.१.७५-७६) इति दृशिग्रहणात् 'ऊधस्' शब्दस्यापि अनङादेशः । यद्वा 'ऊधसोऽनङ्' (पा.सू.५.४.१३१) इति समासे विधीयमानः अनङादेशः छान्दसत्वात् केवलादपि भवति । **चन्द्रबुध्नः** 'चदि आह्लादने दीप्तौ च' । इदित्त्वान्नुम् । 'स्फायितञ्चि' इत्यादिना रक् । प्रत्ययस्वरेणान्तोदात्तत्वम् । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वेन तदेव शिष्यते । **मदवृद्धः** 'मदी हर्षे' । 'मदोऽनुपसर्गे' इति करणे अप् । तस्य पित्त्वादनुदात्तत्वे धातुस्वरः । 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरत्वम् । **अह्वे** 'ह्वेञ् स्पर्धायां शब्दे च' । 'छन्दसि लुङ्लङ्लिटः' इति वर्तमाने लुङि 'आत्मनेपदेष्वन्यतरस्याम्' (पा.सू.३.१.५४) इति च्लेः अङादेशः । 'आतो लोप इटि च' इति आकारलोपः, गुणः । **स्वपस्यया** । अप इति कर्मनाम । शोभनम् अपः स्वपः । तदर्हतीति स्वपस्यः । 'छन्दसि च' इति यप्रत्ययः । **मंहिष्ठरातिम्** 'महि वृद्धौ अतिशयेन मंहित्री मंहिष्ठा । 'तुश्छन्दसि' इति इष्ठन् प्रत्ययः । 'तुरिष्ठेमेयस्सु' इति तृलोपः । नित्त्वादाद्युदात्तत्वम् । मंहिष्ठा रातिर्यस्य । 'स्त्रियाः पुंवत्' (पा.सू.६.३.३४) इति पुंवद्भावात् ह्रस्वत्वम् । 'बहुव्रीहौ प्रकृत्या' इति पूर्वपदप्रकृतिस्वरत्वम् । **पप्रिः** 'पॄ पालनपूरणयोः' । 'आदृगमहनजनः' इति किन्प्रत्ययः । 'उदोष्ठ्यपूर्वस्य' इति उत्वस्य 'बहुलं छन्दसि' इति वचनादभावे यणादेशः । लिड्वद्भावात् 'द्विर्वचनेऽचि' इति स्थानिवद्भावे सति द्विर्भावोरदत्वहलादिशेषाः । नित्त्वाद्युदात्तत्वम् ।। ३ ।।

**सिद्धाञ्जनम्– सः** उक्तलक्षण इन्द्रः । **द्वरिषु** आवरीतृषु **द्वरो हि** आवरीता खलु ।

प्रकाशस्य शक्तिप्रवाहस्य वा आवरीतारः प्रतिरोद्धारो वृत्राः वृत्रबान्धवा असुराः, तेष्वपि महान् आवरीता इन्द्रः । कथम्? तेषां ऊर्ध्ववर्ति ऊधःशब्दवाच्यं विश्वसारनिधानं दिव्यसत्त्वस्थानं यथा न विदितं लभ्यं वा भवति तथा स आवृणोति आच्छादको भवति । तदाह **ऊधनि** सारवति सत्त्वस्थाने निमित्तभूते सति **वव्रः** आवरीता । तद्यथा वृत्रादीनां न लभ्यं भवति तथा आच्छादयति, महानयं प्रतिरोद्धा 'द्वरः द्वरिषु' । अत एव **चन्द्रबुध्नः** चन्द्रः आह्लादकः बुध्नः मूलाश्रयः यस्यासौ आनन्दमयोर्ध्वमूलः । **मनीषिभिः** मनस ईषितृभिः प्राज्ञैः । **मदवृद्धः** मदैः मादयितृभिः सोमैः वर्धितः । मनीषिभिः प्रापितेन हर्षातिशयेन वृद्धिं प्रापितः । **तम्** तथाभूतं **मंहिष्ठरातिम्** प्रवृद्धदानं **इन्द्रम्, स्वपस्यया** शोभनकर्मयोग्यया **धिया** बुद्ध्या **अह्वे** आह्वयामि । **सः हि** स खलु **अन्धसः** अन्नभूतस्य सर्वसारांशरसभूतस्य सोमस्य **पप्रिः** पूरयिता । स्वयं रसभरितः अस्मानपि रसेन पूरयितुं प्रभुरिन्द्रः ॥

**द्वरः**–वृणोतेः, द्वृ इत्येके, द्वरत्यावृणोति, पचाद्यच् । **द्वरिषु**– 'अचः इः' इति इप्रत्ययः । **वव्रः** 'वृञ् वरणे' घञर्थे कविधानम्, द्विर्भावश्छान्दसः । **ऊधनि**–उत् ऊर्ध्वं ध्रियतेऽस्मिन् सारः सत्त्वं वा । समासे विधीयमानोऽनङादेशः छान्दसत्वात् केवलादपि भवति । **स्वपस्यया**–अपः कर्मनाम, शोभनं कर्म स्वपः, तदर्हतीति स्वपस्यः, 'छन्दसि च' इति यप्रत्ययः । **मंहिष्ठरातिम्** 'महि वृद्धौ' अतिशयेन मंहित्री मंहिष्ठा, सा रातिर्यस्य तम् । **पप्रिः**–पिपर्तेः ॥ ३ ॥

## ऋक्संहिता पदपाठसहिता

**आ यं पृणन्ति दिवि सद्मबर्हिषः समुद्रं न सुभ्व१ः स्वा अभिष्टयः ।**
**तं वृत्रहत्ये अनु तस्थुरूतयः शुष्मा इन्द्रमवाता अह्रुतप्सवः ॥ ४ ॥**
**आ । यम् । पृणन्ति । दिवि । सद्मऽबर्हिषः । समुद्रम् । न । सुऽभ्वः । स्वाः । अभिष्टयः ।**
**तम् । वृत्रऽहत्ये । अनु । तस्थुः । ऊतयः । शुष्माः । इन्द्रम् । अवाताः । अह्रुतऽप्सवः ॥**

**स्कन्द– आ यम् पृणन्ति** यमापृणन्ति आपूरयन्ति । **दिवि** व्यवस्थितम् । के । **सद्मबर्हिषः** सद्म सदनं बर्हिर्येषां ते सद्मबर्हिषः सोमाः । कथमापृणन्ति । **समुद्रम् न** समुद्रमिव **सुभ्वः** महत्यो नद्यः **स्वाः** आत्मीयाः । कस्य । सामर्थ्यात् समुद्रस्य । कीदृश्यः । **अभिष्टयः** इषिर्गत्यर्थः इच्छार्थो वा । अभिगन्त्र्यः अभिकामिन्यो वा । **तम् वृत्रहत्ये** वृत्रहननकाले **अनुतस्थुः**

तिष्ठतिरत्र सामर्थ्याद् गत्यर्थः । अनुगतवत्योऽनुगच्छन्ति वा । अथवा 'तं वृत्रहत्ये अनु' इति अनुशब्दः 'तृतीयार्थे (पा.१,४,८५) इत्येवं कर्मप्रवचनीयः । तेन सह वृत्रहननकालस्थिता इत्यर्थः । काः । उच्यते । **ऊतयः** सेना मरुदादीनाम् । **शुष्माः** बलनामैतत् (तु.निघ.२,९) । अन्तर्णीतमत्यर्थं च । बलवत्यः । कं तम् । उच्यते । **इन्द्रम्** । कीदृश्याः । **अवाताः** वात-रहिताः । अथवा अविद्यमानो विनियन्ता वातो यासां ता अवाताः । वायुनापि निरोद्धुम् अशक्या इत्यर्थः । **अह्रुतप्सवः** अहिंसितरूपाः ।। ४ ।।

**वेङ्कटमाधव– आ** पूरयन्ति **यम् दिवि** स्थितं सोमाः उदधिम् इव शोभनभवना आत्मीया नद्यः । **तम्** वृत्रहनने **अनु तस्थुः** मरुतः शोषकाः **इन्द्रम्** गमनरहिता अपलायितारः अहिंसितरूपाः ।। ४ ।।

**मुद्गल– सद्म** सदनं स्थानं बर्हिःशब्दोपलक्षितो यज्ञो येषां सोमानां ते सोमाः । **दिवि** स्वर्गलोकेऽवस्थितम् **यम्** इन्द्रम् **आ पृणान्ति** आ समन्तात् पूरयन्ति । नद्यः **समुद्रम् न** । यथा नद्यः समुद्रं पूरयन्ति तद्वदित्यर्थः । कीदृश्यो नद्यः । **स्वाः** समुद्रस्य स्वभूताः **अभिष्टयः** आभिमुख्येन गमनवत्यः । **ऊतयः** अवितारो मरुतः । **वृत्रहत्ये** वृत्रहनने निमित्तभूते सति **तम् इन्द्रम् अनु तस्थुः** अनुलक्ष्य स्थिता बभूवुः । कीदृशा मरुतः । **शुष्माः** शत्रूणां शोषयितारः । **अवाता** वान्ति प्रातिकूल्येन गच्छन्तीति वाताः शत्रवः तद्रहिताः । **अह्रुतप्सवः** अकुटिलरूपाः । शोभनावयवा इत्यर्थः ।। ४ ।।

**सायण– सद्म** सदनं स्थानं बर्हिःशब्दोपलक्षितो यज्ञो येषां सोमानां ते सोमाः । **दिवि** स्वर्गलोकेऽवस्थितम् **यम्** इन्द्रम् **आ पृणान्ति** आ समन्तात् पूरयन्ति । तत्र दृष्टान्तः । सुष्ठु भवन्तीति **सुभ्वः** नद्यः **समुद्रं न** । यथा नद्यः समुद्रं पूरयन्ति तद्वदित्यर्थः । कीदृश्यो नद्यः । **स्वाः** समुद्रस्य स्वभूताः । तथा चाम्नायते– 'समुद्राय वयुनाय सिन्धूनां पतये नमः' (तै.सं.४.६.२.६) इति । **अभिष्टयः** आभिमुख्येन गमनवत्यः । **ऊतयः** अवितारो मरुतः । **वृत्रहत्ये** वृत्रहनने निमित्तभूते सति **तम् इन्द्रम् अनु तस्थुः** अनुलक्ष्य स्थिता बभूवुः । कीदृशा मरुतः । **शुष्माः** शत्रूणां शोषयितारः । **अवाता** वान्ति प्रातिकूल्येन गच्छन्तीति वाताः शत्रवः तद्रहिताः । **अह्रुतप्सवः** अकुटिलरूपाः । शोभनावयवा इत्यर्थः ।।

**पृणन्ति** 'पॄ पालनपूरणयोः' क्रैयादिकः । 'प्वादीनां ह्रस्वः' इति ह्रस्वत्वम् । 'श्नाभ्यस्तयोरातः' इति आकारलोपः । प्रत्ययस्वरः । यद्वृत्तयोगादनिघातः । **सद्मबर्हिषः** । 'षद्लृ विशरणगत्यवसादनेषु' । सीदन्त्यस्मिन्निति सद्म । औणादिकोऽधिकरणे मनिन्प्रत्ययः । नित्त्वादाद्युदात्तत्वम् । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वेन तदेव शिष्यते । **सुभ्वः** । भवतेः 'क्विप् च' इति क्विप् । कृदुत्तरपदप्रकृतिस्वरत्वम् । जसि 'ओः सुपि' इति यणादेशस्य 'न भूसुधियोः' इति प्रतिषेधे प्राप्ते 'छन्दस्युभयथा' इति यणादेशः । 'उदात्तस्वरितयोर्यणः' इति अनुदात्तस्य जसः स्वरितत्वम् । **अभिष्टयः** । इष्टयः एषणानि । 'उपसर्गाश्चाभिवर्जम्' इति वचनात् अभिः अन्तोदात्तः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वेन स एव शिष्यते । एमन्नादित्वात् पररूपत्वम् । **वृत्रहत्ये** । 'हनस्त च' इति हन्तेः भावे क्यप् तकारान्तादेशश्च । प्रत्ययस्य पित्त्वादनुदात्तत्वे धातुस्वरः शिष्यते । **अह्रुतप्सवः** । 'ह्वृ कौटिल्ये' अस्मात् निष्ठायां 'ह्रु ह्वरेश्छन्दसि' (पा.सू. ७.२.३१) इति ह्रुआदेशः । 'प्सा भक्षणे' इत्यस्मात् औणादिको डुप्रत्ययः । न ह्रुतप्सवः अह्रुतप्सवः । अव्ययपूर्वपदप्रकृतिस्वरत्वम् ॥ ४ ॥

**सिद्धाञ्जनम्– सद्मबर्हिषः** सद्म सदनं बर्हिरास्तीर्णं अन्तर्यजनवेद्याम् आसनं तदुपलक्षितोऽन्तर्यागप्रदेशः येषां ते सोमाः । यजने हि सोमा अभिषुता भवन्ति दिव्यस्येन्द्रस्य सम्मदाय । तथाभूताः **यम् इन्द्रं दिवि** द्युलोके **आ पृणन्ति** समन्तात् पूरयन्ति । तत्र दृष्टान्तः– **सुभ्वः** सुष्ठु भवन्तीति सुभुवः । **स्वाः** स्वीयाः **अभिष्टयः** आभिमुख्येन एषणानि यासां ताः आपः **समुद्रं न** समुद्रमिव । यथा समुद्रं प्रति एषणायुक्ताः शोभनजन्मानो नद्यः स्वयं प्रवहन्ति तं पूरयन्ति, तथा इन्द्रं प्रति यजनसदनाः सोमा अपि शोभनभवाः 'सुभ्वः' स्वयं एषणेरिताः क्षरन्ति समन्तात् पूरयन्ति । यमिन्द्रं दिवि सोमा एवं पूरयन्ति **तम् इन्द्रम् वृत्रहत्ये** वृत्रवधे निमित्तभूते सति **ऊतयः** अवितारः (मरुत इति सायणः, आख्यायिकामवलम्ब्य) प्रवर्धयितारः सहचराः इन्द्रप्रोत्साहनधुरीणाः **अनुतस्थुः** अनुलक्ष्य तस्थुः । कीदृशास्ते? **शुष्माः** बलाढ्याः शोषयितारः शत्रूणाम् । **अवाताः** चलनरहिताः, निष्कम्पाः । **अह्रुतप्सवः** अकुटिलस्वरूपाः शोभनाकृतय इत्यर्थः ॥ **पृणन्ति**–क्रैयादिकः । **वृत्रहत्ये**– हन्तेर्भावे क्यप् तकारान्तादेशश्च । **अह्रुतप्सवः**–'ह्वृ कौटिल्ये' निष्ठायां ह्वरेः ह्रु आदेशश्छन्दसि, 'प्सा भक्षणे' औणादिको डुप्रत्ययः, प्सु रूपवाचि । न ह्रुतप्सवः अह्रुतप्सवः ॥ ४ ॥

## ऋक्संहिता पदपाठसहिता

**अभि स्ववृष्टिं मदे अस्य युध्यतो रघ्वीरिव प्रवणे सस्रुरूतयः ।**
**इन्द्रो यद्वज्री धृषमाणो अन्धसा भिनद्वलस्य परिधींरिव त्रितः ॥ ५ ॥**
**अभि । स्वऽवृष्टिम् । मदे । अस्य । युध्यतः । रघ्वीःऽइव । प्रवणे । सस्रुः । ऊतयः ।**
**इन्द्रः । यत् । वज्री । धृषमाणः । अन्धसा । भिनत् । बलस्य । परिधीन्ऽइव । त्रितः ॥**

**स्कन्द– अभि** इत्युपसर्गः **सस्रुः** इत्याख्यातेन सम्बन्धयितव्यः । स्वा वृष्टिर्यस्य स स्ववृष्टिः वृष्टेः स्वामी । कोऽसौ । **इन्द्रः** । **मदे** इति 'यस्य च भावेन' (पा.२,३,३७) इत्येव सप्तमी । तच्छ्रुतेश्च लक्षणभूतयोग्यक्रियापदाध्याहारः । **'अस्य युज्यतः'** इति अस्यशब्देनानुदात्तेन प्रकृतत्वादिन्द्रस्यानुदेशः । **स्ववृष्टिम्** इत्येतत्सामानाधिकरण्याच्चोभयत्र द्वितीयार्थे षष्ठी । सोममदे प्राप्ते स्ववृष्टिमिममिन्द्रं युध्यमानम् । **रघ्वीरिव प्रवणे** प्रवणशब्दो निम्नवचनः । यथा निम्ने प्रदेशे रघ्वी लघुगामिन्य आप अभिगच्छेयुः तद्वद् **अभि सस्रुः** अभिगतवत्यः अभिगच्छन्ति वा । **ऊतयः** मरुदादिसेनाः । कदा । उच्यते । **यत्** यदा **वज्री** गृहीतवज्रः **धृषमाणः** हृषेरयं छान्दसो धकारः । हृष्यन् । **अन्धसा** सोमलक्षणेनान्नेन । सोमेन जन्यमानहर्षः सन्नित्यर्थः । **भिनत्** भिन्नवान् भिनत्ति वा । **बलस्य** मेघनामैतत् (तु.निघ.१,१०) । द्वितीयार्थे चात्र षष्ठी । मेघम् । कथम् । **परिधीन् इव त्रितः** यथा परिधीन् त्रितः भिन्नवान् तद्वत् ।

अत्रेतिहासमाचक्षते– 'त्रितं यजन्त रक्षांस्यभिदुद्रुवुः । सोऽग्निमुवाच । जह्येतानीति । तान्यग्निर्न शशाक हन्तुम् । स क्रुद्धोऽग्नेः परिधीन् भङ्क्त्वा तैस्तानि रक्षांसि जघान' इति । तदेतदिहोच्यते– 'परिधीरिव त्रितः' इति । अथवा बलस्येति स्वार्थ एव षष्ठी । **परिधीनिति** तूत्तम्भनानि परिधय उच्यन्ते, सर्वतो निधीयमानत्वात् । मेघस्योत्तम्भनान्यभिनदित्यर्थः । इवशब्दस्तूपमार्थीय 'अस्त्युपमार्थस्य सम्प्रत्यर्थे प्रयोगः' (तु.या.७,३१) इति पदपूरणः । त्रित इत्यपि त्रिशब्दात् आद्यादित्वात् सप्तम्यास्तसिः । त्रिषु प्रदेशेषु अग्रमध्यमूलेषु अभिनदित्यर्थः । अथवा त्रित इति प्रथमान्तमिन्द्रविशेषणम् । त्रितस्त्रिस्थान इन्द्रः ॥ ५ ॥

**वेङ्कटमाधव–** स्वा वृष्टिर्यस्य तम् । सोममदे **युध्यतः** इन्द्रस्य **अस्य** साहाय्यार्थं यथा **प्रवणे** आपो यन्ति एवम् **अभि सस्रुः** मरुतः । **इन्द्रः** यदा **वज्री** सोमेन धर्षयन् बलम् अभिनत्, पापानीव । **त्रितः** आप्त्यः ॥ ५ ॥

**मुद्गल–** **ऊतयः** मरुतः । **मदे** सोमपानेन हर्षे सति **अस्य** इन्द्रस्य **युध्यतः** वृत्रेण सह युध्यमानस्य पुरतः **स्ववृष्टिम्** स्वभूतवृष्टिमन्तं वृत्रम् **अभि** आभिमुख्येन **सस्रुः** जग्मुः । **रघ्वीरिव प्रवणे** यथा गमनस्वभावाः आपः निम्नदेशे गच्छन्ति । **यत्** यदा **अन्धसा** सोमलक्षणेनान्नेन पीतेन **धृषमाणः** प्रगल्भः सन् **वज्री** वज्रवान् **इन्द्रः** **बलस्य** संवृण्वतः एतत्संज्ञमसुरम् **भिनत्** व्यदारयत् । दृष्टान्तः- **त्रितः परिधीन् इव** देवानां हविर्लेपनिघर्षणाय अग्नेः सकाशात् अप्सु एकतो द्वितस्त्रित इति त्रयः पुरुषाः जज्ञिरे । तत्र उदकपानार्थं प्रवृत्तस्य कूपे पतितस्य त्रितस्य प्रतिरोधाय असुरैः परिधयः परिधायकाः कूपस्याऽऽच्छादकाः स्थापिताः । तान् यथा सः **अभिनत्** तद्वत् ।। ५ ।।

**सायण–** **ऊतयः** मरुतः । **मदे** सोमपानेन हर्षे सति **अस्य** इन्द्रस्य **युध्यतः** वृत्रेण सह युध्यमानस्य पुरतः **स्ववृष्टिम्** स्वभूतवृष्टिमन्तं वृत्रम् **अभि** आभिमुख्येन **सस्रुः** जग्मुः । **रघ्वीरिव प्रवणे** यथा गमनस्वभावाः आपः निम्नदेशे गच्छन्ति । **यत्** यदा **अन्धसा** सोमलक्षणेनान्नेन पीतेन **धृषमाणः** प्रगल्भः सन् **वज्री** वज्रवान् **इन्द्रः** **बलस्य** संवृण्वतः एतत्संज्ञमसुरम् **भिनत्** व्यदारयत् अवधीदित्यर्थः । तत्र दृष्टान्तः– **त्रितः परिधीनिव** । देवानां हविर्लेपनिघर्षणाय अग्नेः सकाशात् अप्सु एकतो द्वितस्त्रित इति त्रयः पुरुषा जज्ञिरे । तथा च तैत्तिरीयैः समाम्नातं– 'सोऽङ्गारेणापः । अभ्यपातयत् । तत एकतोऽजायत । स द्वितीयम् अभ्यपातयत् । ततो द्वितोऽजायत । स तृतीयम् अभ्यपातयत् । ततस्त्रितोऽजायत' (तै.ब्रा.३.२.८. १०-११) इति । तत्रोदकपानार्थं प्रवृत्तस्य कूपे पतितस्य प्रतिरोधाय असुरैः परिधयः परिधायकाः कूपस्याच्छादकाः स्थापिताः । तान्यथा स **अभिनत्** तद्वत् ।।

**स्ववृष्टिम्** । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । **युध्यतः** 'युध सम्प्रहारे' दैवादिकः । व्यत्ययेन शतृ । अदुपदेशात् लसार्वधातुकानुदात्तत्वे श्यनो नित्त्वादाद्युदात्तत्वम् । **रघ्वीः** । रघिर्गत्यर्थः । 'रङ्घिबंह्योर्नलोपश्च' (उ.सू.१.२९) इति उप्रत्ययः । 'वोतो गुणवचनात्' इति ङीप् । जसि 'वा छन्दसि' इति पूर्वसवर्णदीर्घत्वम् । ङीप्स्वरः शिष्यते । **धृषमाणः** 'ञिधृषा प्रागल्भ्ये' श्नुप्रत्यये प्राप्ते व्यत्ययेन शः आत्मनेपदं च । अदुपदेशात् लसार्वधातुकानुदात्तत्वे विकरणस्वरः शिष्यते । **भिनत्** । लङि 'बहुलं छन्दस्यमाङ्योगेऽपि' इति अडभावः । विकरणस्वरः । यद्वृत्तयोगादनिघातः । **वलस्य** 'वल संवरणे' । वलति संवृणोति सर्वमिति वलः । पचाद्यच् ।

'क्रियाग्रहणं कर्तव्यम्' इति कर्मणः सम्प्रदानत्वात् चतुर्थ्यर्थे षष्ठी । **परिधीन्** । परिधीयन्ते इति परिधयः । 'उपसर्गे घोः किः' (पा.सू.३.३.९२) इति दधातेः कर्मणि किप्रत्ययः । 'आतो लोप इटि च' इति आकारलोपः । कृदुत्तरपदप्रकृतिस्वरत्वम् ।। ५ ।।

**सिद्धाञ्जनम्–** **ऊतयः** अवितारः पूर्वोक्तलक्षणाः इन्द्रसहचराः । **मदे** सोमजन्ये हर्षे सति **अस्य** इन्द्रस्य । **युध्यतः** वृत्रेण सह युध्यमानस्य पुरतः **स्ववृष्टिम्** स्वभूतवृष्टियुक्तं वृत्रं **अभि** आभिमुख्येन **सस्रुः** जग्मुः । दृष्टान्तः– **रघ्वीरिव प्रवणे** यथा गमनस्वभावा आपः निम्नदेशे गच्छन्ति, तद्वत् । **यत्** यदा **अन्धसा** अन्नभूतेन सोमेन पीतेन **धृषमाणः** धाष्टर्ययुक्तः **वज्री** वज्रवान् इन्द्रः **वलस्य** विभक्तिव्यत्ययः, वलं एतन्नामकम् असुरं **भिनत्** अभिनत् विदारितवान् तदा ऊतयः सस्रुरिति सम्बन्धः । वलभेदने दृष्टान्तः– **त्रितः परिधीनिव** अपां पुत्रः आप्त्यः त्रितः त्रिवृत्कृतस्य अस्य जगतः जडीभूतांशे गुप्तां उदकोपलक्षितां शक्तिं उद्धर्तुं जडकूपेऽवतीर्णः पुनर्निगमनद्वारं असुरैरावृतं विज्ञाय देवानां स्तोत्रेण तदनुग्रहबलात् वलयीकृतानि परिधिवदवस्थितानि पिधानानि विदारितवान् । यथा त्रितः वलयाकृतीन्यावरणानि अभाङ्क्षीत् तथा इन्द्रः प्रकाशस्य वलयितारं संवरीतारं असुरम् इति । त्रितस्य विचारः पुरस्तात् कुत्ससूक्ते (१.१०५) करिष्यते । पणिवृत्रवलादयः प्रागुक्ताः ।। **स्ववृष्टिम्**– स्वा वृष्टिर्यस्य तम् । **युध्यतः** व्यत्ययेन शतृ । **रघ्वीः**– रघिर्गत्यर्थः । **धृषमाणः** 'ञिधृषा प्रागल्भ्ये' व्यत्ययेन शः, आत्मनेपदं च । **वलस्य** 'वल संवरणे' । **परिधीन्** परिधीयन्ते, कर्मणि किप्रत्ययः ।। ५ ।।

।। इति प्रथमाष्टके चतुर्थाध्याये द्वादशो वर्गः ।।

## ।। अथ त्रयोदशो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

**परिं घृणा चंरति तित्विषे शवोऽपो वृत्वी रजंसो बुध्नमाशंयत् ।**
**वृत्रस्य यत्प्रवणे दुर्गृभिंश्वनो निजघन्थ हन्वोरिन्द्र तन्यतुम् ।। ६ ।।**

परिं । ईम् । घृणा । चरति । तित्विषे । शवः । अपः । वृत्वी । रजंसः । बुध्नम् । आ अशयत् । वृत्रस्यं । यत् । प्रवणे । दुःऽगृभिंश्वनः । निऽजघन्थं । हन्वोः । इन्द्र । तन्यतुम् ।। ६ ।।

**स्कन्द– परि ईम् घृणा** इम् इति पदपूरणः । परि **चरति** लिडर्थेऽयं लट्, परिचचार । सर्वतो भ्रान्तवतीत्यर्थः । का । **घृणा** दीप्ता स्तनयित्नुलक्षणा त्वदीया वाक् । **तित्विषे** दीप्तवच्च । **शवः** बलं त्वदीयं मरुल्लक्षणम् । कदा । उच्यते । **अपः वृत्वी** इत्यादि । अत्रैकवाक्यता-प्रसिद्ध्यर्थं यत्तच्छब्दावध्याहर्तव्यौ । यः **अपः** उदकानि **वृत्वी** आवृत्य **रजसः** अन्तरिक्षलोकस्य **बुध्नम्** अधोभागम् **आ अशयत्** शेतिरिह स्थानार्थः । आस्थितवान् । तस्य **वृत्रस्य** मेघस्य असुरस्य वा **यत्** यदा **प्रवणे** निम्ने प्रदेशे । कीदृशस्य वृत्रस्य । उच्यते । **दुर्गृभिश्वनः** दुर्गृभिशब्दो दुर्ग्रहवचनः । 'आशु' इति च 'शु' इति च क्षिप्रनामनी (तु.निघ.२,१५) । श्वा क्षिप्रश्वासः दुर्ग्रहो यस्य स दुर्गृभिश्वा । दुस्सहश्वास इत्यर्थः । शु अननं तस्य दुर्गृभिश्वनः । दुस्सहश्वासता-प्रतिपादनाय चात्र ब्राह्मणपठितमितिहासमाचक्षते– 'इन्द्रो वै वृत्रं हनिष्यन् सर्वा देवता अब्रवीत् । अनु मोपतिष्ठध्वमुप मा ह्वयध्वमिति । तथेति तं हनिष्यन्त आद्रवन् । सोऽन्वेन्मां वै हनिष्यन्त आद्रवन्ति । हन्तेमान् भीषया इति । तानभिप्राश्वसीत् । तस्य श्वसथादीषमाणा विश्वे देवा अद्रवन्' (ऐ.ब्रा.३,२०) इति । **निजघन्थ** हन्तिरत्र गत्यर्थः । सामर्थ्याच्चात्रान्तर्णीतण्यर्थः । नियमेन गमितवानसि । **हन्वोः** हनुप्रदेशे हे **इन्द्र! तन्यतुम्** विस्तीर्णं शब्दकारिणं वा वज्रम् ॥

**वेङ्कटमाधव– परि चरति** वृत्रम् दीप्तिः । बलं च तस्य दीप्तम् । **अपः** आवृत्य अन्तरिक्षलोकस्य **बुध्नम्** अपां मूलमावृत्य **आ अशयत्** । **वृत्रस्य** यदा **प्रवणे** दुर्ग्रहश्वासस्य निहतवान् **हन्वोः** असि **इन्द्र!** वज्रं शब्दकारिणम् ॥ ६ ॥

**मुद्गल–** यो वृत्रः **अपः वृत्वी** उदकान्यावृत्य **रजसः बुध्नम्** अन्तरिक्षस्योपरिप्रदेशम् **आ अशयत्** आश्रित्याशेत, तस्य **वृत्रस्य प्रवणे** प्रकर्षेण वननीये अन्तरिक्षे वर्तमानस्य **दुर्गृभिश्वनः** दुर्ग्रहव्यापनस्य । तस्य हि व्यापनं न केनापि ग्रहीतुं शक्यते । एवम्भूतस्य वृत्रस्य **हन्वोः** मुखपार्श्वयोः । हे **इन्द्र! यत्** यदा **तन्यतुम्** प्रहारं विस्तारयन्तं वज्रम् । तृतीयार्थे द्वितीया । तन्यतुना वज्रेण । **निजघन्थ** नितरां प्रजहर्थ । तदानीम् **ईम्** एनं त्वामिन्द्रम् **घृणा** शत्रुजयलक्षणा दीप्तिः **परि चरति** परितो व्याप्नोति । त्वदीयम् **शवः** बलं च **तित्विषे** प्रदिदीपे ॥ ६ ॥

**सायण–** यो वृत्रः **अपः वृत्वी** उदकान्यावृत्य **रजसः बुध्नम्** अन्तरिक्षस्योपरिप्रदेशम् **आ अशयत्** आश्रित्याशेत, तस्य **वृत्रस्य प्रवणे** प्रकर्षेण वननीये अन्तरिक्षे वर्तमानस्य **दुर्गृभिश्वनः** दुर्ग्रहव्यापनस्य । तस्य हि व्यापनं न केनापि ग्रहीतुं शक्यते । 'स इमान् लोकानावृणोत्'

इति श्रुतेः । एवम्भूतस्य वृत्रस्य **हन्वोः** मुखपार्श्वयोः । हे **इन्द्र! यत्** यदा **तन्यतुम्** प्रहारं विस्तारयन्तं यद्वा शब्दकारिणं वज्रम् । तृतीयार्थे द्वितीया । तन्यतुना वज्रेण । **निजघन्थ** नितरां प्रजहर्थ । तदानीम् **ईम्** एनं त्वामिन्द्रम् **घृणा** शत्रुजयलक्षणा दीप्तिः **परि चरति** परितो व्याप्नोति । त्वदीयम् **शवः** बलं च **तित्विषे** प्रदिदीपे ॥

**तित्विषे** 'त्विष दीप्तौ' लिटि प्रत्ययस्वरः । तिङ्परत्वात् निघाताभावः । **वृत्वी** 'वृञ् वरणे' । 'स्नात्व्यादयश्च' (पा.सू.७.१.४९) इति आदिग्रहणात् क्त्वाप्रत्ययस्य ईकारः । **रजसः** 'रञ्ज रागे' रजन्त्यस्मिन् गन्धर्वादयः इति रजोऽन्तरिक्षम् । असुनि 'रजकरजनरजःसूपसङ्ख्यानम्' (का.६.४.२४.४) इति नलोपः । नित्त्वादाद्युदात्तत्वम् । **अशयत्** । शीङो व्यत्ययेन परस्मैपदम् । 'बहुलं छन्दसि' इति शपो लुगभावः । **दुर्गृभिश्वनः** 'ग्रह उपादाने,' 'अशू व्याप्तौ' इत्यनयोः दुःशब्दे उपपदे पृषोदरादित्वात् अभिमतरूपस्वरसिद्धिः । **निजघन्थ** 'हन हिंसागत्योः' । लिटि थलि क्रादिनियमात्प्राप्तस्य इटः 'उपदेशेऽत्वतः' (पा.सू.७.२.६२) इति निषेधः । 'अभ्यासाच्च' इति अभ्यासादुत्तरस्य हकारस्य घत्वम् । 'लिति' इति प्रत्ययात् पूर्वस्योदात्तत्वम् । 'तिङि चोदात्तवति' इति गतेः निघातः । यद्वृत्तयोगात् निघाताभावः । **तन्यतुम्** 'तनु विस्तारे' अस्मात् 'ऋतन्यञ्जि' (उ.सू.४.४४२) इत्यादिना यतुच् । यद्वा 'स्तन शब्दे' इत्यस्मात् बहुलवचनात् यतुच्प्रत्यये सकारलोपः ॥ ६ ॥

**सिद्धाञ्जनम्–** यो वृत्रः **अपः** मध्यमस्थानाः तेजोबलादिशक्तिवाहिनीः **वृत्वी** वृत्वा आवृत्य **रजसः** मध्यमलोकस्य अन्तरिक्षस्य **बुध्नम्** मूलं उपरिप्रदेशमिति स्पष्टमाह सायणः, **आशयत्** आश्रित्य अशेत, तस्य तथा ऊर्ध्वप्रदेशं बुध्नमाश्रित्य शयानस्य **वृत्रस्य प्रवणे** निम्नप्रदेशे नीचैरन्तरिक्षे **दुर्गृभिश्वनः** । दुर्ग्रहव्यापनशीलस्य वृत्रस्य मध्यमस्थाने व्यापनं न केनापि ग्रहीतुं शक्यम् । हे **इन्द्र!** तादृशस्य वृत्रस्य **हन्वोः** मुखपार्श्वयोः **तन्यतुम्** तन्यतुना वज्रेण, तृतीयाविभक्तिव्यत्ययः । **यत्** यदा **निजघन्थ** नितरां प्रजहर्थ प्रहृतवानसि, तदानीं **ईम्** एनं त्वामिन्द्रं **घृणा** दीप्तिः वृत्रजयलक्षणा **परि चरति** परितो व्याप्नोति, त्वदीयं **शवः** बलं च **तित्विषे** प्रदिदीपे ॥ **तित्विषे** 'त्विष दीप्तौ' लिट् । **वृत्वी**-'वृञ् वरणे' 'स्नात्व्यादयश्च' इति क्त्वा-प्रत्ययस्य ईकारः । **अशयत्**–व्यत्ययेन परस्मैपदम् । **दुर्गृभिश्वनः**–'ग्रह उपादाने' 'अशू व्याप्तौ' इत्यनयोः दुःशब्दे उपपदे पृषोदरादित्वादिष्टरूपसिद्धिः । **निजघन्थ**–हन्तेर्लिटि मध्यमपुरुषैक-वचनम् । **तन्यतुम्**–'तनु विस्तारे' अस्माद् यतुच् ॥ ६ ॥

## ऋक्संहिता पदपाठसहिता

**ह्रदं न हि त्वा न्यृषन्त्यूर्मयो ब्रह्माणीन्द्र तव यानि वर्धना ।**
**त्वष्टा चित्ते युज्यं वावृधे शवस्ततक्ष वज्रमभिभूत्योजसम् ।। ७ ।।**
ह्रदम् । न । हि । त्वा । निऽऋषन्ति । ऊर्मयः । ब्रह्माणि । इन्द्र । तव । यानि । वर्धना ।
त्वष्टा । चित् । ते । युज्यम् । वृवृधे । शवः । ततक्ष । वज्रम् । अभिभूतिऽओजसम् ।।

**स्कन्द– ह्रदम् न हि** हिशब्दः पदपूरणः । **ऊर्मयः** इत्येतत् ह्रदं इत्यनेनोपमानेन सम्बध्यते । ह्रदमिवोर्मयः । यथा ह्रदं प्रभूता उदकोर्मयो न्यृषेयुः तद्वत् **त्वा नि ऋषन्ति** 'ऋष गतौ' नियमेन गच्छन्ति । **ब्रह्माणि** स्तुतिलक्षणानि । हे **इन्द्र! तव यानि वर्धना** वर्धनानि वृद्धिकराणि । स्तूयमानाः हि देवताः वीर्येण वर्धन्ते । अत एवमुच्यते– तव यानि वर्धना इति । किञ्च **त्वष्टा चित्** त्वष्टाऽपि देवशिल्पी **ते** तव **युज्यम्** योग्यम् **ववृधे** वर्धितवान् **शवः** बलम् । **ततक्ष** कृतवांश्च **वज्रम् अभिभूत्योजसम्** अभिभवितृबलयुक्तम् ।। ७ ।।

**वेङ्कटमाधव– ह्रदम् ऊर्मयः** इव त्वाम् तव वर्धनानि स्तोत्राणि **इन्द्र! नि ऋषन्ति** तवोपरि चलन्ति । त्वद्विषये पुनःपुनः प्रवर्तन्ते । **त्वष्टा** च तव सदृशं बलं वर्धितवान् । अकरोत् **वज्रम्** अभिभवितृबलम् ।। ७ ।।

**मुद्गल–** हे **इन्द्र! यानि ब्रह्माणि** स्तोत्रशस्त्ररूपाणि मन्त्रजातानि **तव वर्धना** वर्धयितृणि तानि **त्वा** त्वाम् **नि ऋषन्ति हि** नितरां प्राप्नुवन्त्येव । दृष्टान्तः- **ऊर्मयः** जलप्रवाहाः **ह्रदम् न** यथा जलाशयं प्राप्नुवन्ति तद्वत् **त्वष्टा चित्** त्वष्टा च देवः **ते** तव **युज्यम्** योग्यम् **शवः** बलम् **ववृधे** प्रावर्धयत् । अपि च **अभिभूत्योजसम्** शत्रूणामभिभवितृणा ओजसा बलेन युक्तम् । **वज्रम् ततक्ष** तीक्ष्णीचकार ।। ७ ।।

**सायण–** हे **इन्द्र! यानि ब्रह्माणि** स्तोत्रशस्त्ररूपाणि मन्त्रजातानि **तव वर्धना** वर्धयितृणि तानि **त्वा** त्वाम् **नि ऋषन्ति हि** नितरां प्राप्नुवन्त्येव । दृष्टान्तः- **ऊर्मयः** जलप्रवाहाः **ह्रदम् न** यथा जलाशयं प्राप्नुवन्ति तद्वत् **त्वष्टा चित्** स त्वष्टा च देवः **ते** तव **युज्यम्** योग्यम् **शवः** बलम् **ववृधे** प्रावर्धयत् । अपि च **अभिभूत्योजसम्** शत्रूणामभिभवितृणा ओजसा बलेन युक्तम् । **वज्रम् ततक्ष** तीक्ष्णीचकार ।।

**न्यृषन्ति** 'ऋषी गतौ' तौदादिकः । अदुपदेशात् लसार्वधातुकानुदात्तत्वे विकरणस्वरः । 'हि च' इति निघातप्रतिषेधः । **ऊर्मयः** 'ऋ गतौ' ऋच्छन्ति गच्छन्तीति ऊर्मयः । 'अर्तेरू च'(उ.सू.५.६३४) इति मिप्रत्ययः । गुणे सति अकारस्य ऊकारादेशश्च । प्रत्ययस्वरः । **वर्धना** 'वृधु वृद्धौ' । वर्धते एभिरिति वर्धना । करणे ल्युट् । 'शेश्छन्दसि' इति शेर्लोपः । **ततक्ष** 'तक्षू त्वक्षू तनूकरणे' लिटि णिलि लित्स्वरेण प्रत्ययात् पूर्वस्योदात्तत्वम् । पादादित्वात् निघाताभावः । **अभिभूत्योजसम्** । अभिभूयतेऽनेनेति अभिभूति । करणे क्तिन् । 'तादौ च निति' इति गतेः प्रकृतिस्वरत्वम् । अभिभूति ओजो यस्य । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् ।।

**सिद्धाञ्जनम्–** हे **इन्द्र! यानि ब्रह्माणि** मन्त्रजातानि **तव वर्धना** वर्धयितॄणि तानि **त्वा** त्वां **न्यृषन्ति** नितरां प्राप्नुवन्ति । तत्र दृष्टान्तः– **ऊर्मयो ह्रदम् न हि** जलप्रवाहाः यथा जलाश्रयं प्राप्नुवन्ति तद्वत् । **त्वष्टा चित्** देवतक्षा त्वष्टैव **ते** तव **युज्यम्** योज्यं योग्यं **शवः** बलं **ववृधे** वर्धितवान् । अपि च **अभिभूत्योजसम्** अभिभूति शत्रूणामभिभवितृ ओजो बलं यस्य तं **वज्रम्** आयुधं **ततक्ष** तीक्ष्णीकृतवान् ।। **न्यृषन्ति**–'ऋषी गतौ' तुदादिः । **अभिभूत्योजसम्**– अभिभूयतेऽनेनेति अभिभूति, करणे क्तिन् । अन्यत्सर्वं गतम् ।। ७ ।।

## ऋक्संहिता पदपाठसहिता

**जघन्वाँ उ हरिभिः सम्भृतक्रतविन्द्र वृत्रं मनुषे गातुयन्नपः । अयच्छथा बाह्वोर्वज्रमायसमधारयो दिव्या सूर्यं दृशे ।। ८ ।।**

**जघन्वान् । ऊँ इति । हरिऽभिः । संभृतक्रतो इति सम्भृतऽक्रतो । इन्द्र । वृत्रम् । मनुषे । गातुऽयन् । अपः । अयच्छथाः । बाह्वोः । वज्रम् । आयसम् । अधारयः । दिवि । आ । सूर्यम् । दृशे ।। ८ ।।**

**स्कन्द– जघन्वान्** इति शत्रर्थे क्वसुः । 'उ' इति तु पदपूरणः । घ्नन् । **हरिभिः** आत्मीयैरश्वैः । तृतीयानिर्देशाद् गत्वेति शेषः । हे **सम्भृतक्रतो** सम्भृतकर्मन् सम्भृतप्रज्ञ वा इन्द्र! कं घ्नन् । उच्यते । **वृत्रम्** । किमर्थम् । **मनुषे** मनो राज्ञः ऋषेर्वा मनुष्यस्य वाऽर्थाय । **गातुयन्** गमनमिच्छन् । कस्य । अपां वृष्टिलक्षणानामुदकानाम् । **अयच्छथाः** निर्बद्धवानसि । **बाह्वोः** बाहुभ्याम् । अत्र सम्बन्धाद्धस्तौ लक्ष्येते । हस्ताभ्यां गृहीत्वा नयसीत्यर्थः । किम् ।

**वज्रम्** । कीदृशम् । **आयसम्** लोहमयम् । किञ्च **अधारयः** धारितवान् स्थापितवानसि **दिवि** द्युलोके । आकारो मर्यादायाम् । कम् । **सूर्यम्** । **दृशे** दर्शनाय । तदेतत्पुरस्तादपि उक्तम्– 'वृत्रं यदिन्द्र शवसा वधीरहिमादित्सूर्यं दिव्यारोहयो दृशे'(ऋ.१,५१,४)इति ।। ८ ।।

**वेङ्कटमाधव– जघन्वान्** अश्वैः गत्वा । सम्भृतप्रज्ञ **इन्द्र! वृत्रम्** मनुष्यार्थम् **अपः** गमयितुमिच्छन् अग्रहीः । **बाह्वोः आयसम्** आयुधम् । अथ तं हत्वा सर्वेषाम् दर्शनाय **दिवि सूर्यम् आ अधारयः** ।। ८ ।।

**मुद्गल–** हे **सम्भृतक्रतो** सम्पादितकर्मन् **इन्द्र! मनुषे** जनाय **गातुयन्** गातुं मार्गमिच्छन् **वृत्रम्** असुरम् **हरिभिः** अश्वैर्युक्तस्त्वम् **जघन्वान् उ** हतवान् खलु । तदनन्तरम् **अपः** वृष्ट्युदकानि । 'प्रावर्तय' इत्यध्याहारः । **बाह्वोः** त्वदीययोर्हस्तयोः । **आयसम्** अयोमयम् **वज्रम् अयच्छथाः** अग्रहीः । आकारः समुच्चयार्थः । **सूर्यम् च दिवि** द्युलोके **दृशे** द्रष्टुं सर्वेषाम् अस्माकं दर्शनाय **अधारयः** स्थापयाश्चकृषे ।। ८ ।।

**सायण–** हे **सम्भृतक्रतो** सम्पादितकर्मन् सम्पादितप्रज्ञ वा **इन्द्र! मनुषे** जनाय **गातुयन्** गातुं मार्गमिच्छन् **वृत्रम्** लोकानामासुरं **हरिभिः** अश्वैर्युक्तस्त्वम् **जघन्वान् उ** हतवान् खलु । तदनन्तरम् **अपः** वृष्ट्युदकानि । 'प्रावर्तय' इत्यध्याहारः । **बाह्वोः** त्वदीययोर्हस्तयोः । **आयसम्** अयोमयम् **वज्रम् अयच्छथाः** अग्रहीः । आकारः समुच्चयार्थः । **सूर्यम् च दिवि** द्युलोके **दृशे** द्रष्टुं सर्वेषाम् अस्माकं दर्शनाय **अधारयः** स्थापयाश्चकृषे ।। ८ ।।

**जघन्वान्** क्वसुः । 'विभाषा गमहनविदविशाम्' (पा.सू.७.२.६८) इति इडागमस्य विकल्पोक्तेरभावः । **गातुयन्** गातुमिच्छसि । 'छन्दसि परेच्छायामपि'(का.३.१.८.२)इति क्यच् । 'न च्छन्दस्यपुत्रस्य' इति दीर्घप्रतिषेधः । क्यजन्तात् शतरि अदुपदेशात् लसार्वधातुकानुदात्तत्वे क्यच एव स्वरः शिष्यते । **बाह्वोः** । 'उदात्तयणो हल्पूर्वात्' इति विभक्तेरुदात्तत्वम् ।। ८ ।।

**सिद्धाञ्जनम्– हरिभिः** अश्वैः त्वदीयवाहनैर्दिव्यप्राणबलोपलक्षणैः साधनभूतैः । **सम्भृतक्रतो** सम्पादितकर्मन्, हे **इन्द्र!** बहूनि कर्माणि साधितानि इन्द्रेण, तदिदं सम्बोधनम् । तेषां कर्मणां कानिचिदाह । त्वं **मनुषे** मानुषाय जनाय **अपः** अपामिति विभक्तिव्यत्ययः । **गातुयन्** मार्गमिच्छन् **वृत्रम्** आवरकं प्रतिरोधकं असुरं **जघन्वान् उ** हतवान् खलु । मनुष्यहिताय अपां

प्रवाहस्य मार्गमिच्छन्निन्द्रः तत्प्रतिरोधकं वृत्रं हतवान् । 'मनुषे गातुयन् इन्द्रः वृत्रं जघन्वान्' इत्यन्वयं प्रतिपाद्य 'अपः प्रावर्तय इत्यध्याहारः' इति सायणः । अपि च **बाह्वोः** त्वदीययोः आयसम् अयोमयं, दाढर्योपलक्षणमिदं, **वज्रम् अयच्छथाः** अग्रहीः, आ समुच्चये । किञ्च **दिवि** स्वर्लोके दृशे **द्रष्टुं** अस्माकं दर्शनाय **सूर्यम्** ज्योतिर्मयं देवमुत्तमं **अधारयः** स्थापितवानसि ।। **जघन्वान्**–हन्तेर्लिटः क्वसुः । **गातुयन्**–छन्दसि परेच्छायामपि क्यच् ।। ८ ।।

## ऋक्संहिता पदपाठसहिता

**बृहत्स्वश्चन्द्रममवद्यदुक्थ्य१मकृण्वत भियसा रोहणं दिवः ।**
**यन्मानुषप्रधना इन्द्रमूतयः स्वर्नृषाचो मरुतोऽमदन्ननु ।। ९ ।।**
**बृहत् । स्वऽचन्द्रम् । अमऽवत् । यत् । उक्थ्यम् । अकृण्वत । भियसा । रोहणम् । दिवः । यत् । मानुषऽप्रधनाः । इन्द्रम् । ऊतयः । स्वः । नृऽसाचः । मरुतः । अमदन् । अनु ।।**

**स्कन्द– बृहत्** महत् परिमाणतः सारतो वा स्तुतिरूपम् । **स्वश्चन्द्रम्** चन्द्रं चन्दतेः कान्तिकर्मणः । स्वयमेव कान्तम् । **अमवत्** अमशब्दः आत्मपर्यायः । तेन चात्र प्रयत्नो लक्ष्यते । आत्मवत् प्रयत्नवत् । महता प्रयत्नेनेत्यर्थः । **यत् उक्थ्यम्** प्रशस्यम् । यच्छब्द श्रुतेस्तच्छब्दोऽध्याहार्यः । तत् **अकृण्वत** कृतवन्तोऽस्मदीया ऋत्विजः पुत्रपौत्रादयो वा । **भियसा** परिचर्यावैगुण्यभयेन । कीदृशम् । **रोहणम् दिवः** द्युलोकारोहणसमर्थम् । साद्गुण्याद्यङ्ग विध्वंसकैरसुरैः रक्षोभिर्वाऽन्तराऽवलोप्तुम् अशक्यम् अत्यन्तसगुणमित्यर्थः । कदा । उच्यते– **यत्** यदा **मानुषप्रधना** मनुष्यार्थो मानुषः । 'प्रधन इति सङ्ग्रामनाम' (या.९,२३) । असुरैर्मेघैर्वा सह मनुष्यार्थः सङ्ग्रामो येषां ते मानुषप्रधनाः । **'इन्द्रम्'** इत्येतत्तु अन्त्येन अनुशब्देन सह सम्बन्धयितव्यम् । कीदृशाः । **ऊतयः** अवितारः, रक्षितारो गन्तारो वेत्यर्थः । **स्वः** सर्वपर्यायोऽ यम्, सर्वे । **नृषाचः** नृभिर्ये सेव्यन्ते सेवन्ते वा नॄन् वृष्टिप्रदानादिना ते नृषाचः । के ते । उच्यते । **मरुतः** । किं कृतवन्तः । उच्यते । **अमदन्** इन्द्रम् **अनु** 'तृतायार्थे (पा.१,४,८५) इत्ययमनु कर्मप्रवचनीयः । सहार्थश्चात्र तृतीयार्थः । सोमेन मत्ता इन्द्रेण सहेत्यर्थः ।। ९ ।।

**वेङ्कटमाधव– बृहत्** साम स्वयमेव कान्तं बलवत् यदा प्रशस्यम् अकुर्वत भयेन स्तोतारः दिवः रोहणनिमित्तम् । यदा वा मनुष्यहितसङ्ग्रामाः **इन्द्रम् मरुतः स्वः** दिवि स्थितं देवाः सन्तः मनुष्यान् सेवमानाः **अनु अमदन्** । उत्तरत्र सम्बन्धः ।। ९ ।।

**मुद्गल–** **बृहत्** बृहत्साम स्तोतारो यजमानाः **भियसा** वृत्रभयेन **यत्** यदा **उक्थ्यम्** उक्थार्हम् स्तोत्रयोग्यम् **अकृण्वत** अकुर्वन् । कीदृशं बृहत्साम । **स्वश्चन्द्रम्** स्वकीयेन चन्द्रेणाह्लादकेन तेजसा युक्तम् **अमवत्** अमति शत्रून् रुजत्यनेनेति अमो बलं तद्युक्तम् । **दिवः** स्वर्गस्य **रोहणम्** आरोहणहेतुभूतम् । एवंविधेन स्तोत्रेण वृत्राद्भीता इन्द्रम् अस्तोषतेत्यर्थः । **यत्** यदा **मानुषप्रधनाः** मनुष्यहितसङ्ग्रामा **ऊतयः** **स्वः** द्युलोकस्य रक्षितारः **मरुतः** **नृषाचः** प्राणरूपेण नॄन् सेवमाना भूत्वा **इन्द्रम्** अपि तेनैव रूपेण **अनु** **अमदन्** आनुपूर्व्येण हर्षं प्रापयन् । तदानीं स इन्द्र वृत्रवधं प्रति उद्युक्तो बभूवेति शेषः ।। ९ ।।

**सायण–** **बृहत्** बृहत्साम स्तोतारो यजमानाः **भियसा** वृत्रभयेन **यत्** यदा **उक्थ्यम्** उक्थार्हम् स्तोत्रयोग्यम् **अकृण्वत** अकुर्वन् । कीदृशं बृहत्साम । **स्वश्चन्द्रम्** स्वकीयेन चन्द्रेणाह्लादकेन तेजसा युक्तम् **अमवत्** अमति शत्रून् रुजत्यनेनेति अमो बलं तद्युक्तम् । **दिवः** स्वर्गस्य **रोहणम्** आरोहणहेतुभूतम् । एवंविधेन स्तोत्रेण वृत्राद्भीता इन्द्रम् अस्तोषतेत्यर्थः । **यत्** यदा **मानुषप्रधनाः** । 'प्रकीर्णान्यस्मिन्धनानि भवन्ति' (निरु.९.२३) इति नैरुक्तव्युत्पत्त्या प्रधनमिति सङ्ग्रामनाम । मनुष्यहितसङ्ग्रामा **ऊतयः** **स्वः** द्युलोकस्य रक्षितारः **मरुतः** **नृषाचः** प्राणरूपेण नॄन् सेवमाना भूत्वा **इन्द्रम्** अपि तेनैव रूपेण **अनु** **अमदन्** आनुपूर्व्येण हर्षं प्रापयन् । तदानीं स इन्द्र वृत्रवधं प्रति उद्युक्तो बभूवेति शेषः ।।

**स्वश्चन्द्रम्** स्वकीयं चन्द्रं यस्य । 'ह्रस्वाच्चन्द्रोत्तरपदे मन्त्रे' (पा.सू.६.१.१५१) इति सुट् । श्चुत्वेन शकारः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । **भियसा** । भीशब्दस्य तृतीयैकवचने छान्दसः असुगागमः तस्य उदात्तत्वं च । **नृषाचः** 'षच समवाये' । अयं सेवनार्थ इति यास्कः । 'वहश्च' (पा.सू.३.२.६४) इत्यत्र चशब्दस्यानुक्तसमुच्चयार्थत्वादस्मादपि ण्विप्रत्ययः । **अमदन्** 'मदी हर्षे,' णिचि 'मदी हर्षग्लपनयोः' इति घटादिषु पाठात् मित्त्वे सति 'मितां ह्रस्वः' इति ह्रस्वत्वम् । लङि 'छन्दस्युभयथा' इति शपः आर्धधातुकत्वात् 'णेरनिटि' इति णिलोपः ।। ९ ।।

**सिद्धाञ्जनम्–** **यत्** यदा स्तोतारः **भियसा** असुराद्भयेन **उक्थ्यम्** उक्थार्हं स्तोत्रयोग्यं **बृहत्** बृहन्नाम्ना विश्रुतं साम **अकृण्वत** अकुर्वन् । कीदृशं बृहत्साम? **स्वश्चन्द्रम्** स्वीयेन चन्द्रेण आह्लादकेन तेजसा युक्तं **अमवत्** बलयुक्तं **दिवः** **रोहणम्** द्युलोकस्यारोहणहेतुभूतम् । एवम्भूतेन स्तोत्रेण वृत्राद्भीता इन्द्रम् अस्तोषतेत्यर्थः । **यत्** यदा **मानुषप्रधनाः** मानुषहितानि प्रधनानि

युद्धानि येषां ते । **स्वः** द्युलोकस्य **ऊतयः** अवितारः **मरुतः, नृषाचः** नॄन् मनुष्यान् सेवमाना भूत्वा **इन्द्रम् अन्वमदन्** इन्द्रम् अनुसृत्य हर्षं प्रापयन् । तदानीं इन्द्रः वृत्रं जघन्वानिति पूर्वेण सम्बन्धः ।। **स्वश्चन्द्रम्**–ह्रस्वाच्चन्द्रोत्तरपदे मन्त्रे, सुटः श्चुत्वेन शकारः । **भियसा**–भीशब्दस्य तृतीयैकवचने छान्दसः असुगागमः । **नृषाचः**–'षच समवाये' अयं सेवनार्थः । **अमदन्**–'मदी हर्षे' णिचि, णिलोपः ।। ९ ।।

## ऋक्संहिता पदपाठसहिता

**द्यौश्चि॑द॒स्याम॑वाँ॒ अहेः॑ स्व॒नादयो॑यवीद्भि॒यसा॒ वज्र॑ इन्द्र ते ।**
**वृ॒त्रस्य॒ यद्ब॑द्धा॒नस्य॑ रोदसी॒ मदे॑ सु॒तस्य॒ शव॑सा॒भिन॒च्छिरः॑ ।। १० ।।**
**द्यौः । चि॒त् । अ॒स्य॒ । अम॑ऽवान् । अहेः॑ । स्व॒नात् । अयो॑यवीत् । भि॒यसा॑ । वज्रः॑ । इन्द्र । ते॒ । वृ॒त्रस्य॑ । यत् । ब॒द्ध॒धा॒नस्य॑ । रो॒द॒सी॒ इति॑ । मदे॑ । सु॒तस्य॑ । शव॑सा । अ॒भि॑नत् । शिरः॑ ।। १० ।।**

**स्कन्द– द्यौः चित्** चिच्छब्दोऽप्यर्थः । द्यौरपि, किमुतान्ये देवाः । कीदृशो द्यौः । **अमवान्** आत्मवान् प्रयत्नवान् । किं कृतवान् । उच्यते । **अस्य अहेः** अहन्तव्यस्यान्येन हन्तुम् अशक्यस्य वृत्रस्य स्वभूतात् **स्वनात्** श्वासशब्दात् **अयोयवीत्** यौतिः पृथग्भावार्थः । पृथग्भूतः । नष्ट इत्यर्थः । कम्पनार्थो वा यौतिः सामर्थ्यात् । अकम्पतेत्यर्थः । **भियसा** भयेन । वृत्रश्वासात् बिभ्यतस्तद्वर्जं सर्वे देवा नष्टा इत्यर्थः । अत्र च ब्राह्मणम्– '....... इति' तानभि प्राश्वसीत् । तस्य श्वसथादीषमाणा विश्वे देवा अद्रवन्' (ऐ.ब्रा.३,२०) इत्ययमितिहासो दर्शयितव्यः । कदा पुनरयोयवीत् । उच्यते । **वज्रः** हे **इन्द्र! ते** तव स्वभूतः । **वृत्रस्य यत्** यदा **बद्धधानस्य** बाधतेरिदम् । अभ्यस्तानामुपधाह्रस्वत्वम् । अचि इत्येव ह्रस्वत्वम् । वृष्टिप्रतिबन्धकरणेनात्यर्थं बाधमानस्य । **रोदसी** उभे अपि द्यावापृथिव्यौ । रोदसी इति चानुदात्तत्वप्रसिद्ध्यर्थं व्यत्ययेन द्वितीयायाः स्थाने आमन्त्रितप्रथमा द्रष्टव्या । **मदे सुतस्य** मदे इति 'यस्य च भावेन' (पा.२,३,३७) इत्येव सप्तमी । तच्छ्रुतेश्च लक्षणभूतयोग्यक्रियापदाध्याहारः । सुतस्य सोमस्य सम्बन्धिनि मदे प्राप्ते । सोमेन मत्तस्य सतस्तवेत्यर्थः । **शवसा** बलेन **अभिनत्** भिन्नवान् । किम् । **शिरः** मूर्धानम् । अस्यामृच्यप्रकृतत्वात् अहेरस्येत्येतस्यान्वादेशत्वासम्भवाच्छान्दसम् अनुदात्तत्वं व्याख्येयम् । अन्वादेशार्थं वोत्तरोऽर्धर्चः पूर्वं योजयितव्यः । पश्चात् पूर्वः । यदा त्वदीयो वज्रो वृत्रस्य शिरोऽभिनत्तदास्याहेः स्वनादिति ।। १० ।।

**वेङ्कटमाधव– द्यौः** अपि बलवान् । **अस्य अहेः स्वनात्** तदानीं भयेन **अयोयवीत्** अकम्पत । यदा द्यावापृथिवी बाधमानस्य सोमस्य मदे तव वज्रः बलेन **वृत्रस्य शिरः अभिनत्**, तदा **अयोयवीदिति** । वृत्र एवाहननादहिरुक्तः ।। १० ।।

**मुद्गल– अमवान्** बलवान् **द्यौः चित्** द्युलोकोऽपि **अस्य अहेः** वृत्रस्य **स्वनात्** शब्दात् **भियसा** भयेन **अयोयवीत्** अत्यर्थं पृथग्भूत आसीत् । अकम्पतेत्यर्थः । हे **इन्द्र! ते** तव **सुतस्य** अभिषवादिभिः संस्कृतस्य सोमस्य पानेन **मदे** हर्षे जाते सति त्वदीयः **वज्रः**, **रोदसी** द्यावापृथिव्यौ **बद्बधानस्य** बाधनशीलस्य **वृत्रस्य शिरः यत्** यदा **शवसा** बलेन **अभिनत्** अच्छिनत्, तदानीं द्युलोको भयराहित्येन निश्चलो बभूवेति शेषः ।। १० ।।

**सायण– अमवान्** बलवान् **द्यौः चित्** द्युलोकोऽपि **अस्य अहेः** वृत्रस्य **स्वनात्** शब्दात् **भियसा** भयेन **अयोयवीत्** अत्यर्थं पृथग्भूत आसीत् । अकम्पतेत्यर्थः । हे **इन्द्र! ते** तव **सुतस्य** अभिषवादिभिः संस्कृतस्य सोमस्य पानेन **मदे** हर्षे जाते सति त्वदीयः **वज्रः**, **रोदसी** द्यावापृथिव्यौ **बद्बधानस्य** बाधनशीलस्य **वृत्रस्य शिरः यत्** यदा **शवसा** बलेन **अभिनत्** अच्छिनत्, तदानीं द्युलोको भयराहित्येन निश्चलो बभूवेति शेषः ।।

**अयोयवीत्** 'यु मिश्रणामिश्रणयोः' । अस्मात् यङ्लुगन्तात् लङि 'यङो वा' (पा.सू. ७.३.९४) इति अपृक्तप्रत्ययस्य ईडागमः । अडागम उदात्तः । **बद्बधानस्य** 'बाधृ विलोडने' । ताच्छीलिके चानशि 'बहुलं छन्दसि' इति शपः श्लुः । हलादिशेषाभावो धातोर्ह्रस्वत्वं च छान्दसत्वात् । 'चितः' इत्यन्तोदात्तत्वम् ।। १० ।।

**सिद्धाञ्जनम्– अमवान्** बलवान् **द्यौश्चित्** द्युलोकोऽपि । **अस्य** प्रकृतस्य **अहेः** वृत्रस्य **स्वनात्** घोषात् **भियसा** भयेन **अयोयवीत्** पृथग्भूत इव अकम्पतेत्यर्थः । हे **इन्द्र! ते** तव **सुतस्य** अभिषुतस्य सोमस्य पानेन **मदे** हर्षे जाते सति **वज्रः** त्वदीयः । **रोदसी** द्यावापृथिव्यौ **बद्बधानस्य** बाधमानस्य बाधनशीलस्य वृत्रस्य **शिरः यत्** यदा **शवसा** दीप्तेन बलेन **अभिनत्** अच्छिनत्, तदानीं द्युलोको भयरहितोऽभूदिति शेषः ।। **अयोयवीत्**–'यु मिश्रणामिश्रणयोः', यङ्लुगन्तात् लङ् । **बद्बधानस्य**-'बाधृ विलोडने', ताच्छीलिकश्चानश्, शपः श्लुः छन्दसि ।।

**।। इति प्रथमाष्टके चतुर्थाध्याये त्रयोदशो वर्गः ।।**

## ।। अथ चतुर्दशो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

**यदिन्न्विन्द्र पृथिवी दशभुजिरहानि विश्वा ततनन्त कृष्टयः ।**
**अत्राह ते मघवन्विश्रुतं सहो द्यामनु शवसा बर्हणा भुवत् ।। ११ ।।**
यत् । इत् । नु । इन्द्र । पृथिवी । दशऽभुजिः । अहानि । विश्वा । ततनन्त । कृष्टयः ।
अत्र । अह । ते । मघऽवन् । विऽश्रुतम् । सहः । द्याम् । अनु । शवसा । बर्हणा ।
भुवत् ।। ११ ।।

**स्कन्द– यत् इत् नु इन्द्र** यच्छब्दो यदिशब्दस्यार्थे । 'इत् नु' इति पदपूरणौ । यदिशब्दश्रुतेश्च तत्सम्बन्धयोग्यक्रियापदाध्याहारः । यदि स्यात् । हे **इन्द्र! पृथिवी दशभुजिः** दशाभोगा । दशगुणेत्यर्थः । **अहानि** च **विश्वा** सर्वाणि **ततनन्त** एकत्र सङ्घात्य विस्तारयेयुः । **कृष्टयः** मनुष्याः । **अत्र** यदिति प्रक्रान्तत्वादपीत्यस्यार्थे । **अह ते** अहेति विनिग्रहार्थीयः एवशब्देन समानार्थः । 'ते' शब्दाच्च परो द्रष्टव्यः । **ते अह** तवैव । हे **मघवन्! विश्रुतम्** विख्यातम् । **सहः** सेनालक्षणं बलम् । **द्याम् अनु** दिवं प्रति । द्युलोके व्यवस्थितं सदित्यर्थः । **शवसा** सामर्थ्यलक्षणेन बलेन **बर्हणा** परिवृद्धम् **भुवत्** भवेत् । दशगुणायाः पृथिव्याः सर्वेभ्यश्च संहतेभ्योऽहोभ्यः सकाशात् तवैव महत्तरं बलमिति समस्तार्थः ।। ११ ।।

**वेङ्कटमाधव–** यदि एव इयम् । **इन्द्र! पृथिवी** दशगुणा भवति, यदि च **अहानि** सर्वाण्येव विस्तारयेयुः । मनुष्याः सर्वदा ब्रुवाणाश्चरेयुः । **अत्र एव ते मघवन्!** बलकृतं सर्वं कर्म **विश्रुतम्** भवति । तव बलेनागतं शत्रुहिंसनं द्युसदृशं भवति महत्तयेति ।। ११ ।।

**मुद्गल– यत् इत् नु** यदा खलु **पृथिवी दशभुजिः** दशगुणिता भवेत् । यदि वा **कृष्टयः** प्रजाः **विश्वा** सर्वाणि **अहानि** कर्माणि **ततनन्त** विस्तारयेयुः । हे **मघवन्** धनवन् **इन्द्र! अत्र अह** अत्रैव पूर्वोक्तेष्वेव देशकालकर्तृकेषु **ते** त्वदीयम् **सहः** वृत्रवधादिकारणं बलम् **विश्रुतम्** विख्यातम् । **शवसा** त्वदीयेन बलेन कृता **बर्हणा** वृत्रादेर्वधरूपा क्रिया **द्याम् अनु भुवत्** अनुभवति । यथा द्यौर्महती तथा त्वत्कृतं वृत्रादेर्हिंसनमपि महदिति भावः ।। ११ ।।

**सायण– यदिन्नु पृथिवी दशभुजिः** दशगुणिता भवेत् । यदि वा **कृष्टयः** प्रजाः **विश्वा**

सर्वाणि **अहानि** कर्माणि **ततनन्त** विस्तारयेयुः । हे **मघवन्** धनवन् **इन्द्र! अत्र अह** अत्रैव पूर्वोक्तेष्वेव देशकालकर्तृकेषु **ते** त्वदीयम् **सहः** वृत्रवधादिकारणं बलम् **विश्रुतम्** विख्यातं प्रसिद्धम् । **शवसा** त्वदीयेन बलेन कृता **बर्हणा** वृत्रादेर्वधरूपा क्रिया **द्याम् अनु भुवत्** अनुभवति । यथा द्यौर्महती तथा त्वत्कृतं वृत्रादेर्हिंसनमपि महदिति भावः ।

**ततनन्त** 'तनु विस्तारे' । स्वरितेत्त्वात् आत्मनेपदम् । लिङर्थे लङि उप्रत्यये प्राप्ते व्यत्ययेन शप् । छान्दसो द्विर्भावः । यद्वा । 'बहुलं छन्दसि' इति उप्रत्ययस्य श्लौ सति पुनरपि व्यत्ययेन शप् । शपः पित्त्वादनुदात्तत्वम् । तिङश्च लसार्वधातुकस्वरेण धातुस्वरः शिष्यते । 'बहुलं छन्दस्यमाङ्योगेऽपि' इति अडभावः । यद्वृत्तयोगादनिघातः । **विश्रुतम्** 'श्रु श्रवणे' कर्मणि निष्ठा । 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् । **बर्हणा** 'बर्ह बल्ह परिभाषणहिंसाच्छादनेषु' । अस्मात् औणादिकः क्युप्रत्ययः । बवयोरभेद इति वकारस्य बत्वम् । प्रत्ययस्वरः । 'निबर्हयति' (नि.२.१९.३०) इति वधकर्मसु पठितं च । **भुवत्** 'भू सत्तायाम्' लेटि अडागमः । 'इतश्च लोपः' इति इकारलोपः । 'बहुलं छन्दसि' इति शपो लुक् । 'भूसुवोस्तिङि' इति गुणप्रतिषेधे उवङादेशः ।। ११ ।।

**सिद्धाञ्जनम्– यदिन्नु** यद्येव **पृथिवी दशभुजिः** दशगुणिता भवेत् । यदि वा **कृष्टयः** मनुष्याः **विश्वा** सर्वाणि **अहानि** दिनानि **ततनन्त** विस्तारयेयुः स्वीयजनसङ्ख्याम् । अहरहः प्रवृद्धा च भवेद्यदि मानुषजनसङ्ख्या, हे **मघवन् इन्द्र!** तदा **अत्राह** अत्रैव पूर्वोक्तदेशकाल कर्तृकेषु अवस्थाविशेषेष्वपि **ते** त्वदीयं **सहः** बलं **विश्रुतं** प्रख्यातं भवेत् । **शवसा** त्वदीयेन बलेन कृता **बर्हणा** अभिवृद्धिः **द्यामनु** द्युलोकमनुसृत्य **भुवत्** भवति, यथा दिवो वृद्धिर्महती अपरिमिता च तथा तव महिम्नो वृद्धिश्च भवति । पृथिवी दशगुणिता भवतु, मानवसङ्ख्या च अनुदिनं वर्धमाना भवतु, तव विश्रुतो बलमहिमा तत्र सर्वत्र द्युलोक इवोज्ज्वलो भवेदित्यसंशयम् ।। **ततनन्त**- 'तनु विस्तारे' छान्दसो द्विर्भावः, लिङर्थे लङ्, व्यत्ययेन शप् । **बर्हणा**–'बृह वृद्धौ' औणादिकः क्युप्रत्ययः । **भुवत्**– भूधातोर्लेटि अडागमः उवङादेशश्च ।। ११ ।।

## ऋक्संहिता पदपाठसहिता

**त्वमस्य परि रजसो व्योमनः स्वभूत्योजा अवसे धृषन्मनः ।**
**चकृषे भूमिं प्रतिमानमोजसोऽपः स्वः परिभूरेष्या दिवम् ।। १२ ।।**

**त्वम् । अस्य । पारे । रजसः । विऽओमनः । स्वभूतिऽओजाः । अवसे । धृषत्ऽमनः । चकृषे । भूमिम् । प्रतिऽमानम् । ओजसः । अपः । स्वरिति स्वः । परिऽभूः । एषि । आ । दिवम् ।। १२ ।।**

**स्कन्द– त्वम् अस्य पारे** पारम् अन्तम् । सप्तमीनिर्देशाच्च योग्यक्रियाध्याहारः । त्वमस्य पारे अन्ते तिष्ठसि । **रजसः** लोकस्य **व्योमनः** व्योम्नः अन्तरिक्षाख्यास्य । कीदृशः । **स्वभूत्योजाः** स्वभूतिः स्वसामर्थ्यं, सा ओजो बलं यस्य स स्वभूत्योजाः । किमर्थम् । **अवसे** तुमर्थे सेन्प्रत्ययः । अवितुम् । कृत्स्नं जगत् वृष्टिप्रदानद्वारेण पालयितुमित्यर्थः । हे **धृषन्मनः** शत्रुधर्षणचित्त! शब्दाभिभवशील! इत्यर्थः । किञ्च **चकृषे** कृतवानसि । **भूमिम् प्रतिमानम्** उपमानम् । **ओजसः** आत्मीयस्य बलस्य । **अपः** अन्तरिक्षं च । 'आपः' इति बहुवचनान्तोऽप्छब्दोऽन्तरिक्षनामसु पठितः (तु.निघ.१,१२) । **स्वः** दिवं च । त्रयो लोकाः समुदिताः तव बलस्योपमा भवति । **परिभूः** परिपूर्वो भवतिः सर्वत्र परिग्रहे । यावत् किञ्चित् सर्वस्य परिग्रहीता त्वम् **एषि आ** आगच्छसि च । सोमं पीत्वा पृथिवीतः **दिवम्** द्युलोकम् ।। १२ ।।

**वेङ्कटमाधव– त्वम्, अस्य** अन्तरिक्षलोकस्य अन्ते स्थितः सन् स्वभूतबलः रक्षणार्थं शत्रूणाम् अभिभवनशीलचित्त! तिष्ठसि । **चकृषे** कृतवानसि च भूमिम् । बलवतां बलस्य प्रतिद्वन्द्वी त्वम् । अन्तरिक्षं सर्वं परिभवन् **आ** गच्छसि **दिवम्** इति ।। १२ ।।

**मुद्गल–** हे **धृषन्मनः** शत्रूणां धर्षकमनोयुक्त इन्द्र! **अस्य** अस्माभिः परिदृश्यमानस्य **व्योमनः** व्याप्तस्यान्तरिक्षस्य **रजसः** लोकस्य **पारे** उपरिप्रदेशे वर्तमानः **स्वभूत्योजाः** स्वभूत बलस्त्वम् **अवसे** अस्मद्रक्षणार्थम् **भूमिम्** भूलोकम् **चकृषे** कृतवानसि । किञ्च **ओजसः** बलवतां बलस्य **प्रतिमानम्** प्रतिनिधिरभूः । तथा **स्वः** सुष्ठु अरणीयं गन्तव्यम् **अपः** अन्तरिक्षलोकम् **आ दिवम्** द्युलोकञ्च **परिभूः** परिग्रहीता परिग्रहणार्थम् **एषि** प्राप्नोषि ।। १२ ।।

**सायण–** हे **धृषन्मनः** शत्रूणां धर्षकमनोयुक्त इन्द्र! **अस्य** अस्माभिः परिदृश्यमानस्य **व्योमनः** व्याप्तस्यान्तरिक्षस्य **रजसः** लोकस्य **पारे** उपरिप्रदेशे वर्तमानः **स्वभूत्योजाः** स्वभूत बलस्त्वम् **अवसे** अस्मद्रक्षणार्थम् **भूमिम्** भूलोकम् **चकृषे** कृतवानसि । किञ्च **ओजसः** बलवतां बलस्य **प्रतिमानम्** प्रतिनिधिरभूः । तथा **स्वः** सुष्ठु अरणीयं गन्तव्यम् । आपः इति अन्तरिक्षनाम । **अपः** अन्तरिक्षलोकम् **आ दिवम्** द्युलोकञ्च **परिभूः** परिग्रहीता । परिपूर्वो भवतिः परिग्रहणार्थः । **एषि** प्राप्नोषि ।।

**अस्य** 'ऊडिदम्' इति विभक्तेरुदात्तत्वम् । **व्योमनः** । अवतिर्गत्यर्थः, 'अव रक्षण-गतिकान्ति' इत्यभिधानात् । विशेषेण गच्छति व्याप्नोतीति व्योम । यद्वा वृष्टिप्रदानेन विशेषेण प्राणिनोऽवति रक्षतीति व्योम । 'अन्येभ्योऽपि दृश्यन्ते' इति मनिन् । 'ज्वरत्वर' इत्यादिना उपधाया वकारस्य च ऊठ् । गुणः । दासीभारादित्वात् पूर्वपदप्रकृतिस्वरत्वम् । यद्वा भावे मनिन् । विविधम् ओम रक्षणं यस्मिन् । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । यणादेशे 'उदात्त-स्वरितयोर्यणः' इति परस्यानुदात्तस्य स्वरितत्वम् । **स्वः** । सुपूर्वात् अर्तेः 'अन्येभ्योऽपि दृश्यन्ते' इति विच् । 'अव्ययादाप्सुपः' (पा.सू.२.४.८२) इति सुपो लुक् । 'न्यङ्स्वरौ स्वरितौ' (फि.सू.७४) इति स्वरितत्वम् ।। १२ ।।

**सिद्धाञ्जनम्–** हे **धृषन्मनः** धृषन् प्रगल्भं मनः यस्य सः तादृशप्रगल्भमनोयुक्तेन्द्र! **अस्य रजसः** लोकस्य अन्तरिक्षस्य । **व्योमनः** तदुपरि व्याप्तस्य आकाशस्य च **पारे** अन्ते, अवधौ वर्तमानः **स्वभूत्योजाः** स्वभूतबलः त्वम्, **अवसे** सर्वरक्षार्थं इति पूर्वे, तव इन्द्रस्यैव वृद्धयर्थम् इति वयम्, **ओजसः** त्वदीयस्य दिव्यस्य अनुगुणं **प्रतिमानम्** प्रतिमानभूतां प्रतिनिधिभूतां **भूमिम्** पृथिवीं **चकृषे** कृतवानसि । भुवनस्य पारे तिष्ठन् तव ओजसः प्रतिमानतया पृथिवीमिमां कृतवानसि । तत्रापि तव साम्राज्यस्य सम्भवात् तव वर्धनायैव 'अवसे' भूमिं 'चकृषे' । प्रतिमीयतेऽस्मिन्निति प्रतिमानं, अधिकरणे ल्युट्, इन्द्रस्यैव ओजः अस्यां भूमौ प्रतिमीयते । तस्मात् तदोजसः प्रतिमानमिति बोध्यम् । अथ **अपः** मध्यमस्थाना जीवनधारणादिप्राणबलाद्याः शक्तीः **स्वः** द्युस्थानं ज्योतिश्च **परिभूः** परितो भूत्वा, परिग्रहीता सन् **आ दिवम्** द्युलोकं च **एषि** प्राप्नोषि ।। **व्योमनः**–विपूर्वकात् अवतेर्गत्यर्थाद् भावे मनिन् ।। १२ ।।

## ऋक्संहिता पदपाठसहिता

**त्वं भुवः प्रतिमानं पृथिव्या ऋष्ववीरस्य बृहतः पतिर्भूः ।**
**विश्वमाप्रा अन्तरिक्षं महित्वा सत्यमद्धा नकिरन्यस्त्वावान् ।। १३ ।।**
त्वम् । भुवः । प्रतिऽमानम् । पृथिव्याः । ऋष्वऽवीरस्य । बृहतः । पतिः । भूः । विश्वम् । आ । अप्राः । अन्तरिक्षम् । महिऽत्वा । सत्यम् । अद्धा । नकिः । अन्यः । त्वाऽवान् ।।

**स्कन्द–** **त्वम्** भुवः भवसि **प्रतिमानम् पृथिव्याः** पृथिव्यपि त्वयोपमीयते, किं पुनरन्यान्युपमेयानि । सर्वतः त्वमुत्कृष्टः इत्यर्थः । किञ्च **ऋष्ववीरस्य** 'ऋष्वः' (निघ.३,३)

इति महन्नाम । वीरशब्दः शूरपर्यायः । महान्तो वीराः यस्मिन् सैन्ये तदृष्ववीरः तस्य । **बृहतः** महतः **पतिः** स्वामी **भूः** भवसि त्वम् । महद्भिः शूरैरुपेतं तव महत्सैन्यमित्यर्थः । किञ्च **विश्वम् आ अप्राः** आपूरयसि । **अन्तरिक्षम् महित्वा** महत्त्वेन । किं बहुना । **सत्यम् अद्धा** द्वे अप्येते सत्यनामनी (तु.निघ.३,१०) । 'अभ्यासे भूयांसमर्थं मन्यन्ते, यथा अहो दर्शनीय' (या.१०,४२) इत्येवमर्थभूयस्त्वेनापुनरुक्तिः । अत्यन्तसत्यमेतत् । **नकिः** न कश्चिदन्यस्त्रैलोक्ये **त्वावान्** 'वतुप्प्रकरणे युष्मदस्मद्भ्यां छन्दसि सादृश्य उपसख्यानम्' (पावसू.५,२,३९) इत्येवमयं सादृश्ये वतुप्प्रत्ययः । त्वत्सदृश इत्यर्थः ।। १३ ।।

**वेङ्कटमाधव– त्वम् भुवः प्रतिमानम् पृथिव्याः**, दर्शनीयवीरस्य स्वर्गस्य च । **पतिः** अभवः । **विश्वम्** आपूरितवान् असि । **अन्तरिक्षम्** महत्तया । **सत्यम् अद्धा** इति सत्यनामनी । सत्यं तथैव, **न** त्वत्सदृशः कश्चिदस्तीति ।। १३ ।।

**मुद्गल–** हे इन्द्र! **त्वम् पृथिव्याः** विस्तीर्णायाः भूमेः **प्रतिमानम् भुवः** प्रतिनिधिर्भवसि । यथा भूलोको महान् अचिन्त्यशक्तिरेवं त्वमपीत्यर्थः । तथा **ऋष्ववीरस्य** ऋष्वा दर्शनीया वीरा देवा यस्य स तस्य । **बृहतः** बृंहितस्य प्रवृद्धस्य स्वर्गलोकस्य **पतिः भूः** पालयिताऽसि । तथा **अन्तरिक्षम्** अन्तरा क्षान्तं द्यावापृथिव्योर्मध्ये वर्तमानम् आकाशम् **विश्वम्** सर्वमपि **महित्वा** महत्वेन **सत्यम् आ अप्राः** निश्चयेन आ समन्तात् अपूरयः । अतः **त्वावान्** त्वत्सदृशोऽन्यः कश्चित् **नकिः अस्ति** नास्तीति यदेतत् तत् **अद्धा** सत्यमेव ।। १३ ।।

**सायण–** भूनाम्न्येकाहे मरुत्वतीयशस्त्रे निविद्धानीयात् सूक्तात् पुरा 'त्वं भुवः प्रतिमानम्' इत्येषा शंसनीया । तथैवासूत्रयत्– 'शस्यमुक्तं बृहस्पतिसवेन त्वं भुवः प्रतिमानं पृथिव्याः' (आश्व.श्रौ.९.५) इति ।।

हे इन्द्र! **त्वम् पृथिव्याः** विस्तीर्णायाः भूमेः **प्रतिमानम् भुवः** प्रतिनिधिर्भवसि । यथा भूलोको महान् अचिन्त्यशक्तिरेवं त्वमपीत्यर्थः । तथा **ऋष्ववीरस्य** । वीरयन्ति विक्रान्ता भवन्तीति वीरा देवाः । ऋष्वा दर्शनीया वीरा यस्य स तथोक्तः । तस्य **बृहतः** बृंहितस्य प्रवृद्धस्य स्वर्गलोकस्य **पतिः भूः** पालयिताऽसि । तथा **अन्तरिक्षम्** अन्तरा क्षान्तं द्यावापृथिव्योर्मध्ये वर्तमानम् आकाशम् **विश्वम्** सर्वमपि **महित्वा** महत्वेन **सत्यम् आ अप्राः** निश्चयेन आ समन्तात् अपूरयः । अतः **त्वावान्** त्वत्सदृशोऽन्यः कश्चित् **नकिः अस्ति** नास्तीति यदेतत् तत् **अद्धा** सत्यमेव ।।

**भुवः** । भवतेर्लेटि सिपि अडागमः । उवङादेशः । **पृथिव्याः** । 'उदात्तयणो हल्पूर्वात्' इति विभक्तिरुदात्ता । **बृहतः** । 'बृहन्महतोरुपसङ्ख्यानम्' इति विभक्तेरुदात्तत्वम् । **भूः** । छान्दसे वर्तमाने लुङि 'बहुलं छन्दस्यमाङ्योगेऽपि' इति अडभावः । **अप्राः** 'प्रा पूरणे' आदादिकः । लङि अडागमः । **महित्वा** डादेशः । **त्वावान्** । 'वतुप्प्रकरणे युष्मदस्मद्भ्यां छन्दसि सादृश्य उपसङ्ख्यानम्' (पा.सू.५.२.३९.१) इति सादृश्यार्थे वतुप् । 'प्रत्ययोत्तरपदयोश्च' इति मपर्यन्तस्य त्वादेशः । 'आ सर्वनाम्नः' इति आत्वम् । प्रत्ययस्य पित्त्वादनुदात्तत्वे प्रातिपदिकस्वर एव शिष्यते ।। १३ ।।

**सिद्धाञ्जनम्–** हे इन्द्र! **त्वम् पृथिव्याः** विस्तीर्णायाः **भूमेः प्रतिमानम्** प्रतिमानभूतो **भुवः** भवसि । पूर्वस्यामृचि इन्द्रौजसः प्रतिमानं भूमिरित्युक्तं, अधुना भूमेः पृथिव्याः इन्द्र एव प्रतिमान-मित्याह । अनेन भूलोकोऽचिन्त्यमहिमेति द्योतितम् । **ऋष्ववीरस्य** ऋष्वाः दर्शनीया इति सायणः, महान्तः उत्कृष्टाः वीरा देवा यस्य तस्य **बृहतः** प्रवृद्धस्य द्युलोकस्य **पतिर्भूः** पालको भवसि । तथा **अन्तरिक्षम्** भुवो दिवश्च मध्ये स्थितं आकाशं **विश्वम्** सर्वमपि **महित्वा** तव महत्त्वेन **सत्यं आप्राः** निश्चयेन समन्तात् पूरितवानसि । **त्वावान्** त्वत्सदृशः **अन्यः** कश्चित् **नकिः** नास्ति, **अद्धा** सत्यम् ।। **भुवः**–भवतेर्लेटि सिप्यडागमः उवङादेशश्च । **भूः**–भवतेर्लुङ्, अडभावः । **अप्राः**–'प्रा पूरणे' । **महित्वा**–तृतीयाया डादेशः । **त्वावान्**–सादृश्यार्थे वतुप् ।। १३ ।।

## ऋक्संहिता पदपाठसहिता

**न यस्य॒ द्यावा॑पृथि॒वी अनु॒ व्यचो॒ न सिन्ध॑वो॒ रज॑सो॒ अन्त॑मान॒शुः ।**
**नोत स्ववृ॑ष्टिं॒ मदे॑ अ॒स्य युध्य॑त॒ एको॑ अ॒न्यच्च॑कृ॒षे विश्व॑मानु॒षक् ।। १४ ।।**
न । यस्य॑ । द्यावा॑पृथि॒वी इति॑ । अनु॑ । व्यचः॑ । न । सिन्ध॑वः । रज॑सः । अन्त॑म् । आन॒शुः । न । उ॒त । स्वऽवृ॑ष्टिम् । मदे॑ । अ॒स्य । युध्य॑तः । एकः॑ । अ॒न्यत् । च॒कृ॒षे । विश्व॑म् । आ॒नु॒षक् ।। १४ ।।

**स्कन्द– न यस्य द्यावापृथिवी** नेति प्रतिषेधे । यस्य तव न द्यावापृथिवी **अनु व्यचः** व्याप्तिनामैतत् शाकपूणिना पठितम् । व्याप्तिम् आनशाते । **न च सिन्धवः** स्यन्दनात् सिन्धवः आदित्यरश्मय इहोच्यन्ते । ते **रजसः** । 'ज्योती रज उच्यते' (या.४.१९) । ज्योतिषस्तेजसः **अन्तम् अनु आनशुः** अनु प्राप्नुवन्ति । यतो व्याप्त्या द्यावापृथिव्यौ न्यूनतरे, न तेजसा

चादित्यरश्मय इत्यर्थः । अथवा 'सिन्धवः' (निघ.१,१३) इति नदीनाम । रज इत्युदकमुच्यते (तु.वा.४,१९) । यतो व्याप्त्या द्यावापृथिव्यौ न्यूनतरे । यस्य च स्वभूतस्य वृष्टिलक्षणस्योदकस्यान्तं नद्यो न व्याप्नुवन्ति । वृष्ट्यैकदेशेन ह्रियन्ते । न सर्वां वृष्टिं प्रति गच्छन्तीत्यर्थः । अथवैवमन्यथाऽस्यार्धर्चस्यार्थयोजना । द्यावापृथिवी अनु व्यचः इति अनुशब्दः 'हीने' (पा.१,४,८६) इत्येवं कर्मप्रवचनीयः । 'अन्वर्जुनं योद्धारः' इति यथा । द्यावापृथिवी इति कर्मप्रवचनीययोगलक्षणद्वितीयान्तम् । 'व्यचः' इत्यपि प्रथमान्तम् । यस्य तव द्यावापृथिव्योः सकाशान्न न्यूना व्याप्तिरित्यर्थः । 'न सिन्धवो रजसो अन्तमानशुः' इत्ययं तु पादो द्विधा पूर्ववद्व्याख्येयः ।

**न उत स्ववृष्टिम् मदे अस्य युध्यतः** उतशब्दोऽप्यर्थे । स्वा वृष्टिर्यस्य स स्ववृष्टिः, वृष्टेः स्वामी, तं स्ववृष्टिम् । 'मदे' इति 'यस्य च भावेन' (पा.२,३,३७) इत्येवं सप्तमी । तच्छ्रुतेश्च लक्षणयोग्यक्रियाऽध्याहारः । 'अस्य युध्यतः' इति प्रकृतत्वादिन्द्रस्यायमन्वादेशः । स्ववृष्टिमित्येतत्सामानाधिकरण्याच्चोभयत्र द्वितीयार्थे षष्ठी । नापि यं व्याप्नुवन्ति वृष्टेः स्वामिनं सोममदे प्राप्ते भवन्तमेनं युध्यमानमित्यर्थः । के न व्याप्नुवन्ति । सामर्थ्यात् शत्रवः यच्छब्दश्रुतेस्तच्छब्दोऽध्याहर्तव्यः । स त्वम् **एकः** सहायवर्जितः **अन्यत् विश्वम्** सर्वम् **चकृषे** करोषि कृतवान् वा । **आनुषक्** आनुपूर्व्येणात्मानुगुणम्, स्ववशवर्तीत्यर्थः ।। १४ ।।

**वेङ्कटमाधव– यस्य** इन्द्रस्य **द्यावापृथिवी** व्याप्तिम् **न अनु** आनशाते । न नद्योऽपि तेजसः **अन्तम्** आपुः । **न** अपि च शत्रवः सोममदे **युध्यतः अस्य** तेजसोऽन्तम् **आनशुः** । किं बहुना । **एकः** एव त्वम् **अन्यत्** सर्वम् अनुस्यूतं कृतवानसि ।। १४ ।।

**मुद्गल– यस्य** इन्द्रस्य **व्यचः** व्यापनम् **द्यावापृथिवी** द्यावापृथिव्यौ **न अनु** आनशाते प्राप्तुमसमर्थे बभूवतुः । तथा **रजसः** अन्तरिक्षलोकस्योपरि **सिन्धवः** स्यन्दनशीला आपो यस्येन्द्रस्य तेजसः **अन्तम्** अवसानम् **न आनशुः** न प्रापुः । **उत** अपि च सोमपानेन **मदे** हर्षे सति **स्ववृष्टिम्** स्वीकृतवृष्टिं वृत्रादिम् **युध्यतः** युध्यमानस्य **अस्य** इन्द्रस्य बलस्य अन्तं वृत्रादयो न प्रापुः । अतः हे **इन्द्र! एकः** त्वम् **अन्यत्** स्वव्यतिरिक्तम् **विश्वम्** भूतजातम् **आनुषक्** आनुषक्तम् **चकृषे** । सकलमपि भूतजातं त्वदधीनम् अभूदिति भावः ।। १४ ।।

**सायण– यस्य** इन्द्रस्य **व्यचः** व्यापनम् **द्यावापृथिवी** द्यावापृथिव्यौ **न अनु** आनशाते

प्राप्तुमसमर्थे बभूवतुः । तथा **रजसः** अन्तरिक्षलोकस्योपरि **सिन्धवः** स्यन्दनशीला आपो यस्येन्द्रस्य तेजसः **अन्तम्** अवसानम् **न आनशुः** न प्रापुः । **उत** अपि **च** सोमपानेन **मदे** हर्षे सति **स्ववृष्टिम्** स्वीकृतवृष्टिं वृत्रादिम् **युध्यतः** युध्यमानस्य **अस्य** इन्द्रस्य बलस्य अन्तं वृत्रादयो न प्रापुः । अतः हे इन्द्र! **एकः** त्वम् **अन्यत्** स्वव्यतिरिक्तम् **विश्वम्** भूतजातम् **आनुषक्** आनुषक्तम् **चकृषे** । सकलमपि भूतजातं त्वदधीनम् अभूदिति भावः ॥

**द्यावापृथिवी** । द्यौश्च पृथिवी च । 'दिवो द्यावा' (पा.सू.६.३.२९) इति द्यावादेश आद्युदात्तो निपातितः । पृथिवीशब्दः 'षिद्गौरादिभ्यश्च' इति ङीषन्तोऽन्तोदात्तः । 'देवताद्वन्द्वे' इति उभयपदप्रकृतिस्वरत्वम् । 'अपृथिवीरुद्रपूषमन्थिषु' इति पर्युदासात् 'नोत्तरपदेऽनुदात्तादौ' इति निषेधाभावः । **व्यचः** । 'व्यचेः कुटादित्वमनसि' (का.१.२.१.१) इति वचनात् ङित्त्वाभावे सम्प्रसारणाभावः । **आनशुः** । अश्नोतेर्व्यत्ययेन परस्मैपदम् । 'अत आदेः' इति अभ्यासस्य आत्वम् । 'अश्नोतेश्च' इति नुडागमः ॥ १४ ॥

**सिद्धाञ्जनम्– यस्य** इन्द्रस्य **व्यचः** व्यापनं **द्यावापृथिवी** द्यौश्च पृथिवी च **न अनु** न अन्वानशाते, प्राप्तुं न प्रभवत इत्यर्थः । रोदसी अतीत्य वर्तते हि इन्द्रस्य 'व्यचः' । तथा **रजसः** अन्तरिक्षस्योपरि **सिन्धवः** स्यन्दमानाः आपः यस्येन्द्रस्य **अन्तम्** प्रभावस्य अवसानं **न आनशुः** न प्रापुः नाप्नुवन्तीत्यर्थः । **उत** अपि च **मदे** सोमपानजन्ये हर्षे सति **स्ववृष्टिम्** इन्द्रस्वभूतवर्षणयुक्तं, स्वीकृतेन्द्रस्वं वृत्रं वृत्रेण, विभक्तिव्यत्ययः, **युध्यतः** युध्यमानस्य अस्य इन्द्रस्य तेजसोऽन्तं न प्रापुर्वृत्रादयः । हे इन्द्र! **एकः** अद्वितीयस्त्वं **अन्यत् विश्वम्** त्वद्व्यतिरिक्तं सर्वं भूतजातं **आनुषक्** अनुक्रमेण सक्तं **चकृषे** कृतवानसि, सर्वस्यापि भूतजातस्य व्यवस्थां विधत्स इत्यर्थः ॥ **व्यचः**–व्याप्त्यर्थाद् व्यचेरसुन् । **आनशुः**–व्यत्ययेन परस्मैपदम् । **आनुषक्**– अनुपूर्वात् 'षञ्ज सङ्गे' इत्यस्मात् क्विप्, अनोरकारस्य आकारश्छान्दसः ॥ १४ ॥

## ऋक्संहिता पदपाठसहिता

**आर्चन्नत्र मरुतः सस्मिन्नाजौ विश्वे देवासो अमदन्ननु त्वा ।**
**वृत्रस्य यद्भृष्टिमता वधेन नि त्वमिन्द्र प्रत्यानं जघन्थ ॥ १५ ॥**
आर्चन् । अत्र । मरुतः । सस्मिन् । आजौ । विश्वे । देवासः । अमदन् । अनु । त्वा ।
वृत्रस्य । यत् । भृष्टिऽमता । वधेन । नि । त्वम् । इन्द्र । प्रति । आनम् । जघन्थ ॥

**स्कन्द– आर्चन्** अर्चतिः स्तुत्यर्थः । **स्तुवन्ति स्तुवन्तो वा मरुतः** ऋत्विङ्नामैतत् (तु.निघ.३,१८) । ऋत्विजः । **अत्र सस्मिन्** सर्वशब्दस्यायमेकाक्षरलोपः पर्यायान्तरं वा । सर्वस्मिन् **आजौ** सङ्ग्रामनाम (तु.निघ.२,१७) । सङ्ग्रामस्थानीये दुस्तरे यज्ञे । यावान् कश्चिदयं पृथिव्यां यज्ञः तत्र सर्वत्रेत्यर्थः । अथवा 'य उग्रा अर्कमानृचुः' (ऋ.१,१९,४) इति मरुतां स्तोतृत्वदर्शनात् इन्द्रसखा देवा एवात्र मरुत उच्यन्ते । आजिरित्यपि सङ्ग्राम एवोच्यते, न तत्स्थानीयो यज्ञः । 'प्रहर भगवो जहि वीरयस्व' (ऐ.ब्रा.३,२०) इत्येवमादिभिर्वचनैः अत्र सर्वस्मिन् सङ्ग्रामे मरुतस्त्वां स्तुतवन्त इत्यर्थः । **विश्वे देवासः** सर्वे च देवाः **अमदन्** सोमेन माद्यन्ति मत्ता वा । **अनु त्वा** 'तृतीयार्थे' (पा.१,४,८५) इत्येवमयम् अनुशब्दः कर्मप्रवचनीयः । सहार्थश्चात्र तृतीयार्थः । त्वया सहेत्यर्थः । कस्मात् कदा वा आर्चन् । उच्यते । **वृत्रस्य यत्** यस्मात् यदा वा **भृष्टिमता** भृष्टिशब्दोऽश्रिवचनः । अश्रिमता । **वधेन** वज्रनामैतत् (तु.निघ. २,२०) । वज्रेण **त्वम्** हे **इन्द्र! आनम्** प्राणम् **नि प्रति जघन्थ** । प्रतिशब्दोऽत्र धात्वर्थानुवादी । नियमेन हतवान् हंसि वा ।। १५ ।।

**वेङ्कटमाधव–** 'प्रहर भगवो जहि वीरयस्व' इति सर्वस्मिन् अस्मिन् सङ्ग्रामे **मरुतः** इन्द्रम् **आर्चन्** । व्याप्ता मरुतो देवाः त्वाम् **अनु अमदन्** मदिः सकर्मकश्च भवति । **वृत्रस्य** यदा अश्रिमता वज्रेण **नि जघन्थ त्वम् इन्द्र!** हननसाधनं मुखं प्रति ।। १५ ।।

**मुद्गल–** हे इन्द्र! त्वाम् **मरुतः अत्र** अस्मिन् **आजौ** सङ्ग्रामे **आर्चन्** आपूजयन् । **सस्मिन्** तस्मिन् **विश्वे देवासः** ते सर्वे दानादिगुणयुक्ता मरुतः, **त्वा** त्वाम् **अनु अमदन्** अनुक्रमेण हर्षं प्रापयन् । हे **इन्द्र! त्वम्, यत्** यदा **भृष्टिमता** भ्रंशयति शत्रूनिति भृष्टिः अश्रिः, तद्वता **वधेन** हननसाधनेन वज्रेण **वृत्रस्य आनम् प्रति** आननं मुखं प्रति **नि जघन्थ** नितरां प्राहार्षीः ।।

**सायण–** हे इन्द्र! त्वां **मरुतः** । **अत्र** अस्मिन् सङ्ग्रामे **आर्चन्** । 'प्रहर भगवो जहि वीरयस्व' (ऐ.ब्रा.३.२०) इत्यनेन वचनेन अपूजयन् । **सस्मिन्** तस्मिन्, यद्वा सर्वस्मिन् । **आजौ** सङ्ग्रामे । **विश्वे देवासः** ते सर्वे दानादिगुणयुक्ता मरुतः, **त्वा** त्वाम् **अनु अमदन्** अनुक्रमेण हर्षं प्रापयन् । यद्वा त्वदीयमदानन्तरं तेऽपि मदं प्राप्ताः । हे **इन्द्र! त्वं यत्** यदा **भृष्टिमता** । भ्रंशयति शत्रूनिति भृष्टिः अश्रिः । तद्वता **वधेन** हननसाधनेन वज्रेण । अश्रिमत्त्वं च वज्रस्य ब्राह्मणे समाम्नातं– 'वज्रो वा एष यद्यूपः सोऽष्टाश्रिः कर्तव्योऽष्टाश्रिर्वै वज्रः'

(ऐ.ब्रा.२.१) इति । तेन वज्रेण **वृत्रस्य आनं** प्रति आननं मुखं प्रति । यद्वा श्वासहेतुं घ्राणं प्रति **नि जघन्थ** नितरां प्राहार्षीः ॥

**आर्चन्** 'अर्च पूजायाम्' भौवादिकः । आडागम उदात्तः । **सस्मिन्** 'तदोः सः सौ' (पा.सू.७.२.१०६) इति विधीयमानं सत्वं व्यत्ययेन सप्तम्यामपि द्रष्टव्यम् । यद्वा । सर्वस्मिन्नित्यत्र वर्णलोपो द्रष्टव्यः । **देवासः** । 'आज्जसेरसुक्' । **आनम्** आननम् । वर्णलोपश्छान्दसः । यद्वा 'अन प्राणने' । अन्यते अनेनेति आनं घ्राणम् । करणे घञ् । 'कर्षात्वतः' इत्यन्तोदात्तत्वम् । **जघन्थ** 'हन हिंसागत्योः' । थलि 'उपदेशेऽत्वतः' इति इट्प्रतिषेधः । 'अभ्यासाच्च' इति अभ्यासादुत्तरस्य हकारस्य घत्वम् । लित्स्वरेण प्रत्ययात् पूर्वस्योदात्तत्वम् ॥

**सिद्धाञ्जनम्–** हे इन्द्र! अत्र अस्मिन् सङ्ग्रामे **मरुतः** त्वां **आर्चन्** अपूजयन् । **सस्मिन्** तस्मिन् **आजौ** सङ्ग्रामे **विश्वे देवासः** सर्वेऽपि देवाः, **त्वा अनु अमदन्** हृष्टं त्वामनुसृत्य स्वयमपि अहृष्यन् । हे **इन्द्र! त्वम् यत्** यदा **भृष्टिमता** अश्रिभिर्युक्तेन **वधेन** हननसाधनेन वज्रेण **वृत्रस्य** असुरस्य **आनम्** आननं **प्रति निजघन्थ** नितरां प्राहार्षीः, तदा मरुत आर्चन्निति सम्बन्धः ॥ **आर्चन्–** 'अर्च पूजायां' भौवादिकः, लङ् । **सस्मिन्**–'तदोः सः' इति विधीयमानं सत्वं सप्तम्यामपि व्यत्ययेन द्रष्टव्यम् । **आनम्**–आननम् 'अन प्राणने' वर्णलोपश्छान्दसः । **जघन्थ**–हन्तेर्लिट् ॥ १५ ॥

**॥ इति प्रथमाष्टके चतुर्थाध्याये चतुर्दशो वर्गः ॥**

**॥ अथ पञ्चदशो वर्गः ॥**

## ऋक्संहिता पदपाठसहिता

**(सूक्तम् ५३)**

**११ सव्य आङ्गिरसः । इन्द्रः । जगती, १०-११ त्रिष्टुप् ।**

**न्यू३षु वाचं प्र महे भरामहे गिर इन्द्राय सदने विवस्वतः ।**
**नू चिद्धि रत्नं ससतामिवाविदन्न दुष्टुतिर्द्रविणोदेषु शस्यते ॥ १ ॥**
नि । ऊँ इति । सु । वाचम् । प्र । महे । भरामहे । गिरः । इन्द्राय । सदने । विवस्वतः ।
नु । चित् । हि रत्नम् । ससताम्ऽइव । अविदत् । न । दुःऽस्तुतिः । द्रविणःऽदेषु । शस्यते ॥

**स्कन्द– 'नि, प्र'** इत्युपसर्गौ **भरामहे** इत्याख्यातेन सम्बन्धयितव्यौ । **उ सु** इति पदपूरणौ । शस्त्रलक्षणाम् **वाचं महे** महते **नि प्र भरामहे** हंतेरिदम् । 'हृग्रहोर्भश्छन्दसि हस्य' (पावा.८,२,३२) इति भत्वम् । नियमेन प्रहरामः प्रापयामः । उच्चारयाम इत्यर्थः । न च केवलं शस्त्रलक्षणं वाचम् । किं तर्हि । अन्या अपि **गिरः** लौकिकस्तुतिलक्षणाः यजुस्सामलक्षणा वा वाचः । कस्मै । **इन्द्राय** । क । **सदने** यज्ञगृहे **विवस्वतः** यजमाननामैतत्, शाकपूणिना पठितम्। यजमानस्य स्वभूते । कस्मात् । उच्यते । **नू चित् हि** 'नु' (निघ.२,१५) इति क्षिप्रनाम । 'चित्' शब्दः पदपूरणः । हिशब्दो यस्मादर्थे । यस्मात् क्षिप्रमिन्द्रः **रत्नम्** धनम् **ससतामिव** स्वपतामिव अत्यन्तनिष्प्रतिकाराणां शत्रूणाम् **अविदत्** विन्दतेरिदं रूपम् । अविन्दत् लब्धवान् । प्रभूतं धनं लब्धवानित्यर्थः । यस्माच्चेन्द्रस्य **न दुष्टुतिः** कुत्सिता स्तुतिः केषुचिदपि **द्रविणोदेषु** ऋत्विजोऽत्र द्रविणोदा उच्यन्ते, यजमाना वा । हविर्लक्षणस्यैव धनस्य दातृत्वात् (तु.या.८,२) । तेषु, **शस्यते** शस्त्रधर्मेण क्रियते । यस्माच्चास्य न कश्चिदपि ऋत्विक् यजमानो वा अयोग्यां स्तुतिं करोतीत्यर्थः ।। १ ।।

**वेङ्कटमाधव– सु नि प्र भरामहे** स्तोत्रं महते इन्द्राय । यजमानस्य गृहे स्तुतयः **इन्द्राय** भवन्ति । **नु** क्षिप्रम् एव हि शत्रूणाम् **रत्नम्,** स्वपतामिव धनं चोरः, इन्द्रः विन्दति, ततः प्र भरामहे । तत्र च धनप्रदेषु **दुष्टुतिः न प्र शस्यते,** तस्मात् सुष्ठु प्र भरामहे ।। १ ।।

**मुद्गल–** 'न्यू षु' इति एकादशर्चं तृतीयं सूक्तम् । दशम्येकादश्यौ त्रिष्टुभौ । शिष्टा नव जगत्यः । सव्य ऋषिः । इन्द्रो देवता ।।

**महे** महते इन्द्राय **सु वाचम्** शोभनां स्तुतिम् **न प्र भरामहे** नितरां प्रयुञ्ज्महे । उः पूरणः । यतः **विवस्वतः** परिचरतो यजमानस्य **सदने** यज्ञगृहे **इन्द्राय गिरः** स्तुतयः क्रियन्ते । **हि** यस्मात् स इन्द्रः **नू चित्** क्षिप्रमेव **रत्नम्** रमणीयम् असुराणां धनम् **अविदत्** विन्दति । दृष्टान्तः– **ससतामिव** यथा स्वपतां पुरुषाणां धनं चोराः क्षिप्रं लभन्ते तद्वत् । अतोऽस्मभ्यं धनं दातुं शक्त इति भावः । **द्रविणोदेषु** धनस्य दातृषु पुरुषेषु **दुष्टुतिः** असमीचीना स्तुतिः **न शस्यते** नाभिधीयते । अतः 'सु वाचं नि प्र भरामहे' इति पूर्वेण सम्बन्धः ।। १ ।।

**सायण–** 'न्यू षु' इति एकादशर्चं तृतीयं सूक्तम् । दशम्येकादश्यौ त्रिष्टुभौ । शिष्टा नव

जगत्यः । सव्य ऋषिः । इन्द्रो देवता । तथा चानुक्रान्तं– 'न्यू ष्वेकादश्यन्त्ये त्रिष्टुभौ' इति । अतिरात्रे प्रथमे पर्याये ब्राह्मणाच्छंसिनः शस्त्रे एतत्सूक्तम् । तथा चासूत्रयदाचार्यः– 'न्यू षु वाचमप्सु धूतस्य हरिवः पिबेहेति याज्या' (आश्व.श्रौ.६.४) इति ।।

**महे** महते इन्द्राय **सु वाचं** शोभनां स्तुतिं **नि प्र भरामहे** नितरां प्रयुञ्महे । उ इति पादपूरणः । यतः **विवस्वतः** परिचरतो यजमानस्य **सदने** यज्ञगृहे **इन्द्राय गिरः** स्तुतयः क्रियन्ते । **हि** यस्मात् स इन्द्रः **नू चित्** क्षिप्रमेव **रत्नं** रमणीयम् असुराणां धनम् **अविदत्** विन्दति । तत्र दृष्टान्तः– **ससतामिव** । यथा स्वपतां पुरुषाणां धनं चोरः क्षिप्रं लभते तद्वत् । अतोऽस्मभ्यं धनं दातुं शक्त इति भावः । **द्रविणोदेषु** धनस्य दातृषु पुरुषेषु **दुष्टुतिः** असमीचीना स्तुतिः **न शस्यते** नाभिधीयते । अतः 'सुवाचं प्र भरामहे' इति पूर्वेण सम्बन्धः ।।

**'न्यू षु'** इत्यस्य 'उदात्तस्वरितयोर्यणः' इति स्वरितत्वम् । तत्र उदात्तपरत्वात् संहितायां कम्प्यते । 'इकः सुञि' (पा.सू.६.३.१३४) इति दीर्घत्वम् । 'सुञः' इति षत्वम् । **महे** 'मह पूजायाम्' इत्यस्मात् 'क्विप् च' इति क्विप् । 'सावेकाचः' इति विभक्तेरुदात्तत्वम् । यद्वा महच्छब्दस्य अच्छब्दलोपश्छान्दसः । **नू चित्** । 'ऋचि तुनुघ' इत्यादिना दीर्घः । **ससतामिव** 'षस स्वप्ने' अस्मात् शत्रन्तादन्तोदात्तात्परस्या विभक्तेः 'शतुरनुमः' इत्युदात्तत्वम् । 'इवेन विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं च' (पा.सू.२.१.४.२) इति समासः । **अविदत्** 'विदॢ लाभे' । 'छन्दसि लुङ्लङ्लिटः' इति वर्तमाने लुङि 'पुषादिद्युतादि' इति च्लेः अङादेशः । अडागम उदात्तः । 'हि च' इति निघातप्रतिषेधः । **द्रविणोदेषु** । द्रविणानि धनानि ददातीति द्रविणोदाः । 'द्रु गतौ' इत्यस्मात् 'द्रुदक्षिभ्यामिनन्' (उ.सू.२.२०८) इति इनन्प्रत्ययान्तो द्रविणशब्दः । तस्मिन् कर्मण्युपपदे 'आतोऽनुपसर्गे कः' इति कः । पूर्वपदस्य सुगागमश्छान्दसः । कृदुत्तरपदप्रकृतिस्वरत्वम् । **शस्यते** 'शंसु स्तुतौ' यकि 'अनिदिताम्' इति नलोपः ।।१।।

**सिद्धाञ्जनम्–** दशमेऽनुवाके तृतीयं 'न्यू षु' इति एकादशर्चं सूक्तम् । दशम्येकादश्यौ त्रिष्टुभौ शिष्टाः जगत्यः । सव्य ऋषिरिन्द्रो देवता ।।

**महे** महते **इन्द्राय, सु वाचम्** शोभनां स्तुतिं **नि प्र भरामहे** नितरां प्रयुञ्महे । उ पादपूरणः । कथं शोभनस्तुतिः? आह– **विवस्वतः** प्रकाशमानस्य देवस्य **सदने** गृहे **इन्द्राय,**

**गिरः** स्तुतयः प्रादुर्भवन्ति, तस्मात् स्तुतीनां शोभनत्वं सम्पद्यते । विवस्वान् सूर्यो विश्रुतः । अत्र तु, मन्त्राणामाविर्भावः परमे व्योमनि तुरीये पदे प्रकाशमये स्थाने इति विवक्षा । 'विवस्वतः परिचरतो यजमानस्य सदने यज्ञगृहे' इति बाह्यपक्षीयाः । एवं स्तुतिभिः प्रबोधितो भगवानिन्द्रः, **नु चित्** क्षिप्रं, **हिः** पादपूरणः । **रत्नम्** रमणीयं रतिशब्दव्यवहार्यं हर्षविशेषं **अविदत्** विन्दति । तत्र दृष्टान्तः– **ससतामिव** यथा स्वपतां बाह्यचेष्टारहितानां पुरुषाणां अन्तरे 'रत्नं' रतिः सुगमा भवति, तथा यजमानस्तोत्रपरवशस्येन्द्रस्य रतिः सुलभेत्यर्थः । अत्र स्थूलार्थमाह सायणः– 'रत्नं रमणीयं असुराणां धनं' इन्द्रः विन्दति 'यथा स्वपतां पुरुषाणां धनं चोरः क्षिप्रं लभते तद्वत्' इति । उभयोः पक्षयोरेवं भवति विशेषः । सुप्तानां यादृशी रतिः तादृशीं रतिं लभत इन्द्रः इति सूक्ष्मार्थः । सुप्तानां धनं चोर इवेन्द्रोऽसुराणां धनं लभत इति सायणीयोऽर्थः । तावान् सुष्ठु ते महिमा यावता रत्नपदवाच्यां रतिं लभत इन्द्रः, तां च रतिं दिव्यधनभूतां स यजमानाय धत्ते । स्तुतेर्दुष्टत्वे तथा न प्रीता भवन्ति दातारो देवाः । अत आह– **दुःस्तुतिः** (दुष्टुतिः) दुष्टा असमीचीना स्तुतिः । **द्रविणोदेषु** धनदातृषु **न शस्यते** नाभिधीयते । तस्मात् सु वाचं विवस्वतः सदने प्रादुर्भूतां प्र भरामहे ।। **महे**- 'मह पूजायां' क्विप् । अथवा महच्छब्दस्य अल्लोपः । **ससतामिव**– 'षस स्वप्ने' शतृ । **अविदत्**– 'विद्लृ लाभे' वर्तमाने लुङ् । **द्रविणोदेषु**– गतम् (१.१५.७) ।। १ ।।

**नीतिमञ्जरी–** नृणां धनदो धन्यो महानित्याह–

**'नृषु यो धनदो धन्य इन्द्रतुल्यैः प्रशस्यते ।**
**सुष्टुत्या द्रविणोदःसु सव्यो नाहेति दुष्टुतिः' ।। १९ ।।**

नृषु मध्ये यो धनदः धनं ददातीति धनदो दाता स एव धन्यः प्रशस्यः । कुतः । इन्द्रतुल्यैः इन्द्रसदृशैः पुम्भिः प्रशस्यते । कया । सुष्टुत्या । इन्द्रतुल्यः सव्यऋषिः न्यूष्वित्यनया ऋचा प्रत्याह– इति । किम् । द्रविणोदःसु 'धनं द्रविणमुच्यते तस्य दाता द्रविणोदाः' इति भाष्य-कारेणोक्तः (नि०८।१) । तेषु धनदातृषु न दुष्टुतिः शस्यते । धनदः सर्वदा पुरुषेण स्तुत्य इत्यर्थः ।

तत्रेयं ऋक् ।

सव्यो जगत्या इन्द्रं तुष्टाव । ब्राह्मणाच्छंसिनः प्रथमे पर्यायि विनियुक्तम् । वयमुत्वा तदिदर्था इति खण्डे न्यूषु वाचमिति जागतमिति सूत्रितम् (सां.श्रौ.सू.९।९।४) प्रथमं सव्यस्य इन्द्रतुल्यत्वं प्रतिपाद्यते । अङ्गिरा इन्द्रतुल्यं पुत्रमात्मनः कामयमानो देवता उपासाञ्चक्रे तस्य सव्याख्य इन्द्ररूपः स्वयं जज्ञे, जगति मत्तुल्यो मा भूदिति बुद्ध्या ।

तथा चानुक्रमणी– 'अङ्गिरा इन्द्रतुल्यं पुत्रमिच्छन्नभ्यध्यायत्' इति । अयमर्थः । **महे** महते इन्द्राय **सुवाचं** शोभनां स्तुतिं **नि प्र भरामहे** नितरां प्रयुञ्ज्महे । यतः **विवस्वतः** परिचरतो यजमानस्य **सदने** यज्ञगृहे **इन्द्राय गिरः** स्तुतयः क्रियन्ते इति शेषः । **हि** यस्मात्स इन्द्रः **नूचित्** क्षिप्रमेव पुराणं नवं च । **रत्नं** रमणीयं धनं असुराणाम् **अविदत्** विन्दति । तत्र दृष्टान्तः । **ससतामिव** यथा स्वपतां पुरुषाणां चोरः धनं लभते तद्वत् । अतोऽस्मभ्यं धनं दातुं शक्त इति भावः । **द्रविणोदेषु** धनदातृषु पुरुषेषु **दुष्टुतिः** असमीचीना स्तुतिः **न शस्यते** नाभिधीयते । अतः सुवाचं प्रभरामहे ।

न्यू३षु इति । इकारयोश्च प्रश्लेषे क्षैप्रातिक्षैप्रसन्धित्वात् (ऋ.प्रा.३.१३) स्वरितं कृत्वा 'जात्योऽभिनिहतः (ऋ.प्रा.३.३४) इति कम्पः । उकारो व्रजस्य सुधा इति उकारस्य दीर्घे स्वबह्वक्षरेणेति (ऋ.प्रा.५.५) षत्वम् । **नूचिदिति** अद्यादित्वात्पादादौ दीर्घः (ऋ.प्रा.७.३३) । 'नूचिदिति निपातः पुराणनवयोर्नूचेति च' इति यास्कः (नि० ४।१७)। **न दुष्टुतिः**– अन्यपूर्वैरिति षत्वम् (ऋ.प्रा.५.२१) ॥ १ ॥

## ऋक्संहिता पदपाठसहिता

**दुरो अश्वस्य दुर इन्द्र गोरसि दुरो यवस्य वसुन इनस्पतिः ।**
**शिक्षानरः प्रदिवो अकामकर्शनः सखा सखिभ्यस्तमिदं गृणीमसि ॥ २ ॥**
दुरः । अश्वस्य । दुरः । इन्द्र । गोः । असि । दुरः । यवस्य । वसुनः । इनः । पतिः ।
शिक्षाऽनरः । प्रऽदिवः । अकामऽकर्शनः । सखा । सखिऽभ्यः । तम् । इदम् । गृणीमसि ॥

**स्कन्द–** सर्वस्तोतॄणाम् दुरः द्वारं निमित्तभूमिः । दातेत्यर्थः । कस्य । **अश्वस्य** जात्याभिप्रायमेतदेकवचनम् । अश्वानां न केवलानाम् । किं तर्हि । दुरः **इन्द्र! गोः असि** गवां च द्वारमसि । हे इन्द्र! दुरः **यवस्य** यवानां च द्वारमसि । **वसुनः** धनस्य च सर्वस्य **इनः**

ईश्वरस्त्वमसि । **पतिः** पालयिता च कृत्स्नस्य जगतः । **शिक्षानरः** शिक्षतिर्दानकर्मा (तु.निघ.३,२०) । छान्दसश्चात्र चतुर्थीसमासः पूर्वनिपातश्च । नरेभ्यो दाता धनानां शिक्षानरः । न चेदानीन्तनः । किं तर्हि । **प्रदिवः** पुराणनामैतत् (तु.निघ.३,२७) । चिरन्तनः । एवं न चाल्पदः । किं तर्हि । **अकामकर्शनः** कामानाम् अकर्शयिता अतनूकर्ता । यावान् काम्यते ततोऽधिकस्य दातेत्यर्थः । **सखा** चासि **सखिभ्यः** सखीनां यजमानानाम् । **तम्** भवन्तमेवंरूपं वयम् इदम् गृणीमसि । स्तुम इत्यर्थः ।। २ ।।

**वेङ्कटमाधव–** दाता **अश्वस्य** दाता । **इन्द्र गोः** च असि । **दुरः यवस्य** धनस्य ईश्वर पालयिता । शिक्षाया नेता । शासिता सर्वेषां पुराणः । कामानाम् अकर्शिता । **सखा सखिभ्यः** । **तम्** वयम् **इदम्** स्तुमः ।। २ ।।

**मुद्गल–** हे **इन्द्र!** त्वम् **अश्वस्य दुरः** दाता **असि** । तथा **गोः** पश्वादेः **दुरः** दाता असि । तथा **यवस्य** यवादेर्धान्यजातस्य **दुरः** दाता असि । **वसुनः** निवासहेतोर्धनस्य **इनः** स्वामी । **पतिः** सर्वेषां पालयिता । **शिक्षानरः** शिक्षाया दानस्य नरः नेताऽसि । **प्रदिवः** पुराणः । प्रगता दिवः दिवसा यस्मिन् स तथोक्तः । **अकामकर्शनः** अकामनाशनः । हविर्दत्तवतां यजमानानां कामान् पूरयतीत्यर्थः । **सखिभ्यः** समानख्यानेभ्य ऋत्विग्भ्यः **सखा** सखिवदत्यन्तं प्रियः । एवम्भूतो य इन्द्रः **तम्** प्रति **इदम्** स्तोत्रलक्षणं वचः **गृणीमसि** ब्रूमहे ।। २ ।।

**सायण–** हे **इन्द्र!** त्वम् **अश्वस्य दुरः** दाता **असि** । तथा **गोः** पश्वादेः **दुरः** दाताऽसि । तथा **यवस्य** यवादेर्धान्यजातस्य **दुरः** दाता असि । **वसुनः** निवासहेतोर्धनस्य **इनः** स्वामी । **पतिः** सर्वेषां पालयिता । **शिक्षानरः** । शिक्षतिर्दानकर्मा (नि.३.१०.८) । शिक्षाया दानस्य नेताऽसि । **प्रदिवः** पुराणः । प्रगता दिवो दिवसा यस्मिन् स तथोक्तः । **अकामकर्शनः** । कामान् कर्शयति नाशयतीति कामकर्शनः । न कामकर्शनोऽकामकर्शनः । अव्ययपूर्वपदप्रकृति स्वरत्वम् । हविर्दत्तवतां यजमानानां कामान् अभिमतफलप्रदानेन पूरयतीत्यर्थः । **सखिभ्यः** समानख्यानेभ्य ऋत्विग्भ्यः **सखा** सखिवदत्यन्तं प्रियः । एवम्भूतो य इन्द्रः **तं** प्रति **इदं** स्तोत्रलक्षणं वचः **गृणीमसि** ब्रूमहे ।।

**दुरः** 'डु दाञ् दाने' । 'मन्दिवाशिमतिचसिचङ्क्यङ्किभ्य उरच्' (उ.सू.१.३८) इति

विधीयमान उरच्प्रत्ययो बहुलवचनाद् अस्मादपि भवति । अत एव आकारलोपः । **शिक्षानरः** 'शिक्ष विद्योपादाने' । 'गुरोश्च हलः' (पा.सू.३.३.१०३) इति अकारप्रत्ययः । ततः टाप् । षष्ठीसमासः । 'समासस्य' इत्यन्तोदात्तत्वम् । **गृणीमसि** 'गॄ शब्दे' क्रैयादिकः । 'प्वादीनां ह्रस्वः' इति ह्रस्वत्वम् । 'इदन्तो मसिः' इति मसेः इकारः ।। २ ।।

**सिद्धाञ्जनम्–** हे **इन्द्र!** त्वं **अश्वस्य** भोगसमर्थप्राणबलाद्युपलक्षणभूतस्य **दुरः** द्वाराणां विघटयिता **असि** । 'दुरो दाता' इति व्याचक्षाणः सायणः 'डु दाञ् दाने' इति धातोर्निष्पादयति महता क्लेशेन । अन्यत्र (६.३५.५) स एव 'दुरो द्वाराणि विघटयन्' इति व्याचष्टे 'दुरो दारयतेः' निष्पादयति च । एवमिहापि भवति । न केवलं अश्वस्य लाभाय तस्य द्वारं विदारयसि, उद्घाटयसि, किन्तु **गोः** रश्मेः ज्ञानोपलक्षणस्य **दुरः असि** । तथा **यवस्य** सर्वधान्योपलक्षणभूतायाः अन्नमयसम्पदः **दुरः** असि । अपि च **वसुनः** सर्वसत्त्वात्मकस्य धनस्य **इनः** स्वामी । **पतिः** पालकश्च । पुनः कीदृशः इन्द्रः? **शिक्षानरः** शिक्षाया सर्वविद्योपादानस्य नरः नेता । **प्रदिवः** प्रगता दिवः दिवसा यस्य स प्रवृद्धः पुराणः । **अकामकर्शनः** कामान् कर्शयति नाशयतीति कामकर्शनः । न कामकर्शनः अकामकर्शनः यजमानाभीष्टपूरकः । **सखिभ्यः सखा** ये देवानां सख्यं भजन्ते यजनादिना तेभ्यः मित्रम् । एवम्भूत इन्द्रः **तम्** प्रति **इदम्** स्तोत्रं **गृणीमसि** ब्रूमहे ।। **गृणीमसि**–'इदन्तो मसिः' इति मसेरिकारः ।। २ ।।

## ऋक्संहिता पदपाठसहिता

**शचीव इन्द्र पुरुकृद्द्युमत्तम तवेदिदमभितश्चेकिते वसु ।**
**अतः संगृभ्याभिभूत आ भर मा त्वायतो जरितुः काममूनयीः ।। ३ ।।**

शचीऽवः । इन्द्र । पुरुऽकृत् । द्युमत्ऽतम । तव । इत् । इदम् । अभितः । चेकिते । वसु । अतः । सम्ऽगृभ्य । अभिऽभूते । आ । भर । मा । त्वाऽयतः । जरितुः । कामम् । ऊनयीः ।। ३ ।।

**स्कन्द– शचीवः!** कर्मवन् प्रज्ञावन् वा इन्द्र! **पुरुकृत्** बहूनां वृत्रवधादीनां कर्मणां कर्तः! **द्युमत्तम** अतिशयेन दीप्तिमन्! **तव इत् इदम्** इच्छब्दः पदपूरणः । यदिदं तव **अभितः** उभयतः दक्षिणे वामे च पार्श्वे **चेकिते** ज्ञायते । दृश्यते इत्यर्थः । **वसु** प्रभूतं धनम् । **अतः सङ्गृभ्य** गृहीत्वैकदेशं, हे **अभिभूत** अभिभवितः! शत्रूणाम् । **आ भर** आहर । देहीत्यर्थः । **मा** च

**त्वायतः** त्वामिच्छतः **जरितुः** स्तोतुः मम **कामम्** इच्छाम् **ऊनयीः** न्यूनीकार्षीः । यावदहमिच्छामि तावद्देहि मा स्तोकमित्यर्थः ।। ३ ।।

**वेङ्कटमाधव–** प्रज्ञावन् इन्द्र! बहूनां कर्तः! अतिशयेन दीप्तिमन्! **तव** एव **इदम् अभितः वसु** ज्ञायते । **अतः** वसुनः सङ्गृह्य अभिभवितः! शत्रूणाम् । मह्यं **आ** देहि । **मा** त्वामिच्छतः स्तोतुः कामम् **ऊनयीः** ऊनीकार्षीः ।। ३ ।।

**मुद्गल– शचीवः** हे प्रज्ञावन् इन्द्र! **पुरुकृत्** प्रभूतस्य वृत्रवधादेः कर्तः! **द्युमत्तम** अतिशयेन दीप्तिमन्! **अभितः** सर्वत्र वर्तमानम् **वसु** धनं यदस्ति तत् **इदम् तव इत्** तवैव स्वभूतमिति **चेकिते** भृशमस्माभिर्ज्ञायते । अतः कारणात् धनम् **सङ्गृभ्य** सम्यक् गृहीत्वा **अभिभूते** शत्रूणामभिभवितः । **आ भर** अस्मभ्यमाहर । देहीत्यर्थः । **त्वायतः** त्वाम् आत्मनः इच्छतः **जरितुः** स्तोतुः **कामम्** अभिलाषम् **मा ऊनयीः** परिहीनं मा कार्षीः । पूरयेत्यर्थः ।। ३ ।।

**सायण– शचीवः** । शची इति प्रज्ञानाम । हे **इन्द्र! शचीवः** प्रज्ञावन्! **पुरुकृत्** प्रभूतस्य वृत्रवधादेः कर्तः! **द्युमत्तम** अतिशयेन दीप्तिमन्! **अभितः** सर्वत्र वर्तमानं **वसु** धनं यदस्ति तत् **इदं तवेत्** तवैव स्वभूतमिति **चेकिते** भृशमस्माभिर्ज्ञायते । अतः कारणात् धनं **सङ्गृभ्य** सम्यक् गृहीत्वा **अभिभूते** शत्रूणामभिभवितः! **आ भर** अस्मभ्यमाहर, देहीत्यर्थः । **त्वायतः** त्वामात्मन इच्छतः **जरितुः** स्तोतुः **कामम्** अभिलाषं **मा ऊनयीः** परिहीनं मा कार्षीः । पूरयेत्यर्थः ।।

**शचीवः** । 'मतुवसो रुः' इति रुत्वम् । षाष्ठिकमामन्त्रिताद्युदात्तत्वम् । इतरेषु आष्टमिकं सर्वानुदात्तत्वम् । न च 'आमन्त्रितं पूर्वमविद्यमानवत्' इति अविद्यमानवत्त्वम् । 'नामन्त्रिते समानाधिकरणे' इति निषेधात् । **चेकिते** 'कित ज्ञाने' अस्मात् यङन्ताद्वर्तमाने लिटि 'अमन्त्रे' (पा.सू.३.१.३५) इति निषेधात् आम्प्रत्ययाभावे सति लिट आर्धधातुकत्वात् अतोलोपयलोपौ । **सङ्गृभ्य आ भर** इति उभयत्र 'हृग्रहोर्भश्छन्दसि' इति भत्वम् । **त्वायतः** । त्वामात्मनः इच्छति 'सुप आत्मनः क्यच्' । 'प्रत्ययोत्तरपदयोश्च' इति मपर्यन्तस्य त्वादेशः । छान्दसम् आत्वम् । क्यजन्तात् लटः शतृ । तस्य अदुपदेशात् लसार्वधातुकस्वरेण अनुदात्तस्य एकादेशस्वरेणोदात्तत्वम् । 'एकादेशस्वरोऽन्तरङ्गः सिद्धो भवतीति वक्तव्यम्' (पा.सू.८.२.६.१) इति वचनात्

तस्य सिद्धत्वे सति 'शतुरनुमः' इति अजादिविभक्तेरुदात्तत्वम् । **कामम्** 'कमु कान्तौ' इत्यस्माद् भावे घञ् । 'कर्षात्वतः' इत्यन्तोदात्तत्वे प्राप्ते वृषादिषु पाठादाद्युदात्तत्वम् । **ऊनयीः** 'ऊन परिहाणे' चुरादिः । लुङि 'णिश्रिद्रुस्रुभ्यः' (पा.सू.३.१.४८) इति च्लेः चङादेशस्य 'नोनयतिध्वनयति' (पा.सू.३.१.५१) इत्यादिना प्रतिषेधः । 'ह्यन्तक्षण' (पा.सू.७.२.५) इति सिचि वृद्धिप्रतिषेधः ।। ३ ।।

**सिद्धाञ्जनम्– शचीवः** शक्तिमन् हे **इन्द्र! पुरुकृत्** बहुकर्मकारिन्! **द्युमत्तम** अतिशयेन दीप्तिमन्! **अभितः** सर्वतः वर्तमानं **वसु** धनं सर्वसत्त्वात्मकं **इदम् तवेत्** तवैव तव स्वभूतमिति **चेकिते** ज्ञायतेऽस्माभिरिति शेषः । अतः 'कारणात्' इति पूर्वे, अस्माद्वसुनः **सङ्गृभ्य** सम्यक् गृहीत्वा अस्मद्योग्यं वसु इति शेषः । **आ भर** आहर । हे **अभिभूते** अभिभवितः! शत्रूणां, **त्वायतः** त्वामात्मन इच्छतः, त्वत्कामस्य **जरितुः** स्तोतुः **कामम्** अभिलाषं **मा ऊनयीः** परिहीणं मा कार्षीः ।। **चेकिते** इत्यादयो गताः । **ऊनयीः**–औनयः । 'ऊन परिहाणे' चुरादिः, छान्दसः प्रयोगः ।। ३ ।।

## ऋक्संहिता पदपाठसहिता

**एभिर्द्युभिः सुमना एभिरिन्दुभिर्निरुन्धानो अमतिं गोभिरश्विना ।**
**इन्द्रेण दस्युं दरयन्त इन्दुभिर्युतद्वेषसः समिषा रभेमहि ।। ४ ।।**
**एभिः । द्युऽभिः । सुऽमनाः । एभिः । इन्दुऽभिः । निऽरुन्धानः । अमतिम् । गोभिः । अश्विना । इन्द्रेण । दस्युम् । दरयन्तः । इन्दुऽभिः । युतऽद्वेषसः । सम् । इषा । रभेमहि ।।**

**स्कन्द– एभिः द्युभिः** सप्तम्यर्थे तृतीयैषा । द्युः इति च अह्नो नामधेयम् (तु.निघ.१.९) । एतेष्वहस्सु । साम्प्रतमेवेत्यर्थः । **सुमनाः** उत्तरार्धर्चस्थैः भूयोभिर्बहुवचनान्तैः सामानाधिकरण्याद् बहुवचनान्तस्य स्थाने इदमेकवचनम् । **सुमनसः** । प्रीतियुक्ताः सन्त इत्यर्थः । **एभिः इन्दुभिः** सोमैः **निरुन्धानः** इदमपि बहुवचनान्तस्यैव स्थाने एकवचनम् । निरुन्धानाः प्रतिबध्नन्तः **अमतिम्** अज्ञानम् । अथवा मन्यतेरर्चतिकर्मणः कर्तर्ययं क्तिन् । इन्द्रस्यास्तोतारमात्मीयं शत्रुम् । **गोभिः अश्विना** अश्वित्ववचनाद् अश्वशब्दाद् अयमिनिर्द्रष्टव्यः । स्वार्थिको वा । बहुचनस्य स्थान एकवचनम् । तृतीयानिर्देशाच्च 'युक्ताः' इति वाक्यशेषः । गोभिरश्वैः युक्ता इत्यर्थः । **इन्द्रेण**

**दस्युम्** आत्मीयशत्रुम् **दरयन्तः** दारयन्तः । केन । **इन्दुभिः** सोमैः । सोमैर्मत्तेनेन्द्रेण स्वशत्रून् घातयन्त इत्यर्थः । **युतद्वेषसः** यौतिः पृथग्भावार्थः । अत्र द्वेषशब्दो द्वेषवचनो द्वेष्टृवचनो वा । पृथग्भूतद्वेषसः । अपगतजनद्वेषा वा अपगतजनद्वेष्टृका वेत्यर्थः । **सम् इषा रभेमहि** लभेरिदम् । कपिलादित्वात् रत्वम् । सम्यक् लभेमहीत्याशास्महे । किम् । सामर्थ्याद् धनं यशो वा । न च केवलम् । किं तर्हि । **इषा** अन्नेन सह । अथवा इषेति द्वितीयार्थे तृतीया । इषं सम्यक् लभेमहि ।। ४ ।।

**वेङ्कटमाधव– एभिः** यागदिवसैः **एभिः** च सोमैः प्रीयमाणः स्तोतॄणाम् अर्थाभावजनिताम् **अमतिम् गोभिः** अश्ववता च धनेन **निरुन्धानः** इन्द्रो भवति । वयं तेन **इन्द्रेण** उपक्षपयितारम् **दस्युम् दरयन्तः** प्रत्तैः सोमैः पृथक्कृतद्वेष्टारः अन्नेन संरब्धा भवेम ।। ४ ।।

**मुद्गल–** हे इन्द्र! **एभिः** अस्माभिः दत्तैः **द्युभिः** दीप्तैः चरुपुरोडाशादिभिः **एभिः इन्दुभिः** पुरोवर्तिभिः तुभ्यं दत्तैः सोमैश्च प्रीतस्त्वम् अस्माकम् **अमतिम्** दारिद्र्यम् **गोभिः** त्वया दत्तैः पशुभिः **अश्विना** अश्वयुक्तेन धनेन च **निरुन्धानः** निवर्तयन् **सुमनाः** शोभनमनाः भव । वयम् **इन्दुभिः** अस्माभिर्दत्तैः सोमैः प्रीतेन **इन्द्रेण दस्युम्** उपक्षपयितारं शत्रुम् **दरयन्तः** हिंसन्तः अत एव **युतद्वेषसः** पृथग्भूतशत्रुका भूत्वा **इषा** इन्द्रदत्तेनान्नेन **सम् रभेमहि** संरब्धा भवेम, सङ्गच्छेमहीत्यर्थः ।। ४ ।।

**सायण–** हे इन्द्र! **एभिः** अस्माभिः दत्तैः **द्युभिः** दीप्तैः चरुपुरोडाशादिभिः **एभिः इन्दुभिः** पुरोवर्तिभिः तुभ्यं दत्तैः सोमैश्च प्रीतस्त्वम् अस्माकम् **अमतिम्** दारिद्र्यम् **गोभिः** त्वया दत्तैः पशुभिः **अश्विना** अश्वयुक्तेन धनेन च **निरुन्धानः** निवर्तयन् **सुमनाः** शोभनमनाः भव । वयम् **इन्दुभिः** अस्माभिर्दत्तैः सोमैः प्रीतेन **इन्द्रेण दस्युम्** उपक्षपयितारं शत्रुम् **दरयन्तः** हिंसन्तः अत एव **युतद्वेषसः** पृथग्भूतशत्रुका भूत्वा **इषा** इन्द्रदत्तेनान्नेन **सम् रभेमहि** संरब्धा भवेम, सङ्गच्छेमहीत्यर्थः ।।

**सुमनाः** । शोभनं मनो यस्य । 'सोर्मनसी अलोमोषसी' इत्युत्तरपदाद्युदात्तत्वम् । **निरुन्धानः** 'रुधिर् आवरणे' । स्वरितेत्त्वात् आत्मनेपदम् । 'श्नसोरल्लोपः' इति अकारलोपः । 'चितः' इत्यन्तोदात्तत्वम् । कृदुत्तरपदप्रकृतिस्वरत्वम् । **अमतिम्** । मन्तव्या मतिः ऐश्वर्यम् । न मतिः

**अमतिः** । अव्ययपूर्वपदप्रकृतिस्वरत्वम् । 'न लोकाव्यय' इति षष्ठीप्रतिषेधः । **अश्विना** । अश्वोऽस्यातीति अश्वि धनम् । मत्वर्थीय इनिः ।। ४ ।।

**सिद्धाञ्जनम्**– हे इन्द्र! **एभिः** अस्माभिर्दत्तैः **द्युभिः** दीप्तैर्हव्यैः । **एभिः** अभिषुतैः **इन्दुभिः** सोमैश्च प्रीतस्त्वं, अस्माकं **अमतिम्** (मन्तव्या मतिः ऐश्वर्यं अमतिर्दारिद्र्यमिति स्थूलार्थ-समर्थनाय) अज्ञानं, **निरुन्धानः** निवर्तयन् **सुमनाः** शोभनमनाः भव । अमतिनिरोधने साधनान्याह । **गोभिः** ज्ञानोपलक्षणैः रश्मिभिः **अश्विना** च प्राणबलोपलक्षण-अश्वयुक्तेन धनेन । अत्र यजमानैः 'द्यवः' इन्दवश्च इन्द्रायार्प्यन्ते । यथाक्रमं इन्द्रस्य प्रतिदानं गावः अश्वात्मकं धनं च । यजमानकृतदानैरिन्द्रस्य सुमनस्त्वं, इन्द्रस्य प्रतिदानेन प्रकाशलक्षणगोधनेन भोगसमर्थप्राण-क्रियोपलक्षणाश्वेन अज्ञानलक्षणदारिद्र्यनिवृत्तिश्च बोध्ये । अथ वयं **इन्दुभिः** सोमैः प्रीतेन **इन्द्रेण** सहायेन **दस्युम्** उपक्षपयितारम् असुरं **दरयन्तः** हिंसन्तः, **युतद्वेषसः** पृथग्भूतशत्रुकाः भूत्वा **इषा** एषणावेगशक्त्या **सम् रभेमहि** संरब्धा भवेम, सङ्गच्छेमहि ।। **सुमनाः**–शोभनं मनो यस्यासौ । **निरुन्धानः**–'रुधिर् आवरणे' । अन्ये गताः ।। ४ ।।

## ऋक्संहिता पदपाठसहिता

**समि॑न्द्र रा॒या समि॒षा र॑भेमहि॒ सं वाजे॑भिः पुरुश्च॒न्द्रैर॒भिद्यु॑भिः ।**
**सं दे॒व्या प्रम॑त्या वी॒रशु॑ष्मया॒ गोअ॑ग्रया॒श्वा॑वत्या रभेमहि ।। ५ ।।**

सम् । इ॒न्द्र॒ । रा॒या । सम् । इ॒षा । र॒भे॒म॒हि॒ । सम् । वाजे॑ऽभिः । पु॒रु॒ऽच॒न्द्रैः । अ॒भिद्यु॑ऽभिः । सम् । दे॒व्या । प्रऽम॑त्या । वी॒रऽशु॑ष्मया । गोऽअ॑ग्रया । अश्व॑ऽवत्या । र॒भे॒म॒हि॒ ।। ५ ।।

**स्कन्द– सम् इन्द्र! राया** पुनःपुनः संशब्दश्रुतेः प्रतिसंशब्दम् 'रभेमहि' इत्याख्यातम् अनुषक्तव्यम् । **सम् रभेमहि** सम्यक् लभेमहीत्याशास्महे । हे इन्द्र! **राया** द्वितीयार्थे सर्वत्रात्र तृतीया । सहयोगलक्षणा वा तृतीया । तैर्वा सुखं वा गृहं वा यशो वा पूजा वेति वाक्यशेषः । धनं धनेन वा सह सुखादीनां किञ्चित् । **सम् इषा** 'रभेमहि' सम्यग्लभेमहि । इषमन्नम् अन्नेन वा सह सुखादीनां किञ्चित् । **सम् वाजेभिः** इषेत्यनेनान्नस्य उपात्तत्वाद् वाजशब्दोऽत्र बलवचनः । सम्यग्लभेमहि बलानि बलैर्वा सह सुखादीनां किञ्चित् । कीदृशैर्वाजेभिः । उच्यते । **पुरुश्चन्द्रैः** बहूनां कान्तैः **अभिद्युभिः** अभिगतदीप्तिभिः । स्वदीप्त्या दीप्तैरित्यर्थः । **सम् देव्या**

दीव्यतिर्द्योतनार्थः । स्वदीप्त्या द्योतमानां द्योतमानया वा सह सुखादीनां किञ्चित् । कया देव्या । उच्यते । **प्रमत्या** प्रकृष्टया मत्या ज्ञानेन । कीदृश्या । **वीरशुष्मया** वीराः पुत्राः, ते शुष्म बलं यस्या सा वीरशुष्मा, तया । बलवत्पुत्रसहितया । **गोअग्रया** गावोऽग्रभूता यस्या सा गोअग्रा प्रधानभूताभिर्गोभिस्सहिता, तया । **अश्वावत्या** अश्वसहितया । **सम् रभेमहि** सम्यग्लभेमहीत्याशास्महे ।। ५ ।।

**वेङ्कटमाधव– इन्द्र!** धनेन संरब्धा भवेम । अन्नेन च । **सम् रभेमहि** च बलैः बहूनां स्पृहणीयैः अभिगतदीप्तिभिः । **सम्** रभेमहि च । **देव्या प्रमत्या** यस्या वीरा बलं भवन्ति तया गोमुखया अश्वयुक्तया ।। ५ ।।

**मुद्गल– हे इन्द्र! राया** धनेन वयम् **सम् रभेमहि** सङ्गच्छेमहि । तथा **इषा** अन्नेन **सम्** रभेमहि । तथा **वाजेभिः** बलैः **सम्** रभेमहि । कीदृशैः वाजैः । **पुरुश्चन्द्रैः** पुरूणां बहूनाम् आह्लादकैः । **अभिद्युभिः** अभितो दीप्यमानैः । किञ्च **देव्या** द्योतमानया **प्रमत्या** त्वदीयया प्रकृष्टबद्ध्या **सम् रभेमहि** । कीदृश्या । **वीरशुष्मया** वीरं विशेषेण शत्रूणां क्षेपणसमर्थं **शुष्मं** बलं यस्याः सा तथोक्ता, तया । **गोअग्रया** स्तोतृभ्यो दानार्थम् अग्रे प्रमुखत एव गावो यस्याः सा तथोक्ता तया । **अश्वावत्या** अश्वैरुपेतया ।। ५ ।।

**सायण– हे इन्द्र! राया** धनेन वयम् **सम् रभेमहि** सङ्गच्छेमहि । तथा **इषा** अन्नेन **सम्** रभेमहि । तथा **वाजेभिः** बलैः **सम्** रभेमहि । कीदृशैः वाजैः । **पुरुश्चन्द्रैः** पुरूणां बहूनाम् आह्लादकैः । **अभिद्युभिः** अभितो दीप्यमानैः । किञ्च **देव्या** द्योतमानया **प्रमत्या** त्वदीयया प्रकृष्टबद्ध्या **सम् रभेमहि** । कीदृश्या । **वीरशुष्मया** वीरं विशेषेण शत्रूणां क्षेपणसमर्थं **शुष्मं** बलं यस्याः सा तथोक्ता । **गोअग्रया** स्तोतृभ्यो दानार्थम् अग्रे प्रमुखत एव गावो यस्याः सा तथोक्ता । **अश्वावत्या** अश्वैरुपेतया ।।

**राया** 'ऊडिदम्' इत्यादिना विभक्तेरुदात्तत्वम् । **पुरुश्चन्द्रैः** 'ह्रस्वाच्चन्द्रोत्तरपदे मन्त्रे' इति सुट् । श्रुत्वेन शकारः । समासस्वरः । **अभिद्युभिः** । अभिगता द्यौर्दीप्तिर्येषाम् । अत्र दिवृशब्दो दीप्तिं लक्षयति । अव्ययपूर्वपदप्रकृतिस्वरत्वम् । **देव्या** 'उदात्तयणः' इति विभक्तेरुदात्तत्वम् । **प्रमत्या** 'तादौ च निति' इति गतेः प्रकृतिस्वरत्वम् । उत्तरयोर्बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् ।

'सर्वत्र विभाषा गोः' (पा.सू.६.१.१२२) इति गोअग्रया इत्यत्र प्रकृतिभावः । **अश्वावत्या** 'मन्त्रे सोमाश्वेन्द्रिय' इति मतुपि दीर्घत्वम् ।। ५ ।।

**सिद्धाञ्जनम्–** हे इन्द्र! **राया** धनेन वयं **सम् रभेमहि** सङ्गच्छेमहि, तथा **इषा** एषणाशक्त्या **सम्** रभेमहि । **वाजेभिः** बलसमृद्धिभिः **सम्** रभेमहि । कीदृशैः वाजैः? **पुरुश्चन्द्रैः** पुरूणां बहूनामाह्लादकैः **अभिद्युभिः** अभितो दीप्यमानैः । अपि च, **देव्या** द्योतमानया दिव्यया वा **प्रमत्या** प्रकृष्टया बुद्ध्या त्वदीयया **सम् रभेमहि** सङ्गच्छेमहि । कीदृश्या प्रमत्या? **वीरशुष्मया** वीरं विक्रान्तं शत्रुक्षेपणसमर्थं शुष्मं बलं यस्याः तया । **गोअग्रया** गावः ज्ञानप्रकाशलक्षणा रश्मयः अग्रे प्रमुखतः यस्याः तया । **अश्वावत्या** अश्वैः प्राणबलोपलक्षणैरुपेतया । एवम्भूतया प्रमत्या सङ्गच्छेमहि ।।

अत्र विचित्रं सायणीयम् । स्तोतृभ्यो दानार्थं इन्द्रस्य प्रकृष्टायां मतौ गावः पशवः प्रमुखतः तिष्ठन्ति किल । सा पुनः अश्वोपेता । ऐन्द्री प्रमतिर्दिव्या, सा ज्ञानरश्मिप्रमुखा, भोगक्रियासमर्थ प्राणशक्तिसम्पन्ना चेति बोध्यम् । 'उत नो धियः गोअग्राः कर्त' (१.९०.५) अस्माकं धियः चिद्रश्मिप्रमुखाः कुरुतेति प्रार्थयते गोतमः । 'ये स्तोतृभ्यो गोअग्राम् अश्वपेशसमग्रे रातिमुपसृजन्ति सूरयः' (२.१.१६) इत्यादावपि अस्मदुक्तमर्थमन्तरा असम्बद्धप्रलपितं स्यात् ।। रायेत्यादयो गताः । **अश्वावत्या–** 'मन्त्रे सोमाश्वेन्द्रिये'ति मतुपि दीर्घत्वम् ।। ५ ।।

।। इति प्रथमाष्टके चतुर्थाध्याये पञ्चदशो वर्गः ।।

### ।। अथ षोडशो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

**ते त्वा मदा॑ अमद॒न्तानि॒ वृष्ण्या॒ ते सोमा॑सो वृत्र॒हत्ये॑षु सत्पते ।**
**यत्का॒रवे॒ दश॑ वृ॒त्राण्य॑प्र॒ति ब॒र्हिष्म॑ते॒ नि स॒हस्रा॑णि ब॒र्हयः॑ ।। ६ ।।**

ते । त्वा॒ । मदाः॑ । अ॒मद॒न् । तानि॑ । वृष्ण्या॑ । ते । सोमा॑सः । वृ॒त्र॒ऽहत्ये॑षु । स॒त्ऽप॒ते॒ ।
यत् । का॒रवे॑ । दश॑ । वृ॒त्राणि॑ । अ॒प्र॒ति । ब॒र्हिष्म॑ते । नि । स॒हस्रा॑णि । ब॒र्हयः॑ ।।६।।

**स्कन्द–** **ते त्वा** त्वां, सुरालक्षणाः **मदाः अमदन्** । **तानि वृष्ण्या** अपठितमपि बलनामैतत् । बलानि । **ते सोमासः, वृत्रहत्येषु** वृत्रहननेषु । हे **सत्पते** सतां पालयितः! ।

**यत्** यैः **कारवे** कारुः (निघ.३,१६) इति स्तोतृनाम । स्तोतुरर्थाय । **दश वृत्राणि** वृत्रशब्दः शत्रुवचनः । 'सहस्राणि' इत्येतेन चास्य सम्बन्धः । सहस्रशब्दश्चोभयवचनः । उभयवचनत्वेऽपीह सङ्ख्यामात्रप्रवचनो न सङ्ख्येयवचनः । कुत एतत् । दशेत्येतेन सामानाधिकरण्यात् । दशसङ्ख्यया च सहस्रसङ्ख्या परिच्छिद्यते, न तत्सङ्ख्येयाः । अतोऽत्र सहस्रशब्दस्य सङ्ख्यामात्रवचनत्वात् वृत्राणीत्येतस्य च तत्संङ्ख्येयप्रतिनिर्देशार्थत्वात् षष्ठ्यर्थे द्वितीया । वृत्राणां शत्रूणाम् । **अप्रति** वृत्राणामिदं विशेषणम्, इन्द्रस्य वा । प्रतिशब्दश्चायमुपसर्गः । उपसर्गाश्च पुनरेवमात्मकाः यत्र कश्चित् क्रियावाची शब्दः प्रयुज्यते तत्र क्रियाविशेषणमाहुः । यत्र खलु क्रियावाची शब्दो न प्रयुज्यते ससाधनं तत्र क्रियामाहुः । अतोऽत्रावतिष्ठतेर्बध्नातेर्वा ससाधनस्यार्थे प्रतिशब्दः । अप्रत्यवतिष्ठमानोऽप्रतिबध्यमानो वेत्यर्थः । कस्मै कारवे । उच्यते । **बर्हिष्मते** यजमानाय । कानि दश । उच्यते सहस्राणि **नि बर्हयः** वधकर्माऽयम् (तु.निघ.२,१९) । हतवानसि ।।

**वेङ्कटमाधव– ते त्वा** सोमाः **अमदन्** । **तानि** वर्षणनिमित्तानि । के ते इत्याह– **ते सोमासः** वृत्रहननेषु सतां पते! यदा त्वं स्तोत्रे **दश सहस्राणि** उपद्रवाणाम् **नि** बर्हयसि यजमानाय शत्रुभिः अप्रतिगतः ।। ६ ।।

**मुद्गल– हे सत्पते!** सतां पालयितः इन्द्र! **वृत्रहत्येषु** वृत्रहननेषु निमित्तभूतेषु सत्सु **ते** पूर्वोक्ताः **मदाः** मदकारका मरुतः, **त्वा** त्वाम् **अमदन्** अमदयन् हर्षं प्रापयन् । **तानि** पूर्वोक्तानि **वृष्ण्या** वृष्णः सेचनसमर्थस्य तव सम्बन्धीनि चरुपुरोडाशादीनि हवींषि त्वाम् अमदन् । **ते सोमासः** प्रसिद्धाः सोमाश्च त्वाममदन् । **यत्** यदा **कारवे** स्तुतिकर्त्रे **बर्हिष्मते** यज्ञवते यजमानाय **दश सहस्राणि** अपरिमितानि **वृत्राणि** आवरकाणि उपद्रवजातानि **अप्रति** शत्रुभिरप्रतिगतस्त्वम् **नि बर्हयः** न्यवधीः । तदानीमिति पूर्वेण सम्बन्धः ।। ६ ।।

**सायण–** हे **सत्पते** सतां पालयितरिन्द्र! **वृत्रहत्येषु** वृत्रहननेषु निमित्तभूतेषु सत्सु **ते** पूर्वोक्ताः **मदाः** मादका मरुतः **त्वा** त्वाम् **अमदन्** अमदयन् हर्षं प्रापयन् । **तानि** पूर्वोक्तानि **वृष्ण्या** वृष्णः सेचनसमर्थस्य तव सम्बन्धीनि चरुपुरोडाशादीनि हवींषि त्वाम् अमदन् । **ते सोमासः** प्रसिद्धाः सोमाश्च त्वाम् अमदन् । **यत्** यदा **कारवे** स्तुतिकर्त्रे **बर्हिष्मते** यज्ञवते यजमानाय **दश सहस्राणि** अपरिमितानि **वृत्राणि** आवरकाण्युपद्रवजातानि **अप्रति** शत्रुभिरप्रतिगतस्त्वं **नि बर्हयः** न्यवधीः । तदानीमिति पूर्वेण सम्बन्धः ।।

**वृष्ण्या** । 'शेश्छन्दसि बहुलम्' इति शेर्लोपः । **बर्हयः** । बर्हयतिर्हिंसाकर्मा (नि.२.१९.३०) । लङि 'बहुलं छन्दस्यमाङ्योगेऽपि' इति अडभावः । शपः पित्त्वादनुदात्तत्वे णिच एव स्वरः शिष्यते । यद्वृत्तयोगादनिघातः ।। ६ ।।

**सिद्धाञ्जनम्–** हे **सत्पते** सतः सर्वस्य पालक इन्द्र! **वृत्रहत्येषु** वृत्रवधेषु निमित्तभूतेषु **ते** पूर्वोक्ताः **मदाः** मादकाः हर्षयितारस्तव सहचरा मरुतो वा, **त्वा** त्वाम् **अमदन्** अमदयन् हर्षं प्रापयन् । **तानि** प्रसिद्धानि **वृष्ण्या** वृष्ण्यानि वृष्णः सेचनसमर्थस्य तव योग्यानि स्तोत्राणि 'त्वाम् अमदन्' । **ते प्रसिद्धाः** सोमासः सोमाश्च 'त्वाम् अमदन्' । **यत्** यदा **कारवे** स्तुतिकर्त्रे **बर्हिष्मते** यज्ञवते यजमानाय **दश सहस्राणि** अपरिमितानि **वृत्राणि** आवरकाणि प्रतिरोधकानि उपद्रवजातानि **अप्रति** अप्रतिहतशक्ति यथा भवति तथा **निबर्हयः** न्यवधीः ।। **बर्हयः**–बर्हयतिः हिंसाकर्मा, लङ्, अडभावश्छन्दसि ।। ६ ।।

## ऋक्संहिता पदपाठसहिता

**युधा युधमुप घेदेषि धृष्णुया पुरा पुरं समिदं हंस्योजसा ।**
**नम्या यदिन्द्र सख्या परावति निबर्हयो नमुचिं नाम मायिनम् ।। ७ ।।**

**युधा । युधम् । उप । घ । इत् । एषि । धृष्णुऽया । पुरा । पुरम् । सम् । इदम् । हंसि । ओजसा । नम्या । यत् । इन्द्र । सख्या । पराऽवति । निऽबर्हयः । नमुचिम् । नाम । मायिनम् ।। ७ ।।**

**स्कन्द–** **युधा** युद्धेन **युधम्** प्रतियोद्धारम् **उप घ इत् एषि** भूते अत्र लट् । **उपैषि** उपगतवानसि । 'घ इत्' इति तु पदपूरणौ । कथञ्च पुनरुपैषि । **धृष्णुया** प्रथमैकवचनस्यायं याऽऽदेशः । धृष्णुः प्रगल्भः । निश्शङ्कस्सन्नित्यर्थः । न च केवलं युधा युधम् । किं तर्हि । **पुरा पुरम्** पूश्शब्दः शरीरवचनः । शरीरेण च शरीरम् । यो योद्धा अस्त्रवान् अस्त्रयुद्धेनोपगन्तव्यः तं तेनोपगतवानसि, यो बाहुयुद्धार्थं शरीरेण तं शरीरेणेत्यर्थः । एवम् इदम् शत्रुबलम् **सम् हंसि** भूतेऽत्रापि लट् । सम्यग्घतवानसि, **ओजसा** आत्मीयेन बलेन । कदा । उच्यते । **नम्या** इन्द्रं प्रति प्रणतत्वात् नमी मरुद्गण इहोच्यते । 'प्रावन्नमीं साप्यम्' (ऋ.६,२०,६) इति यथा । प्रणतेन मरुद्गणेन सह **यत्** यदा **सख्या** स्वसखेन **परावति** दूरे स्थितम् **निर्बहयः** हतवानसि **नमुचिम् नाम असुरम् मायिनम्** मायावन्तम् ।। ७ ।।

**वेङ्कटमाधव–** युद्धेनानुस्यूतमन्यद् युद्धम् उपगच्छसि धृष्णुः । पुरेण च **पुरम्** शत्रूणां सह **इदम्** विनाशयसि बलेन । अनुगुणेन **इन्द्र!** मरुद्गणेन दूरे **नमुचिम् नाम** असुरम् **मायाविनम् निबर्हयः** तदानीम् ।। ७ ।।

**मुद्गल–** हे **इन्द्र! धृष्णुया** शत्रूणां धर्षकस्त्वम् **युधा** युद्धेन सम्बद्धम् **युधम्** युद्धम् **उप घ इत् एषि** उपैव गच्छसि । सर्वदा युद्धशीलो भवसीत्यर्थः । घः पादपूरणः । शत्रूणाम् असुराणाम् **पुरा** पुरेण नगरेण सह **इदम्** पुरोवर्ति **पुरम्** शत्रुनगरम् **ओजसा** बलेन **सम् हंसि** सम्यग्विनाशयसि । शत्रूणां पुराण्यभैत्सीरित्यर्थः । हे इन्द्र! त्वम् **नम्या** शत्रुषु नमनशीलेन **सख्या** सहायभूतेन वज्रेण **परावति** दूरदेशे **नमुचिम् नाम** अनया संज्ञया प्रसिद्धम् **मायिनम्** मायाविनम् असुरम् **यत्** यस्मात् **निबर्हयः** नितराम् अहिंसीः अतस्त्वमेवं स्तूयसे इत्यर्थः ।।

**सायण–** हे **इन्द्र! धृष्णुया** शत्रूणां धर्षकस्त्वं **युधा** युद्धेन सम्बद्धं **युधं** युद्धम् **उप घेदेषि** उपैव गच्छसि । सर्वदा युद्धशीलो भवसीत्यर्थः । घ इति पादपूरणः । शत्रूणाम् असुराणां **पुरा** पुरेण नगरेण सह **इदं** पुरोवर्ति **पुरं** शत्रुनगरम् **ओजसा** बलेन **सं हंसि** सम्यग्विनाशयसि । शत्रूणां पुराण्यभैत्सीरित्यर्थः । हे इन्द्र! त्वं **नम्या** शत्रुषु नमनशीलेन **सख्या** सहायभूतेन वज्रेण **परावति** दूरदेशे **नमुचिं नाम** अनया संज्ञया प्रसिद्धं **मायिनं** मायाविनम् असुरं **यत्** यस्मात् **निबर्हयः** नितराम् अहिंसीः । अतस्त्वमेवं स्तूयसे इत्यर्थः ।।

**युधा** 'युध सम्प्रहारे' । सम्पदादिलक्षणो भावे क्विप् । 'सावेकाचः' इति विभक्तेरुदात्तत्वम् । **एषि** 'इण गतौ' अदादित्वात् शपो लुक् । **धृष्णुया** 'ञि धृषा प्रागल्भ्ये' । 'त्रसिगृधिधृषिक्षिपेः क्नुः' इति क्नुप्रत्ययः । कित्त्वाद्गुणाभावः । 'सुपां सुलुक्' इति सोः याजादेशः । 'चितः' इत्यन्तोदात्तत्वम् । **पुरा** 'पॄ पालनपूरणयोः' । पूरयति राज्ञामभिमतानीति । 'क्विप् च' इति क्विप् । 'उदोष्ठ्यपूर्वस्य' इति उत्वम् । 'सावेकाचः' इति विभक्तिरुदात्ता' । **हंसि** । हन्तेर्लटि सिपि अदादित्वात् शपो लुकि 'नश्चापदान्तस्य झलि' (पा.सू.८.३.२४) इति अनुस्वारः । **नम्या** 'णमु प्रह्वत्वे' औणादिक इन्प्रत्ययः । 'सुपां सुलुक्' इति तृतीयाया ड्यादेशः । टिलोपः । **सख्या** 'शेषो घ्यसखि' (पा.सू.१.४.७) इति घिसंज्ञाप्रतिषेधात् नाभावाभावे यणादेशः । **नमुचिम्** । इन्द्रेण सह युद्धं न मुञ्चतीति नमुचिः । औणादिकः किप्रत्ययः । 'नभ्राण्नपात्' इत्यादिना नञः प्रकृतिभावः । नञ् न गतिर्न च कारकमिति कृदुत्तरपदप्रकृतिस्वरत्वाभावे अव्ययपूर्वपदप्रकृतिस्वरत्वम् । **मायिनम्** । मायाशब्दस्य व्रीह्यादिषु पाठात् मत्वर्थीय इनिः ।।

**सिद्धाञ्जनम्**– हे इन्द्र! **धृष्णुया** धर्षकः शत्रूणां, त्वं, **युधा** युद्धेन सम्बद्धं **युधम्** युद्धं **उप घेदेषि** उपगच्छस्येव । घः पादपूरणः । युद्धाद्युद्धमुपैष्येव, सर्वदा युद्धशीलोऽसि । **पुरा** पुरेण सम्बद्धं **इदं** पुरोवर्ति **पुरम्** शत्रूणां नगरं **ओजसा** बलेन **संहंसि** सम्यक् भिनत्सि विनाशयसि । हे **इन्द्र! यत्** यदा **नम्या** नमनशीलेन शत्रोरुपरि पाते निमित्ते सति इति बोध्यं, **सख्या** सहायभूतेन वज्रेण **परावति** दूरदेशे वर्तमानं **नमुचिम् नाम** नमुचिसंज्ञया प्रसिद्धं, **मायिनम्** कपटप्रज्ञायुक्तं असुरं **निबर्हयः** नितरां अहिंसीः ॥ **नमुचिः**– वृत्रबन्धुरसुरः, न मुञ्चत्यप इति नमुचिर्वृत्र इवापां रोधक इति ऊह्यते । इन्द्रेण सह युद्धं न मुञ्चतीति नमुचिरिति सायणः । 'नभ्राण्नपात्' इत्यादिना नञः प्रकृतिभावः, औणादिकः किप्रत्ययः । **नम्या**– 'णमु प्रह्वत्वे' औणादिक इन्प्रत्ययः, तृतीयाया ड्यादेशः टिलोपश्च । **युधा** 'युध सम्प्रहारे' सम्पदादिलक्षणो भावे क्विप् । अन्ये गताः ॥ ७ ॥

## ऋक्संहिता पदपाठसहिता

**त्वं करंञ्जमुत पर्णयं वधीस्तेजिष्ठयातिथिग्वस्य वर्तनी ।**
**त्वं शता वङ्गृदस्याभिनत्पुरोऽनानुदः परिषूता ऋजिश्वना ॥ ८ ॥**
**त्वम् । करंञ्जम् । उत । पर्णयम् । वधीः । तेजिष्ठया । अतिथिऽग्वस्य । वर्तनी । त्वम् । शता । वङ्गृदस्य । अभिनत् । पुरः । अनानुऽदः । परिऽसूताः । ऋजिश्वना ॥ ८ ॥**

**स्कन्द– त्वम् करञ्जम्** करञ्जनामानमेकम् असुरम् **उत पर्णयम्** पर्णयनामानम् अपरम् **वधीः तेजिष्ठया** तीक्ष्णतमया **वर्तनी** वर्तन्या धारया । कस्य । सामर्थ्याद्वज्रस्य । कस्यार्थाय । उच्यते । **अतिथिग्वस्य** अतिथीन् प्रति परिचारकतया गच्छतीत्यतिथिग्वो दिवोदास इहोच्यते । कुत एतत् । 'दिवोदासम् अतिथिग्वम्' (ऋ.४,२६,३) इत्यादिषु दर्शनात् । षष्ठीनिर्देशाच्च 'अर्थाय' इति वाक्यशेषः । तादर्थ्यचतुर्थ्यर्थे वा षष्ठी । अतिथीनां परिचरितुर्दिवोदासनाम्नो राज्ञोऽर्थायेत्यर्थः । किञ्च **त्वम् शता** द्वितीयैकवचनस्यायमाकार आदेशः । शतम् **वङ्गृदस्य** वङ्गृदनाम्नोऽसुरस्य स्वभूता **अभिनत्** भिन्नवानसि । काः । **पुरः** नगराणि । कीदृशोऽहम् । उच्यते । **अननुदः** अनुददातीत्यनुदः, अविद्यमानोऽनुदो यस्य सोऽननुदः । यदीयं दानं प्राभूत्या-दन्योऽनुकर्तुमपि न शक्नोतीत्यर्थः । कीदृशीः पुरः । उच्यते । **परिषूताः** 'षूङ् प्रेरणे' । सर्वतः प्रेरिताः स्वेभ्यः स्थानेभ्यः । भयेनेतश्चेतश्च प्रणाशितलोकाः सन्तीत्यर्थः । केन परिपूताः । उच्यते ।

**ऋजिश्वना** ऋजिश्वा नाम राजा विदथिनः पुत्रः । यस्य मन्त्रान्तरेष्वपि दर्शनम्– 'त्वं पिप्रुं मृगयं शूशुवांसमृजिश्वने वैदथिनाय रन्धीः' । (ऋ.४,१६,१३) इति । तेन । अथवा ऋजिश्वनेति तादर्थ्यचतुर्थ्यर्थे तृतीया । ऋजिश्वनो राज्ञोऽर्थाय त्वं वङ्गृदस्याभिनच्छतं पुरः इति ॥ ८ ॥

**वेङ्कटमाधव– त्वम् करञ्जम्** अपि च **पर्णयम्,** अवधीः । **तेजिष्ठया** शक्त्या दिवोदासस्य रक्षार्थम् । तथा त्वम् ऋजिश्वनः शत्रोः **वङ्गृदस्य** बह्वीः **पुरः** अभिनः । या **ऋजिश्वना** राज्ञा परिगताः । ऋजिश्वनः शत्रुपुराण्यवष्टभ्यावस्थितस्य साहाय्यं कृतवान् असि । **अनानुदः** अपश्चाद्भावस्य दातेति ॥ ८ ॥

**मुद्गल–** हे इन्द्र! **त्वम् करञ्जम्** एतत्सञ्ज्ञकम् असुरम् **उत** अपि च **पर्णयम्** एतन्नामानम् असुरम् **अतिथिग्वस्य** एतत्सञ्ज्ञस्य राज्ञः प्रयोजनाय **तेजिष्ठया** अतिशयेन तेजस्विन्या वर्तनी वर्तन्या शत्रुप्रेरणकुशलया शक्त्या **वधीः** हतवानसि । तथा **अननुदः** अनु पश्चात् द्यति खण्डयतीति अनुदः अनुचरः, न तादृशः । अनुचररहित एक एव त्वम् **ऋजिश्वना** एतत्सञ्ज्ञेन राज्ञा **परिषूताः** परितोऽवष्टब्धाः **शता** शतसङ्ख्याकाः **वङ्गृदस्य** एतत्सञ्ज्ञस्यासुरस्य **पुरः** पुराणि **अभिनत्** बिभिदिषे ॥ ८ ॥

**सायण–** हे इन्द्र! **त्वम् करञ्जम्** एतत्सञ्ज्ञकम् असुरम् **उत** अपि च **पर्णयम्** एतन्नामानम् असुरम् **अतिथिग्वस्य** एतत्सञ्ज्ञस्य राज्ञः प्रयोजनाय **तेजिष्ठया** अतिशयेन तेजस्विन्या वर्तनी वर्तन्या शत्रुप्रेरणकुशलया शक्त्या **वधीः** हतवानसि । तथा **अननुदः** अनु पश्चात् द्यति खण्डयतीति अनुदः अनुचरः । तादृशोऽनुचररहित एक एव त्वम् **ऋजिश्वना** एतत्संज्ञकेन राज्ञा **परिषूताः** परितोऽवष्टब्धाः **शता** शतसङ्ख्याकाः **वङ्गृदस्य** एतत्सञ्ज्ञस्यासुरस्य **पुरः** पुराणि नगराणि **अभिनत्** बिभिदिषे ॥

**वधीः** । हन्तेर्लुङि सिपि 'लुङि च' इति वधादेशः । तस्य अदन्तत्वाद् वृद्ध्यभावः (पा.सू.७.३.३५) । अत एव अनेकाच्त्वात् इट्प्रतिषेधाभावः (पा.सू.७.२.१०) । 'इट ईटि' इति सिचो लोपः । **तेजिष्ठया** । तेजस्शब्दात् 'अस्मायामेधा' इति मत्वर्थीयो विनिः । तस्मात् आतिशायनिके इष्ठनि 'विन्मतोर्लुक्' इति विनो लुक् । 'टेः' इति टिलोपः । नित्त्वादाद्युदात्तत्वम् । **वर्तनी** । वृत्यते प्रेर्यतेऽनयेति वर्तनी । करणे ल्युट् । टित्त्वात् ङीप् । (पा.सू.४.१.१५) ।

'सुपां सुलुक्' इति विभक्तेः पूर्वसवर्णदीर्घत्वम् । व्यत्ययेनान्तोदात्तत्वम् । **अभिनत्** 'भिदिर् विदारणे' लङि सिपि रुधादित्वात् श्नम् । 'इतश्च' इति इकारलोपः । 'हल्ङ्याब्भ्यः' इति सकारलोपः । **अनानुदः** 'दो अवखण्डने' । 'आदेचः' इति आत्वम् । 'आतश्चोपसर्गे' इति कप्रत्ययः । नास्ति अनुदः अस्येति बहुव्रीहौ 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । संहितायां दीर्घश्छान्दसः । **परिषूताः** 'षू प्रेरणे' कर्मणि निष्ठा । 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् ।।

**सिद्धाञ्जनम्**– अस्यामृचि करञ्जः पर्णयः वङ्गृद इति असुरनामानि श्रूयन्ते। एषां अवयवार्थानुसारेण अर्थो निर्णेतुं न शक्यते प्रयोगबलन्यूनतायाः । अन्यत्र (१०.४८.८) सकृत् 'पर्णयघ्ने' 'करञ्जघ्ने' इति इन्द्रविशेषणतया प्रयुक्तम् । वङ्गृदनाम अत्रैव भवति । तस्मादेतेषां वैशिष्ट्यमनिर्णीयैव ऋग्व्याख्यातव्या । अतिथिग्व ऋजिश्वानौ व्याख्यातौ (१.५१.५) द्रष्टव्यौ ।। हे इन्द्र! **त्वं करञ्जम्** असुरं **उत** अपि च **पर्णयम्** असुरं च **अतिथिग्वस्य** अतिथिभिर्गन्तव्यस्य यजमानस्य एतत्सञ्ज्ञकस्य वा **तेजिष्ठया** अतिशयेन तेजस्विन्या **वर्तनी** वर्तन्या वर्तयित्र्या प्रेरयित्र्या शक्त्या **वधीः** अवधीः हतवानसि । **अननुदः** अनु पश्चात् द्यति खण्डयति शत्रूनिति अनुदः अनुचरः । नास्ति अनुदोऽस्येति अननुदः अनुचररहितः एक एव **त्वम्, ऋजिश्वना** एतत्सञ्ज्ञकेन प्रागुक्तलक्षणेन भक्तेन **परिषूताः** परितः प्रेरिताः परिभूताः **वङ्गृदस्य** असुरस्य **शता** शतानि बहूनि **पुरः** पुराणि **अभिनत्** अभिनः । व्यत्ययेन प्रथमपुरुषः । **तेजिष्ठया**– तेजःशब्दान्मत्वर्थीयो विनिः, आतिशायनिके इष्ठनि 'विन्मतोर्लुक्' इति विनो लोपः टेर्लोपश्च । **वर्तनी**– वृत्यन्ते प्रेर्यन्तेऽनयेति वर्तनी, करणे ल्युट्, । विभक्तेः पूर्वसवर्णदीर्घत्वम् । **अननुदः**– 'दो अवखण्डने' । **परिषूताः**–'षू प्रेरणे' ।। ८ ।।

## ऋक्संहिता पदपाठसहिता

**त्वमेताञ्जनराज्ञो द्विर्दशाबन्धुना सुश्रवसोपजग्मुषः ।**
**षष्टिं सहस्रा नवतिं नव श्रुतो नि चक्रेण रथ्या दुष्पदावृणक् ।। ९ ।।**

त्वम् । एतान् । जनऽराज्ञः । द्विः । दश । अबन्धुना । सुऽश्रवसा । उपऽजग्मुषः । षष्टिम् । सहस्रा । नवतिम् । नव । श्रुतः । नि । चक्रेण । रथ्या । दुःऽपदा । अवृणक् ।।

**स्कन्द– त्वम् एतान् जनराज्ञ** आत्मीयानां जनानां राज्ञः । स्वराज्येषु प्रतिष्ठितान् सतः इत्यर्थः । कियतः । **द्विर्दश** द्विरावृत्तान् दश । विंशतिमित्यर्थः । कान् । **अबन्धुना** द्वितीयार्थे

तृतीयैषा । अबन्धून् बन्धुवर्जितान् । वैरिणोऽसुरानित्यर्थः । **सुश्रवसा** 'श्रवः' (निघ.२,१०) इति धननाम । शोभनेन धनेन **उपजग्मुषः** कर्मण्ययं व्यत्ययेन क्वसुर्द्रष्टव्यः । उपगतान् अन्वितान् । धनेन समृद्धान् सत इत्यर्थः । अथवा 'अबन्धुना सुश्रवसा' इति द्वे अपि तृतीयान्ते समानाधिकरणे । 'बन्धु' (निघ.२,१०) इति तु धननाम । 'श्रव' (निघ.२,७) इत्यन्ननाम । 'उपजग्मुषः' इत्यपि स्वार्थे कर्तर्येव क्वसुः । धनवर्जितेन शोभनेनान्नेनोपगतान् । पक्वान्नमात्रेण वा फल्गुना करेणोपगतान् । सुवर्णरजतमाणिक्यमौक्तिकादिधनं सारभूतं करम् अददत इत्यर्थः । न च विंशतिमेव केवलान् । किं तर्हि । **षष्टिम् सहस्रा** सहस्राणि **नवतिम्** च **नव** च । **श्रुतः** विख्यातस्त्वम् **चक्रेण रथ्या** सूर्यरथस्यावयवभूतेन **दुष्पदा** पदिर्गत्यर्थः । दुर्गमेन । तीक्ष्णधारित्वाद् दुस्सहेनेत्यर्थः । **नि अवृणक्** 'वृणक्ति' (निघ.२,१९) इति वधकर्मा । नियमेनावधीरित्यर्थः । अत्रेतिहासमाचक्षते– 'असुराः किल ब्रह्मणा दत्तवरत्वाद्वज्रस्यावध्या आसन् । तानिन्द्रः सूर्यरथाच्चक्रम् अपहृत्य तेनाहन्' इति । तदेतदिहोच्यते– 'नि चक्रेण रथ्या' इति । मन्त्रान्तरेऽपि चैतद् दृश्यते 'यत्रोत बाधितेभ्यश्चक्रं कुत्साय युध्यते । मुषाय इन्द्र सूर्यम्' (ऋ.४,३०,४) इत्यादौ ॥ ९ ॥

**वेङ्कटमाधव– त्वम् एतान्** जनपदानां राज्ञः विंशतिं बन्धुवर्जितेन **सुश्रवसा** राज्ञा उपजग्मुषः युद्धार्थं तदनुचराणां भटानामियं सङ्ख्या **षष्टिम्** इति । विश्रुतस्त्वम् न्यवधीः **चक्रेण** दुष्पतनेन रथ्यायाम् ॥ ९ ॥

**मुद्गल–** हे इन्द्र! **श्रुतः** विश्रुतः प्रख्यातः **त्वम् द्विः दश** विंशतिसङ्ख्याकान् **अबन्धुना** बन्धुरहितेन सहायरहितेन **सुश्रवसा** एतत्सञ्ज्ञकेन राज्ञा युद्धार्थम् **उपजग्मुषः** उपगतवत **एतान्** एवंविधान् **जनराज्ञः** जनपदानाम् अधिपतीन् । **षष्टिम्** इत्यादिना तेषां राज्ञाम् अनुचरसङ्ख्योच्यते । **षष्टिम् सहस्रा** सहस्राणाम् षष्टिम् **नवतिम् नव** नवसङ्ख्योत्तरां नवतिं तान् राज्ञ ईदृक्सङ्ख्याकान् अनुचरांश्च **रथ्या** रथसम्बन्धिना **दुष्पदा** दुष्प्रपदेन । शत्रुभिः प्राप्तुम् अशक्येनेत्यर्थः । ईदृशेन **चक्रेण नि अवृणक्** न्यवर्जयः । त्वाम् स्तुवतः सुश्रवसो राज्ञः जयार्थं त्वमागत्य तदीयान् शत्रून् अजैषीरित्यर्थः ॥ ९ ॥

**सायण–** हे इन्द्र! **श्रुतः** विश्रुतः प्रख्यातः **त्वं, द्विर्दश** विंशतिसङ्ख्याकान् **अबन्धुना** बन्धुरहितेन सहायरहितेन **सुश्रवसा** एतत्संज्ञकेन राज्ञा युद्धार्थम् **उपजग्मुषः** उपगतवत **एतान्**

एवंविधान् **जनराज्ञः** जनपदानाम् अधिपतीन् । **षष्टिम्** इत्यादिना तेषां राज्ञाम् अनुचरसङ्ख्योच्यते । **षष्टिम् सहस्रा** सहस्राणाम् षष्टिम् **नवतिम् नव** नवसङ्ख्योत्तरां नवतिं तान् राज्ञ ईदृक्सङ्ख्याकान् अनुचरांश्च **रथ्या** रथसम्बन्धिना **दुष्पदा** दुष्प्रपदेन । शत्रुभिः प्राप्तुम् अशक्येनेत्यर्थः । ईदृशेन **चक्रेण नि अवृणक्** न्यवर्जयः । त्वाम् स्तुवतः सुश्रवसो राज्ञः जयार्थं त्वमागत्य तदीयान् शत्रून् अजैषीरित्यर्थः ।।

**जनराज्ञः** । समासान्तविधेरनित्यत्वात् (परिभा.८४) टच्प्रत्ययाभावः (पा.सू.५.४.९१) । राजञ्छब्दो 'राजृ दीप्तौ' इत्यस्मात् कनिन्प्रत्ययान्त आद्युदात्तः । कृदुत्तरपदप्रकृतिस्वरत्वेन स एव शिष्यते । **अबन्धुना** । 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । **सुश्रवसा** । शोभनं श्रवोऽन्नं यस्य । 'आद्युदात्तं द्व्यच्छन्दसि' इत्युत्तरपदाद्युदात्तत्वम् । **उपजग्मुषः** । गमेर्लिटः क्वसुः । शसि भसंज्ञायां 'वसोः सम्प्रसारणम्' इति सम्प्रसारणम् । परपूर्वत्वम् । 'गमहन' इत्यादिना उपधालोपः । 'शासिवसिघसीनां च' इति षत्वम् । कृदुत्तरपदप्रकृतिस्वरत्वेन क्वसोरेव स्वरः शिष्यते । **रथ्या** । रथस्येदं रथ्यम् । 'रथाद्यत्' (पा.सू.४.३.१२१) इति यत् । 'यतोऽनावः' इत्याद्युदात्तत्वम् । 'सुपां सुलुक्' इति विभक्तेः आकारः । **दुष्पदा** 'पद गतौ' । 'ईषद्दुःसुषु' इति खल् । 'लिति' इति प्रत्ययात् पूर्वस्योदात्तत्वम् । पूर्ववद् विभक्तेः आकारः । **अवृणक्** 'वृजी वर्जने' रौधादिकः । लङि मध्यमैकवचने 'हल्ङ्याब्भ्यः' इति सिपो लोपः । 'चोः कुः' इति कुत्वम् ।।

**सिद्धाञ्जनम्–** हे इन्द्र! **श्रुतः** प्रसिद्धः **त्वम् एतान् द्विर्दश** विंशतिसङ्ख्याकान् **अबन्धुना** बन्धुरहितेन असहायेन **सुश्रवसा** शोभनदिव्यावेशश्रवणयुक्तेन भक्तेन यजमानेन युद्धार्थं **उपजग्मुषः** उपगतवतः **जनराज्ञः** अप्रतीतदेवसत्ताकानां सामान्यपामरजनानाम् अधिपतीन् असुरप्रायान् असुरविभूतिभूतान् **न्यवृणक्** न्यवर्जयः । न केवलं तान्, तेषाम् अनुचरानपीति तत्सङ्ख्यामाह । **षष्टिम् सहस्रा** सहस्राणां षष्टिं, **नवतिम् नव** नवसङ्ख्योत्तरां नवतिं ईदृक्सङ्ख्याकान् अनुचरांश्च अजैषीः । केन साधनेन? **दुष्पदा** दुष्प्रपदनेन दुर्गमेन **रथ्या** रथसम्बन्धिना **चक्रेण** रथगतिसाधनभूतेन मुख्येनाङ्गेन ।।

इदमत्र अवधातव्यम् । ईदृश्य ऋच आपाततो वृत्तान्तान्वाख्यानानीव लक्ष्येरन् । तथापि रहस्यार्थलाभायोपयुक्तं सुश्रवः शब्दश्रवणम् । तथा षष्टि-नवनवतिसङ्ख्योदीरणेऽपि रहस्यमुपक्षिप्तम् । सुश्रवसम् अधिकृत्य प्रागुक्तम् (१.४९.२), दश-शत-सहस्रादिसङ्ख्यानां किमपि पूर्णताद्योतकत्वं

बोध्यम् । पूर्णतायाः किञ्चिदूनत्वं नवनवत्यादेः । एवं षट्सङ्ख्याया अपि सप्तोनत्वं, सप्तसङ्ख्या च विश्वसत्ताकक्ष्याविभागमूलभूततत्त्वबोधिनी । एवं द्विर्दशेत्यत्र द्विः द्विकृत्वः, सकृत् इत ऊर्ध्व-मारोहणे सकृदवरोहणे च विघ्नकरा आसुरविभवभूता दिव्यावेशसम्पन्नं पुरुषं यजमानं 'सुश्रवसं' बाधन्ते । अन्यच्च षष्टिनवतिसङ्ख्याविवरणं आर्षरहस्यज्ञानायत्तं इह दुरूहमिति एतावदेवालम् ।।

**जनराज्ञः**–छन्दसि समासान्तविधिरनित्यः, अतो न टच् । **रथ्या**–रथ्येन, विभक्तेराकारः । **दुष्पदा**–दुष्पदेन, दुःखेन पत्तुं शक्यं दुष्पदं तेन, विभक्तेराकारः, पद गतौ ईषद्दुःसुष्विति खल् । **अवृणक्**–'वृजी वर्जने' लङ्मध्यमैकवचनम्, सिपो लोपः, कुत्वम् ।। ९ ।।

## ऋक्संहिता पदपाठसहिता

**त्वमा॑विथ सु॒श्रव॑सं॒ तवो॒तिभि॒स्तव॒ त्राम॑भिरिन्द्र॒ तूर्व॑याणम् ।**
**त्वम॑स्मै॒ कुत्स॑मतिथि॒ग्वमा॒युं म॒हे राज्ञे॒ यूने॑ अरन्धनायः ।। १० ।।**
त्वम् । आ॒वि॒थ॒ । सु॒ऽश्रव॑सम् । तव॑ । ऊ॒तिऽभिः॑ । तव॑ । त्राम॑ऽभिः । इ॒न्द्र॒ । तूर्व॑याणम् ।
त्वम् । अ॒स्मै॒ । कुत्स॑म् । अ॒ति॒थि॒ऽग्वम् । आ॒यूम् । म॒हे । राज्ञै॑ । यूनै॑ । अ॒र॒न्ध॒नायः ।।

**स्कन्द– त्वम् आविथ** पालितवानसि । **सुश्रवसम्** नाम राजानम् । **तव** योग्याभिः **ऊतिभिः** पालनैः । किञ्च त्वं न केवलं सुश्रवसम् । किं तर्हि । तव योग्यैः **त्रामभिः** पालनैः हे **इन्द्र! तूर्वयाणम्** नामापरं राजानम् । किञ्च **त्वम् अस्मै** तूर्वयाणस्यायमन्वादेशः । तादर्थ्ये चात्र चतुर्थी । अस्य तूर्वयाणस्यार्थाय स्वसखम् **कुत्सम्** नाम ऋषिम् **अतिथिग्वम्** अतिथीन् प्रति परिचरितृतयोपगन्तारं दिवोदासं नाम राजानम् **आयुम्** च उर्वश्याः पुत्रम् । कीदृशायास्मै । उच्यते । **महे** महते **राज्ञे यूने** तरुणाय । **अरन्धनायः** 'रध्यतिर्वशगमने' (या.६,३२) । आत्मनो वशमनैषीः । तूर्वयाणस्य कार्येषु नियोगार्थं कुत्सादीनपि स्ववशेऽकार्षीरित्यर्थः ।। १० ।।

**वेङ्कटमाधव– त्वम्** अरक्षः । **सुश्रवसम्** राजानम् **तव ऊतिभिः** । तथा **तव** त्राणैः **इन्द्र! तूर्वयाणम्** च **त्वम् अस्मै** सुश्रवसे महते **राज्ञे यूने** कुत्सादीन् त्रीन् वशमनयः ।। १० ।।

**मुद्गल–** हे **इन्द्र! त्वम् तव ऊतिभिः** त्वदीयैः पालनैः **सुश्रवसम्** पूर्वोक्तं राजानम् **आविथ** ररक्षिथ । तथा **तूर्वयाणम्** एतन्नामानं राजानम् **तव त्रामभिः** त्वदीयैः त्रायकैः पालकैः बलैराविथेति शेषः । किञ्च **त्वम् महे** महते **यूने** तरुणाय **अस्मै** सुश्रवसे राज्ञे कुत्सादीन् त्रीन् राज्ञः **अरन्धनायः** वशमनयः ।। १० ।।

**सायण–** हे **इन्द्र! त्वं तवोतिभिः** त्वदीयैः पालनैः सुश्रवसं पूर्वोक्तं राजानम् **आविथ** ररक्षिथ । तथा **तूर्वयाणम्** एतन्नामानं राजानं **तव त्रामभिः** त्वदीयैस्त्रायकैः पालकैर्बलैः आविथेति शेषः । किञ्च **त्वं महे** महते **यूने** तरुणाय **अस्मै** **सुश्रवसे** राज्ञे कुत्सादीन् त्रीन् राज्ञः **अरन्धनायः** वशमनयः । 'रध्यतिर्वशगमने' (निरु.६.३२) इति यास्कः ।।

**त्रामभिः** 'त्रैङ् पालने' । 'आदेचः' इति आत्वम् । 'आतो मनिन्' इति मनिन् । नित्त्वादाद्युदात्तत्वम् । **अरन्धनायः** । रन्धनं वशीकरणं करोति रन्धनयति । 'तत्करोति' (पा.सू.३.१.२६.५) इति णिच् । 'इष्ठवण्णौ प्रातिपदिकस्य' (पा.सू.६.४.१५५.१) इति इष्ठवद्भावात् टिलोपः । लङि सिपि दीर्घश्छान्दसः ।। १० ।।

**सिद्धाञ्जनम्–** हे **इन्द्र! त्वम् तव ऊतिभिः** त्वदीयाभिः रक्षाभिः **सुश्रवसम्** पूर्वोक्तं **आविथ** ररक्षिथ । तथा **तूर्वयाणम्** जित्वरगमनं देवार्थं योद्धारं एतत्सञ्ज्ञकं च **तव त्रामभिः** त्वदीयैस्त्रायकैर्बलैः आविथ । **त्वम्, महे** महते **यूने** तरुणाय यौवनसम्पन्नाय **अस्मै** सुश्रवसे **राज्ञे** राजमानाय नृपाय वा, **कुत्सम् अतिथिग्वम् आयुम्** एतान् उक्तस्वरूपलक्षणान् (१.३३, १.५१.६, १.५३.८, १.१०.११, १.३१.२) **अरन्धनायः** वशमानयः । 'रध्यतिर्वशगमने' इति यास्कः । कुत्सादीन् अधिकृत्य प्रागुक्तम् अवधेयम् ।। **त्रामभिः**–'त्रैङ् पालने' 'आदेचः' इत्यात्वं, आतो मनिन् । **अरन्धनायः**–रन्धनं वशीकरणं, तत्करोतीति णिच् ।। १० ।।

## ऋक्संहिता पदपाठसहिता

**य उदृचीन्द्र देवगोपाः सखायस्ते शिवतमा असाम ।**
**त्वां स्तोषाम त्वया सुवीरा द्राघीय आयुः प्रतरं दधानाः ।। ११ ।।**
**ये । उत्ऽऋचि । इन्द्र । देवऽगोपाः । सखायः । ते । शिवऽतमाः । असाम ।**
**त्वाम् । स्तोषाम । त्वया । सुऽवीराः । आयुः । प्रऽतरम् । दधानाः ।। ११ ।।**

**स्कन्द–** ये वयम् **उद् ऋचि** 'ऋच स्तुतौ' । उद्गता स्तुतिर्यस्मिन् स उदृग् यज्ञः, तत्र । अथवा 'सुष्ठु सुवीर्यं यज्ञस्यागुर उदृचम्' (खि.५,७,४,१६) इति प्रैषेषु प्रयोगदर्शनात् उदृक्छब्दः समाप्तिवचनः । उदृचि समाप्तौ । कस्य । सामर्थ्याद् यज्ञस्य वा स्तुतीनां वा । हे **इन्द्र! देवगोपाः** देवाः गोप्तारो येषां ते देवगोपाः । सर्वैर्देवैः पाल्यमाना इत्यर्थः । **सखायः ते** तव

**शिवतमाः** सुखतमाः । सुखकरीणां स्तुतीनां कर्तार इत्यर्थः । **असाम** भवाम । यच्छब्दश्रुतेस्त-च्छब्दोऽध्याहार्यः । ते **त्वाम् स्तोषाम** नित्यं त्वा स्तुयाम इत्याशास्महे । **त्वया** हेताविंयं तृतीया । त्वया हेतुना **सुवीराः** शोभनैर्वीरैर्युक्ताः । त्वदनुग्रहाच्छोभनैः पुत्रैः पौत्रैश्च युक्ता इत्यर्थः । **द्राघीयः** अतिशयेन दीर्घम् **आयुः** जीवितम् **प्रतरम्** प्रकृष्टतरं श्लाघ्यम् **दधानाः** धारयन्तः । चिरं श्लाघ्यं च जीवन्त इत्यर्थः ।। ११ ।।

**वेङ्कटमाधव–** **ये** वयम् उदर्के देवैर्गुप्ताः सहायाः, ते अत्यन्तं कल्याणा अभूम । ते वयम् **त्वाम्** स्तुयाम । **त्वया** सुपुत्रा दीर्घतरं च **आयुः** प्रकृष्टतरम् **दधानाः** इति अन्नपुत्रयोराशासनम् ।।

**मुद्गल–** हे **इन्द्र! देवगोपाः** देवेन त्वया रक्षिताः । **ये ते** वयम् **सखायः उदृचि** उत्कृष्टतेजोवति त्वयि **शिवतमाः** अतिसुखिनः **असाम** भवाम । किञ्च **त्वया सुवीराः** सुपुत्रवन्तः सन्तः **त्वाम् स्तोषाम** स्तवाम । कीदृशा वयम् । **द्राघीयः आयुः प्रतरम् दधानाः** दीर्घतरं जीवनं प्रकृष्टतरं धारयन्तः ।। ११ ।।

**सायण–** हे **इन्द्र! ये** वयम् **उदृचि** उदर्के यज्ञसमाप्तौ वर्तमानाः, **देवगोपाः** देवैः पालिताः **ते** तव **सखायः** सखिवदत्यन्तं प्रियाः अत एव **शिवतमाः असाम** अतिशयेन कल्याणा अभूम, ते वयं यज्ञसमाप्त्युत्तरकालमपि **त्वां स्तोषाम** स्तवाम । अस्माभिः स्तुतेन **त्वया सुवीराः** शोभनपुत्रवन्तः सन्तः **द्राघीयः** अतिशयेन दीर्घम् **आयुः** जीवनं **प्रतरं** प्रकृष्टतरं यथा भवति तथा **दधानाः** धारयन्तो भूयास्म ।

**देवगोपाः** । देवा गोपा येषाम् । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । **असाम** 'अस भुवि' । लुडर्थे लोटि 'आडुत्तमस्य पिच्च' इति पिद्वद्भावात् 'पिच्च ङिन्न' इति ङित्त्वाभावे 'श्नसोरल्लोपः' इति अकारलोपाभावः । पित्त्वादेव तिङोऽनुदात्तत्वे धातुस्वरः शिष्यते । **स्तोषाम** । स्तौतेर्लोटि 'सिब्बहुलं लेटि' इति बहुलग्रहणात् लोट्यपि सिप् । तस्य पित्त्वाद् गुणः । **सुवीराः** । 'वीरवीर्यौ च' इति उत्तरपदाद्युदात्तत्वम् । **द्राघीयः** । दीर्घशब्दात् ईयसुनि 'प्रियस्थिर' (पा.सू.६.४.१५७) इत्यादिना द्राघादेशः । नित्त्वादाद्युदात्तत्वम् । **प्रतरम्** । प्रशब्दात् तरपि 'अमु च च्छन्दसि' (पा.सू.५.४.१२) इति अद्रव्यप्रकर्षे अमुप्रत्ययः । प्रत्ययस्वरेणान्तोदात्तत्वम् । **दधानाः** । दधातेः शानचि 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम् ।। ११ ।।

**सिद्धाञ्जनम्–** हे **इन्द्र! उदृचि** उद्गता ऋक् स्तुतिलक्षणा यस्मिन् तस्मिन् उदर्के यज्ञस्यान्ते। **ये** वयं **देवगोपाः** देवाः गोपाः पालयितारो येषां ते, **ते सखायः** त्वदीयसखिवदत्यन्तं प्रियाः **शिवतमाः** अतिशयेन कल्याणाः **असाम** अभूम। अथ, **त्वया** अस्मासु प्रीतेन त्वया **सुवीराः** शोभनवीरपुरुषलालितवीर्योपेताः, **द्राघीयः** दीर्घतरं **प्रतरम्** प्रकृष्टतरं च **आयुः** जीवितं **दधानाः** धारयमाणाः सन्तः **त्वाम्** भ(ग)वन्तं **स्तोषाम** स्तवाम ।। अन्तर्यागस्यावसाने तत्परमपि देवरक्षिता देवसखाः कल्याणतमाश्च वयं वीर्यवत्तरा दीर्घतरोत्कृष्टायुषः सन्तः हे भगवन्निन्द्र! तव भजकाः स्यामेत्युक्तम् ।। **असाम–** 'अस भुवि' लुङर्थे लोट् । **स्तोषाम**–स्तौतेर्लोट्, छान्दसम् ।। ११ ।।

।। इति प्रथमाष्टके चतुर्थाध्याये षोडशो वर्गः ।।

## ।। अथ सप्तदशो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

### (सूक्तम् ५४)

११ सव्य आङ्गिरसः । इन्द्रः । जगती; ६, ८-९, ११ त्रिष्टुप् ।

**मा नो॑ अ॒स्मिन्म॑घवन्पृ॒त्स्वंह॑सि न॒हि ते॒ अन्तः॒ शव॑सः परी॒णशे॑ ।**
**अक्र॑न्दयो न॒द्यो॒३॒॑ रोरु॑व॒द्वना॑ क॒था न क्षो॒णीर्भि॒यसा॒ समा॑रत ।। १ ।।**
**मा । नः॒ । अ॒स्मिन् । म॒घ॒ऽव॒न् । पृ॒त्ऽसु । अंह॑सि । न॒हि । ते॒ । अन्तः॑ । शव॑सः । प॒रि॒ऽनशे॑ । अक्र॑न्दयः । न॒द्यः॑ । रोरु॑वत् । वना॑ । क॒था । न । क्षो॒णीः । भि॒यसा॑ । सम् । आ॒र॒त ।। १ ।।**

**स्कन्द– मा नः ।** **मा** इति प्रतिषेधात् **नः** इति च कर्मश्रुतेर्योग्यक्रियाध्याहारः । मा त्याक्षीः **नः** अस्मान् । **अस्मिन्** हे **मघवन्! पृत्सु** सङ्ग्रामनामैतत् (तु.निघ.२,१७) । एकवचनस्य स्थानेऽत्र बहुवचनम् । सङ्ग्रामे । **अंहसि** पापेऽत्यन्तभयानके । किं कारणम् । उच्यते । **न हि ते अन्तः शवसः** बलस्य **परीणशे** नशिर्व्याप्तिकर्मा (तु.निघ.२,१८) । कृत्यार्थे चायं केनूप्रत्ययः । शक्यार्थश्चात्र कृत्यार्थः । व्याप्तुं शक्य इत्यर्थः । किञ्च **अक्रन्दयः** शब्दवतीरकरोः अकार्षीर्वा । **नद्यः** गङ्गाद्या नदीः । **रोरुवत्** स्तनयित्नुलक्षणं शब्दं कुर्वन् **वना**

'वनम्' (निघ.१,१२) इत्युदकनाम । तृतीयाबहुवचनस्यायमाकार आदेशः । वनैरुदकैर्गर्जन् । वृष्टिलक्षणैरुदकैरापूरयन् शब्दवतीः नदीरकरोः करोषि वेत्यर्थः । एतच्च कर्म कुर्वतो भवतः **कथा** कथम् **न क्षोणीः** माध्यमिका वाचः । **भियसा** भयेन **सम् आरत** समित्येष निरित्येतस्य स्थाने । अर्तिर्गत्यर्थः । मेघान्निर्गताः निर्गच्छन्ति वेत्यर्थः । अथवा समित्येष स्वार्थ एव । सामर्थ्यात्त्वन्येन सह सङ्गतिरभिप्रेता । कथम् अन्येन सह न सङ्गताः । कथं त्वत्तो न नष्टा न नश्यन्ति वेत्यर्थः ॥

**वेङ्कटमाधव– मा** अस्मान् **अस्मिन्** सङ्ग्रामेषु जायमाने उपद्रवेऽत्याक्षीः । **न हि ते** बलस्य पर्यन्तः केनचिदपि व्याप्तुं शक्यः । स त्वं नदीः **वना** उदकानि क्रन्दयसि रोरूयमाणः । कथं न पृथिव्यस्तिस्रः तव भयेन सङ्गच्छन्ते । भयाद्धीन्द्रस्य भूमयो विधृतास्तिष्ठन्ति ॥ १ ॥

**मुद्गल–** 'मा नः' इत्येकादशर्चं चतुर्थं सूक्तम् । षष्ठ्यष्टमीनवम्येकादश्यः त्रिष्टुभः । शिष्टाः सप्त जगत्यः । सव्य ऋषिः । इन्द्रो देवता ॥

हे **मघवन्** धनवन् इन्द्र! **अस्मिन्** परिदृश्यमाने **अंहसि** पापे **पृत्सु** पृतनासु पापफलभूतेषु सङ्ग्रामेषु च **नः** अस्मान् **मा** प्रक्षैप्सीरिति शेषः । यस्मात् **ते** तव **शवसः** बलस्य **अन्तः** अवसानम् **परीणशे** परितो व्याप्तुम् **न हि** शक्यते । सर्वोऽपि जनः त्वदीयं बलम् अतिक्रमितुं न शक्नोतीत्यर्थः । तस्मात्त्वम् अन्तरिक्षे वर्तमानः **रोरुवत्** अत्यर्थं शब्दं कुर्वन् **नद्यः** नदीः **वना** तत्सम्बन्धीन्युदकानि च **अक्रन्दयः** शब्दयसि । **क्षोणीः** क्षोण्यः । 'क्षोणी' (निघ.१,१) इति पृथिवीनाम । तदुपलक्षिताः त्रयो लोकाः **भियसा** त्वद्भयेन **कथा** कथम् **न सम् आरत** न सङ्गच्छन्ते । त्वदीयबलम् अवलोक्य त्रयोऽपि लोका बिभ्यतीति भावः ॥ १ ॥

**सायण–** 'मा नः' इति एकादशर्चं चतुर्थं सूक्तम् । षष्ठ्यष्टमीनवम्येकादश्यस्त्रिष्टुभः । शिष्टाः सप्त जगत्यः । सव्य ऋषिः । इन्द्रो देवता । तथा चानुक्रान्तम्– 'मा नोऽन्त्या त्रिष्टुप् षष्ठ्यष्टमी नवमी च' इति । अतिरात्रे प्रथमे पर्याये अच्छावाकशस्त्रे इदं सूक्तम् । तथा च सूत्रितम्– 'मा नो अस्मिन्मघवन्निन्द्र पिब तुभ्यं सुतो मदायेति याज्या' (आश्व.श्रौ.६.४) इति ॥

हे **मघवन्** धनवन्निन्द्र! **अस्मिन्** परिदृश्यमाने **अंहसि** पापे **पृत्सु** पृतनासु पापफलभूतेषु सङ्ग्रामेषु च **नः** अस्मान् **मा** प्रक्षैप्सीरिति शेषः । यस्मात् **ते** तव **शवसः** बलस्य **अन्तः** अवसानम् **परीणशे** परितो व्याप्तुम् **न हि** शक्यते । सर्वोऽपि जनस्त्वदीयं बलम् अतिक्रमितुं

न शक्नोतीत्यर्थः । तस्मात्त्वम् अन्तरिक्षे वर्तमानः **रोरुवत्** अत्यर्थं शब्दं कुर्वन् **नद्यः** नदीः **वना** तत्सम्बन्धीन्युदकानि च **अक्रन्दयः** शब्दयसि । **क्षोणीः** क्षोण्यः । क्षोणीति पृथिवीनाम । तदुपलक्षितास्त्रयो लोकाः **भियसा** त्वद्भयेन **कथा** कथं **न समारत** न सङ्गच्छन्ते । त्वदीयं बलम् अवलोक्य त्रयोऽपि लोका बिभ्यतीति भावः ॥

**पृत्सु** 'पदादिषु मांस्पृत्स्नूनामुपसङ्ख्यानम्' (पा.सू.६.१.६३.१) इति पृतनाशब्दस्य पृद्भावः । **परीणशे** । नशतिर्व्याप्तिकर्मा । 'कृत्यार्थे तवैकेन्' इति केन्प्रत्ययः । नित्त्वादाद्युदात्तत्वम् । 'निपातस्य च' इति पूर्वपदस्य दीर्घत्वम् । **नद्यः** । द्वितीयार्थे प्रथमा । **रोरुवत्** 'रु शब्दे' । यङ्लुगन्तात् लटः शतृ । 'अदादिवच्च' इति वचनात् शपो लुक् । शतुर्ङित्त्वाद् गुणाभावे उवङादेशः । 'नाभ्यस्ताच्छतुः' इति नुम्प्रतिषेधः । 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम् । **कथा** । 'था हेतौ च च्छन्दसि' इति किंशब्दात् प्रकारवचने थाप्रत्ययः । तस्य विभक्तिसंज्ञायां 'किमः कः' (पा.सू.७.२.१०३) इति कादेशः । **आरत** 'ऋ गतौ' । 'समो गम्यृच्छि' इत्यात्मनेपदम् । छान्दसे वर्तमाने लङि अदादित्वात् शपो लुक् । झस्य अदादेशः । आडागमो वृद्धिश्च ॥

**सिद्धाञ्जनम्**– दशमेऽनुवाके 'मा न' इत्येकादशर्चं चतुर्थं सूक्तम् । षष्ठ्यष्टमीनवम्येकादश्यस्त्रिष्टुभः शिष्टाः सप्त जगत्यः । सव्य ऋषिरिन्द्रो देवता ॥

हे **मघवन्** इन्द्र! **अस्मिन्** उपस्थिते **अंहसि** दुरिते **पृत्सु** पृतनासु दुरितविजृम्भितेषु सङ्ग्रामेषु **नः** अस्मान् **मा** 'प्रक्षेप्सीरिति शेषः' इति सायणः, प्रक्षिप्य प्रचोद्य वा मा कृथा उपेक्षामिति भावः । देववैरिभिः पापैः सह युद्धायास्मान् अप्रवर्तयन्नेव त्वं महाबलः सर्वान् जेतुं प्रभुरसीत्यर्थः । अतो बलं वर्णयति- **ते तव शवसः** दीप्यस्य बलस्य **अन्तः** अवसानं **परिणशे** परितो व्याप्तुं **न हि** न शक्यते, सर्वोऽपि शत्रुलोकः सम्भूय तव बलम् अतिक्रमितुं न प्रभवतीत्यर्थः । त्वं **रोरुवत्** अत्यर्थं शब्दं कुर्वन् **नद्यः** नदीः **वना** वनानि च **अक्रन्दयः** शब्दयसि । **क्षोणीः** पृथिव्यस्तिस्रः, त्रयो लोकाः, **भियसा** त्वद्भयेन **कथा** कथं **न समारत** न सङ्गच्छन्ते, त्रयो लोकाश्च भिया सङ्गताः, बिभ्यत्येवेत्यर्थः । अत्र 'नद्यो वना' इत्यादीनां रहस्य सङ्केतत्वं न भवति, इन्द्रबलमहिम्नो विवक्षितत्वात् । 'भीषास्माद्वातः पवते' इत्याद्युप निषद्वाक्यानामेवञ्जातीयको वेदमन्त्रो मूलमिति ज्ञेयम् ॥ **परीणशे**–नशतिर्व्याप्तिकर्मा, कृत्यार्थे केनप्रत्ययः, संहितायां पूर्वपदस्य दीर्घत्वम् । **रोरुवत्**–'रु शब्दे' यङ्लुगन्तः, लटः शतृ, शपो लुक्, अभ्यस्तात् शतुः नुम्प्रतिषेधः । अन्ये गताः ॥ १ ॥

## ऋक्संहिता पदपाठसहिता

**अर्चा शक्राय शाकिने शचीवते शृण्वन्तमिन्द्रं महयन्नभि ष्टुहि ।**
**यो धृष्णुना शवसा रोदसी उभे वृषा वृषत्वा वृषभो न्यृञ्जते ।। २ ।।**
**अर्च । शक्राय । शाकिने । शचीऽवते । शृण्वन्तम् । इन्द्रम् । महयन् । अभि । स्तुहि ।**
**यः । धृष्णुना । शवसा । रोदसी इति । उभे इति । वृषा । वृषऽत्वा । वृषभः ।**
**निऽऋञ्जते ।। २ ।।**

**स्कन्द– अर्च** इत्यात्मन एवान्तरात्मनः प्रैषः ऋत्विगन्तरस्य वा । स्तुहि । हे अन्तरात्मन्! ऋत्विग्! वा । **शक्राय** द्वितीयार्थे एताश्चतुर्थ्यः । शक्रमिन्द्रम् । **शाकिने** शक्तिमन्तम् । **शचीवते** कर्मवन्तं वा प्रज्ञानवन्तं वा । मा च विप्रकृष्टं निरादरं वा । किं तर्हि । **शृण्वन्तम् इन्द्रम्** । सन्निकृष्टं सादरं वा सन्तमित्यर्थः । स्वयमपि च मा निरादरः । किं तर्हि । **महयन्** 'मह पूजायाम्' । नमस्काराञ्जलिपुटकरणादिना पूजयन् **अभि स्तुहि** । यः इन्द्रः । किं करोति । उच्यते । **यः धृष्णुना** शत्रूणाम् अभिभवित्रा । **शवसा** बलेन **रोदसी उभे** अपि **वृषा** वर्षिता **वृषत्वा** वर्षितृत्वेन । वृष्टिप्रदानेनेत्यर्थः । न च सकृद्वर्षिता । किं तर्हि । **वृषभः** पुनःपुनर्वर्षिता । वर्षशील एवेत्यर्थः । **न्यृञ्जते** 'ऋञ्जतिः प्रसाधनकर्मा' (या.६,२१) । प्रसाधनं च भूषणं वशीकरणं वा । नियमेन प्रसाधयति । भूषयति स्ववशे वा कुरुते इत्यर्थः । उभयमपि ह्येतत् वृष्टिप्रदानेन द्यावापृथिव्योरिन्द्रः करोति ।। २ ।।

**वेङ्कटमाधव–** उच्चारय स्तोत्रम् । **शक्राय** सहायाय प्रज्ञावते । **शृण्वन्तम् इन्द्रम्** पूजयन् **अभि स्तुहि** । यः शत्रूणाम् अभिभवित्रा बलेन **उभे** द्यावापृथिव्यौ प्रसाधयति वर्षणशीलः **वृषभः** वृषत्वेन चेति ।। २ ।।

**मुद्गल–** हे अध्वर्यो! **शाकिने** शक्तियुक्ताय । **शचीवते** प्रज्ञावते । **शक्राय** इन्द्राय **अर्च** एवंविधम् इन्द्रं पूजय । किञ्च स्तुतीः **शृण्वन्तम्** समीचीनेयं स्तुतिरिति जानन्तं तम् **इन्द्रम्, महयन्** पूजयन् **अभि स्तुहि** आभिमुख्येन तस्य स्तोत्रं कुरु । **यः** इन्द्रः **धृष्णुना** शत्रूणां धर्षकेण **शवसा** बलेन **उभे रोदसी** द्यावापृथिव्यौ **न्यृञ्जते** नितरां प्रसाधयति । स इन्द्रः **वृषा** सेचनसमर्थः **वृषत्वा** वृषत्वेन अनेनैव सेचनसामर्थ्येन **वृषभः** वर्षिता कामानाम् ।। २ ।।

**सायण–** हे अध्वर्यो! **शाकिने** शक्तियुक्ताय । **शचीवते** प्रज्ञावते । **शक्राय** इन्द्राय **अर्च** एवंविधम् इन्द्रं पूजय । किञ्च स्तुतीः **शृण्वन्तम्** समीचीनेयं स्तुतिरिति जानन्तं तम् **इन्द्रम्, महयन्** पूजयन् **अभि ष्टुहि** आभिमुख्येन तस्य स्तोत्रं कुरु । **यः** इन्द्रः **धृष्णुना** शत्रूणां धर्षकेण **शवसा** बलेन **उभे रोदसी** द्यावापृथिव्यौ **न्यृञ्जते** नितरां प्रसाधयति । 'ऋञ्जतिः प्रसाधनकर्मा' (निरु.६.२१) इति यास्कः । स इन्द्रः **वृषा** सेचनसमर्थः **वृषत्वा** वृषत्वेनानेनैव सेचनसामर्थ्येन **वृषभः** वर्षिता कामानां यद्वा वृष्ट्युदकानाम् ॥

**अर्च** । शपः पित्त्वादनुदात्तत्वे धातुस्वरः । 'द्व्यचोऽतस्तिङः' इति दीर्घत्वम् । **शाकिने** । शक्तिः शाकः । 'शक्लृ शक्तौ' । भावे घञ् । मत्वर्थीय इनिः । 'क्रियाग्रहणं कर्तव्यम्' इति कर्मणः सम्प्रदानत्वात् चतुर्थी । **अभिष्टुहि** । स्तौतेः अदादित्वात् शपो लुक् । 'उपसर्गात्सुनोति' इति षत्वम् । 'ष्टुना ष्टुः' इति ष्टुत्वम् । **वृषत्वा** । 'सुपां सुलुक्' इति विभक्तेः आकारः । **न्यृञ्जते** । 'ऋजि भृजी भर्जने' इदित्त्वात् नुम् । शपि प्राप्ते व्यत्ययेन शः ॥ २ ॥

**सिद्धाञ्जनम्–** अन्तरात्मन आमन्त्रणम्, अन्यस्य सख्युर्यजमानस्य वा । **शाकिने** शक्ताय **शचीवते** शक्तियुक्ताय, प्रज्ञावते वा, शक्ताय इन्द्राय **अर्च** पूजां कुरु । **शृण्वन्तम्** स्तुतिमाकर्णयन्तं **इन्द्रम् महयन्** पूजयन् **अभिष्टुहि** आभिमुख्येन स्तुहि । **यः** इन्द्रः **धृष्णुना** धर्षकेण शत्रूणां, **शवसा** बलेन **उभे रोदसी** द्यावापृथिव्यौ **न्यृञ्जते** नितरां प्रसाधयाति स इन्द्रः **वृषा** वर्षिता अभीष्टानां ज्योतिर्बलैश्वर्यादीनां, **वृषत्वा** वृषत्वेन वर्षितृभावेन यथोक्तवर्षणसामर्थ्येन **वृषभः** कीर्त्यते ॥ **शाकिने**–शक्तिः शाकः, 'शक्लृ शक्तौ' भावे घञ्, मत्वर्थीय इनिः । अन्ये गताः ॥ २ ॥

## ऋक्संहिता पदपाठसहिता

**अर्चा॑ दि॒वे बृ॑ह॒ते शू॒ष्यं१॒॑ वचः॒ स्वक्ष॑त्रं॒ यस्य॑ धृष॒तो धृ॒षन्मनः॑ ।**
**बृ॒हच्छ्र॑वा॒ असु॑रो ब॒र्हणा॑ कृ॒तः पु॒रो हरि॑भ्यां वृष॒भो रथो॒ हि षः ॥ ३ ॥**
अर्च॑ । दि॒वे । बृ॒ह॒ते । शू॒ष्य॑म् । वचः॑ । स्वऽक्ष॑त्रम् । यस्य॑ । धृ॒ष॒तः । धृ॒षत् । मनः॑ । बृ॒हत्ऽश्र॑वाः । असु॑रः । ब॒र्हणा॑ । कृ॒तः । पु॒रः । हरि॑ऽभ्याम् । वृ॒ष॒भः । रथः॑ । हि । सः ॥ ३ ॥

**स्कन्द– अर्च** अर्चतिरत्र सामर्थ्यादुच्चारणार्थः । आत्मन एव चायम् अन्तरात्मनः प्रैषः । उच्चारय । हे **अन्तरात्मन्** । **दिवे बृहते** तादर्थ्यचतुर्थ्यावेते । दीप्तस्य महतश्चेन्द्रस्यार्थाय । **शूष्यम्** बलस्य निमित्तम् । बलवृद्धिकरमित्यर्थः । **वचः** स्तुतिलक्षणम् । स्तूयमाना हि देवता वीर्येण वर्धन्ते । अत एवमुच्यते– उच्चारय इन्द्राय शूष्यं वचः इति । **यस्य** इन्द्रस्य । किम् । उच्यते । **स्वक्षत्रम्** क्षत्रमित्यपठितमपीह बलनाम द्रष्टव्यम् । स्वबलं परानाश्रितम् । यस्य **धृषतः** शत्रून् अभिभवत **धृषत्** धृष्टं प्रगल्भम् मनः । यस्य बलेन शत्रून् घ्नतो न कुतश्चिन्मनो बिभेतीत्यर्थः । **बृहच्छ्रवाः** 'रथो हि ष' इति तच्छब्दश्रुतेर्यच्छब्दोऽध्याहार्यः । यो बृहच्छ्रवा 'श्रवः' (निघ.२,१०) इति धननाम । महाधनः **असुरः** वृत्रः अन्यो वा कश्चित् **बर्हणा कृतः** बर्हिर्वृद्ध्यर्थः । इन्द्रस्य चेदं विशेषणम् । परिवृद्धेनेन्द्रेण कृतः । अथवा बर्हणा हिंसोच्यते । निबर्हयतेर्वधकर्मत्वात् (तु.निघ.२,१९) । बर्हणया हिंसया कृतः । कदा । उच्यते । **पुरः हरिभ्याम्** प्राक् हरिप्राप्तेरप्राप्तेन तदीयं स्थानम् । स्वस्थानस्थेनैव सतेत्यर्थः । कीदृशः । उच्यते । **वृषभः** वर्षिता । करद इत्यर्थः । न च केवलं करदः । किं तर्हि । 'रथो हि सः' रथो रंहतेर्गतिकर्मणो गन्ता इहोच्यते । हिशब्दश्चार्थे । रंहिता च स कृतः । आत्मनोऽनुगन्ता च स कृत इत्यर्थः । अथवा रूढिबलाद् रथशब्दो रथवचन एवान्तर्णीतमत्वर्थः । रथवांश्च स कृतः । रथेन च स सेवकः कृतः इत्यर्थः । अथवा बृहच्छ्रवा इति श्रूयमाणत्वाच्छ्रवः स्तनयित्नुलक्षणः शब्द इहाभिप्रेतः । असुर इत्यपि प्रज्ञावत्वात् प्राणवत्त्वाद्वा मेघ उच्यते । बर्हणाशब्दो वधवचनः, निबर्हयतेर्वधकर्मत्वात् । येनेन्द्रेण महान् स्तनयित्नुलक्षणशब्दो मेघो वधेन प्राक् हरिप्राप्तेः दूरस्थेनैव सता वृषभः कृतः । वृष्टिप्रदः कृत इत्यर्थः । मा च मंस्थाः कियानयं पुरुषकार इति । किं कारणम् । 'रथो हि स' हिशब्दो यस्मादर्थे । यस्मात् रथो रंहिता गन्ता नंष्टा स मेघः । नंष्टृत्वाच्च दुर्हण इत्यर्थः ।। ३ ।।

**वेङ्कटमाधव–** उच्चारय दीप्ताय महते बलनिमित्तम् । **वचः** अनाश्रितपरबलम् । **यस्य** शत्रून् धर्षयतः धृष्टम् । **मनः** । महाकीर्तिः शत्रूणाम् असिता शत्रुपरिबर्हणार्थं तस्येन्द्रस्य **रथः** कामानां वर्षिता अश्वाभ्यां पुरस्क्रियते स्तोतृणामिति ।। ३ ।।

**मुद्गल–** हे स्तोतः! **दिवे** दीप्ताय **बृहते** महते इन्द्राय **शूष्यम्** 'शूषम्' (निघ.२,६) इति सुखनाम । तत्र साधु शूष्यम् । तादृशं स्तुतिलक्षणम् **वचः अर्च** उच्चारय । **यस्य** इन्द्रस्य

**धृषतः** शत्रून् धर्षयतः **स्वक्षत्रम्** स्वभूतबलवत् **मनः धृषत्** धृष्टं भवति । **हि षः** स हि खल्विन्द्रः **बृहच्छ्रवाः** प्रभूतयशाः **असुरः** शत्रूणां निरसिता **बर्हणा** शत्रूणां निबर्हयिता **हरिभ्याम्** अश्वाभ्याम् **पुरस्कृतः** पूजितः **वृषभः** कामानां वर्षिता । **रथः** रंहणशीलः ।। ३ ।।

**सायण–** हे स्तोतः! **दिवे** दीप्ताय **बृहते** महते इन्द्राय **शूष्यम्** 'शूषम्' (निघ.२,६) इति सुखनाम । तत्र साधु शूष्यम् । तादृशं स्तुतिलक्षणम् **वचः अर्च** उच्चारय । **यस्य** इन्द्रस्य **धृषतः** शत्रून् धर्षयतः **स्वक्षत्रम्** स्वभूतबलवत् **मनः धृषत्** धृष्टं भवति । **हि षः** स हि खल्विन्द्रः **बृहच्छ्रवाः** प्रभूतयशाः **असुरः** शत्रूणां निरसिता । यद्वा । असुः प्राणो बलं वा । तद्वान् । रो मत्वर्थीयः । अथवा । असवः प्राणाः तेन च आपो लक्ष्यन्ते, 'प्राणा वा आपः' (तै.ब्रा.३.२.५.२) इति श्रुतेः । तान् राति ददातीति असुरः । **बर्हणा** शत्रूणां निबर्हयिता **हरिभ्याम्** अश्वाभ्याम् **पुरस्कृतः** पूजितः **वृषभः** कामानां वर्षिता । **रथः** रंहणशीलः ।।

**शूष्यम्** 'तत्र साधुः' इति यत् । 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' इति 'यतोऽनावः' इत्याद्युदात्तत्वाभावे 'तित्स्वरितम्' इति स्वरितत्वम् । **धृषतः** 'ञि धृषा प्रागल्भ्ये' । व्यत्ययेन शः । 'शतुरनुमः' इति विभक्तेरुदात्तत्वम् । **बृहच्छ्रवाः** । बृहत् श्रवो यस्य । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । **असुरः** । 'असु क्षेपणे' । 'असेरुरन्' (उ.सू.१.४२) इति उरन्प्रत्ययः । नित्त्वादाद्युदात्तत्वम् । **बर्हणा** । 'सुपां सुलुक्' इति विभक्तेः आकारः । **पुरः** । 'पूर्वाधर' इत्यादिना असिप्रत्ययान्तः अन्तोदात्तः ।। ३ ।।

**सिद्धाञ्जनम्–** अत्रापि पूर्ववदामन्त्रणम् । **बृहते दिवे** महते दीप्ताय, बृहच्छब्दवाच्यद्युपदार्थ भूताय वा इन्द्राय **शूष्यम्** शूषं सुखं तत्र साधु, सुखकरमित्यर्थः । तादृशं **वचः** स्तोत्रलक्षणं **अर्च** उच्चारय । **यस्य** इन्द्रस्य **धृषतः** धर्षयतः असुरान्, **मनः स्वक्षत्रम्** स्वभूतबलवत् **धृषत्** धृष्टं भवति । **सः हि** स हि स खल्विन्द्रः **बृहच्छ्रवाः** बृहत् महत् श्रवः श्रवणं यशो वा यस्य सः । **असुरः** बलवान्, निरसिता शत्रूणां, **बर्हणा** बर्हणः, निबर्हयिता शत्रूणां, **हरिभ्याम्** प्रसिद्धाभ्यां अश्वाभ्यां **पुरस्कृतः** पूजितः **वृषभः** वर्षिता **रथः** रंहणशीलः वेगवान् ।। **धृषतः**– व्यत्ययेन शः । **बर्हणा**–'सुपां सुलुक्' इति विभक्तेराकारः ।। ३ ।।

## ऋक्संहिता पदपाठसहिता

**त्वं दिवो बृहतः सानु कोपयोऽव त्मना धृषता शम्बरं भिनत् ।**
**यन्मायिनो व्रन्दिनो मन्दिना धृषच्छितां गभस्तिमशनिं पृतन्यसि ।। ४ ।।**

त्वम् । दिवः । बृहतः । सानु । कोपयः । अव । त्मना । धृषता । शम्बरम् । भिनत् । यत् । मायिनः । व्रन्दिनः । मन्दिना । धृषत् । शिताम् । गभस्तिम् । अशनिम् । पृतन्यसि ।। ४ ।।

**स्कन्द– त्वम् दिवः** यद्यसुरा अपि द्युलोकैकदेशवासिन एव ततोऽत्र द्युशब्दो द्युलोकवचन एव । अथ न, ततो दीप्तवचनः । त्वं द्युलोकस्य दीप्तस्य वाऽसुरपुरस्य **बृहतः** महतः **सानु** समुच्छ्रितं प्रदेशम् **कोपयः** भग्नवानसि । किञ्च **त्मना** आत्मनैव त्वम् **धृषता** धृष्टेन निश्शङ्केन मनसा **शम्बरम्** नाम असुरम् **अव भिनत्** अवाभिनत् अवभिन्नवान् । चूर्णीकृतवानित्यर्थः । कदा । उच्यते । **यत्** यदा **मायिनः** मायावतः **व्रन्दिनः** 'व्रन्दी व्रन्दतेर्मृदूभावकर्मणः (या.५, ९५) । अत्यन्तबलवत्वात् परबलानां मृदूकर्तुः । मायावतः अत्यन्तं च बलवतः शम्बरस्य स्वभूतामित्यर्थः । **मन्दिना** मन्दतिरर्चतिकर्मा (तु.या.३,१४) । स्तुतिमता स्तुत्येन वज्रेण मनसा वा । **धृषत्** धृष्टं निश्शङ्कम् **शिताम्** निशितां तीक्ष्णाम् **गभस्तिम्** बाहुनामैतत् (तु.निघ.२,४) । तात्स्थ्यात्वत्राऽशनौ वर्तते । बाहुस्थाम् **अशनिम्** शक्तिम् **पृतन्यसि** अपृतन्यः योधितवान् । यदाऽशनिहस्तेन शम्बरेण सहायुध्यथा इत्यर्थः ।। ४ ।।

**वेङ्कटमाधव– त्वम् दिवः** महतः समुच्छ्रितं मेघम् **अवकोपयः** अवभिन्नवान् । आत्मनैव धर्षयित्रा **शम्बरम्** असुरम् । यदा मायावतोऽन्यान् स्वबलेन मृदूकर्तुं हृष्टेन मनसा धृष्टं तीक्ष्णां शत्रूणां गृहीताम् **अशनिम्** अयोधयः । तदानीमिति । यद्वा बाहुमशनिं चेति ।। ४ ।।

**मुद्गल–** हे इन्द्र! **त्वम् बृहतः** महतः **दिवः** द्युलोकस्य **सानु** समुच्छ्रितम् उपरिप्रदेशम् **कोपयः** अकम्पयः । **धृषता** शत्रूणां धर्षयित्रा **त्मना** आत्मना स्वयमेव **शम्बरम्** एतत्सञ्ज्ञम् असुरम् **अवाभिनत्** अवधीः । **यत्** यदा **व्रन्दिनः** शत्रून् जेतुं मृदुभावं प्राप्तान् **मायिनः** मायाविनोऽसुरान् **मन्दिना** हृष्टेन **धृषत्** 'धृषता' प्रागल्भ्यं प्राप्नुवता मनसा युक्तस्त्वम् **शिताम्** तीक्ष्णीकृतां **गभस्तिम्** हस्तेन गृहीताम् **अशनिम्** वज्रम् **पृतत्यसि** तान् असुरान् जेतुं पृतनारूपेणेच्छसि । तान् प्रति प्रेरयसीत्यर्थः । तदानीं 'बृहतो दिवः सानु कोपयः' इति पूर्वेणान्वयः ।। ४ ।।

**सायण–** हे इन्द्र! **त्वम् बृहतः** महतः **दिवः** द्युलोकस्य **सानु** समुच्छ्रितम् उपरिप्रदेशम् **कोपयः** अकम्पयः । **धृषता** शत्रूणां धर्षयित्रा **त्मना** आत्मना स्वयमेव **शम्बरम्** एतत्सञ्ज्ञम् असुरम् **अवाभिनत्** अवधीः । **यत्** यदा **व्रन्दिनः** शत्रून् जेतुं मृदुभावं प्राप्तान् । यद्वा व्रन्दं समूहः । असुरसमूहवतः । **मायिनः** मायाविनोऽसुरान् **मन्दिना** हृष्टेन **धृषत्** 'धृषता' प्रागल्भ्यं प्राप्नुवता मनसा युक्तस्त्वम् **शिताम्** तीक्ष्णीकृतां **गभस्तिम्** हस्तेन गृहीताम् । यद्वा गभस्तिः इति रश्मिनाम । तद्वतीम् **अशनिं** वज्रं **पृतन्यसि** तानसुरान् जेतुं पृतनारूपेणेच्छसि । तान्प्रति प्रेरयसीत्यर्थः । तदानीं 'बृहतो दिवः सानु कोपयः' इति पूर्वेणान्वयः ।।

**कोपयः** 'कुप कोपे' ण्यन्तात् लङि 'बहुलं छन्दस्यमाङ्योगेऽपि' इति अडभावः । **त्मना** । 'मन्त्रेष्वाङ्यादेरात्मनः' इति आकारलोपः । **धृषत्** 'सुपां सुलुक्' इति तृतीयाया लुक् । **शिताम्** 'शो तनूकरणे' । निष्ठायां 'शाच्छोरन्यतरस्याम्' (पा.सू.७.४.४१) इति इकारादेशः । **पृतन्यसि** । पृतनाशब्दात् 'सुप आत्मनः क्यच्' । 'कव्यध्वरपृतनस्य' इति अन्तलोपः । प्रत्ययस्वरः ।। ४ ।।

**सिद्धाञ्जनम्–** हे इन्द्र! **त्वम् बृहतः** महतः । **दिवः** द्युलोकस्य **सानु** उन्नतं स्थानं **कोपयः** अकम्पयः । **धृषता** धर्षयित्रा शत्रूणां, **त्मना** आत्मना स्वयमेव **शम्बरम्** असुरम् (उक्तम् १.५१.६) **अवाभिनत्** अवधीः । **यत्** यदा **व्रन्दिनः** वृन्दवतः समूहभूतासुरसङ्घयुक्तान् **मायिनः** मायाविनः असुरान् प्रति, तान् जेतुमित्यर्थः । **मन्दिना** मदयित्रा सोमेन **धृषत्** प्रागल्भ्यं प्राप्तस्त्वं **शिताम्** निशितां तीक्ष्णीकृतां **गभस्तिम्** घृणिं रश्मिं तद्वतीमित्यर्थः । **अशनिम्** वज्रं **पृतन्यसि** पृतनारूपेणेच्छसि । मायिनो जेतुं निशितकिरणधारायुक्तं वज्रं प्रेरयसीत्यर्थः ।।

**कोपयः** 'कुप कोपे' ण्यन्ताल्लङ्, अडभावः । **त्मना**–मन्त्रेषु आकारलोपः । **धृषत्**–अन्तर्भावितण्यर्थः, व्यत्ययेन शः । शतरि नुमभावश्छान्दसः । **शिताम्** 'शो तनूकरणे' अस्मान्निष्ठा । **पृतन्यसि**–पृतनामात्मन इच्छसीति क्यच् । **व्रन्दिनः**–अनवगतो धातुः, मृदुभावार्थको धातुरिति यास्कः, सायणस्तु समूहपर्यायवृन्दशब्द एव व्रन्दशब्द इति व्याचष्टे । तत्कालोपयुक्तोऽय मेवार्थोऽत्र गृहीतः । वृन्दं, बृन्दं इत्युभयथाप्युच्चारणे साधुत्वम् । वबयोरभेदादिति बोध्यम् ।। ४ ।।

## ऋक्संहिता पदपाठसहिता

**नि यद्वृणक्षि श्वसनस्य मूर्धनि शुष्णस्य चिद्व्रन्दिनो रोरुवद्वना ।**
**प्राचीनेन मनसा बर्हणावता यदद्या चित्कृणवः कस्त्वा परि ।। ५ ।।**

**नि । यत् । वृणक्षि । श्वसनस्य । मूर्धनि । शुष्णस्य । चित् । व्रन्दिनः । रोरुवत् । वना । प्राचीनेन । मनसा । बर्हणाऽवता । यत् । अद्य । चित् । कृणवः । कः । त्वा । परि ।। ५ ।।**

**स्कन्द– यत्** यस्मात् **नि वृणक्षि** 'धूर्वति, वृणक्ति' इति वधकर्मसु पाठाद् वधार्थोऽयम् (तु.निघ.२,१९) लट् भूते काले द्रष्टव्यः । नियमेन हतवानसि । **श्वसनस्य** श्वासकारिणः । महाश्वासस्येत्यर्थः । **मूर्धनि** द्वितीयार्थे सप्तम्येषा । मूर्धानं मस्तकम् । कस्य । उच्यते । **शुष्णस्य** शुष्णनाम्नोऽसुरस्य । 'चित्' शब्दस्तु पदपूरणः । कीदृशस्य । **व्रन्दिनः** अत्यन्तबलवत्वात् परबलानां मृदूकर्तुः । अत्यन्तबलवत इत्यर्थः । **रोरुवत्** शब्दं कुर्वन् । **वना** 'न हि मे अस्त्यघ्न्या न स्वधितिर्वनन्वति' (ऋ.८,१०२,१९) इत्यादिप्रयोगदर्शनात् वनशब्दस्तीक्ष्णवचनः । तृतीयैकवचनस्य चायम् 'आ' आदेशो द्रष्टव्यः । तीक्ष्णेन वज्रेण । वधवचनो वा सामर्थ्याद्वन-शब्दः । वधेन प्रहारिणेत्यर्थः । किञ्च **प्राचीनेन** प्रागञ्चितेन गतेन अपराङ्मुखेन । उत्साहवतेत्यर्थः । केन । **मनसा** । कीदृशेन । **बर्हणावता** वृद्धिमता हिंसावता वा । **यत्** यस्मात् **अद्य चित्** अद्यापि **कृणवः** करोषि ईदृशानि कर्माणि । यस्मादिति वचनात् तस्मादित्यध्याहार्यः । तस्मात् **कस्त्वा परि** परिशब्दोऽध्यर्थे । कस्तवाधिक अन्यः, कस्तवोपरि । सर्वस्य त्वमुपरीत्यर्थः ।।

**वेङ्कटमाधव– नि वृणक्षि** यदा शब्दकारिणः **शुष्णस्य** आदित्यस्य शोषयितुः **मूर्धनि** मृदूकर्तुः स्थितानि उदकानि रोरूयमाणः शत्रभिभवमुखेन वृद्धिमता **मनसा यत्** इदानीम् अप्येतत् कृणोषि शुष्णादुदकाहरणम्, तं त्वाम् **कः** परिभवति ।। ५ ।।

**मुद्गल–** हे इन्द्र! **त्वम् रोरुवत्** मेघैरत्यर्थं शब्दयन् **श्वसनस्य** अन्तरिक्षे श्वसितीति श्वसनो वायुः, तस्य **व्रन्दिनः** स्वकीयकिरणैः आम्रफलादीन् मृदुभावं प्रापयतः **शुष्णस्य चित्** रसानां शोषयितुरादित्यस्यापि **मूर्धनि** उपरिप्रदेशे **वना** वनान्युदकानि **यत्** यस्मात् **नि वृणक्षि** आवर्जयसि प्रापयसीत्यर्थः । वायुना सूर्यकिरणैश्च वृष्टा आपः सूर्यस्योपरि पुनरवस्थाप्यन्ते । तदेवावस्थापनमिन्द्रः करोतीत्युपचर्यते । **प्राचीनेन** प्रकर्षेण गन्त्रा । अपराङ्मुखेनेत्यर्थः । **बर्हणावता** बर्हणा शत्रूणां हिंसा तद्वता । एवम्भूतेन **मनसा** युक्तस्त्वम् **यत्** यस्मात् **अद्य चित्** अद्यापि **कृणवः** घर्मकाले सूर्यस्योपरि भौमान् रसान् अवस्थापयसि वर्षासु च वर्षयसीति । यस्मादेतत् कुरुषे तस्मात् कारणात् **त्वा** त्वाम् **परि** उपरि **कः** वर्तते, न कोऽपीत्यर्थः । अतस्त्वमेव सर्वाधिक इति भावः ।। ५ ।।

**सायण–** हे इन्द्र! **त्वं रोरुवत्** मेघैरत्यर्थं शब्दयन् **श्वसनस्य** अन्तरिक्षे श्वसितीति श्वसनो वायुः । तस्य । **व्रन्दिनः** स्वकिरणैराम्रफलादीन् मृदुभावं प्रापयतः **शुष्णस्य चित्** रसानां शोषयितुरादित्यस्यापि **मूर्धनि** उपरिप्रदेशे **वना** वनान्युदकानि **यत्** यस्मात् **नि वृणक्षि** आवर्जयसि प्रापयसीत्यर्थः । वायुना सूर्यकिरणैश्च वृष्टा आपः सूयस्योपरि पुनरवस्थाप्यन्ते । तदेवावस्थापनमिन्द्रः करोतीत्युपचर्यते । **प्राचीनेन** प्रकर्षेण गन्त्रा । अपराङ्मुखेनेत्यर्थः । **बर्हणावता** । निबर्हयतीति वधकर्मसु पाठात् बर्हणा शत्रूणां हिंसा तद्वता । एवम्भूतेन मनसा युक्तस्त्वं **यत्** यस्मात् **अद्या चित्** अद्यापि **कृणवः** घर्मकाले सूर्यस्योपरि भौमान् रसान् अवस्थापयसि वर्षासु च वर्षयसीति । यस्मादेतत् कुरुषे तस्मात् कारणात् **त्वा** त्वां **परि** उपरि **कः** वर्तते न कोऽपीत्यर्थः । अतस्त्वमेव सर्वाधिक इति भावः ॥

**वृणक्षि** 'वृजी वर्जने' रौधादिकः । सिपः पित्त्वादनुदात्तत्वे विकरणस्वरः । यद्वृत्तयोगादनिघातः । **प्राचीनेन** । प्रपूर्वात् अञ्चतेः 'ऋत्विक्' इत्यादिना क्विन् । 'अनिदिताम्' इति नलोपः । 'विभाषाऽञ्चेरदिक्स्त्रियाम्' इति स्वार्थे खः । खस्य ईनादेशः । 'अचः' इति अकारलोपे 'चौ' इति दीर्घत्वम् । स्वप्रत्ययस्य सतिशिष्टत्वात् तदादेशस्य उपदेशिवद्भावेन ईकार उदात्तः । **अद्या चित्** । 'निपातस्य च' इति दीर्घत्वम् । **कृणवः** । 'कृवि हिंसाकरणयोश्च' । इदित्त्वान्नुम् । लेटि सिपि अडागमः । 'धिन्विकृण्व्योरच' इति उप्रत्ययः । वकारस्य अकारादेशश्च । तस्य अतो लोपे सति स्थानिवद्भावात् लघूपधगुणाभावः । गुणावादेशौ । आगमानुदात्तत्वे विकरणस्वरः । अत्र निरुक्तं– 'व्रन्दी व्रन्दते मृदूभावकर्मणः । 'नि वृणक्षि यच्छ्वसनस्य मूर्धनि शब्दकारिणः शुष्णस्यादित्यस्य च शोषयितू रोरूयमाणो वनानीति वा धनानीति वा' (निरु.५. १५-१६) इति । धनानीति पक्षे मेघस्य धनानीति व्याख्येयम् ॥ ५ ॥

**सिद्धाञ्जनम्–** हे इन्द्र! त्वं **रोरुवत्** शब्दयन् **श्वसनस्य** वायोः मध्यमस्थानस्य सर्वजीवन धारणादिक्रियाधारभूतस्य जगत्प्राणस्य (पिण्डाण्डे च समन्वयो बोध्यः) **मूर्धनि** शिरसि ऊर्ध्वदेशे **वना** वननीयानि सम्भजनीयानि उदकानि सुखमयीरप इत्यर्थः । **यत्** यस्मात् **नि वृणक्षि** आवर्जयसि । तथा **व्रन्दिनः** समूहवतः सहायभूतबन्धुवृन्दयुक्तस्य **शुष्णस्य चित्** सर्वानन्दरसशोषणशीलस्य तापयितुरसुरस्यापि 'मूर्धनि नि वृणक्षि' प्राणवायोरूर्ध्वस्थाने मूले वनशब्दवाच्यरसावर्जनेन दिव्यभोगक्रियादिशक्तिसम्पन्नो भवति प्राणवान् यजमानलोकः । शुष्णस्योपरि तथा

आवर्जनात् स शुष्णत्वमेवोज्झति शमितः शान्तः शून्य एव भवति, रसार्द्रतया यजमानलोक आनन्दीभवति । ईदृशं महत् कृत्यं बहोः कालात्करोति भगवानिन्द्रः । अद्यापि करोत्येव । तस्माद् अस्मिन् कर्मणि तस्योपरि न कोऽपि वर्तत इत्याह– हे इन्द्र! **प्राचीनेन** प्रकर्षेण अश्नुता गच्छता, प्रकृष्टगमनेन, बहोः कालात् स्थितेन पुराणेन वा । **बर्हणावता** समृद्धियुक्तेन मनसा अनुग्रहधियेत्यर्थः । **यत्** यस्मात् त्वम्, **अद्य चित्** इदानीमपि **कृणवः** कुरुषे उक्तप्रकारेण, तस्मात् **कः त्वा** त्वां **परि** तवोपरि वर्तते, न कोऽपीत्यर्थः ।। **बर्हणावता**–बर्हणा हिंसायामपि वर्तते, अत्र तु न, 'बृह वृद्धौ' इत्यस्य भावे औणादिको युप्रत्ययः । तस्मान्मत्वर्थीयः वतुप् । 'बर्हणावत्' (३.३९.८) इत्यत्र सायण एवैवम् ।। ५ ।।

।। इति प्रथमाष्टके चतुर्थाध्याये सप्तदशो वर्गः ।।

## ।। अथ अष्टादशो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

**त्वमा॑विथ॒ नर्यं॒ तु॒र्वशं॒ यदुं॒ त्वं तु॒र्वीतिं॑ व॒य्यं॑ शतक्रतो ।**
**त्वं रथ॒मेत॑शं॒ कृत्व्ये॒ धने॒ त्वं पुरो॑ नव॒तिं दु॑म्भयो॒ नव॑ ।। ६ ।।**
त्वम् । आ॒वि॒थ॒ । नर्य॑म् । तु॒र्वश॑म् । यदु॑म् । त्वम् । तु॒र्वीति॑म् । व॒य्य॑म् । श॒त॒क्र॒तो॒ इति॑ शत॒ऽक्र॒तो॒ । त्वम् । रथ॑म् । एत॑शम् । कृत्व्ये॑ । धने॑ । त्वम् । पुर॑ः । न॒व॒तिम् । द॒म्भ॒यः॒ । नव॑ ।। ६ ।।

**स्कन्द– त्वम् आविथ** पालितवानसि । **नर्यम्** नरेषु भवं साधुं वा । मनुष्यं मनुष्यहितं वेत्यर्थः । कम् । **तुर्वशम्** नाम राजानम् ऋषिं वा । **यदुम्** च । **त्वम्** एव **तुर्वीतिम्** नाम राजानमृषिं वा असुरैः अगाध उदके प्रक्षिप्तं गाधकरणेन पालितवानसि । तदेतन्नोधा अपि वक्ष्यति– 'तुर्वीतये गाधं तुर्वणिः कः (ऋ.१,६१,११) इति । त्वमेव **वय्यम्** नामापरं राजानमृषिं वा पालितवानसि । हे **शतकतो** । **त्वम् रथम् एतशम्** । अत्रेतिहासमाचक्षते– 'सङ्ग्रामेऽसुराः सूर्यस्य रथं भङ्क्तुमैच्छन् अश्वं चापहर्तुम् । तावन्द्रो रक्षितवान्' इति । तदेतदुच्यते– त्वमेव रथं चैतशं च पालितवानसीति । 'एतशः' (निघ.१,१४) इत्यश्वनाम । कस्य । सूर्यस्य । कुत एतत् । इतिहासात् । 'प्रैतशं सूर्ये पस्पृधानम्' (ऋ.१,६१,१५) इति मन्त्रान्तरे दर्शनात्

किमर्थम् । **कृत्व्ये** 'कृत्वी' (निघ.२,१) इति कर्मनाम । कर्मणे । **धने** निमित्ते एषा सप्तमी । धनार्थं यत् कर्मेत्यर्थः । कतमत् पुनस्तत् । सङ्ग्रामः । सङ्ग्रामार्थम् अश्वरथौ पालितवानित्यर्थः । अथवा कृत्व्यशब्दः कर्तव्यवचनः । सप्तमी चैषा । धनार्थं यः कर्तव्यः सङ्ग्रामः तत्रेत्यर्थः । **त्वम्** एव **पुरः** नगराणि **दम्भयः** दभ्नातिर्वधकर्मा (तु.निघ,२,१९) । स्वार्थे च णिच् छान्दसत्वात् । विष्णुसहितो हतवानसि । कियतीः । **नवतिम्** च **नव** च । कस्य स्वभूताः । शम्बरस्य । कुत एतत् । 'इन्द्राविष्णू दृंहिताः शम्बरस्य नव पुरो नवतिं च श्नथिष्टम्' (ऋ.७,९९,५) इति मन्त्रान्तरेषु दर्शनात् ॥ ६ ॥

**वेङ्कटमाधव–** **त्वम्** अरक्षः नर्यादीन् त्रीन् पञ्च । शतकर्मन्! तथा कर्मार्हधननिमित्तम् त्वम् एतशस्य **रथम् एतशम्** चावः । **त्वम् पुरः नव नवतिम्** चापि अनाशयः । एतेषां रक्षणप्रकारमितस्ततो वक्ष्यन्ति ऋषयः इति ॥ ६ ॥

**मुद्गल–** हे इन्द्र! **त्वम्** नर्यादीन् राज्ञः **आविथ** ररक्षिथ । तथा हे **शतक्रतो!** बहुविध-कर्मन्! त्वम् **वय्यम्** वय्यकुलजम् **तुर्वीतिम्** तुर्वीतिनामानं राजानम् आविथेत्येव । अपि च **त्वम् रथम्** रंहणस्वभावमेतत्सञ्ज्ञम् ऋषिम् **एतशम्** एतत्सञ्ज्ञकम् । **धने** धननिमित्ते सङ्ग्रामे **कृत्व्ये** कर्तव्ये सति आविथेति शेषः । तथा त्वम् शम्बरस्य **नवतिम् नव** नवोत्तरनवतिसङ्ख्याकाः **पुरः** पुराणि **दम्भयः** व्यनीनशः ॥ ६ ॥

**सायण–** हे इन्द्र! **त्वं** नर्यादीन् त्रीन् राज्ञः **आविथ** ररक्षिथ । तथा हे **शतक्रतो** बहुविधकर्मन् बहुविधप्रज्ञ वा! त्वं **वय्यं** वय्यकुलजं **तुर्वीतिनामानं राजानम् आविथ** इत्येव । अपि च **त्वं रथं** रंहणस्वभावम् एतत्संज्ञमृषिम् **एतशम्** एतत्संज्ञकं, **धने** धननिमित्ते सङ्ग्रामे **कृत्व्ये** कर्तव्ये सति आविथेति शेषः । यद्वा पूर्वोक्तानां राज्ञां रथम् । एतशः इति अश्वनाम । एतशम् अश्वं च ररक्षिथेति योज्यम् । तथा **त्वं** शम्बरस्य **नवतिं नव** नवोत्तरनवतिसङ्ख्याकाः **पुरः** पुराणि **दम्भयः** व्यनीनशः ॥ **एतशम्** । एति गच्छतीति एतशः । 'इण् गतौ' । 'इणस्त-शन्तशसुनौ' (उ.सू.३.४२९) इति तशन्प्रत्ययः । गुणः । **कृत्व्ये** । कर्तव्ये इत्यस्य शब्दस्य वर्णविकारः पृषोदरादित्वात् ॥ ६ ॥

**सिद्धाञ्जनम्–** हे इन्द्र! **त्वम्** नर्यादीन् तत्त्वविशेषनिदर्शनप्रतिष्ठाभूतान् पुरुषान् । **नर्यम्**

**तुर्वशम् यदुम्** त्रीन् एतान् **आविथ** ररक्षिथ । तथा **त्वम् तुर्वीतिम्** एतत्संज्ञया प्रतिष्ठितं **वय्यम्** च आविथ । हे **शतक्रतो** बहुकर्मन्! **त्वम् रथम् कृत्व्ये** कर्तव्ये सम्पादयितव्ये **धने** निमित्तभूते सति, रथसंज्ञकं **एतशम्** एतशसंज्ञकं च आविथ । उक्तानां राज्ञां रथं 'एतशं' अश्वं च आविथेति सायणः । **त्वम् नवतिं नव** नवोत्तरनवतिसङ्ख्याकाः **पुरः** पुराणि असुराणामिति शेषः, शम्बरस्येति सायणः, **दम्भयः** व्यनाशयः ।। **कृत्व्ये** कर्तव्ये सति शब्दस्यास्य वर्णविकारः पृषोदरादित्वात् ।। अथ नर्यादयो व्याख्यातव्याः । नर्यः– नराणां हितः । तुर्वश– तुर्वीतिशब्दौ तूर्वयाणवत् जयशीलताद्योतकौ । वय्यः– ततस्य यजनस्य अङ्गभूततन्तुसन्तानकुशलः । रथः– रंहणशीलः । **एतशः–** एतेर्गच्छत्यर्थात् तशन्प्रत्ययः । **यदुः–** दुरूहो भवति ।। ६ ।।

**नीतिमञ्जरी–** विमलेन मनसा भाव्यमित्याह–

**देवा रक्षन्ति तं नित्यं यस्य स्याद्विमलं मनः ।**
**ररक्षेन्द्रोऽमलाञ्छ्रोणतुर्वीतियदुतुर्वशान् ।। २० ।।**

यस्य पुंसः विमलं निर्मलं मनः स्यात् तं देवाः निरन्तरमेव रक्षन्ति । यथा इन्द्रः । इन्द्र उपलक्षणार्थः । इन्द्रादयोऽपि देवा इत्यर्थः । एतान् विमलान् ररक्षुः । कान् श्रोणतुर्वीतियदुतुर्वशानमलान् ।

तदर्थेयमृक् ।

सव्यो जगत्या इन्द्रं तुष्टाव । अच्छावाकस्य प्रथमे पर्याये विनियुक्तम् । इन्द्राय मद्वन इति खण्डे मानो अस्मिन्निति (ऋ.१.५४.१) जागतमिति सूत्रम् (सां.श्रौ.सू.९।१०।३) अयमर्थः । हे इन्द्र! **त्वं, नर्यं** नरहितं त्वं **तुर्वशं- यदुं-** वय्यकुलजं **तुर्वीतिम् आविथ** ररक्षिथ । तथा नर्यादीनां चतुर्णां राज्ञां **रथं एतशं** अश्वं-'एतग्वः एतशः' इति अश्वनाम (निघण्टु १।१४)। **कृत्व्ये** कर्तव्ये इति वर्णविकारः । पृषोदरादित्वात् (पा.६।३।१०९) । **धने** सङ्ग्रामे आविथ । हे **शतक्रतो** बहुकर्मन्! तथा शम्बरस्य **नवतिं** नवोत्तरनवतिं नव पुरो नवतिं चेति उक्तसङ्ख्याकाः **पुरः** पुराणि **दम्भयः** हिंसितवान् । दभ्नोतीति वधकर्मसु पाठात् (निघण्टु.२।१९)।

एतेषां सर्वदैव स्तुतौ फलमुक्तम्–

अग्निना तुर्वशं यदुं. (ऋ.१.३६.१८) इति अग्निस्तुतौ ।
याभिः कुत्सं श्रुतर्य. (ऋ.१.११२.९)
याभिः कुत्समार्जुनेयं. (ऋ.१.११२.२३) इति अश्विनोः स्तुतौ तुर्वीतिरक्षणमुक्तम्।

'प्रेमन्धः ख्यन्निःश्रोणो भूत्' (ऋ.८.७९.२) इति सोमस्तुतौ बन्धश्रोणरक्षणमुक्तम् । सर्वैर्देवैरेते निर्मलाः पालिता इति, देवा रक्षन्तीत्युक्तम् ।। ६ ।।

## ऋक्संहिता पदपाठसहिता

**स घा राजा सत्पतिः शूशुवज्जनो रातहव्यः प्रति यः शासमिन्वति ।**
**उक्था वा यो अभिगृणाति राधसा दानुरस्मा उपरा पिन्वते दिवः ।। ७ ।।**
**सः । घ । राजा । सत्ऽपतिः । शूशुवत् । जनः । रातऽहव्यः । प्रति । यः । शासम् । इन्वति । उक्था । वा । यः । अभिऽगृणाति । राधसा । दानुः । अस्मै । उपरा । पिन्वते । दिवः ।। ७ ।।**

**स्कन्द– सः राजा सत्पतिः** सतां पालयिता **शूशुवत्** सर्वाभिर्वृद्धिभिः वर्धते । **जनः** 'पञ्च जनाः' इति मनुष्यनामसु पाठान्मनुष्यनामैतत् (तु.निघ.२,३) । अन्यो वा मनुष्यः । **रातहव्यः** दत्तहविष्कः । **यः प्रति शासम्** कृत्स्नस्य जगतः शासितृत्वाच्छास इन्द्रः तं प्रति **इन्वति** इन्वतिर्गतिकर्मा व्याप्तिकर्मा वाऽयम् (तु.निघ.२,१४,१८) । गच्छति व्याप्नोति वा । य इन्द्रं दत्तेन हविषा उपसर्पति व्याप्नोति वेत्यर्थः । **उक्था वा** उक्थशब्दः स्तोत्रवचनः । तृतीया-बहुवचनस्यायमाकारः । स्तोत्रैर्वा । **यः अभिगृणाति** अभिष्टौति । न च शूशुवदेव केवलम् । किं तर्हि । **राधसा दानुः** अस्मै राधसा इतीत्थम्भूतलक्षणे तृतीया । तृतीयानिर्देशाद्वा योग्यक्रियाध्याहारः । दानुरिति स्तनयित्नुलक्षणा माध्यमिका वागुच्यते । धनेन युक्तायास्मै माध्यमिका वाक् । **उपरा** मेघनामैतत् (तु.निघ.१,६) । द्वितीयाबहुवचनस्यायमाकारः । मेघान् **पिन्वते** पिन्विः सेचनार्थोऽन्तर्णीतण्यर्थश्च द्रष्टव्यः । सेचयति प्रक्षालयतीत्यर्थः । **दिवः** द्युलोकात् धनं चास्य भवति, मेघाश्च गर्जन्तो वर्षन्तीत्यर्थः ।। ७ ।।

**वेङ्कटमाधव– सः** खलु **जनः**, राजा सतां च पतिः वर्धते । दत्तहविष्कः **यः** शासितार-मिन्द्रम् **प्रति** गच्छति प्रीणयति वा । **यः वा** उक्थानि अभिवदति सह हविषाः, दाता **अस्मै दिवः** सकाशात् अभ्राणि दोग्धि ।। ७ ।।

**मुद्गल– सः घ** स खलु जातः **राजा** राजमानः **सत्पतिः** सतां पालयिता यजमानः **शूशुवत्** आत्मानं वर्धयति, **यः** इन्द्रम् **प्रति रातहव्यः** दत्तहविष्कः सन् **शासम्** इन्द्रकर्तृकम् अनुशासनम् **इन्वति** व्याप्नोति । **उक्था वा** उक्थानि शस्त्राणि वा **यः** स्तोता **राधसा** हविर्लक्षणेनान्नेन सह **अभिगृणाति** तस्याभिमुखीकरणाय शंसति । **अस्मै** स्तोत्रे **दानुः** अभिमतफलप्रदातेन्द्रः **उपरा** उपरान् मेघान् **दिवः** सकाशात् **पिन्वते** सेचयति दोग्धीति यावत् ।। ७ ।।

**सायण– स घ** स खलु **जनः** जातः **राजा** राजमानः **सत्पतिः** सतां पालयिता यजमानः **शूशुवत्** आत्मानं वर्धयति । **यः** इन्द्रं **प्रति रातहव्यः** दत्तहविष्कः सन् **शासम्** इन्द्रकर्तृकम् अनुशासनं, यद्वा तस्य स्तुतिम् **इन्वति** व्याप्नोति । **उक्था वा** उक्थानि शस्त्राणि वा **यः** स्तोता **राधसा** हविर्लक्षणेनान्नेन सह **अभिगृणाति** तस्याभिमुखीकरणाय शंसति **अस्मै** स्तोत्रे **दानुः** अभिमतफलप्रदातेन्द्रः **उपरा** उपरान् मेघान् । 'उपरः' इति मेघनाम । स च यास्केनैवं निरुक्तः– 'उपर उपलो मेघो भवत्युपरमन्तेऽस्मिन्नभ्राण्युपरता आप इति वा' (निरु.२.२१) इति । तान् मेघान् **दिवः** सकाशात् **पिन्वते** सेचयति दोग्धीति यावत् ।।

**घा** । 'ऋचि तुनुघ' इत्यादिना दीर्घः । **सत्पतिः** । सतां पतिः सत्पतिः । 'पत्यावैश्वर्ये' इति पूर्वपदप्रकृतिस्वरत्वम् । **शूशुवत्** । 'टुओश्वि गतिवृद्ध्योः' । ण्यन्ताद् वर्तमाने लुङि च्लेः चङादेशे 'सम्प्रसारणं सम्प्रसारणाश्रयं च बलीयः' (पा.म.६.१.१७.२) इति अन्तरङ्गमपि वृद्ध्यादिकं बाधित्वा 'णौ च संश्चङोः' (पा.सू.६.१.३१) इति सम्प्रसारणम् । संज्ञापूर्वकस्य विधेरनित्यत्वाद् वृद्ध्यभावे द्विर्वचनादि । उवङादेशः । **रातहव्यः** । बहुव्रीहौ पूर्वपदप्रकृति स्वरत्वम् । **शासम्** 'शासु अनुशिष्टौ' इत्यस्माद् भावे घञि 'कर्षात्वतः' इत्यन्तोदात्तत्वे प्राप्ते व्यत्ययेनाद्युदात्तत्वम् । वृषादिर्वा द्रष्टव्यः । स ह्याकृतिगण इत्युक्तम् । यद्वा 'शंसु स्तुतौ' इत्यस्माद् घञि व्यत्ययेन नलोपः । **इन्वति** 'इवि व्याप्तौ' । शपः पित्त्वादनुदात्तत्वे धातुस्वरः । यद्वृत्तयोगादनिघातः । **अभिगृणाति** 'गृ शब्दे' क्रैयादिकः । 'प्वादीनां ह्रस्वः' इति ह्रस्वत्वम् । तिपः पित्त्वादनुदात्तत्वे विकरणस्वरः । पूर्ववत् निघाताभावः । **उपरा** 'सुपां सुलुक्' इति शसः पूर्वसवर्णदीर्घत्वम् । **पिन्वते** 'पिवि मिवि णिवि सेचने' । व्यत्ययेन आत्मनेपदम् ।।

**सिद्धाञ्जनम्– स घ जनः** स खलु जातः यजमानः **राजा** राजमानः सन् **सत्पतिः** सतां सृष्टौ प्राप्तसत्ताकानां सर्वेषां भूतानां पतिः पालयिता भूत्वा **शूशुवत्** वर्धते, आत्मानं वर्धयतीति

वा । **यः** इन्द्रं **प्रति रातहव्यः** दत्तहव्यः सन् **शासम्** अनुशासनं इन्द्रकर्तृकं **इन्वति** व्याप्नोति । यः इन्द्राय स्वयं स्वीयं च दत्त्वा तस्य शासने स्थितः सर्वथा तदनुशासनात्रान्यदाचरति सर्वदा सर्वत्र च तदनुशासनमेव व्याप्य जीवति, स भक्तो यजमानः सुकृती स्वात्मानं वर्धयन् स्वयं वर्धमानो वा राजा सत्पतिश्च भवति । इन्द्रस्य अनुग्रहात् आज्ञाकारित्वात् । अत एव तेन सह युक्तत्वाच्चेति भावः । इन्द्रशासनानुष्ठानफलमुक्त्वा इन्द्रस्तुतिफलमाह– **यः** स्तोता **राधसा** धनभूतेन साधनसामर्थ्येन करणेन **उक्था वा** उक्थानि स्तोत्राणि वा **अभिगृणाति** इन्दस्याभिमुखी करणाय शंसति, **अस्मै** स्तोत्रे **दानुः** दाता इन्द्रः **उपरा** (उपरान् मेघान् उपरो मेघनामेति बाह्यपक्षीयाः) उपरि वर्तमानानि तेजोबलभोगैश्वर्यादीनि **दिवः** द्युलोकात् **पिन्वते** पिन्वति वर्षति । अत्र स्तुतिशंसनं न केवलं वाचा निरुह्यते, 'राधसेति' करणस्योक्तिरवधेया ।। घ संहितायां दीर्घः । **शूशुवत्** 'टुओश्वि गतिवृद्ध्योः' ण्यन्ताद्वर्तमाने लुङ्, अन्यच्च छान्दसम् । **शासम्** 'शासु अनुशिष्टौ' भावे घञ् । **इन्वति** 'इवि व्याप्तौ' । **उपरा**– सुपां सुलुगिति शसः पूर्वसवर्णदीर्घत्वम् । **पिन्वते**–'पिवि सेचने' व्यत्ययेनात्मनेपदम् ।। ७ ।।

## ऋक्संहिता पदपाठसहिता

**असमं क्षत्रमसमा मनीषा प्र सोमपा अपसा सन्तु नेमे ।**
**ये त इन्द्र ददुषो वर्धयन्ति महि क्षत्रं स्थविरं वृष्ण्यं च ।। ८ ।।**
**असमम् । क्षत्रम् । असमा । मनीषा । प्र । सोमऽपाः । अपसा । सन्तु । नेमे ।**
**ये । ते । इन्द्र । ददुषः । वर्धयन्ति । महि । क्षत्रम् । स्थविरम् । वृष्ण्यम् । च ।।८।।**

**स्कन्द– असमम्** अतुल्यम् अन्यैर्मनुष्यैः । **क्षत्रम्** धनम् । **असमा मनीषा** प्रज्ञा च । **प्र** उपसर्गोऽयम् । उपसर्गाश्च पुनरेवमात्मका यत्र कश्चित् क्रियावाची शब्दः प्रयुज्यते तत्र क्रियाविशेषमाहुः । प्रपचन्ति प्रकरोतीति । यत्र तु क्रियावाची शब्दो न प्रयुज्यते ससाधनां तत्र क्रियामाहुः । अतोऽत्र शुद्धोऽपि प्रशब्दः प्रवृद्धशब्दार्थे । प्रवृद्धाश्च पुत्रादिभिः । **सोमपाः** सोमस्य पातारः । यष्टार इत्यर्थः । केन प्रवृद्धाः । उच्यते । **अपसा** यागकर्मणा । **सन्तु** भवन्तु । धनप्रज्ञे एषामतुल्ये स्ताम् । पुत्रादिभिश्च प्रवृद्धा यागेन यष्टारः सन्त्वित्यर्थः । किं सर्वे । न । किं तर्हि । **नेमे** अर्धाः । कतमे । उच्यते । **ये ते** हे **इन्द्र! ददुषः** धनानि दत्तवतः **वर्धयन्ति महि क्षत्रम्** हविराख्यं धनम् । **स्थविरम् वृष्ण्यम्** च परिवृद्धं च । स्तूयमाना

हि देवता वीर्येण वर्धन्ते । अतोऽत्र बलवर्धनेन तत्कारणं स्तुतिकरणं प्रतिपाद्यते । ये तव घनदानोत्तरकालं हवींषि वर्धयन्ति स्तुतीश्च कुर्वन्तीत्यर्थः ।। ८ ।।

**वेङ्कटमाधव–** **असमम्** बलम् । **असमा** प्रज्ञा । प्रभवन्तु सोमस्य पातारः कर्मणा । नेमशब्दोऽर्थवचनः । केचनेत्यर्थः । तानाह– **ये** तव **इन्द्र!** ददिवांसः **वर्धयन्ति** महत् बलं प्रवृद्धं पुंस्त्वं च ।। ८ ।।

**मुद्गल–** इन्द्रस्य **क्षत्रम्** बलम् **असमम्** न केनचित्समम् । सर्वाधिकमित्यर्थः । तथा **मनीषा** बुद्धिश्च **असमा** न कस्यापि बुद्ध्या समाना । सर्वं वस्तु विषयीकरोतीत्यर्थः । **नेमे** इति सर्वनामशब्द एतच्छब्दसमानार्थः । **नेमे सोमपाः** एते सोमस्य पातारो यजमानाः । **अपसा** कर्मणा **प्र सन्तु** प्रवृद्धा भवन्तु । हे **इन्द्र! ते** तव **ददुषः** हविर्दत्तवन्तः **ये** त्वदीयम् **महि** महत् **क्षत्रम्** बलम् **स्थविरम्** स्थूलं प्रवृद्धम् **वृष्ण्यम्** वृषत्वं पुंस्त्वम् च **वर्धयन्ति** प्रवृद्धं कुर्वन्ति ।।८।।

**सायण–** इन्द्रस्य **क्षत्रम्** बलम् **असमम्** न केनचित्समम् । सर्वाधिकमित्यर्थः । तथा **मनीषा** बुद्धिश्च **असमा** न कस्यापि बुद्ध्या समाना । सर्वं वस्तु विषयीकरोतीत्यर्थः । **नेमे** इति सर्वनामशब्द एतच्छब्दसमानार्थः । **नेमे सोमपाः** एते सोमस्य पातारो यजमानाः । **अपसा** कर्मणा **प्र सन्तु** प्रवृद्धा भवन्तु । हे **इन्द्र! ते** तव **ददुषः** हविर्दत्तवन्तः **ये** त्वदीयम् **महि** महत् **क्षत्रम्** बलम् **स्थविरम्** स्थूलं प्रवृद्धम् **वृष्ण्यम्** वृषत्वं पुंस्त्वम् च **वर्धयन्ति** प्रवृद्धं कुर्वन्ति । यद्वा । **ददुषो** यजमानेभ्यो यागफलं दत्तवतः तवेति योजनीयम् ।

**नेमे** । सर्वनामत्वात् जसः शीभावे (पा.सू.७.१.१७) गुणः । 'त्वसमसिमनेमेत्यनुच्चानि' (फि.सू.७८) इति सर्वानुदात्तत्वे प्राप्ते व्यत्ययेनाद्युदात्तत्वम् । **ददुषः**–ददातेर्लिटः क्वसुः । जसो व्यत्ययेन शसादेशः । 'सम्प्रसारणं सम्प्रसारणाश्रयं च बलीयः' इति इडागमात्पूर्वमेव सम्प्रसारणम् । 'शासिवसिघसीनां च' इति षत्वम् । प्रत्ययस्वरः । **महि** । महेरौणादिकः इन्प्रत्ययः । **स्थविरम्**– 'अजिरशिशिर' (उ.सू.१.५३) इत्यादिना तिष्ठतेः किरच्प्रत्ययान्तो निपातितः ।। ८ ।।

**सिद्धाञ्जनम्– क्षत्रम्** इन्द्रस्य बलं **असमम्** न केनापि तुल्यम् । **मनीषा** तस्य बुद्धिः **असमा** न कस्यापि बुद्ध्या समाना । बलं सर्वाधिकं बुद्धिश्च सर्वाधिका । **नेमे** 'नेम इति सर्वनामशब्द एतच्छब्दसमानार्थः' इति सायणः । सन्दिग्धोऽयमर्थः । नेम इत्यर्धवाची, तथा

'नेमे देवा नेमेऽसुराः' (निरुक्तम् ३.२०) इत्यत्र 'अर्धतो देवा अर्धतोऽसुरा आसन्' इति दुर्गव्याख्या । एवमत्रापि अर्धतः सोमपाः प्रकृष्टाः पूर्णाः **सोमपाः** भवन्त्वित्युक्तम् । तस्मान्नेमे सोमपाः असमग्रसोमपायिनो यजमानाः । **अपसा** कर्मणा **प्र सन्तु** प्रकृष्टाः प्रवृद्धा वा भवन्तु सम्पूर्णसोमपानेनेति भावः । हे **इन्द्र! ये ददुषः** ददिवांसः दत्तवन्तो यजमानाः **ते** तव **महि** महत् **क्षत्रम्** बलं **स्थविरम्** स्थूलं प्रवृद्धं **वृष्ण्यम्** वृषत्वम् च अभीष्टतेजोबलादिवर्षणलक्षणं **वर्धयन्ति** 'ते नेमे सोमपाः प्र सन्तु' इति सम्बन्धः ।। **नेमे**–सर्वनामत्वात् जसः शीभावे गुणः । **ददुषः**–ददातेर्लिटः क्वसुः, जसो व्यत्ययेन शसादेशः । **स्थविरम्**–तिष्ठतेः किरच्प्रत्ययान्तनिपातः ।।

## ऋक्संहिता पदपाठसहिता

**तुभ्येदेते बहुला अद्रिदुग्धाश्चमूषदश्चमसा इन्द्रपानाः ।**
**व्यश्नुहि तर्पया काममेषामथा मनो वसुदेयाय कृष्व ।। ९ ।।**

तुभ्य । इत् । एते । बहुलाः । अद्रिऽदुग्धाः । चमूऽसदः । चमसाः । इन्द्रऽपानाः ।
वि । अश्नुहि । तर्पय । कामम् । एषाम् । अथ । मनः । वसुऽदेयाय । कृष्व ।। ९ ।।

**स्कन्द– तुभ्य** इति तादर्थ्ये चतुर्थी । त्वदर्थाः । **एते बहुलाः** बहवः **अद्रिदुग्धाः** अभिषवग्रावभिः क्षारिताः **चमूषदः** अधिषवणफलके अत्र चमूशब्देनोच्येते । 'उच्छिष्टं चम्वोर्भर' (ऋ.१. २८.९) इति यथा । तत्सादिनः । अभिषवणफलकयोरभिषुता इत्यर्थः । **चमसा** 'तात्स्थ्यात्तत्स्य एतत् । चमसस्थाः । के ते । सामर्थ्यात् सोमाः । अथवा चम्यमानत्वाच्चमसाः सोमा एवोच्यन्ते । ते । हे **इन्द्र! पानाः** पानार्हाः । सम्यक् संस्कृता इत्यर्थः । एतज्ज्ञात्वा **वि अश्नुहि** विविधमेतान् आप्नुहि । पिबेत्यर्थः । मा चाल्पान् । किं तर्हि । **तर्पय** आत्मीयम् **कामम्** । **एषाम्** तृतीयार्थे षष्ठ्येषा, एतैः । यावदिच्छम् एतान् पिबेत्यर्थः । पीत्वा च **अथ** अनन्तरम् आत्मीयं **मनः वसुदेयाय** धनदानाय । धनदानाभिमुखमित्यर्थः । **कृष्व** कृणुष्व । धनं मह्यं देहीत्यर्थः ।। ९ ।।

**वेङ्कटमाधव–** तुभ्यम् एव **एते** बहवः ग्रावदुग्धाश्चमससादिनः सोमाः इन्द्रस्य तव पानार्हाः । तानिमान् व्याप्नुहि । **तर्पय** चात्मीयं **कामम्** एतैः । **अथ** आत्मनः **मनः** वसुदानाय कुरु ।।

**मुद्गल–** हे इन्द्र! **तुभ्य इत्** तुभ्यमेव **एते चमसाः** । चम्यन्ते भक्ष्यन्ते इति चमसाः सोमाः ।

एते सोमाः त्वदर्थं सम्पादिताः । कीदृशाः । **बहुलाः** प्रभूताः । **अद्रिदुग्धाः** अद्रिभिः ग्रावभिः अभिषुताः । **चमूषदः** चमूषु चमसेषु अवस्थिताः **इन्द्रपानाः** इन्द्रस्य पानेन सुखकराः । अतस्त्वं तान् एव **वि अश्नुहि** व्याप्नुहि । व्याप्य च **एषाम्** त्वदीयानामिन्द्रियाणाम् **कामम्** अभिलाषं तैः **तर्पय** पूरयेति यावत् । **अथ** अनन्तरम् **वसुदेयाय** अस्मभ्यम् अभिमतधनप्रदानाय त्वदीयम् **मनः कृष्व** कुरुष्व ।। ९ ।।

**सायण–** हे इन्द्र! **तुभ्येत्** तुभ्यमेव चमसाः । चम्यन्ते भक्ष्यन्ते इति चमसाः सोमाः । एते सोमाः त्वदर्थं सम्पादिताः । कीदृशाः इत्याह । **बहुलाः** प्रभूताः । **अद्रिदुग्धाः** अद्रिभिः ग्रावभिः अभिषुताः । **चमूषदः** चमूषु चमसेषु अवस्थिताः **इन्द्रपानाः** इन्द्रस्य पानेन सुखकराः । अतस्त्वं तान् एव **वि अश्नुहि** व्याप्नुहि । व्याप्य च **एषाम्** त्वदीयानामिन्द्रियाणाम् **कामम्** अभिलाषं तैः **तर्पय** पूरयेति यावत् । **अथ** अनन्तरम् **वसुदेयाय** अस्मभ्यम् अभिमत धनप्रदानाय त्वदीयम् **मनः कृष्व** कुरुष्व ।

**तुभ्य** । छान्दसो मलोपः । **अद्रिदुग्धाः** । दुहेः कर्मणि निष्ठा । 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरत्वम् । **चमूषदः** 'चमु अदने' । चमन्त्यनेनेति चमूः । 'कृषिचमितनि' (उ.सू. १.८१) इत्यादिना औणादिकः उप्रत्ययः । चमूषु सीदन्तीति चमूषदः । 'सत्सूद्विष' इत्यानि क्विप् । 'पूर्वपदात्' (पा.सू.८.३.१०६) इति षत्वम् । कृदुत्तरपदप्रकृतिस्वरत्वम् । **इन्द्रपानाः** । 'कर्मणि च येन संस्पर्शात्' (पा.सू.३.३.११६) इति पिबतेः कर्मणि ल्युट् । **अश्नुहि** । व्यत्ययेन परस्मैपदम् । **वसुदेयाय** 'डु दाञ् दाने' अस्मात् 'अचो यत्' इति भावे यत् । 'ईद्यति' (पा.सू.६.४.६५) इति ईकारादेशः, गुणः । 'यतोऽनावः' इत्याद्युदात्तत्वम् । कृदुत्तरपद-प्रकृतिस्वरत्वम् । **कृष्व** 'डु कृञ् करणे' । 'बहुलं चन्दसि' इति विकरणस्य लुक् ।। ९ ।।

**सिद्धाञ्जनम्– तुभ्य इत्** तुभ्यभेव **एते चमसाः** सोमाः सम्पादिताः । कीदृशाः? **बहुलाः** प्रभूताः **अद्रिदुग्धाः** ग्रावभिरभिषुताः बहिर्यागे ग्रावा पाषाणो भवति । तथा तात्पर्यनिष्कर्षणाय अवकाशप्रदाः शब्दाः मन्त्रदृष्टिषु अवस्थिताः । ऋषीणां बहिरन्तश्च उभयथाप्यभिमतार्था एते बोध्याः । प्रधानो भावस्तु रहस्यार्थगम्यः । स च सङ्केतविवरणायत्त इति स्मारयामः । 'यत्र ग्रावा' इति (१.२७) सूक्ते सोमाभिषवपाषाणादिस्वरूपं प्रतिपादितम् । अतो नेह विस्तर इष्यते । अद्रिः पर्वतः सर्वोऽपि जडः । तत्र निलीनोऽन्तर्भूतः सोमः दुग्धोऽभिषुतो भवति । पुनः कीदृशाः?

**चमूषदः** चमूषु भक्षणपात्रेषु चमसेषु सीदन्तीति चमूषदः । **इन्द्रपानाः** इन्द्रस्य पानार्थाः । हे इन्द्र! त्वं तान् **व्यश्नुहि** व्याप्नुहि, स्वीकुरु । ततः **एषाम्** त्वदीयानां **कामम्** अभिलाषं **तर्पय** पूरय । **अथ** अनन्तरं **वसुदेयाय** अस्मभ्यम् अभिमतधनदानाय **मनः कृष्व** कुरुष्व । **तुभ्य**– छान्दसो मलोपः । **चमसाः**–चम्यन्ते भक्ष्यन्त इति चमसाः सोमाः । **इन्द्रपानाः**–पिबतेः कर्मणि ल्युट् । **वसुदेयाय**–ददातेभवि यत् । **कृष्व**– डु कृञ् करणे, बहुलं छन्दसीति विकरणस्य लुक् ॥

## ऋक्संहिता पदपाठसहिता

**अपामतिष्ठद्धरुणह्वरं तमोऽन्तर्वृत्रस्य जठरेषु पर्वतः ।**
**अभीमिन्द्रो नद्यो वव्रिणा हिता विश्वा अनुष्ठाः प्रवणेषु जिघ्नते ॥ १० ॥**
**अपाम् । अतिष्ठत् । धरुणऽह्वरम् । तमः । अन्तः । वृत्रस्य । जठरेषु । पर्वतः ।**
**अभि । ईम् । इन्द्रः । नद्यः । वव्रिणा । हिताः । विश्वाः । अनुऽस्थाः । प्रवणेषु । जिघ्नते ॥**

**स्कन्द– अपाम्** इति षष्ठीनिर्देशाद् 'निरोधाय' इति वाक्यशेषः । एकवाक्यताप्रसिद्ध्यर्थं च यत्तच्छब्दावध्याहर्तव्यौ । यद् वृष्टिलक्षणानाम् अपां निरोधाय **अतिष्ठत्** लडर्थे लङ् । तिष्ठति । **धरुणह्वरम्** 'धरुणम्' (निघ.१,१२) इति उदकनाम । ह्वृ कौटिल्येऽन्यत्र । इह तु सामर्थ्यात् निरोधसामर्थ्ये । उदकस्य ह्वारकम्, निरोधसमर्थमित्यर्थः । अथवा 'बब्धाम्.... ह्वरति' इत्यत्ति कर्मसु पाठात् ह्वरतिरिह भक्षणार्थः (तु.निघ.२,८) । उदकस्य भक्षयितृ । स्वोदरे प्रक्षेपकमित्यर्थः । किं तत् । उच्यते । मेघलक्षणम् **तमः** । तस्य **अन्तः** मध्ये **वृत्रस्य** मेघनामैतत् (तु.निघ.१,१०) । मेघाख्यस्य तमसः अन्तः । कुत्र । उच्यते । **जठरेषु** जठरमुदरम् । एकवचनस्य स्थाने बहुवचनमेतत् । उदरे । **पर्वतः** वज्र इह पर्ववत्त्वात् पर्वतशब्देनोच्यते । 'अभि वहि रक्षस पर्वतेन' (ऋ.७,१०४,१९) इति यथा । साकाङ्क्षत्वात् चातिष्ठदिति एतदेवाख्यातम् अनुषक्तव्यम् । अत्रापि वज्रोऽतिष्ठत् । वृष्टिनिरोधायावस्थितस्य मेघस्योदर इन्द्रो वज्रं क्षिपतीत्यर्थः । **अभि ईम्** अभीत्युपसर्गो 'जिघ्नते' इत्याख्यातेन सम्बध्यते । 'ईम्' एवमित्यस्यार्थे । एवम् **इन्द्रः नद्यः** शब्दकारिणीरपः **वव्रिणा** आवरणशीलेन मेघेन **हिताः विश्वाः** सर्वाः बह्वीर्वा **अनुष्ठाः** अपामिदं विशेषणं द्वितीयाबहुवचनान्तम् । इन्द्रस्य वा प्रथमैकवचनान्तम् । वृत्रादीनाम् अनुष्ठात्रीरपः । अनुपरोधादीनाम् अनुष्ठातेन्द्रः । **प्रवणेषु** निम्नेषु प्रदेशेषु **अभि जिघ्नते**. हन्तिरत्र गत्यर्थः । सामर्थ्याच्चान्तर्णीतण्यर्थः । छान्दसत्वाच्च एकवचनस्य स्थाने बहुवचनम् ।

अभिहन्ति अभिगमयति । पातयतीत्यर्थः । अथवा जिघ्नत इति हन्तिर्वधार्थ एव । 'अधि सानौ नि जिघ्नते' (ऋ.१,८०,६) इति यथा । प्रवणेष्विति तु सप्तमीनिर्देशात् स्थिता इति वाक्यशेषः । निम्नेषु मेघप्रदेशेषु स्थिताः अप अभिजिघ्नते अभिहन्ति । पातयतीत्यर्थः ।। १० ।।

**वेङ्कटमाधव– अपाम् अतिष्ठत्** धारकगह्वरयुक्तम् **तमः** । एतदेवाह– वृत्रासुरस्य **जठरेषु** मेघोऽतिष्ठद् इति । **अभि जिघ्नते** एनं पर्वतं वारकेण मेघेन निहिताः विश्वाः नदीः अनुतिष्ठन्तीः **प्रवणेषु** इन्द्रः । अभिजिघ्नते इति द्विकर्मको निष्पेषो हन्तेरर्थः ।। १० ।।

**मुद्गल– अपाम्** वृष्ट्युदकानाम् । **धरुणह्वरम्** धारानिरोधकम् **तमः** अन्धकारम् **अतिष्ठत्** । अयमेवार्थः स्पष्टीक्रियते– **वृत्रस्य** लोकत्रयस्यावरितुरसुरस्य **जठरेषु** उदरप्रदेशेषु **अन्तः** मध्ये **पर्वतः** पर्ववान् मेघोऽभूत् । अतस्तमोरूपेण वृत्रेण मेघस्यावृतत्वात् वृष्ट्युदकमप्यावृतमित्युच्यते । **ईम्** इमाः पूर्वोक्ताः **नद्यः** नदीरपः । **वव्रिणा** आवरकेण वृत्रेण **हिताः** पिहिताः **विश्वाः** व्यापिनीः **अनुष्ठाः** अनुक्रमेण तिष्ठन्तीरेवंविधाः अपः इन्द्रः **प्रवणेषु** निम्नेषु भूप्रदेशेषु **अभि जिघ्नते** अभिगमयति ।। १० ।।

**सायण– अपां** वृष्ट्युदकानां **धरुणह्वरम्** । धरुणशब्दो धारावचनः । धारानिरोधकम् **तमः** अन्धकारम् **अतिष्ठत्** । अयमेवार्थः स्पष्टीक्रियते– **वृत्रस्य** लोकत्रयस्यावरितुरसुरस्य **जठरेषु** उदरप्रदेशेषु **अन्तः** मध्ये **पर्वतः** पर्ववान् मेघोऽभूत् । अतस्तमोरूपेण वृत्रेण मेघस्यावृतत्वात् वृष्ट्युदकमप्यावृतमित्युच्यते । **ईम्** इमाः पूर्वोक्ताः **नद्यः** नदीरपः । **वव्रिणा** आवरकेण वृत्रेण **हिताः** पिहिताः **विश्वाः** व्यापिनीः **अनुष्ठाः** अनुक्रमेण तिष्ठन्तीरेवंविधाः अपः इन्द्रः **प्रवणेषु** निम्नेषु भूप्रदेशेषु **अभि जिघ्नते** अभिगमयति ।।

**वव्रिणा** 'वृञ् वरणे' इत्यस्मात् 'आदृगमहनजनः' इति किप्रत्ययः । लिड्वद्भावात् द्विर्भावादि । यणादेशः । प्रत्ययस्वरः । **अनुष्ठाः** । 'आतश्चोपसर्गे' इति तिष्ठतेः कप्रत्ययः । 'उपसर्गात्सुनोति' इति षत्वम् । **जिघ्नते** । हन्तेर्गत्यर्थाद् व्यत्ययेनात्मनेपदम् । 'बहुलं छन्दसि' (पा.सू.७.४.७७-७८) इति अभ्यासस्य इत्वम् ।। १० ।।

**सिद्धाञ्जनम्– अपाम् धरुणह्वरम्** धारानिरोधकं **तमः** अन्धकारम् **अतिष्ठत्** स्थितम् अभूत् । कथम् अपां धाराः तमसा निरोद्धुं शक्याः? तेजसः प्रतिद्वन्द्वि हि तमः अद्रव्यम् ।

तद् द्रव्यभूतानां आप्यधाराणां निरोधकं चेत्, किमपि घनं द्रव्यं स्यात् तमः, अपां धाराश्च तमःप्रतिद्वन्द्विभूतास्तेजोवाहिन्यः स्युः । अत एव अपां सङ्केतरूपत्वानभ्युपगमे तात्पर्यं नोपपद्यत इति ब्रूमः । उक्तोऽर्थः स्पष्टीक्रियते– **वृत्रस्य** आवरीतुः त्रैलोक्यस्य **जठरेषु** उदरेषु अन्तरेषु **अन्तः** मध्ये **पर्वतः** मेघाख्यः अपामावरकः, जडघनं तमः स्थितमित्यर्थः । **ईम्** इमाः **नद्यः** अपः **वव्रिणा हिताः** आवरकेण वृत्रेण निहिताः पिहिता वा **विश्वाः** सर्वाश्च **अनुष्ठाः** अनुक्रमेण तिष्ठन्तीः । पर्वतः पर्ववान् उपर्युपरि बहुसानुयुक्तः, तदनुरोधेन आपश्च अनुक्रमवत्यः । तस्माद् अनुष्ठाः इत्युक्तम् । एवम्भूताः अपः **इन्द्रः** वृत्रहा **प्रवणेषु** निम्नप्रदेशेषु **अभि जिघ्नते** अभिगमयति । तस्मादस्माभिः प्रतिपादितलक्षणानाम् अपां वृष्टिः ।। **अनुष्ठाः**–'आतश्चोपसर्गे' इति तिष्ठतेः कप्रत्ययः । 'उपसर्गात् सुनोति' इति षत्वम् । **जिघ्नते**–हन्तेर्गत्यर्थाद् व्यत्ययेनात्मनेपदम्, शपः श्लुः अभ्यासस्य इत्वं च छान्दसे ।। १० ।।

## ऋक्संहिता पदपाठसहिता

**स शेवृधमधि धा द्युम्नमस्मे महि क्षत्रं जनाषाळिन्द्र तव्यम् ।**
**रक्षा च नो मघोनः पाहि सूरीन्राये च नः स्वपत्या इषे धाः ।। ११ ।।**
**सः । शेऽवृधम् । अधि । धाः । द्युम्नम् । अस्मे इति । महि । क्षत्रम् । जनाषाट् । इन्द्र । तव्यम् । रक्ष । च । नः । मघोनः । पाहि । सूरीन् । राये । च । नः । सुऽअपत्यै । इषे । धाः ।। ११ ।।**

**स्कन्द–** य उक्तगुणोऽसि **स शेवृधम्** शेवशब्दस्य सुखनाम्नः अयं वकारलोपो द्रष्टव्यः । शेवपर्यायो वा शेशब्दः । सुखस्य वर्धयितृ । **अधि धाः** अधिशब्दः 'अधिपरी अनर्थकौ' (पा.१,४,९३) इति कर्मप्रवचनीयः पदपूरणः । दधातिर्दानार्थः । देहि । **द्युम्नम्** अन्नम् । अथवा 'शेवृधम्' (निघ.३,६) इति सुखनाम । सुखं च द्युम्नं च देहि । **अस्मे** अस्मभ्यम् । **महि क्षत्रम्** महच्च धनम् **जनाषाट्** शत्रुजनस्याभिभवितृ । हे **इन्द्र! तव्यम्** तवतेर्वृद्धि कर्मणस्तवो वृद्धिः । तस्य निमित्तं तव्यम् । वृद्धिकरमित्यर्थः । **रक्ष च नः** अस्मान् **मघोनः** धनवतः । न च केवलान् अस्मान् । किं तर्हि । **पाहि** रक्ष । **सूरीन्** स्तोतॄन् **नः** अस्माकं स्वभूतान् । **राये च** द्वितीयार्थे सर्वत्रात्र चतुर्थी । धनं च । **स्वपत्यै इषे** शोभनापत्ययुक्तं चान्यम् **धाः** देहि अस्मदीयेभ्यः स्तोतृभ्यः ।। ११ ।।

**वेङ्कटमाधव– सः** सुखे वर्धमानं सुखकरम् अन्नम् अस्मासु **अधि** धेहि । महच्च धनं जनस्याभिभवितृ वृद्धम् । **रक्ष च** अस्मान् शत्रुभ्यो हविष्मतः । **पाहि** स्तोतॄन् । धनाय शोभनापत्याय अन्नाय च अस्मान् कुर्वित्यन्नं पुत्रं चाशास्ते ।। ११ ।।

**मुद्गल–** हे **इन्द्र! स** त्वम् **अस्मे** अस्मासु **द्युम्नम्** यशः **अधि धाः** अधिनिधेहि । कीदृशम् । **शेवृधम्** शं शमनम् । रोगाणां शमने सति यद्वर्धते तादृशम् । तथा **महि** महत् **जनाषाट्** शत्रुजनानाम् अभिभवितृ । **तव्यम्** प्रवृद्धम् **क्षत्रम्** बलं च अधि धा इति शेषः । किञ्च हे **इन्द्र! नः** अस्मान् **मघोनः** धनवतः कृत्वा **रक्ष** पालय । **सूरीन्** विदुषोऽन्यानपि **पाहि** पालय । तथा **राये** धनाय च **स्वपत्यै** शोभनपुत्रयुक्ताय **इषे** अन्नाय **च नः** अस्मान् **धाः** धेहि स्थापय ।। ११ ।।

**सायण–** हे **इन्द्र! स** त्वम् **अस्मे** अस्मासु **द्युम्नम्** यशः **अधि धाः** अधिनिधेहि । कीदृशमित्याह । **शेवृधम्** शं शमनम् । रोगाणां शमने सति यद्वर्धते तादृशम् । तथा **महि** महत् **जनाषाट्** शत्रुजनानाम् अभिभवितृ । **तव्यम्** प्रवृद्धम् **क्षत्रम्** बलं च अधि धा इति शेषः । किञ्च हे **इन्द्र! नः** अस्मान् **मघोनः** धनवतः कृत्वा **रक्ष** पालय । **सूरीन्** विदुषोऽन्यानपि **पाहि** पालय । तथा **राये** धनाय च **स्वपत्यै** शोभनपुत्रयुक्ताय **इषे** अन्नाय **च नः** अस्मान् **धाः** धेहि स्थापय ।।

**धाः** । 'छन्दसि लुङ्लङ्लिटः' इति प्रार्थनायां लुङि 'गातिस्था' इति सिचो लुक् । 'बहुलं छन्दस्यमाङ्योगेऽपि' इति अडभावः । **अस्मे** । 'सुपां सुलुक्' इति अस्मच्छब्दात् सप्तम्याः शेआदेशः । **जनाषाट्** । जनान् सहते इति जनाषाट् । 'छन्दसि सहः' (पा.सू.३.२.६३) इति ण्विः । 'अत उपधायाः' इति वृद्धिः । 'सहेः साडः सः' (पा.सू.८.३.५६) इति षत्वम् । 'अन्येषामपि दृश्यते' इति पूर्वपददीर्घः । **तव्यम्** । तवतिर्वृद्ध्यर्थः सौत्रो धातुः । 'अचो यत्' इति यत् । गुणे 'धातोस्तन्निमित्तस्यैव' (पा.सू.६.१.८०) इति अवादेशः । 'यतोऽनावः' इत्याद्युदात्तत्वम् । **रक्ष** 'रक्ष पालने' । शपः पित्त्वादनुदात्तत्वे धातुस्वरः । 'द्व्यचोऽतस्तिङः' इति दीर्घत्वम् । **मघोनः** । 'श्वयुवमघोनामतद्धिते' इति शसि सम्प्रसारणम् । **पाहि** । अदादि - त्वात् शपो लुक् । हेः अपित्त्वात् तस्यैव स्वरः शिष्यते । मघोनः इत्यस्य वाक्यान्तरगतत्वात् निघाताभावः । **स्वपत्यै** । शोभनान्यपत्यानि यस्याः सा तथोक्ता । 'नञ्सुभ्याम्' इत्युत्तर-पदान्तोदात्तत्वम् । 'जसादिषु च्छन्दसि वा वचनम्' इति 'याडापः' (पा.सू.७.३.११३) इति याडागमाभावे 'वृद्धिरेचि' (पा.सू.६.१.६६) इति वृद्धिः ।। ११ ।।

**सिद्धाञ्जनम्–** हे **इन्द्र! सः** स त्वं **अस्मे** अस्मासु **द्युम्नम्** दीप्तिं प्रकाशं, यश इत्येके **अधि धाः** अधिनिधेहि । कीदृशम् । **शेवृधम्** शम् शान्त्यात्मकं सुखं शे तत्र वर्धमानम्, शान्तिसुखे सति यद्वर्धते तद् द्युम्नं निधेहीति भावः । तथा **महि** महत् **जनाषाट्** जनानां शत्रूणां साहयितृ अभिभवितृ, **तव्यम्** प्रवद्धं **क्षत्रम्** बलं अधिधाः । किञ्च, हे **इन्द्र! नः** अस्मान् **मघोनः** धनवतः कृत्वा **रक्ष च** पालय च । अस्मान् **सूरीन्** विदुषः कृत्वा **पाहि** रक्ष । **राये च** धनाय च **स्वपत्यै** स्वपत्यायै शोभनकर्मरूपसन्ततियुक्तायै **इषे** एषणायै, प्रेरणाशक्त्यै, नः अस्मान् धाः धारय ।। **तव्यम्**–तवतिर्वृद्ध्यर्थः, सौत्रो धातुः, 'अचो यत्' इति यत्प्रत्ययः । **स्वपत्यै** स्वपत्यायै, याडागमाभावः छान्दसः ।। ११ ।।

।। इति प्रथमाष्टके चतुर्थाध्याये अष्टादशो वर्गः ।।

## ।। अथ एकोनविंशो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

(सूक्तम् ५५)

८ सव्य आङ्गिरसः । इन्द्रः । जगती ।

**दिवश्चिदस्य वरिमा वि पप्रथ इन्द्रं न मह्ना पृथिवी चन प्रति ।**
**भीमस्तुविष्माञ्चर्षणिभ्य आतपः शिशीते वज्रं तेजसे न वंसगः ।। १ ।।**
**दिवः । चित् । अस्य । वरिमा । वि । पप्रथे । इन्द्रम् । न । मह्ना । पृथिवी । चन । प्रति । भीमः । तुविष्मान् । चर्षणिऽभ्यः । आऽतपः । शिशीते । वज्रम् । तेजसे । न वंसगः ।। १ ।।**

**स्कन्द– दिवश्चित्** चिच्छब्दोऽप्यर्थे । 'दिवः' इति षष्ठीनिर्देशात् सकाशादिति वाक्यशेषः । द्युलोकस्यापि सकाशात् । **अस्य** इन्द्रस्य **वरिमा** उरुत्वम् **वि पप्रथे** विविधं प्रथितम् । **इन्द्रम् प्रति न मह्ना** महत्वेन **पृथिवी चन** चनशब्दोऽप्यर्थे । पृथिव्यपि । उभे अपि द्यावापृथिव्या-विन्द्रान्महत्त्वेन न्यूनतरे इत्यर्थः । किञ्च **भीमः** भयानकः शत्रूणाम् । **तुविष्मान्** तुविशब्दस्य बहुनाम्नोऽयं सकार आगमो द्रष्टव्यः । पर्यायान्तरं वा । बहुभिः बलैस्तद्वान् । **चर्षणिभ्यः** षष्ठ्यर्थे एषा चतुर्थी । शत्रुभूतानां मनुष्याणाम् । **आतपः** आतापयिता सन्तापकरः **शिशीते** निश्यति

**वज्रम् तेजसे** तेजनाय । तीक्ष्णत्वायेत्यर्थः । हिंसावचनो वा सामर्थ्यात् तेजतिः । शत्रूणां हिंसनायेत्यर्थः । कथं पुनः शिशीते । उच्यते । **न वंसगः** वननीयगमनत्वाद् वंसगो वृषभ उच्यते । नशब्दश्च पुरस्तादुपचारोऽपि सामर्थ्यादत्रोपमार्थीयः । वृषभः इव । यथा नदीकूलेऽन्यत्र वा वृषभोऽवस्किरमाणः स्वशृङ्गे द्वे निश्येत् तद्वदित्यर्थः ।। १ ।।

**वेङ्कटमाधव–** द्युलोकादपि इन्द्रस्योरुत्वं विस्तीर्णमासीत् । **इन्द्रं न** महत्त्वेन **पृथिवी** अपि **प्रति** भवति । भयङ्करः वृद्धिमान् मनुष्यरक्षार्थम् **वज्रम्** तीक्ष्णीकरोति शत्रूणामातापयिता, यथा ऋषभः शृङ्गे तैक्ष्ण्यार्थे निश्यति ।। १ ।।

**मुद्गल–** 'दिवश्चिदस्य' इत्यष्टर्चं पञ्चमं सूक्तम् । सव्य ऋषिः । जगती छन्दः । इन्द्रो देवता ।

**अस्य** इन्द्रस्य **वरिमा** उरुत्वं प्राभवम् । **दिवश्चित्** द्युलोकादपि **वि पप्रथ** विस्तीर्णं बभूव । **पृथिवी चन** पृथिव्यपि च **मह्ना** महिम्ना महत्त्वेन **इन्द्रम् न प्रति** भवति । भूमिरपीन्द्रस्य प्रतिनिधिर्न भवति । ततोऽपि स गरीयानित्यर्थः । **भीमः** शत्रूणां भयङ्करः । **तुविष्मान्** प्रज्ञावान् **चर्षणिभ्यः** मनुष्येभ्यः स्तोतृभ्यः तेषामर्थाय शत्रूणाम् **आतपः** आ समन्तात्तापकारी । एवंविधः स इन्द्रः **वज्रम्** वर्जनशीलमायुधम् **तेजसे** तैक्ष्ण्याय **शिशीते** तनूकरोति तीक्ष्णीकरोति । दृष्टान्तः– **वंसगः न** वननीयगतिमान् वृषभो यथा स्वशृङ्गे युद्धार्थं तीक्ष्णीकरोति तद्वत् ।। १ ।।

**सायण–** 'दिवश्चिदस्य' इति अष्टर्चं पञ्चमं सूक्तं सव्यस्यार्षमैन्द्रं जागतम् । तथा चानुक्रान्तम्– 'दिवश्चिदष्टौ जागतं हि' इति । हि इत्यभिधानात् तुह्यादिपरिभाषया उत्तरे द्वे च सूक्ते जागते । अतिरात्रे प्रथमे पर्याये मैत्रावरुणशस्त्रे इदं सूक्तम् । सूत्रितं च– 'दिवश्चिदस्येति पर्यासः स नो नव्येभिरिति च' (आश्व.श्रौ.६.४) इति । विषुवति निष्केवल्येऽप्येतत्सूक्तम् । सूत्रितं च– 'शंसेदेवोत्तराणि षड्दिवश्चिदस्य' (आश्व.श्रौ.८.६) इति । समूळ्हस्य दशरात्रस्य द्वितीये छन्दोमेऽपि निष्केवल्ये एतत्सूत्रितम्– 'त्वं महाँ इन्द्र यो ह दिवश्चिदस्य त्वं महाँ इन्द्र तुभ्यमिति निष्केवल्यम्' (आश्व.श्रौ.८.७) इति ।।

**अस्य** इन्द्रस्य **वरिमा** उरुत्वं प्राभवम् । **दिवश्चित्** द्युलोकादपि **वि पप्रथ** विस्तीर्णं बभूव । **पृथिवी चन** पृथिव्यपि च **मह्ना** महिम्ना महत्त्वेन **इन्द्रम् न प्रति** भवति । भूमिरपीन्द्रस्य

प्रतिनिधिर्न भवति । ततोऽपि स गरीयानित्यर्थः । **भीमः** शत्रूणां भयङ्करः । **तुविष्मान्** प्रज्ञावान् बलवान् वा **चर्षणिभ्यः** मनुष्येभ्यः स्तोतृभ्यः तेषामर्थाय शत्रूणाम् **आतपः** आ समन्तात्तापकारी । एवंविधः स इन्द्रः **वज्रम्** वर्जनशीलमायुधम् **तेजसे** तैक्ष्ण्याय **शिशीते** तनूकरोति तीक्ष्णीकरोति । तत्र दृष्टान्तः– **वंसगः न** वननीयगतिमान् वृषभो यथा स्वशृङ्गे युद्धार्थं तीक्ष्णीकरोति तद्वत् ॥

**दिवः** । 'ऊडिदम्' इति विभक्तेरुदात्तत्वम् । **वरिमा** । उरुशब्दात् पृथ्वादिलक्षणः इमनिच् । 'प्रियस्थिर' इत्यादिना उरुशब्दस्य वरादेशः । **पप्रथे** 'प्रथ प्रख्याने' । **मह्ना** महिम्ना । वर्णलोपश्छान्दसः । यद्वा महेरौणादिकः कनिप्रत्ययः । प्रत्ययस्वरेणान्तोदात्तः । तृतीयैकवचने 'अल्लोपोऽनः' इति अकारलोपः । उदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वम् । **प्रति** । 'प्रतिः प्रतिनिधिप्रतिदानयोः' इति प्रतिनिधौ कर्मप्रवचनीयत्वम् । 'कर्मप्रवचनीययुक्ते' (पा.सू.२.३.८) इति इन्द्रशब्दात् द्वितीया । 'प्रतिनिधिप्रतिदाने च यस्मात्' (पा.सू.२.३.११) इति पञ्चमी तु छान्दसत्वान्न भवति । **भीमः** । 'ञिभी भये' इत्यस्माद् 'भियः पुग्वा' (उ.सू.१.१४५) इति मक्प्रत्ययः । 'भीमो बिभ्यत्यस्मात्' (निरु.१.२०) इति यास्कः । **आतपः** । तपतीति तपः । पचाद्यच् । थाथादिना उत्तरपदान्तोदात्तत्वम् । **शिशीते** 'शो तनूकरणे' । व्यत्ययेनात्मनेपदम् । 'बहुलं छन्दसि' इति विकरणस्य श्लुः । 'बहुलं छन्दसि' इति अभ्यासस्य इत्वम् । 'ईहल्यघोः' इति ईत्वम् । अनजादावपि लसार्वधातुके व्यत्ययेन अभ्यस्ताद्युदात्तत्वम् (पा.सू.६.१.१८९) । **वंसगः** 'वन षण सम्भक्तौ' इत्यस्मात् कर्मणि औणादिकः सप्रत्ययः । वंसं वननीयं गच्छतीति वंसगः । 'डोऽन्यत्रापि दृश्यते' (पा.म.३.२.४८) इति गमेः डप्रत्ययः । दिवोदासादित्वात् पूर्वपदाद्युदात्तत्वम् ॥

**सिद्धाञ्जनम्–** दशमेऽनुवाके दिवश्चिदस्येति पञ्चमं अष्टर्चं सूक्तम् । सव्य ऋषिः इन्द्रो देवता जगती छन्दः ॥

**अस्य इन्द्रस्य वरिमा** उरुत्वं विपुलता **दिवश्चित्** द्युलोकादपि **वि पप्रथे** विशेषेण विस्तीर्णो भवति । **पृथिवी चन** पृथिव्यपि **मह्ना** महिम्ना **इन्द्रम् न प्रति** इन्द्रस्य प्रतिः प्रतिनिधिर्न भवति, दिवो गरीयान् पृथिव्याश्चाधिक इत्यर्थः । **भीमः** भयङ्करः शत्रूणां, **तुविष्मान्** बलवान् **चर्षणिभ्यः** द्रष्टॄणां मनुष्याणां स्तोतृणामिति यावत्, तेषाम् अनुग्रहाय **आतपः** आ समन्तात् शत्रून् तपति, तापकारी । **तेजसे** तैक्ष्ण्याय **वज्रम्** आयुधं **शिशीते** तीक्ष्णीकरोति । दृष्टान्तः–**वंसगो न** यथा वृषभः युद्धाय स्वशृङ्गे तीक्ष्णीकरोति तद्वत् ॥

**पप्रथे**–'प्रथ प्रख्याने' । **मह्ना**-महिम्ना, वर्णलोपश्छान्दसः । **प्रति**–प्रतिः प्रतिनिधौ, कर्मप्रवचनीयत्वम् । **भीमः**–'भियः षुग्वा' इति मक्प्रत्ययः । **शिशीते**–'शो तनूकरणे' व्यत्ययेन विकरणस्य श्लुः, आत्मनेपदं च । **वंसगः**–'वन षण सम्भक्तौ' अस्मादौणादिकः सप्रत्ययः । वंसं वननीयं गच्छतीति वंसगः ।। १ ।।

## ऋक्संहिता पदपाठसहिता

**सो अर्णवो न नद्यः समुद्रियः प्रति गृभ्णाति विश्रिता वरीमभिः ।**
**इन्द्रः सोमस्य पीतये वृषायते सनात्स युध्म ओजसा पनस्यते ।। २ ।।**
**सः । अर्णवः । न । नद्यः । समुद्रियः । प्रति । गृभ्णाति । विऽश्रिताः । वरीमऽभिः ।**
**इन्द्रः । सोमस्य । पीतये । वृषऽयते । सनात् । सः । युध्मः । ओजसा पनस्यते ।।**

**स्कन्द**– य उक्तगुणः इन्द्रः **सः अर्णवः न नद्यः समुद्रियः** अर्णवान् उदकवानुच्यते । 'समुद्रियः' इति घप्रत्ययः स्वार्थे द्रष्टव्यः । समुद्र एव समुद्रियः । यथोदकवान् पार्थिवः समुद्रो नदीं तद्वत् **प्रति गृभ्णाति** । किम् । सामर्थ्यात् स्तुतीः । कीदृशीः । उच्यते । **विश्रिताः** विविधं श्रिताः । केन । **वरीमभिः** । प्रत्ययोऽयं भावे इमनिन् द्रष्टव्यः । वरणैः । विविधं वरणीया इत्यर्थः । किञ्च **इन्द्रः सोमस्य पीतये वृषायते सनात्** चिरपर्यायोऽयम् । पञ्चमीनिर्देशाच्च प्रभृतीति वाक्यशेषः । चिरात्प्रभृति । **सः** इन्द्रः **युध्म** योद्धा **ओजसा** स्वेनैव बलेन । परम् अनाश्रित्येत्यर्थः । **पनस्यते** स्तूयते च स्तोतृभिः ।। २ ।।

**वेङ्कटमाधव**– **सः** समुद्र इव समुद्रपत्नीः नदीः **प्रति** गृह्णाति । विविधं श्रिताः सेनाः उरुत्वैः । **इन्द्रः सोमस्य** पानाय वृष इवाचरति । चिरादेवारभ्य **सः** योद्धा बलमहत्तया स्तोतृभिः स्तूयते ।।

**मुद्गल**– **सः** इन्द्रः **समुद्रियः** समुद्द्रवन्त्यस्मादाप इति समुद्रम् अन्तरिक्षलोकः । तत्र भवः समुद्रियः । एवम्भूतः सन् **वरीमभिः** स्वकीयैः संवरणैः **विश्रिताः** व्याप्ताः **नद्यः** नदीः शब्दकारिणीः वृत्रेण आवृताः अपः **अर्णवः न** समुद्र इव **प्रति गृभ्णाति** । स्वीकृत्य ववर्षेति भावः । स च **इन्द्रः सोमस्य पीतये** पानाय **वृषायते** वृष इवाचरति । हर्षयुक्तो वर्तते इत्यर्थः । तथा **सः** इन्द्रः **युध्म** योद्धा **सनात्** चिरादेव **ओजसा** बलकृतेन वृत्रवधादिरूपेण कर्मणा **पनस्यते** पनः स्तोत्रम् इच्छति ।। २ ।।

**सायण– सः** इन्द्रः **समुद्रियः** समुद्द्रवन्त्यस्मादाप इति समुद्रम् अन्तरिक्षलोकः । तत्र भवः समुद्रियः । एवम्भूतः सन् **वरीमभिः** स्वकीयैः संवरणैः । यद्वा उरुत्वैः **विश्रिताः** व्याप्ताः **नद्यः** नदीः शब्दकारिणीः वृत्रेण आवृताः अपः **अर्णवः न** समुद्र इव **प्रति गृभ्णाति** । स्वीकृत्य ववर्षेति भावः । स च **इन्द्रः सोमस्य पीतये** पानाय **वृषायते** वृष इवाचरति । हर्षयुक्तो वर्तते इत्यर्थः । तथा **सः** इन्द्रः **युध्म** योद्धा **सनात्** चिरादेव यद्वा सनातनः । **ओजसा** बलकृतेन वृत्रवधादिरूपेण कर्मणा **पनस्यते** पनः स्तोत्रम् इच्छति ॥

**अर्णवः** । 'अर्णसो लोपश्च' (का.५.२.१०९.२) इति मत्वर्थीयो वप्रत्ययः सलोपश्च । प्रत्ययस्वरः । **नद्यः** । 'नद अव्यक्ते शब्दे' इत्यस्मात् कर्तरि पचाद्यच् । 'चितः' इत्यन्तोदात्तत्वम् । 'नदट्' (पा.सू.३.१.१३४ ग.) इति टित्त्वेन पाठात् 'टिड्ढाणञ्' इति ङीप् । 'यस्य' इति लोपे उदात्तनिवृत्तिस्वरेण तस्य उदात्तत्वम् । जसि यणादेशे 'उदात्तस्वरितयोर्यणः' इति स्वरितत्वम् । द्वितीयार्थे प्रथमा । अनया व्युत्पत्त्या नद्य इत्याप उच्यन्ते । तथा च श्रूयते– 'अहावनदता हते । तस्मादा नद्यो नाम स्थ ता वो नामानि सिन्धवः' (तै.सं.५.६.१.२) इति । समुद्रियः । 'समुद्राभ्राद्घः' (पा.सू.४.४.११८) इति भवार्थे घप्रत्ययः । घस्य इयादेशः । तस्योपदेशिवद्वचनाद् उदात्तत्वम् । **गृभ्णाति** । 'हृग्रहोर्भः' इति भत्वम् । **विश्रिताः** 'श्रिञ् सेवायाम्' कर्मणि निष्ठा । 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् । **वरीमभिः** 'वृञ् वरणे' इत्यस्मात् औणादिक ईमनिन्प्रत्ययः । नित्त्वादाद्युदात्तत्वम् । यद्वा उरुशब्दात् इमनिचि दीर्घ आद्युदात्तत्वं च, छान्दसत्वात् । **वृषायते** । 'कर्तुः क्यङ् सलोपश्च' (पा.सू.३.१.११) इति आचारार्थे क्यङ् । ङित्त्वाद् आत्मनेपदम् । 'अकृत्सार्वधातुकयोः' इति दीर्घः । **युध्मः** 'युध सम्प्रहारे' इत्यस्मात् 'इषियुधीन्धिदसिश्याधूसूभ्यो मक्' इति मक् । **पनस्यते** 'पन स्तुतौ' । पननं पनः तदिच्छति पनस्यति । व्यत्ययेनात्मनेपदम् ॥ २ ॥

**सिद्धाञ्जनम्– सः** इन्द्रः । **समुद्रियः** समुद्रे अखण्ड– अनवधिकसत्त्वनिधौ भवः, तस्मात् **वरीमभिः** उरुत्वैः विस्तीर्णैः **विश्रिताः** वितत्य गताः, व्याप्ताः अपृच्छब्दलक्षिताः तेजोबलादि वाहिनीः शक्तीः **प्रति गृभ्णाति** स्वीकरोति । तत्र दृष्टान्तः–**अर्णवो न नद्यः** समुद्रः अपां राशिः यथा नदीरपः स्वीकरोति तद्वत् । दृष्टान्तद्योतितोऽर्थविशेषः सर्वोऽपि धीमद्भिरूह्यः । विस्तर इह मा भूत् । **इन्द्रः सोमस्य पीतये** सोमपानाय **वृषायते** वृष इवाचरति, हर्षयुक्तो वर्षतीति

भावः । उक्तलक्षणानाम् अपां परिग्रहीता अपां राशिरिवेन्द्रः ताः शक्तीर्वर्षति यजमानाय सोमकामः । तेन शक्तो भूत्वा भक्तो यजमानः सोमं सुनोति । सोमस्वीकरणादिन्द्रः ओजस्वी योद्धा यजमानस्तुत्यर्हः स्तुतिमिच्छति । स्तुत्या हि देवता वर्धते । तदाह– **सः** इन्द्रः **सनात्** चिरात् **युध्मः** योद्धा **ओजसा** बलेन स्तोत्रार्हतालक्षणेन **पनस्यते** पनस्यति स्तोत्रमिच्छति ।। पनधातुः स्तुत्यर्थे प्रसिद्ध इति न संशयः । अपि तु कर्मसामर्थ्ये, बलिष्ठक्रियायां वा वर्तते । प्राचीनभाषान्तरीयक्रियार्थकशब्दानां परीक्षणेनेदमुच्यते । अरविन्द श्रीचरणानामाशयोऽयम् । तथा 'पनिष्ठम्' 'पनीयसी' (३.१.१३, ५.६.४) इत्यादिस्थलेषु उपपत्तिं च पश्यामः । एवं चेत् 'ओजसा पनस्यते' बलेन महत्कर्म कर्तुमिच्छतीति तात्पर्यमुपपन्नम् भवति ।।

**अर्णवः**–'अर्णसो लोपश्च' इति मत्वर्थीयो वपत्ययः सलोपश्च । **समुद्रियः**–भवार्थे घप्रत्ययः । **गृभ्णाति**–'हृग्रहोर्भः' इति भत्वम् । **वृषायते**–कर्तुः क्यङ् सलोपश्च । 'अकृत्सार्वधातुकयोः' इति दीर्घः । **युध्मः**–'युध संप्रहारे' अस्मात् मक् । **पनस्यते**–व्यत्ययेनात्मनेपदम् ।। २ ।।

## ऋक्संहिता पदपाठसहिता

**त्वं तमिन्द्र पर्वतं न भोजसे महो नृम्णस्य धर्मणामिरज्यसि ।**
**प्र वीर्येण देवताति चेकिते विश्वस्मा उग्रः कर्मणे पुरोहितः ।। ३ ।।**
त्वम् । तम् । इन्द्र । पर्वतम् । न । भोजसे । महः । नृम्णस्य । धर्मणाम् । इरज्यसि ।
प्र । वीर्येण । देवता । अति । चेकिते । विश्वस्मै । उग्रः । कर्मणे । पुरःऽहितः ।। ३ ।।

**स्कन्द–** तच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽध्याहर्तव्यः । यं स्तोतारः इच्छन्ति **तम् त्वम्** हे **इन्द्र! पर्वतम्** मेघनामैतत् (तु.निघ.१,१०) । मेघम् । 'न' शब्दस्तूपरिष्टादुपचारादुपमार्थः । उपमार्थत्वात् 'अस्त्युपमार्थस्य सम्प्रत्यर्थे प्रयोगः' (तु.या.७,३१) इति पदपूरणः । **भोजसे** भोजनाय । साकाङ्क्षत्वात् करोषीति वाक्यशेषः । यं स्तोतारः इच्छन्ति तं मेघं वृष्टिप्रदानेन तेषां भोग्यं करोषीत्यर्थः । अथवा पर्वत इह शिलोच्चय एवाभिप्रेतः । उपमार्थीय एव च 'न'-शब्दः । तमिति तु शत्रोर्मेघस्य वा प्रतिनिर्देशः । यं स्तोतारः इच्छन्ति तं शत्रुं मेघं वा पर्वतमिव फलादिना तेषां भोग्यं करोषीत्यर्थः । किञ्च **महः** महतः **नृम्णस्य** बलस्य **धर्मणाम्** धारयितॄणां मरुत्प्रभृतीनाम् **इरज्यसि** ईशिषे त्वम् । परोक्षकृतः परोऽर्धर्चः । **वीर्येण देवता** इत्थम्भूत-

लक्षणतृतीयान्ते एते । वीर्येण देवतात्वेन च युक्त इन्द्रः **अति प्र चेकिते** सुष्ठु प्रज्ञायते । वीर्यवान् देवश्च नेन्द्रसदृशोऽपरोऽस्तीत्येवं सुष्ठु प्रज्ञायते इत्यर्थः । अथवा देवतेति प्रथमैवेषा । इन्द्राख्या देवता वीर्यवतीत्येव सुष्ठु प्रज्ञायत इत्यर्थः । किञ्च **विश्वस्मै कर्मणे** विश्वशब्दः सर्वपर्यायो बहुनाम वा (तु.निघ.३,१) । सर्वस्य बहुनो वा वृत्रवधादेः कर्मणोऽर्थाय **उग्रः** अप्रसह्यः इन्द्रः **पुरोहितः** पुरो निहित अग्रतः कृतः । सर्वाणि बहूनि वा वृत्रवधादीनि कर्माणि कर्तुं प्रधानीकृत इत्यर्थः । केन । सामर्थ्यात् देवैः ॥ ३ ॥

**वेङ्कटमाधव– त्वम् तम् इन्द्र!** स्तोतारं धनप्रदानेन मेघमिव मनुष्याणां भोगाय करोषि । त्वम् महतः धनस्य धारकाणां कर्मणाम् ईशिषे । सोऽयमिन्द्रः देवतासु वीर्येण **अति प्र चेकिते** । **विश्वस्मै कर्मणे** अयम् उद्गूर्णो यजमानैः पुरो निधीयते ॥ ३ ॥

**मुद्गल–** हे **इन्द्र! त्वम्, भोजसे** भोजनाय **पर्वतम्** पर्ववन्तम् **तम्** मेघम् **न** अकार्षीः न हि हतो भुङ्क्ते । इन्द्रो हि वर्षणार्थं मेघं वज्रेण हन्ति । तथा **महः** महतः **नृम्णस्य** धनस्य **धर्मणाम्** धारयितॄणां कुबेरादीनाम् **इरज्यसि** ईशिषे । स इन्द्रः **देवता वीर्येण अति** अतिशयित इति **प्र चेकिते** प्रकर्षेणास्माभिर्ज्ञातो बभूव । स च **उग्रः** उद्गूर्ण इन्द्रः **विश्वस्मै** सर्वस्मै वृत्रवधादिरूपाय **कर्मणे** देवैः सर्वैः **पुरोहितः** पुरस्तादवस्थापितः ॥ ३ ॥

**सायण–** हे **इन्द्र! त्वम्, भोजसे** भोजनाय **पर्वतम्** पर्ववन्तम् **तम्** मेघम् **न** अकार्षीः न हि हतो भुङ्क्ते । इन्द्रो हि वर्षणार्थं मेघं वज्रेण हन्ति । तथा **महः** महतः **नृम्णस्य** धनस्य **धर्मणाम्** धारयितॄणां कुबेरादीनाम् **इरज्यसि** ईशिषे । इरज्यतिरैश्वर्यकर्मा । स इन्द्रः **देवता वीर्येण अति** अतिशयित इति **प्र चेकिते** प्रकर्षेणास्माभिर्ज्ञातो बभूव । स च **उग्रः** उद्गूर्ण इन्द्रः **विश्वस्मै** सर्वस्मै वृत्रवधादिरूपाय **कर्मणे** देवैः सर्वैः **पुरोहितः** पुरस्तादवस्थापितः ॥

**धर्मणाम्** 'धृञ् धारणे' । 'अन्येभ्योऽपि दृश्यन्ते' इति कर्तरि मनिन् । नित्त्वादाद्युदात्तत्वम् । **इरज्यसि** 'इरज् ईर्ष्यायाम्' । ऐश्वर्ये इत्येके । कण्ड्वादित्वाद् यक् । **वीर्येण** 'शूर वीर विक्रान्तौ' । चुरादिः । 'अचो यत्' इति यत् । णिलोपः । बहुव्रीहौ 'वीरवीर्यौ च' इत्युत्तर पदाद्युदात्तत्वविधानसामर्थ्यात् 'यतोऽनावः' इत्याद्युदात्तत्वाभावे 'तित्स्वरितम्' इति स्वरितत्वम् । तस्मिन् हि सति 'आद्युदात्तं द्व्यच्छन्दसि' इत्यनेनैव सिद्धत्वात् पुनर्वीर्यग्रहणम् अनर्थकं

स्यादित्युक्तम् । **देवता** । देव एव देवता । 'देवात्तल्' (पा.सू. ५.४.२७) इति स्वार्थे तल्प्रत्ययः 'लिति' इति प्रत्ययात् पूर्वस्योदात्तत्वम् । **चेकिते** 'कित ज्ञाने' । अस्माद् यङन्तात् चेकित्यतेः कर्मणि लिटि अतोलोपयलोपौ । **पुरोहितः** । पुरस्शब्दस्य असिप्रत्ययान्तस्य 'तद्धितश्चासर्वविभक्तिः' इति अव्ययत्वेन 'पुरोऽव्ययम्' इति गतिसञ्ज्ञायां 'गतिरनन्तरः' इति पूर्वपदप्रकृतिस्वरत्वम् ।। ३ ।।

**सिद्धाञ्जनम्–** हे **इन्द्र! त्वम् भोजसे** भोजनाय, त्वदीयभोगाय । **तम्** पूर्वोक्तं **पर्वतम् न** पर्ववन्तं अपामावरकं मेघशब्दप्रतीतं नाकार्षीः । यजमानलोकस्योपभोगाय हि अपां वृष्टिः । अपामाश्रयः पर्वतश्च भवति । तथा **महः** महतः **नृम्णस्य** बलस्य **धर्मणां** धारयितॄणां देवानां यजमानानां वा **इरज्यसि** ईशिषे । स इन्द्रः **देवता** देवः **वीर्येण अति** अतिशयितः **प्र चेकिते** प्रकर्षेण ज्ञातो भवत्यस्माभिः । स च **उग्रः** उद्गूर्णः इन्द्रः **विश्वस्मै कर्मणे** सर्वविधाय यजमानलोकस्य विपन्निवृत्तिसम्पत्प्राप्तिसाधनभूताय वृत्रवधादिरूपाय **कर्मणे पुरोहितः** देवेभिः स्वेषां पुरस्तात् प्रामुख्येन स्थापितः ।। **धर्मणाम्**– 'धृञ् धारणे' कर्तरि मनिन् । **इरज्यसि**–ऐश्वर्यकर्मा । **देवता**–देव एव देवता, स्वार्थे तल् ।। ३ ।।

## ऋक्संहिता पदपाठसहिता

**स इद्वने नमस्युभिर्वचस्यते चारु जनेषु प्रब्रुवाण इन्द्रियम् ।**
**वृषा छन्दुर्भवति हर्यतो वृषा क्षेमेण धेनां मघवा यदिन्वति ।। ४ ।।**
**सः । इत् । वने । नमस्युऽभिः । वचस्यते । चारु । जनेषु । प्रऽब्रुवाणः । इन्द्रियम् ।**
**वृषा । छन्दुः । भवति । हर्यतः । वृषा । क्षेमेण । धेनाम् । मघऽवा । यत् । इन्वति ।।**

**स्कन्द–** **'इत्'** शब्द एवार्थे । **सः** एवेन्द्रः **वने** वननीये यज्ञे **नमस्युभिः** पूजयितृभिः **वचस्यते** स्तुत्यर्थोऽयं द्रष्टव्यः । स्तूयते । **चारु** शोभनम् । **जनेषु** मनुष्येषु **प्रब्रुवाणः** लुप्तोपममेतद् द्रष्टव्यम् । तैस्तैर्वृत्रवधादिभिः वीरकर्मभिः प्रब्रुवन्निव **इन्द्रियम्** वीर्यमात्मीयम् । किञ्च **वृषा** वर्षणशीलः इन्द्रः **छन्दुः** छन्दतिरर्चतिकर्मा (तु.निघ.३,१४) । स्तुत्यः । अथवा 'मन्यते, छन्त्सत्, चाकनन्' (निघ.२,६) इति कान्तिकर्मसु पाठात्, 'तदिन्मे छन्त्सद्वपुषः' (ऋ.१०, ३२,३) इति च प्रयोगदर्शनात् छन्दतिः कान्त्यर्थः । कामयिता हविषां स्तुतीनां वा भवति ।

**हर्यतः वृषा** हर्यतिः कान्त्यर्थः (तु.निघ.२,३) । कामयमानस्य यजमानस्य वर्षिता भवति । यष्टॄणामर्थाय वर्षतीत्यर्थः । कदा । उच्यते । **क्षेमेण** अविघ्नेन **धेनाम्** 'धेट् पाने' इत्यस्य धेना आहुतिरुच्यते स्तुतिर्वा । ताम् **मघवा** इन्द्रः **यत्** यदा **इन्वति** व्याप्नोति । यदा इज्यते स्तूयते वेत्यर्थः ।। ४ ।।

**वेङ्कटमाधव– स एव** अरण्ये **नमस्युभिः** स्तूयते । जनपदेऽपि शोभनम् **इन्द्रियम् जनेषु प्रब्रुवाणः** प्रकाशयन्निव । आब्रुवाण एव वर्षिता उपच्छन्दयिता **भवति** इच्छतः । वर्षिता क्षेमं कुर्वन् यजमानानां **मघवा** यदा स्तुतिवचनं प्राप्नोति ।। ४ ।।

**मुद्गल– स इत्** स एवेन्द्रः । **वने** अरण्ये । **नमस्युभिः** नमसा स्तोत्रेण पूजयितृभिः ऋषिभिः **वचस्यते** वच इच्छन् क्रियते । स्तूयत इत्यर्थः । स चेन्द्रः आत्मीयेषु **जनेषु, इन्द्रियम्** स्ववीर्यम् **प्रब्रुवाणः** प्रकटयन् **चारु** वर्तते । किञ्च स **वृषा** कामानां वर्षकः **हर्यतः** प्रेप्सावतः यियक्षतः **छन्दु** उपच्छन्दयिता **भवति** । यियक्षताम् पुरुषाणां यागे रुचिमुत्पादयतीति भावः । **वृषा** हविषां वर्षयिता । हविः प्रदातेत्यर्थः । **मघवा** धनवान् । एवम्भूतो यजमानः **क्षेमेण** इन्द्रकृतेन रक्षणेन युक्तः सन् **यत्** यदा **धेनाम्** स्तुतिलक्षणां वाचम् **इन्वति** प्रेरयति । तदानीं छन्दुर्भवतीति पूर्वेणान्वयः ।। ४ ।।

**सायण– स इत्** स एवेन्द्रः । **वने** अरण्ये । **नमस्युभिः** नमसा स्तोत्रेण पूजयितृभिः ऋषिभिः **वचस्यते** वच इच्छन् क्रियते । स्तूयते इत्यर्थः । यद्वा वचः स्तोत्रमात्मन इच्छति । स चेन्द्रः आत्मीयेषु **जनेषु, इन्द्रियम्** स्ववीर्यम् **प्रब्रुवाणः** प्रकटयन् **चारु** वर्तते । किञ्च स **वृषा** कामानां वर्षकः **हर्यतः** प्रेप्सावतः यियक्षतः **छन्दु** उपच्छन्दयिता **भवति** । यियक्षतां पुरुषाणां यागे रुचिमुत्पादयतीति भावः । **वृषा** हविषां वर्षयिता । हविः प्रदातेत्यर्थः । **मघवा** धनवान् । एवम्भूतो यजमानः **क्षेमेण** इन्द्रकृतेन रक्षणेन युक्तः सन् **यत्** यदा **धेनाम्** स्तुतिलक्षणां वाचम् **इन्वति** प्रेरयति । तदानीं छन्दुर्भवतीति पूर्वेणान्वयः । यद्वा मघवा वृषा इन्द्रः क्षेमेण क्षेमकरेण मनसा धेनां यजमानैः कृतां स्तुतिं यद्यस्मात् इन्वति व्याप्नोति । तस्मादिति योज्यम् ।।

**नमस्युभिः** 'नमो वरिवः' इति पूजार्थे क्यच् । 'क्याच्छन्दसि' इति उप्रत्ययः । **वचस्यते** । वच इच्छति वचस्यति । तं वचस्यन्तं कुर्वन्ति मुनयो वचस्ययन्ति । वचस्ययतेः कर्मणि यकि

अतोलोपयलोपौ । यद्वा । वचस्यतेर्व्यत्ययेनात्मनेपदम् । **प्रब्रुवाणः** 'ब्रूञ् व्यक्तायां वाचि' । लटः शानच् । अदादित्वात् शपो लुक् । शानचो ङित्त्वात् गुणाभावे उवङ् । चित्स्वरेणान्तोदात्तः । **इन्द्रियम्** । इन्द्रस्य लिङ्गमिन्द्रियम् । 'इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिन्द्रसृष्टमिन्द्रजुष्टमिन्द्रदत्तमिति वा' (पा.सू.५.२.९३) इति लिङ्गादिष्वर्थेषु इन्द्रशब्दात् घच्प्रत्ययो निपात्यते । अतः अन्तोदात्तत्वम् । **इन्वति** 'इवि व्याप्तौ' । शपः पित्त्वादनुदात्तत्वे धातुस्वरः । यद्वृत्तयोगादनिघातः ।। ४ ।।

**सिद्धाञ्जनम्– स इत्** स एवेन्द्रः । **वने** वननीये सम्भजनीये, सुखे आनन्दमये स्थाने इति यावत् । रहस्यार्थसरणौ वनशब्दो भूरुहे अरण्ये वा क्वचिद्वर्तमानोऽपि भोग्यं भजनीयं सुखं आनन्दं प्रतिपादयति । अयमर्थ उपनिषत्सु च 'तद्वनम्' इत्यादौ लक्ष्यते । **नमस्युभिः** पूजयितृभिः स्तोतृभिः **वचस्यते** वचस्यति वच इच्छति । वननीये एकान्ते सुखं इन्द्रः ऋषिभिः सह सम्भाषते । नैष्ठिकानाम् अन्तर्यागपराणां पूर्वेषां देवताभिः सह रहसि व्यवहारः प्रसिद्धः । अपि च स स्पष्टीक्रियते । स इन्द्रः **जनेषु** आत्मीयेषु यजमानेषु **इन्द्रियम्** स्वीयं लिङ्गादिकं रहस्यं तत्त्वं **प्रब्रुवाणः** प्रकाशयन् **चारु** रमणीयं यथा तथा वर्तते । चार्विति प्रब्रुविक्रियाविशेषणं वा । किञ्च स **वृषा** कामानां वर्षकः । **हर्यतः** देवान् कामयमानस्य । हर्यतिः कान्त्यर्थः, यजमानस्येत्यर्थः । **छन्दुः** उपच्छन्दयिता प्रीणयिता **भवति, यत्** यदा **मघवा** धनवान् **वृषा** वर्षकः इन्द्रः, **क्षेमेण** कल्याणेन मनसा युक्तां **धेनाम्** वाचं **इन्वति** प्रेरयति । यदा इन्द्र एव यजमाने वाचं स्तोत्रलक्षणां प्रेरयति, तदा स छन्दुर्हर्यत इति सम्बन्धः । सायणस्त्वेवम्–यत् यदा क्षेमेण रक्षणेनेन्द्रकृतेन युक्तां धेनां वाचं वृषा हविषां वर्षकः मघवा आढ्यो यजमानः इन्वति प्रेरयतीति व्याचष्टे ।। **नमस्युभिः** 'नमो वरिवः' इति पूजार्थे क्यच् । **वचस्यते**–वच इच्छति, व्यत्ययेनात्मनेपदम् । **इन्द्रियम्**– 'इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टम्' इत्यादिषु, इन्द्रशब्दात् घच्प्रत्ययः ।।

## ऋक्संहिता पदपाठसहिता

**स इन्महानि समिथानि मज्मना कृणोति युध्म ओजसा जनेभ्यः ।**
**अधा चन श्रद्दधति त्विषीमत इन्द्राय वज्रं निघनिघ्नते वधम् ।। ५ ।।**

सः । इत् । महानि । सम्ऽइथानि । मज्मना । कृणोति । युध्मः । ओजसा । जनेभ्यः ।
अध । चन । श्रत् । दधति । त्विषिऽमते । इन्द्राय । वज्रम् । निऽघनिघ्नते । वधम् ।।

**स्कन्द– स इत् महानि समिथानि** 'समिथे' (निघ.२,१७) इति सङ्ग्रामनाम । स एव वृत्रादिभिः सह महतः सङ्ग्रामान् । **मज्मना** बलेन सेनाख्येन **कृणोति** भूतेऽयं लट्, कृतवान् । **युध्मः** युद्धशीलः **ओजसा** स्वेन बलेन **जनेभ्यः** मनुष्याणाम् अर्थाय । **अध चन** अधशब्द एतस्मादित्यस्यार्थे द्रष्टव्यः । चनशब्द एवार्थे । एतस्मादेव कारणात् **श्रद् दधति** सत्यतया प्रतिपद्यन्ते । **त्विषीमते इन्द्राय** षष्ठ्यर्थे चतुर्थ्येषा । दीप्तिमतः इन्द्रस्य । **वज्रम्** तृतीयार्थे द्वितीयैषा । वज्रेण । **निघनिघ्नते** यङ्लुगन्तमेतत् । अत्यर्थं निघ्नता । **वधम्** हननार्हम् । यस्मात् मनुष्याणाम् अर्थाय वृत्रादिभिः सह महतः सङ्ग्रामान् कृतवान् । तस्मादन्यमपि वधार्हं वज्रेण जिघांसत इन्द्रस्य निस्संशयमयं हन्तीत्येवं श्रद्धधतीति समस्तार्थः ।। ९ ।।

**वेङ्कटमाधव– सः** एव महतः सङ्ग्रामान् बलेन करोति । योद्धा बलेन जनार्थम् । यदा अयं शत्रुषु हन्तारम् **वज्रम्** निहन्ति । अथाऽस्मै दीप्तिमते **इन्द्राय श्रद्धधते** सत्यमसौ बलवानिति ।। ९ ।।

**मुद्गल– सः इत्** स एव इन्द्रः **युध्मः** योद्धा । **महानि समिथानि** महतः सङ्ग्रामान् **मज्मना** सर्वस्य शोधकेन **ओजसा** बलेन **कृणोति** करोति । किमर्थम् । **जनेभ्यः** स्तोतृजनार्थम् । यदा इन्द्रः **वधम्** हननसाधनम् **वज्रम्** आयुधं मेघेषु **निघनिघ्नते** निहन्ति । **अध चन** अनन्तरमेव **त्विषीमते** दीप्तिमते **इन्द्राय** सर्वे जनाः **श्रद्धधति** 'श्रत्' (निघ.३,१०) इति सत्यनाम । इन्द्रो बलवानिति यदुच्यते तत् सत्यमिति सर्वे प्रतिपद्यन्ते ।। ९ ।।

**सायण– सः इत्** स एव इन्द्रः **युध्मः** योद्धा । **महानि समिथानि** महतः सङ्ग्रामान् **मज्मना** सर्वस्य शोधकेन **ओजसा** बलेन **कृणोति** करोति । किमर्थम् । **जनेभ्यः** स्तोतृजनार्थम् । यदा इन्द्रः **वधम्** हननसाधनम् **वज्रम्** आयुधं मेघेषु **निघनिघ्नते** निहन्ति । **अध चन** अनन्तरमेव **त्विषीमते** दीप्तिमते **इन्द्राय** सर्वे जनाः **श्रद्धधति** 'श्रत्' (निघ.३,१०) इति सत्यनाम । इन्द्रो बलवानिति यदुच्यते तत् सत्यमिति सर्वे प्रतिपद्यन्ते ।।

**महानि** । महान्तीत्यस्य तकारलोपश्छान्दसः । यद्वा । मह्यन्ते पूज्यन्ते इति महानि प्रवृद्धानि । 'घञर्थे कविधानम्' इति कः । प्रत्ययस्वरः । **समिथानि** 'इण गतौ' । संयन्ति सङ्गच्छन्तेऽस्मिन्वीरा इति समिथानि सङ्ग्रामाः । 'समीणः' (उ.सू.४.५३२) इति थक्प्रत्ययः ।

कित्त्वाद्गुणाभावः । थाथादिना उत्तरपदान्तोदात्तत्वम् । **मज्मना** 'टुमस्जो शुद्धौ' । मनिप्रत्ययः । 'झलां जश् झशि' (पा.सू.८.४.५३) इति सकारस्य जश्त्वं दकारः । ततश्चुत्वं जकारः । प्रत्ययस्वरः । **अधा** । छान्दसं धत्वम् । 'निपातस्य च' इति सांहितिको दीर्घः । **त्विषीमते** 'त्विष दीप्तौ' । 'इन्सर्वधातुभ्यः' इति इन्प्रत्ययः । नित्त्वादाद्युदात्तत्वम् । मतुपः पित्त्वादनुदात्तत्वे तदेव शिष्यते । 'अन्येषामपि दृश्यते' इति सांहितिको दीर्घः । **निघनिघ्नते** । हन्तेर्व्यत्यये-नात्मनेपदं बहुवचनं च । 'बहुलं छन्दसि' इति शपः श्लुः । 'गमहन' इत्यादिना उपधालोपः । अभ्यासस्य घत्वं निगागमश्च । 'आगनीगन्तीति च' (पा.सू.७.४.६५) इति 'इतिचशब्दः प्रकारार्थः' इत्युक्तत्वात् दाधर्त्यादौ एतद्द्रष्टव्यम् ।। ५ ।।

**सिद्धाञ्जनम्– स इत्** स एवेन्द्रः **युध्मः** योद्धा **जनेभ्यः** स्तोतृलोकार्थं **महानि समिथानि** महतः सङ्ग्रामान् **मज्मना** शोधकेन बलेन **ओजसा** उग्रेण बलेन **कृणोति** करोति । **(यत्)** यदा स इन्द्रः **वधम्** हननसाधनं **वज्रं** प्रयुज्य **निघनिघ्नते** निहन्ति । वृत्रमिति शेषः । **अधा चन** अनन्तरमेव **त्विषीमते** दीप्तिमते **इन्द्राय** जनाः **श्रत्** सत्यं **दधति** इन्द्रोऽस्ति भगवान् बलिष्ठ इति सत्यं प्रतिपद्यन्ते । देवतास्तित्वबुद्ध्या विनाऽपि कामपि योगनिष्ठामास्थातुं शक्नोत्येव योगी जनः । यदि तत्र साधने तेजोबलाद्यमृतांशवर्षं प्रत्यक्षमनुभवेत्, तदा नायमनुभवः मया निष्पादितः । मत्तोऽन्यस्मादायातीति दृढं जानीयात् प्रथमम् । ततो देवतां च साक्षात्करोति । यदि देवता 'अस्ती'ति सत्यधारणा बुद्धिरादित एव प्रवर्तेत, सुलभो भवति मार्गः । श्रद्धाशब्दो वैदिकः नायं विश्वासपर्यायः । अहमस्मीति सत्यमात्मानं यथा लोको जानाति, तथा तस्य देवताऽस्तीति दृढः स्यात् प्रत्ययः । सा च सहजा भवति केषाञ्चित् । इतरेषां तु फलदर्शना-ज्जायते । इदमेवोक्तम् अत्रेत्यलम् । 'श्रदस्मै धत्त स जनास इन्द्रः' (२.१२) इत्याद्यवधेयम् ।। **महानि**–महान्ति । तकारलोपश्छान्दसः । **समिथानि**–'इण् गतौ' संयन्ति अस्मिन् वीरा इति समिथं सङ्ग्रामः, 'समिणः' इति थक्प्रत्ययः । **अधा**–अथ, छान्दसं धत्वं, दीर्घः संहितायाम् । **त्विषीमते**–त्विषिमते, सांहितिको दीर्घः । 'त्विष दीप्तौ' इन्प्रत्ययः, ततो मतुप् । **निघनिघ्नते**–हन्तेर्व्यत्ययेनात्मनेपदम् बहुवचनं च । शपः श्लुः छान्दसः ।। ५ ।।

।। इति प्रथमाष्टके चतुर्थाध्याये एकोनविंशो वर्गः ।।

## ।। अथ विंशो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

**स हि श्रवस्युः सदनानि कृत्रिमां क्ष्मया वृधान ओजसा विनाशयन् ।**
**ज्योतींषि कृण्वन्नवृकाणि यज्यवेऽव सुक्रतुः सर्तवा अपः सृजत् ।। ६ ।।**
**सः । हि । श्रवस्युः । सदनानि । कृत्रिमा । क्ष्मया । वृधानः । ओजसा । विऽनाशयन् ।**
**ज्योतींषि । कृण्वन् । अवृकाणि । यज्यवे । अव । सुऽक्रतुः । सर्तवै । अपः । सृजत् ।।**

**स्कन्द– सः हि** हिशब्दः पदपूरणः । स इन्द्रः **श्रवस्युः** 'श्रवः' (निघ.२,७) इत्यन्ननाम । तस्य हविर्लक्षणस्य कामयिता श्रवस्युः । हविरिच्छन्नित्यर्थः । **क्ष्मया वृधानः** 'क्ष्मा' (निघ.२,१) इति पृथिवीनाम । वृधिरप्यन्तर्णीतण्यर्थः । समस्तया पृथिव्या वर्ध्यमानः । यावन्तः केचन पृथिव्यां यष्टारः तैः सर्वैः स्तुतिभिः हविर्भिश्च वर्ध्यमान इत्यर्थः । दुर्भिक्षनिमित्तानां रक्षः पिशाचादीनाम् **सदनानि** स्थानानि **कृत्रिमा** कुत्रिमाणि **ओजसा** बलेन **विनाशयन्** हेतावयं शतृप्रत्ययः । प्रयोजनस्य च हेतुत्वेन विवक्षा । दुर्भिक्षनिमित्तकरक्षःपिशाचादिस्थानविनाशार्थम् इत्यर्थः । **ज्योतींषि** च ऐश्वर्यलक्षणानि **कृण्वन्** अयमपि पूर्ववद्धेतावेव शतृप्रत्ययः । ऐश्वर्याणि च कर्तुमित्यर्थः । **कीदृशानि । अवृकाणि** 'वुक वृक आदाने' । आदातृवर्जितानि । अनपहार्याणीत्यर्थः । **यज्यवे** यष्टॄणामर्थाय । यष्टॄन् च अनपहार्यैरैश्वर्यैरीश्वरान् कर्तुमित्यर्थः । **सुक्रतुः** सुप्रज्ञः सुकर्मा वा । **सर्तवै** पृथिवीं प्रति गमनाय । वृष्टिलक्षणाः **अपः अव सृजत्** अधः क्षिपति पातयति । वर्षतीत्यर्थः ।। ६ ।।

**वेङ्कटमाधव– सः हि** अन्नमिच्छन् असुरपुराणि कृत्रिमाणि **ओजसा विनाशयन्** भोगसाधनभूतया पृथिव्या वर्धमानः **ज्योतींषि** कृण्वन् स्तेनवर्जितानि यजमानाय सुप्रज्ञः अवसृजति सरणाय उदकानि ।। ६ ।।

**मुद्गल– श्रवस्युः** अन्नम् आत्मन इच्छन् **कृत्रिमा** कृत्रिमाणि क्रियया निर्वृत्तानि **सदनानि** असुरपुराणि **ओजसा** बलेन **विनाशयन्, क्ष्मया** भूम्या समानम् **वृधानः** वर्धनशीलः शत्रूणाम् अभिभवित्रा बलेनत्यर्थः । **ज्योतींषि** सूर्यादीनि वृत्रेणावृतानि **अवृकाणि** वृकेणावरकेण तेन रहितानि **कृण्वन्** कुर्वन् **सुक्रतुः** शोभनकर्मसहितः । एवंविधः **स हि** स खलु इन्द्रः **यज्यवे**

यष्ट्रे यजमानाय तदर्थम् **सर्तवै** सरणाय **अपः** वृष्टिलक्षणानि उदकानि **अव सृजत्** वृष्टिं कृतवानित्यर्थः ।। ६ ।।

**सायण– श्रवस्युः** अन्नं यशो वाऽत्मनः इच्छन् **कृत्रिमा** कृत्रिमाणि क्रियया निर्वृत्तानि **सदनानि** असुरपुराणि **ओजसा** बलेन **विनाशयन्, क्ष्मया** भूम्या समानं **वृधानः** वर्धनशीलः । यद्वा । क्ष्मया इति ओजोविशेषणम् । शत्रूणाम् अभिभवित्रा बलेनेत्यर्थः । **ज्योतींषि** सूर्यादीनि वृत्रेणावृतानि **अवृकाणि** वृकेणावरकेण तेन रहितानि **कृण्वन्** कुर्वन् **सुक्रतुः** शोभनकर्मसहितः । एवंविधः **स हि** स खलु इन्द्रः **यज्यवे** यष्ट्रे यजमानाय तदर्थम् **सर्तवै** सरणाय **अपः** वृष्टिलक्षणानि उदकानि **अव सृजत्** वृष्टिं कृतवानित्यर्थः ।।

**कृत्रिमा** 'डु कृञ् करणे' । 'ड्वितः क्त्रिः' (पा.सू.३.३.८८) इति भावे क्त्रिप्रत्ययः । 'त्रेर्मम्नित्यम्' (पा.सू.४.४.२०) इति निर्वृत्तार्थे मप् । तस्य पित्त्वादनुदात्तत्वे क्त्रिप्रत्ययस्वर एव शिष्यते । 'शेश्छन्दसि बहुलम्' इति शेर्लोपः । **क्ष्मया** 'क्षमूष् सहने' । क्षमते प्राणिजातकृत मुपद्रवमिति क्ष्मा । 'पिद्भिदादिभ्योऽङ्' (पा.सू.३.३.१०४) इति अङ्प्रत्ययः । ततष्टाप् । व्यत्ययेन धातोः उपधालोपः । छान्दसं विभक्त्युदात्तत्वम् । यद्वाऽयं धातुः अभिभवार्थः । 'षह अभिभवे' इति सहनस्याभिभवार्थत्वात् । अस्मात् औणादिको मनिन् । व्यत्ययेन स्त्रीलिङ्गता । 'मनः' (पा.सू.४.१.११) इति ङीपो निषेधे 'डाबुभाभ्याम् अन्यतरस्याम्' (पा.सू.४.१.१३) इति डाप् । टिलोपः । **वृधानः** । ताच्छीलिकः चानश् । 'बहुलं छन्दसि' इति शपो लुक् । 'चितः' इत्यन्तोदात्तत्वम् । **अवृकाणि** 'वृञ् वरणे' । 'सृवृभूशुषिमुषिभ्यः कित्' (उ.सू.३.३२१) इति कन्प्रत्ययः । बहुव्रीहौ 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । **यज्यवे** । 'यजिमनिशुन्धिदसि-जनिभ्यो युः' इति युप्रत्ययः । वृषादेराकृतिगणत्वादाद्युदात्तत्वम् । **सुक्रतुः** । बहुव्रीहौ 'क्रत्वादयश्च' इत्युत्तरपदाद्युदात्तत्वम् । **सर्तवै** 'सृ गतौ' । 'कृत्यार्थे तवैकेन्'इति भावे तवैप्रत्ययः । गुणः । 'अन्तश्च तवै युगपत्' (पा.सू.६.१.२००) इति आद्यन्तयोः युगपत् उदात्तत्वम् । **अपः** । 'ऊडिदम्' इति शसः उदात्तत्वम् । **सृजत्** । लङि 'बहुलं छन्दस्य माङ्योगेऽपि' इति अडभावः ।।

**सिद्धाञ्जनम्– श्रवस्युः** श्रवणमिच्छन् **कृत्रिमा** क्रियानिर्वृत्तानि **सदनानि** वासगृहाणि । मायाविभिरसुरैर्मायया निर्मितानि पुराणि । **ओजसा** स्वकीयेन बलेन **विनाशयन्** प्रध्वंसयन्, **क्ष्मया** भूम्या समानं **वृधानः** वर्धमानः । यावती पृथुला पृथ्वी तावान् स्वयमपि पृथुलो वृद्धिं

प्राप्नुवन्, इन्द्रे, एवंवर्धनपरे सति असुरपुराणि तद्बलेन विनाशितानि भवन्ति खलु । अपि च किं कुर्वन्? **ज्योतींषि** दिव्यानि चित्प्रकाशलक्षणानि **अवृकाणि** वृकपदवेदनीय-च्छेदनशील-असुरविरहितानि, निर्बाधकानि **कृण्वन्** कुर्वन् । एवंविधः **सुक्रतुः** शोभनकर्मा **सः** इन्द्रः **यज्यवे** यजमानाय तदनुग्रहार्थं **सर्तवै** सरणाय **अपः** जीवनधारणप्रकाशनादिसमर्थाः ज्योतिर्वाहिनीः शक्तीः **अव सृजत् हि** अवसृष्टवान् वर्षितवान् खलु । **कृत्रिमा** 'डु कृञ् करणे' 'ड्वितः क्त्रिः' इति भावे क्त्रिप्रत्ययः, ततो मप्, शेर्लोपश्छन्दसि । **वृधानः**- ताच्छीलिकश्चानश्, शपो लोपः ॥

## ऋक्संहिता पदपाठसहिता

**दानाय मनः सोमपावन्नस्तु तेऽर्वाञ्चा हरी वन्दनश्रुदा कृधि ।**
**यमिष्ठासः सारथयो य इन्द्र ते न त्वा केता आ दभ्नुवन्ति भूर्णयः ॥ ७ ॥**
दानाय । मनः । सोमऽपावन् । अस्तु । ते । अर्वाञ्चा । हरी इति । वन्दनऽश्रुत् । आ कृधि । यमिष्ठासः । सारथयः । ये । इन्द्र । ते । न । त्वा । केताः । आ । दभ्नुवन्ति । भूर्णयः ॥ ७ ॥

**स्कन्द– दानाय** अस्मान् प्रति दानाय । **मनः**, हे **सोमपावन्** सोमानां पातः! **अस्तु ते, अर्वाञ्चा** अस्मदभिमुखौ च **हरी** । हे **वन्दनश्रुत्** स्तुतीनां श्रोतः! **आ कृधि** करोतिरत्रान्तर्णीतण्यर्थः । मर्यादया कारय । केन । उच्यते । **यमिष्ठासः** अतिशयेन यन्तारः **सारथयः ये**, हे **इन्द्र! ते** तव स्वभूताः यच्छब्दश्रुतेस्तैरिति वाक्यशेषः । किं कारणम् । उच्यते । ते यस्मात् **न** त्वाम् **केताः** 'कित ज्ञाने' ज्ञातारोऽप्यसुराः । **आ दभ्नुवन्ति** वधकर्माऽयम् (तु.निघ.२,१९) हिंसन्ति । **भूर्णयः** भ्रमणशीलाः । यस्माज्जानन्तोऽप्यनवस्थायिनोऽपि च सन्तोऽसुराः न त्वामागच्छन्तं हिंसितुं शक्नुवन्ति । तस्मादागमनार्थमर्वाञ्चौ हरी कारयेत्यर्थः ॥

**वेङ्कटमाधव– दानाय मनः** । सोमस्य पातः! । **अस्तु** तव । अस्मदभिमुखौ अश्वौ । स्तुतीनां श्रोतः! । आकृणुष्व । यन्तृतमाः **सारथयः ये** भवन्ति **इन्द्र!** त्वदीयाः । न त्वां शत्रूणाम् अभिमननानि भ्रमणशीलानि **आ दभ्नुवन्ति** ॥ ७ ॥

**मुद्गल– हे सोमपावन्** सोमस्य पातः, इन्द्र! । **ते** त्वदीयम् **मनः दानाय** अस्मदभिमतफलप्रदानाय **अस्तु** भवतु । हे **वन्दनश्रुत्!** वन्दनानां स्तुतीनां श्रोतः । **हरी** त्वदीयावश्वौ

**अर्वाञ्चा** अस्मद्यज्ञाभिमुखौ **आ कृधि** आभिमुख्येन कुरु । हे इन्द्र! **ते** तव स्वभूताः **ये सारथयः** सन्ति ते **यमिष्ठासः** अतिशयेन यन्तारः । अश्वनियमनकुशला इत्यर्थः । यस्मादेवं तस्मात् **केताः** प्रातिकूल्यज्ञातारः । **भूर्णयः** स्वकीयायुधादीनां भर्तारः । **त्वा** त्वाम् **न आ दभ्नुवन्ति** न हिंसन्ति ।। ७ ।।

**सायण–** हे **सोमपावन्** सोमस्य पातः, इन्द्र! । **ते** त्वदीयम् **मनः दानाय** अस्मदभिमत फलप्रदानाय **अस्तु** भवतु । हे **वन्दनश्रुत्!** वन्दनानां स्तुतीनां श्रोतः । **हरी** त्वदीयावश्वौ **अर्वाञ्चा** अस्मद्यज्ञाभिमुखौ **आ कृधि** आभिमुख्येन कुरु । हे इन्द्र! **ते** तव स्वभूताः **ये सारथयः** सन्ति ते **यमिष्ठासः** अतिशयेन यन्तारः । अश्वनियमनकुशला इत्यर्थः । यस्मादेवं तस्मात् **केताः** प्रातिकूल्यज्ञातारः । **भूर्णयः** स्वकीयायुधादीनां भर्तारः । यद्वा भीतास्तीक्ष्णाः शत्रवः **त्वा** त्वां **न आ दभ्नुवन्ति** न हिंसन्ति ।।

**सोमपावन्** 'आतो मनिन्' इति वनिप् । 'असम्बुद्धौ' इति पर्युदासाद्दीर्घाभावः । **अर्वाञ्चा** । 'सुपां सुलुक्' इति विभक्तेराकारः । **वन्दनश्रुत्** 'वदि अभिवादनस्तुत्योः' । इदित्त्वान्नुम् । भावे ल्युट् । तेषां श्रोता । 'श्रु श्रवणे' । क्विपि तुगागमः । **यमिष्ठासः** । यन्तृशब्दात् 'तुश्छन्दसि' इति इष्ठन्प्रत्ययः । 'तुरिष्ठेमेयस्सु' इति तृलोपः । नित्त्वादाद्युदात्तत्वम् । 'आज्जसेरसुक्' इति असुक् । **केताः** 'कित ज्ञाने' । चिकेतति प्रतिकूलं जानन्तीति केताः । पचाद्यच् । वृषादेराकृतिगणत्वादाद्युदात्तत्वम् । यद्वा प्रतिकूलतया ज्ञायन्ते इति केताः । कर्मणि घञ् । ञित्त्वादाद्युदात्तत्वम् । **दभ्नुवन्ति** । 'दम्भु दम्भे' । स्वादित्वात् श्नुः । तस्य ङित्त्वात् 'अनिदिताम्' इति नलोपः । संयोगपूर्वत्वेन 'हुश्नुवोः' इति यणादेशाभावे 'अचिश्नुधातु' इत्यादिना अवङादेशः । **भूर्णयः** 'भृञ् भरणे' । 'घृणिः पृश्निः' इत्यादौ अस्मात् निप्रत्ययान्तो निपात्यते । ऋत उत्वं दीर्घश्च । यद्वा 'भृ भये' इत्यस्मात् 'कृत्यल्युटो बहुलम्' इति कर्तरि क्तिनि 'उदोष्ठ्यपूर्वस्य' इति उत्वम् । 'हलि च' इति दीर्घः । 'ऋकारल्वादिभ्यः क्तिन्निष्ठावद्भवति' (पा.सू.८.२.४४.१) इति निष्ठावद्भावात् नत्वम् । नित्त्वादाद्युदात्तत्वम् ।। ७ ।।

**सिद्धाञ्जनम्–** हे **सोमपावन्** सोमस्य पातः! **ते मनः** त्वदीयं मनः । **दानाय** अस्मदभीष्ट फलदानाय **अस्तु** भवतु । हे **वन्दनश्रुत्** वन्दनानां स्तोत्राणां श्रोतः! **हरी** त्वदीयावश्वौ **अर्वाञ्चा** अर्वाञ्चौ अस्मदभिमुखौ **आ कृधि** समीपे कुरु, सन्निहितौ कुरु । हे इन्द्र! **ये** तव स्वभूताः

**सारथयः** सन्ति **ते यमिष्ठासः** अतिशयेन यन्तारः नियमनकुशलाः । अपि च **भूर्णयः** त्वदीयसाधनानां भर्तारः । **केताः** प्रज्ञाचक्षुषोऽश्वः **त्वा** त्वां **न आ दभ्नुवन्ति** न वञ्चयन्ति, अपथं न प्रापयन्ति । **सोमपावन्**–पिबतेः, 'आतो मनिन्' इति वनिप् । **यमिष्ठासः**–यन्तृशब्दात् 'तुश्छन्दसि' इति इष्ठनूप्रत्ययः । **केताः**–'कित ज्ञाने' केतन्ति जानन्तीति केताः । पचाद्यच् । **दभ्नुवन्ति**–'दभु दम्भे' स्वादित्वात् श्नुः । **भूर्णयः**–'भृञ् भरणे' अस्मात् निप्रत्ययान्तो निपातितः, ऋत उत्वं दीर्घश्च ॥ ७ ॥

## ऋक्संहिता पदपाठसहिता

**अप्रक्षितं वसु बिभर्षि हस्तयोरषाळ्हं सहस्तन्वि श्रुतो दधे ।**
**आवृतासोऽवतासो न कर्तृभिस्तनूषु ते क्रतव इन्द्र भूरयः ॥ ८ ॥**
अप्रऽक्षितम् । वसु । बिभर्षि । हस्तयोः । अषाळ्हम् । सहः । तन्वि । श्रुतः । दधे ।
आऽवृतासः । अवतासः । न । कर्तृऽभिः । तनूषु । ते । क्रतवः । इन्द्र । भूरयः ॥

**स्कन्द– अप्रक्षितम्** अप्रक्षीणम् । **वसु बिभर्षि** धारयसि **हस्तयोः** । अक्षय धनं तवास्तीत्यर्थः । **अषाळ्हम् सहः** अनभिभूतं च बलम् **तन्वि** स्वशरीरे **श्रुतः** विख्यातः त्वम् **दधे** व्यत्ययेनायमुत्तमपुरुषः । धारयसि । स्वशरीरेण चानभिभूतपूर्वबलयुक्तोऽसीत्यर्थः । किञ्च **आवृतासः** परिवृताः । के । सामर्थ्यात् त्वदर्थाः सोमाः । कथम् । **अवतासः न** कूपा इव उदकार्थिभिः । केन परिवृताः । उच्यते । **कर्तृभिः** ऋत्विग्भिः । त्वदर्थान् संस्कृतान् सोमान् परिवृता ऋत्विजः त्वत्प्रतीक्षा आसते इत्यर्थः । किञ्च **तनूषु** व्यत्ययेनेदं बहुवचनम् । शरीरे **ते** तव **क्रतवः** प्रज्ञाः कर्माणि वा हे **इन्द्र! भूरयः** बहवः । स्वशरीरेण च त्वं बहुप्रज्ञो बहुवृत्र वधादिकर्मयुक्तो वेत्यर्थः ॥ ८ ॥

**वेङ्कटमाधव–** अप्रक्षीणम् धनम् बिभर्षि **हस्तयोः** । अनभिभूतं बलम् शरीरे विश्रुतः इन्द्रः धारयति । यथा उदकोद्धरणपरैः कूपाः परिवृताः भवन्ति एवं तव अङ्गेषु तानि तानि बहूनि कर्माणि परिवृतानि । अत्र ताण्ड्यकम्– 'इन्द्रं सर्वाणि भूतान्यस्तुवन् तस्यश्र्य एकमङ्गमस्तुतमचायत' (ता.ब्रा.५,४.१४) इति ॥ ८ ॥

**मुद्गल–** हे **इन्द्र!** त्वम् **अप्रक्षितम्** प्रक्षयरहितम् । वसु धनम् **हस्तयोः बिभर्षि** स्तोतृभ्यो

दातुं धारयसि । तथा **श्रुतः** प्रख्यातो भवान् **तन्वि** आत्मीये शरीरे **अषाळ्हम्** शत्रुभिरनभिभूतं **सहः** बलम् **दधे** धारयति । त्वदीयास्तनवः कर्तृभिः वृत्रादेरसुरस्य वधं कुर्वद्भिः बलकृतैः कर्मभिः **आवृतासः** आवृताः । बलकृतानि सर्वाणि कर्माण्येतस्य शरीरमावृत्यावतिष्ठन्ते । दृष्टान्तः– **अवतासः न** 'अवतः' (निघ.३,२३) इति कूपनाम । यथा कूपा जलोद्धरणाय प्रवृत्तैः प्राणिभिराव्रियन्ते तद्वत् । यस्मादेवं तस्मात् हे इन्द्र! **ते** तव **तनूषु** शरीरेषु **क्रतवः** कर्माणि **भूरयः** बहूनि विद्यन्ते ।। ८ ।।

**सायण–** हे **इन्द्र!** त्वम् **अप्रक्षितम्** प्रक्षयरहितम् । **वसु** धनम् **हस्तयोः बिभर्षि** स्तोतृभ्यो दातुं धारयसि । तथा **श्रुतः** प्रख्यातो भवान् **तन्वि** आत्मीये शरीरे **अषाळ्हम्** शत्रुभिरनभिभूतं **सहः** बलम् **दधे** धारयति । त्वदीयास्तनवः कर्तृभिः वृत्रादेरसुरस्य वधं कुर्वद्भिः बलकृतैः कर्मभिः **आवृतासः** आवृताः । बलकृतानि सर्वाणि कर्माण्येतस्य शरीरमावृत्यावतिष्ठन्ते । तत्र दृष्टान्तः– **अवतासः न** 'अवतः' (निघ.३,२३) इति कूपनाम । यथा कूपा जलोद्धरणाय प्रवृत्तैः प्राणिभिराव्रियन्ते तद्वत् । यस्मादेवं तस्मात् हे इन्द्र! **ते** तव **तनूषु** शरीरेषु **क्रतवः** कर्माणि **भूरयः** बहूनि विद्यन्ते ।।

**अप्रक्षितम्** 'क्षि क्षये' इत्यस्माद् भावे निष्ठा । अण्यदर्थे (पा.सू.६.४.६०) इति पर्युदासाद् दीर्घाभावः । अत एव 'क्षियो दीर्घात्' इति निष्ठानत्वाभावः । प्रकृष्टं क्षितं यस्य तत् प्रक्षितम् । न प्रक्षितम् अप्रक्षितम् । अव्ययपूर्वपदप्रकृतिस्वरत्वम् । **बिभर्षि** 'डु भृञ् धारणपोषणयोः' लटि सिपि शपः श्लुः । 'भृञामित्' इति अभ्यासस्य इत्वम् । **अषाळ्हम्** 'षह अभिभवे' इत्यस्मात् निष्ठायां तकारादौ प्रत्यये 'तीपसह' (पा.सू.७.२.४८) इति इटः विकल्पितत्वात् 'यस्य विभाषा' इति इट्प्रतिषेधः । ढत्वधत्वष्टुत्वढलोपेषु 'सहिवहोरोदवर्णस्य' इति ओत्वे प्राप्ते 'साढ्यै साढ्वा साढेति निगमे' (पा.सू.६.३.११३) इति निपातनात् आत्वम् । यदुक्तं साढेति तृजन्तमेतदिति तदुपलक्षणार्थं द्रष्टव्यम् । **तन्वि** । 'जसादिषु च्छन्दसि वा वचनम्' इति 'अच्च घेः' (पा.सू.७.३.११९) इति अत्वौत्वयोरभावे यणादेशः । 'उदात्तस्वरितयोर्यणः' इति विभक्तेः स्वरितत्वम् । 'उदात्तयणो हल्पूर्वात्' इति उदात्तत्वं तु छान्दसत्वान्न प्रवर्तते ।। ८ ।।

**सिद्धाञ्जनम्–** हे **इन्द्र!** त्वं **अप्रक्षितं** प्रक्षयरहितं अनश्वरं **वसु** धनं **हस्तयोः** त्वद्वशे **बिभर्षि** धारयसि । अत्र धनमिदम् अलौकिकं स्पष्टमुक्तम् अवधेयम् । **श्रुतः** प्रख्यातो भवान्

**अषाळ्हम्** शत्रुभिरनभिभूतं **सहः** बलं **तन्वि** शरीरे **दधे** धारयति । **ते** तव **तनूषु** शरीरावयवेषु **कर्तृभिः** यजनकर्तृभिः यजमानैः । अथवा त्वद्विभूतिभूतैः वृत्रवधादित्वत्कृत्यनिर्वाहिभिः निष्पाद्यमाना निष्पादिताश्च **क्रतवः** प्राज्ञकर्मबलानि **भूरयः** बहूनि अवतिष्ठन्ते । तत्र दृष्टान्तः–**आवृतासः अवतासो न** यथा कूपाः जलोद्धरणाय जनैरावृताः, तद्वत् तवावयवानावृत्य प्रभूतकर्मक्षमाणि प्राज्ञानि बलान्यवस्थितानीति भावः ।। **अप्रक्षितम्**–'क्षि क्षये' भावे निष्ठा । **अषाळ्हम्**–'षह अभिभवे' इत्यस्मान्निष्ठायां तकारादौ प्रत्यये, विकल्पितत्वात् इट्प्रतिषेधः, सहेरोत्वे प्राप्ते साढ्यै साढ्वा साढेति निगमे निपातितः । **तन्वि**–'जसादिषु छन्दसि' इति लोपे, 'अच्च घेः' इत्यौत्वात्वयोरभावे यणादेशः ।। ८ ।।

।। इति प्रथमाष्टके चतुर्थाध्याये विंशो वर्गः ।।

## ।। अथ एकविंशो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

### (सूक्तम् ५६)

६ सव्य आङ्गिरसः । इन्द्रः । जगती ।

**एष प्र पूर्वीरव तस्य चम्रिषोऽत्यो न योषामुदयंस्त भुर्वणिः ।**
**दक्षं महे पाययते हिरण्ययं रथमावृत्या हरियोगमृभ्वसम् ।। १ ।।**

एषः । प्र । पूर्वीः । अव । तस्य । चम्रिषः । अत्यः । न । योषाम् । उत् । अयंस्त । भुर्वणिः । दक्षम् । महे । पाययते । हिरण्ययम् । रथम् । आऽवृत्य । हरिऽयोगम् । ऋभ्वसम् ।। १ ।।

**स्कन्द– एष प्र** तच्छब्दश्रुतेर्यच्छब्दमध्याहृत्यैष शब्दो द्वितीये पादे योजयितव्यः । प्रशब्दस्तूपसर्गः 'पाययते' इत्याख्यातेन सम्बन्धयितव्यः । **अव** हस्युपसर्गः । **उदयंस्त** इत्याख्यातेन सम्बन्धयितव्यः । य एष इन्द्रः **अत्यः न योषाम्** 'अत्यः' (निघ.१.१४) इत्यश्वनाम । योषा स्त्री । यथाऽश्वो मैथुनकाले वडवां स्त्रियं तद्वत् । अव, उत्, अयंस्त । उदित्येषः नीत्येतस्य स्थाने । अवन्ययंस्त अधो नियच्छत्यात्मनः । किम् । अनिर्देशात् कृत्स्नं जगत् । **भुर्वणिः** भुर्वतेरत्तिकर्मण इदं रूपम् । सोमभक्षणशीलः । **पूर्वीः** पूर्वाः **चम्रिषः** चम्यन्ते

ताः इति चम्रिषः सोमाः इहाभिप्रेताः । पूर्वस्मिंस्तावत्काले ये सोमाः ते तस्येत्यर्थः । न च केवलाः । किं तर्हि । इदानीमपि **दक्षम्** दक्षशब्द इहात्मवचनः । 'श्रेयांसं दक्षं मनसा जगृभ्यात्' (ऋ.१०,३१,२) इति यथा । आत्मानम् **महे** महते । कस्मै । सामर्थ्यात् सङ्ग्रामाय **पाययते हिरण्ययम्** हिरण्मयसदृशं सोमम् । किं पुनः सोमहिरण्मययोः सादृश्यम् । उज्ज्वलत्वं प्रियता वा.. ।। १ ।।

**वेङ्कटमाधव–** अयम् **तस्य** यजमानस्य प्रोद्यच्छति अवस्थितानि चमसादिषु बहूनि अन्नानि । अश्वः यथा अश्वां मैथुनायाधःस्थितां दृढां परिगृह्योद्यच्छति । **भुर्वणिः** अत्ता भुर्वतेरत्तिकर्मणः, प्रवृद्धं सोममात्मानम् **पाययते** महते वृत्रहननकर्मणे हिरण्मयम् **रथम् आवृत्य** हरिभ्यां युक्तं दीप्तम् ।। १ ।।

**मुद्गल–** 'एष प्र पूर्वीः' इति षडृचं षष्ठं सूक्तम् । सव्य ऋषिः । जगती छन्दः । इन्द्रो देवता ।।

**भुर्वणिः** अत्ता **एषः** इन्द्रः । **तस्य** यजमानस्य **पूर्वीः** प्रभूताः **चम्रिषः** चमूषु चमसेष्ववस्थिताः सोमलक्षणाः इषः **प्र अव उत् अयंस्त** प्रकर्षेण पानार्थमुद्धरति । दृष्टान्तः । **अत्यः न योषाम्** यथाऽश्वो वडवां क्रीडार्थमुपयच्छति । स चेन्द्रः **हिरण्ययम्** सुवर्णमयम् **हरियोगम्** अश्वाभ्यां युक्तम् **ऋभ्वसम्** उरु भासमानम् **रथम् आवृत्य** अवस्थाप्य **महे** महते वृत्रवधादिरूपाय कर्मणे **दक्षम्** प्रवृद्धम् आत्मानं सोमम् **पाययते** पानं कारयति ।। १ ।।

**सायण–** 'एष प्र पूर्वीः' इति षडृचं षष्ठं सूक्तं सव्यस्यार्षमैन्द्रं जागतमित्युक्तम् । अनुक्रान्तं च– 'एष प्र षट्' इति । विषुवति निष्केवल्ये एतत् सूक्तं शंसनीयम् । 'विषुवान्दिवाकीर्त्यः' इति खण्डे सूत्रितम्– 'एष प्र पूर्वीर्वृषामदः प्र मंहिष्ठाय' (आश्व.श्रौ.८.६) इति ।।

**भुर्वणिः** अत्ता **एषः** इन्द्रः । **तस्य** यजमानस्य **पूर्वीः** प्रभूताः **चम्रिषः** चमूषु चमसेष्ववस्थिताः सोमलक्षणाः इषः **प्र अव उत् अयंस्त** प्रकर्षेण पानार्थमुद्धरति । तत्र दृष्टान्तः– **अत्यो न योषाम्** यथाऽश्वो वडवां क्रीडार्थमुपयच्छति । स चेन्द्रः **हिरण्ययम्** सुवर्णमयम् **हरियोगम्** हरिभ्यां युक्तम् **ऋभ्वसम्** उरु भासमानम् **रथम् आवृत्य** अवस्थाप्य **महे** महते वृत्रवधादिरूपाय कर्मणे **दक्षम्** प्रवृद्धम् आत्मानं सोमम् **पाययते** पानं कारयति ।।

**पूर्वीः** 'पॄ पालनपूरणयोः' । 'पॄभिदिव्यधि' (उ.सू.१.२३) इत्यादिना कुप्रत्ययः । 'उदोष्ठ्यपूर्वस्य' इति उत्वम् । पुरुशब्दात् 'वोतो गुणवचनात्' इति ङीष् । यणादेशः । 'हलि च' इति दीर्घत्वम् । प्रत्ययस्वरः । **चम्रिषः** 'चमु अदने' इत्यस्मात् 'कृपिचमितनिधनि' (उ.सू. १.८१) इत्यादिना ऊप्रत्ययान्तश्चमूशब्दः । तस्यां वर्तमाना इषः चम्विषः । वकारस्य रेफश्छान्दसः । कृदुत्तरपदप्रकृतिस्वरत्वम् । **अयंस्त** । छान्दसे वर्तमाने लुङि व्यत्ययेनात्मनेपदम् । 'एकाचः' इति इट्प्रतिषेधः । **भुर्वणिः** ।'भुर्वतिरत्तिकर्मा' (निरु.९.२३) इति यास्कः । धातुपाठे तु 'भर्व हिंसायाम्' इति पठ्यते । अस्मात् औणादिकः अनिप्रत्ययः । अकारस्य उकारश्छान्दसः । **पाययते** 'पा पाने' । 'शाच्छासाह्वाव्यावेपां युक्' (पा.सू.७.३.३७) इति हेतुमति णिचि युगागमः । 'णिचश्च' (पा.सू.१.३.७४) इत्यात्मनेपदम् । **हिरण्ययम्** । 'ऋत्व्यवास्त्व्य' इत्यादिना हिरण्यशब्दात् उत्तरस्य मयटो मशब्दलोपो निपात्यते । **हरियोगम्** । हर्योर्योगो योजनं यस्मिन् । हरिशब्दः इन्प्रत्ययान्तः आद्युदात्तः । स एव बहुव्रीहिस्वरेण शिष्यते । **ऋभ्वसम्** । उरु भासम् इत्यस्य पृषोदरादित्वात् ऋभ्वसादेशः ।। १ ।।

**सिद्धाञ्जनम्–** दशमेऽनुवाके 'एष प्र पूर्वीः' इति षडृचं षष्ठं सूक्तम् । ऐन्द्रं जागतं सव्यस्यार्षम् ।। तत्र प्रथमां ऋचमाह–

**भुर्वणिः** अत्ता भोक्तेत्यर्थः । **एषः** इन्द्रः **तस्य** स्वीयस्य यजमानस्य **पूर्वीः** भूरीः **चम्रिषः** चमूषु चमसेषु अवस्थिताः इषः एषणाः **प्र अव उदयंस्त** प्रकर्षेण स्वयम् अवनम्य उद्धरति । इन्द्रः स्वस्थानाद् अवतीर्य यजमानस्वभूतान्नमयादिशरीरेषु चमसपदवेदनीयेषु अवस्थिताः 'इषः' प्रेरणाशक्तीः ऊर्ध्वं नयतीति भावः । आर्भवसूक्ते (१.२०) चमसो विचारितः । तत्र दृष्टान्तः– **अत्यो न योषाम्** अश्वो यथा वडवामुपगच्छति रतये तद्वत् । स चेन्द्रः **हिरण्ययम्** सुवर्णमयं **हरियोगम्** हरिभ्याम् अश्वाभ्यां योगो योजनं यस्मिन् रथे तम् **ऋभ्वसम्** महान्तम्, उरु भासमानमिति सायणः, स एव ऋभ्वा महन्नामेत्युदाहरन् ऋभ्वसं प्रवृद्धं महान्तमिति व्याचष्टे (९.८६.५, ५.५२.८) । एवम्भूतं **रथम् आवृत्य** आवर्त्य यजमानस्याभिमुख्येन आवृत्तं कृत्वा **महे** महते कर्मणे असुरवधादये । **दक्षम्** विवेचनकुशलमात्मानं **आ पाययते** पानं कारयति ।।

**पूर्वीः**–'पृ पालनपूरणयोः', 'पृभिदिव्यधि' इत्यादिना कुप्रत्ययः । पुरुशब्दाद् गुणवचनात् ङीष् । **चम्रिषः**–चमूषु वर्तमाना इषः । तर्हि चम्विषः. वकारस्य रेफादेशश्छान्दसः । चमसेषु

सोमा एवावतिष्ठन्ते । अत एव सोमलक्षणा इषः अन्नानीति बाह्योऽर्थ उपपद्यते । कथं तर्हि अन्तर्यागे तात्पर्योपपत्तिरिति चेत्, तत्रापि इषां सोमलक्षणत्वं, प्रेरणाशक्तीनां रसभरितत्वं बोध्यम्, अथवा सोमानां सम्मदरसानां एषणाभरितत्वमिति साधीयानर्थः । एवं 'पाययते' इति क्रियापदार्थ सङ्गतिः ।। **भुर्वणिः**–'भर्व हिंसायाम्' इति धातुपाठे वर्तमानेऽपि भर्वतिरत्तिकर्मेति यास्कम् अनुसृत्य सायणीयव्याख्यानं भवति । तदिह युक्तम् ।। १ ।।

## ऋक्संहिता पदपाठसहिता

**तं गूर्तयो नेमन्निषः । परीणसः समुद्रं न संचरणे सनिष्यवः ।**
**पतिं दक्षस्य विदथस्य नू सहो गिरिं न वेना अधि रोह तेजसा ।। २ ।।**
**तम् । गूर्तयः । नेमन्ऽइषः । परीणसः । समुद्रम् । न । सम्ऽचरणे । सनिष्यवः ।**
**पतिम् । दक्षस्य । विदथस्य । नु । सहः । गिरिम् । न । वेनाः । अधि । रोह । तेजसा ।।**

**स्कन्द–** इतः आरभ्य आचतुर्थाध्यायपरिसमाप्ति स्कन्दस्वामिव्याख्यानम् अनुपलब्धम् । ..... .......... ।। २ ।।

**वेङ्कटमाधव– तम्** त्वाम् उद्युक्ताः गमनमिच्छन्तो मनुष्याः समृद्धाः प्रतीक्षन्ते । **समुद्रम्** इव सञ्चरणकाले द्वीपान्तराद्धनमिच्छन्तो वणिजः **पतिम्** बलस्य यज्ञस्य च । क्षिप्रं बलं त्वमिन्द्र **गिरिम्** इव कान्तः सिंहः तेजसा युक्तः **अधि** तिष्ठ ।। २ ।।

**मुद्गल– गूर्तयः** स्तोतारः **नेमन्निषः** नमस्कारपूर्वं गच्छन्तः **परीणसः** परितो व्याप्नुवन्तः । एवंगुणविशिष्टास्ते यजमानाः **तम्** इन्द्रम् स्तुतिभिः अधिरोहन्ति । स्तुवन्ति इत्यर्थः । दृष्टान्तः । **सनिष्यवः** सनिं धनम् आत्मन इच्छन्तो वणिजो धनार्थम् । **सञ्चरणे** सञ्चारे निमित्तभूते सति **समुद्रम् न** यथा नावा समुद्रम् अधिरोहन्ति एवं स्तोतारोऽपि स्वाभिमतधनलाभाय इन्द्रं स्तुवन्तीति भावः । हे स्तोतः! त्वं च **दक्षस्य** प्रवृद्धस्य **विदथस्य** यज्ञस्य **पतिम्** पालयितारम् **सहः** सहस्वन्तं बलवन्तमिन्द्रम् **तेजसा** देवताप्रकाशकेन स्तोत्रेण **नु** क्षिप्रम् **अधि रोह** स्तुहीति यावत् । दृष्टान्तः– **वेनाः** कान्ताः स्त्रियः । **गिरिम् न** यथा पर्वतं स्वाभिमतपुष्पोपचयार्थम् अधिरोहन्ति ।।

**सायण– गूर्तयः** स्तोतारः **नेमन्निषः** नमस्कारपूर्वं गच्छन्तः । यद्वा नीतहविष्काः । **परीणसः** परितो व्याप्नुवन्तः एवंगुणविशिष्टा यजमानाः । **तम्** इन्द्रं स्तुतिभिः अधिरोहन्ति स्तुवते इत्यर्थः ।

तत्र दृष्टान्तः– **सनिष्यवः** सनिं धनम् आत्मन इच्छन्तो वणिजो धनार्थम् । **सञ्चरणे** सञ्चारे निमित्तभूते सति **समुद्रम् न** यथा नावा समुद्रम् अधिरोहन्ति एवं स्तोतारोऽपि स्वाभिमतधनलाभाय इन्द्रं स्तुवन्तीति भावः । हे स्तोतः! त्वं च **दक्षस्य** प्रवृद्धस्य **विदथस्य** यज्ञस्य **पतिम्** पालयितारम् **सहः** सहस्वन्तं बलवन्तमिन्द्रम् **तेजसा** देवताप्रकाशकेन स्तोत्रेण **नु** क्षिप्रम् **अधि रोह** स्तुहीति यावत् । तत्र दृष्टान्तः– **वेनाः** कान्ताः स्त्रियः । **गिरिम् न** यथा पर्वतं स्वाभिमतपुष्पोपचयार्थम् अधिरोहन्ति ॥

**गूर्तयः** 'गॄ शब्दे' । गृणन्ति स्तुवन्तीति गूर्तयः । 'क्तिच्क्तौ च' इति कर्तरि क्तिच् । 'बहुलं छन्दसि' इति उत्वम् । 'हलि च' इति दीर्घः । 'चितः' इत्यन्तोदात्तत्वम् । **नेमन्निषः** 'णमु प्रह्वत्वे' इत्यस्मात् शतरि व्यत्ययेन एत्वम्, तकारस्य नकारादेशश्च । नमन्तः इष्यन्तीन्द्रं प्राप्नुवन्तीति नेमन्निषः । 'इषु गतौ' इत्यस्मात् 'क्विप् च' इति क्विप् । कृदुत्तरपदप्रकृतिस्वरत्वम् । यद्वा 'णीञ् प्रापणे' इत्यस्मात् 'अर्तिस्तुसु' इत्यादिना मन्प्रत्ययः । बहुलवचनात् नकारस्य इत्संज्ञाभावः । नीताः प्रत्ता इषो येषाम् । 'परादिश्छन्दसि बहुलम्' इत्युत्तरपदाद्युदात्तत्वम् । **परीणसः** 'णस कौटिल्ये' इत्ययं धातुर्गत्यर्थः । धातूनाम् अनेकार्थत्वात् । परितो नसन्ति गच्छन्तीति परीणसः । 'क्विप् च' इति क्विप् । 'निपातस्य च' इति पूर्वपदस्य दीर्घत्वम् । 'उपसर्गादसमासेऽपि' इति णत्वम् । व्यत्ययेनाद्युदात्तत्वम् । यद्वा । नशतिर्गतिकर्मा । अस्मात् पूर्ववत् क्विपि शकारस्य सकारः । **सनिष्यवः** । 'षणु दाने' इत्यस्मात् 'इन्सर्वधातुभ्यः' इति कर्मणि इन्प्रत्ययः । सनिम् आत्मन इच्छन्तीति क्यचि 'सर्वप्रातिपदिकेभ्यो लालसायामसुग्वक्तव्यः सुगागमोऽपि वक्तव्यः' (का.७.१.५१.३) इति सुक् । 'क्याच्छन्दसि' इति उप्रत्ययः । **नू** 'ऋचि तुनुघ' इति सांहितिको दीर्घः । **सहः** । अस्मादुत्तरस्य मतुपः छान्दसो लुक् ॥

**सिद्धाञ्जनम्– गूर्तयः** स्तोतारः । **नेमन्निषः** नमन्तः इष्यन्तः नमस्कारपूर्वकं प्रेरणाबलेन गच्छन्तः । **परीणसः** परितो व्याप्नुवन्तः । एवम्भूता यजमानाः **तम्** इन्द्रम् स्तुतिभिरधिरोहन्तीति शेषः । तत्र दृष्टान्तः– **सनिष्यवः** सनिं धनमात्मन इच्छन्तो वणिजः । **सञ्चरणे** सञ्चारे निमित्तभूते सति **समुद्रम् न** यथा नावा समुद्रम् अधिरोहन्ति तद्वत् । हे यजमान! त्वं **च दक्षस्य** विवेचनक्रियाकुशलस्य **विदथस्य** ज्ञानगम्यस्य अन्तर्यागस्य **पतिम्** पालयितारं **सहः** सहस्वन्तं इन्द्रं, **तेजसा** प्रकाशकेन, स्तोत्रप्रभावेण **अधिरोह नु** क्षिप्रं अधिरोह । इन्द्रपदप्राप्तिः

पर्वतारोहेणोपमिता 'यत्सानोः सानुमारुहत्' इत्यत्र (१.१०.२) । अत्र दृष्टान्तः– **वेनाः गिरिम् न** कान्ताः कामयमाना वा अभीष्टं भोगमिति शेषः । यथा पर्वतमारोहन्ति तद्वत् ।। **गूर्तयः**– 'गृ शब्दे' गृणन्ति स्तुवन्तीति गूर्तयः । क्तिच्, छन्दसि उत्वं दीर्घश्च । **नेमन्निषः**–'णमु प्रह्वत्वे' अस्मात् शतरि व्यत्ययेन एत्वम् । 'इष गतौ' अस्मात् क्विप्, इष्यन्तीति इषः, अन्यदुक्तं व्याख्यायाम् । **परीणसः**–नसतिर्गत्यर्थः । 'उपसर्गादसमासेऽपि' णत्वं, 'निपातस्य च' इति पूर्वपदस्य दीर्घत्वम् । **सहः**–सहस्वन्तं, मतुपो लोपश्छान्दसः ।। २ ।।

## ऋक्संहिता पदपाठसहिता

**स तुर्वणिर्महाँ अरेणु पौंस्ये गिरेर्भृष्टिर्न भ्राजते तुजा शवः ।**
**येन शुष्णं मायिनमायसो मदे दुध्र आभूषु रामयन्नि दामनि ।। ३ ।।**
**सः । तुर्वणिः । महान् । अरेणु । पौंस्ये । गिरेः । भृष्टिः । न । भ्राजते । तुजा । शवः ।**
**येन । शुष्णम् । मायिनम् । आयसः । मदे । दुध्रः । आभूषु । रमयत् । नि । दामनि ।।**

**वेङ्कटमाधव– सः** क्षिप्रः महान् च । तस्य वीरकर्मणि रेणुवर्जितं शुद्धं बलं शिलोच्चयस्य सानुरिव पृथग्भूतं विस्पष्टं राजते । शत्रूणां हिंसया बलं प्रकाशं भवति । **येन** शवसा **शुष्णम्** । असुरम् मायाविनम् दृढशरीर इन्द्रः सोममदे दुर्धरः आत्मीयदेशेषु कारागृहे निगडे अत्यन्तम् अरमयत् ।। ३ ।।

**मुद्गल– सः** इन्द्रः । **तुर्वणिः** शत्रूणां हिंसिता **महान्** प्रवृद्धश्च भवति । तस्येन्द्रस्य **शवः** बलम् **पौंस्ये** वीरैः पुरुषैः कर्तव्ये सङ्ग्रामे **अरेणु** अनवद्यम् **तुजा** शत्रूणां हिंसकं सत् **भ्राजते** दीप्यते । दृष्टान्तः– **गिरेः** पर्वतस्य **भृष्टिर्न** शृङ्गमिव । तद्यथा उन्नतं सत् दीप्यते तद्वत् **आयसः** अयोमयकवचयुक्तदेहः । **दुध्रः** दुष्टानां शत्रूणां धर्ता अवस्थापयिता । एवम्भूत इन्द्रः **मदे** सोमपानेन हर्षे सति **येन** बलेन **शुष्णम्** सर्वस्य शोषकम् असुरम् **मायिनम्** मायाविनम् **आभूषु** कारागृहेषु **दामनि** बन्धके निगडे **नि रमयत्** न्यवासयत् । तद्बलमिति पूर्वेणान्वयः ।। ३ ।।

**सायण– सः** इन्द्रः । **तुर्वणिः** शत्रूणां हिंसिता क्षिप्रकारी वा । 'तुर्वणिस्तूर्णवनिः' (निरु.६.१४) इति यास्कः । तूर्णसम्भजन इति तस्यार्थः । **महान्** प्रवृद्धश्च भवति । तस्येन्द्रस्य **शवः** बलम् **पौंस्ये** वीरैः पुरुषैः कर्तव्ये सङ्ग्रामे **अरेणु** अनवद्यम् **तुजा** शत्रूणां हिंसकं सत्

**भ्राजते** दीप्यते । दृष्टान्तः– **गिरेः** पर्वतस्य **भृष्टिर्न** शृङ्गमिव । तद्यथोन्नतं सद् दीप्यते तद्वत् **आयसः** अयोमयकवचयुक्तदेहः । **दुध्रः** दुष्टानां शत्रूणां धर्ताऽवस्थापयिता । एवम्भूत इन्द्रः **मदे** सोमपानेन हर्षे सति **येन** बलेन **शुष्णम्** सर्वस्य शोषकम् असुरम् **मायिनम्** मायाविनम् **आभूषु** कारागृहेषु **दामनि** बन्धके निगडे **नि रमयत्** न्यवासयत् । तद्बलमिति पूर्वेणान्वयः ।।

**तुर्वणिः** । तुर्वी हिंसार्थः । अस्माद् औणादिकः अनिप्रत्ययः । **अरेणु** । रेणुवदाच्छादकत्वात् रेणुशब्देनावद्यमुच्यते । बहुव्रीहौ 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । **तुजा** 'तुज हिंसायाम्' । इगुपधलक्षणः कः । 'सुपां सुलुक्' इति विभक्तेः आकारः । **दुध्रः** । दुष्टान् ध्रियतेऽवस्थापयतीति दुध्रः । 'धृञ् अवस्थाने' इत्यस्मात् अन्तर्भावितण्यर्थात् मूलविभुजादित्वात् कप्रत्ययः (पा.सू. ३.२.५.२) । यणादेशः । रेफलोपश्छान्दसः । **रमयत्** । अमन्तत्वात् मित्त्वे 'मितां ह्रस्वः' इति ह्रस्वत्वम् । छान्दसः संहितायां दीर्घः ।। ३ ।।

**सिद्धाञ्जनम्– सः** इन्द्रः **तुर्वणिः** जयशीलः क्षिप्रकारी वा । **महान्** प्रवृद्धश्च । तस्य **शवः** बलं **पौंस्ये** पुंस्त्वे तल्लक्षिते सङ्ग्रामे **अरेणु** रेणुरहितं अनवद्यं स्वच्छमिति यावत् **तुजा** चोदनाशक्त्या **भ्राजते** दीप्यते । तत्र दृष्टान्तः– **गिरेः भृष्टिर्न** पर्वतस्य शृङ्गमिव, सर्वोन्नतं इन्द्रस्य दीप्तं बलं लक्ष्यते । **आयसः** अयोमयः अभेद्य इति दार्ढ्यद्योतनार्थः शब्दः, आयसकवचयुक्त इति सायणः । **दुध्रः** दुष्टानां धर्ताऽवस्थापयिता, दुष्टान् दमयित्वा यथास्थानं अवस्थापयतीन्द्रः । एवम्भूतः **मदे** सोमपानजन्ये हर्षे सति । **येन** (पूर्ववाक्योक्तेन 'शवसा') बलेन **मायिनम्** मायाविनम् **शुष्णम्** असुरं एतन्नामकं **आभूषु** कारागृहेषु **दामनि** निगडे **नि रमयत्** नितरां अरमयत् न्यवासयत् बन्धनालये रन्तुमित्यर्थः । येनेति प्रक्रान्तं तत् शवः इति सम्बध्यते ।। **तुर्वणिः**–तुर्वतेः औणादिको निप्रत्ययः । **तुजा**– तुजतेः इगुपधलक्षणः कप्रत्ययः, विभक्तेराकारः । **दुध्रः**– दुर्ध्रः, 'धृञ् अवस्थाने' अस्मात् अन्तर्भावितण्यर्थात् कप्रत्ययः । रेफलोपश्छान्दसः । **रमयत्**–अरमयत्, अडभावः छान्दसः, दीर्घः संहितायाम् ।। ३ ।।

## ऋक्संहिता पदपाठसहिता

**देवी यदि तविषी त्वावृधोतय इन्द्रं सिषक्त्युषसं न सूर्यः ।**
**यो धृष्णुना शवसा बाधते तम इयर्ति रेणुं बृहदर्हरिष्वणिः ।। ४ ।।**

**दे॒वी । यदि॑ । तवि॑षी । त्वाऽवृ॑धा । ऊ॒तये॑ । इन्द्र॑म् । सिस॑क्ति । उ॒षस॑म् । न । सूर्यः॑ । यः । धृ॒ष्णुना॑ । शव॑सा । बाध॑ते । तमः॑ । इय॑र्ति । रे॒णुम् । बृ॒हत् । अ॒र्ह॒रि॒ऽस्वनिः॑ ॥**

**वेङ्कटमाधव–** देवम् **यदि** बलं त्वां वर्धयत् तव रक्षणार्थम् इन्द्रम् सेवते **उषसम्** इव सूर्यः । **यः** इन्द्रः **धृष्णुना** बलेन सङ्ग्रामस्थम् **तमः बाधते** सः इन्द्रः स्तोतः! त्वदर्थं सङ्ग्राममागत्य महत् **रेणुम्** उत्थापयति शत्रूणां हरणशीलस्वनः ॥ ४ ॥

**मुद्गल–** **यः** इन्द्रः **धृष्णुना** धर्षकेण **शवसा** बलेन **तमः** तमोरूपं वृत्रादिम् असुरम् **बाधते** हिनस्ति **ऊतये** रक्षणाय **त्वावृधा** त्वया स्तोत्रा वर्धितं तम् **इन्द्रम्, देवी तविषी** द्योतमानं बलम् **यदि** यदा **सिषक्ति** समवैति । **सूर्यः उषसम् न** यथा उषोदेवतां सेवते । नित्यं तत्सम्बद्धो भवतीत्यर्थः । तदानीम् **अर्हरिष्यणिः** गच्छन्तो हरन्तीति अर्हरयः शत्रवः तेषां व्यथोत्पादनेन स्वनयिता शब्दयिता इन्द्रः **रेणुम्** रेषणं हिंसनम् **बृहत्** प्रभूतम् **इयर्ति** शत्रून् गमयति ॥ ४ ॥

**सायण–** **यः** इन्द्रः **धृष्णुना** धर्षकेण **शवसा** बलेन **तमः** तमोरूपं वृत्रादिम् असुरम् **बाधते** हिनस्ति **ऊतये** रक्षणाय **त्वावृधा** त्वया स्तोत्रा वर्धितं तम् **इन्द्रम्, देवी तविषी** द्योतमानं बलम् **यदि** यदा **सिषक्ति** समवैति । सेवते इति यास्कः (निरु.३.२१) । **सूर्यः उषसम् न** यथा उषोदेवतां सेवते । नित्यं तत्सम्बद्धो भवतीत्यर्थः । तदानीम् **अर्हरिष्यणिः** गच्छन्तो हरन्तीति अर्हरयः शत्रवः तेषां व्यथोत्पादनेन स्वनयिता शब्दयिता इन्द्रः **रेणुम्** रेषणं हिंसनम् **बृहत्** प्रभूतम् **इयर्ति** शत्रून् गमयति ॥

**त्वावृधा** । त्वया वर्धते इति त्वावृत् । 'क्विप् च' इति क्विप् । 'प्रत्ययोत्तरपदयोश्च' इति मपर्यन्तस्य त्वादेशः । छान्दसं दकारस्य आत्वम् । 'सुपां सुलुक्' इति द्वितीयाया आकारः । **सिषक्ति** 'षच समवाये' । 'बहुलं छन्दसि' इति शपः श्लुः । 'बहुलं छन्दसि' इति अभ्यासस्य इत्वम् । **इयर्ति** 'ऋ सृ गतौ' । जौहोत्यादिकः । अस्माद् अन्तर्भावितण्यर्थात् लट् । शप्श्लु द्विर्भावोरदत्वहलादिशेषाः । 'अर्तिपिपर्त्योश्च' इति अभ्यासस्य इत्वम् । 'अभ्यासस्यासवर्णे' (पा.सू.६.४.७८) इति इयङादेशः । 'अनुदात्ते च' इति अभ्यासस्याद्युदात्तत्वम् । पूर्वपदस्य वाक्यान्तरगतत्वेन पदादपरत्वात् निघाताभावः । **रेणुम्** 'री गतिरेषणयोः' अस्माद् औणादिको नुप्रत्ययः । **अर्हरिष्वणिः** । अर्तेः 'अन्येभ्योऽपि दृश्यन्ते' इति विच् । अरो गच्छन्तश्चेमे हरयश्चेत्यर्हरयः । तेषां स्वनयिता । 'स्यमु स्वन ध्वन शब्दे' । अस्मात् ण्यन्तात् औणादिकः

इन्प्रत्ययः । 'णेरनिटि' इति णिलोपः । घटादित्वात् मित्त्वे 'मितां ह्रस्वः' इति ह्रस्वत्वम् । कृदुत्तरपदप्रकृतिस्वरत्वम् ।। ४ ।।

**सिद्धाञ्जनम्– यदि** यदा **त्वावृधा** त्वया स्तोत्रा वर्धमाना, स्तोत्रेण वर्धिता **देवी तविषी** दिव्या बलात्मिका शक्तिः । **ऊतये** तव वृद्धये तं **इन्द्रम्** देवं **सिषक्ति** समवैति । तत्र दृष्टान्तः– **सूर्यः उषसम् न** सूर्यो यथा उषसं सेवते तथा सेवमानस्तत्सम्बन्धी तदात्मकश्च भवति । तथा इन्द्रेण समवेता स्तोत्रवर्धिता दिव्या शक्तिरपि इन्द्रात्मकतां भजते । **यः** यश्चेन्द्रः तदा **धृष्णुना** धर्षकेण **शवसा** दीप्तेन बलेन **तमः** शोकमोहादिरूपम् अचिन्मयम् अन्धकारं **बाधते** ध्वंसयति । किञ्च स इन्द्रः **अर्हरिष्वणिः** गच्छन्तो हरन्ति अपहरन्तीति अर्हरयः शत्रवः । तान् स्वनयति हिंसनेन आक्रन्दयतीति अर्हरिष्वणिः, शत्रून्, **रेणुम्** रेषणं हिंसनं **बृहत्** प्रभूतं **इयर्ति** प्रापयति ।। **त्वावृधा**– त्वया वर्धत इति त्वावृत् । 'क्विप् च' इति क्विप् । आकारश्छान्दसः । अथवा तृतीयाविभक्तिव्यत्ययः । सिषक्त्यादयो गताः । **रेणुम्** 'री गतिरेषणयोः' औणादिको नुप्रत्ययः । **अर्हरिष्वणिः**– हृधातोः छान्दसोऽभ्यासः । ततो विच्, 'अर्तेः अरः, अरो गच्छन्तश्चेमे हरयश्च अर्हरयः, तेषां स्वनयिता, 'स्वन शब्दे' अस्मादौणादिक इनुप्रत्ययः' इति सायणः ।। ४ ।।

## ऋक्संहिता पदपाठसहिता

**वि यत्तिरो धरुणमच्युतं रजोऽतिष्ठिपो दिव आतासु बर्हणा ।**
**स्वर्मीळ्हे यन्मद इन्द्र हर्ष्याहन्वृत्रं निरपामौब्जो अर्णवम् ।। ५ ।।**
**वि । यत् । तिरः । धरुणम् । अच्युतम् । रजः । अतिस्थिपः । दिवः । आतासु । बर्हणा । स्वःऽमीळ्हे । यत् । मदे । इन्द्र । हर्ष्या । अहन् । वृत्रम् । निः । अपाम् । औब्जः । अर्णवम् ।। ५ ।।**

**वेङ्कटमाधव–** वृत्रं हत्वाऽपोऽवासृज इति समुदायार्थः । यदा त्वम् **तिरः** भूत्वा जगतः धारकम् अक्षीणम् उदकम् अन्तरिक्षात् दिशु विविधं स्थापितवानसि परिबर्हणया मेघस्य । यदा च उदकार्थे सङ्ग्रामे सोमस्य मदे सति हृष्टया बुद्ध्या वृत्रम् असुरं हतवानसि । तदा त्वम् **इन्द्र! अपाम्** पूर्णम् **अर्णवं** मेघम् अधःस्थितं रश्मिभिः हतवानसि । 'अर्णः' (निघ.१,१२) इत्युदकनाम । तद्यस्यास्तीति सोऽर्णव इति ।। ५ ।।

**मुद्गल– यत्** यदा **तिरः** वृत्रेण तिरोहितम् **धरुणम्** सर्वस्य प्राणितातस्य धारकम् **अच्युतम्** विनाशरहितम् **रजः** उदकम् **दिवः** द्युलोकात् **आतासु** विस्तृतासु दिक्षु । हे **इन्द्र! बर्हणा** हन्ता त्वम् **वि अतिष्ठिपः** विविधं स्थापयाश्वकृषे । तथा **यत्** यदा **स्वमीळ्हे स्वः** सुष्ठु गन्तव्यं मीळ्हं धनं यस्मिन् तस्मिन् सङ्ग्रामे **मदे** तव सोमपानेन हर्षे सति **हर्ष्या** हृष्टया शक्त्या **वृत्रम्** आवरकम् असुरम् **अहन्** त्वम् अवधीः । तदानीम् **अपाम्** पूर्णम् **अर्णवम्** मेघम् **निः औब्जः** वर्षणाभिमुखम् अधोमुखम् अकार्षीः । वृष्टेरावरकं वृत्रं हत्वा वृष्टिजलेन भूमिं न्यसैक्षीरिति तात्पर्यार्थः ॥ ५ ॥

**सायण– यत्** यदा **तिरः** वृत्रेण तिरोहितम् **धरुणम्** सर्वस्य प्राणितातस्य धारकम् **अच्युतम्** विनाशरहितम् **रजः** उदकम् **दिवः** द्युलोकात् **आतासु** । आता इति दिङ्नाम । विस्तृतासु दिक्षु । हे **इन्द्र! बर्हणा** हन्ता त्वम् **वि अतिष्ठिपः** विविधं स्थापयाश्वकृषे । तथा **यत्** यदा **स्वमीळ्हे** । मीळ्हम् इति धननाम । स्वः सुष्ठु गन्तव्यं मीळ्हं धनं यस्मिन् तस्मिन् सङ्ग्रामे **मदे** तव सोमपानेन हर्षे सति **हर्ष्या** हृष्टया शक्त्या **वृत्रम्** आवरकम् असुरम् **अहन्** त्वम् अवधीः । तदानीम् **अपाम्** पूर्णम् **अर्णवम्** मेघम् **निः औब्जः** वर्षणाभिमुखम् अधोमुखम् अकार्षीः । वृष्टेरावरकं वृत्रं हत्वा वृष्टिजलेन भूमिं न्यसैक्षीरिति तात्पर्यार्थः ॥

**अतिष्ठिपः** । तिष्ठतेः ण्यन्तात् लुङि च्लेः चङादेशः । णिलोपः । 'तिष्ठतेरित्' (पा.सू. ७.४.५) इति उपधाया इत्वम् । 'चङि' (पा.सू.६.१.११) इति द्विर्वचने 'शर्पूर्वाः खयः' इति थकारः शिष्यते । चर्त्वेन तकारः । अडागम उदात्तः । यद्वृत्तयोगादनिघातः । **बर्हणा** । 'सुपां सुलुक्' इति सोः आकारः । **स्वर्मीळ्हे** 'मिह सेचने' । निष्ठा । 'हो ढः' (पा.सू.८. २.३१) इति ढत्वम् । 'झषस्तथोर्धोऽधः' इति तकारस्य धत्वम् । तस्य ष्टुत्वे 'ढो ढे लोपः' (पा.सू.८.३.१३) इति ढलोपः । 'ढ्रलोपे पूर्वस्य' (पा.सू.६.३.१११) इति दीर्घत्वम् । स्वरित्येतत् 'न्यङ्स्वरौ स्वरितौ' इति स्वर्यते । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वेन तदेव शिष्यते । **अहन्** । हन्तेर्लङि मध्यमैकवचने 'हल्ङ्याब्भ्यः' इति सेर्लोपः । यद्वृत्तयोगादनिघातः । **औब्जः** 'उब्ज आर्जवे' । लङि आडागमो वृद्धिश्च ॥ ५ ॥

**सिद्धाञ्जनम्–** हे इन्द्र! **बर्हणा** बर्हयिता निषूदनस्त्वं **यत्** यदा **तिरः** तिरोहितं घनेन तमसाऽऽच्छादितम् । **धरुणम्** धारकं विश्वस्य, **अच्युतम्** च्युतिरहितम्, अनश्वरं **रजः** अन्तरिक्षं

तेजोबलादिवर्षसामग्रीभूतानां दिव्यानाम् अपां आधारभूतं लोकं, **दिवः** द्युलोकात् **आतासु** आततासु विस्तृतासु दिक्षु, आता इति दिङ्नाम । **व्यतिष्ठिपः** व्यवस्थापितवानसि । अपि च हे **इन्द्र! यत्** यदा **स्वर्मीळ्हे** स्वः दिव्यं तेजः मीळ्हं सेचनं, तेजसो वर्षणं यस्मिन् तस्मिन् **मदे** सोमपान-जन्ये हर्षे सति, **हर्ष्या** हृष्टया शक्त्या **वृत्रम्** असुरं **अहन्** अवधीः, तदानीं **अपाम्** उक्तलक्षणानां **अर्णवम्** अमितराशिभूतं निधिं **न्यौब्जः** वर्षणाय अधोमुखमकार्षीः ।। **अतिष्ठिपः**– तिष्ठतेर्ण्यन्ताल्लुङ् । **बर्हणा**–सुपां सुलुगिति सोः आकारः । **स्वर्मीळ्हे**-'मिह सेचने' निष्ठा 'हो ढः' इति ढत्वम् । अत्र सायणः– सुष्ठु गन्तव्यं स्वर् मीढं धनं यस्मिन् तस्मिन् सङ्ग्रामे इति व्याचष्टे । इदं मदविशेषणमित्यस्माभिर्व्याख्यातं बोध्यम् । अन्ये गताः ।। ५ ।।

## ऋक्संहिता पदपाठसहिता

**त्वं दि॒वो ध॒रुणं॑ धिष॒ ओज॑सा पृथि॒व्या इ॑न्द्र॒ सद॑नेषु॒ माहि॑नः ।**
**त्वं सु॒तस्य॒ मदे॑ अरिणा अ॒पो वि वृ॒त्रस्य॑ स॒मया॑ पा॒ष्या॑रुजः ।। ६ ।।**
त्वम् । दि॒वः । ध॒रुण॑म् । धि॒षे । ओज॑सा । पृ॒थि॒व्याः । इ॒न्द्र॒ । सद॑नेषु । माहि॑नः ।
त्वम् । सु॒तस्य॑ । मदे॑ । अ॒रि॒णाः । अ॒पः । वि । वृ॒त्रस्य॑ । स॒मया॑ । पा॒ष्या॑ । अ॒रु॒जः ।।

**वेङ्कटमाधव– त्वम् दिवः** उदकं प्रयच्छसि बलेन **पृथिव्याः** । **इन्द्र!** तेषु तेषु स्थानेषु महान् । **त्वम्** सोमस्य **मदे** गमयसि **अपः** । तथा त्वम् वृत्रशरीरेण तुल्यया शिलया वृत्रम् **वि अरुजः** हिंसार्थयोगे कर्मणि षष्ठी दृष्टेति स्तुतिमात्रम् । एवं भवति सूक्तेनाशीः ।। ६ ।।

**मुद्गल–** हे **इन्द्र! माहिनः** प्रवृद्धः **त्वम्, दिवः** द्युलोकात् **पृथिव्याः सदनेषु** प्रदेशेषु **ओजसा** बलेन **धरुणम्** सर्वस्य जगतो धारकं वृष्टिजलम् **धिषे** दधिषे स्थापयसि । यस्मात् **त्वम् सुतस्य** सोमस्य पानेन **मदे** हर्षे सति **अपः** जलानि **अरिणाः** मेघान्निरगमयः । **वृत्रस्य** आवरकं वृत्रं च **समया** धृष्ट्या **पाष्या** शिलया **विअरुजः** विशेषेणाऽभाङ्क्षीः ।। ६ ।।

**सायण–** हे **इन्द्र! माहिनः** प्रवृद्धः **त्वम्, दिवः** द्युलोकात् **पृथिव्याः सदनेषु** प्रदेशेषु **ओजसा** बलेन **धरुणम्** सर्वस्य जगतो धारकं वृष्टिजलम् **धिषे** दधिषे स्थापयसि । यस्मात् **त्वम् सुतस्य** सोमस्य पानेन **मदे** हर्षे सति **अपः** जलानि **अरिणाः** मेघान्निरगमयः । **वृत्रस्य** आवरकं वृत्रं च **समया** धृष्ट्या **पाष्या** शिलया यद्वा शक्त्या **विअरुजः** विशेषेणाऽभाङ्क्षीः ।।

**धिषे** । दधातेश्छान्दसो वर्तमाने लिट् । 'द्विर्वचनप्रकरणे छन्दसि वेति वक्तव्यम्' (का.६.१.८.१) इति वचनाद् द्विर्वचनाभावः । क्रादिनियमाद् इडागमे 'आतो लोप इटि च' इति आकारलोपः । **माहिनः** । 'महेरिनण् च' (उ.सू.२.२१४) इति 'मह पूजायाम्' इत्यस्मात् औणादिक इनण्प्रत्ययः । 'अत उपधायाः' इति वृद्धिः । **अरिणाः** 'री गतिरेषणयोः' । क्रैयादिकः । लङि सिपि 'प्वादीनां ह्रस्वः' इति ह्रस्वत्वम् । **समया** 'षम ष्टम अवैक्लव्ये' । समतीति समा । पचाद्यच् । 'चितः' इत्यन्तोदात्तत्वम् । **पाष्या** 'पिष्लृ सञ्चूर्णने' इत्यस्मात् औणादिक इन्प्रत्ययः । बहुलवचनाद् उपधाया आकारः । 'कृतिकारादक्तिनः' (पा.सू.४.१.४५ ग.) इति ङीष् । प्रत्ययस्वरेणान्तोदात्तः । तृतीयैकवचने यणादेशे सति 'उदात्तस्वरितयोर्यणः' इति स्वरितत्वम् । **अरुजः** 'रुजो भङ्गे' तौदादिकः । शस्य ङित्त्वाद् गुणाभावः ।। ६ ।।

**सिद्धाञ्जनम्–** हे **इन्द्र! माहिनः** पूज्यो महान् **त्वम्, दिवः** द्युलोकात् **पृथिव्याः सदनेषु** प्रदेशेषु वासगृहेषु यजमानस्य ऋषेः सान्तरङ्गबहिरङ्गेषु अन्नमयादिषु शरीरेषु **ओजसा** बलेन **धरुणम्** धारकं, सर्वस्य जगत इति शेषः । प्राणादिबलवर्षकं आप्यं सत्त्वं **धिषे** दधिषे स्थापयसि । **त्वम् सुतस्य** अभिषुतस्य सोमस्य पानेन **मदे** हर्षे सति, **अपः** आप्यानि सत्त्वानि **अरिणाः** निर्गमितवानसि । किञ्च **वृत्रस्य** द्वितीयार्थे षष्ठी, अथवा वृत्रस्य आवरकं वृत्रं चेति सायणः । **समया** सम्पूर्णया धृष्ट्या **पाष्या** शिलया **व्यरुजः** विशेषेणाभाङ्क्षीः ।। **धिषे**–दधातेः छान्दसो वर्तमाने लिट् । **माहिनः**– महेः इनण्, 'मह पूजायाम्' इत्यस्माद् औणादिक इनण् प्रत्ययः । उपधाया वृद्धिः । **अरिणाः**– 'री गतिरेषणयोः' क्रैयादिकः । **समया**– 'सम ष्टम अवैक्लव्ये' समतीति समा । **पाष्या**–पिनष्टेः औणादिक इन्, उपधायाः आकारः ।। ६ ।।

।। इति प्रथमाष्टके चतुर्थाध्याये एकविंशो वर्गः ।।

## ।। अथ द्वाविंशो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

(सूक्तम् ५७)

६ सव्य आङ्गिरसः । इन्द्रः । जगती ।

**प्र मंहिष्ठाय बृहते बृहद्रये सत्यशुष्माय तवसे मतिं भरे ।**
**अपामिव प्रवणे यस्य दुर्धरं राधो विश्वायु शवसे अपावृतम् ।। १ ।।**

**प्र । मंहिष्ठाय । बृहते । बृहत्ऽरये । सत्यऽशुष्माय । तवसे । मतिम् । भरे । अपाम्ऽइव । प्रवणे । यस्य । दुःऽधरम् । राधः । विश्वऽआयु । शवसे । अपऽवृतम् ।।**

**वेङ्कटमाधव–** दातृतमाय महते महाधनाय सत्यबलाय वृद्धाय स्तुतिं **प्र** भरामि । येन स्तोतॄणां प्रदीयमानं धनं स्तोतृभिः **दुर्धरम्** भवति । **अपामिव** वेगः प्रवणाभिमुखः । सर्वगामि धनं स्तोतॄणां बलाय विवृतद्वारम् ।। १ ।।

**मुद्गल–** 'प्र मंहिष्ठाय' इति षड्टचं सप्तमं सूक्तम् । सव्य ऋषिः । जगती छन्दः । इन्द्रो देवता ।।

**मंहिष्ठाय** दातृतमाय **बृहते** गुणैर्महते **बृहद्रये** महाधनाय **सत्यशुष्माय** अवितथबलाय **तवसे** आकारतः प्रवृद्धाय । एवंगुणविशिष्टेन्द्राय **मतिम्** मननीयां स्तुतिम् **प्र भरे** प्रकर्षेण सम्पादयामि । **यस्य** इन्द्रस्य बलम् **दुर्धरम्** अन्यैर्धर्त्तुम् अशक्यम् । दृष्टान्तः– **प्रवणे** निम्नप्रदेशे **अपामिव** यथा जलानां वेगः केनाप्यवस्थापयितुं न शक्यते तद्वत् । तथा **राधः** धनम् **विश्वायु** सर्वेषु व्याप्तम् **शवसे** स्तोतॄणां बलाय येन इन्द्रेण **अपावृतम्** अपगतावरणं क्रियते । तस्येन्द्रस्येति पूर्वेण सम्बन्धः ।। १ ।।

**सायण–** 'प्र मंहिष्ठाय' इति षड्टचं सप्तमं सूक्तं सव्यस्यार्षमैन्द्रं जागतम् । तथा चानुक्रान्तम्– 'प्र मंहिष्ठाय' इति । विषुवति निष्केवल्ये इदं सूक्तं शंसनीयम् । सूत्रितं च– 'प्र मंहिष्ठाय त्यमू ष्वितीह तार्क्ष्यमन्ततः' (आश्व.श्रौ.८.६) इति । उक्थ्यसंस्थे क्रतौ तृतीयसवने ब्राह्मणाच्छंसिशस्त्रेऽपि एतत्सूक्तम् । सूत्रितं च– 'सर्वाः ककुभः प्र मंहिष्ठायोदप्रुतः' (आश्व.श्रौ.६.१) इति ।।

**मंहिष्ठाय** मंहतिर्दानकर्मेति यास्कः (निरु.१.७) । दातृतमाय **बृहते** गुणैर्महते **बृहद्रये** महाधनाय **सत्यशुष्माय** अवितथबलाय **तवसे** आकारतः प्रवृद्धाय । एवंगुणविशिष्टेन्द्राय **मतिम्** मननीयां स्तुतिम् **प्र भरे** प्रकर्षेण सम्पादयामि । **यस्य** इन्द्रस्य बलम् **दुर्धरम्** अन्यैर्धर्त्तुम् अशक्यम् । तत्र दृष्टान्तः– **प्रवणे** निम्नप्रदेशे **अपामिव** यथा जलानां वेगः केनाप्यवस्थापयितुं न शक्यते तद्वत् । तथा **राधः** धनम् **विश्वायु** सर्वेषु व्याप्तम् **शवसे** स्तोतॄणां बलाय येन इन्द्रेण **अपावृतम्** अपगतावरणं क्रियते । तस्येन्द्रस्येति पूर्वेण सम्बन्धः ।।

**मंहिष्ठाय** । अतिशयेन मंहिता मंहिष्ठः । 'तुश्छन्दसि' इति इष्ठन्प्रत्ययः । 'तुरिष्ठेमेयःसु' इति तृलोपः । **बृहते** 'बृहन्महतोरुपसङ्ख्यानम्' इति विभक्तेरुदात्तत्वम् । उत्तरयोर्बहुव्रीहिस्वरः । **मतिम्** 'मन्त्रे वृष' इत्यादिना क्तिन्, उदात्तत्वम् । 'अनुदात्तोपदेश' इत्यादिना अनुनासिक लोपः । **दुर्धरम्** 'धृञ् धारणे' । 'ईषदुःसुषु' इति कर्मणि ग्वल् । **विश्वायु** । विश्वस्मिन् सर्वस्मिन् आयु गमनं यस्य तद् विश्वायु । एतेः 'छन्दसीणः' (उ.सू.१.२) इति उण्प्रत्ययः । 'बहुव्रीहौ विश्वं सञ्ज्ञायाम्' इति पूर्वपदान्तोदात्तत्वम् । **अपावृतम्** । कर्मणि निष्ठा । 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् ।। १ ।।

**सिद्धाञ्जनम्–** दशमेऽनुवाके 'प्र मंहिष्ठाय' इति षड्चं सप्तमं सूक्तं सव्यस्यार्षम् ऐन्द्रं जागतम् ।।

**मंहिष्ठाय** मंहतिर्दानकर्मा, दातृतमायेति सायणः । 'महि वृद्धौ' इत्यस्माद् अस्माभिर्निष्पाद्यते । प्रभूततमाय । **बृहते** प्रभावतः । **बृहद्रये** महाधनाय **सत्यशुष्माय** अवितथबलाय । न त्वासुरं बलमिव मायिकं इन्द्रस्य बलम् । **तवसे** प्रवृद्धाय इन्द्राय **मतिम्** स्तुतिलक्षणां मनीषां **प्र भरे** प्रकर्षेण बिभर्मि । **यस्य** इन्द्रस्य **राधः** तत् चित्रं धनं, **दुर्धरम्** अन्यैर्धर्तुम् अशक्यं **विश्वायु** सर्वत्र व्याप्तं **शवसे** यजमानानां बलाय **अपावृतम्** अपगतावरणं क्रियत इन्द्रेणेति शेषः । तत्र दृष्टान्तः– **प्रवणे अपामिव** यथा निम्नप्रदेशे जलानां वेगः न केनाप्यवस्थापयितुं शक्यते, तथा ऊर्ध्वं इन्द्रस्य विचित्रं धनं यदा निर्मुक्तं तेन विसृष्टं सद् वर्षति तदा तत्र केनापि निम्ने अत्रस्थेन वारयितुम् अवस्थापयितुं शक्यते, तादृशी ज्योतिर्बलादिवृष्टिधारा भवति यजमानस्य उज्ज्वलबलानुग्रहाय ।। **विश्वायु**–विश्वस्मिन् सर्वस्मिन् आयु गमनं यस्य तत् । आयु–एतेः छन्दसि उण् । अन्ये गताः ।। १ ।।

## ऋक्संहिता पदपाठसहिता

**अध॑ ते॒ विश्व॒मनु॑ हासदि॒ष्टय॒ आपो॑ नि॒म्नेव॒ सव॑ना ह॒विष्म॑तः ।**
**यत्पर्व॑ते॒ न स॒मशी॑त हर्य॒त इन्द्र॑स्य॒ वज्रः॒ श्नथि॑ता हि॒रण्ययः॑ ।। २ ।।**

**अध॑ । ते॒ । विश्व॑म् । अनु॑ । ह॒ । अ॒स॒त् । इ॒ष्टये॑ । आपः॑ । नि॒म्नाऽइ॑व । सव॑ना । ह॒विष्म॑तः । यत् । पर्व॑ते । न । स॒म्ऽअशी॑त । ह॒र्य॒तः । इन्द्र॑स्य । वज्रः॑ । श्नथि॑ता । हि॒रण्ययः॑ ।। २ ।।**

**वेङ्कटमाधव–** सर्वमिदं जगद् अनन्तरमेव क्रमेण तत्र यागाय **अभवत्** । तथा यजमानस्य सवनानि च त्वामेव **आपः** निम्नानि इव अभिगच्छन्ति । यदा इन्द्रस्य विवरणस्य कर्ता हिरण्मयः **वज्रः** शिलोच्चये **न समशीत** सहावस्थानं नाकरोत् । भित्त्वा निर्गत इत्यर्थः । प्रेप्साकर्मा हर्यतिः (तु.या.७,१७) । कामयमानस्य शिलोच्चयभेदमिति ।। २ ।।

**मुद्गल– अध ह** अनन्तरमेव हे **इन्द्र! विश्वम्** सर्वमिदं जगत् **ते** तव सम्बन्धिने **इष्टये** यागाय **अनु असत्** अन्वभवत् । **हविष्मतः** यजमानस्य **सवना** सवनानि यज्ञजातानि **निम्नेव** निम्नानि भूस्थलानि **आपः** इव त्वां सम्भजन्ते इति शेषः । **हर्यतः** शत्रुवधं प्रेप्सत **इन्द्रस्य** **हिरण्ययः** हिरण्मयः **श्नथिता** शत्रूणां हिंसनशीलः **वज्रः पर्वते** पर्ववति शिलोच्चये **यत्** यदा **न समशीत** संसुप्तो नाभवत्, किन्तु जागरितः सन् अवधीदित्यर्थः । यदा इन्द्रेण प्रेरितो वज्रः अप्रतिहतः सन् वृत्रमवधीत् तदाप्रभृत्येव तं यष्टुं सर्वे यजमानाः प्रावर्तिषतेति भावः ।। २ ।।

**सायण– अध ह** अनन्तरमेव हे **इन्द्र! विश्वम्** सर्वमिदं जगत् **ते** तव सम्बन्धिने **इष्टये** यागाय **अनु असत्** अन्वभवत् । यद्वा । इष्टये हविरादिभिस्तव प्राप्तये इति योज्यम् । **हविष्मतः** यजमानस्य **सवना** सवनानि यज्ञजातानि **निम्नेव** निम्नानि भूस्थलानि **आपः** इव त्वां सम्भजन्ते इति शेषः । **हर्यतः** शत्रुवधं प्रेप्सत **इन्द्रस्य** । 'हर्यतिः प्रेप्साकर्मा' (निरु.७.१७) इति यास्कः । यद्वा हर्यतः शोभनः । **हिरण्ययः** हिरण्मयः **श्नथिता** शत्रूणां हिंसनशीलः वज्रः **पर्वते** पर्ववति शिलोच्चये वृत्रे वा । **यत्** यदा **न समशीत** संसुप्तो नाभवत् किन्तु जागरितः सन्नवधीदित्यर्थः । यदेन्द्रेण प्रेरितो वज्रः अप्रतिहतः सन् वृत्रम् अवधीत्तदाप्रभृत्येव तं यष्टुं सर्वे यजमानाः प्रावर्तिषतेति भावः ।।

**अध**- छान्दसं धत्वम् । **असत्** । अस्तेर्लेङि 'बहुलं छन्दसि' इति शपो लुगभावः । **इष्टये** । यजतेर्भावे क्तिनि 'वचिस्वपि' इत्यादिना सम्प्रसारणम् । व्रश्चादिना षत्वम् । व्यत्ययेनान्तोदात्तत्वम् । यद्वा । 'इष गतौ' इत्यस्मात् भावे क्तिनि 'मन्त्रे वृषेष' इति तस्योदात्तत्वम् । **निम्नेव सवना** । 'शेश्छन्दसि' इति शेर्लोपः । **समशीत** 'शीङ् स्वप्ने' लङि संज्ञापूर्वकस्य विधेरनित्यत्वात् 'शीङः सार्वधातुके' (पा.सू.७.४.२१) इति गुणाभावः । **हर्यतः** 'हर्य गतिकान्त्योः' । 'भृमृदृशि' इत्यादिना अतच्प्रत्ययः । **श्नथिता** 'श्नथ क्रथ क्रथ हिंसार्थाः' । ताच्छीलिकः तृन्प्रत्ययः । नित्त्वादाद्युदात्तत्वम् ।। २ ।।

**सिद्धाञ्जनम्–** **अध ह** अनन्तरमेव । हे इन्द्र! **विश्वम्** सर्वं जगत् **ते** तव **इष्टये** यजनाय, त्वां यष्टुं पूजयितुमित्यर्थः । **अन्वसत्** अनुरुध्य अभवत् । त्वदनुरोधेन त्वां यष्टुं प्रभवतीत्यर्थः । तथा **हविष्मतः** यजमानस्य **सवना** यजनानि **आपः निम्नेव** यथा जलानि निम्नानि भूस्थलानि गच्छन्ति तथा अनायासेन स्वभावसिद्धया गत्या त्वां सम्भजन्ते । **यत्** यदा **हर्यतः** शत्रुवधं कामयमानस्य । हर्यतिः कान्त्यर्थः । **इन्द्रस्य हिरण्ययः** सुवर्णमयः **श्नथिता** हिंसिता **वज्रः पर्वते** भेद्ये तमोघनभूते शिलोच्चये **न समशीत** न सुप्तोऽभवत्, जागरित एव पर्वतं भिनत्तीत्यर्थः । एवं वज्रेण पर्वतभेदादनन्तरमेव विश्वमित्यादिना सम्बन्धः ।। **अध**–अथ, धत्वं छान्दसम् । **असत्**–अस्तेर्लङ् वर्तमाने, छन्दसि शपो लुगभावः । **इष्टये**–यजतेः । **समशीत**–'शीङ् स्वप्ने' लङ् गुणाभावः ।। २ ।।

## ऋक्संहिता पदपाठसहिता

**अस्मै भीमाय नमसा समध्वर उषो न शुभ्र आ भरा पनीयसे ।**
**यस्य धाम श्रवसे नामेन्द्रियं ज्योतिरकारि हरितो नायसे ।। ३ ।।**
**अस्मै । भीमाय । नमसा । सम् । अध्वरे । उषः । न । शुभ्रे । आ । भर । पनीयसे ।**
**यस्य । धाम । श्रवसे । नाम । इन्द्रियम् । ज्योतिः । अकारि । हरितः । न । अयसे ।।**

**वेङ्कटमाधव–** **उषः, शुभ्रे! अस्मै भीमाय** इन्द्राय अस्मान् यज्ञे अन्नेन संसृज व्युष्टा सती स्तुत्यतमाय । सम्प्रत्यर्थीयो नकारः । **यस्य** इन्द्रस्य शरीरम् **नाम** च श्रवणाय अकारि, बलं च **ज्योतिः** च कृतं गमनाय । यथा अश्वा गच्छन्ति तद्वदिति ।। ३ ।।

**मुद्गल–** हे **उषः** उषोदेवते **शुभ्रे** शोभने! त्वम् **भीमाय** शत्रूणां भयङ्कराय **पनीयसे** अतिशयेन स्तोतव्याय **अस्मै** इन्द्राय **अध्वरे** हिंसारहितेऽस्मिन् यागे । **न** सम्प्रत्यर्थे । सम्प्रति इदानीम् **नमसा** नमः हविर्लक्षणमन्नम् **सम् आ भर** सम्यक् सम्पादय । **धाम** सर्वस्य धारकम् **नाम** स्तोतृषु नमनशीलम् **इन्द्रियम्** इन्द्रत्वस्य परमैश्वर्यस्य लिङ्गं, **यस्य** इन्द्रस्य एवंविधम् **ज्योतिः, श्रवसे** अन्नाय हविर्लक्षणान्नलाभार्थम् **अयसे** इतस्ततो गमनाय **अकारि** क्रियते । **हरितः न** यथा अश्वान् सादिनः स्वाभिलषितदेशं गमयन्ति तद्वदिन्द्रोऽपि स्वाभिमतहविर्लाभाय स्वकीयं तेजो गमयतीति भावः ।। ३ ।।

**सायण–** हे **उषः** उषोदेवते **शुभ्रे** शोभने! त्वम् **भीमाय** शत्रूणां भयङ्कराय **पनीयसे** अतिशयेन स्तोतव्याय **अस्मै** इन्द्राय **अध्वरे** हिंसारहितेऽस्मिन् यागे । **न** इति सम्प्रत्यर्थे । तथा च यास्कः– 'अस्त्युपमार्थस्य सम्प्रत्यर्थे प्रयोग इहेव निधेहि' (निरु.७.३१) इति । सम्प्रति इदानीम् **नमसा** नमः हविर्लक्षणमन्नम् **सम् आ भर** सम्यक् सम्पादय । **धाम** सर्वस्य धारकम् **नाम** स्तोतृषु नमनशीलं प्रसिद्धं वा **इन्द्रियम्** इन्द्रत्वस्य परमैश्वर्यस्य लिङ्गं, **यस्य** इन्द्रस्य एवंविधम् **ज्योतिः, श्रवसे** अन्नाय हविर्लक्षणान्नलाभार्थम् **अयसे** इतस्ततो गमनाय **अकारि** क्रियते । **हरितः न** यथा अश्वान् सादिनः स्वाभिलषितदेशं गमयन्ति तद्वदिन्द्रोऽपि स्वाभिमतहविर्लाभाय स्वकीयं तेजो गमयतीति भावः ।।

**उषः** । पादादित्वान्निघाताभावः । **शुभ्रे** 'शुभ दीप्तौ' । 'स्फायितञ्चि' इत्यादिना रक् । **भरा** 'हृग्रहोर्भः' इति भत्वम् । 'द्व्यचोऽतस्तिङः' इति दीर्घः । **पनीयसे** । पनतेः स्तुत्यर्थाद् बहुलवचनात् कर्मणि असुन् । तस्माद् आतिशायनिके ईयसुनि 'टेः' इति टिलोपः । **अकारि** 'छन्दसि लुङ्लङ्लिटः' इति वर्तमाने कर्मणि लुङ् । यद्वृत्तयोगादनिघातः । अडागम उदात्तः । **अयसे** 'अय गतौ' इत्यस्माद् भावे असुन् ।। ३ ।।

**सिद्धाञ्जनम्–** उषसि प्रादुर्भूतायां यद्यजमानस्य कर्तव्यं भवति तदुषस्यारोप्यामन्त्रणपूर्वमुच्यते । हे उषः उषोदेवि! **शुभ्रे** शोभने! त्वं **अस्मै भीमाय** भयङ्कराय **पनीयसे** अतिशयेन स्तुत्याय इन्द्राय **अध्वरे** दिव्ययात्रात्मके यज्ञेऽस्मिन् **न** इदानीं, 'न सम्प्रत्यर्थे प्रयोगः' **नमसा** नमस्कारेण सर्वथा प्रह्वत्वेन प्रपत्त्येति यावत् **समाभर** दातव्यं सर्वं सम्यक् सम्पादय । **धाम** सर्वस्य धारकं, **नाम** स्तोतॄणां अनुग्रहाय तेषु नमनशीलं, प्रसिद्धं, **इन्द्रियम्** इन्द्रत्वस्य परमैश्वर्यस्य लिङ्गं लक्षणभूतं एवंविधं **यस्य ज्योतिः** यस्येन्द्रस्य ज्योतिः **श्रवसे** श्रुतये, यजमानस्तोत्रश्रवणाय, यजमानाय दिव्यावेशश्रुतिम् अनुग्रहीतुं वा **अकारि** कृतं भवति । तत्र दृष्टान्तः-**हरितः न अयसे** यथा अश्वाः गमनाय भवन्ति, यथा सादिनः अश्वान् स्वाभिलषितं देशं गमयन्ति तथा स्वाभिमतान् यजमानान् प्रति स्वकीयं ज्योतिर्गमयति 'श्रवसे' ।। **भर**-हस्य भः । **पनीयसे** 'पन स्तुतौ' अस्मात् पनः, कर्मण्यसुन्, तस्मादीयसुन्, आतिशायनिके टेर्लोपः । **अकारि**–कर्मणि लुङ् वर्तमाने । **अयसे**–'अय गतौ' अस्माद्भावे असुन् ।। ३ ।।

## ऋक्संहिता पदपाठसहिता

**इमे तं इन्द्र ते वयं पुरुष्टुत ये त्वारभ्य चरामसि प्रभूवसो ।**
**नहि त्वदन्यो गिर्वणो गिरः सघत्क्षोणीरिव प्रति नो हर्य तद्वचः ।। ४ ।।**
इमे । ते । इन्द्र । ते । वयम् । पुरुऽस्तुत । ये । त्वा । आऽरभ्य । चरामसि । प्रभुवसो इति प्रभुऽवसो । नहि । त्वत् । अन्यः । गिर्वणः । गिरः । सघत् । क्षोणीःऽईव । प्रति । नः । हर्य । तत् । वचः ।। ४ ।।

**वेङ्कटमाधव– ते इमे वयम् इन्द्र!** । तव स्वभूताः । बहुभिः स्तुत! ये त्वाम् **आरभ्य** चरामः । बहुधन! **न हि** त्वत्तः **अन्यः** । गीर्भिर्वननीय! स्तोतॄणां स्तोत्राणि सहते । न हि दरिद्रः स्तोत्राणि सोढुं शक्नोति । पृथिवी इव सर्वद्रव्याणि अस्माकं स्तुतीः **प्रति** कामय ।।

**मुद्गल–** हे **इन्द्र! प्रभूवसो** प्रभूतधनवन्! अत एव **पुरुष्टुत** । पुरुभिर्यजमानैः स्तुत! **ये** च वयम् **त्वा** त्वाम् **आरभ्य** आश्रयतयाऽवलम्ब्य **चरामसि** चरामः यागे वर्तामहे । **ते इमे वयम् ते** तव स्वभूताः । हे **गिर्वणः** गीर्भिर्वतनीयेन्द्र! **त्वदन्यः** त्वत्तोऽन्यः कश्चिदपि **गिरः** स्तुतीः **न हि सघत्** न हि प्राप्नोति । अतस्त्वम् **नः** अस्मकम् **तद् वचः** स्तुतिलक्षणम् **प्रति हर्य** कामयस्व । **क्षोणीरिव** यथा क्षोणी पृथिवी स्वकीयानि भूतजातानि कामयते ।। ४ ।।

**सायण–** हे **इन्द्र! प्रभूवसो** प्रभूतधनवन्! अत एव **पुरुष्टुत** । पुरुभिर्यजमानैः स्तुत! **ये** च वयम् **त्वा** त्वाम् **आरभ्य** आश्रयतयाऽवलम्ब्य **चरामसि** चरामः यागे वर्तामहे । **ते इमे वयम् ते** तव स्वभूताः । हे **गिर्वणः** गीर्भिर्वतनीयेन्द्र! **त्वदन्यः** त्वत्तोऽन्यः कश्चिदपि **गिरः** स्तुतीः **न हि सघत्** न हि प्राप्नोति । अतस्त्वम् **नः** अस्मकम् **तद्** स्तुतिलक्षणम् **वचः प्रति हर्य** कामयस्व । **क्षोणीरिव** यथा क्षोणी पृथिवी स्वकीयानि भूतजातानि कामयते ।। **चरामसि** । इदन्तो मसिः । शपः पित्त्वादनुदात्तत्वे धातुस्वरः । यद्वृत्तयोगादनिघातः । **सघत्** 'षघ हिंसायाम्' । अत्र प्राप्त्यर्थो, धातूनाम् अनेकार्थत्वात् । लेटि अडागमः । 'बहुलं छन्दसि' इति विकरणस्य लुक् । पादादित्वान्निघाताभावः । **क्षोणीरिव** 'हल्ङ्याब्भ्यः' इति सुलोपाभावश्छान्दसः ।। ४ ।।

**सिद्धाञ्जनम्–** हे **इन्द्र! प्रभूवसो** ऐन्द्रं धनं 'चित्रं.... प्रभु विभु' च वर्तत इति प्राग्वर्णितम्

अवधेयम् (१.९.५) प्रभु प्रकर्षेण भवतीति प्रभु प्रकर्षवर्ति प्रभु प्रकर्षवर्ति वसु धनं यस्यासौ तथाभूत । **पुरुस्तुत** पुरुभिः बहुभिः स्तुत! **ये वयम् त्वा** त्वां **आरभ्य** आश्रयत्वेन अवलम्ब्य **चरामसि** चरामः अन्तर्यजनमाचरामः **ते** त **इमे** वयं **ते** तव स्वभूताः । हे **गिर्वणः** गीर्भिर्वननीयेन्द्र! **त्वत् अन्यः** त्वत्तोऽन्यः कोऽपि **गिरः** स्तुतीः **न हि सघत्** न हि प्राप्तुमर्हति । अतः **नः** अस्माकं **तत्** स्तुतिलक्षणं **वचः प्रतिहर्य** कामयस्व । **क्षोणीरिव** क्षोणी इव यथा क्षोणी पृथिवी स्वामाश्रितानि स्वभूतानि कामयते, तथा नः स्तुतिं त्वामाश्रित्य प्रवृत्तां तव स्वभूतां कामयस्व स्वीकुरु ।। **चरामसि**–इदन्तो मसिः । **सघत्**–धातुपाठे 'षघ हिंसायाम्' इति पठ्यते । सघ्नोतिः प्राप्त्यर्थ इति सायणः । सहतेरानुषङ्गिकोऽयं धातुः, 'सघत्' इति सकृदेव प्रयोगः । **क्षोणीरिव**–क्षोणीव, सुलोपाभावश्छान्दसः ।। ४ ।।

## ऋक्संहिता पदपाठसहिता

**भूरि त इन्द्र वीर्यं१ तव स्मस्यस्य स्तोतुर्मघवन्काममा पृण ।**
**अनु ते द्यौर्बृहती वीर्यं मम इयं च ते पृथिवी नेम ओजसे ।। ५ ।।**
**भूरि । ते । इन्द्र । वीर्यम् । तव । स्मसि । अस्य । स्तोतुः । मघऽवन् । कामम् । आ । पृण । अनु । ते । द्यौः । बृहती । वीर्यम् । ममे । इयम् । च । ते । पृथिवी । नेमे । ओजसे ।। ५ ।।**

**वेङ्कटमाधव**– बहु **ते इन्द्र! वीर्यम्, तव** वयं स्मः । त्वम् **अस्य** सव्यस्य **स्तोतुः, मघवन्!** आपूरय **कामम्** । इन्द्र! **अनु ममे बृहती द्यौः** तव **वीर्यम्** त्वदीयाद् वीर्याद्धीना मीयते । **इयम् च ते पृथिवी** तव **ओजसे नेमे** अर्द्धे भवति । इयं भूयसी न वेति सन्देहे ओजसोऽर्द्धे भवति ओजस्तु पूर्णमेवेति ।। ५ ।।

**मुद्गल**– हे **इन्द्र! ते** तव **वीर्यम्** सामर्थ्यम् **भूरि** बहु । न केनाप्यवच्छेत्तुं शक्यते । तादृशस्य **तव** वयम् **स्मसि** स्वभूताः भवामः । हे **मघवन्** धनवन् इन्द्र! त्वम् **अस्य स्तोतुः** त्वां स्तुवतो यजमानस्य **कामम्** अभिलाषम् **आ पृण** आपूरय । **बृहती द्यौः** महान् द्युलोकोऽपि **ते** तव **वीर्यम् अनु ममे** अन्वमंस्त । इन्द्रेण सहावस्थानात् **इयं च** इयमपि **पृथिवी ते** तव **ओजसे** बलाय **नेमे** प्रह्वीबभूव । त्वद्बलाद्भीता सती अध एव वर्तते इति भावः ।। ५ ।।

**सायण–** हे **इन्द्र! ते** तव **वीर्यम्** सामर्थ्यम् **भूरि** बहु । न केनाप्यवच्छेत्तुं शक्यते । तादृशस्य **तव** वयम् **स्मसि** स्वभूताः भवामः । हे **मघवन्! अस्य स्तोतुः** त्वां स्तुवतो यजमानस्य **कामम्** अभिलाषम् **आ पृण** आपूरय । **बृहती द्यौः** महान् द्युलोकोऽपि **ते** तव **वीर्यम् अनु ममे** अन्वमंस्त । इन्द्रेण सहावस्थानात् **इयं च** इयमपि **पृथिवी ते** तव **ओजसे** बलाय **नेमे** प्रह्वीबभूव । त्वद्बलाद्भीता सती अध एव वर्तते इति भावः ।

**स्मसि** 'अस भुवि' लटि 'श्नसोरल्लोपः' इति अकारलोपः । इदन्तो मसिः । 'पृण प्रीणने' । अत्र प्रीतिहेतुतया पूरणं लक्ष्यते । तुदादित्वात् शप्रत्ययः । तस्य ङित्त्वाद्गुणाभावः । **ममे** 'माङ् माने शब्दे च' । ङित्त्वादात्मनेपदम् । लिटि 'आतो लोप इटि च' इति आकारलोपः । **नेमे** 'णमु प्रह्वत्वे' लिटि 'अत एकहल्मध्ये' इति एत्वाभ्यासलोपौ । 'तिङ्ङतिङः' इति निघातः ।।

**सिद्धाञ्जनम्–** हे इन्द्र! **ते** तव **वीर्यम्** वीरत्वं **भूरि** बहु । अनवच्छेद्यस्तव पराक्रम इत्यर्थः । **तव स्मसि** तादृशस्य तव स्वभूताः वयं स्मः । हे **मघवन्** इन्द्र! **अस्य स्तोतुः** त्वां स्तुवतोऽस्य यजमानस्य **कामम्** अभिलाषं **आ पृण** आपूरय । **बृहती द्यौः** महान् द्युलोकोऽपि **ते वीर्यम्** त्वदीयं वीर्यं **अनु ममे** 'अन्वमंस्त' इति सायणः, अनुसृत्य मानं करोति, स्वीयम् अवच्छेदं करोति, इन्द्रस्य माहात्म्यं द्युलोकस्य प्रतिमानं भवति । तस्मादिन्द्रवीर्यानुसारेणैव बृहतो द्युलोकस्य अवच्छेदो भवति । **इयम् पृथिवी च** इयमपि भूमिः, **ते** तव **ओजसे** बलाय **नेमे** प्रह्वीभवति ।। **ममे**– 'माङ् माने' । **नेमे**–'णमु प्रह्वत्वे' लिटि एत्वं अभ्यासलोपश्च ।। ५ ।।

## ऋक्संहिता पदपाठसहिता

**त्वं तमिन्द्र पर्वतं महामुरुं वज्रेण वज्रिन्पर्वशश्चकर्तिथ ।**
**अवासृजो निवृताः सर्तवा अपः सत्रा विश्वं दधिषे केवलं सहः ।। ६ ।।**

**त्वम् । तम् । इन्द्र । पर्वतम् । महाम् । उरुम् । वज्रेण । वज्रिन् । पर्वऽशः । चकर्तिथ ।**
**अव असृजः । निऽवृताः । सर्तवै । अपः । सत्रा । विश्वम् । दधिषे । केवलम् । सहः ।।**

**वेङ्कटमाधव–** पूर्वोक्तस्य समर्थनम् । **त्वम् तम् इन्द्र!** मेघं महान्तं विस्तीर्णम् **वज्रेण वज्रिन्** । पर्वशः शकलीकृतवानसि । अथ **अव असृजः** च निरुद्धाः **अपः** सरणाय । सत्यमेव व्याप्तं धारयसि असाधारणबलम् । इति सर्वानुक्तान् कामान् आशास्ते सूक्तेनेति ।। ६ ।।

**मुद्गल–** हे **वज्रिन्** वज्रवन् इन्द्र! **त्वम् तम्** प्रसिद्धम् **महाम्** आयामतो महान्तम् **उरुम्** विस्तीर्णम् **पर्वतम्** पर्ववन्तं मेघम् **वज्रेण** आयुधेन **पर्वशः** पर्वणि पर्वणि **चकर्तिथ** शकलीचकृषे। तेन मेघेन **निवृताः** आवृता **अपः सर्तवै** सरणाय गमनाय **अव असृजः** अवाङ्मुखम् अस्राक्षीः। अतस्त्वमेव केवलम् **विश्वम्** व्याप्तम् **सहः** बलम् **दधिषे** धारयसि नान्यः कश्चिदिति यदेतत् तत् **सत्रा** सत्यमेव ।। ६ ।।

**सायण–** हे **वज्रिन्** वज्रवन् इन्द्र! **त्वम् तम्** प्रसिद्धम् **महाम्** आयामतो महान्तम् **उरुम्** विस्तीर्णम् **पर्वतम्** पर्ववन्तं मेघम् वृत्रासुरं वा **वज्रेण** आयुधेन **पर्वशः** पर्वणि पर्वणि **चकर्तिथ** शकलीचकृषे। तेन मेघेन **निवृताः** आवृता **अपः सर्तवै** सरणाय गमनाय **अवासृजः** अवाङ्मुखम् अस्राक्षीः। अतस्त्वमेव केवलम् **विश्वम्** व्याप्तम् **सहः** बलम् **दधिषे** धारयसि नान्यः कश्चिदिति यदेतत् तत् **सत्रा** सत्यमेव।

सत्रा इति सत्यनाम, 'सत्रा इत्था' (नि.३.१०.३) इति तन्नामसु पाठात्। **महाम्**- महान्तम्। नकारतकारयोर्लोपश्छान्दसः। **चकर्तिथ** 'कृती छेदने'। लिटि थलि अभ्यासस्य उरदत्वहलादिशेषचुत्वानि। **सर्तवै**। 'कृत्यार्थे तवैकेन्' इति भावे तवैप्रत्ययः। 'कृन्मेजन्तः (पा.सू.१.१.३९) इति अव्ययत्वे 'अव्ययादाप्सुपः' इति सुपो लुक्। 'अन्तश्च तवै युगपत्' इति आद्यन्तयोर्युगपत् उदात्तत्वम्। **दधिषे**। लिटि क्रादिनियमाद् इट् ।। ६ ।।

**सिद्धाञ्जनम्–** हे **वज्रिन्!** वज्रवन् इन्द्र! **त्वम् तम्** प्रसिद्धं प्रतिपादितलक्षणं **महाम्** महान्तं आयामतः, **उरुम्** विस्तीर्णं **पर्वतम्** पर्ववन्तं मेघशब्दलक्षितं तमोघनं **वज्रेण** आयुधेन **पर्वशः** पर्वणि पर्वणि अवयवसन्धिषु **चकर्तिथ** प्रहृत्य खण्डशः कृतवानसि। तथा कृत्वा **निवृताः** प्रागावृताः **अपः सर्तवै** सरणाय **अवासृजः** नीचैर्गमनाय अस्राक्षीः। एवं त्वमेव **केवलम् विश्वम् सहः** अद्वितीयं सर्वं बलं **दधिषे** धारयसि। **सत्रा** तत् सत्यम् ।। **महाम्**–नकारतकारलोपश्छान्दसः। **चकर्तिथ**–'कृती छेदने' लिट्। **सर्तवै**–'कृत्यार्थे तवैकेन्' इति भावे तवैप्रत्ययः। **दधिषे**–लिटि क्रादिनियमादिट् ।। ६ ।।

।। इति प्रथमाष्टके चतुर्थाध्याये द्वाविंशो वर्गः ।।

।। इति प्रथममण्डले दशमोऽनुवाकः ।।

## ।। अथ त्रयोविंशो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

(सूक्तम् ५८)

९ नोधा गौतमः । अग्निः । जगती; ६-९ त्रिष्टुप् ।

**नू चित्सहोजा अमृतो नि तुन्दते होता यद्दूतो अभवद्विवस्वतः ।**
**वि साधिष्ठेभिः पथिभी रजो मम आ देवताता हविषा विवासति ।। १ ।।**
**नु । चित् । सहःऽजाः । अमृतः । नि । तुन्दते । होता । यत् । दूतः । अभवत् । विवस्वतः । वि । साधिष्ठेभिः । पथिऽभिः । रजः । ममे । आ । देवऽताता । हविषा । विवासति ।। १ ।।**

**वेङ्कटमाधव–** नोधा आङ्गिरसः । क्षिप्रम् एव मथनेन जातः मरणवर्जितः निश्चलति । **होता** यदा **दूतः** भवति यजमानस्य । साधुतमैः रक्षोभिः अनुपहतैः मार्गैः अन्तरिक्षं परिच्छिनत्ति । परिचरति यज्ञे **हविषा** देवानिति ।। १ ।।

**मुद्गल–** 'एकादशानुवाके सप्त सूक्तानि । तत्र 'नू चित्' इति नवर्चं प्रथमं सूक्तम् । गौतमो नोधा ऋषिः । आद्या पञ्च जगत्यः । शिष्टाश्चतस्त्रस्त्रिष्टुभः । अग्निर्देवता ।।

**सहोजाः** सहसा बलेन जातः । अग्निर्हि बलेन मथ्यमानोऽरण्योः सकाशात् जायते । **अमृतः** मरणरहितः । एवम्भूतोऽग्निः **नू चित्** क्षिप्रमेव **नि तुन्दते** नितरां व्यथयति । उत्पन्नमात्रस्याग्नेः स्पृष्टुम् अशक्यत्वात् । **यत्** यदा **होता** देवानाम् आह्वाता अयम् अग्निः **विवस्वतः** परिचरतो यजमानस्य देवान् प्रति हविर्वहनाय **दूतः अभवत्** हविर्वहने नियुक्तो भवति । तदानीम् **साधिष्ठेभिः** समीचीनैः **पथिभिः** मार्गैर्गच्छन् **रजः** अन्तरिक्षलोकम् **वि ममे निर्ममे** । पूर्वं विद्यमानमप्यन्तरिक्षम् असत्कल्पमभूत् । इदानीं तस्य तेजसा प्रकाशमानं सदुत्पन्नमिव दृश्यते । किञ्च, **देवताता** देवतातौ यज्ञे **हविषा** चरुपुरोडाशादिलक्षणेन देवान् **आ विवासति** परिचरति ।। १ ।।

**सायण–** एकादशानुवाके सप्त सूक्तानि । तत्र 'नू चित्' इति नवर्चं प्रथमं सूक्तं गौतमस्य नोधस आर्षमाग्नेयम् । आद्याः पञ्च जगत्यः । शिष्टाश्चतस्त्रस्त्रिष्टुभः । तथा चानुक्रान्तम्– 'नू चिन्नव नोधा गौतम आग्नेयं हि चतुस्त्रिष्टुबन्तम्' इति । हि इति वचनात् उत्तरे च द्वे सूक्ते

अग्निदेवताके । अभिप्लवषढहस्य पञ्चमेऽहनि आग्निमारुते इदं जातवेदस्यं निविद्धानम् । 'तृतीयस्य' इति खण्डे सूत्रितं– पृक्षस्य वृष्णो वृष्णे शर्धाय नू चित्सहोजा इत्याग्निमारुतम्' (आश्व.श्रौ.७.७) इति । प्रातरनुवाकस्याग्नेये क्रतावाश्विनशस्त्रे च जागते छन्दस्यादितः पञ्चर्चः । सूत्रितं च– 'त्वमग्ने प्रथमो अङ्गिरा नूचित्सहोजा अमृतो नि तुन्दत इति पञ्च' (आश्व.श्रौ.४.१३) इति ।।

**सहोजाः** सहसा बलेन जातः । अग्निर्हि बलेन मथ्यमानोऽरण्योः सकाशात् जायते । **अमृतः** मरणरहितः । एवम्भूतोऽग्निः **नू चित्** क्षिप्रमेव **नि तुन्दते** नितरां व्यथयति । उत्पन्नमात्रस्याग्नेः स्प्रष्टुम् अशक्यत्वात् । यद्वा निर्गच्छति । तुन्दतिर्गत्यर्थः सौत्रो धातुः । **यत्** यदा **होता** देवानामाह्वाता होमनिष्पादको वाऽयमग्निः **विवस्वतः** परिचरतो यजमानस्य देवान्प्रति हविर्वहनाय **दूतः** अभवत् हविर्वहने नियुक्तो भवति तदानीं **साधिष्ठेभिः** समीचीनैः **पथिभिः** मार्गैर्गच्छन् **रजः** अन्तरिक्षलोकं **वि ममे** निर्ममे । पूर्वं विद्यमानमप्यन्तरिक्षम् असत्कल्पमभूत् । इदानीं तस्य तेजसा प्रकाशमानं सद् उत्पन्नमिव दृश्यते । किञ्च 'देवताता' इति यज्ञनाम । **देवताता** देवतातौ यज्ञे **हविषा** चरुपुरोडाशादिलक्षणेन देवान् **आ विवासति** परिचरति ।।

**अमृतः** । मृतं मरणम् अस्य नास्तीति बहुव्रीहौ 'नञो जरमरमित्रमृताः' इत्युत्तरपदाद्युदात्त -त्वम् । **तुन्दते** 'तुद व्यथने' । स्वरितेत्त्वादात्मनेपदम् । नकारोपजनश्छान्दसः । **साधिष्ठेभिः** । बाढशब्दात् आतिशायनिके इष्ठनि 'अन्तिकबाढयोर्नेदसाधौ' (पा.सू.५.३.६३) इति साधादेशः । 'बहुलं छन्दसि' इति भिसः ऐसभावः । नित्त्वादाद्युदात्तत्वम् । **देवताता** 'सर्वदेवात्तातिल्' (पा.सू.४.४.१४२) इति स्वार्थिकः तातिल्प्रत्ययः । तेन च तत्सम्बन्धी यज्ञो लक्ष्यते । यद्वा देवान्हविषा आ विवासति इति योज्यम् । 'सुपां सुलुक्' इति विभक्तेः डादेशः । लित्स्वरेण प्रत्ययात् पूर्वस्योदात्तत्वम् ।। १ ।।

**सिद्धाञ्जनम्–** एकादशेऽनुवाके सप्त सूक्तानि । तत्र 'नू चित्' इति नवर्चं प्रथमं सूक्तम् आग्नेयम् गौतमस्य नोधस आर्षम् । आद्याः पञ्च जगत्यः शिष्टाश्चतस्रस्त्रिष्टुभः ।।

**सहोजाः** सहसा बलेन जातः । सहसः सूनुर्हि प्रथितोऽग्निः । **अमृतः** मृतिरहितः । **नू चित् नि तुन्दते** क्षिप्रं निर्गच्छति । **यत्** यदा **होता** देवानामाह्वाता अयमग्निः **विवस्वतः** भास्वतः उत्तमस्य ज्योतिषः **दूतः अभवत्** दूतो भवति । अग्निर्देवानां दूतः यजने तेषां आह्वाता

यजमानार्थम् । 'विवस्वतः परिचरतः यजमानस्य दूतः' इति सायणः । अथ यदा विवस्वतो ज्योतिषोऽयं दूतः आह्वाता देवानां भूत्वा सहसः सूनुः क्षिप्रं निर्गच्छति, तदानीं स क्षिप्रकारी किं करोति? आह– **साधिष्ठेभिः** समीचीनैः **पथिभिः** मार्गैः **रजः** अन्तरिक्षं लोकं **विममे** निर्माति । पूर्वं ब्रह्माण्डे वर्तमानमपि पिण्डाण्डे यजमानाय भूमेरूर्ध्वं भुवर्लोकपदवेदनीयं अन्तरिक्षं द्यावापृथिव्योरन्तरे विशालं प्राणायतनं अपां निधानस्थानं उत्पादयति । इदं रहस्यम् देवानामिव लोकानामपि यजमानापेक्षया पुनः सृष्टिरिति बोध्यम् । कर्मठास्तु 'पूर्वं विद्यमानमप्यन्तरिक्षं असत्कल्पम् अभूत्, इदानीं तस्य (अग्नेः) तेजसा प्रकाशमानं सत् उत्पन्नमिव दृश्यते' इत्याहुः । किञ्च **देवताता** देवतातौ देवानां रूपनिष्पादने, निमित्तसप्तमी । **हविषा** हव्येन यजमानीयार्पण द्रव्येण **आ विवासति** प्रकाशयति देवान्, परिचरतीति वा सायणीयानुसारतः ॥

**तुन्दते**–तुन्दतिर्गत्यर्थः नेह व्यथनार्थः । **साधिष्ठेभिः**–बाढशब्दात् आतिशायनिके इष्ठनि साधादेशः, भिस ऐसभावः । **देवताता**–'सर्वदेवात्तातिल्' इति स्वार्थिकः तातिल् प्रत्यय इति वदन् देवतातिर्यज्ञनाम इति व्याचष्टे सायणः । कर्मपरार्थस्य युक्तो भवत्वयमर्थः । अन्यत्र स एव विस्तारार्थात् तनोतेर्धातोः तातिशब्दं अवतारयति 'देवतातये देवानां विस्तारयुक्ताय यागाय तदर्थम्' (१.१२७.९) इत्याह । अस्माभिः एवं सायणमेवानुसृत्य तनोतेरिति प्रक्रिया दत्ता । तात्पर्यं तु अन्यथा भवत्येव ॥ १ ॥

## ऋक्संहिता पदपाठसहिता

**आ स्वमद्म युवमानो अजरस्तृष्वविष्यन्नतसेषु तिष्ठति ।**
**अत्यो न पृष्ठं प्रुषितस्य रोचते दिवो न सानु स्तनयन्नचिक्रदत् ॥ २ ॥**
**आ । स्वम् । अद्म । युवमानः । अजरः । तृषु । अविष्यन् । अतसेषु । तिष्ठति ।**
**अत्यः । न । पृष्ठम् । प्रुषितस्य । रोचते । दिवः । न । सानु । स्तनयन् । अचिक्रदत् ॥**

**वेङ्कटमाधव– आ तिष्ठति स्वम्** अन्नं तृणगुल्मादिकम् आत्मना सम्मिश्रयन् । **अजरः** क्षिप्रं सर्वं भक्षयन् काष्ठेषु । वनस्थैः काष्ठैः उक्षितस्याग्नेः **पृष्ठम्** अश्वः इव **रोचते** इतस्ततः शीघ्रगमनात् । तथाऽसौ **स्तनयन् दिवः सानु** मेघ इव शब्दं करोति ॥ २ ॥

**मुद्गल– अजरः** जरारहितोऽयम् अग्निः **स्वम्** स्वकीयम् **अद्म** अदनीयं तृणगुल्मादिकम्

**युवमानः** स्वकीयज्वालया सम्मिश्रयन् तदनन्तरं च **अविष्यन्** भक्षयंश्च । एवम्भूतोऽग्निः **तृषु** क्षिप्रमेव **अतसेषु** काष्ठेषु **आ तिष्ठति** आरोहति । **प्रुषितस्य** दग्धुमितस्ततः प्रवृत्तस्याग्नेः **पृष्ठम्** उपर्यवस्थितं ज्वालाजालम् **अत्यः न रोचते** । यथा सततगमनशीलोऽत्योऽश्वः इतस्ततो गच्छन् शोभते एवमग्नेर्ज्वालाऽपि सर्वतो गच्छन्ती शोभते इति भावः । तदानीम् **दिवः** द्युलोकस्य सम्बन्धि **सानु** समुच्छ्रितमभ्रम् **स्तनयन् न** शब्दयन्निव **अचिक्रदत्** गम्भीरशब्दम् आत्मानम् अचीकरत् ।।

**सायण– अजरः** जरारहितोऽयम् अग्निः **स्वम्** स्वकीयम् **अन्न** अदनीयं तृणगुल्मादिकम् **युवमानः** स्वकीयज्वालया सम्मिश्रयन् तदनन्तरं च **अविष्यन्** भक्षयंश्च । अविष्यन् इत्येतत् अत्तिकर्मसु पठितम् (नि.२.८.६) । एवम्भूतोऽग्निः **तृषु** क्षिप्रमेव **अतसेषु** प्रभूतेषु काष्ठेषु **आ तिष्ठति** आरोहति । अत्र अतसशब्दः काष्ठवाची 'अतसं न शुष्कम्' (ऋ.सं.४.४.४) इति दर्शनात् । **प्रुषितस्य** दग्धुमितस्ततः प्रवृत्तस्याग्नेः **पृष्ठम्** उपर्यवस्थितं ज्वालाजालम् **अत्यः न रोचते** । यथा सततगमनशीलोऽत्योऽश्वः इतस्ततो गच्छन् शोभते एवमग्नेर्ज्वालाऽपि सर्वत्र गच्छन्ती शोभते इति भावः । तदानीम् **दिवः** द्युलोकस्य सम्बन्धि **सानु** समुच्छ्रितमभ्रम् **स्तनयन् न** शब्दयन्निव **अचिक्रदत्** गम्भीरशब्दम् आत्मानम् अचीकरत् ।।

**युवमानः** 'यु मिश्रणे' । व्यत्ययेन आत्मनेपदम् । शपि प्राप्ते व्यत्ययेन शः । तस्य 'बहुलं छन्दसि' इति लुगभावः । अदुपदेशात् लसार्वधातुकानुदात्तत्वे विकरणस्वर एव शिष्यते । **अजरः** । बहुव्रीहौ 'नञो जरमरमित्रमृताः' इत्युत्तरपदाद्युदात्तत्वम् । **अचिक्रदत्** 'कदि क्रदि क्लदि आह्वाने रोदने च' । अस्मात् ण्यन्तात् लुङि आगमानुशासनस्यानित्यत्वात् नुमभावः । द्विर्भावहलादिशेष-सन्वद्भावेत्वानि ।। २ ।।

**सिद्धाञ्जनम्– अजरः** जरारहितः अग्निः **स्वम्** स्वकीयं **अन्न** अदनीयं यजमानेन हुतं **युवमानः** मिश्रयन् ज्वलितेन आत्मनेति शेषः । **तृषु** क्षिप्रं **अविष्यन्** वर्धिष्यमाणः । अवतिर्वर्धनार्थः, क्वचिद्रक्षणार्थश्च । अत्तिकर्मेति सायणः । हुतेन ज्वलति ज्वालया वर्धतेऽग्निः । एवं वृद्धिं गमिष्यन् **अतसेषु** शुष्केषु काष्ठेषु **आतिष्ठति** आरोहति । अन्नमयादिशरीरयुक्ते यजमाने ये परिपाकवन्तोंऽशाः ज्वालामयतां प्राप्तुं सिद्धा भवन्ति ते काष्ठशब्दलक्षिताः भवन्ति । तथा अग्नौ परिपक्वांशेषु यजमानं आरोहति सति, **प्रुषितस्य** तस्य दग्धकाष्ठस्य, प्रुषितातसस्य प्रुषितस्येत्युक्तं पीतोदका गावः पीताः भुक्तान्ना ब्राह्मणाः भुक्ता इतिवत् **पृष्ठम्** पश्चाद्भागः **अत्यो**

**न** सन्ततगमनशीलः अश्व इव **रोचते** शोभते । तदानीं **दिवः सानु** द्युलोकस्य समुच्छ्रितं स्थानं **स्तनयन् न** शब्दयन्निव **अचिक्रदत्** गम्भीरं शब्दमात्मानम् अकारयत् । अग्नौ ऊर्ध्वमारोहति सति, अन्तर्यजने चलति, बह्वेवंविधं दैवतवृत्तं प्रकाशं भवतीति बोध्यम् । **युवमानः**–'यु मिश्रणे' व्यत्ययेनात्मनेपदम् । **अचिक्रदत्**–'कदि क्रदि क्लदि आह्वाने रोदने च' अस्मात् ण्यन्तात् लुङ् ।।

## ऋक्संहिता पदपाठसहिता

**क्राणा रुद्रेभिर्वसुभिः पुरोहितो होता निषत्तो रयिषाळमर्त्यः ।**
**रथो न विक्ष्वृञ्जसान आयुषु व्यानुषग्वार्या देव ऋण्वति ।। ३ ।।**

**क्राणा । रुद्रेभिः । वसुऽभिः । पुरःऽहितः । होता । निऽसत्तः । रयिषाट् । अमर्त्यः । रथः । न । विक्षु । ऋञ्जसानः । आयुषु । वि । आनुषक् । वार्या । देवः । ऋण्वति ।।**

**वेङ्कटमाधव–** कुर्वाणः रुद्रादिभिः पुरो निहितः **होता** यज्ञे निषण्णः शत्रुधनानाम् अभिभविता **अमर्त्यः रथः** इवान्नार्थम् मनुष्येष्वाधारादिभिः प्रसाध्यमानः प्रक्षिपति अनुषक्तम् धनानि देवः ।।

**मुद्गल– क्राणा** हविर्वहनं कुर्वाणः **रुद्रेभिः** रुद्रैः **वसुभिः** च **पुरोहितः** पुरस्कृतः **होता** देवानामाह्वाता **निषत्तः** हविस्स्वीकरणाय देवयजने निषण्णः **रयिषाट्** रयीणां शत्रुधनानाम् अभिभविता **अमर्त्यः** मरणरहितः । एवम्भूतः **देवः** द्योतमानोऽग्निः **विक्षु** प्रजासु लौकिकजनेषु **रथः न** रथ इव **आयुषु** यजमानलक्षणेषु मनुष्येषु **ऋञ्जसानः** स्तूयमानः **वार्या** वार्याणि सम्भजनीयानि धनानि **आनुषक्** आनुषक्तं यथा भवति तथा **वि ऋण्वति** विशेषेण प्रापयति ।। ३ ।।

**सायण– क्राणा** हविर्वहनं कुर्वाणः **रुद्रेभिः** रुद्रैः **वसुभिः** च **पुरोहितः** पुरस्कृतः **होता** देवानामाह्वाता **निषत्तः** हविस्स्वीकरणाय देवयजने निषण्णः **रयिषाट्** रयीणां शत्रुधनानाम् अभिभविता **अमर्त्यः** मरणरहितः । एवम्भूतः **देवः** द्योतमानोऽग्निः **विक्षु** प्रजासु लौकिकजनेषु **रथः न** रथ इव **आयुषु** यजमानलक्षणेषु मनुष्येषु **ऋञ्जसानः** स्तूयमानः **वार्या** वार्याणि सम्भजनीयानि धनानि **आनुषक्** आनुषक्तं यथा भवति तथा **वि ऋण्वति** विशेषेण प्रापयति । यद्वा, वार्याणि वरणीयानि हवींषि स्वयं प्राप्नोति ।।

**क्राणा** । करोतेः शानचि 'बहुलं छन्दसि' इति विकरणस्य लुक् । शानचो ङित्त्वाद् गुणाभावे यणादेशः । 'चितः' इत्यन्तोदात्तत्वम् । 'सुपां सुलुक्' इति सोः पूर्वसवर्णदीर्घत्वम् । **निषत्तः**

'षद्लृ विशरणगत्यवसादनेषु' अस्मात् कर्मणि निष्ठा । 'नसत्तनिषत्त' (पा.सू.८.२.६१) इत्यादिना निष्ठानत्वाभावो निपातितः । 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् । **रयिषाट्** 'षह अभिभवे' । 'छन्दसि सहः' (पा.सू.३.२.६३) इति ण्विः । 'सहेः साडः सः' (पा.सू. ८.३.५६) इति षत्वम् । **ऋञ्जसानः** । ऋञ्जतिः स्तुतिकर्मा । 'असानच्' इत्यनुवृत्तौ 'ऋञ्जिवृधिमन्दिसहिभ्यः कित्' (उ.सू.२.२४४) इति कर्मणि असानच्प्रत्ययः । 'चितः' इत्यन्तोदात्तत्वम् । **आयुषु** । आयवः इति मनुष्यनाम (नि.२.३.१७) । 'इण् गतौ' इत्यस्मात् 'छन्दसीणः' इति उण्प्रत्ययः । वृद्ध्यायादेशौ । **वार्या** 'वृङ् सम्भक्तौ' । 'ऋहलोर्ण्यत्' । तित्स्वरिते प्राप्ते 'ईडवन्दवृशंसदुहां ण्यतः' इत्याद्युदात्तत्वम् । 'शेश्छन्दसि' इति शेर्लोपः । **ऋण्वति** 'रिवि गतौ' । व्यत्ययेन सम्प्रसारणम् । इदित्त्वात् नुम् । कर्तरि शप् ।। ३ ।।

**सिद्धाञ्जनम्– क्राणा** कुर्वाणः । स्वकृत्यं हव्यवहनादिकमिति शेषः । **रुद्रेभिः वसुभिः** रुद्रसंज्ञकैः वसुसंज्ञकैः स्थानव्यापारादिभेदापेक्षया उभयविधैः देवैः । **पुरोहितः** पुरस्तान्निहितः पुरस्कृतः पूजितो वा **होता** देवानामाह्वाता **निषत्तः** निषण्णः अन्तर्यजनस्थाने, **रयिषाट्** रयीणां धनानां जेता यजमानार्थम् । **अमर्त्यः** मरणरहितः । एवम्भूतः **देवः** अग्निः **विक्षु** प्रजासु **रथो न** रथ इव **आयुषु** यजनाध्वनि गन्तृषु यजमानेषु **ऋञ्जसानः** प्रसाध्यमानः स्तुतिभिरिति शेषः । **आनुषक्** अनुषक्तं यथा भवति तथा **वार्या** वार्याणि वरणीयानि यानि यजमानेषु वर्तन्ते देवेभ्यो दानाय तानि **व्यृण्वति** विशेषेण स्वयं प्राप्नोति, देवान् प्रति प्रापयितुम् ।। **क्राणा**–करोतेः शानच्, छन्दसि विकरणस्य लुक्, सोर्लोपः पूर्वसवर्णदीर्घश्च । **निषत्तः**–सीदतेः कर्मणि निष्ठा, निष्ठानत्वाभावो निपातितः । **रयिषाट्**–'सह अभिभवे' अस्मात् ण्विः, सस्य षत्वम् । **ऋञ्जसानः**–ऋञ्जतिः प्रसाधनकर्मा, कर्मणि असानच्प्रत्ययः । अन्ये गताः ।। ३ ।।

## ऋक्संहिता पदपाठसहिता

**वि वातजूतो अतसेषु तिष्ठते वृथा जुहूभिः सृण्या तुविष्वणिः ।**
**तृषु यदग्ने वनिनो वृषायसे कृष्णं त एम रुशदूर्मे अजर ।। ४ ।।**
वि । वातऽजूतः । अतसेषु । तिष्ठते । वृथा । जुहूभिः । सृण्या । तुविऽस्वनिः ।
तृषु । यत् । अग्ने । वनिनः । वृषऽयसे । कृष्णम् । ते । एम । रुशत्ऽऊर्मे । अजर ।।

**वेङ्कटमाधव– वि तिष्ठते** वातप्रेरितः **अतसेषु** अनायासेन हूयमानैः काष्ठैः ज्वालालक्षणेनाङ्कुशेन च युक्तः महास्वनः । क्षिप्रं यदा त्वम् **अग्ने!** वृक्षान् प्रति वृषा इवाचरसि । दहसीत्यर्थः । तदानीं तत्र गमनमार्गः कृष्णो भवति श्वेतज्वालासङ्घ! **अजर!** ।। ४ ।।

**मुद्गल– वातजूतः** वायुना प्रेरितः **तुविष्वणिः** महास्वनः । एवम्भूतोऽग्निः **जुहूभिः** स्वकीयाभिर्जिह्वाभिः । **सृण्या** सरणशीलेन तेजस्समूहेन च युक्तः सन् **वृथा** अनायासेनैव **तृषु** क्षिप्रमेव **अतसेषु** उन्नतेषु वृक्षेषु **वि तिष्ठते** विशेषेण तिष्ठति । हे **अग्ने! यत्** यदा **वनिनः** वनसम्बद्धान् वृक्षान् दग्धुम् **वृषायसे** वृषवदाचरसि, दहसीत्यर्थः । हे **रुशदूर्मे** दीप्तज्वाल! **अजर** जरारहित अग्ने! **ते** तव **एम** गमनमार्गः **कृष्णं** कृष्णवर्णो भवति ।। ४ ।।

**सायण– वातजूतः** वायुना प्रेरितः **तुविष्वणिः** महास्वनः । एवम्भूतोऽग्निः **जुहूभिः** स्वकीयाभिर्जिह्वाभिः । **सृण्या** सरणशीलेन तेजस्समूहेन च युक्तः सन् । वृथा इति अनायासवचनः । **वृथा** अनायासेनैव **तृषु** क्षिप्रमेव **अतसेषु** उन्नतेषु वृक्षेषु **वि तिष्ठते** विशेषेण तिष्ठति । हे **अग्ने! यत्** यदा **वनिनः** वनसम्बन्धान् वृक्षान् दग्धुम् **वृषायसे** वृषवदाचरसि दहसीत्यर्थः । हे **रुशदूर्मे** दीप्तज्वाल! **अजर** जरारहिताग्ने! **ते** तव **एम** गमनमार्गः **कृष्णं** कृष्णवर्णो भवति ।।

**वातजूतः** । जू इति सौत्रो धातुः । वातेन जूतो वातजूतः । 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरत्वम् । **वि तिष्ठते** 'समवप्रविभ्यः स्थः' इत्यात्मनेपदम् । **जुहूभिः** 'हु दानादनयोः' । हूयते आस्विति जुह्वः । 'हुवः श्लुवच्च' (उ.सू.२.२१८) इति क्विप्, चकारात् दीर्घः । श्लुवद्भावात् द्विर्भावादि । 'धातोः' इत्यन्तोदात्तत्वम् । **सृण्या** 'सृ गतौ' । सरतीति सृणिः । 'सृवृषिभ्यां कित्' (उ.सू.४.४८९) इति निप्रत्ययः । **एम** । एत्यनेनेति एम मार्गः । 'इण् गतौ' इत्यस्मात् करणे औणादिको मनिन् । नित्त्वादाद्युदात्तत्वम् ।। ४ ।।

**सिद्धाञ्जनम्– वातजूतः** वायुना प्रेरितः **तुविष्वणिः** प्रबलस्वनः अग्निः । **जुहूभिः** जिह्वाभिः स्वकीयाभिर्ज्वालाभिः **सृण्या** सरणशीलेन अङ्कुशेन, तत्स्थानीयेन युक्तः **वृथा** अनायासवचनः, अनायासेन **अतसेषु** काष्ठेषु मध्ये **वितिष्ठते** व्याप्य तिष्ठति । हे **अग्ने! यत्** यदा **वनिनः** वनसम्बद्धान् भूरुहान् प्रति **तृषु** अतिलिप्सया, तृषु क्षिप्रनाम । **वृषायसे** वृष इवाचरसि । वृक्षेषु मध्ये गच्छन् इव भवसि तदा हे **रुशदूर्मे** दीप्तज्वाल, **अजर** जरारहित! **ते** तव **एम**

गमनमार्गः **कृष्णम्** कृष्णवर्णो भवति । निबिडे वनमध्ये गच्छतो वृषभस्य मार्गः कृष्ण एव भवति, अन्धकारमयत्वात् । बाह्यार्थे वनदहनदक्षोऽयम् अग्निर्भौतिक एव वर्ण्यते, नायं याज्ञिकोऽग्निः । वस्तुतस्तु योऽग्निरन्तर्यजने प्रादुर्भूय स्वीयं दिव्यं कर्म निर्वहति तस्यैवाभिवर्णनम् अत्र बोध्यम् ।।

सारं ब्रूमः । वायुलक्षितेन प्राणबलेन प्रेरितः 'वातजूतः' प्रागुक्तलक्षणेषु काष्ठेषु ज्वलितः तमोपहेन तेजसा स्वबलाविष्कारलक्षणनादयुक्तः 'तुविष्वणिः' व्याप्य स्थितः । तादृशोऽग्निः वननीयस्य सुखस्य भजकान् यजमानान् प्रति यदा स्वकीयं पौरुषं बलं प्रकटयति 'वृषयसे' तदा विशेषतः स्वयं दीप्तज्वालो भवति तेषामर्थे, तस्य मार्गस्तु तमोमयत्वात् कृष्णवर्णः, नूतनस्य मार्गस्य स्रष्टव्यत्वात् स कृष्णो भवतीति ग्राह्यम् ।। वातजूतादयो गताः । **सृण्या**–'सृ गतौ' अस्मात् निप्रत्ययः । **एम**–'एत्यनेनेति एम मार्गः, इण्धातोः करणे मनिन् ।। ४ ।।

## ऋक्संहिता पदपाठसहिता

**तपुर्जम्भो वन आ वातचोदितो यूथे न साह्वाँ अव वाति वंसगः ।**
**अभिव्रजन्नक्षितं पाजसा रजः स्थातुश्चरथं भयते पतत्रिणः ।। ५ ।।**
**तपुःऽजम्भः । वने । आ । वातऽचोदितः । यूथे । न । सह्वान् । अव । वाति । वंसगः । अभिऽव्रजन् । अक्षितम् । पाजसा । रजः । स्थातुः । चरथम् । भयते । पतत्रिणः ।।**

**वेङ्कटमाधव**– तापयितृज्वालादंष्ट्रः वृक्षेषु वातेन प्रेरितः ज्वालासङ्घे **न** सहनशीलोऽग्निः **अव आ वाति** वननीयगमनोऽधो गच्छति । अक्षीणमप्यरण्यमध्यस्थमपि उदकं ज्वालया अभिगच्छन् अव आ वाति । तस्मादग्नेः स्थावरं जङ्गमश्च बिभेति, पक्षिणश्च ।। ५ ।।

**मुद्गल– तपुर्जम्भः** तपूंषि ज्वाला एव जम्भा आयुधानि यस्य स तथोक्तः । **वातचोदितः** वायुना प्रेरितः । एवम्भूतोऽग्निः **यूथे** ज्वालासमूहे सति **अक्षितम्** अक्षीणम् **रजः** आर्द्रवृक्षान्तर्गतमुदकम् **पाजसा** तेजोबलेन **अभिव्रजन्** आभिमुख्येन गच्छन् **वने** अरण्ये **साह्वान्** सर्वम् अभिभवन् **आ** आभिमुख्येन **अव वाति** व्याप्नोति । दृष्टान्तः– **वंसगः न** यथा वननीयगतिर्वृषः गोयूथे सर्वम् अभिभवन् वर्तते तद्वत् । यस्मादेवं तस्मात् **पतत्रिणः** पतनवतोऽग्नेः सकाशात् **स्थातुः** स्थावरम् **चरथम्** चरत् जङ्गमश्च भयते बिभेति ।। ५ ।।

**सायण– तपुर्जम्भः** । तपूंषि ज्वाला एव जम्भा आयुधानि मुखानि वा यस्य स तथोक्तः: । **वातचोदितः** वायुना प्रेरितः । एवम्भूतोऽग्निः **यूथे** ज्वालासमूहे सति **अक्षितम्** अक्षीणं **रजः** आर्द्रवृक्षान्तर्गतमुदकं **पाजसा** तेजोबलेन **अभिव्रजन्** आभिमुख्येन गच्छन् **वने** अरण्ये **साह्वान्** सर्वम् अभिभवन् **आ** आभिमुख्येन **अव वाति** व्याप्नोति । तत्र दृष्टान्त– **वंसगः न** यथा वननीयगतिः वृषः गोयूथे सर्वम् अभिभवन् वर्तते तद्वत् । यस्मादेवं तस्मात् **पतत्रिणः** पतनवतोऽग्नेः सकाशात् **स्थातुः** स्थावरं **चरथं** च जङ्गमं च **भयते** बिभेति ।।

**साह्वान्** 'दाश्वान्साह्वान्' इति कसुप्रत्ययान्तो निपातितः । 'दीर्घादटि समानपादे' इति संहितायां नकारस्य रुत्वम् । 'आतोऽटि नित्यम्' इति सानुनासिक आकारः । यत्वलोपौ । ह्रस्वत्वं छान्दसम् । **स्थातुः** । 'कमिमनिजनि' (उ.सू.१.७२) इत्यादिना विहितः तुप्रत्ययो बहुलवचनात् तिष्ठतेरपि भवति । यद्वा स्थातुरनन्तरं चरथं भयते । प्रथमं स्थातृ स्थावरं बिभेति पश्चाच्चरथमित्यर्थः । **चरथम्** । चर गत्यर्थः । अस्मात् औणादिकः अथप्रत्ययः । **भयते** 'ञिभी भये' । व्यत्ययेनात्मनेपदम् । 'बहुलं छन्दसि' इति श्लोरभावः । गुणावादेशौ ।। ५ ।।

**सिद्धाञ्जनम्– तपुर्जम्भः** तपूंषि ज्वालाः जम्भा मुखानि यस्यासौ । **वातचोदितः** वायुना प्रेरितः अग्निः । **वंसगः यूथे न** गवां समूहे वननीयगतिः वृषभ इव **वने** वननीये सुखे **साह्वान्** प्रतिबन्धकान् सर्वान् अभिभवन् **आ अव वाति** आभिमुख्येन व्याप्नोति । पुनः किं कुर्वन्? **अक्षितम्** अक्षीणं **रजः** अन्तरिक्षं लोकं **पाजसा** बलेन **अभिव्रजन्** आभिमुख्येन गच्छन् । यस्मादेवं स्वबलं प्रदर्शयति तस्मात् **पतत्रिणः** पतनवतः, पक्षिवद्वेगेनोत्पततोऽग्नेः सकाशात् **स्थातुः** स्थावरं **चरथम्** जङ्गमं च **भयते** बिभेति । स्वस्य अल्पबलत्वं अग्नेः प्रबलत्वं च वीक्ष्य कम्पते उभयविधापि सृष्टिः । **साह्वान्**–'दाश्वान्साह्वान्' इति कसुप्रत्ययान्तो निपातितः । **स्थातुः**– तिष्ठतेः 'कमिमनी'त्यादिना तुप्रत्ययः । **चरथम्**–चरतेः अथप्रत्ययः । **भयते**–'ञिभी भये' श्लोरभावः, व्यत्ययेनात्मनेपदम् ।। ५ ।।

।। इति प्रथमाष्टके चतुर्थाध्याये त्रयोविंशो वर्गः ।।

## ।। अथ चतुर्विंशो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

**दधुष्ट्वा भृगवो मानुषेष्वा रयिं न चारुं सुहवं जनेभ्यः ।**
**होतारमग्ने अतिथिं वरेण्यं मित्रं न शेवं दिव्याय जन्मने ।। ६ ।।**

दधुः । त्वा । भृगवः । मानुषेषु । आ । रयिम् । न । चारुम् । सुऽहवम् । जनेभ्यः ।
होतारम् । अग्ने । अतिथिम् । वरेण्यम् । मित्रम् । न । शेवम् । दिव्याय । जन्मने ।।

**वेङ्कटमाधव– आ दधुः** त्वाम् **भृगवः मानुषेषु** धनम् इव शोभनं स्वाह्वानं जनानाम् । **होतारम् अग्ने! अतिथिम्** वरणीयम् **मित्रम्** इव सुखकरं दिवि जाताय देवगणाय ।। ६ ।।

**मुद्गल–** हे **अग्ने! त्वा** त्वाम् **मानुषेषु** मनुष्येषु मध्ये **भृगवः** एतत्संज्ञा महर्षयः **दिव्याय जन्मने** देवत्वप्राप्तये **चारुम् रयिम् न** शोभनं धनमिव **आ दधुः** आधानसम्भारेषु मन्त्रैः स्थापनेन समस्कुर्वन् । कीदृशं त्वाम् । **जनेभ्यः सुहवम्** यजमानार्थमाह्वातुं सुशकम् **होतारम्** देवानामाह्वातारम् **अतिथिम्** अतिथिवत् पूज्यम् **वरेण्यम्** वरणीयम् **मित्रम् न शेवम्** । यथा सखा सुखकरो भवति तद्वत् सुखकरमित्यर्थः ।। ६ ।।

**सायण–** हे **अग्ने! त्वा** त्वाम् **मानुषेषु** मनुष्येषु मध्ये **भृगवः** एतत्संज्ञा महर्षयः **दिव्याय जन्मने** देवत्वप्राप्तये **चारुम् रयिम् न** शोभनं धनमिव **आ दधुः** आधानसम्भारेषु मन्त्रैः स्थापनेन समस्कुर्वन् । कीदृशं त्वाम् । **जनेभ्यः सुहवम्** यजमानार्थमाह्वातुं सुशकम् **होतारम्** देवानामाह्वातारम् **अतिथिम्** अतिथिवत् पूज्यम् । यद्वा देवयजनदेशेषु सततं गन्तारम् । **वरेण्यम्** वरणीयम् **मित्रम् न शेवम्** । यथा सखा सुखकरो भवति तद्वत् सुखकरमित्यर्थः ।।

**दधुः** । लिटि उसि 'आतो लोप इटि च' इति आकारलोपः । 'युष्मत्तत्तक्षुःष्वन्तःपादम्' इति विसर्जनीयस्य षत्वम् । **सुहवम्** । ह्वयतेः 'ईषद्दुःसुषु' इति खल् । 'बहुलं छन्दसि' इति सम्प्रसारणम् । परपूर्वत्वम् । गुणावादेशौ । 'लिति' इति प्रत्ययात् पूर्वस्योदात्तत्वम् । कृदुत्तरपदप्रकृतिस्वरत्वम् ।। ६ ।।

**सिद्धाञ्जनम्–** हे **अग्ने! त्वा** त्वाम् **मानुषेषु** मनुष्येषु मध्ये **भृगवः** भृगुसंज्ञकाः महर्षयः **आ दधुः** स्थापयामासुः । अङ्गिरसामिव भृगूणामपि मानुषत्वं देवत्वं च बोध्यम् । अङ्गिरसो

देवत्वे अग्निज्वालाविभवाः, भृगवस्तु भरणशीलाः सूर्यरश्मयः । उभयेषां अग्निसम्बन्धित्वं निहितं मानुषे यजमाने, तथा वर्णितम् । किमर्थं दधुः? **दिव्याय जन्मने** देवत्वप्राप्तये **चारुम् रयिम् न** रमणीयं धनमिव । सौरसम्पत्तिं प्राप्ता महर्षयः, उत्तमस्य ज्योतिषः सत्याश्चिद्रश्मयो वा भृगवः मर्त्येषु अमर्त्यमग्निं देवत्वाधानाय अमूल्यं धनमिव निदधुः । **जनेभ्यः सुहवम्** यजमानार्थं आह्वातुं सुशकं, **होतारम्, अतिथिम्** अतिथिवत् सत्कार्यम् **वरेण्यम् मित्रम् न शेवम्** वरणीयं सखायमिव सुखकरम् ।। **सुहवम्**–ह्वयतेः 'ईषद्दुःसुषु' इति खल् ।। ६ ।।

## ऋक्संहिता पदपाठसहिता

**होतारं सप्त जुह्वो३ं यजिष्ठं यं वाघतो वृणते अध्वरेषु ।**
**अग्निं विश्वेषामरतिं वसूनां सपर्यामि प्रयसा यामि रत्नम् ।। ७ ।।**
**होतारम् । सप्त । जुह्वः । यजिष्ठम् । यम् । वाघतः । वृणते । अध्वरेषु ।**
**अग्निम् । विश्वेषाम् । अरतिम् । वसूनाम् । सपर्यामि । प्रयसा । यामि । रत्नम् ।।७।।**

**वेङ्कटमाधव– होतारं** प्रवृता(त्ता)हुतीनां **सप्त** होतारः यष्टृतमम् **यम्** ऋत्विजः सप्त **वृणते** यज्ञेषु । **अग्निम् विश्वेषाम्** अभिगन्तारं धनानां परिचरामि अन्नेन, याचे च **रत्नम्** ।।७।।

**मुद्गल– सप्त** सप्तसङ्ख्याकाः **जुह्वः** होतारः **वाघतः** ऋत्विजः **अध्वरेषु** यागेषु **यजिष्ठम्** यष्टृतमम् **होतारम्** देवानामाह्वातारम् **यम्** अग्निम् **वृणते** सम्भजन्ते, **विश्वेषाम्** सर्वेषाम् **वसूनाम् अरतिम्** प्रापयितारं तम् **अग्निम्, प्रयसा** हविर्लक्षणेनान्नेन **सपर्यामि** परिचरामि । **रत्नम्** रमणीयं कर्मफलञ्च **यामि** याचामि ।। ७ ।।

**सायण– सप्त** सप्तसङ्ख्याकाः **जुह्वः** होतारः **वाघतः** ऋत्विजः **अध्वरेषु** यागेषु **यजिष्ठम्** यष्टृतमम् **होतारम्** देवानामाह्वातारम् **यम्** अग्निम् **वृणते** सम्भजन्ते, **विश्वेषाम्** सर्वेषाम् **वसूनाम् अरतिम्** प्रापयितारं तम् **अग्निम्, प्रयसा** हविर्लक्षणेनान्नेन **सपर्यामि** परिचरामि । **रत्नम्** रमणीयं कर्मफलञ्च **यामि** याचामि ।।

**वृणते** 'वृङ् सम्भक्तौ' क्रैयादिकः, प्रत्ययस्वरः । **अरतिम्** 'ऋ गतिप्रापणयोः' अस्मात् औणादिकः 'वहिवस्यर्तिभ्यश्चित्' (उ.सू.४,५००) इति अतिप्रत्ययः । चित्त्वादन्तोदात्तत्वम् ।

**सपर्यामि** । सपर्यतिः परिचरणकर्मा, 'सपर पूजायाम्' इति धातुः कण्ड्वादिः । अतो यक एव स्वरः शिष्यते । पादादित्वात् निघाताभावः । **यामि** । याचामीत्यस्य वर्णलोपश्छान्दसः ।।

**सिद्धाञ्जनम्– सप्त** सप्तसङ्ख्याकाः **जुह्वः** होतारः **वाघतः** स्तोतारो देवाः **यजिष्ठम्** यष्टृतमं **होतारम्** देवानामाह्वातारं **यम्** अग्निं **अध्वरेषु** दिव्याध्वयात्रावर्तिषु यज्ञेषु **वृणते** सम्भजन्ते । यदि देवोऽग्निरेव यजमानः 'यष्टृतमः' भवति तदा 'वाघतः' ऋत्विजोऽपि देवा एव भवन्ति । **सप्त** होतारस्तु सप्ततत्त्वाभिमानिनः सप्तलोकाधिष्ठाना देवाः । **जुह्वः** जिह्वाः ज्वालाः रश्मय इति तत्र तत्र यथासम्भवं कर्मपरं व्याख्यानम् । अत्र तु 'होतारः' इति सायणः, उपपद्यते च । 'यं वृणते' इत्युक्तं, तं **विश्वेषाम् वसूनाम्** सर्वेषां धनानां **अरतिम्** गन्तारं, सर्वविधसत्त्वात्मकानि धनान्युद्दिश्य यातारमित्यर्थः । **अग्निम् प्रयसा** प्रीत्या **सपर्यामि** परिचरामि । **रत्नम्** रतिं च **यामि** प्राप्नोमि ।। **अरतिम्**–'ऋ गतिप्रापणयोः' अस्माद् अतिप्रत्ययः । **सपर्यामि**–परिचरतिकर्मा, 'सपर पूजायाम्' इति कण्ड्वादिर्धातुः ।। ७ ।।

## ऋक्संहिता पदपाठसहिता

**अच्छिद्रा सूनो सहसो नो अद्य स्तोतृभ्यो मित्रमहः शर्म यच्छ ।**
**अग्ने गृणन्तमंहस उरुष्योर्जो नपात्पूर्भिरायसीभिः ।। ८ ।।**
अच्छिद्रा । सूनो इति । सहसः । नः । अद्य । स्तोतृऽभ्यः । मित्रऽमहः । शर्म । यच्छ । अग्ने । गृणन्तम् । अंहसः । उरुष्य । ऊर्जः । नपात् । पूःऽभिः । आयसीभिः ।। ८ ।।

**वेङ्कटमाधव–** अच्छिद्रं गृहम् । **सहसः** पुत्र! अस्मभ्यम् **अद्य स्तोतृभ्यः** मित्राणां पूजयितः! प्रयच्छ । **अग्ने!** स्तुवन्तम् अवर्तेः रक्ष अन्नस्य पुत्रः आयसैः पुरैः । 'गर्भो अस्योषधीनाम्' (तै.४,२,३,३) इति मन्त्रः ।। ८ ।।

**मुद्गल–** हे **सहसः सूनो** बलस्य पुत्र! बलेन हि मथ्यमानोऽग्निर्जायते । **मित्रमहः** अनुकूलदीप्तिमन् **अग्ने! नः** अस्मभ्यम् **स्तोतृभ्यः अद्य** अस्मिन् कर्मणि **अच्छिद्रा** अच्छेद्यानि **शर्म** शर्माणि सुखानि **यच्छ** देहि । किञ्च हे **ऊर्जः नपात्** अन्नस्य पुत्र! भुक्तेनान्नेन जठराग्नेः प्रवर्धनात् अग्नेरन्नपुत्रत्वम् । एवंविध **अग्ने! गृणन्तम्** त्वां स्तुवन्तम् **आयसीभिः** व्याप्तैः **पूर्भिः** पालनैः **अंहसः** पापात् **उरुष्य** रक्ष ।। ८ ।।

**सायण–** हे **सहसः सूनो** बलस्य पुत्र! बलेन हि मथ्यमानोऽग्निर्जायते । **मित्रमहः** अनुकूलदीप्तिमन्नग्ने! **नः** अस्मभ्यं **स्तोतृभ्यः अद्य** अस्मिन् कर्मणि **अच्छिद्रा** अच्छेद्यानि **शर्म** शर्माणि सुखानि **यच्छ** देहि । किञ्च हे **ऊर्जो नपात्** अन्नस्य पुत्र! भुक्तेनान्नेन जठराग्नेः प्रवर्धनादग्नेरन्नपुत्रत्वम् । एवंविध **अग्ने! गृणन्तं** त्वां स्तुवन्तम् **आयसीभिः** व्याप्तैः । यद्वा अयोवत् दृढतरैः । **पूर्भिः** पालनैः **अंहसः** पापात् **उरुष्य** रक्ष । 'उरुष्यती रक्षाकर्मा' (निरु.५.२३) इति यास्कः ।।

**अच्छिद्रा** । 'शेश्छन्दसि' इति शेर्लोपः । **सूनो सहसः** । 'परमपिच्छन्दसि' इति परस्य षष्ठ्यन्तस्य पूर्वामन्त्रिताङ्गवद्भावे सति पदद्वयसमुदायस्य आष्टमिकं सर्वानुदात्तत्वम् । **शर्म** । 'सुपां सुलुक्' इति विभक्तेः लुक् । **ऊर्जो नपात्** । न पातयतीति नपात् । 'नभ्राण्नपात्' इति नञः प्रकृतिभावः । 'सुबामन्त्रिते' इति षष्ठ्यन्तस्य पराङ्गवद्भावे सति पादादित्वात् आष्टमिकनिघाताभावे षाष्ठिकमामन्त्रितायुदात्तत्वम् । **पूर्भिः** 'पॄ पालनपूरणयोः' इत्यस्मात् सम्पदादिलक्षणो भावे क्विप् । उत्वदीर्घौ । 'सावेकाचः' इति विभक्तेरुदात्तत्वम् ।। ८ ।।

**सिद्धाञ्जनम्–** हे **सहसः सूनो** बलस्य पुत्र! **मित्रमहः** मित्रं सखिभूतम् अनुकूलं महः तेजः यस्यासौ तादृश अनुकूलदीप्तियुक्त अग्ने! **नः** अस्मभ्यं **स्तोतृभ्यः अद्य** इदानीम्, **अच्छिद्रा** छिद्ररहितानि, अविच्छेद्यानि **शर्म** शर्माणि सुखानि **यच्छ** देहि । किञ्च **ऊर्जो नपात्** ऊर्जितस्य दृढस्य बलस्य पुत्र अग्ने! **गृणन्तम्** त्वां स्तुवन्तं **आयसीभिः** अयो लोहः तद्वद्दृढतरैः **पूर्भिः** पालनैः **अंहसः** पापात् **उरुष्य** रक्ष । उरुष्यतिः रक्षाकर्मा ।। **अच्छिद्रा**–शेर्लोपः । **शर्म**–शर्माणि, विभक्तेर्लुक् । **पूर्भिः**– 'पॄ पालनपूरणयोः' अस्मात् सम्पदादिलक्षणः क्विप् ।। ८ ।।

## ऋक्संहिता पदपाठसहिता

**भवा वरूथं गृणते विभावो भवा मघवन्मघवद्भ्यः शर्म ।**
**उरुष्याग्ने अंहसो गृणन्तं प्रातर्मक्षू धियावसुर्जगम्यात् ।। ९ ।।**
भव । वरूथम् । गृणते । विभाऽवः । भव । मघऽवन् । मघवत्ऽभ्यः । शर्म । उरुष्य ।
अग्ने । अंहसः । गृणन्तम् । मक्षु । धियाऽवसुः । जगम्यात् ।। ९ ।।

**वेङ्कटमाधव–** **भव** । गृहं स्तुवते दीप्तिमन्! **भव** धनवन्! हविष्मद्भ्यः गृहम् । रक्ष **अग्ने!**

स्तुवन्तम् । **अवर्तैः** । **प्रातः** एवाग्निः कर्मणा वासयिता इह आगच्छतु इति देवाग्नेर्गृहं सूक्तेनाऽऽशास्ते ॥ ९ ॥

**मुद्गल–** हे **विभावः** विशिष्टप्रकाश अग्ने! **गृणते** त्वां स्तुवते यजमानाय । **वरूथम्** अनिष्टनिवारकं गृहम् **भव** । हे **मघवन्** धनवन् अग्ने! **मघवद्भ्यः** हविर्लक्षणधनयुक्तेभ्यो यजमानेभ्यः **शर्म** सुखं यथा भवति तथा **भव** । हे **अग्ने! गृणन्तम्** स्तुवन्तम् **अंहसः** पापकारिणः शत्रोः **उरुष्य** रक्ष । **धियावसुः** कर्मणा प्राप्तधनोऽग्निः **प्रातः** इदानीमिव परेद्युरपि **मंक्षु** शीघ्रम् **जगम्यात्** आगच्छतु ॥ ९ ॥

**सायण–** हे **विभावः** विशिष्टप्रकाशाग्ने! **गृणते** त्वां स्तुवते यजमानाय । 'वरूथम्' इति गृहनाम । **वरूथम्** अनिष्टनिवारकं गृहं **भव** । हे **मघवन्** धनवन्नग्ने! **मघवद्भ्यः** हविर्लक्षणधन युक्तेभ्यो यजमानेभ्यः **शर्म** सुखं यथा भवति तथा **भव** । हे **अग्ने! गृणन्तं** स्तुवन्तम् **अंहसः** पापकारिणः शत्रोः **उरुष्य** रक्ष । **धियावसुः** कर्मणा बुद्ध्या वा प्राप्तधनोऽग्निः **प्रातः** इदानीमिव परेद्युरपि **मंक्षु** शीघ्रं **जगम्यात्** आगच्छतु ॥

**वरूथम्** 'वृञ् वरणे' । 'जॄवृञ्भ्यामूथन्' (उ.सू.२.१६३) इति ऊथन्प्रत्ययः । नित्त्वा-दाद्युदात्तत्वम् । **गृणते** 'शतुरनुमः' इति विभक्तेरुदात्तत्वम् । **विभावः** । विशिष्टा भा विभाः । 'आतो मनिन्' इति विच् । 'तदस्यास्ति' इति मतुप् । 'मादुपधायाः' इति मतुपो वत्वम् । 'मतुवसो रुः' इति नकारस्य रुत्वम् । **मघवद्भ्यः** । 'मघवा बहुलम्' (पा.सू.६.४.१२८) इति मघवञ्छब्दस्य तृआदेशः । स च 'नानुबन्धकृतमनेकालत्वम्' (परिभा.६) इति वचनात् 'अलोऽन्त्यस्य' (पा.सू.१.१.५२) इति अन्त्यस्य भवति । **मंक्षु** । 'ऋचि तुनुघमक्षु' इति दीर्घः । **धियावसुः** । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । पूर्वपदस्य 'सावेकाचः' इति विभक्ति-रुदात्ता । लुगभावश्छान्दसः । **जगम्यात्** 'गम्लृ सृप्लृ गतौ' । लिङि 'बहुलं छन्दसि' इति शपः श्लुः ॥ ९ ॥

**सिद्धाञ्जनम्–** हे **विभावः** विशिष्टदीप्तियुक्त अग्ने! त्वं **गृणते** स्तुवते **वरूथम्** आवरणं अनिष्टनिवारणं गृहं **भव** । हे **मघवन्** धनवन्! **मघवद्भ्यः** धनवद्भ्यो यजमानेभ्यः **शर्म** सुखं यथा भवति तथा **भव** । हे **अग्ने! गृणन्तम्** त्वां स्तुवन्तं **अंहसः** पापात् **उरुष्य** रक्ष । **प्रातः**

इदानीं **मंक्षु** शीघ्रं **धियावसुः** बुद्ध्या वसुमान् धनवान् **अग्निः** गृणन्तं प्रति **जगम्यात्** गच्छतु, आगच्छतु ।। **विभावः**–विशिष्टा भाः विभा । 'आतो मनिन्' इति विच् । तदस्यास्तीति मतुप्, तस्य वत्वम्, नकारस्य रुत्वम् । **धियावसुः**–छान्दसः अलुक्समासः । **जगम्यात्**–'गम्लृ गतौ' लिङि 'बहुलं छन्दसि' इति शपः श्लुः ।। ९ ।।

**।। इति प्रथमाष्टके चतुर्थाध्याये चतुर्विंशो वर्गः ।।**

## ।। अथ पञ्चविंशो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

**(सूक्तम् ५९)**

**७ नोधा गौतमः । अग्निर्वैश्वानरः । त्रिष्टुप् ।**

**वया इदंग्ने अग्नयस्ते अन्ये त्वे विश्वे अमृता मादयन्ते ।**
**वैश्वानर नाभिरसि क्षितीनां स्थूणेव जनाँ उपमिद्ययन्थ ।। १ ।।**
**वयाः । इत् । अग्ने । अग्नयः । ते । अन्ये । त्वे इति । विश्वे । अमृताः । मादयन्ते । वैश्वानर । नाभिः । असि । क्षितीनाम् । स्थूणाऽइव । जनान् । उपऽमित् । ययन्थ ।।**

**वेङ्कटमाधव–** 'ओषधीषु मनुष्येषु भूम्यां संवत्सरे तथा ।
पचन् यो वर्तते सोऽग्निर्वैश्वानर इति स्मृतः ।।

शाखा एव अग्ने! तव अन्ये अग्नयः । त्वयि सर्वे देवा माद्यन्ति । **वैश्वानर!** नाभिस्थानीयः **असि** प्रजानाम् । यथोत्तम्भनार्थमुपमीयमाना स्थूणा वंशान् धारयति, एवं त्वम् **जनान्** अदधा ।।

**मुद्गल–** 'वया' इति सप्तर्चं द्वितीयं सूक्तम् । नोधा ऋषिः । त्रिष्टुप् छन्दः । वैश्वानरत्व गुणकोऽग्निर्देवता ।।

हे **अग्ने!** ये **अन्ये अग्नयः** सन्ति ते सर्वेऽपि **ते** तव **वया इत्** शाखा एव । ततस्त्वत्तोऽन्ये न सन्तीति भावः । किञ्च **त्वे** त्वयि सति **विश्वे** सर्वे **अमृता** अमरणधर्माणो देवा **मादयन्ते** हृष्यन्ति । न हि त्वद्व्यतिरेकेण तैर्जीवितुं शक्यते । हे **वैश्वानर!** विश्वेषां नराणां जाठररूपेण सम्बन्धिन् अग्ने! **क्षितीनाम्** मनुष्याणाम् **नाभिः** सन्नद्धा **असि** अवस्थापको भवसि । अतस्त्वम्

**उपमित्** उपस्थापयिता सन् **जनान् ययन्थ** अधारयः । यद्वा उपमित् इति दृष्टान्तविशेषणम् । उपमित् उपनिखाता स्थूणा इव वंशधारणार्थं निखातस्तम्भो यथा गृहोपरिस्थवंशं धारयति तद्वत् ।।

**सायण–** 'वया इत्' इति सप्तर्चं द्वितीयं सूक्तं नोधस आर्षं त्रैष्टुभम् । वैश्वानरगुणकोऽग्नि-र्देवता । तथा चानुक्रान्तम् 'वया इत्सप्त वैश्वानरीयम्' इति । सूक्तविनियोगो लिङ्गादवगन्तव्यः ।। 'वयाः शाखा वेतेर्वातायना भवन्ति' (निरु.१.४) इति यास्कः । हे **अग्ने!** ये **अन्ये अग्नयः** सन्ति सर्वेऽपि **ते तव वया इत्** शाखा एव । ततस्त्वत्तोऽन्ये न सन्तीति भावः । किञ्च **त्वे** त्वयि सति **विश्वे** सर्वे **अमृताः** अमरणधर्माणो देवाः **मादयन्ते** हृष्यन्ति । न हि त्वद्व्यतिरेकेण तैर्जीवितुं शक्यते । हे **वैश्वानर!** विश्वेषां नराणां जाठररूपेण सम्बन्धिन्नग्ने! **क्षितीनां** मनुष्याणां **नाभिः** सन्नद्धा **असि** अवस्थापको भवसि । अतस्त्वम् **उपमित्** उपस्थापयिता सन् । यद्वा **उपमित्** इत्येतत् दृष्टान्तविशेषणम् । **जनान् ययन्थ** अधारयः । तत्र दृष्टान्तः– **उपमित्** उपनिखाता स्थूणेव । वंशधारणार्थं निखातः स्तम्भः यथा गृहोपरिस्थं वंशं धारयति तद्वत् ।।

**वैश्वानर** । विश्वे चेमे नरा विश्वानराः । 'नरे संज्ञायाम्' (पा.सू.६.३.१२९) इति पूर्वपदस्य दीर्घः । तत्सम्बन्धी वैश्वानरः । 'तस्येदम्' इति अण् । **नाभिः** । 'नहो भश्च' (उ.सू.४.५६५) इति इञ्प्रत्ययो भकारश्चान्तादेशः । ञित्त्वादाद्युदात्तत्वम् । **असि** । 'तासस्त्योर्लोपः' इति सलोपः । **क्षितीनाम्** 'क्षि निवासगत्योः' । अस्मात् 'क्तिच्क्तौ च संज्ञायाम्' इति क्तिच् । अन्तोदात्तात्क्षितिशब्दादुत्तरस्य नामः 'नामन्यतरस्याम्' इत्युदात्तत्वम् । **उपमित्** 'डु मिञ् प्रक्षेपणे' । अस्मात् उपपूर्वाद् बहुलवचनात् कर्मणि क्विप् । तुगागमः । **ययन्थ** 'यम उपरमे' । लिटि थलि क्रादिनियमात् इटि प्राप्ते 'उपदेशेऽत्वतः' (पा.सू.७.२.६२) इति प्रतिषेधः ।।१।।

**सिद्धाञ्जनम्–** एकादशेऽनुवाके 'वया' इति सप्तर्चं द्वितीयं सूक्तं नोधस आर्षं त्रैष्टुभम् । वैश्वानरगुणकोऽग्निर्देवता । तत्र प्रथमां ऋचमाह–

हे **अग्ने! अन्ये अग्नयः**, स्थानभेदेन व्यापारभेदेन च ये बहवोऽग्नय उच्यन्ते ते सर्वेऽपि **ते** तव **वया इत्** शाखा एव, न त्वत्तो भिन्नाः । **त्वे इत्** त्वय्येव **विश्वे अमृताः** सर्वे देवाः **मादयन्ते** हृष्यन्ति । हे **वैश्वानर! विश्वेषां** नराणां देवानां मनुष्याणां च रूपेण वर्तमानाग्ने!

**क्षितीनाम्** मनुष्याणां **नाभिः असि** मध्यभूतो मुख्यः सन्नद्धो भवसि अव स्थापकोऽसीत्यर्थः । त्वं **उपमित्** अवस्थापयिता सन् **जनान् ययन्थ** अधारयः । तत्र दृष्टान्तः– **उपमित्** स्थूणेव अवस्थापकः स्तम्भ इव । स्तम्भो यथा गृहोपरिभागं धारयति तद्वत् ।। **नाभिः**–नहो भश्चोत इञ् भकारश्च । **उपमित्**–'डु मिञ् प्रक्षेपणे' कर्मणि क्विप् तुगागमश्च । **ययन्थ**–'यम उपरमे' लिट् ।। १ ।।

## ऋक्संहिता पदपाठसहिता

**मूर्धा दिवो नाभिरग्निः पृथिव्या अथाभवदरती रोदस्योः ।**
**तं त्वां देवासोऽजनयन्त देवं वैश्वानर ज्योतिरिदार्याय ।। २ ।।**
**मूर्धा । दिवः । नाभिः । अग्निः । पृथिव्याः । अथ । अभवत् । अरतिः । रोदस्योः । तम् । त्वा । देवासः । अजनयन्त । देवम् । वैश्वानर । ज्योतिः । इत् । आर्याय ।।**

**वेङ्कटमाधव–** **उच्छ्रितः** स्वर्गस्य नहनम् **अग्निः पृथिव्याः, अथ अभवत् अरतिः** द्यावा पृथिव्योः इतस्तत्र गच्छति ततोऽस्यामित्यर्थः । अपि वा द्यावापृथिव्योर्मध्ये गच्छत्यादित्यः सन् । **तम् त्वाम् देवासः अजनयन्त देवम् वैश्वनर!** ज्योतिर्भूतम् । **आर्याय** मनवे ।। २ ।।

**मुद्गल–** अयम् **अग्निः दिवः** द्युलोकस्य **मूर्धा** शिरोवत् प्रधानभूतो भवति । **पृथिव्याः** भूमेश्च **नाभिः** संनाहकः । रक्षक इत्यर्थः । **अथ** अनन्तरम् **रोदस्योः** द्यावापृथिव्योरयम् **अरतिः** अधिपतिः **अभवत्** । हे **वैश्वानर! तम्** तादृशम् **देवम्** दानादिगुणयुक्तम् **त्वा** त्वाम् **देवासः** सर्वे देवाः **आर्याय** विदुषे मनवे **ज्योतिरित्** ज्योतीरूपमेव **अजनयन्त** उदपादयन् ।। २ ।।

**सायण–** विषुवत्संज्ञेऽहनि आग्निमारुते 'मूर्धा दिवो नाभिरग्निः पृथिव्याः' इति वैकल्पिकोऽनु रूपस्तृचः । 'विषुवान्दिवाकीर्त्यः' इति खण्डे सूत्रितं– 'मूर्धानं दिवो अरतिं पृथिव्या, मूर्धा दिवो नाभिरग्निः पृथिव्या इति वा' (आश्व.श्रौ.८.३) इति ।।

अयम् **अग्निः, दिवः** द्युलोकस्य **मूर्धा** शिरोवत्प्रधानभूतो भवति । पृथिव्याः भूमेश्च **नाभिः** संनाहकः रक्षकः इत्यर्थः । **अथ** अनन्तरं **रोदस्योः** द्यावापृथिव्योः अयम् **अरतिः** अधिपतिः **अभवत्** । हे **वैश्वानर! तं** तादृशं **देवं** दानादिगुणयुक्तं **त्वा** त्वां **देवासः** सर्वे देवाः **आर्याय** विदुषे मनवे यजमानाय वा **ज्योतिरित्** ज्योतीरूपमेव **अजनयन्त** उदपादयन् ।।

मूर्तम् अस्मिन्धीयते इति मूर्धा (निरु.७.२७)। 'श्वन्नुक्षन्' इत्यादौ निपातनाद् रूपसिद्धिः। **पृथिव्याः**। पृथिवीशब्दः 'षिद्गौरादिभ्यश्च' इति ङीप्प्रत्ययान्तः अन्तोदात्तः। **अजनयन्त**। 'जनीजृष्क्नसुरञ्जोऽमन्ताश्च' इति मित्त्वात् 'मितां ह्रस्वः' इति ह्रस्वत्वम् ॥ २ ॥

**सिद्धाञ्जनम्–** **अग्निः**, **दिवः** द्युलोकस्य **मूर्धा** शिरोभूतः, **पृथिव्याः** भूमेः **नाभिः** मध्यभूतः सन्नाहकश्च **अभवत्** भवति। **अथ** एवमुभयोर्लोकयोरग्नेः प्राधान्ये सति, अयं **रोदस्योः** द्यावापृथिव्योः **अरतिः** गन्ता, द्युलोकात् पृथिवीं पृथिव्याः दिवं च गच्छन् यात्रिको भवति, यजमानस्यारोहणायोर्ध्वं दिव्यं पदं प्रति, इति रहस्यम्। हे **वैश्वानर** विश्वेषु नरेषु विद्यमानाग्ने! **तं** तथाभूतं **त्वा** त्वां देवम् **देवासः** देवाः सर्वे **आर्याय** अर्तुं योग्याय यजमानाय **ज्योतिरित्** ज्योतिःस्वरूपमेव **अजनयन्त** प्रादुर्भूतम् अकुर्वत ॥ **मूर्धा**–मूर्तम् अस्मिन् धीयत इति मूर्धा, 'श्वन्नुक्षन्' इत्यादौ निपातितः ॥ २ ॥

## ऋक्संहिता पदपाठसहिता

**आ सूर्ये न रश्मयो ध्रुवासो वैश्वानरे दधिरेऽग्ना वसूनि।**
**या पर्वतेष्वोषधीष्वप्सु या मानुषेष्वसि तस्य राजा ॥ ३ ॥**
**आ। सूर्ये। न। रश्मयः। ध्रुवासः। वैश्वानरे। दधिरे। अग्ना। वसूनि।**
**या। पर्वतेषु। ओषधीषु। अप्ऽसु। या। मानुषेषु। असि। तस्य। राजा ॥ ३ ॥**

**वेङ्कटमाधव–** आ दधिरे **सूर्ये** इव रश्मीन् ध्रुवान्। असुरैः सह विजयमुपयन्तो देवा अग्नौ, **वैश्वानरे**। यानि पर्वतादिषु **वसूनि**, यानि च **मानुषेषु**, **तस्य** सर्वस्य ईश्वरस्त्वम् भवसि ॥

**मुद्गल–** **वैश्वानरे अग्ना** अग्नौ **या** यानि **वसूनि** धनानि **आ दधिरे** आहितानि स्थापितानि बभूवुः। दृष्टान्तः– **ध्रुवासः** निश्चलाः **रश्मयः** किरणाः **सूर्ये न** यथा सूर्ये आधीयन्ते तद्वत्। अतस्त्वं पर्वतादिषु **या** यानि धनानि विद्यन्ते **तस्य** धनजातस्य **राजा असि** अधिपतिर्भवसि ॥

**सायण–** **अग्ना वैश्वानरे** अग्नौ **वसूनि** धनानि **आ दधिरे** आहितानि स्थापितानि बभूवुः। तत्र दृष्टान्तः– **ध्रुवासः** निश्चलाः **रश्मयः** किरणाः **सूर्ये न** यथा सूर्ये आधीयन्ते तद्वत्। अतस्त्वं पर्वतादिषु यानि धनानि विद्यन्ते **तस्य** धनजातस्य **राजा असि** अधिपतिर्भवसि ॥ **अग्ना** 'सुपां सुलुक्' इति विभक्तेडादेशः। **या**। 'शेश्छन्दसि बहुलम्' इति शेर्लोपः। **ओषधीषु** 'उष

दाहे' । ओषः पाकः । भावे घञ् । ञित्त्वादाद्युदात्तत्वम् । ओष आसु धीयते इति ओषधयः । 'कर्मण्यधिकरणे च' इति किप्रत्ययः । दासीभारादिषु पठितत्वात् पूर्वपद प्रकृतिस्वरत्वम् । सप्तमीबहुवचने 'ओषधेश्च विभक्तावप्रथमायाम्' (पा.सू.६.३.१३२) इति दीर्घः । अप्सु 'ऊडिदम्' इति विभक्तेरुदात्तत्वम् ।। ३ ।।

**सिद्धाञ्जनम्–** **सूर्ये** आदित्ये **ध्रुवासः** नित्याः स्थिराः सूर्यादविभेद्या **रश्मयः न** किरणा इव, **अग्ना** अग्नौ **वैश्वानरे** **वसूनि** सर्वाणि सत्त्वात्मकानि धनानि **आदधिरे** आहितानि भवन्ति । सूर्ये किरणा इव अग्नौ सारभूतानि सर्वाणि द्रव्याणि वसुशब्दप्रतिपादितानि निहितानि भवन्तीत्युक्तम् । इदमेव विशेषोदाहरणेन स्पष्टीक्रियते । **या** यानि **वसूनि** द्रव्यसारांशभूतानि सत्त्वानि **पर्वतेषु** **ओषधीषु** **अप्सु** विद्यन्ते । **या** यानि च **मानुषेषु** विद्यन्ते **तस्य** सर्वस्य वसुजातस्य **राजा** **असि** ईश्वरो भवसि त्वमग्ने । स्वाहितरश्मिः सूर्यः स्वामी च भवति रश्मीनाम्, दार्ष्टान्तिकोऽग्निरपि वसूनाम् ।। ३ ।।

## ऋक्संहिता पदपाठसहिता

**बृहतीइव सूनवे रोदसी गिरो होता मनुष्यो३ न दक्षः ।**
**स्वर्वते सत्यशुष्माय पूर्वीर्वैश्वानराय नृतमाय यह्वीः ।। ४ ।।**
बृहती इवेतीऽइव । सूनवे । रोदसी इति । गिरः । मनुष्यः । न । दक्षः । स्वःऽवते । सत्यऽशुष्माय । पूर्वीः । वैश्वानराय । नृऽतमाय । यह्वीः ।। ४ ।।

**वेङ्कटमाधव–** आत्मनः **सूनवे** वैश्वानराय तदर्थम् महती इव भवतः द्यावापृथिव्यौ इति पादान्तः । **गिरः होता मनुष्यः** च समर्थः सर्ववते सत्यबलाय । बह्वचः **वैश्वानराय** नेतृतमाय महतीः प्रयुङ्क्ते ।। ४ ।।

**मुद्गल–** **रोदसी** द्यावापृथिव्यौ **सूनवे** स्वपुत्राय वैश्वानराय **बृहती इव** प्रभूते इव अभूतम् । महतो वैश्वानरस्यावस्थानाय द्यावापृथिव्यौ विस्तृते जाते इत्यर्थः । किञ्चायम् **होता दक्षः** समर्थः **पूर्वीः** बहुविधाः **यह्वीः** महतीः **गिरः** स्तुतीः **वैश्वानराय** अग्नये, प्रायुङ्क्त इति शेषः । कीदृशाय । **स्वर्वते** शोभनगमनयुक्ताय **सत्यशुष्माय** अवितथबलाय **नृतमाय** अतिशयेन सर्वेषां नेत्रे । दृष्टान्तः । **मनुष्यः न** यथा मनुष्यो लौकिको वन्दी दातारं प्रभुं बहुविधया स्तुत्या स्तौति तद्वत् ।।

**सायण– रोदसी** द्यावापृथिव्यौ **सूनवे** स्वपुत्राय वैश्वानराय **बृहती इव** प्रभूते इवाभूताम् । वैश्वानरस्य द्यावापृथिव्योः पुत्रत्वं मन्त्रान्तरे स्पष्टम् अवगम्यते– 'उभा पितरा महयन्नजायताग्निर्द्यावापृथिवी भूरिरेतसा' (ऋ.सं.३.३.११) इति । महतो वैश्वानरस्य अवस्थानाय द्यावापृथिव्यौ विस्तृते जाते इत्यर्थः । किञ्चायं **होता दक्षः** समर्थः **पूर्वीः** बहुविधाः **यह्वीः** महतीः **गिरः** स्तुतीः **वैश्वानराय** अग्नये, प्रायुङ्क्तेति शेषः । कीदृशाय । **स्वर्वते** शोभनगमनयुक्ताय **सत्यशुष्माय** अवितथबलाय **नृतमाय** अतिशयेन सर्वेषां नेत्रे । तत्र दृष्टान्तः– **मनुष्यो न** यथा मनुष्यो लौकिको वन्दी दातारं प्रभुं बहुविधया स्तुत्या स्तौति तद्वत् ।।

**मनुष्यः** । 'मनोर्जातावञ्यतौ षुक्च' इति जातौ गम्यमानायां मनुशब्दाद् यत् षुगागमश्च । 'तित्स्वरितम्' इति स्वरितत्वम् । 'यतोऽनावः' इत्याद्युदात्तत्वं न भवति । तत्र हि द्व्यच् इत्यनुवर्तते । **स्वर्वते**- सुपूर्वाद् अर्तेर्भावे विच्, ततो मतुप् । 'मादुपधायाः' इति वत्वम् ।।

**सिद्धाञ्जनम्– रोदसी** द्यावापृथिव्यौ **सूनवे** स्वपुत्राय **बृहती इव प्रभूते** वितते इवाभूताम् । बृहतो वैश्वानरस्यावस्थानाय द्यौः पृथिवी च विस्तृते जाते । द्यौः शुद्धसत्त्वप्रधाना मनोमय क्षेत्रभूता चितिरिति स्मार्यम् । तथा पृथिवी जागरितस्थाना स्थूला अन्नमयक्षेत्रभूता चितिरिति च बोध्यम् । यजमाने उभे अपि विस्तृते भवतः, यदा तयोरुभयोर्जातोऽग्निः प्रादुर्भवति वैश्वानरात्मा । सः **मनुष्यो न** मनुष्य इव **दक्षः** विवेचनधीकुशलः **होता** आह्वाता सन् **गिरः** स्तुतीः करोतीति शेषः । यजमानकृत्यं सर्वं स हि निर्वहति । अथ ज्योतिर्बलादिबहुविभव-सम्पन्नोऽग्निर्वैश्वानर इत्याह । **स्वर्वते** स्वरिति ज्योतिः तद्वते । **सत्यशुष्माय** सत्याधारकबल-युक्ताय **नृतमाय** अतिशयेन नेत्रे वैश्वानराय अग्नये । **पूर्वीः** बह्व्यः **यह्वीः** युवतयः ज्वालाः शक्तयः सन्तीति शेषः । इमामृचम् अन्यथा व्याचष्टे सायणः । अनुपयोगाद्विस्तरभयाच्च नेह तत्परीक्षा भवति ।। ४ ।।

## ऋक्संहिता पदपाठसहिता

**दिवश्चित्ते बृहतो जातवेदो वैश्वानर प्र रिरिचे महित्वम् ।**
**राजा कृष्टीनामसि मानुषीणां युधा देवेभ्यो वरिवश्चकर्थ ।। ५ ।।**

**दिवः । चित् । ते । बृहतः । जातऽवेदः । वैश्वानर । प्र । रिरिचे । महिऽत्वम् । राजा । कृष्टीनाम् । असि । मानुषीणाम् । युधा । देवेभ्यः । वरिवः । चकर्थ ।। ५ ।।**

**वेङ्कटमाधव– दिवः** अपि **ते** महतः **जातवेदः! वैश्वानर! प्र रिरिचे** महत्त्वम् । **राजा** भवसि **मानुषीणां** विशाम् । मनुष्याणामित्यर्थः । युद्धेन **देवेभ्यः** च धनं **चकर्थ** ।। ५ ।।

**मुद्गल–** हे **जातवेदः** जातानां वेदितः! । **वैश्वानर** अग्ने! **ते** तव **महित्वम्** माहात्म्यम् **बृहतः** महतः **दिवः चित्** द्युलोकादपि **प्र रिरिचे** प्रववृधे । किञ्च त्वम् **मानुषीणाम्** मनोर्जातानाम् **कृष्टीनाम्** प्रजानाम् **राजा असि** अधिपतिः भवसि । तथा **वरिवः** असुरैरपहृतं धनम् **युधा** युद्धेन **देवेभ्यः चकर्थ** देवाधीनम् अकार्षीः ।। ५ ।।

**सायण–** हे **जातवेदः** जातानां वेदितः! । **वैश्वानर** अग्ने! **ते** तव **महित्वम्** माहात्म्यम् **बृहतः** महतः **दिवः चित्** द्युलोकादपि **प्र रिरिचे** प्रववृधे । किञ्च त्वम् **मानुषीणाम्** मनोर्जातानाम् **कृष्टीनाम्** प्रजानाम् **राजा असि** अधिपतिः भवसि । तथा **वरिवः** असुरैरपहृतं धनम् **युधा** युद्धेन **देवेभ्यः चकर्थ** देवाधीनम् अकार्षीः ।।

**वैश्वानर** । पादादित्वात् आष्टमिकनिघाताभावः । **रिरिचे** 'रिचिर् विरेचने' । अत्रोपसर्ग वशात् तद्विपरीते आधिक्ये वर्तते । **कृष्टीनाम्** । 'नामन्यतरस्याम्' इति नाम उदात्तत्वम् । **मानुषीणाम्** । मानुषशब्दः 'मनोर्जातौ' इति अञ्प्रत्ययान्तः । जातिलक्षणे ङीषि प्राप्ते तदपवाद-तया 'शार्ङ्गरवाद्यञः' इति ङीन् । नित्त्वादाद्युदात्तत्वम् । 'ङ्याश्छन्दसि बहुलम्' (पा.सू.६.१.१७८) इति बहुलवचनात् नाम उदात्तस्याभावः । **युधा** 'युध सम्प्रहारे' इत्यस्मात् सम्पदादिलक्षणो भावे क्विप् । **वरिवः** इति धननाम । 'जब्विषयस्य' इत्याद्युदात्तत्वम् ।।

**सिद्धाञ्जनम्–** हे **जातवेदः** जातानां वेदितः! **वैश्वानर** अग्ने! **ते** तव **महित्वम्** माहात्म्यं **बृहतो दिवश्चित्** महतो द्युलोकादपि **प्र रिरिचे** प्रकर्षेण अतिरिक्तोऽधिको भवति । किञ्च त्वं **मानुषीणाम्** मनोर्जातानां **कृष्टीनाम्** प्रयत्नवतीनां प्रजानां **राजा असि** ईश्वरो भवसि । तथा **युधा** युद्धेन, असुरैः सह कृतेन युद्धेन साधनेन **देवेभ्यः, वरिवः** स्थानं अवकाशं सुखं वा **चकर्थ** कृतवानसि । असुरैराक्रान्ते लोके, तान् जित्वा देवेभ्यस्तत्र स्थानं ददासि । तदेव सुखं भवति देवानां, परिचर्या वा ।। सायणस्तु वरिवः धनमिति व्याचष्टे, नैतदुपपद्यते । अस्म-दुक्तार्थ एव अवकाशसुखपरिचरणादीनामन्यतमो वा 'वरिवः' शब्दप्रयोगस्थलेषु युक्तो भवति ।। **वरिवः** 'वृञ् वरणे' व्रियते सर्वैरिति वरिवः । धातोर्यङ्लुकि 'ऋतश्च' इत्यभ्यासस्य रिगागमः, तदन्तादसुन् टिलोपः ।। ५ ।।

## ऋक्संहिता पदपाठसहिता

**प्र नू मंहित्वं वृषभस्यं वोचं यं पूरवो वृत्रहणं सचन्ते ।**
**वैश्वानरो दस्युमग्निर्जघन्वाँ अधूनोत्काष्ठा अव शम्बरं भेत् ।। ६ ।।**
**प्र । नु । महिऽत्वम् । वृषभस्यं । वोचम् । यम् । पूरवः । वृत्रऽहनम् । सचन्ते ।**
**वैश्वानरः । दस्युम् । अग्निः । जघन्वान् । अधूनोत् । काष्ठाः । अव । शम्बरम् । भेत् ।।**

**वेङ्कटमाधव–** **प्र** ब्रवीमि तत् **महित्वम्** महाभाग्यं क्षिप्रं वर्षितुरपाम् । यम् पूरयितव्याः मनुष्याः मेघहनं सेवन्ते वर्षकामाः । वैश्वानरः अग्निः उपक्षपयितारं घ्नन् **अव अधूनोत् काष्ठा** अपः अवाभिनच्च मेघम् ।। ६ ।।

**मुद्गल–** अत्र वैश्वानरशब्देन मध्यमस्थानस्थो वैद्युतोऽग्निरभिधीयते । **पूरवः** मनुष्याः **यम् वृत्रहणं** आवरकस्य मेघस्य हन्तारं वैश्वानरम् **सचन्ते** वर्षार्थिनः सेवन्ते । तस्य **वृषभस्य** अपां वर्षितुर्वैश्वानरस्य **महित्वम्** माहात्म्यम् **नु** क्षिप्रम् **प्र वोचम्** प्रब्रवीमि । किं तदित्यत आह– अयम् **वैश्वानरः** अग्निः **दस्युम्** रसानामुपक्षपयितारं राक्षसादिकम् **जघन्वान्** हतवान् । तथा **काष्ठाः** अपः वृष्ट्युदकानि **अधूनोत्** अधोमुखान्यपातयत् । **शम्बरम्** तं निरोधकारिणं मेघम् **अव भेत्** अवाभिनत् ।। ६ ।।

**सायण–** अत्र वैश्वानरशब्देन मध्यमस्थानस्थो वैद्युतोऽग्निरभिधीयते । पूरवः इति मनुष्यनाम । **पूरवः** मनुष्याः **वृत्रहणं** आवरकस्य मेघस्य हन्तारं **यं** वैश्वानरं **सचन्ते** वर्षार्थिनः सेवन्ते तस्य वृषभस्य अपां वर्षितुर्वैश्वानरस्य **महित्वं** माहात्म्यं **नु** क्षिप्रं **प्र वोचं** प्रब्रवीमि । किं तदित्यत आह– अयं **वैश्वानरः** अग्निः **दस्युं** रसानां कर्मणां वा उपक्षयितारं राक्षसादिकं **जघन्वान्** हतवान् । तथा **काष्ठाः** अपः वृष्ट्युदकानि **अधूनोत्** अधोमुखान्यपातयत् । **शम्बरं** तन्निरोधकारिणं मेघम् **अव भेत्** अवाभिनत् ।

**वोचम्** । 'छन्दसि लुङ्लङ्लिटः' इति वर्तमाने लुङि 'अस्यतिवक्ति' इत्यादिना च्लेः अङादेशः । 'वच उम्' इति उमागमः । गुणः । 'बहुलं छन्दस्यमाङ्योगेऽपि' इति अडभावः । **जघन्वान्** । हन्तेर्लिटः क्वसुः । 'अभ्यासाच्च' इति अभ्यासादुत्तरस्य हकारस्य घत्वम् । 'विभाषा गमहन' इति विकल्पनात् इडभावः । **भेत्** 'भिदिर् विदारणे' । लङि 'बहुलं छन्दसि' इति विकरणस्य लुक् । 'हल्ङ्याब्भ्यः' इति तकारस्य लोपः । पूर्ववत् अडभावः ।

अत्र निरुक्तं– 'प्र ब्रवीमि तन्महित्वं महाभाग्यं वृषभस्य वर्षितुरपां यं पूरवः पूरयितव्या मनुष्या वृत्रहणं मेघहनं सचन्ते वर्षकामा दस्युर्दस्यतेः क्षयार्थादुपदस्यन्त्यस्मिन्रसा उपदासयति कर्माणि तमग्निर्वैश्वानरो घ्नन्नवाधूनोदपः काष्ठा अभिनच्छम्बरं मेघम्' (निरु.७.२३) इति ।। अत्रेदं चिन्तनीयम् । कोऽसौ वैश्वानर इति । तत्र केचिदाहुः । मध्यमस्थानस्थो वायुरिन्द्रो वा वैश्वानरः । तस्य हि वर्षकर्मणा संस्तव उपपद्यते, न त्वग्नेः पृथिवीस्थानत्वादिति । अन्ये त्वेवं मन्यन्ते । द्युस्थानः सूर्यो वैश्वानर इति । युक्तिं चाहुः । प्रातःसवनादीनि त्रीणि सवनानि लोकत्रयात्मकानि । तत्र तृतीयसवनं प्राप्तो यजमानः स्वर्गं प्राप्त इति पृथिव्याः प्रच्युतो भवेत् । तत्प्रच्युतिपरिहाराय आग्निमारुतेऽन्तिमे शस्त्रे होता स्वर्गाद् भूमिं प्रत्यवरोहति । कथमिति तदुच्यते । इतरशस्त्रवत् स्तोत्रियतृचेन प्रारम्भमुक्त्वा द्युस्थानसम्बन्धिना वैश्वानरीयेण सूक्तेन शस्त्रं प्रारभते । ततो मध्यमस्थानसम्बन्धिनं रुद्रं मरुतश्च प्रति तद्देवत्यसूक्तपाठेनावरोहति । तत्र पृथिवीस्थानमग्निम् । यद्यत्र वैश्वानरः सूर्यो न स्यात् तदानीम् अवरोहो नोपपद्यते ।

तदेतन्मतद्वयमप्यनुपपन्नम् । अयमेवाग्निर्वैश्वानरः । कुतः । वैश्वानरशब्दनिर्वचनानुरोधात् । विश्वेषां नराणां लोकान्तरं प्रति नेतृतया सम्बन्धी वैश्वानरः । तथा चाम्नातं– 'वैश्वानर पुत्रः पित्रे लोककृज्जातवेदो वहेमं सुकृतां यत्र लोकाः' इति । यद्वा विश्वे सर्वे नरा एनम् अग्निं यज्ञादौ प्रीणयन्तीति तत्सम्बन्धाद्वैश्वानरः । यद्वा विश्वान् सर्वान् प्राणिनः प्रति ऋतो गच्छतः इति विश्वानरौ मध्यमोत्तमौ । 'ऋ गतौ' इत्यस्मात् पचाद्यच् । लुगभावश्छान्दसः । ताभ्यामुत्पन्नत्वाद् अयम् अग्निर्वैश्वानरः । वैद्युतोऽग्निर्हि मध्यमसकाशात् जायते । अशनिपतनानन्तरम् अयमेव पार्थिवोऽग्निः सम्पद्यते । आदित्यसकाशादपि घर्मकाले सूर्यकान्तादिमणिष्वग्नेरुत्पत्तिः प्रसिद्धा । तस्मान्नाम-निर्वचनानुरोधेनायमेवाग्निर्वैश्वानर इत्येतदुपपन्नम् । अस्यापि वर्षकर्मणा स्तुतिः सम्भवति । 'अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः' (मनु.३.७६) इति स्मरणात् । प्रत्यवरोहोऽपि न कर्तव्यः । तृतीयसवनस्य भाक्तस्वर्गत्वात् । एतत्सर्वं यास्केन 'वैश्वानरः कस्मात्' (निरु.७.२१) इत्यादिना बहुधा प्रपञ्चितम् । अत्र यदनुक्तं तत्सर्वं तत्रैवानुसन्धेयम् ।। ६ ।।

**सिद्धाञ्जनम्–** वैश्वानरस्य सर्वदेवात्मकत्वादयम् अग्निः इन्द्रात्मना वर्णितो भवत्यस्यामृचि । **वृषभस्य** अभीष्टानां वर्षकस्य **महित्वम्** महत्त्वं **प्र वोचम् नु** क्षिप्रं प्रब्रवीमि । **यम्** वृषभं

**पूरवः** मनुष्याः बहवो वा, मनुष्यनामेदम् । **वृत्रहणम्** वृत्रस्य हन्तारं, विधेयविशेषणं, **सचन्ते** सेवन्ते । किं तस्य महत्त्वम्? तदुच्यते । स **वैश्वानरः अग्निः** इन्द्रात्मना **दस्युम्** उपक्षपयितारम् असुरं राक्षसादिकं वा **जघन्वान्** हतवान्, **काष्ठाः** अपः, **अधूनोत्** अधोमुखतया अपातयत् (प्राग्विवृतम् १.३२) **शम्बरम्** तन्निरोधकं च **अव भेत्** अवाभिनत् ।। **वोचम्**–वर्तमाने लुङ्, अडभावः । **जघन्वान्**–हन्तेर्लिटः क्वसुः । **भेत्**–'भिदिर् विदारणे' लङि छन्दसि विकरणस्य लुक् ।। ६ ।।

## ऋक्संहिता पदपाठसंहिता

**वैश्वानरो महिम्ना विश्वकृष्टिर्भरद्वाजेषु यजतो विभावा ।**
**शातवनेये शतिनीभिरग्निः पुरुणीथे जरते सूनृतावान् ।। ७ ।।**
**वैश्वानरः । महिम्ना । विश्वऽकृष्टिः । भरत्ऽवाजेषु । यजतः । विभाऽवा । शातऽवनेये ।**
**शतिनीभिः । अग्निः । पुरुऽनीथे । जरते । सूनृताऽवान् ।। ७ ।।**

**वेङ्कटमाधव– वैश्वानरः** महत्तया सर्वमनुष्यः । सर्वाः प्रजाः । अस्य **भरद्वाजेषु** यष्टव्यः दीप्तिमान् । शतवतो नाम कश्चित् । तस्य पुत्रः पुरुणीथस्तस्मिन् अयम् अग्निः शतसङ्ख्याभिः स्तुतिभिः स्तूयते सत्यकर्मा । वैश्वानराग्नेः स्तुतिमात्रमिति ।। ७ ।।

**मुद्गल– वैश्वानरः** अग्निः **महिम्ना** महत्त्वेन **विश्वकृष्टिः** विश्वे सर्वे मनुष्या यस्य स्वभूता स तथोक्तः । **भरद्वाजेषु** पुष्टिकरहविर्लक्षणान्नवत्सु यागेषु **यजतः** यष्टव्यः **विभावा** विशेषेण प्रकाशयिता । **सूनृतावान्** सूनृता प्रिया सत्या वाक् तद्युक्तः । एवम्भूतोऽग्निः **शातवनेये** शतसङ्ख्याकान् क्रतून् वनति सम्भजत इति शतवनिः । तस्य पुत्रः शातवनेयः तस्मिन् । **पुरुणीथे** बहूनां नेतरि एतत्सञ्ज्ञके राजनि च **शतिनीभिः** बहुभिः स्तुतिभिः **जरते** स्तूयते ।। ७ ।।

**सायण– वैश्वानरः** अग्निः **महिम्ना** महत्त्वेन **विश्वकृष्टिः** । कृष्टिः इति मनुष्यनाम । विश्वे सर्वे मनुष्याः यस्य स्वभूताः स तथोक्तः । **भरद्वाजेषु** पुष्टिकरहविर्लक्षणान्नवत्सु यागेषु । यद्वा एतत्सञ्ज्ञेषु ऋषिषु **यजतः** यष्टव्यः **विभावा** विशेषेण प्रकाशयिता । **सूनृतावान्** । सूनृता प्रिया सत्या वाक् तद्युक्तः । एवम्भूतोऽग्निः **शातवनेये** । शतसङ्ख्याकान् क्रतून् वनति सम्भजते इति शतवनिः । तस्य पुत्रः शातवनेयः । तस्मिन् । **पुरुणीथे** बहूनां नेतरि एतत्सञ्ज्ञके राजनि च **शतिनीभिः** बहुभिः स्तुतिभिः **जरते** स्तूयते ।।

**भरद्वाजेषु** । भरन्ति पोषयन्ति भोक्तॄनिति भरन्तः । तादृशा वाजा येषु । बहुव्रीहौ पूर्वपद-प्रकृतिस्वरत्वे प्राप्ते मरुद्वृधादित्वात् पूर्वपदान्तोदात्तत्वम् । **यजतः** । 'भृमृदृशियजिपर्वपच्यमित-मिनमिहर्येभ्योऽतच्' (उ.सू.३.३९०) इति यजतेः अतच्प्रत्ययः । **विभावा** 'भा दीप्तौ' । 'आतो मनिन्' इति वनिप् । तस्य पित्त्वादनुदात्तत्वे धातुस्वरः शिष्यते । **शातवनेये** । 'इन्सर्वधातुभ्यः' इति इन्प्रत्ययः । शतवनिशब्दः । 'इतश्चानिञः' (पा.सू.४.१.१२२) इति ढक् । 'कितः' (पा.सू.६.१.१६५) इत्यन्तोदात्तत्वम् । **शतिनीभिः** । शतशब्दात् मत्वर्थीय इनिः । 'ऋन्नेभ्यः' इति ङीप् । **पुरुणीथे** । 'पूर्वपदात्सञ्ज्ञायामगः' (पा.सू.८.४.३) इति णत्वम् । **जरते** । व्यत्ययेन कर्मणि कर्तृप्रत्ययः ।। ७ ।।

**सिद्धाञ्जनम्– वैश्वानरः महिम्ना** स्वीयमाहात्म्येन **विश्वकृष्टिः** विश्वे सर्वे कृष्टयः मनुष्याः यस्य स्वभूताः स तथोक्तः । **भरद्वाजेषु** भरन्तो वाजाः येषु तेषु पौष्टिकसमृद्धियुक्तेषु यजनेषु **यजतः** यष्टव्यः **विभावा** विशेषेण प्रकाशयिता । **सूनृतावान्** शोभनसत्यवाग्युक्तोऽग्निः **शातवनेये** शतसङ्ख्याकान् क्रतून् वनति सम्भजत इति शतवनिः, तस्यापत्यं सन्ततिः शातवनेयः तस्मिन् । **पुरुणीथे** पुरूणां बहूनां नेतरि यजमाने **शतिनीभिः** बह्वर्थकशतसङ्ख्यावतीभिः स्तुतिभिः **जरते** स्तौति । अत्र शतवनिः शतक्रतुः बहुकर्मा बलाढ्यः तस्माज्जातो विशिष्टो नेता भवतीति युक्तम् । शतवनि-पुरुणीथसंज्ञकौ तु उक्तलक्षणसामर्थ्यनिदर्शनभूतौ ऐतिहासिकौ इति ग्राह्यम् । तथाविधे 'पुरुणीथे' भगवानेव स्तोत्रकर्म करोतीति कर्तर्यर्थे गृहीतम् अस्माभिः । **जरते**–स्तूयते, व्यत्ययेन कर्मणि कर्तृप्रत्यय इति सायणीयम् । सर्वे गताः ।। ७ ।।

।। इति प्रथमाष्टके चतुर्थाध्याये पञ्चविंशो वर्गः ।।

## ।। अथ षड्विंशो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

(सूक्तम् ६०)

५ नोधा गौतमः । अग्निः । त्रिष्टुप् ।

**वह्निं यशसं विदथस्य केतुं सुप्राव्यं दूतं सद्योअर्थम् ।**
**द्विजन्मानं रयिमिव प्रशस्तं रातिं भरद्भृगवे मातरिश्वा ।। १ ।।**

**वह्निम् । यशसम् । विदथस्य । केतुम् । सुप्रऽअव्यम् । दूतम् । सद्यःऽअर्थम् । द्विऽजन्मानम् । रयिम्ऽइव । प्रऽशस्तम् । रातिम् । भरत् । भृगवे । मातरिश्वा ।। १ ।।**

**वेङ्कटमाधव–** वोढारम् अग्निं यशस्विनं, यज्ञस्य ध्वजभूतं सुष्ठु प्रकर्षेण रक्षणीयम् । **दूतम् सद्यो** गन्तारं द्वयोररण्योर्जायमानं धनमिव **प्रशस्तम्** बन्धुम् **भरत् भृगवे** दिव आहृत्य **मातरिश्वा** ।। १ ।।

**मुद्गल–**'वह्निम्' इति पञ्चर्चं तृतीयं सूक्तम् । नोधा ऋषिः, त्रिष्टुप् छन्दोऽग्निर्देवता ।। **वह्निम्** हविषां वोढारम् । **यशसम्** यशस्विनम् । **विदथस्य केतुम्** यज्ञस्य प्रकाशयितारम् । **सुप्राव्यम्** सुष्ठु प्रकर्षेण रक्षितारम् । **दूतम्** देवैर्हविर्वहनलक्षणे दूत्ये नियुक्तम् । यदा हवींषि जुह्वति सद्यस्तदानीमेव हविर्भिः सह देवान् गन्तारम् । **द्विजन्मानम्** द्वयोर्द्यावापृथिव्योर्जायमानम् **रयिमिव** धनमिव **प्रशस्तम्** प्रख्यातम् । एवम्भूतम् अग्निम् **मातरिश्वा** वायुः **भृगवे** एतत्सञ्ज्ञकाय महर्षये **रातिम् भरत्** मित्रम् अहरत्, अकरोदित्यर्थः ।। १ ।।

**सायण–** 'वह्निम्' इति पञ्चर्चं तृतीयं सूक्तं नोधस आर्षं त्रैष्टुभमाग्नेयम् । अनुक्रान्तं च– 'वह्निं पञ्च' इति । प्रातरनुवाकस्याग्नेये क्रतौ त्रैष्टुभे छन्दसीदं सूक्तमाश्विने शस्त्रे च । तथा च सूत्रितं– 'वह्निं यशसमुप प्रजिन्वन्निति त्रीणि' (आश्व.श्रौ.४.१३) इति ।।

**वह्निं** हविषां वोढारं **यशसं** यशस्विनं **विदथस्य केतुं** यज्ञस्य प्रकाशयितारं **सुप्राव्यं** सुष्ठु प्रकर्षेण रक्षितारं **दूतं** देवैर्हविर्वहनलक्षणे दूत्ये नियुक्तं **सद्योअर्थं** यदा हवींषि जुह्वति सद्यस्तदानीमेव हविर्भिः सह देवान् गन्तारम् । यद्वा । सद्यः अर्थम् अरणं गमनं यस्य तम् । **द्विजन्मानं** द्वयोर्द्यावापृथिव्योररण्योर्वा जायमानं **रयिमिव** धनमिव **प्रशस्तं** प्रख्यातम् । एवम्भूतम् अग्निं **मातरिश्वा** वायुः **भृगवे** एतत्सञ्ज्ञकाय महर्षये **रातिं भरत्** मित्रम् अहरत् । अकरोदित्यर्थः । 'रातिना सम्भाष्य' (आप.गृह.१२.१४) इत्यत्र रातिर्मित्रमिति कपर्दिनोक्तम् । रातिः पुत्र इत्येके । एतदर्थप्रतिपादकं मन्त्रान्तरं च भवति– 'रातिं भृगूणामुशिजं कविक्रतुम्' (ऋ.सं.३.२.४) इति ।

**वह्निम्** । 'वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नित्' इति वहतेर्निप्रत्ययः । निद्वद्भावादाद्युदात्तत्वम् । **यशसम्** । यशस्शब्दात् उत्तरस्य विनो लुक् । व्यत्ययेनान्तोदात्तत्वम् । यद्वा । अर्शआदित्वात् अच् । स्वरः पूर्ववत् । **सुप्राव्यम्** । सुष्ठु प्रकर्षेणावति रक्षतीति सुप्रावीः । उपसर्गद्वयोपसृष्टात्

अवतेः 'अवितृस्तृतन्त्रिभ्य ईः' (उ.सू.३.४३८) इति ईकारप्रत्ययः । 'वा छन्दसि' इति 'अमि पूर्वः' इत्यस्य विकल्पे सति यणादेशः । 'उदात्तस्वरितयोर्यणः' इति स्वरितत्वम् । **सद्यो अर्थम्** । 'उषिकुषिगार्तिभ्यस्थन्' इति अर्तेः कर्तरि थन्प्रत्ययः । सद्य एवार्थो गन्ता सद्योअर्थः । अव्यय-पूर्वपदप्रकृतिस्वरत्वम् । यदि तु 'अव्यये नञ्कुनिपातानामिति वक्तव्यम्' (पा.सू.६.२.२.३) इति अव्ययग्रहणेन त्रितयं गृह्येत तर्हि बहुव्रीहिस्वरो भविष्यति । **मातरिश्वा** । सर्वनिर्माणहेतुत्वात् माता अन्तरिक्षम् । श्वसितिरत्र गतिकर्मा । मातरि अन्तरिक्षे श्वसिति गच्छतीति मातरिश्वा । 'श्वन्नुक्षन्' इत्यादौ निपातनाद् रूपसिद्धिः । यद्वा । मातरि अन्तरिक्षे शु आशु असति गच्छतीति मातरिश्वा । 'अस गतिदीप्त्यादानेषु' इत्यस्मात् औणादिको ड्वन्प्रत्ययः । एतच्च यास्केनोक्तम् (निरु.७.२६) ।। १ ।।

**सिद्धाञ्जनम्–** वह्निमिति पञ्चर्चं तृतीयं सूक्तम् । नोधा ऋषिः त्रिष्टुप् छन्दः अग्निर्देवता । **वह्निम्** वोढारं प्रापयितारं हव्यस्य । **यशसम्** यशस्विनं **विदथस्य** ज्ञानाधिगम्यस्य, ज्ञानगम्यस्य यज्ञस्य वा **केतुम्** प्रज्ञापकं **सुप्राव्यम्** सुष्ठु प्रकर्षेण अवति रक्षतीति सुप्रावीः तं, **दूतम्** देवैर्दूत्ये नियुक्तं **सद्योअर्थम्** सद्यः अरणं गमनं यस्य तं, **द्विजन्मानं** द्वे जन्मनी यस्य तं, विश्वस्मिन् आद्यं जन्म, द्वितीयं तु यजमाने । अथवा द्यावापृथिव्योः प्रागुक्तलक्षणयोर्जायमानं **रयिमिव** धनमिव **प्रशस्तम्** प्रख्यातम् । एवम्भूतम् अग्निम् । **मातरिश्वा** वायुर्जगत्प्राणः **भृगवे** ज्वलते मन्त्रद्रष्ट्रे यजमानाय, तन्निदर्शनभूताय एतत्सञ्ज्ञकाय महर्षये **रातिम् भरत्** 'मित्रम् अहरत् अकरोत्' इति सायणः, रातिः पुत्रः इत्येके, 'रातिं भृगूणामुशिजं कविक्रतुम्' इत्यत्र 'भृगूणामभिलषितार्थप्रदातारम्' इति दात्रर्थे रातिशब्दः प्रयुक्तः सायणीयव्याख्यानुसारेण । इहापि भृगवे यजमानाय अग्निं दातारं अकरोत् इति व्याख्येयम् ।। **सुप्राव्यम्**–सु प्र इति उपसर्गद्वयोपसृष्टाद् अवतेः 'अवित्रादिभ्य ईः' इति ईकारप्रत्ययः । 'वा छन्दसि' इति 'अमि पूर्वः' इत्यस्य विकल्पे यणादेशः । **सद्योअर्थम्**–अर्तेः कर्तरि थन्प्रत्ययः । **मातरिश्वा**–मातरि अन्तरिक्षे श्वसिति, 'श्वन्नुक्षन्' इत्यादौ निपातनाद्रूपसिद्धिः ।। १ ।।

## ऋक्संहिता पदपाठसहिता

**अस्य शासुरुभयासः सचन्ते हविष्मन्त उशिजो ये च मर्ताः ।**
**दिवश्चित्पूर्वो न्यसादि होतापृच्छ्यो विश्पतिर्विक्षु वेधाः ।। २ ।।**

अस्य । शासुः । उभयासः । सचन्ते । हविष्मन्तः । उशिजः । ये । च । मर्ताः । दिवः । चित् । पूर्वः । नि । असादि । होता । आऽपृच्छ्यः । विश्पतिः । विक्षु । वेधाः ।।

**वेङ्कटमाधव–** **अस्य** शासनम् उभये सेवन्ते **हविष्मन्तः उशिजः** देवाः । उशिक् वष्टेः कान्तिकर्मणः । **ये च मर्ताः** । सोऽयम् **दिवः** अपि प्रत्नः । **होता** आप्रष्टव्यः । विशां स्वामी नृषु स्थापितो मातरिश्वना विधाता इति ।। २ ।।

**मुद्गल–** **शासुः** शासितुः **अस्य** अग्नेः **उभयासः** उभयेऽपि देवा मनुष्याश्च इमम् अग्निं शासितारं **सचन्ते** सेवन्ते । **उशिजः** कामयमानाः देवाः **हविष्मन्तः** हविषा युक्ताः **ये च मर्ताः** मरणधर्माणो यजमानाः । किञ्च अयम् **होता** होमनिष्पादकोऽग्निः **दिवः चित्** आदित्यादपि पूर्वः उषस्सु वर्तमानो भूत्वाऽग्निहोत्रहोमार्थम् । **विक्षु** यजमानेषु **नि असादि** अध्वर्युणाऽग्न्यायतने न्यधायि स्थाप्यते । कीदृशो होता । **आपृच्छ्यः** आप्रष्टव्यः । पूज्य इत्यर्थः । **विश्पतिः** प्रजानां पालयिता **वेधाः** विधाता अभिमतफलस्य कर्ता ।। २ ।।

**सायण–** **शासुः** शासितुः **अस्य** अग्नेः **उभयासः** उभयेऽपि देवा मनुष्याश्च । यद्वा । स्तुतिभिः स्तोतारो यज्ञैर्यजमानाश्च इमम् अग्निं शासितारं **सचन्ते** सेवन्ते । **उशिजः** कामयमानाः देवाः **हविष्मन्तः** हविषा युक्ताः **ये च मर्ताः** मरणधर्माणो यजमानाः । यद्वा उशिजः इति मेधाविनाम । उशिजः मेधाविनः स्तोतारो हविष्मन्तः हविर्युक्ताः मर्ताः यजमानाः । किञ्चायं **होता** होमनिष्पादकोऽग्निः **दिवश्चित्** आदित्यादपि **पूर्वः** उषस्सु वर्तमानो भूत्वा अग्निहोत्रहोमार्थं **विक्षु** यजमानेषु **न्यसादि** अध्वर्युणा अग्न्यायतने न्यधायि स्थाप्यते । कीदृशो होता । **आपृच्छ्यः** आप्रष्टव्यः पूज्य इत्यर्थः । **विश्पतिः** विशां प्रजानां पालयिता **वेधाः** विधाताऽभिमतफलस्य कर्ता ।।

**शासुः** 'शासु अनुशिष्टौ' । 'तृन्तृचौ शंसिशपिशासिक्षदादिभ्यः सञ्ज्ञायां चानिटौ' (उ.सू. २.२५०) इति तृन् इडागमाभावश्च । षष्ठ्येकवचने तकारलोपश्छान्दसः । नित्त्वादाद्युदात्तत्वम् । **उशिजः** । 'वशः कित्' (उ.सू.२.२२९) इति वष्टेः इनिप्रत्ययः । ग्रहिज्यादिना सम्प्रसारणम् । **मर्ताः** 'मृङ् प्राणत्यागे' । 'असिहसिमृग्रिण्वामि०' इत्यादिना तन्प्रत्ययः । नित्त्वादाद्युदात्तत्वम् । **आपृच्छ्यः** 'प्रच्छ ज्ञीप्सायाम्' । आङ्पूर्वात् अस्मात् 'छन्दसि निष्टर्क्य०' (पा.सू.३.१.१२३)

इत्यादौ क्यप्प्रत्ययो निपातितः । ग्रहिज्यादिना सम्प्रसारणम् । क्यपः पित्त्वादनुदात्तत्वे धातुस्वरः शिष्यते । **विश्पतिः** । 'पत्यावैश्वर्ये' इति पूर्वपदप्रकृतिस्वरत्वे प्राप्ते 'परादिश्छन्दसि बहुलम्' इत्युत्तरपदाद्युदात्तत्वम् ।। २ ।।

**सिद्धाञ्जनम्– शासुः** शासितुः **अस्य** अग्नेः । शासितारम् अग्निमिति विभक्तिव्यत्ययः **उभयासः सचन्ते** देवाः मनुष्याश्च सेवन्ते । देवाः **उशिजः** कामयमानाः, कान्तिमन्तो वा **हविष्मन्तः** स्वीकृतैर्हविर्भिर्युक्ताः । **ये च मर्ताः** यजमानाः, ते 'उभयासः सचन्ते' इति सम्बन्धः । अयं **होता** अग्निः **दिवश्चित्** द्युलोकादपि **पूर्वः** प्राक्तनः, त्रैलोक्यादुपरि तुरीयं पदं तस्य स्वं गृहम् । द्युलोको द्विधा भवति, त्रैलोक्ये दिवोऽन्तर्भावो बोध्यः । तदुपरि या द्यौः सा बृहती, स्वःशब्दप्रतिपादिता च क्वचित् । कीदृशो होता? **आपृच्छ्यः** आमन्त्रणीयः पूज्यः **विश्पतिः** विशां प्रजानां पालकः, **वेधाः** विधाता । तथाभूतः **विक्षु** प्रजासु यजमानेषु **न्यसादि** न्यधायि, स्थापितो भवति ।। **शासुः**–शास्तेः तृन्, इडागमाभावः, षष्ठ्येकवचने तकारलोपः । **उशिजः**– वष्टेः इजिप्रत्ययः । **आपृच्छ्यः–** 'प्रच्छ ज्ञीप्सायाम्' क्यप्प्रत्ययः ।। २ ।।

## ऋक्संहिता पदपाठसहिता

**तं नव्यसी हृद आ जायमानमस्मत्सुकीर्तिर्मधुजिह्वमश्याः ।**
**यमृत्विजो वृजने मानुषासः प्रयस्वन्त आयवो जीजनन्त ।। ३ ।।**
**तम् । नव्यसी । हृदः । आ । जायमानम् । अस्मत् । सुऽकीर्तिः । मधुऽजिह्वम् । अश्याः ।**
**यम् । ऋत्विजः । वृजने । मानुषासः । प्रयस्वन्तः । आयवः । जीजनन्त ।। ३ ।।**

**वेङ्कटमाधव– तम्** अग्निम् । **जायमानम्** मत्तो हृदयान्निर्गम्य । नवतरा सुष्टुतिः कीर्त्यमाना मादयितृजिह्वम् व्याप्नोतु । **यम् ऋत्विजः** उपद्रवे मनुष्येषु जाता हविष्मन्तः गच्छन्तस्तत्परिहारार्थम् अरण्योर्जनयन्ति ।। ३ ।।

**मुद्गल– नव्यसी** नवतरा **सुकीर्तिः** सुष्ठु कीर्तयित्री **अस्मत्** अस्माकं स्तुतिः **हृदः** हृद्यवस्थितात् प्राणात् **जायमानम्** उत्पद्यमानम् । अग्निर्हि वायोरुत्पद्यते, वायुश्च प्राण एव, 'यः प्राणः स वायुः' इत्याम्नातत्वात् । **मधुजिह्वम्** मादयितृज्वालम् । एवम्भूतम् **तम्** अग्निम्, **आ अश्याः** आभिमुख्येन व्याप्नोतु । **वृजने** सङ्ग्रामे प्राप्ते सति **आयवः** मनुष्याः **यम्** अग्निम्

**जीजनन्त** यज्ञार्थमुदपादयन् । कीदृशा मनुष्याः । **ऋत्विजः** ऋतौ काले यष्टारः **मानुषासः** मनुपुत्राः **प्रयस्वन्तः** हविर्लक्षणान्नोपेताः ।। ३ ।।

**सायण– नव्यसी** नवतरा **सुकीर्तिः** सुष्ठु कीर्तयित्री **अस्मत्** अस्माकं स्तुतिः **हृदः** हृद्यवस्थितात् प्राणात् **जायमानम्** उत्पद्यमानम् । अग्निर्हि वायोरुत्पद्यते, वायुश्च प्राण एव, 'यः प्राणः स वायुः' इत्याम्नानात् । **मधुजिह्वम्** मादयितृज्वालम् । एवम्भूतम् **तम्** अग्निम्, **आ अश्याः** आभिमुख्येन व्याप्नोतु । **वृजने** सङ्ग्रामे प्राप्ते सति **आयवः** मनुष्याः **यम्** अग्निम् **जीजनन्त** यज्ञार्थमुदपादयन् । कीदृशा मनुष्याः । **ऋत्विजः** ऋतौ काले यष्टारः **मानुषासः** मनोः पुत्राः **प्रयस्वन्तः** हविर्लक्षणान्नोपेताः ।।

**नव्यसी** । नवीयसीत्यत्र ईकारलोपश्छान्दसः । **हृदः** । अत्र हृदयशब्देन तत्स्थः प्राणो लक्ष्यते । 'पद्दन्' इत्यादिना हृदयशब्दस्य हृदादेशः । **जायमानम्** 'जनी प्रादुर्भावे' । श्यनि 'ज्ञाजनोर्जा' इति जादेशः । अदुपदेशात् लसार्वधातुकानुदात्तत्वे श्यनो नित्त्वादाद्युदात्तत्वम् । **अस्मत्** । 'सुपां सुलुक्' इति विभक्तेर्लुक् । **अश्याः** 'अशू व्याप्तौ' लिङि 'बहुलं छन्दसि' इति विकरणस्य लुक् । व्यत्ययेन परस्मैपदमध्यमौ । **जीजनन्त** 'जनी प्रादुर्भावे' । ण्यन्तात् लुङि च्लेः चङादेशः । द्विर्भावहलादिशेषसन्वद्भावेत्वदीर्घाः । अदुपदेशात् लसार्वधातुकानुदात्तत्वे चङ एव स्वरे प्राप्ते व्यत्ययेन अभ्यस्ताद्युदात्तत्वम् ।। ३ ।।

**सिद्धाञ्जनम्– नव्यसी** नवीयसी नवतरा **सुकीर्तिः** सुष्ठु कीर्तयित्री स्तुतिः **अस्मत्** अस्माकं **हृदः** हृदयाद् अन्तःकरणवृत्तीनां मूलस्थानाद् अन्तरात्मनिलयभूतात् **जायमानं** उत्पद्यमानं **तम्** **मधुजिह्वम्** मादयितृज्वालं अग्निम्, **आ आश्याः** अभिमुखं व्याप्नोतु । **वृजने** यज्ञशत्रुभिः सह सङ्ग्रामे प्राप्ते **यम्** अग्निं **आयवः** यजनाध्वनि गन्तारः मनुष्याः **जीजनन्त** उदपादयन्, उत्पादयन्तीत्यर्थः । कीदृशाः आयवः? **ऋत्विजः** ऋतौ युक्ते काले यष्टारः **मानुषासः** मनोर्जाताः **प्रयस्वन्तः** प्रीतियुक्ताः ।। **नव्यसी**–नवीयसीत्यत्र ईकारलोपश्छान्दसः । **अश्याः**–'अशू व्याप्तौ' लिङि विकरणस्य लुक्, व्यत्ययेन परस्मैपदं मध्यमपुरुषश्च । **जीजनन्त**–'जनी प्रादुर्भावे' ण्यन्ताल्लुङ्, अडभावः ।। ३ ।।

## ऋक्संहिता पदपाठसहिता

**उशिक्पावको वसुर्मानुषेषु वरेण्यो होताधायि विक्षु ।**
**दमूना गृहपतिर्दम आँ अग्निर्भुवद्रयिपती रयीणाम् ।। ४ ।।**
**उशिक् । पावकः । वसुः । मानुषेषु । वरेण्यः । होता । अधायि । विक्षु ।**
**दमूनाः । गृहऽपतिः । दमे । आ । अग्निः । भुवत् । रयिऽपतिः । रयीणाम् ।। ४ ।।**

**वेङ्कटमाधव–** कामयिता शोधयिता । **मानुषेषु** वासयिता देवः सन् वरणीयः **होता** निहितः निविष्टेषु । दममनाः गृहे **गृहपतिः** सोऽयम् **अग्निः** भवति **रयीणाम् रयिपतिः** ।। ४ ।।

**मुद्गल– उशिक्** कामयमानः **पावकः** शोधकः **वसुः** निवासयिता **वरेण्यः** वरणशीलः । एवम्भूतः **होता अग्निः विक्षु** यज्ञगृहं प्रविष्टेषु **मानुषेषु** यजमानेषु **अधायि** स्थाप्यते । स च अग्निः, **दमूनाः** रक्षसां दमकरेण मनसा युक्तः **गृहपतिः** गृहाणां पालयिता च सन् **दमे** यज्ञगृहे **रयिपतिः** धनाधिपः **आ भुवत्** आ समन्ताद् भवति । न केवलमेकस्य रयेः, अपि तु सर्वेषामित्याह– **रयीणाम्** इति ।। ४ ।।

**सायण– उशिक्** कामयमानः **पावकः** शोधकः **वसुः** निवासयिता **वरेण्यः** वरणशीलः । एवम्भूतः **होता** अग्निः **विक्षु** यज्ञगृहं प्रविष्टेषु **मानुषेषु** यजमानेषु **अधायि** स्थाप्यते । स च **अग्निः, दमूनाः** रक्षसां दमकरेण मनसा युक्तः **गृहपतिः** गृहाणां पालयिता च सन् **दमे** यज्ञगृहे **रयिपतिः** धनाधिपतिः **आ भुवत्** आ समन्ताद् भवति । न केवलमेकस्य रयेः,अपि तु सर्वेषामित्याह– **रयीणाम्** इति । यद्वा रयीणां मध्ये उत्कृष्टं यद्धनं तस्य पतिरित्यर्थः ।।

**अधायि** । 'छन्दसि लुङ्लङ्लिटः' इति वर्तमाने कर्मणि लुङि च्लेः चिणादेशे 'आतो युक् चिण्कृतोः' इति युगागमः । दमयति राक्षसादिकमिति दमूनाः । 'दम उपशमे' । 'दमेरूनसिः (उ.सू.४.६७४) इति औणादिक ऊनसिप्रत्ययः । यास्कस्त्वाह– 'दमूना दममना वा दानमना वा दान्तमना वापि वा दम इति गृहनाम तन्मनाः स्यात्' (निरु.४.४) इति । **दम आँ अग्निः** । 'आङोऽनुनासिकश्छन्दसि' इति आकारस्य सानुनासिकत्वं प्रकृतिभावश्च । **भुवत्** । लेटि अडागमः । 'इतश्च लोपः' इति इकारलोपः । **रयिपतिः** । 'परादिश्छन्दसि बहुलम्' इत्युत्तर पदाद्युदात्तत्वम् । **रयीणाम्** 'नामन्यतरस्याम्' इति नाम उदात्तत्वम् ।। ४ ।।

**सिद्धाञ्जनम्– उशिक्** कामयमानः कान्तिमान् वा, **पावकः** शोधकः **वसुः** सर्वस्यापि धनभूतः **मानुषेषु** मनुष्येषु **वरेण्यः** वरणीयः, मनुष्येषु अन्तःस्थितः स श्रेष्ठो वरणीयो भवति । एवम्भूतः सोऽग्निः **होता** आह्वाता **विक्षु** यजमानेषु **अधायि** निहितः स्थापितो भवति । किञ्च सः **दमूनाः** गृहसुहृत् । दानमनस्क इति यास्कम् अनुसृत्य सायणः । गृहवाचिनो दमशब्दान्निष्पन्नोऽयं बोध्यः। **गृहपतिः** गृहस्य पालयिता **दमे** गृहे । अयम् **अग्निः, रयीणाम्** बहुविधानां धनानां मध्ये **रयिपतिः** उत्कृष्टस्य धनस्य पालकः **आ भुवत्** समन्ताद्भवति ।। **अधायि**–छन्दसि वर्तमाने कर्मणि लुङ् । **दमूनाः**–'दमेरूनसिः' इति औणादिकः प्रत्ययः । **भुवत्**–लेटि अडागमः ।।

## ऋक्संहिता पदपाठसहिता

**तं त्वा॑ व॒यं पति॑मग्ने रयी॒णां प्र शं॑सामो म॒तिभि॒र्गोत॑मासः ।**
**आ॒शुं न वा॑जंभ॒रं म॒र्जय॑न्तः प्रा॒तर्म॒क्षू धि॒याव॑सुर्जगम्यात् ।। ५ ।।**
**तम् । त्वा॒ । व॒यम् । पति॑म् । अ॒ग्ने॒ । र॒यी॒णाम् । प्र । शं॒सा॒मः॒ । म॒तिऽभिः॑ । गोत॑मासः । आ॒शुम् । न । वा॒ज॒म्ऽभ॒रम् । म॒र्जय॑न्तः । प्रा॒तः । म॒क्षु । धि॒याऽव॑सुः । ज॒ग॒म्या॒त् ।।**

**वेङ्कटमाधव– तम् त्वा वयम् पतिं अग्ने! रयीणाम् प्रशंसामः** स्तुतिभिः गोतमाः, अश्वम् इव अन्नस्य हर्तारं पाणिना स्पृशन्तः सादिनः । यथाऽग्निरस्मिन् लोक आहृतः, तदुक्तं सूक्ते ।।

**मुद्गल– गोतमासः** गोतमगोत्रोत्पन्नाः वयं नोधसः । स्तोतुरेकत्वेऽप्यात्मनि पूजार्थं बहुवचनम् । हे **अग्ने! रयीणां** धनानां **पतिं** रक्षितारं तादृशं **त्वा** त्वां **मतिभिः** मननीयैः स्तोत्रैः **प्रशंसामः** प्रकर्षेण स्तुमः । किं कुर्वन्तः । **वाजम्भरं** वाजस्य हविर्लक्षणान्नस्य भर्तारं त्वां **मर्जयन्तः** मार्जयन्तः । दृष्टान्तः । **आशुं न** अश्वमिव । यथाऽश्वमारोहन्तः पुरुषास्तस्य वहनप्रदेशं हस्तैर्निमृजन्ति तद्वद् वयमपि अग्नेर्हविर्वहनप्रदेशं निमृजन्त इत्यर्थः । **धियावसुः** कर्मणा प्राप्तधनः सोऽग्निः **प्रातः** श्वोभूतस्य अह्नः प्रातःकाले **मंक्षु** शीघ्रं **जगम्यात्** आगच्छतु ।। ५ ।।

**सायण– गोतमासः** गोतमगोत्रोत्पन्नाः **वयं** नोधसः । स्तोतुरेकत्वेऽप्यात्मनि पूजार्थं बहुवचनम् । हे **अग्ने! रयीणां** धनानां **पतिं** रक्षितारं तादृशं **त्वा** त्वां **मतिभिः** मननीयैः स्तोत्रैः **प्रशंसामः** प्रकर्षेण स्तुमः । किं कुर्वन्तः । **वाजम्भरं** वाजस्य हविर्लक्षणान्नस्य **भर्तारं** त्वां **मर्जयन्तः** मार्जयन्तः । तत्र दृष्टान्तः । **आशुं न** अश्वमिव । यथाऽश्वमारोहन्तः पुरुषास्तस्य

वहनप्रदेशं हस्तैर्निमृजन्ति तद्वद् वयमपि अग्नेर्हविर्वहनप्रदेशं निमृजन्त इत्यर्थः । तथा च अग्नि संमार्जनप्रकरणे वाजसनेयिभिराम्नातम्-'अथ मध्ये तूष्णीमेव त्रिः संमार्ष्टि यथा युक्त्वा प्रेहि वहेति व्रजेदेवमेतदग्निं युक्त्वोपक्षिपति प्रेहि देवेभ्यो हव्यं वह' इति । **धियावसुः** कर्मणा बुद्ध्या वा प्राप्तधनः सोऽग्निः **प्रातः** श्वोभूतस्य अह्नः प्रातःकाले **मंक्षु** शीघ्रं **जगम्यात्** आगच्छतु ॥

**मतिभिः** 'मन ज्ञाने' इत्यस्मात् कर्मणि क्तिन् । 'मन्त्रे वृषेष' इत्यादिना तस्योदात्तत्वम् । **वाजम्भरम्** । अग्नेरेषा वैदिकी सञ्ज्ञा । 'सञ्ज्ञायां भृतृवृजि०' (पा.सू.३.२.४६) इति वाजशब्दे कर्मण्युपपदे खच्प्रत्ययः । 'अरुर्द्विषदजन्तस्य मुम्' (पा.सू.६.३.६७) इति मुमागमः । 'चितः' इत्यन्तोदात्तत्वम् । **मर्जयन्तः** । सञ्ज्ञापूर्वकस्य विधेरनित्यत्वात् 'मृजेर्वृद्धिः' (पा.सू.७.२.११४) इति वृद्ध्यभावः । अदुपदेशात् लसार्वधातुकानुदात्तत्वे णिच एव स्वरः शिष्यते । **जगम्यात्** । लिङि 'बहुलं छन्दसि' इति शपः श्लुः ॥ ५ ॥

**सिद्धाञ्जनम्– गोतमासः** अतिशयेन गोमन्तः ज्ञानरश्मियुक्ताः (अन्तर्भावितमत्वर्थः), गोतमगोत्रोद्भवाः **वयं** नोधसः । हे **अग्ने! रयीणाम्** धनानाम् **पतिम्** पालयितारं **तम्** तादृशं **त्वा** त्वाम् **मतिभिः** मननीयैः स्तोत्रैः **प्रशंसामः** प्रकर्षेण स्तुमः । किं कुर्वन्तः? **वाजम्भरम्** वाजस्य बलादिसमृद्धेर्भर्तारं त्वां **मर्जयन्तः** मार्जयन्तः । तत्र दृष्टान्तः–**आशुम् न** अश्वमिव । यथा पुरुषा अश्विनः, अश्वं निर्धूलिकशरीरं मार्जनेन कुर्वन्ति, तथा वयमप्यग्नेर्वहनप्रदेशं यजनस्थानं शोधयामः । **प्रातः** इदानीं **मंक्षु** शीघ्रं **धियावसुः** धिया धनवान् **जगम्यात्** आगच्छतु ॥ **वाजम्भरम्**–अग्नेरेषा वैदिकी सञ्ज्ञा । 'सञ्ज्ञायां भृतृवृजि' इति वाजशब्दे कर्मण्युपपदे खच्प्रत्ययः, मुमागमः । **मर्जयन्तः**–मृजेर्वृद्ध्यभावः । अन्ये गताः ॥ ५ ॥

॥ इति प्रथमाष्टके चतुर्थाध्याये षड्विंशो वर्गः ॥

## ऋक्संहिता पदपाठसहिता

(सूक्तम् ६१)

१६ नोधा गौतमः । इन्द्रः । त्रिष्टुप् ।

**अस्मा इदु प्र तवसे तुराय प्रयो न हर्मि स्तोमं माहिनाय ।**
**ऋचीषमायाध्रिगव ओहमिन्द्राय ब्रह्माणि राततमा ॥ १ ॥**

**अस्मै । इत् । ऊँ इति । प्र । तवसे । तुराय । प्रयः । न हर्मि । स्तोमम् । माहिनाय । ऋचीषमाय । अध्रिऽगवे । ओहम् । इन्द्राय । ब्रह्माणि । राऽततमा ।। १ ।।**

**वेङ्कटमाधव–** इन्द्राय एव वृद्धाय प्र भरामि शत्रूणां हिंसित्रे, अन्नमिव स्तोत्रम्, महते स्तुत्या समाय अधृतगमनाय वहनसाधनम् । **इन्द्राय** हि स्तोत्राणि अत्यन्तं स्तोतृभिर्दत्तानि ।।

**मुद्गल–** 'अस्मा इदु प्र तवसे' इति षोडशर्चं चतुर्थं सूक्तम् । नोधा ऋषिः । त्रिष्टुप् छन्दः । इन्द्रो देवता ।

इत् उ इति निपातद्वयं पादपूरणे । **तवसे** प्रवृद्धाय **तुराय** त्वरमाणाय । **माहिनाय** गुणैर्महते **ऋचीषमाय** ऋचा समाय । यादृशी स्तुतिः क्रियते तत्समायेत्यर्थः । **अध्रिगवे** अधृतगमनाय । अप्रतिहतगमनायेत्यर्थः । एवम्भूताय **अस्मै** इन्द्राय **स्तोमं** स्तोत्रं **प्रहर्मि** प्रहरामि करोमीत्यर्थः । दृष्टान्तः । **प्रयो न** । प्रयः इति अन्ननाम । यथा बुभुक्षिताय पुरुषाय कश्चिदन्नं प्रहरति । कीदृशं स्तोमम् । **ओहं** वहनीयं प्रापणीयं वा । अत्यन्तोत्कृष्टमित्यर्थः । न केवलं स्तोमं किं तर्हि **ब्रह्माणि** हविर्लक्षणान्यन्नानि । कीदृशानि । **राततमा** पूर्वैर्यजमानैरतिशयेन दत्तानि । इन्द्रं स्तुत्या हविषा च परिचरेमेति भावः ।। १ ।।

**सायण–** 'अस्मा इदु प्र तवसे' इति षोडशर्चं चतुर्थं सूक्तं नोधस आर्षमैन्द्रं त्रैष्टुभम् । अनुक्रान्तं च– 'अस्मा इदु षोळश' इति । अस्य सूक्तस्य नोधा द्रष्टा इत्येतद्ब्राह्मणे समाम्नायते– 'अस्मा इदु प्रतवसे तुरायेति नोधास्त एते प्रातः सवने' (ऐ.ब्रा.६.१८) इति । षळहस्तो त्रियावापवत्सु चतुर्विंशमहाव्रतादिष्वहस्सु माध्यन्दिने सवने ब्राह्मणाच्छंसिशस्त्रे 'ब्रह्मणा ते ब्रह्मयुजा' इत्यस्या आरम्भणीयाया ऊर्ध्वमहीनसूक्तसञ्ज्ञमेतच्छंसनीयम् । तथा च सूत्रितम्– 'अस्मा इदु प्र तवसे शासद्वह्निरितीतरावहीनसूक्ते' (आश्व.श्रौ.७.४) इति । ब्राह्मणं च भवति– 'त एते प्रातःसवने षळहस्तोत्रियाञ्छस्त्वा माध्यन्दिनेऽहीनसूक्तानि शंसन्ति' इति ।।

इत् उ इति निपातद्वयं पादपूरणे । 'अथापि पादपूरणाः कर्ममिद्विति' इति यास्कः । यद्वाऽवधारणार्थम् । **तवसे** प्रवृद्धाय **तुराय** त्वरमाणाय । यद्वा । तुर्वित्रे शत्रूणां हिंसित्रे । **माहिनाय** गुणैर्महते **ऋचीषमाय** ऋचा समाय । यादृशी स्तुतिः क्रियते तत्समायेत्यर्थः । **अध्रिगवे** अधृतगमनाय । अप्रतिहतगमनायेत्यर्थः । तथा च यास्कः– 'अधृतगमनकर्मवन्निन्द्रोऽप्यध्रिगुरुच्यते'

(निरु.५.११) इति । एवम्भूताय **अस्मै** इन्द्राय **स्तोमं** स्तोत्रं **प्रहर्मि** प्रहरामि करोमीत्यर्थः । तत्र दृष्टान्तः । **प्रयो न** । प्रयः इति अन्ननाम । यथा बुभुक्षिताय पुरुषाय कश्चिदन्नं प्रहरति । कीदृशं स्तोमम् । **ओहं** वहनीयं प्रापणीयं वा । अत्यन्तोत्कृष्टमित्यर्थः । न केवलं स्तोमं किं तर्हि **ब्रह्माणि** हविर्लक्षणान्यन्नानि । कीदृशानि । **राततमा** पूर्वैर्यजमानैरति शयेन दत्तानि । इन्द्रं स्तुत्या हविषा च परिचरेमेति भावः ।।

**तुराय** 'तुर त्वरणे' । इगुपधलक्षणः कः । यद्वा । तुर्वी हिंसार्थः । तुर्वतीति तुरः । पचाद्यचि छान्दसो वलोपः । **हर्मि** 'हृञ् हरणे' । 'बहुलं छन्दसि' इति शपो लुक् । **माहिनाय** 'मह पूजायाम्' इत्यस्मात् 'महेरिनण् च' (उ.सू.२.२१४) इति इनण्प्रत्ययः उपधावृद्धिश्च । **ऋचीषमाय** । 'ऋचीषम ऋचा समः' (निरु.६.२३) इति यास्कः । 'तृतीया तत्कृत०' (पा.सू. २.१.३०) इति समासः । तृतीयापूर्वपदप्रकृतिस्वरत्वम् । पृषोदरादित्वात् ईकारोपजनः । सुषामादित्वात् षत्वम् । केचिदाहुः । 'ऋच स्तुतौ' इत्यस्मात् 'इगुपधात्कित्' इति इप्रत्ययः । 'कृदिकारादक्तिनः' इति ङीष् । ऋची स्तुतिः । तया समः । पूर्ववत् षत्वम् । अस्मिन् पक्षे तृतीयापूर्वपदप्रकृतिस्वरत्वे सति ङीष उदातत्त्वेन भवितव्यम् । तथा च न दृश्यते । तस्मात् स्वरश्चिन्तनीयः । यद्वा । दिवोदासादिर्द्रष्टव्यः । **अध्रिगवे** । अधृतोऽन्येन अनिवारितो गौर्गमनं यस्य स तथोक्तः । 'गोस्त्रियोरुपसर्जनस्य' (पा.सू.१.२.४८) इति ह्रस्वत्वम् । पृषोदरादित्वात् अधृतशब्दस्य अध्रिभावः । **ओहम्** । वहतेः कर्मणि घञि छान्दसं सम्प्रसारणम् । यद्वा 'तुहिर् दुहिर् अर्दने' इत्यस्मात् ओहतेः पूर्ववत् घञ् । **राततमा** 'रा दाने' इत्यस्मात् निष्ठान्तादातिशायनिकस्तमप् । 'शेश्छन्दसि' इति शेर्लोपः ।। १ ।।

**सिद्धाञ्जनम्–** 'अस्मा इदु प्रतवसे' इति षोडशर्चं चतुर्थं सूक्तम् । नोधा ऋषिः त्रिष्टुप् छन्दः इन्द्रो देवता ।।

**इदु** पादपूरणः । **तवसे** प्रवृद्धाय **तुराय** त्वरमाणाय, सत्वरं कार्यं कुर्वत इत्यर्थः । **इन्द्राय प्रयो न** प्रियं वस्तु इव **स्तोमम्** स्तोत्रं **प्रहर्मि** प्रकर्षेण हरामि करोमि । कीदृशाय? **माहिनाय** महते **ऋचीषमाय** ऋचा समाय यादृशी ऋक् दीप्ता स्तुतिः क्रियते तस्यास्तुल्याय योग्याय । **अध्रिगवे** अधृता अन्येनानिवारिताः गावः रश्मयः यस्य सः अस्मै । अप्रतिहतचिद्रश्मिप्रसराय तस्मै इन्द्रायेति सम्बन्धः । कीदृशं स्तोमं प्रहर्मि? **ओहम्** वहनीयं प्रापणीयमुत्कृष्टत्वात् । किञ्च

**राततमा** अतिशयेन दत्तानि **ब्रह्माणि** मन्त्रात्मकानि स्तोत्राणि पूर्वैः ऋषिभिः स्तोत्राय प्रयुक्तान् मन्त्रानपि इन्द्राय ब्रवीमि न केवलं मयेदानीं गीयमानं स्तोमम् ।।

**तुराय**–'तुर त्वरणे' । **हर्मि**–'हृञ् हरणे' शपो लुक् । **माहिनाय**–गतम् । **ऋचीषमाय**–ऋचा समाय, तृतीयाया ईकारः अलुक्समासश्च छान्दसः । **अध्रिगवः**–गौः गमनमिति सायणः । अधृतगमनः, पृषोदरादित्वाद्रूपसिद्धिः । **ओहम्**–वहतेः कर्मणि घञ्, सम्प्रसारणं छान्दसम् । **राततमा**–'रा दाने' शेर्लोपः ।। १ ।।

## ऋक्संहिता पदपाठसहिता

**अस्मा इदु प्रयंइव प्र यंसि भरांम्याङ्गूषं बाधे सुवृक्ति ।**
**इन्द्राय हृदा मनसा मनीषा प्रत्नाय पत्ये धियो मर्जयन्त ।। २ ।।**
**अस्मै । इत् । ऊँ इति । प्रयः॑ऽइव । प्र । यंसि । भरामि । आङ्गूषम् । बाधे । सुऽवृक्ति ।**
**इन्द्राय । हृदा । मनसा । मनीषा । प्रत्नाय । पत्यै । धियः । मर्जयन्त ।। २ ।।**

**वेङ्कटमाधव– अस्मै** एव अन्नमिव स्तोत्रं प्रयच्छामि । **भरामि** स्तोत्रं बाधित्रे सुप्रवृत्तम् इति प्रथमपादोक्तमेवोक्तम् । **इन्द्राय** हृदादिभिः पुराणाय पालयित्रे कर्माणि संस्कुर्वन्ति ।। २ ।।

**मुद्गल– अस्मै** इत् उ अस्मै एव **इन्द्राय प्रय इव** अन्नमिव **प्र यंसि** प्रयच्छामि । तदेव स्पष्टीक्रियते । **बाधे** शत्रूणां बाधनाय समर्थम् **सुवृक्ति** सुष्ठु आवर्जकम् **आङ्गूषम्** स्तोत्ररूपमाघोषम् **भरामि** सम्पादयामि । अन्येऽपि स्तोतारः **प्रत्नाय** पुराणाय **पत्ये** स्वामिने **इन्द्राय हृदा** हृदयेन मनसा तदन्तर्वर्तिनाऽन्तःकरणेन **मनीषा** मनीषया तज्जन्येन ज्ञानेन च **धियः** स्तुतीः **मर्जयन्त** आर्जयन्ति संस्कुर्वन्ति ।। २ ।।

**सायण– अस्मा इदु** अस्मै एव इन्द्राय । प्रयः इति अन्ननाम । **प्रय इव** अन्नमिव **प्र यंसि** प्रयच्छामि । तेदव स्पष्टीक्रियते । **बाधे** शत्रूणां बाधनाय समर्थम् **सुवृक्ति** सुष्ठु आवर्जकम् **आङ्गूषम्** स्तोत्ररूपमाघोषम् **भरामि** सम्पादयामि । अन्येऽपि स्तोतारः **प्रत्नाय** पुराणाय **पत्ये** स्वामिने **इन्द्राय हृदा** हृदयेन मनसा तदन्तर्वर्तिनाऽन्तःकरणेन **मनीषा** मनीषया तज्जन्येन ज्ञानेन च **धियः** स्तुतीः कर्माणि वा **मर्जयन्त** मार्जयन्ति संस्कुर्वन्ति ।।

**प्र यंसि** 'यम उपरमे' इत्यस्मात् लटि पुरुषव्यत्ययः । 'बहुलं छन्दसि' इति शपो लुक् । **आङ्गूषम्** । 'आङ्गूषः स्तोम आघोषः' (निरु.५.११) इति यास्कः । आङ्पूर्वात् घुषेः घञि, पृषोदरादित्वात् घो इत्यस्य गूआदेशः, आङो ङकारस्य लोपाभावश्च । थाथादिना उत्तरपदान्तोदात्तत्वम् । **बाधे** 'बाधृ विलोडने' इत्यस्मात् 'कृत्यार्थे तवैकेन्' इति भावे केन्प्रत्ययः । एजन्तत्वात् अव्ययत्वेन सुपो लुक् । **मनीषा** । 'सुपां सुलुक्' इति तृतीयाया डादेशः । **पत्ये** 'पतिः समास एव' (पा.सू.१.४.८) इति घिसंज्ञायाः समासविषयत्वात् 'घेर्ङिति' इति गुणाभावे यणादेशः ।। २ ।।

**सिद्धाञ्जनम्– अस्मा इदु** अस्मै इन्द्रायैव **प्रय इव** प्रियं वस्त्विव **प्र यंसि** प्रयच्छामि । **बाधे** बाधनाय यज्ञशत्रूणामिति शेषः । **सुवृक्ति** सुष्ठु आवर्जकं **आङ्गूषम्** आघोषं स्तोत्रात्मकं **भरामि** हरामि सम्पादयामि । **प्रत्नाय** पुराणाय **पत्ये** स्वामिने **इन्द्राय, धियः** बुद्धीः धारणा-समर्थान् प्रज्ञाविशेषान् तल्लक्षिताः स्तुतीर्वा **हृदा** हृदयेन, प्रागुक्तलक्षणेन **मनसा** अन्तःकरणवृत्त्या **मनीषा** मनीषया मनस ईषयित्र्या प्रज्ञया च **मर्जयन्त** मार्जयन्ति शोधयन्ति संस्कुर्वन्ति स्तोतार ऋषय इति शेषः ।। **प्र यंसि**–'यम उपरमे' लटि पुरुषव्यत्ययः । शपो लुक् । **आङ्गूषम्**– आङ्पूर्वाद् घुषेर्घञ्, पृषोदरादित्वाद् घो इत्यस्य गू आदेशः । **बाधे**–'बाधृ विलोडने' कृत्यार्थे भावे केन्प्रत्ययः, एजन्तत्वात् अव्ययत्वेन सुपो लुक् ।। २ ।।

## ऋक्संहिता पदपाठसहिता

**अस्मा इदु त्यमुपमं स्वर्षां भराम्याङ्गूषमास्येन ।**
**मंहिष्ठमच्छोक्तिभिर्मतीनां सुवृक्तिभिः सूरिं वावृधध्यै ।। ३ ।।**
**अस्मै । इत् । ऊँ इति । त्यम् । उपऽमम् । स्वःसाम् । भरामि । आङ्गूषम् । आस्येन ।**
**मंहिष्ठम् । अच्छोक्तिऽभिः । मतीनाम् । सुवृक्तिऽभिः । सूरिम् । ववृधध्यै ।। ३ ।।**

**वेङ्कटमाधव– अस्मै** एव तम् उपमानभूतं सर्वस्य दातारम् **भरामि आङ्गूषम्** स्तोत्रम् **आस्येन** । दातृतमम् अभिमुखोक्तिभिः स्तुतीनां सुप्रवृत्तैः प्राज्ञं वर्धयितुमाङ्गूषं भरामीति ।।

**मुद्गल– अस्मै इत्** उ अस्मै एवेन्द्राय **त्यम्** तं प्रसिद्धम् **उपमम्** उपमानहेतुभूतम् **स्वर्षाम्** सुष्ठु अरणीयस्य धनस्य दातारम् । **सूरिम्** विपश्चितमिन्द्रम् **ववृधध्यै** वर्धयितुम् **सुवृक्तिभिः**

सुष्ठु आवर्जकैः । समर्थैरित्यर्थः । **मतीनाम्** स्तुतीनां सम्बन्धिभिः **अच्छोक्तिभिः** स्वच्छैर्वचोभिः **मंहिष्ठम्** अतिशयेन प्रवृद्धम् । एवंलक्षणम् **आङ्गूषम्** आघोषम् **आस्येन** मुखेन **भरामि** । करोमीत्यर्थः ।। ३ ।।

**सायण– अस्मा इदु** अस्मै एवेन्द्राय **त्यम्** तं प्रसिद्धम् **उपमम्** उपमानहेतुभूतम् **स्वर्षाम्** सुष्ठु अरणीयस्य धनस्य दातारम् । **सूरिम्** विपश्चितमिन्द्रम् **ववृधध्यै** वर्धयितुम् **सुवृक्तिभिः** सुष्ठु आवर्जकैः । समर्थैरित्यर्थः । **मतीनाम्** स्तुतीनां सम्बन्धिभिः **अच्छोक्तिभिः** स्वच्छैर्वचोभिः **मंहिष्ठम्** अतिशयेन प्रवृद्धम् । एवंलक्षणम् **आङ्गूषम्** आघोषम् **आस्येन** मुखेन **भरामि** । करोमीत्यर्थः ।।

**उपमम्** । उपमीयतेऽनेनेति उपमः । 'घञर्थे कविधानम्' इति करणे कप्रत्ययः । 'आतो लोप इटि च' इति आकारलोपः । **स्वर्षाम्** । सुपूर्वात् अर्तेः विजन्तः स्वर्शब्दः । 'षणु दाने' । 'जनसनखनक्रमगमो विट्' । 'विड्वनोरनुनासिकस्यात्' इति आत्वम् । 'सनोतेरनः' (पा.सू.८.३.१०८) इति षत्वम् । **भरामि** । पादादित्वात् निघाताभावः । **अच्छोक्तिभिः** । अच्छा उक्तयो येषाम् । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । **मतीनाम्** । 'नामन्यतरस्याम्' इति नाम उदात्तत्वम् । **ववृधध्यै** 'वृधु वृद्धौ' इत्यस्मात् अन्तर्भावितण्यर्थात् 'तुमर्थे सेसेन्' इति कध्यैप्रत्ययः । कित्त्वाद् गुणाभावः । द्विर्भावश्छान्दसः । यद्वा यङ्लुगन्तादस्मिन्प्रत्यये आगमानुशासनस्यानित्यत्वात् रीगाद्यभावः । 'अन्येषामपि दृश्यते' इति सांहितिकम् अभ्यासस्य दीर्घत्वम् । प्रत्ययाद्युदात्तत्वम् ।। ३ ।।

**सिद्धाञ्जनम्– अस्मा इदु** अस्मै इन्द्रायैव **त्यम्** तं प्रसिद्धं **उपमम्** उपमानहेतुभूतं **स्वर्षाम्** स्वःसां, स्वरिति ज्योतिः तस्य सनितारं दातारं **आङ्गूषम्** स्तोत्ररूपं घोषं **आस्येन** मुखेन **भरामि** करोमि । कीदृशमाङ्गूषम्? वक्ष्यमाणप्रकारम्–**सूरिम् ववृधध्यै** विपश्चितमिन्द्रं वर्धयितुं **सुवृक्तिभिः** सुष्ठु आवर्जकैः **मतीनाम् अच्छोक्तिभिः** मतिलक्षितस्तुतीनां स्वच्छैर्वचोभिः **मंहिष्ठम्** अतिशयेन प्रवृद्धं एवंविधमाङ्गूषं भरामीति सम्बन्धः ।। **उपमम्**–उपमीयतेऽनेनेति उपमः, घञर्थे कविधानम् । **स्वःसाम्**–स्वः सनोति 'जनसनादिभ्यो विट्', विड्वनोरनुनासिकस्य आत्वम्, 'सनोतेरनः' इति षत्वम् ।। **ववृधध्यै**–वर्धतेः ण्यर्थात् तुमर्थे कध्यैप्रत्ययः, द्विर्भावश्छान्दसः ।। ३ ।।

## ऋक्संहिता पदपाठसहिता

**अस्मा इदु स्तोमं तं हिनोमि रथं न तष्टेव तत्सिनाय ।**
**गिरश्च गिर्वाहसे सुवृक्तीन्द्राय विश्वमिन्वं मेधिराय ।। ४ ।।**
**अस्मै । इत् । ऊँ इति । स्तोमम् । सम् । हिनोमि । रथम् । न । तष्टाऽइव । तत्ऽसिनाय । गिरः । च । गिर्वाहसे । सुऽवृक्ति । इन्द्राय । विश्वम्ऽइन्वम् । मेधिराय ।। ४ ।।**

**वेङ्कटमाधव– अस्मै** एवाहं स्तोत्रं सम्प्रेरयामि । **रथम्** इव संस्कर्ता निष्कृतम् अन्ते **तत्सिनाय** तेन यो बध्यते तस्मै स्वामिने । **गिरः च** केवलाः गीर्भिरूह्यमानाय सुप्रवृत्ताः **सम् हिनोमि इन्द्राय** सर्वस्य प्रीणनं हविश्च यज्ञार्हाय ।। ४ ।।

**मुद्गल– अस्मै** इत् उ अस्मै एव **इन्द्राय स्तोमम्** शस्त्ररूपं स्तोत्रम् **सम् हिनोमि** प्रेरयामि । दृष्टान्तः । **तत्सिनाय** तेन रथेन सिनम् अन्नं यस्य स तथोक्तः, तस्मै रथस्वामिने **तष्टा इव** तष्टा तक्षको रथनिर्माता **रथम् न** यथा रथं प्रेरयति तद्वत् । इव इति पादपूरणम् । तथा **गिर्वाहसे** गीर्भिः स्तुतिभिरूह्यमानाय इन्द्राय, **गिरः च** शस्त्रसम्बन्धिनीः केवला ऋचश्च **सुवृक्ति** शोभनमावर्जनं यथा भवति तथा प्रेरयामि । तथा **मेधिराय** मेधाविने इन्द्राय **विश्वमिन्वम्** विश्वव्यापकं सर्वोत्कृष्टं हविश्च सं हिनोमीत्यनुषङ्गः ।। ४ ।।

**सायण– अस्मै** एव इन्द्राय **स्तोमं** शस्त्ररूपं स्तोत्रं **संहिनोमि** प्रेरयामि । तत्र दृष्टान्तः । **तत्सिनाय** । सिनम् इति अन्ननाम । 'सिनमन्नं भवति सिनाति भूतानि' (निरु.५.५) इति यास्कः । तेन रथेन सिनम् अन्नं यस्य स तथोक्तः । तस्मै रथस्वामिने । **तष्टेव** तष्टा तक्षको रथनिर्माता, **रथं न** यथा रथं प्रेरयति तद्वत् । इव इत्येतत् पादपूरणम् । तथा **गिर्वाहसे** गीर्भिः स्तुतिभिरूह्यमानाय **इन्द्राय गिरश्च** शस्त्रसम्बन्धिनीः केवला ऋचश्च **सुवृक्ति** शोभनमावर्जनं यथा भवति तथा प्रेरयासि । तथा **मेधिराय** मेधाविने इन्द्राय **विश्वमिन्वं** विश्वव्यापकं विश्वैर्व्याप्तं सर्वोत्कष्टं हविश्च संहिनोमीत्यनुषङ्गः ।।

**हिनोमि** 'हि गतौ वृद्धौ च' । 'स्वादित्वात् श्नुः । **तष्टेव** । 'तक्षू त्वक्षू तनूकरणे' । ताच्छीलिकस्तृन् । ऊदित्त्वात् पक्षे इडभावः । 'स्कोः संयोगाद्योरन्ते च' इति ककारलोपः । नित्त्वादाद्युदात्तत्वम् । **तत्सिनाय** । सिनशब्दः 'षिञ् बन्धने' इत्यस्मात् 'इण्षिञ्जिदीङुष्यविभ्यो

नक्' (उ.सू.३.२८२) इति नक्प्रत्ययान्तः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । **गिर्वाहसे** 'वहिहाधाञ्भ्यश्छन्दसि' इति वहतेः केवलाद्विहितः असुन्प्रत्ययः 'गतिकारकयोरपि पूर्वपदप्रकृति स्वरत्वं च' इति वचनात् कारकपूर्वस्यापि भवति पूर्वपदप्रकृतिस्वरत्वं च । 'णित्' इत्यनुवृत्तेः उपधावृद्धिः । 'हलि च' इति दीर्घाभावश्छान्दसः । **विश्वमिन्वम्** 'इवि व्याप्तौ' । विश्वमिन्वति व्याप्रोतीति विश्वमिन्वम् । पचाद्यच् । लुगभावश्छान्दसः । यद्वा । खच्प्रत्ययो बहुलवचनादस्मादपि धातोर्द्रष्टव्यः । **मेधिराय** । मेधा अस्यास्तीति मेधिरः । 'मेधारथाभ्यामिरन्निरचौ वक्तव्यौ' (पा.सू.५.२.१०९.३) इति मत्वर्थीय इरन् । नित्त्वादाद्युदात्तत्वम् ।। ४ ।।

**सिद्धाञ्जनम्– अस्मा इदु** अस्मा एवेन्द्राय **स्तोमम्** स्तोत्रं **संहिनोमि** प्रेरयामि । तत्र दृष्टान्तः– **तत्सिनाय** सिनं अन्नमिति यास्कमनुसृत्य सायणः, सन्दिग्धः शब्दार्थः । सिनः ग्रासः सितो बन्धनार्थ इति पातञ्जलमहाभाष्ये निर्णीतः ''सिनो ग्रासः स्वयमेव भवति, सिता पाशेन सूकरी'' (पा.८.२.४६) । अतिचिरन्तनत्वान्मन्त्राणां बन्धनार्थोऽप्यासीदिति केषाञ्चिदूहः । तर्हि तेन रथेन सिनं अन्नं यस्य सः, अथवा तेन रथेन सिनं बन्धः सम्बन्धः यस्य सः । उभयथापि रथस्वामी भवति, तस्मै **रथम् न तष्टा इव** यथा तष्टा तक्षको रथं प्रेरयति तद्वत् । इवेत्येतत्, नकारो वा पदपूरणः । तथा **गिर्वाहसे** गीर्भिः स्तुतिभिरूह्यमानाय **गिरश्च** ऋग्रूपाः केवलाः स्तुतीश्च **सुवृक्ति** सुष्ठु शोभमानं यथा भवति तथा प्रेरयामि । पूर्वं स्तोमः शस्त्रात्मकः, इदानीं तत्सम्बन्धिन्य ऋच उक्ताः । तथा **मेधिराय** मेधाविने **इन्द्राय विश्वमिन्वम्** विश्वं सर्वं इन्वति व्याप्रोतीति विश्वमिन्वं सर्वगं सर्वचालकं वा वचः प्रेरयामि ।। **विश्वमिन्वम्**–इन्वति, पचाद्यच्, लुगभावश्छान्दसः । **मेधिरः**–मत्वर्थीय इरन् प्रत्ययः ।। ४ ।।

## ऋक्संहिता पदपाठसहिता

**अस्मा इदु सप्तिमिव श्रवस्येन्द्रायार्कं जुह्वा३ समञ्जे ।**
**वीरं दानौकसं वन्दध्यै पुरां गूर्तश्रवसं दर्माणम् ।। ५ ।।**
**अस्मै । इत् । ऊँ इति । सप्तिम्ऽइव । श्रवस्या । इन्द्राय । अर्कम् । जुह्वा । सम् । अञ्जे ।**
**वीरम् । दानऽओकसम् । वन्दध्यै । पुराम् । गूर्तऽश्रवसम् । दर्माणम् ।। ५ ।।**

**वेङ्कटमाधव– अस्मै** एव अश्वमिव अन्नेच्छया इन्द्राय स्तोत्रं वाचा संश्लेषयामि । **वीरम्** दाननिलयम् असुरपुराणां दारयितारं वन्दितुम् उद्गूर्णान्नम् **सम् अञ्जे** इति ।। ५ ।।

**मुद्गल– अस्मै इत्** उ अस्मै एवेन्द्राय **अर्कम्** स्तुतिरूपं मन्त्रम् **श्रवस्या** श्रवस्यया अन्नेच्छया **जुह्वा** आह्वानसाधनेन वागिन्द्रियेण **सम् अञ्जे** समक्तं करोमि । एकीकरोमीत्यर्थः । दृष्टान्तः । **सप्तिमिव** यथाऽन्नलाभाय गन्तुकामः पुमान् अश्वं रथेनैकीकरोति तद्वत् । एकीकृत्य च **वीरम्** शत्रुक्षेपणकुशलम् **दानौकसम्** दानानामेकनिलयम् **गूर्तश्रवसम्** प्रशस्यान्नम् **पुराम्** असुरपुराणाम् **दर्माणम्** विदारयितारम् । एवंगुणविशिष्टमिन्द्रम् **वन्दध्यै** वन्दितुं स्तोतुं प्रवृत्तोऽस्मीति शेषः ॥ ५ ॥

**सायण– अस्मै** एव **इन्द्राय, अर्कं** स्तुतिरूपं मन्त्रं, **श्रवस्या** श्रवस्यया अन्नेच्छया । अन्नलाभायेत्यर्थः । **जुह्वा** आह्वानसाधनेन वागिन्द्रियेण **सम् अञ्जे** समक्तं करोमि । एकीकरोमीत्यर्थः । तत्र दृष्टान्तः । **सप्तिमिव** यथाऽन्नलाभाय गन्तुकामः पुमान् अश्वं रथेनैकीकरोति तद्वत् । एकीकृत्य च **वीरम्** शत्रुक्षेपणकुशलम् **दानौकसम्** दानानामेकनिलयम् **गूर्तश्रवसम्** प्रशस्यान्नम् **पुराम्** असुरपुराणाम् **दर्माणम्** विदारयितारम् । एवंगुणविशिष्टमिन्द्रम् **वन्दध्यै** वन्दितुं स्तोतुं प्रवृत्तोऽस्मीति शेषः ॥

**सप्तिमिव** 'षष समवाये' । समवैति रथेनैकीभवतीति सप्तिरश्वः । 'वसस्तिप्' (उ.सू. ४.६१९) इति विधीयमानः तिप्प्रत्ययः बहुलवचनाद् अस्मादपि धातोर्भवति । प्रत्ययस्य पित्त्वा-दनुदात्तत्वे धातुस्वरः । इवेन समास उक्तः । **श्रवस्या** । श्रवस् शब्दात् 'सुप आत्मनः क्यच्' । क्यजन्ताद् धातोर्भावे 'अ प्रत्ययात्' (पा.सू.३.३.१०२) इति अकारप्रत्ययः । ततष्टाप् । 'सुपां सुलुक्' इति तृतीयाया डादेशः । उदात्तनिवृत्तिस्वरेण तस्योदात्तत्वम् । **अर्कम्** 'ऋच स्तुतौ' । ऋच्यते स्तूयतेऽनेनेति अर्को मन्त्रः । 'पुंसि संज्ञायां घः प्रायेण' इति करणे घप्रत्ययः । 'चजोः कुघिण्ण्यतोः' इति कुत्वम् । लघूपधगुणः । प्रत्ययस्वरः । **जुह्वा** । 'बहुलं छन्दसि' इति कृतसम्प्रसारणस्य ह्वेञः 'हुवः श्लुवच्च' (उ.सू.२.२१८) इति क्विप्, धातोर्दीर्घश्च । धातु स्वरेणान्तोदात्तत्वम् । तृतीयैकवचने 'उदात्तस्वरितयोर्यणः' इति स्वरितत्वम् । 'उदात्तयणो हल्पूर्वात्' इत्यस्य विभक्त्युदात्तत्वस्य 'नोङ्धात्वोः' (पा.सू.६.१.१७५) इति प्रतिषेधः । **अञ्जे** 'अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु' । व्यत्ययेन आत्मनेपदम् । **वन्दध्यै** 'वदि अभिवादनस्तुत्योः' । 'तुमर्थे सेसेन्' इति कध्यैप्रत्ययः । **गूर्तश्रवसम्** 'गृ शब्दे' । निष्ठायां श्र्युकः किति' इति इट्प्रतिषेधः । 'बहुलं छन्दसि' इति उत्वम् । 'हलि च' इति दीर्घः । 'नसत्तनिषत्त' (पा.सू.

८.२.६१) इत्यादौ निपातनात् निष्ठानत्वाभावः । गूर्तं श्रवो यस्य । बहुव्रीहौ पूर्वपद प्रकृतिस्वरत्वम् । **दर्माणम्** 'दॄ विदारणे' । 'अन्येभ्योऽपि दृश्यन्ते' इति मनिन् । 'नेड्वशि कृति' इति इट्प्रतिषेधः । व्यत्ययेन प्रत्ययाद्युदात्तत्वम् । यद्वा । औणादिको मनिप्रत्ययो द्रष्टव्यः ।।

**सिद्धाञ्जनम्– अस्मा इदु** अस्मा एव **इन्द्राय अर्कम्** मन्त्रं स्तोत्रात्मकं **श्रवस्या** श्रवणेच्छया **जुह्वा** जिह्वया वाचा **समञ्जे** समक्तं म्रक्षितमिव करोमि, मन्त्रस्य वाग्योगात् दिव्यावेशश्रवणं सम्पद्यत इति आर्षं रहस्यम् । तत्र दृष्टान्तः– **सप्तिमिव** अश्वमिव । यथा रथयुक्तोऽश्वः अभीष्टस्थानं प्राप्नोति प्रापयति च तथा वाग्युक्तो मन्त्रः दिव्यं श्रवणं सम्पादयतीति बोध्यम् । तथा जिह्वया अर्कमक्तं कृत्वा च **वीरम्** विक्रान्तं शूरं **दानौकसम्** दानानां मुख्यनिलयं **गूर्तश्रवसम्** गूर्तं स्तुतं प्रशस्तं श्रवः श्रवणं वा यस्य तं, **पुराम् दर्माणम्** असुरपुराणां दारयितारं इन्द्रं **वन्दध्यै** वन्दितुं प्रवृत्तोऽस्मीति शेषः ।। **सप्तिमिव**– 'षष समवाये' समवैति रथेन युक्तो भवति, तिपृप्रत्ययः । **अञ्जे**– 'अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु' व्यत्ययेनात्मनेपदम् । **दर्माणम्**– 'दॄ विदारणे' अस्मान् मनिन् ।। ५ ।।

।। इति प्रथमाष्टके चतुर्थाध्याये सप्तविंशो वर्गः ।।

## ।। अथ अष्टाविंशो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

**अस्मा इदु त्वष्टा तक्षद्वज्रं स्वपस्तमं स्वर्यं१ रणाय ।**
**वृत्रस्य चिद्विदद्येन मर्म तुजन्नीशानस्तुजता कियेधाः ।। ६ ।।**
अस्मै । इत् । ऊँ इति । तक्षत् । वज्रम् । स्वपःऽतमम् । स्वर्यम् । रणाय ।
वृत्रस्य । चित् । विदत् । येन । मर्म । तुजन् । ईशानः । तुजता । कियेधाः ।। ६ ।।

**वेङ्कटमाधव– अस्मै** एव **त्वष्टा** अकरोद् वज्रम् अतिशयेन शोभनकर्मयुक्तमच्छतया शब्दकुशलं युद्धाय । **वृत्रस्य चिद् विदद् येन** वज्रेण द्युस्थानं हिंसन् ईश्वरः, हिंसित्रा वज्रेण कियतो बलस्य धारयितेति बलवन्तमाहेति ।। ६ ।।

**मुद्गल– त्वष्टा** विश्वकर्मा **अस्मै** इत् उ अस्मा एवेन्द्राय **वज्रम्** वर्जकमायुधम् **रणाय** युद्धार्थम् **तक्षत्** तीक्ष्णम् अकरोत् । कीदृशं वज्रम् । **स्वपस्तमम्** अतिशयेन शोभनकर्माणम्

**स्वर्यम्** सुष्ठु शत्रुषु प्रेर्यम् । **तुजन्** शत्रून् हिंसन् **ईशानः** ऐश्वर्यवान् **कियेधाः** बलवान् । एवंगुणविशिष्ट इन्द्रः **वृत्रस्य चित्** आवरकस्यासुरस्य **मर्म** मर्मस्थानम् **तुजता** हिंसता **येन** वज्रेण **विदत्** प्राहार्षीदित्यर्थः ।। ६ ।।

**सायण– त्वष्टा** विश्वकर्मा **अस्मा इदु** अस्मै एवेन्द्राय **वज्रं** वर्जकमायुधं **रणाय** युद्धार्थं **तक्षत्** तीक्ष्णम् अकरोत् । कीदृशं वज्रम् । **स्वपस्तमम्** अतिशयेन शोभनकर्माणं **स्वर्यं** सुष्ठु शत्रुषु प्रेर्यं यद्वा स्तुत्यम् । **तुजन्** शत्रून् हिंसन् **ईशानः** ऐश्वर्यवान् **कियेधाः** बलवान् । एवङ्गुणविशिष्ट इन्द्रः **वृत्रस्य चित्** आवरकस्यासुरस्य **मर्म** मर्मस्थानं **तुजता** हिंसता **येन** वज्रेण **विदत्** प्राहार्षीदित्यर्थः ।।

**स्वपस्तमम्** । शोभनम् अपः कर्म यस्यासौ । अतिशयेन स्वपाः स्वपस्तमः । तमपः पित्त्वादनुदात्तत्वम् । 'सोर्मनसी अलोमोषसी' इत्युत्तरपदाद्युदात्तत्वम् । **स्वर्यम्** । 'स्वर्यं ततक्ष' (ऋ.सं.१.३२.२) इत्यत्रोक्तम् । **विदत्** 'विद्लृ लाभे' । लृदित्त्वात् च्लेः अङादेशः । 'बहुलं छन्दस्यमाङ्योगेऽपि' इति अडभावः । यद्वृत्तयोगादनिघातः । **तुजन्** 'तुज हिंसायाम्' । शपि प्राप्ते व्यत्ययेन शः । अदुपदेशात् लसार्वधातुकानुदात्तत्वे विकरणस्वरः । **ईशानः** 'ईश ऐश्वर्ये' । शानचि अदादित्वात् शपो लुक् । अनुदात्तेत्त्वात् लसार्वधातुकानुदात्तत्वे धातुस्वरः । **तुजता** । 'शतुरनुमः' इति विभक्तेरुदात्तत्वम् । **कियेधाः** । अत्र निरुक्तं– 'कियेधाः कियद्धा इति वा क्रममाणधा इति वा' (निरु.६.२०) इति । अस्यायम् अभिप्रायः । कियत् किंपरिमाणमित्यस्य बलस्य तादृशं बलं दधाति धारयतीति कियद्धाः । यः कोऽप्यस्य बलस्येयत्तां न जानातीत्यर्थः । यद्वा क्रममाणमाक्रममाणं परेषां बलं धारयति निवारयतीति क्रममाणधाः । उभयत्रापि पृषोदरादित्वात् पूर्वपदस्य कियेभावः । दधातेर्विच् ।। ६ ।।

**सिद्धाञ्जनम्– अस्मा** इदु अस्मा इन्द्रायैव **त्वष्टा** तक्षको विश्वकर्मा **वज्रम्** आयुधं **रणाय** युद्धार्थं **तक्षत्** तीक्ष्णम् अकरोत् । कीदृशं वज्रम्? **स्वपस्तमम्** अतिशयेन शोभनकर्माणं **स्वर्यम्** सुष्ठु प्रेर्यं शत्रुषु इति सायणः, अथवा घोषयुक्तम् । **तुजन्** हिंसन् शत्रून्, **ईशानः** ईश्वरः **कियेधाः** बलवान् इन्द्रः **वृत्रस्य चित्** असुरस्य **मर्म** मर्मस्थानं **तुजता** हिंसता **येन** वज्रेण **विदत्** अलभत शत्रोः प्रहाराय, प्राहार्षीदित्यर्थः ।।

**स्वपस्तमः**–शोभनं अपः कर्म यस्यासौ स्वपाः अतिशयेन स्वपाः स्वपस्तमः । **विदत्**– 'विद्लृ लाभे' अडभावः । **तुजन्**–'तुज हिंसायां' शतृ । **कियेधाः**–कियद्बलं दधाति धारयतीति कियद्धाः, 'अस्य बलस्य इयत्तां न कोऽपि जानातीत्यर्थः' इति सायणः । सर्वथा पृषोदरादित्वाद् अभिमतरूपसिद्धिः ।। ६ ।।

## ऋक्संहिता पदपाठसहिता

**अस्येदु मातुः सवनेषु सद्यो महः पितुं पपिवाञ्चार्वन्ना ।**
**मुषायद्विष्णुः पचतं सहीयान्विध्यद्वराहं तिरो अद्रिमस्ता ।। ७ ।।**
**अस्य । इत् । ऊँ इति । मातुः । सवनेषु । सद्यः । महः । पितुम् । पपिऽवान् । चारु । अन्ना । मुषायत् । विष्णुः । पचतम् । सहीयान् । विध्यत् । वराहम् । तिरः । अद्रिम् । अस्ता ।। ७ ।।**

**वेङ्कटमाधव– अस्य** एवेन्द्रस्य जगतः निर्मातुः स्वभूतेषु **सवनेषु सद्यः** एव महत् पानीयं सोमम् **पपिवान्** । चारूणि च अन्नानि चरुपुरोडाशादीनि भक्षयित्वा मुषितवान् वराहरूपः **विष्णुः पचतम्** अन्नम् असुरपुराणां स्वभूतम् । बलवान् (वत्तरः) तम् **वराहम्** अविध्यदिन्द्रः **तिरः** वज्रम् क्षेप्ता । वराहो मेघो वराह एव वा । 'वराहोऽयं वाममोषः । सप्तानां गिरीणां परस्ताद् वित्तं वेद्यम् असुराणां बिभर्ति (तै.६,२,४,३) इति ब्राह्मणम् अध्वर्युभ्योऽवगन्तव्यमिति ।। ७ ।।

**मुद्गल–** इत् उ इति पादपूरणम् । **मातुः** वृष्टिद्वारेण सर्वस्य जगतो निर्मातुः **महः** महतः **अस्य** यज्ञस्य **सवनेषु** अवयवभूतेषु प्रातःसवनादिषु त्रिषु सवनेषु **पितुम्** सोमलक्षणमन्नम् **सद्यः पपिवान्** यदाऽग्नौ हूयते तदानीमेव पानं कृतवानित्यर्थः । तथा **चारु अन्ना** चारूणि शोभनानि धानाकरम्भादिहविर्लक्षणान्यन्नानि भक्षितवानिति शेषः । किञ्च **विष्णुः** सर्वस्य जगतो व्यापकः **पचतम्** परिपक्वम् असुराणां धनं यदस्ति तत् **मुषायत्** अपाहरत् । **सहीयान्** अतिशयेन शत्रूणाम् अभिभविता **अद्रिम् अस्ता** अद्रेर्वज्रस्य क्षेपकः । एवम्भूत इन्द्रः **तिरः** प्राप्तः सन् **वराहम्** मेघम् **विध्यत्** अताडयत् ।। ७ ।।

**सायण– इत्** उ इत्येतत् निपातद्वयं पादपूरणम् । यद्वा अवधारणार्थम् । **मातुः** वृष्टिद्वारेण सकलस्य जगतो निर्मातुः **महः** महतः **अस्य** यज्ञस्य **सवनेषु** अवयवभूतेषु प्रातःसवनादिषु त्रिषु

सवनेषु **पितुं** सोमलक्षणमन्नं **सद्यः पपिवान्** । यदाऽग्नौ हूयते तदानीमेव पानं कृतवानित्यर्थः । तथा **चार्वन्ना** चारूणि शोभनानि धानाकरम्भादिहविर्लक्षणान्यन्नानि भक्षितवानिति शेषः । किञ्च **विष्णुः** सर्वस्य जगतो व्यापकः **पचतं** परिपक्वम् असुराणां धनं यदस्ति तत् **मुषायत्** अपहरन् **सहीयान्** अतिशयेन शत्रूणाम् अभिभविता **अद्रिमस्ता** अद्रेर्वज्रस्य क्षेपकः । एवम्भूत इन्द्रः 'तिरः' सत इति प्राप्तस्य' (निरु.३.२०) इति यास्कः । तिरः प्राप्तः सन् **वराहं** मेघं **विध्यत्** अताडयत् । यद्वा विष्णुः सुत्यादिवसात्मकः यज्ञः । 'यज्ञो देवेभ्यो निलायत विष्णू रूपं कृत्वा' (तै.सं.६.२.४.२) इत्याम्नानात् । स विष्णुः **पचतं** परिपक्वम् असुरधनं यत्तत् **मुषायत्** अचूचुरत् । तदनन्तरं दीक्षोपसदात्मनां दुर्गरूपाणां सप्तानामह्नां परस्तादासीत् । अद्रिमस्ता सहीयानिन्द्रो दुर्गाण्यतीत्य तिरः प्राप्तः सन् वराहमुत्कृष्टदिवसरूपं तं यज्ञं विध्यत् । तथा च तैत्तिरीयकं– 'वराहोऽयं वाममोषः सप्तानां गिरीणां परस्ताद्वित्तं वेद्यमसुराणां बिभर्ति' इति, 'स दर्भपुञ्जीलमुद्वृह्य सप्त गिरीन्भित्त्वा तमहन्' (तै.सं.६.२.४.२-३) इति च ।।

**महः** महतः । अच्छब्दलोपश्छान्दसः । यद्वा 'महः' इत्येतत् पितुविशेषणम् । महः प्रशस्तं पितुमित्यर्थः । **पपिवान्** । पिबतेर्लिटः क्वसुः । 'वस्वेकाजाद्घसाम्' इति इडागमः । 'आतो लोप इटि च' इति आकारलोपः । प्रत्ययस्वरः । **चारु** । 'सुपां सुलुक्' इति विभक्तेर्लुक् । **मुषायत्** 'मुष स्तेये' । 'घञर्थे कविधानम्' इति भावे कप्रत्ययः । मुषमात्मन इच्छति । 'सुप आत्मनः क्यच्' । 'न च्छन्दस्यपुत्रस्य' इति ईत्ववत् दीर्घस्यापि प्रतिषेधे व्यत्ययेन दीर्घः । अस्मात् क्यजन्तात् लटः शतृ । आगमानुशासनस्यानित्यत्वात् नुमभावः । द्वितीयपक्षे तु क्यजन्तात् लङि 'बहुलं छन्दस्यमाङ्योगेऽपि' इति अडभावः । चित्त्वादन्तोदात्तत्वम् । **विध्यत्** 'व्यध ताडने' । लङि दिवादित्वात् श्यन् । तस्य ङित्त्वात् ग्रहिज्यादिना सम्प्रसारणम् । श्यनो नित्त्वादाद्युदात्तत्वम् । पादादित्वात् निघाताभावः । **वराहम्** । वरमुदकमाहारो यस्य । यद्वा वरमाहरतीति वराहारः सन् पृषोदरादित्वात् वराह इत्युच्यते । अत्र निरुक्तं– 'वराहो मेघो भवति वराहारः । वरमाहारमाहार्षीरिति च ब्राह्मणम्' (निरु.५.४) इति । यज्ञपक्षे तु वरं च तदहो वराहः । 'राजाहःसखिभ्यः' (पा.सू.५.४.९१) इति समासान्तः टच्प्रत्ययः । चित्त्वादन्तोदात्तत्वम् । **अस्ता** 'असु क्षेपणे' इत्यस्मात् साधुकारिणि 'तृन्' (पा.सू.३.२.१३५) । इडभावश्छान्दसः । 'न लोकाव्यय०' इति षष्ठीप्रतिषेधः ।। ७ ।।

**सिद्धाञ्जनम्**– इत् उ इति पादपूरणम् । **मातुः** निर्मातुः स्रष्टुः **महः** महतः **अस्य** यजनस्य **सवनेषु** अङ्गभूतेषु यजनकर्मसु **पितुम्** अन्नभूतं सोमं **पपिवान्** पीतवान् । तथा **चारु** शोभनानि **अन्ना** अन्नानि अद्यानि **सद्यः** स्वीकृतवान् । **विष्णुः** व्यापकः **पचतम्** परिपकं देवहस्त प्राप्तिक्षमं, किन्तु असुरवशंवदं ज्योतिर्बलैश्वर्यादिकं **मुषायत्** चोरयन् अपहृतवानित्यर्थः । **सहीयान्** अतिशयेन शत्रूणां साहयिता अभिभविता **अद्रिम् अस्ता** वज्रस्य क्षेपकः । एवम्भूत इन्द्रः **तिरः** प्राप्तः सन् **वराहम्** 'वरमुदकं आहारो यस्य' इति सायणः । तर्हि मेघं अपां आवरकं ज्योतिषां निरोधकं **विध्यत्** अताडयत् अभिनत् ।।

शब्दार्थो दत्तः । किं तात्पर्यम्? अस्यामृचि त्रीणि वाक्यखण्डानि भवन्ति । 'सवनेषु पितुं पपिवान्' इत्येकम्, 'विष्णुः पचतं मुषायत्' इत्यन्यत्, 'अस्ता वराहं विध्यत्' इति तृतीयम् । अत्र संशयः–कः पपिवान्? को मुषायत्? अद्रिमस्तेति लिङ्गदर्शनात् स इन्द्र एवेत्यसंशयम् । तैत्तिरीयश्रुत्युदाहरणपूर्वकं पक्षान्तरव्याख्यानं दत्तं सायणीये । तत्र विष्णुर्यज्ञः, स एवासुरधनं अपाहरत्, स एव वराहोऽभवत्, तत इन्द्रस्तं अविध्यत् इत्यादिकथामुदाहृत्य गभीरार्थस्य मन्त्रस्य स्थूलपक्षानुसारेणापि अर्थावबोधाय न कल्पते । सायणम् अनुसृत्यैव साधिष्ठं स्थूलार्थं ब्रूमः प्रथमं, अनन्तरं स्पष्टीकुर्मः । सर्वस्य जगतो निर्माता महान् यज्ञः, तस्याङ्गभूतानि यजनानि भवन्ति । तेषु सोमं पिबति अन्यानि हव्यानि च स्वीकरोति इन्द्रः । ततः सोमबलेन स सर्वव्यापी 'विष्णुः' भवन् परिपक्कमपि असुरवशङ्गतं धनं असुराणाम् अविदितमेवाहरति । एवम् अपहृते धने, शत्रोर्दौर्बल्ये सति शत्रुजित्वरः वज्रेण अस्त्रेण लक्ष्यं 'वराहं' मेघम् अविध्यत् विद्ध्वा जितवान् । अथ रहस्यमेवं भवति–यज्ञस्य निर्मातृत्वं नाम यजमाने सुप्तप्रायाणां गुप्तानां ऊर्ध्वलोकाधारकाणां चिद्भूमिकानां अन्नमयप्राणमयमनोमयवपुषां च पृथग्भावेन प्रकाशनं उत्पादनं अवस्थापनं इति बोध्यम् । अथ सोमपानमहिम्ना व्यापको भवन्निन्द्रः यजमाने यजमानशरीरेषु येंऽशाः देवाधीनता-प्राप्तिक्षमाः अत एव परिपका अपि देवविरोधिभूतासुरादिविभववशंवदा भवन्ति. तान् रहस्येवापहृत्य दिव्ये स्वीये पदे स्थापयति । तदानीमूर्ध्वं सर्वतेजोबलादिरोधकं लक्ष्यं भित्त्वा यजमाने चिन्मयज्योतिर्बलादिवृष्टिक्षेत्रभूते अभीष्टं सर्वं दिव्यममृतमादधाति ।।

**महः** इत्यादयो गताः । **मुषायत्**–'मुष स्तेये' घञर्थे कविधिर्भावे, मुषः, 'सुप आत्मनः क्यच्' तस्मात् शतृ, नुमभावः । **पचतम्**–पचतेः अतच्प्रत्ययः । **विध्यत्**–'व्यध ताडने' लङ् ।

**वराहम्**–वरं श्रेष्ठं अहः दिनं, उत्कृष्टो दिवसः इति कर्मधारयः, समासन्तः टच्प्रत्ययः । तद्वानपि मत्वर्थलक्षणया वराहशब्दवाच्यः । एवं अन्तर्यागार्थेऽस्य समन्वयः स्यात् । **अस्ता**–अस्यतेः क्षेपणार्थात् तृन्, इडभावश्छान्दसः ।। ७ ।।

## ऋक्संहिता पदपाठसहिता

**अस्मा इदु ग्नाश्चिद्देवपत्नीरिन्द्रायार्कमहिहत्य ऊवुः ।**
**परि द्यावापृथिवी जभ्र उर्वी नास्य ते महिमानं परि ष्टः ।। ८ ।।**

**अस्मै । इत् । ऊँ इति । ग्नाः । चित् । देवऽपत्नीः । इन्द्राय । अर्कम् । अहिऽहत्यै । ऊवुरित्यूवुः । परि । द्यावापृथिवी इति । जभ्रे । उर्वी इति । अस्य । ते इति । महिमानम् । परि । स्त इति स्तः ।। ८ ।।**

**वेङ्कटमाधव– अस्मै** एव स्त्रियः देवपत्न्यः **इन्द्राय** स्तोत्रम् अहिहननेऽरक्षन्, अस्तुवन्नित्यर्थः । सोऽयं तेजसा **द्यावापृथिवी** परिहरति । **नास्य ते** महत्वं परितो भवतः ।।

**मुद्गल– अस्मा इत्** उ अस्मै एव **इन्द्राय अहिहत्ये** अहेर्वृत्रस्य हनने निमित्तभूते सति **ग्नाश्चित्** गमनस्वभावा अपि स्थिताः **देवपत्नीः** देवानां पालयित्र्यः गायत्र्याद्याः देवताः **अर्कम्** अर्चनसाधनं स्तोत्रम् **ऊवुः** समतन्वत । चक्रुरित्यर्थः । स च इन्द्रः **उर्वी** विस्तृते **द्यावापृथिवी** द्यावापृथिव्यौ **परि जभ्रे** स्वतेजसा परिजहार । अतिचक्रामेत्यर्थः । **अस्य** इन्द्रस्य **महिमानं, ते** द्यावापृथिव्यौ **न परि स्तः** न परिभवतः ।। ८ ।।

**सायण– अस्मै** एव इन्द्राय **अहिहत्ये** अहेर्वृत्रस्य हनने निमित्तभूते सति **ग्नाश्चित्** गमनस्वभावा अपि स्थिताः **देवपत्नीः** देवानां पालयित्र्यः गायत्र्याद्याः देवताः **अर्कम्** अर्चनसाधनं स्तोत्रम् **ऊवुः** समतन्वत । चक्रुरित्यर्थः । स च इन्द्रः **उर्वी** विस्तृते **द्यावापृथिवी** द्यावापृथिव्यौ **परि जभ्रे** स्वतेजसा परिजहार । अतिचक्रामेत्यर्थः । **ते** द्यावापृथिव्यौ **अस्य** इन्द्रस्य **महिमानं न परि ष्टः** न परिभवतः ।।

**ऊवुः** 'वेञ् तन्तुसन्ताने' लिटि 'वेञो वयिः' (पा.सू.२.४.४१) । लिटः कित्त्वाद् यजादि त्वेन सम्प्रसारणे क्रियमाणे यकारस्य 'लिटि वयो यः' (पा.सू.६.१.३८) इति प्रतिषेधाद् वकारस्य सम्प्रसारणं परपूर्वत्वं द्विर्वचनादि । 'वश्चास्यान्यतरस्यां किति' (पा.सू.६.१.३९) इति यकारस्य

वकारादेशः । **जभ्रे** 'हृञ् हरणे' लिटि ञित्त्वात् कर्त्रभिप्राये आत्मनेपदम् । 'हृग्रहोर्भः' इति भत्वम् । **उर्वी** । उरुशब्दात् 'वोतो गुणवचनात्' इति ङीष् । 'वा छन्दसि' इति पूर्वसवर्णदीर्घत्वम् । **स्तः** । अस्तेर्लटि रूपम् । उपसर्गप्रादुर्भ्यामिति षत्वं सांहितिकम् ।।८।।

**सिद्धाञ्जनम्– अस्मा इदु** अस्मा एवेन्द्राय **अहिहत्ये** वृत्रवधे निमित्ते सति, **ग्नाश्चित्** स्त्रियः सत्योऽपि **देवपत्नीः** इन्द्राण्याद्याः देवतापुरुषकार्यनिर्वाहिण्यः शक्तयः **इन्द्राय** देवाय **अर्कम्** अर्चनार्थं स्तोत्रं **ऊवुः** समतन्वत । स चेन्द्रः **उर्वी** विस्तृते **द्यावापृथिवी** दिवं पृथिवीं च **परिजभ्रे** परिजहार स्वतेजसा । **अस्य** इन्द्रस्य **महिमानं** महत्त्वं **ते** द्यावापृथिव्यौ **न परि स्तः** नातिक्रामतः ।। ऊवुः-'वेञ् तन्तुसन्ताने' लिट् । जभ्रे-'हृञ् हरणे' लिट् हस्य भः ।।

## ऋक्संहिता पदपाठसहिता

**अस्येदेव प्र रिरिचे महित्वं दिवस्पृथिव्याः पर्यन्तरिक्षात् ।**
**स्वराळिन्द्रो दम आ विश्वगूर्तः स्वरिरमत्रो ववक्षे रणाय ।। ९ ।।**
**अस्य । इत् । एव । प्र । रिरिचे । महिऽत्वम् । दिवः । पृथिव्याः । परि । अन्तरिक्षात् । स्वऽराट् । इन्द्रः । दमे । आ । विश्वऽगूर्तः । सुऽअरिः । अमत्रः । ववक्षे । रणाय ।।**

**वेङ्कटमाधव– अस्य** एव महत्त्वं त्रिभ्योऽपि लोकेभ्यः प्रकर्षेण अतिरिक्तमासीत् । परिः पञ्चम्यर्थं स्फुटीकरोति । स्वयमेव राजा **इन्द्रः** गृहे च सर्वैराहूतः शोभनारिः **अमत्रः** महान् गच्छति युद्धार्थम् ।। ९ ।।

**मुद्गल– अस्य** इत् एव । **इत्** इति पदपूरणः । अस्यैवेन्द्रस्य । **महित्वम्** माहात्म्यम् । **प्र रिरिचे** अतिरिच्यते । अधिकं भवतीत्यर्थः । **दिवः** द्युलोकात् **पृथिव्याः** भूलोकात् **अन्तरिक्षात्** द्यावापृथिव्योर्मध्ये वर्तमानादन्तरिक्षलोकाच्च **परि** उपरि इत्यर्थः । त्रीन् लोकान् अतीत्य उपरि प्रिरिरिचे इत्यर्थः । **दमे** दमयितव्ये विषये **स्वराट्** स्वेनैव तेजसा राजमानः **विश्वगूर्तः** विश्वस्मिन् कार्ये उद्गूर्णः समर्थः **स्वरिः** शोभनशत्रुकः शोभने शत्रौ हन्तव्ये सति हन्ता वीर्यवत्तम इति गम्यते । **अमत्रः** युद्धादिषु गमनकुशलः । एवम्भूत **इन्द्रः रणाय** रणं युद्धम् **आ ववक्षे** आवहति मेघान् प्रापयति । मेघैः परस्परं युद्धं कारयित्वा वृष्टिं चकारेति भावः ।। ९ ।।

**सायण– अस्येदेव** । इत् इति पादपूरणः । अस्यैवेन्द्रस्य **महित्वं** माहात्म्यं **प्ररिरिचे** अतिरिच्यते । अधिकं भवतीत्यर्थः । अत्रोपसर्गो धात्वर्थस्य निवृत्तिमाचष्टे । यथा प्रस्थानमिति । कुतः सकाशात् प्ररिरिचे इत्यत आह– **दिवः** द्युलोकात् **पृथिव्याः** भूलोकात् **अन्तरिक्षात्** द्यावापृथिव्योर्मध्ये वर्तमानादन्तरिक्षलोकाच्च । **परि** उपर्यर्थः । त्रीन् लोकानतीत्योपरि प्ररिरिचे इत्यर्थः । **दमे** दमयितव्ये विषये **स्वराट्** स्वेनैव तेजसा राजमानः **विश्वगूर्तः** विश्वस्मिन् सर्वस्मिन् कार्ये उद्गूर्णः समर्थः । यद्वा विश्वं सर्वमायुधं गूर्तम् उद्यतं यस्य स तथोक्तः । **स्वरिः** शोभनशत्रुकः । शोभने शत्रौ हन्तव्ये सति हन्ता वीर्यवत्तम इति गम्यते । यथा 'अकवारिं दिव्यं शासमिन्द्रम्' (ऋ.सं.३.४७.५) इति । अकुत्सितारिमिति हि तस्यार्थः । **अमत्रः** युद्धादिषु गमनकुशलः । मात्रया इयत्तया रहितो वा । 'अमत्रोऽमात्रो महान्भवत्यभ्यमितो वा' (निरु.६.२३) इति यास्कः । एवम्भूतः **इन्द्रः रणाय** रणं युद्धम् **आ ववक्षे** आवहति मेघान् प्रापयति । मेघैः परस्परयुद्धं कारयित्वा वृष्टिं चकारेति भावः । यद्वा । युद्धाय स्वकीयान् भटान् गमयति ।

**अस्य** । 'ऊडिदम्' इति विभक्तेरुदात्तत्वम् । **रिरिचे**– 'रिचिर् विरेचने' । 'छन्दसि लुङ्लङ्लिटः' इति वर्तमाने कर्मणि लिट् । **पृथिव्याः** । 'उदात्तयणः०' इति विभक्तेरुदात्तत्वम् । **स्वराट्** 'राजृ दीप्तौ' इत्यस्मात्' सत्सूद्विष' इति क्विप् । व्रश्चादिना वत्त्वे जश्त्वम् । **दमे** 'दम उपशमे' इत्यस्मात् कर्मणि घञि 'नोदात्तोपदेशस्य मान्तस्यानाचमेः' (पा.सू.७.३.३४) इति वृद्धिप्रतिषेधः । घञो ञित्त्वादाद्युदात्तत्वम् । **विश्वगूर्तः** 'गॄ निगरणे' । अस्मात् निष्ठायां 'श्र्युकः किति' इति इट्प्रतिषेधः । 'बहुलं छन्दसि' इति उत्वम् । 'हलि च' इति दीर्घः । यद्वा । 'गूरी उद्यमे' । अस्मात् निष्ठा । 'नसत्तनिषत्त' इत्यादौ निपातनात् निष्ठानत्वाभावः । तत्पुरुषपक्षे मरुद्वृधादित्वात् पूर्वपदान्तोदात्तत्वम् । बहुव्रीहिपक्षे तु 'बहुव्रीहौ विश्वं संज्ञायाम्' इति असंज्ञायामपि पूर्वपदान्तोदात्तत्वम् । **अमत्रः** । 'अम गत्यादिषु' । 'अभिनक्षियजिबन्धि' इत्यादिना औणादिकः अत्रन्प्रत्ययः । नित्त्वादाद्युदात्तत्वम् । **ववक्षे** । वहेर्लेटि 'सिब्बहुलं लेटि' इति सिप् । 'बहुलं छन्दसि' इति शपः श्लुः । ढत्वकत्वषत्वानि । 'लोपस्त आत्मनेपदेषु' इति तलोपः । **रणाय** । 'क्रियाग्रहणं कर्तव्यम्' इति कर्मणः सम्प्रदानत्वाच्चतुर्थी । यद्वा । 'गत्यर्थकर्मणि' (पा.सू.२.३.१२) इति चतुर्थी ॥ ९ ॥

**सिद्धाञ्जनम्– अस्येदेव** 'इत्' पदपूरणः । अस्यैवेन्द्रस्य **महित्वम्** महत्त्वं **दिवः** द्युलोकात्

**पृथिव्याः** भूलोकात् **अन्तरिक्षात्** उभयोर्मध्यमाल्लोकात् । एवं त्रिलोक्याः **परि** अपरि **प्ररिरिचे** अतिरिक्तं भवति । त्रिलोकाधिक इन्द्रस्य महिमा । **दमे** स्वे गृहे **स्वराट्** स्वेन तेजसा राजमानः **विश्वगूर्तः** विश्वैः प्रशस्तः **स्वरिः** शोभनो गन्ता **अमत्रः** बलेन महान् **इन्द्रः रणाय** देवशत्रुभिः सह युद्धाय **आ ववक्षे** आवहति प्रापयति स्वकीयं बलमिति शेषः ।। **अमत्रः**–अम गत्यादिषु, अस्मादौणादिकः त्रन्प्रत्ययः । **ववक्षे**–वहेर्लोटि सिप्, शपः श्लुः । अन्यच्च छान्दसम् ।।

## ऋक्संहिता पदपाठसहिता

**अस्येदेव शवसा शुषन्तं वि वृश्चद्वज्रेण वृत्रमिन्द्रः ।**
**गा न व्राणा अवनीरमुञ्चदभि श्रवो दावने सचेताः ।। १० ।।**
**अस्य । इत् । एव । शवसा । शुषन्तम् । वि । वृश्चत् । वज्रेण । वृत्रम् । इन्द्रः ।**
**गाः । न । व्राणाः । अवनीः । अमुञ्चत् । अभि । श्रवः । दावने । सऽचेताः ।। १० ।।**

**वेङ्कटमाधव– अस्य** एव बलेन शुष्यन्तम् **वि वृश्चत्** वज्रेण वृत्रम् इन्द्रः । **गाः** इव संहता नदीर्वृत्रात् **अभि अमुञ्चत्** इमं लोकं प्रत्ययातयत् अन्नस्य दानाय मनुष्याणाम् । **सचेताः** समु(न्न)तिः ।। १० ।।

**मुद्गल– अस्य** इत् एव 'इत्' इति पदपूरणः । अस्यैवेन्द्रस्य **शवसा** बलेन **शुषन्तम्** शुष्यन्तं **वृत्रम् इन्द्रः वज्रेण वि वृश्चत्** व्यच्छिनत् । तथा **गाः न** चोरैरपहृता गा इव **व्राणा** वृत्रेणावृता **अवनीः** रक्षणहेतुभूता अपः **अमुञ्चत्** अवर्षीत् । तथा **दावने** हविर्दात्रे यजमानाय **सचेताः** तेन यजमानेन समानचित्तः सन् **श्रवः** कर्मफलभूतम् अन्नम् **अभि** आभिमुख्येन । ददातीति शेषः ।। १० ।।

**सायण–** अस्यैवेन्द्रस्य **शवसा** बलेन **शुषन्तम्** शुष्यन्तं **वृत्रम्** इन्द्रः **वज्रेण वि वृश्चत्** व्यच्छिनत् । तथा **गाः न** चोरैरपहृता गा इव **व्राणा** वृत्रेणावृता **अवनीः** रक्षणहेतु भूता अपः **अमुञ्चत्** अवर्षीत् । तथा **दावने** हविर्दात्रे यजमानाय **सचेताः** तेन यजमानेन समानचित्तः सन् **श्रवः** कर्मफलभूतम् अन्नम् **अभि** आभिमुख्येन । ददातीति शेषः ।।

**शुषन्तम्** 'शुष शोषणे' । श्यनि प्राप्ते व्यत्ययेन शः । अदुपदेशात् लसार्वधातुकानुदात्तत्वे विकरणस्वर एव शिष्यते । **व्राणाः** 'वृञ् वरणे' कर्मणि लटः शानचि 'बहुलं छन्दसि' इति

यको लुक् । शानचो ङित्त्वाद्गुणाभावे यणादेशः । **अवनीः** । अवतेः करणे 'अर्तिसृधृधमि०' (उ.सू.२.२५९) इत्यादिना अनिप्रत्ययः । प्रत्ययाद्युदात्तत्वम् । **दावने** । 'आतो मनिन्' इति वनिप् । चतुर्थ्येकवचने अल्लोपाभावश्छान्दसः ।। १० ।।

**सिद्धाञ्जनम्–** **इत्** पादपूरणः । **अस्यैव** इन्द्रस्य **शवसा** बलेन **शुषन्तम्** शुष्यन्तं **वृत्रम्, इन्द्रः वज्रेण** आयुधेन **विवृश्चत्** व्यवाच्छिनत् । तथा **गाः न** चोरैरपहृता गाः यथा अन्विष्य लब्ध्वा मुञ्चन्ति, तथा **व्राणाः** वृत्रेण आवृता निरुद्धा वा **अवनीः** अवनहेतुभूताः अपः तेजांसि वा **अमुञ्चत्** विसृष्टवानिन्द्रः । तथा **दावने** दात्रे यजमानाय **सचेताः** यजमानेन समानचित्तः सन् **श्रवः** श्रवणं, दिव्यावेशश्रुतिम्, **अभि** अभिमुखं यथा भवति तथा ददाति । यजमानस्य चेतसा स्वचेतः संयोज्य एकीकृत्य दिव्यश्रवणावेशं तस्मिन् दधाति भगवानिन्द्रः ।। **शुषन्तम्**– शुष्यन्तं, श्यनः व्यत्ययेन शः । **व्राणाः**–'वृञ् वरणे' कर्मणि लटः शानच्, छन्दसि यको लुक्, गुणाभावे यणादेशः । **अवनीः**–अवतेः करणे अनिप्रत्ययः । **दावने**–ददातेः 'आतो मनिन्' इति वनिप्, चतुर्थ्येकवचने अल्लोपाभावश्छान्दसः ।। १० ।।

**।। इति प्रथमाष्टके चतुर्थाध्याये अष्टाविंशो वर्गः ।।**

## ।। अथ एकोनत्रिंशो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

**अस्येदु त्वेषसा रन्त सिन्धवः परि यद्वज्रेण सीमयच्छत् ।**
**ईशानकृद्दाशुषे दशस्यन्तुर्वीतये गाधं तुर्वणिः कः ।। ११ ।।**
**अस्य । इत् । ऊँ इति । त्वेषसा । रन्त । सिन्धवः । परि । यत् । वज्रेण सीम् । अयच्छत् । ईशानऽकृत् । दाशुषे । दशस्यन् । तुर्वीतये । गाधम् । तुर्वणिः । करिति कः ।।**

**वेङ्कटमाधव–** **अस्य** एव दीप्तेन बलेन कूलयोरन्तं नद्यो न गच्छन्ति । यस्मादसौ **वज्रेण** नदीः सर्वतः **परि अयच्छत्** । ऐश्वर्यम् कुर्वन् यजमानाय वरं दातुमिच्छन् **तुर्वीतये** अगाध उदके स्थिताय ऋषये स्थलं कृतवान् शत्रूणां तारकः ।। ११ ।।

**मुद्गल–** **अस्य इत् उ** अस्यैवेन्द्रस्य **त्वेषसा** दीप्तेन बलेन **सिन्धवः** समुद्राः **रन्त** स्वे स्वे स्थाने रमन्ते । **यत्** यस्मात् अयमिन्द्रः **वज्रेण सीम्** एनान् सिन्धून् वज्रेण **परि अयच्छत्**

परितो नियमितवान् । अपि च **ईशानकृत्** वृत्रादिशत्रुवधेनात्मानम् ऐश्वर्यवन्तं कुर्वन् इन्द्रः **दाशुषे** हविर्दत्तवते यजमानाय फलं **दशस्यन्** प्रयच्छन् **तुर्वणिः** तूर्णसम्भजनः । एवम्भूत इन्द्रः **तुर्वीतये** एतत्सञ्ज्ञकाय उदके निमग्नाय ऋषये **गाधम्** अवस्थानयोग्यम् धिष्ण्यप्रदेशम् **कः** अकार्षीत् ।।

**सायण–** अस्यैवेन्द्रस्य **त्वेषसा** दीप्तेन बलेन **सिन्धवः** समुद्राः । यद्वा गङ्गाद्याः सप्त नद्यः । **रन्त** स्वे स्वे स्थाने रमन्ते । **यत्** यस्मात् अयमिन्द्रः **वज्रेण सीम्** एनान् सिन्धून् वज्रेण **परि अयच्छत्** परितो नियमितवान् । अपि च **ईशानकृत्** वृत्रादिशत्रुवधेनात्मानम् ऐश्वर्यवन्तं कुर्वन् इन्द्रः **दाशुषे** हविर्दत्तवते यजमानाय फलं **दशस्यन्** प्रयच्छन् **तुर्वणिः** तूर्णसम्भजनः । 'तुर्वणिस्तूर्णवनिः' (निरु.६.१४) इति यास्कः । यद्वा तुर्विता शत्रूणां हिंसिता । एवम्भूत इन्द्रः **तुर्वीतये** एतत्सञ्ज्ञाय उदके निमग्नाय ऋषये **गाधम्** अवस्थानयोग्यं धिष्ण्यप्रदेशं **कः** अकार्षीत् ।।

**रन्त** 'रमु क्रीडायाम्' छान्दसे लङि बहुवचने 'बहुलं छन्दसि' इति शपो लुक् । धातोरन्त्य लोपश्छान्दसः । **अयच्छत्** 'यम उपरमे' । 'इषुगमियमां छः' इति छत्वम् । **कः** । करोतेर्लुङि 'मन्त्रे घसह्वरणश०' (पा.सू.२.४.८०) इत्यादिना च्लेर्लुक् । गुणः । हल्ङ्यादिना तलोपः । 'बहुलं छन्दस्यमाङ्योगेऽपि' इति अडभावः ।। ११ ।।

**सिद्धाञ्जनम्– अस्येदु** अस्यैवेन्द्रस्य **त्वेषसा** ज्वलता बलेन **सिन्धवः** स्यन्दमाना आपः **रन्त** रमन्ते यथास्वम् । **यत्** यस्मात् **सीम्** एनान् सिन्धून् एता अपः **वज्रेण पर्ययच्छत्** परितो नियमितवानिन्द्रः । किञ्च **ईशानकृत्** अभीष्टं जनं ईशानं ऐश्वर्यवन्तं करोतीति ईशानकृत् । **दाशुषे** दत्तवते यजमानाय **दशस्यन्** अभीष्टं प्रयच्छन् **तुर्वणिः** तूर्णसम्भजनः जयशीलः **तुर्वीतये** जित्वरगमनाय क्षिप्रगतये वा यजमानाय, तन्निदर्शनभूत–तत्संज्ञकाय वा **गाधम्** अवस्थानयोग्यं धिष्ण्यं **कः** अकार्षीत् । पूर्वं तुर्वीतिसञ्ज्ञकाय अप्सु शक्तिवाहिनीषु निमग्नाय, करोत्येव सर्वदा तादृशाय जित्वरगमनाय यजमानाय ।। **रन्त**–'रमु क्रीडायाम्' शपो लुक्, धातोरन्त्यलोपश्छान्दसः । **अयच्छत्**–'यम उपरमे' । **कः**–करोतेः लुङ्, च्लेर्लुक् छन्दसि ।। ११ ।।

## ऋक्संहिता पदपाठसहिता

**अस्मा इदु प्र भरा तूतुजानो वृत्राय वज्रमीशानः कियेधाः ।**
**गोर्न पर्व वि रदा तिरश्चेष्यन्नर्णांस्यपां चरध्यै ।। १२ ।।**
**अस्मै । इत् । ऊँ इति । प्र । भर । तूतुजानः । वृत्राय । वज्रम् । ईशानः । कियेधाः ।**
**गोः । न । पर्व । वि । रद । तिरश्चा । इष्यन् । अर्णांसि । अपाम् । चरध्यै ।। १२ ।।**

**वेङ्कटमाधव– अस्मै इत्** उ **प्र भर** त्वरमाणः **वृत्राय वज्रम् ईशानः** कियतो बलस्य धारयिता । **गोः** इव पर्वाणि **वि रद** तिरश्चीनं वृत्रं प्रेरयन् उदकमार्गान् **अपाम्** चरणाय ।।

**मुद्गल– तूतुजानः** त्वरमाणः **ईशानः** ईश्वरः सर्वेषां **कियेधाः** कियतः अनवधृतपरिमाणस्य बलस्य धाता हे इन्द्र! एवम्भूतस्त्वम् **अस्मै वृत्राय वज्रम् प्र भर** । इमं वृत्रं वज्रेण प्रहरेत्यर्थः । प्रहृत्य च **अर्णांसि** वृष्टिजलानि **इष्यन्** तस्माद् वृत्राद् गमयस्त्वम् **अपाम् चरध्यै** तासाम् अपां चरणाय भूप्रदेशं प्रति गमनाय तस्य वृत्रस्य मेघरूपस्य **पर्व** पर्वाणि अवयवसन्धीन् **तिरश्चा** तिर्यगवस्थितेन वज्रेण **वि रद** विलिख । छिन्दीत्यर्थः । दृष्टान्तः । **गोः न** यथा मांसस्य विकर्तारो लौकिकाः पुरुषाः पशोरवयवानितस्ततो विभजन्ति तद्वत् । **इत् उ** इति पदपूरणौ ।। १२ ।।

**सायण– तूतुजानः** इति क्षिप्रनाम । **तूतुजानः** त्वरमाणः । यद्वा शत्रून् हिंसन् । **ईशानः** ईश्वरः सर्वेषां **कियेधाः** कियतोऽनवधृतपरिमाणस्य बलस्य धाता । यद्वा क्रममाणं शत्रुबलं दधात्यवस्थापयतीति कियेधाः । हे इन्द्र! एवम्भूतस्त्वम् **अस्मै वृत्राय वज्रम् प्र भर** । इमं वृत्रं वज्रेण प्रहरेत्यर्थः । प्रहृत्य च **अर्णांसि** वृष्टिजलानि **इष्यन्** तस्माद् वृत्राद् गमयस्त्वम् **अपाम् चरध्यै** तासाम् अपां चरणाय भूप्रदेशं प्रति गमनाय तस्य वृत्रस्य मेघरूपस्य **पर्व** पर्वाणि अवयवसन्धीन् **तिरश्चा** तिर्यगवस्थितेन वज्रेण **वि रद** विलिख । छिन्दीत्यर्थः । तत्र दृष्टान्तः । **गोः न** यथा मांसस्य विकर्तारो लौकिकाः पुरुषाः पशोरवयवानितस्ततो विभजन्ति तद्वत् । अत्र निरुक्तम्–'अस्मै प्रहर तूर्णं त्वरमाणो वृत्राय वज्रमीशानः कियेधाः कियद्धा इति वा क्रममाणधा इति वा गोरिव पर्वाणि विरद मेघस्येष्यन्नर्णांस्यपां चरणाय' (निरु.६.२०) इति ।।

**भर** 'हृग्रहोर्भः' इति भत्वम् । 'द्व्यचोऽतस्तिङः' इति सांहितिको दीर्घः । **तूतुजानः** । 'तुज हिंसायाम्' । कानचि 'तुजादीनां दीर्घोऽभ्यासस्य' इति अभ्यासस्य दीर्घत्वम् ।

'छन्दस्युभयथा' इति कानचः सार्वधातुकत्वे सति 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम् । **कियेधाः** । 'तुजता कियेधाः' (ऋ.सं.१.६१.६) इत्यत्रोक्तम् । **रद** 'रद विलेखने' । 'तिङ्ङतिङः' इति निघातः । **तिरश्चा** । तिरोऽश्चतीति तिर्यङ् । 'ऋत्विक्' इत्यादिना किन् । 'अनिदिताम्' इति नलोपः । तृतीयैकवचने भसंज्ञायाम् 'अचः' इति अकारलोपः । श्चुत्वेन सकारस्य शकारः । उदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वम् । **इष्यन्** 'इष गतौ' इत्यस्मात् अन्तर्भावितण्यर्थात् शतरि 'दिवादिभ्यः श्यन्' । तस्य नित्त्वादाद्युदात्तत्वम् । **चरध्यै** । 'तुमर्थे सेसेन्' इति चरतेः अध्यैप्रत्ययः ।। १२ ।।

**सिद्धाञ्जनम्–** हे इन्द्र! **तूतुजानः** त्वरमाणः **ईशानः** ईश्वरः **कियेधाः** कियतः अनवधृत प्रमाणस्य बलस्य धाता । एवम्भूतस्त्वं **अस्मा इदु वृत्राय वज्रम् प्रभर** इममेव वृत्रं वज्रेण प्रहर । अथ **अर्णांसि** निरुद्धान्युदकानि **इष्यन्** एषयन् वृत्रात् निर्गमय्य प्रेरयन् **अपाम् चरध्यै** चरणाय भुवं प्रति गमनाय **तिरश्चा** तिर्यगवस्थितेन वज्रेण **विरद** विलिख छिन्धि । वृत्रस्य पर्वाण्यवयवसन्धीनिति शेषः । तत्र दृष्टान्तः–**गोः न पर्व** यथा गोः पशोः पर्वाणि अवयवसन्धीन् लोके विशसन्ति तद्वत् ।। **भर**–हरतेः हस्य भः । **तूतुजानः**–तुजतिर्हिंसायां त्वरणे वा । **कियेधाः**–गतः । **तिरश्चा**–तिरोऽश्चतीति तिर्यक्, ऋत्विगित्यादिना किन् । **इष्यन्**–इष्यतेः अन्तर्भावितण्यर्थात् शतृ । **चरध्यै**–चरतेः तुमर्थे अध्यैप्रत्ययः ।। १२ ।।

## ऋक्संहिता पदपाठसहिता

**अस्येदु प्र ब्रूहि पूर्व्याणि तुरस्य कर्माणि नव्य उक्थैः ।**
**युधे यदिष्णान आयुधान्यृघायमाणो निरिणाति शत्रून् ।। १३ ।।**
अस्य । इत् । ऊँ इति । प्र । ब्रूहि । पूर्व्याणि । तुरस्य । कर्माणि । नव्यः । उक्थैः ।
युधे । यत् । इष्णानः । आयुधानि । ऋघायमाणः । निऽरिणाति । शत्रून् ।। १३ ।।

**वेङ्कटमाधव– अस्य** एव **प्र ब्रूहि** स्तोतः! प्रत्नानि क्षिप्रस्य **कर्माणि**, स्तुत्योऽयम् । **उक्थैः** । यदाऽयं युद्धाय **आयुधानि** प्रेरयन् **शत्रून्** हिंसन् युद्धाद् गमयति, तदा प्र ब्रूहीति ।। १३ ।।

**मुद्गल– उक्थैः** शस्त्रैः **नव्यः** स्तुत्यो य इन्द्रः **अस्य इत्** उ अस्यैव **तुरस्य** युद्धार्थं त्वरमाणस्य इन्द्रस्य **पूर्व्याणि** पुराणानि कर्माणि एतत्कृतानि बलकर्माणि हे स्तोतः! **प्र ब्रूहि**

प्रशंस । **यत्** यदा **युधे** योधनाय **आयुधानि** वज्रादीनि **इष्णानः** आभीक्ष्ण्येन प्रेरयन् **शत्रून्** **ऋघायमाणः** हिंसंश्चेन्द्रः **निरिणाति** अभिमुखं गच्छति । तदानीं प्र ब्रूहीति पूर्वेण सम्बन्धः ।।

**सायण– उक्थैः** शस्त्रैः **नव्यः** स्तुत्यो य इन्द्रः **अस्य इत्** उ अस्यैव **तुरस्य** युद्धार्थं त्वरमाणस्य इन्द्रस्य **पूर्व्याणि** पुराणानि कर्माणि एतत्कृतानि बलकर्माणि हे स्तोतः! **प्र ब्रूहि** प्रशंस । **यत्** यदा **युधे** योधनाय **आयुधानि** वज्रादीनि **इष्णानः** आभीक्ष्ण्येन प्रेरयन् **शत्रून्** **ऋघायमाणः** हिंसंश्चेन्द्रः **निरिणाति** अभिमुखं गच्छति । तदानीं प्र ब्रूहीति पूर्वेण सम्बन्धः।

**पूर्व्यम्** इति पुराणनाम । 'पूर्व्यम् अह्नाय' (नि.३.७.५) इति पुराणनामसु पाठात् ।। **तुरस्य** 'तुर त्वरणे' 'इगुपधलक्षणः कः । **नव्यः** 'णु स्तुतौ' । 'अचो यत्' इति यत् । गुणः । 'धातोस्तन्निमित्तस्यैव' इति अवादेशः । **इष्णानः** 'इष आभीक्ष्ण्ये' क्रैयादिकः । व्यत्ययेन आत्मनेपदम् । शानचः चित्त्वादन्तोदात्तत्वम् । **ऋघायमाणः**–'न हि त्वा रोदसि उभे ऋघाय माणम्' (ऋ.सं.१.१०.८) इत्यत्र व्युत्पादितम् । **निरिणाति** 'री गतिरेषणयोः', 'क्र्यादिभ्यः श्ना', 'प्वादीनां ह्रस्वः' इति ह्रस्वत्वम् । तिपः पित्त्वादनुदात्तत्वे विकरणस्वरः शिष्यते । 'तिङि चोदात्तवति' इति गतेर्निघातः । यद्वृत्तयोगात् 'तिङ्ङतिङः' इति निघाताभावः ।। १३ ।।

**सिद्धाञ्जनम्– उक्थैः** शस्त्रात्मकैः स्तोत्रैः **नव्यः** स्तुत्यः य इन्द्रः **अस्येदु** अस्यैव **तुरस्य** त्वरमाणस्य इन्द्रस्य **पूर्व्याणि कर्माणि** पुरातनानि शस्त्राणि अतिपुराणमन्त्रद्रष्टृभिः कृतानि स्तोत्राणीत्यर्थः । **प्र ब्रूहि** प्रकर्षेण शंस । **यत्** यदा **युधे** योधनाय **आयुधानि** वज्रादीनि **इष्णानः** प्रेरयन् **ऋघायमाणः** शत्रुवधं कुर्वन् (विवृतम् १.१०.८) इन्द्रः **शत्रून् निरिणाति** अभिमुखं गच्छति, तदा प्रब्रूहीति सम्बन्धः ।। **तुरस्य**–'तुर त्वरणे' । **नव्यः**–'णु स्तुतौ' यत्प्रत्ययः । **इष्णानः**–'इष आभीक्ष्ण्ये' क्रैयादिकः, व्यत्ययेनात्मनेपदम् ।। १३ ।।

## ऋक्संहिता पदपाठसहिता

**अस्येदु भिया गिरयश्च दृळ्हा द्यावा च भूमा जनुषस्तुजेते ।**
**उपो वेनस्य जोगुवान ओणिं सद्यो भुवद्वीर्याय नोधाः ।। १४ ।।**

अस्य । इत् । ऊँ इति । भिया । गिरयः । च । दृळ्हाः । द्यावा । च । भूम । जनुषः । तुजेते इति । उपो इति । वेनस्य । जोगुवानः । ओणिम् । सद्यः । भुवत् । वीर्याय । नोधाः ।। १४ ।।

**वेङ्कटमाधव– अस्य** एव भयेन पर्वताः **च** दृढाः स्वस्थाने तिष्ठन्ति । द्यावाभूमी च प्रादुर्भूतात् कम्पेते । कान्तस्येन्द्रस्य रक्षणम् उपोच्चारयन् **सद्यः** एव भवतु **वीर्याय नोधाः** ।।

**मुद्गल– अस्य इत् उ** अस्यैवेन्द्रस्य **भिया** पक्षच्छेदभयेन **गिरयश्च** पर्वता अपि **दृळ्हाः** निश्चलाः स्वस्वदेशे अवतिष्ठन्ते । **जनुषः** प्रादुर्भूतात् अस्मादेवेन्द्रात् भीत्या **द्यावा भूमा च** द्यावापृथिव्यावपि **तुजेते** कम्पेते इत्यर्थः । किञ्च **वेनस्य** कान्तस्य **ओणिम्** दुःखस्यापनायकं रक्षणम् **उपो जोगुवानः** अनेकैः सूक्तैः पुनःपुनः उपशब्दयन् । उपश्लोकयन्नित्यर्थः । एवम्भूतः **नोधाः** ऋषिः **सद्यः** तदानीमेव **वीर्याय भुवत्** वीर्यवान् भवेत् ।। १४ ।।

**सायण–** अस्यैवेन्द्रस्य **भिया** पक्षच्छेदभयेन **गिरयश्च** पर्वता अपि **दृळ्हाः** निश्चलाः स्वस्वदेशे अवतिष्ठन्ते । **जनुषः** प्रादुर्भूतात् अस्मादेवेन्द्रात् भीत्या **द्यावा भूमा च** द्यावा-पृथिव्यावपि **तुजेते** । तुजिर्हिंसार्थोऽप्यत्र कम्पने द्रष्टव्यः । कम्पेते इत्यर्थः । किञ्च **वेनस्य** कान्तस्यास्य **ओणिम्** दुःखस्यापनायकं रक्षणम् **उपो जोगुवानः** अनेकैः सूक्तैः पुनःपुनः उपशब्दयन् । उपश्लोकयन्नित्यर्थः । एवम्भूतः **नोधाः** ऋषिः **सद्यः** तदानीमेव **वीर्याय भुवत्** वीर्यवान् भवेत् ।।

**द्यावा च भूमा** । द्यावा भूमेत्यनयोर्मध्ये चशब्दस्य पाठश्छान्दसः । 'दिवो द्यावा' इति दिव्शब्दस्य द्यावादेशः । 'सुपां सुलुक्' इति विभक्तेर्डादेशः । 'देवताद्वन्द्वे च' इति उभयपदप्रकृति स्वरत्वम् । पदद्वयप्रसिद्धिरपि साम्प्रदायिकी । **जनुषः** 'जनी प्रादुर्भावे' 'जनेरुसिः' (उ.सू. २.२७२) इति औणादिकः उसिप्रत्ययः । **जोगुवानः** 'गुङ् अव्यक्ते शब्दे' अस्मात् यङ्लुगन्ताद् व्यत्ययेन शानच् । 'अदादिवच्च' इति वचनाच्छपो लुक् । उवङादेशः 'अभ्यस्तानामादिः' इत्या-द्युदात्तत्वम् । **ओणिम्** 'ओणृ अपनयने' अस्मात् औणादिकः इप्रत्ययः **भुवत्** । भवतेर्लेटि अडागमः । 'बहुलं छन्दसि' इति शपो लुक् । 'भूसुवोस्तिङि' इति गुणप्रतिषेधः **नोधाः** । 'नोधा ऋषिर्भवति नवनं दधाति' (निरु.४.१६) इति यास्कः । तस्मात् धात्रः असुन् नवशब्दस्य नोभावश्च ।। १४ ।।

**सिद्धाञ्जनम्– अस्येदु** अस्यैवेन्द्रस्य **भिया** भयेन **गिरयश्च** पर्वता अपि **दृळ्हाः** अचलाः स्तब्धाः निष्कम्पम् अवतिष्ठन्ते । **जनुषः** प्रादुर्भावात्, अस्येन्द्रस्येति शेषः । **द्यावा भूमा च**

द्यावापृथिव्यौ अपि **तुजेते** कम्पेते । किञ्च **वेनस्य** कान्तस्यास्य **ओणिम्** रक्षणं **उपो जोगुवानः** पुनःपुनरुपशब्दयन् अनवरतं स्तुवन् **नोधाः** एतत्सञ्ज्ञकः ऋषिः **सद्यः** सपदि **वीर्याय भुवत्** वीर्यवान् अभवत् ।।

**नोधाः** सूक्तद्रष्टा ऐतिहासिकः पुरुषः । कस्य तत्त्वस्य निदर्शनभूतः प्रतिष्ठा च भवत्यसौ? अस्योत्तरम् अवयवार्थाद् अवगम्यते । नोधाः– नवनं दधातीति यास्कः, मन्त्रात्मकस्तोत्रधारणात् वीर्यवत्त्वं यजमानस्य सम्पद्यते । तस्मात् स्तुतिधारणसम्पत्तेर्निदर्शनं नोधाः ।। **नोधाः**–नवशब्दस्य नोभावः, धाञः असुन् । द्यावा भूमेत्युभयोर्मध्ये चशब्दस्य पाठश्छान्दसः, दिव्शब्दस्य द्यावादेशः । **जनुषः**–'जनी प्रादुर्भावे' अस्मादौणादिकः उसिप्रत्ययः । **जोगुवानः**–'गुङ् अव्यक्ते शब्दे' अस्माद्यङ्लुगन्ताद् व्यत्ययेन शानच्, शपो लुक्, उवङादेशः । **भुवत्**–भवतेर्लेट्यडागमः ।।

## ऋक्संहिता पदपाठसहिता

**अस्मा इदु त्यदनु दाय्येषामेको यद्वव्ने भूरेरीशानः ।**
**प्रैतशं सूर्ये पस्पृधानं सौवश्व्ये सुष्विमावदिन्द्रः ।। १५ ।।**
**अस्मै । इत् । ऊँ इति । त्यत् । अनु । दायि । एषाम् । एकः । यत् । वव्ने । भूरेः । ईशानः । प्र । एतशम् । सूर्ये । पस्पृधानम् । सौवश्व्ये । सुस्विम् । आवत् । इन्द्रः ।।**

**वेङ्कटमाधव– अस्मै** एव तत् स्तोत्रम् **एषाम्** स्वभूतम् **अनु** अदायि । यस्माद् अयम् **एकः** एव धनं प्रयच्छति **भूरेः** ईश्वरः । **प्र आवत् एतशम्** नाम **सूर्ये** स्पर्धमानं स्वश्वपुत्रे अभिषोतारम् **इन्द्रः** ।। १५ ।।

**मुद्गल– एकः** एक एव शत्रून् जेतुं समर्थः **भूरेः** बहुविधस्य धनस्य **ईशानः** स्वामी **यत्** स्तोत्रं **वव्ने** ययाचे । **एषां** स्तोतृणां सम्बन्धि **त्यत्** तत् प्रसिद्धं स्तोत्रम् **अस्मै** इन्द्राय **अनु दायि** अकारीत्यर्थः । उत्तरार्धस्येयमाख्यायिका । स्वश्वो नाम कश्चित् राजा । स च पुत्रकामः सूर्यमुपासाञ्चक्रे । तस्य च सूर्य एव पुत्रो बभूव । तेन सह एतशनाम्नो महर्षेर्युद्धं जातमिति । तदेतदिहोच्यते । अयम् **इन्द्रः सौवश्व्ये** स्वश्वपुत्रे सूर्ये **पस्पृधानं** स्पर्धमानं **सुष्विं** सोमानाम् अभिषोतारम् **एतशम्** एतत्सञ्ज्ञकमृषिं **प्र आवत्** प्रारक्षत् । 'इत् उ' इति पदपूरणौ ।। १५ ।।

**सायण– एकः** एक एव शत्रून् जेतुं समर्थः **भूरेः** बहुविधस्य धनस्य **ईशानः** स्वामी **यत्** स्तोत्रं **वव्ने** ययाचे । **एषां** स्तोतॄणां सम्बन्धि । यद्वा । विभक्तिव्यत्ययः । एतैः **त्यत्** तत् प्रसिद्धं स्तोत्रम् **अस्मै** इन्द्राय **अनु दायि** अकारीत्यर्थः । उत्तरार्धस्येयमाख्यायिका । स्वश्वो नाम कश्चित् राजा । स च पुत्रकामः सूर्यमुपासाञ्चक्रे । तस्य च सूर्य एव पुत्रो बभूव । तेन सह एतशनाम्नो महर्षेर्युद्धं जातमिति । तदेतदिहोच्यते । अयम् **इन्द्रः सौवश्व्ये** स्वश्वपुत्रे सूर्ये **पस्पृधानं** स्पर्धमानं **सुष्विं** सोमानाम् अभिषोतारम् **एतशम्** एतत्सञ्ज्ञकमृषिं **प्र आवत्** प्रारक्षत् ॥

**दायि** । 'बहुलं छन्दस्यमाङ्योगेऽपि' इति अडभावः । **वव्ने** 'वनु याचने' लिटि व्यत्ययेन उपधालोपः । **पस्पृधानम्** 'स्पर्ध सङ्घर्षे' अस्मात् लिटः कानच् । द्विर्वचने 'शर्पूर्वाः खयः' इति पकारः शिष्यते । धात्वकारस्य लोपो रेफस्य सम्प्रसारणं च पृषोदरादित्वात् । चित्त्वाद न्तोदात्तत्वम् । **सौवश्व्ये** । स्वश्वः इति जनपदशब्दः क्षत्रिये सञ्ज्ञात्वेन वर्तते । 'वा नामधेयस्य वृद्धसञ्ज्ञा वक्तव्या' (पा.सू.१.१.७३.५) इति **वृद्धसञ्ज्ञायां 'वृद्धेत्कोसलाजादाञ्ञ्यङ्'** (पा.सू. ४.१.१७१) इति अपत्यार्थे ञ्यङ्प्रत्ययः । 'न य्वाभ्यां पदान्ताभ्याम्' (पा.सू.७.३.३) इति वृद्धेः प्रतिषेधः ऐजागमश्च । ञित्त्वादाद्युदात्तत्वम् । **सुष्विम्** 'षुञ् अभिषवे' । 'उत्सर्गश्छन्दसि' (पा.सू.३.२.१७१.२) इति अस्मात् किन्प्रत्ययः । लिड्वद्भावाद् द्विर्भावः । यणादेशः । उवङादेशाभावश्छान्दसः ॥ १५ ॥

**सिद्धाञ्जनम्– एकः** अद्वितीयः असमानप्रभावः **भूरेः** अनल्पस्य महतो वसुनः **ईशानः** ईश्वरः **यत्** स्तोत्रं सर्वसमर्पणरूपभक्तिलक्षणमिति वक्तव्यं, न चेद् भूरेः ईशानस्य याञ्चा नोपपद्यते । **वव्ने** ययाचे । **एषाम्** स्तोतॄणां सम्बन्धि **त्यत्** तत् स्तोत्रं **अस्मा इदु** अस्मै इन्द्रायैव **अनुदायि** अनुपूर्वकदानं विच्छेदरहितं निरन्तरभक्तिलक्षणं बोध्यं, एवं अदायि दत्तं, यद्याचितं तद् दत्तं, स्तोत्रं कृतमिति वा । उत्तरार्धस्य भावः कामप्याख्यायिकामाश्रित्याविष्कृतः सायणीये । स्वश्वो नाम राजा, तस्य सूर्य एव स्वयं पुत्रोऽजायत । तेन सह एतशो नाम ऋषिः स्पर्धां चक्रे । तदानीमेतशं इन्द्रो ररक्ष इति । अत्रोच्यते । स्वश्वः शोभनाश्वः क्षत्रिये सञ्ज्ञात्वेन वर्तते । प्रवृद्धप्राणबलाज्जातः सूर्यः सर्वप्रेरकः सत्यज्योतिर्मयः पुरुषः, यजमाने तस्याविर्भावे सति. प्राणबलात्मा अश्वः 'एतशः' तस्य सूर्यस्य सदृशं चेष्टितुं प्रयतते । एषैव चेष्टा स्पर्धा भवति । इन्द्रानुग्रहं विना न सम्भवति अभिमतसिद्धिरेतशस्य ॥ तदाह–**सौवश्व्ये** स्वश्वपुत्रे सूर्ये भगवति

**पस्पृधानम्** स्पर्धमानं तेन सममाचरितुं प्रयतमानं **सुष्विम्** सोमानामभिषोतारं, अश्वलक्षितेन प्राणबलेन हि साधनेन अभिषवः क्रियते । **एतशम्** अश्वं उक्तलक्षणं **प्र आवत्** अवर्धयत्, वर्धयति **इन्द्रः**, अवधातुर्वृद्धयर्थः, नेह रक्षार्थः ।। **वव्ने**–'वनु याचने' लिट् व्यत्ययेनोपधालोपः । **पस्पृधानम्**–'स्पर्ध सङ्घर्षे' अभ्यासाल्लिटः कानच् । अन्यत् सर्वं पृषोदरादि त्वात् सिद्धम् । **सुष्विम्**–'षुञ् अभिषवे' अस्मात् किनुप्रत्ययः । लिड्वद्भावाद् द्विर्भावः, अन्यत् सर्वं छान्दसम् ।।

**नीतिमञ्जरी–** द्विजो रक्ष्य इत्याह–

**इन्द्रः स्याद्वज्रहीनोऽपि द्विजरक्षां करोति यः ।**
**पुरेन्द्रः सूर्यसङ्ग्रामे ररक्ष ह्येतशं द्विजम् ।। २१ ।।**

यो भयात् **द्विजरक्षां** द्विजरक्षणं करोति स विना वज्रमपि इन्द्र एव ज्ञेयः । इन्द्रदृष्टान्तेन दृढयति । पुरा सूर्यसङ्ग्रामे सूर्यस्य भयाद् एतशं एतशनामानं द्विजं ब्राह्मणम् इन्द्र आगत्य ररक्ष । तस्माद्यो ब्राह्मणं रक्षति स इन्द्रः स्यात् । नोधास्त्रिष्टुभा इन्द्रं तुष्टाव । उत्तमे छन्दोमे निष्केवल्ये विनियुक्तम् । अष्टाचत्वारिंशदिति सूत्रितम् । 'आसत्यो यातु' (ऋ.४.१६) खण्डेतु० (ऋ.५.१६) अस्मादु इत्यद् (ऋ.१.६१६१) इति (सा.श्रौ.सू.१०.११.७) अथोत्तरार्द्धर्चस्येतिहासः । स्वश्वो नाम कश्चिद्राजा । स च पुत्रकामः सूर्यमुपासाञ्चक्रे । तस्य स सूर्यः पुत्ररूपी स्वयमेव तत्रोत्पन्नः सन् एतशन महर्षिणा सार्द्धं युद्धं चकार । तदानीं स ऋषिः युद्धे जयार्थमिन्द्रं तुष्टाव । स इन्द्रः तेन स्तूयमानः शश्वत् पुत्रस्य सूर्यसम्बन्धिनः सङ्ग्राम एनम् एतशम् अपालयदिति ।

अयमर्थः । यः **इन्द्रः एकः** एव सन् **भूरेः** बहुविधस्य धनस्य **ईशानः** स्वामी **एषां** स्तोतॄणां सम्बन्धि **यत्** स्तोत्रं **वव्ने** ययाचे । 'वनु याचने' । इत्येतत् प्रसिद्धं स्तोत्रम् **अस्मै** इन्द्राय अस्माभिः **अनुदायि** अकारीत्यर्थः । 'बहुलं छन्दस्यमाङ् (पा.६।४।७५) इति अडभावः । अयमिन्द्रः **सूर्ये पस्पृधानं** स्पर्धायमानं **सुष्विं** सोमानामभिषोतारम् । 'षुञ् अभिषवे' । 'किकिनावृत्सर्गश्छन्दसि सदादिभ्यो दर्शनात्' इति वार्तिकेन किन् (पा.३-२ १७१ वा.) । **एतशम्** ऋषिं **प्रावत्** प्रारक्षत् । कीदृशे सूर्ये **सौवश्व्ये** स्वश्वपुत्रे । सुष्विम् युग्मान्तस्था दन्तमूलीयपूर्वैरिति (ऋ.ग्रा.५.२०) दन्तमूलीयपूर्वत्वात्षत्वम् ।। १५ ।।

## ऋक्संहिता पदपाठसहिता

**एवा ते हारियोजना सुवृक्तीन्द्र ब्रह्माणि गोतमासो अक्रन् ।**
**ऐषु विश्वपेशसं धियं धाः प्रातर्मक्षू धियावसुर्जगम्यात् ।। १६ ।।**
**एव । ते । हारिऽयोजन । सुऽवृक्ति । इन्द्र । ब्रह्माणि । गोतमासः । अक्रन् ।**
**आ । एषु । विश्वऽपेशसम् । धियम् । धाः । प्रातः । मक्षु । धियाऽवसुः । जगम्यात् ।।**

**वेङ्कटमाधव–** एवम् **ते** हरी प्रापयितारौ यस्य तस्य सुप्रवृत्तानि इन्द्र! स्तोत्राणि गोतमाः **अक्रन्** । कृतेषु च एतेषु विश्वरीपाम् बुद्धिम् **आ धाः** । प्रायेण स्तुतिमात्रं सूक्तमिति ।।

**मुद्गल– हारियोजन!** हर्योः अश्वयोर्योजनं यस्मिन् रथे स तथोक्तः । तस्य स्वामित्वेन सम्बन्धी हारियोजनः । हे इन्द्र! **गोतमासः** गोतमगोत्रोत्पन्ना ऋषयः **सुवृक्ति** सुष्ठु आवर्जकान्यभिमुखीकरणकुशलानि **ब्रह्माणि** स्तुतिरूपाणि मन्त्रजातानि **ते** तवैव **अक्रन्** अकृषत । **एषु** स्तोतृषु **विश्वपेशसं** बहुविधरूपयुक्तं **धियं** धिया लभ्यत्वात् धीः धनमुच्यते । **आ धाः** धेहि स्थापय । **प्रातः** इदानीमिव परेद्युरपि प्रातःकाले **धियावसुः** बुद्ध्या प्राप्तधन इन्द्रः **मंक्षु** शीघ्रं **जगम्यात्** अस्मद्रक्षणार्थमागच्छतु ।। १६ ।।

**सायण–** हर्योः अश्वयोर्योजनं यस्मिन् रथे स तथोक्तः । तस्य स्वामित्वेन सम्बन्धी हारियोजनः । हे हारियोजन इन्द्र! **गोतमासः** गोतमगोत्रोत्पन्ना ऋषयः **सुवृक्ति** सुष्ठु आवर्जकान्यभिमुखीकरणकुशलानि **ब्रह्माणि** स्तुतिरूपाणि मन्त्रजातानि **ते** तवैव **अक्रन्** अकृषत । **एषु** स्तोतृषु **विश्वपेशसं** बहुविधरूपयुक्तं **धियं धाः** । धिया लभ्यत्वात् धीः धनमुच्यते । यद्वा । धीशब्दः कर्मवचनः । पश्वादिबहुविधरूपं धनम् अग्निष्टोमादिकं बहुविधरूपं कर्म वा **आ धाः** धेहि स्थापय । **प्रातः** इदानीमिव परेद्युरपि प्रातःकाले **धियावसुः** बुद्ध्या कर्मणा वा प्राप्तधन इन्द्रः **मंक्षु** शीघ्रं **जगम्यात्** अस्मद्रक्षणार्थमागच्छतु ।।

**एवा** । 'निपातस्य च' इति संहितायां दीर्घः । **सुवृक्ति** । 'सुपां सुलुक्' इति शसो लुक् । **अक्रन्** । करोतेर्लुङि 'मन्त्रे घसह्वर' इत्यादिना च्लेर्लुक् । अन्तादेशः । तस्य ङित्त्वाद् गुणाभावे यणादेशः । 'इतश्च' इति इकारलोपे संयोगान्तलोपे च अडागमः । **धाः** । 'छन्दसि लुङ्लङ्लिटः' इति लोडर्थे लुङि 'गातिस्था' इति सिचो लुक् । 'बहुलं छन्दस्यमाङ्योगेऽपि' इति अडभावः ।।

**वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।**
**पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ।।**

**।। इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरेण सायणामात्येन विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये प्रथमाष्टके चतुर्थोऽध्यायः समाप्तः ।। १६ ।।**

**सिद्धाञ्जनम्–** हे **हारियोजन!** हर्योः अश्वयोः योजनं स्वामित्वेन सम्बन्धो यस्यासौ हारियोजनः । तस्य सम्बोधनम्, हे **इन्द्र! गोतमासः** गोतमाः ऋषयः **सुवृक्ति** सुष्ठु आवर्जकानि **ब्रह्माणि** मन्त्रजातानि **ते एव** तवैव **अक्रन्** अकृषत । **एषु** गोतमेषु **विश्वपेशसम्** विश्वानि सर्वाणि पेशांसि रूपाणि तल्लक्षितानि सौन्दर्याणि वा गोचराणि यस्याः तां **धियं** बुद्धिं **आ धाः** धेहि, धारय अस्मदर्थं, देहि वा नः । शिष्टं व्याख्यातम् ।। **एवा**–संहितायां दीर्घः । **अक्रन्**–करोतेर्लुङ्, छान्दसम् अन्यत् । **धाः**–दधातेर्लुङ् सर्वम् अन्यत् छान्दसम् ।। १६ ।।

**।। इति प्रथमस्य चतुर्थ एकोनत्रिंशो वर्गः ।।**

**।। प्रथमाष्टके चतुर्थोऽध्यायः समाप्तः ।।**

# ।। अथ पञ्चमोऽध्यायः ।।

## ।। अथ प्रथमो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

(सूक्तम् ६२)

१३ नोधा गौतमः । इन्द्रः । त्रिष्टुप् ।

**प्र मन्महे शवसानायं शूषमांङ्गूषं गिर्वणसे अङ्गिरस्वत् ।**
**सुवृक्तिभिः स्तुवत ऋग्मियायार्चामार्कं नरे विश्रुताय ।। १ ।।**
**प्र । मन्महे । शवसानाय । शूषम् । आङ्गूषम् । गिर्वणसे । अङ्गिरस्वत् । सुवृक्तिऽभिः । स्तुवते । ऋग्मियाय । अर्चाम । अर्कम् । नरे । विऽश्रुताय ।। १ ।।**

### श्रीस्कन्दस्वामिविरचितं ऋग्भाष्यम्

'द्वे इन्द्रदेवत्ये' । प्र मन्महे इति यद्यपि याच्ञाकर्मा पठितः, तथापीह याच्ञाया असम्भवात् मन्यतेरर्चतिकर्मण इदं रूपम् । प्रकर्षेण स्तुम इत्यर्थः । किम् । उच्यते । **शवसानाय शूषम्** शवसानायेति शवतेर्गतिकर्मण अयम् असानच्प्रत्ययः । 'छन्दस्यसानच् शुजृभ्याम्' (पा. उणादि.२५२, २,८६) इति षष्ठ्यर्थे चतुर्थी । शत्रून् प्रति गन्तुरिन्द्रस्य स्वभूतसेनालक्षणं बलम् । अथवा 'शव' (निघ.२,९) इति बलनाम । सामर्थ्याच्चेहान्तर्णीतमत्वर्थः । बलवानिवाचरति शवस्यते । ताच्छील्ये चानश् । छान्दसत्वाच्चार्धधातुकः । शवसानस्य शूषम् । बलवता यदाचरणं तच्छीलस्येन्द्रस्य स्वभूतं बलमित्यर्थः । केन । **आङ्गूषम्** तृतीयार्थे द्वितीयैषा । आङ्गूषेण . स्तोमेन । कीदृशस्येन्द्रस्य । उच्यते । **'गिर्वणसे'** इयमपि षष्ठ्यर्थे एव चतुर्थी । स्तुतिभिर्वननीयस्य । कथम् । **अङ्गिरस्वत्** अङ्गिरस इव, ऋषये । न केवलं शूषम् किं तर्हि, स्वयमपि **सुवृक्तिभिः स्तुवते** । कर्मण्ययं व्यत्ययेन शतृप्रत्ययः । सर्वत्र द्वितीयार्थे चतुर्थी । दोषैर्वर्जिताभिः स्तुतिभिरन्यैरपि स्तोतृभिः स्तूयमानम् । **ऋग्मियाय** ऋग्मियं स्तुत्यर्हं स्तुतिमन्तं वा । **अर्चाम** स्तुमः । **अर्कम्** देवं **नरं** मनुष्याकारम् । विश्रुत विख्यात सर्वत्र । अथवा स्तुवते इत्याद्यास्तादर्थ्ये स्वार्थे एव चतुर्थ्यः । अर्चतिस्तु सामर्थ्यादुच्चारणार्थः । 'पितुर्मदर्चता वचः' (ऋ.सं.१.१०१.१) इति यथा । अर्कशब्दोऽपि मन्त्रवचनः । स्तूयमानत्वादिगुणस्येन्द्रस्वार्थाय उच्चारयामः स्तुतिलक्षणं मन्त्रमित्यर्थः ।। १ ।।

## वेङ्कटमाधवाचार्यविरचितं ऋग्भाष्यम्

**अथ 'प्र मन्महे' अध्यायं माधवो व्याचिकीर्षति ।**
अवग्रहविहीनानामादावर्थं प्रदर्शयन् ।। १ ।।

पदकारः पदानीहः नावगृह्णाति कानिचित् ।
तेषामपि स्वरेणैव कुर्यादर्थविनिर्णयम् ।। २ ।।

निर्विवक्षेद् बहुव्रीहेरर्थमादौ स्वरो यदि ।
अथ तत्पुरुषस्यार्थमन्ते तिष्ठति चेत् स्वरः ।। ३ ।।

जुष्टो दमूना अतिथिर्दुरोणऽस्य दमे मनः ।
इषा यात शवीरयाशु यस्या प्रेरणा तया ।। ४ ।।

'भराम्याङ्गूपमास्यैन स्वरात् तत्पुरुषो भवेत् ।
पर्याप्तो घोष माङ्गूपो घस्थाने गश्च दृश्यते ।। ५ ।।

यशस्य घोषदसि इति यजुः केचिदधीयते ।
कठाः गोषदसि इत्येवं गकारादिमधीयते ।। ६ ।।

विशेषेण एनायन्तः 'तद्विप्रासो विपन्यवः' ।
करूळती कृत्तदन्तो 'वामं देवः करूळती' । ७ ।।

बहुव्रीहेः स्वरं पश्यन्नर्थं तत्पुरुषस्य च ।
अर्थे स्पष्टे स्वरं जह्याद् 'वरुणं वो रिशादसम्' ।। ८ ।।

नोधाः । प्र ब्रूमः । बलाचरणशीलाय बलकरणं स्तोमं गीर्भिर्वननीयाय अङ्गिरोवत् । स्तोत्रैः स्तुवते पुरुषाय, य ऋगर्हः स्तुत्यो भवति तस्मै, ब्रूमः स्तोत्रं नृषु प्रसिद्धाय ।। १ ।।

## मुद्गलाचार्यविरचितभाष्यम्

प्रथमे मण्डले एकादशेऽनुवाके चत्वारि सूक्तानि गतानि । 'प्र मन्महे' इति त्रयोदशर्चं पञ्चमं सूक्तम् । नोधा ऋषिः । त्रिष्टुप् छन्दः । इन्द्रो देवता ।। **शवसानाय** 'शवः' (निघ.१,९)

इति बलनाम । तदिवाचरते । यथा बलं शत्रून् हन्ति तथा शत्रूणां हन्तेत्यर्थः । **गिर्वणसे** गीर्भिः स्तुतिलक्षणैर्वचोभिः सम्भजनीयाय । 'गिर्वणा देवो भवति, गीर्भिरेनं वनयन्ति' इति यास्कः (६,१४) । एवम्भूतायेन्द्राय **शूषं** सुखहेतुभूतम् । **आङ्गूषम्** स्तोत्रम् **अङ्गिरस्वत्** अङ्गिरस इव **प्र मन्महे** वयं स्तोतारः प्रकर्षेणावगच्छामः । अवगत्य च **सुवृक्तिभिः** सुष्ठु आवर्जकैः स्तुत्याभिमुखीकरणसमर्थैः स्तोत्रैः **स्तुवते** स्तोत्रं कुर्वते ऋषये **ऋग्मियाय** य इन्द्र ऋग्मियोऽर्चनीयो भवति तस्मै, **नरे** सर्वेषां नेत्रे, **विश्रुताय** यष्टव्यतया विशेषेण प्रख्याताय । एवम्भूताय तस्मै **अर्कम्** मन्त्ररूपं स्तोत्रम् **अर्चाम** पूजयाम । उच्चारयामेत्यर्थः ।। १ ।।

## श्रीमत्सायणाचार्यविरचितं ऋग्भाष्यम्

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ।।

अथ पञ्चमाध्याय आरभ्यते । प्रथमे मण्डले एकादशेऽनुवाके चत्वारि सूक्तानि गतानि । 'प्र मन्महे' इत्येतत् त्रयोदशर्चं पञ्चमं सूक्तम् । अत्रानुक्रम्यते 'प्र सप्तोनेति । अनिरुक्ता सङ्ख्या विंशतिः' (अनु.१२.४) इत्युक्तत्वात्, प्र सप्तोनेत्युक्ते त्रयोदशेत्युक्तं भवति । 'ऋषिश्चान्यस्मात्' इति परिभाषया नोधा ऋषिः । अनादेशपरिभाषया त्रिष्टुप् छन्दः । इन्द्रो देवता । गतः सामान्यविनियोगः । विशेषविनियोगस्तु लिङ्गादवगन्तव्यः ।।

**शवसानाय** । शव इति बलनाम । तदिवाचरते । यथा बलं शत्रुन् हन्ति तथा शत्रूणां हन्तेत्यर्थः । **गिर्वणसे** गीर्भिः स्तुतिलक्षणैर्वचोभिः सम्भजनीयाय । 'गिर्वणा देवो भवति गीर्भिरेनं वनयन्ति' (निरु.६.१४) इति यास्कः । एवम्भूतायेन्द्राय । **शूषम्** इति सुखनाम । **शूषं** सुखहेतुभूतम् । 'आङ्गूषः स्तोम आघोषः' (निरु.५.११) इति यास्कः । **आङ्गूषं** स्तोत्रम् । **अङ्गिरस्वत्** अङ्गिरस इव **प्र मन्महे** वयं स्तोतारः प्रकर्षेणावगच्छामः । अवगत्य च **सुवृक्तिभिः** सुष्ठु आवर्जकैः स्तुत्याऽभिमुखीकरणसमर्थैः स्तोत्रैः **स्तुवते** स्तोत्रं कुर्वते ऋषये, य इन्द्र ऋग्मियोऽर्चनीयो भवति । यद्वा कर्मणि कर्तृप्रत्ययः । ऋषिणा स्तूयमानायेत्यर्थः । **नरे** सर्वेषां नेत्रे । यद्वा । **नरे** यजमाने । **विश्रुताय** यष्टव्यतया विशेषेण प्रख्याताय । एवम्भूताय तस्मै **अर्कं** मन्त्ररूपं स्तोत्रम् । 'अर्को मन्त्रो भवति यदनेनार्चन्ति' (निरु.५.४) इति यास्कः । **अर्चाम** पूजयाम । उच्चारयामेत्यर्थः ।।

**मन्महे** । 'मनु अवबोधने' । तनादित्वात् उप्रत्ययः । 'लोपश्चास्यान्यतरस्यां म्वोः' (पा.सू. ६.४.१०७) इति मकारादौ प्रत्यये उकारलोपः । **शवसानाय** । शव इवाचरति शवस्यते । अस्माल्लटः शानच् । 'बहुलं छन्दसि' इति शपो लुक् । शानचः 'छन्दस्युभयथा' इति आर्ध-धातुकत्वात् अतोलोपयलोपौ । 'चितः' इत्यन्तोदात्तत्वम् । ननु क्यङो ङित्त्वात् 'तास्यनुदात्तेत्' इति शानचोऽनुदात्तेत् भवितव्यम् । एवं तर्हि ताच्छीलिकः चानश् । तस्य सार्वधातुकत्वेऽपि लः सार्वधातुकत्वाभावात् चितः स्वर एव शिष्यते । **शूषम्** । 'शूष प्रसवे' पचाद्यच् । **आङ्गूषम्** । आङ्पूर्वात् घुषेः पचाद्यचि घो इत्यस्य गूआदेशः पृषोदरादित्वात् । आङो ङकारस्य इत्संज्ञा-भावश्छान्दसः । चित्स्वरेणोत्तरपदस्यान्तोदात्तत्वे कृदुत्तरपदप्रकृतिस्वरत्वम् । घञि वा थाथादिना उत्तरपदान्तोदात्तत्वम् । **गिर्वणसे** । 'गॄ शब्दे' । संपदादिलक्षणो भावे क्विप् । 'ॠत इद्धातोः' इति इत्वम् । गीर्भिर्वन्यते सम्भज्यते इति गिर्वणाः । औणादिकः कर्मणि असुन् । सञ्ज्ञापूर्वकस्य विधेरनित्यत्वात् 'हलि च' इति दीर्घाभावः। 'गतिकारकयोरपि पूर्वपदप्रकृतिस्वरत्वं च' इति वचनात् पूर्वपदप्रकृतिस्वरत्वम् । **अङ्गिरस्वत्** । 'तेन तुल्यम्' इति वतिः । 'नमोऽङ्गिरोमनुषां वत्युपसङ्ख्यानम्' (पा.सू.१.४.१४.३) इति भसंज्ञायां रुत्वाद्यभावः । प्रत्ययस्वरः । **सुवृक्तिभिः** । 'वृजी वर्जने' भावे क्तिन् । 'तितुत्र' इति इट्प्रतिषेधः । शोभनमावर्जनं येषाम् । 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् ।

ननु क्तिन्नन्तस्योत्तरपदस्याद्युदात्तत्वात् 'आद्युदात्तं द्व्यच्छन्दसि' इति वचनादुत्तरपदाद्युदात्तत्वं प्राप्नोति । एवं तर्हि तत्पुरुषोऽस्तु । शोभनमावर्जितो भवत्येभिरिति सुवृक्तयः स्तोत्राणि । करणे क्तिन् । 'तादौ च निति' इति गतेः प्रकृतिस्वरत्वे प्राप्ते 'मन्क्तिन्' इत्यादिना कारकादुत्तरस्य क्तिनो विहितमुत्तरपदान्तोदात्तत्वमकारकादपि व्यत्ययेन भवति । **स्तुवते** । 'शतुरनुमः' इति विभक्तेरुदात्तत्वम् । **ऋग्मियाय** । 'एकाचो नित्यं मयटमिच्छन्ति' (का.४.३.१४४) इति ऋक्-शब्दात् विकारार्थे मयट् । 'स्वादिष्वसर्वनामस्थाने' (पा.सू.१.४.१७) इति पदसंज्ञायां कुत्व-जश्त्वे । व्यत्ययेन इत्वम् । यद्वा 'ऋच स्तुतौ' इत्यस्माद् भावे मक् । बहुलवचनात् कुत्वं जश्त्वं च । ऋग्मं स्तुतिमर्हतीति ऋग्मियः । अर्हार्थे घच् । 'चितः' इत्यन्तोदात्तत्वम् । **अर्चाम** 'अर्च पूजायाम्'। भौवादिकः । शपः पित्त्वादनुदात्तत्वम् । तिङश्च लसार्वधातुकस्वरेण धातुस्वरः शिष्यते । **अर्कम्** । अर्च्यतेऽनेनेत्यर्कः । 'पुंसि संज्ञायां घः प्रायेण' इति घप्रत्ययः । 'चजोः

कु घिण्यतोः' इति कुत्वम् । **नरे** । नृशब्दात् चतुर्थ्येकवचने गुणश्छान्दसः । **विश्रुताय** । 'श्रु श्रवणे' । कर्मणि निष्ठा । 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् ।। १ ।।

## कपालिशास्त्रिविरचितं ऋक्संहिताव्याख्यानं सिद्धाञ्जनम्

अथ पञ्चमोऽध्यायः प्रारभ्यते। प्रथमे मण्डले एकादशानुवाके चत्वारि सूक्तानि गतानि । 'प्र मन्महे ' इति त्रयोदशर्चं पञ्चमं सूक्तं नोधस आर्षम् त्रैष्टुभम् ऐन्द्रम् च ।। तत्र प्रथमामृचमाह । **शवसानाय** शवस्यमानाय बलमिवाचरते, असुरवधादौ कार्ये सति स्वयमेव बलभूतायेत्यर्थः । **गिर्वणसे** गीर्भिः स्तुतिभिर्वननीयाय सम्भजनीयाय इन्द्राय । **शूषम्** सुखं सुखहेतुभूतम्, **आङ्गूषम्** स्तोमात्मकं आघोषं **अङ्गिरस्वत्** अङ्गिरस इव वयं **प्र** प्रकर्षेण **मन्महे** अवगच्छामः, ध्यायाम इत्यर्थः । तथा ध्यात्वा **सुवृक्तिभिः** सुष्ठु आवर्जकैः अभिमुखीकरणसमर्थैः स्तोत्रैः **स्तुवते** स्तुतिं कुर्वते यजमानाय ऋषये **ऋग्मियाय** अर्चना ऋक् ऋचं मिमीत इति ऋग्मीः, तस्मै, अथवा स्तोतारं मन्त्रद्रष्टारं अनुग्रहीतुं स्वयं ऋग्भूताय, ऋगात्मने **नरे** नेत्रे, बलिष्ठाय **विश्रुताय** विख्याताय इन्द्राय **अर्कम्** मन्त्रात्मकं उज्ज्वलं स्तोत्रं **अर्चाम** पूजयाम उच्चारयामेत्यर्थः ।। **मन्महे**-'मनु अवबोधने' तनादिः। **शवसानाय**-शव इवाचरति शवस्यते, अस्माल्लटः शानच् अल्लोपो यलोपश्च छान्दसौ । **ऋग्मियाय**– बहुधा निर्वचनम् (१.६.६, १.५१.१) ।। १ ।।

## ऋक्संहिता पदपाठसहिता

**प्र वो॑ म॒हे महि॒ नमो॑ भरध्वमाङ्गू॒ष्यं॑ शवसा॒नाय॒ साम॑ ।**
**येना॑ नः॒ पूर्वे॑ पि॒तरः॑ पद॒ज्ञा अर्च॑न्तो॒ अङ्गि॑रसो॒ गा अवि॑न्दन् ।। २ ।।**
प्र । व॒ः । म॒हे । महि॑ । नम॑ः । भ॒रध्व॒म् । आ॒ङ्गू॒ष्य॑म् । श॒व॒सा॒नाय॑ । साम॑ ।
येन॑ । न॒ः पूर्वे॑ । पि॒तर॑ः । प॒द॒ऽज्ञाः । अर्च॑न्तः । अङ्गि॑रसः । गाः । अवि॑न्दन् ।।२।।

**स्कन्द– वः** इति प्रथमार्थे द्वितीया । पुत्रस्य पौत्रस्य चायं प्रतिनिर्देशः । ऋत्विजां वा । हे मदीयाः पुत्राः पौत्राः च, ऋत्विजो वा । हे मदीयाः पुत्राः ! च ऋत्विजो वा, यूयम् **महि नमः** सोमलक्षणम् अन्नम् **महे** महते इन्द्राय **प्र भरध्वम्** प्रापयत । दत्तेत्यर्थः । **आङ्गूष्यम्** स्तोमार्हम्,, शवसानाय । न च केवलं नमः । किं तर्हि । **साम** वचो मन्त्रलक्षणम् । कीदृशम् । उच्यते । **येना, नः** अस्माकम्. **पूर्वे पितरः पदज्ञाः**, पदम् अत्र कृत्स्नस्य जगत आश्रयत्वात्

कारणात्मा उच्यते । तज्ज्ञाः, **अर्चन्तः** इन्द्रं स्तुवन्तः, **अङ्गिरसः** ऋषयः पणिभिरपहृतास्सतीः, **गाः**, **अविन्दन्** प्रतिलब्धवन्तः ।। २ ।।

**वेङ्कटमाधव– प्र भरध्वम्** यूयम् । महत् **नमः** महते इन्द्राय आङ्गूषार्हम् आशंसनीयम् शवसानाय साम । येन इन्द्रेण अस्माकं पितरः आङ्गिरसः पणिभिरपहृतानां गवाम् आवास-स्थानज्ञाः स्तुवन्तः पशून् अविन्दन् ।। २ ।।

**मुद्गल–** हे ऋत्विजः! **वः** यूयं **महे** महते शवसानाय बलमिवाचरते, अतिबलायेत्यर्थः । उत्तरवाक्ये यच्छब्दश्रुतेः तच्छब्दाध्याहारः । एवम्भूताय तस्मा इन्द्राय **महि** महत् प्रौढम् **नमः** स्तोत्रं **प्र भरध्वम्** प्रकर्षेण सम्पादयत । किं तत्स्तोत्रमित्याह– **आङ्गूष्यं साम** आघोषयोग्यं रथन्तरादिसाम । तन्निष्पाद्यमित्यर्थः । 'अभि त्वा शूर' (ऋ.७-३२-२२) इत्यादिष्वृक्षु यद्गानं तस्य सामेत्याख्या । तेन इन्द्रेण **नः** अस्माकं **पितरः** पितृविशेषाः पूर्वे पूर्वपुरुषाः **अङ्गिरसः** पणिनाम्नाऽसुरेणापहृतानां गवां **पदज्ञाः** मार्गज्ञाः सन्तोऽत एव **अर्चन्तः** तं पूजयन्तः **गाः अविन्दन्** अलभन्त ।। २ ।।

**सायण–** हे ऋत्विजः! **वः** यूयं, **महे** महते **शवसानाय** बलमिवाचरते । अतिबलायेत्यर्थः । उत्तरवाक्ये यच्छब्दश्रुतेः तच्छब्दाध्याहारः' । एवम्भूताय तस्मै इन्द्राय **महि** महत् प्रौढं **नमः** स्तोत्रं **प्र भरध्वं** प्रकर्षेण सम्पादयत । किं तत् स्तोत्रमित्याह– **आङ्गूष्यं साम** आघोषयोग्यं रथन्तरादिसाम । तन्निष्पाद्यमित्यर्थः । 'अभि त्वा शूर' (ऋ.सं.७.३२.२२ ) इत्यादिषु ऋक्षु यद्गानं तस्य सामेत्याख्या । तथा चोक्तं– 'गीतिषु सामाख्या' (जै.सू.२.१.३६) इति । येन इन्द्रेण **नः** अस्माकं **पितरः** पितृविशेषाः **पूर्वे** पूर्वपुरुषाः **अङ्गिरसः** पणिनाम्नाऽसुरेणापहृतानां गवां **पदज्ञाः** मार्गज्ञाः सन्तोऽत एव **अर्चन्तः** तं पूजयन्तः **गाः अविन्दन्** अलभन्त ।। **वः** । प्रथमार्थे द्वितीया । **पदज्ञाः** पदानि जानन्तीति । 'आतोऽनुपसर्गे कः' इति कः । 'आतो लोप इटि च' इति आकारलोपः । **अविन्दन्** 'विदॣ लाभे'। 'शे मुचादीनाम्' इति नुमागमः ।।२

**सिद्धाञ्जन–** हे सखायः, **वः** यूयं, विभक्तिव्यत्ययः, **महे** महते **शवसानाय** बलायमानाय अतिबलायेत्यर्थः तस्मै (इत्यध्याहार्यः उत्तरत्र यच्छब्दश्रवणात्) इन्द्राय **महि** महत् **नमः** नमःशब्दोपलक्षितं स्तोत्रं **प्रभरध्वम्** प्रकर्षेण सम्पादयत । किं तत् स्तोत्रम् ? **आङ्गूष्यम् साम**

आघोषयोग्यं बृहद्रथन्तरादि गीतिशब्दसमाख्यातं साम । **येन** सामगानेन **नः** अस्माकं **पूर्वे पितरः** पूर्वपुरुषाः पितृविशेषा **अङ्गिरसः** ऋषयः **पदज्ञाः** मार्गज्ञाः, पणिभिरपहृतानां गवां पदानि जानन्तः, **अर्चन्तः** इन्द्रं पूजयन्तः **गाः अविन्दन्** अलभन्त ।। अङ्गिरस्तत्त्वविचारे विवरणं कृतमस्य पणिगोवृत्तान्तस्य (१.३३ सू.) ।। २ ।।

## ऋक्संहिता पदपाठसहिता

**इन्द्रस्याङ्गिरसां चेष्टौ विदत्सरमा तनयाय धासिम् ।**
**बृहस्पतिर्भिनदद्रिं विदद्गाः समुस्रियाभिर्वावशन्त नरः ।। ३ ।।**
इन्द्रस्य । अङ्गिरसाम् । च । इष्टौ । विदत् । सरमा । तनयाय । धासिम् । बृहस्पतिः ।
भिनत् । अद्रिम् । विदत् । गाः । सम् । उस्रियाभिः । वावशन्त । नरः ।। ३ ।।

**स्कन्द–** **इन्द्रस्य** तत्सखानाम् च **अङ्गिरसां** ऋषीणां **इष्टौ** प्रेषणे । सप्तमीनिर्देशाद् वर्तमानेति वाक्यशेषः । इन्द्रेण चाङ्गिरोभिः गिरिदुर्गे निहितं ज्ञातवती लब्धवती वा । का ? **सरमा** नाम देवशुनी । किमर्थम् । **तनयाय** अपत्यभूतस्य सर्वजनस्यार्थाय । किम् । **धासिम्** अन्ननामैतत् (तु.निघ.२.७) इह तु पयआद्यन्नकारणत्वाद् गोषु प्रयुक्तम् । पणिभिरपहृताः सतीर्गा इत्यर्थः । **बृहस्पतिः भिनत् अद्रिम्** अद्रिरिति पर्वतनाम । अभिनत् दुर्गं पर्वतम् । भित्वा च **विदत्** लब्धवान् **गाः** । लब्धाभिश्च ताभिः **उस्रियाभिः** गोभिस्सह **सम् वावशन्त** । वाशृशब्दे संशब्दनं कृतवन्तः । **नरः** मनुष्याकारा देवाः । यथास्वं देवा गा आहूतवन्तः । गावोऽपि रम्भाशब्दं कुर्वत्यो गृहे प्रविष्टा इत्यर्थः । इन्द्रस्येष्टौ वर्तमानानामिदं सर्वम् अभवदित्येवमिन्द्रप्राधान्या-दैन्द्रत्वस्याविरोधः ।। ३ ।।

**वेङ्कटमाधव–** इन्द्रस्याङ्गिरसां च प्रेषणे सति अविन्दत् । सरमा नाम देवशुनी मातृस्थानीया, देवानां पुत्रेभ्यो देवेभ्यो गवात्मकम् अन्नम् । ज्ञाते चान्ने गवामावरणं शैलं बृहस्पतिरभिनत्, अविन्दच्च **गाः** । ततः **सम् वावशन्त** ऐच्छन् कामान् भोक्तुं नेतारो देवाः ।। ३ ।।

**मुद्गल–** अत्रेदमाख्यानम्– सरमा देवशुनी । पणिभिर्गोष्वहृतासु तद्गवेषणाय तां सरमामिन्द्रः प्राहैषीत् । यथा लोके व्याधो वनान्तर्गतमृगान्वेषणाय श्वानं विसृजति तद्वत् । सा च सरमैवम् अवोचत् । हे इन्द्र! अस्मदीयाय शिशवे तद्गोसम्बन्धि क्षीराद्यन्नं यदि प्रयच्छसि तर्हि

गमिष्यामीति । स तथेत्यब्रवीत् । ततो गत्वा गवां स्थानम् अज्ञासीत् । ज्ञात्वा चास्मै न्यवेदयत् । त(या)था निवेदितासु गोषु तमसुरं हत्वा गाः स इन्द्रोऽलभत' इति । अयमर्थोऽस्यां प्रतिपाद्यते । इन्द्रस्य **अङ्गिरसाम्** ऋषीणाम् च **इष्टौ** प्रेषणे सति **सरमा** देवशुनी **तनयाय** स्वपुत्राय **धासिम्** अन्नम् **विदत्** अविन्दत् । तया गोषु निवेदितासु **बृहस्पतिः** बृहतां देवानामधिपतिरिन्द्रः **अद्रिम्** अत्तारमसुरम् **भिनत्** अवधीत् । तेनापहृताः गाः **विदत्** अलभत । ततः **नरः** नेतारो देवाः **उस्रियाभिः** गोभिः सह **सम् वावशन्त** भृशं हर्षशब्दमकुर्वन् ।। ३ ।।

**सायण–** अत्रेदम् आख्यानम् । सरमा नाम देवशुनी । पणिभिर्गोष्वपहृतासु तदन्वेषणाय तां सरमामिन्द्रः प्राहैषीत् । यथा लोके व्याधो वनान्तर्गतमृगान्वेषणाय श्वानं विसृजति तद्वत् । सा च सरमा एवमवोचत्– 'हे इन्द्र! अस्मदीयाय शिशवे तद्गोसम्बन्धि क्षीराद्यन्नं यदि प्रयच्छसि तर्हि गमिष्यामीति। स तथेत्यब्रवीत् । तथा च शाट्यायनकम्– 'अन्नादिनी ते सरमे प्रजां करोमि या नो गा अन्वविन्दः' इति । ततो गत्वा गवां स्थानमज्ञासीत् । ज्ञात्वा चास्मै न्यवेदयत् । तथा निवेदितासु गोषु तमसुरं हत्वा ता गाः स इन्द्रोऽलभतेति । अयमर्थोऽस्यां प्रतिपाद्यते ।। **इन्द्रस्याङ्गिरसाम्** ऋषीणां च **इष्टौ** प्रेषणे सति **सरमा** देवशुनी **तनयाय** स्वपुत्राय **धासिम्** अन्नं **विदत्** अविन्दत् । धासिः इत्यन्ननाम, 'धासिः इरा' (नि.२.७.११) इति तन्नामसु पाठात् । तथा गोषु निवेदितासु **बृहस्पतिः** बृहतां देवानामधिपतिरिन्द्रः **अद्रिम्** अत्तारम् असुरं **भिनत्** अवधीत् । तेनापहृताः **गाः विदत्** अलभत । ततः **नरः** नेतारो देवाः **उस्रियाभिः** गोभिः सह । **उस्रिया** इति गोनाम । **सम् वावशन्त** भृशं हर्षशब्दमकुर्वन् । यद्वा गोभिः साधनभूताभिस्तदीयं क्षीरादिकमकामयन्त समगच्छन्तेत्यर्थः ।

**इष्टौ** 'इष गतौ' इत्यस्मात् भावे क्तिनि 'मन्त्रे वृष' इत्यादिना क्तिन उदात्तत्वम् । **विदत्** । 'विद्लृ लाभे' । लुङि लृदित्वात् अङ् । 'बहुलं छन्दस्यमाङ्योगेऽपि' इति अडभावः । अङ एव स्वरः शिष्यते । पादादित्वान्निघाताभावः । **सरमा** । 'सरमा सरणात्' (निरु.११.२४) इति यास्कः । सर्तेः औणादिकः अमप्रत्ययः। **धासिम्** । 'धेट् पाने'। धीयते पीयते इति धासिः । औणादिकः सिप्रत्ययः । यद्वा । दधातेः पोषणार्थात् सिप्रत्ययः । **बृहस्पतिः** । 'तद्बृहतोः करपत्योश्चोरदेवतयोः सुट् तलोपश्च' (पा.सू.६.१.१५७.ग.) इति सुडागमस्तलोपश्च । बृहच्छब्दः अन्तोदात्तः । तस्य केचिदाद्युदात्तत्वं वर्णयन्तीत्युक्तम् । पतिशब्दो डतिप्रत्ययान्त

आद्युदात्तः । अतः 'उभे वनस्पत्यादिषु' इति पूर्वोत्तरपदयोर्युगपत्प्रकृतिस्वरत्वम् । **उस्रियाभिः** । निवसत्यस्यां क्षीरादिकमिति उस्रा गौः । 'वस निवासे' इत्यस्मात् 'स्फायितञ्च' इत्यादिना अधिकरणे रक् । 'वचिस्वपि' इत्यादिना सम्प्रसारणम् । 'उस्राशब्दात् स्वार्थे पृषोदरादित्वेन घप्रत्ययः' इति निघण्टुभाष्यम् । घस्य इयादेशः । प्रत्ययस्वरः । **वावशन्त** । 'वाशृ शब्दे' । अस्मात् यङन्तात् लङि झस्य अन्तादेशे सति तस्य 'छन्दस्युभयथा' इति आर्धधातुकत्वात् अतोलोपयलोपौ । व्यत्ययेन धातोर्ह्रस्वत्वम् । यद्वा । 'वश कान्तौ' इत्यस्मात् यङि 'न वशः' (पा.सू.६.१.२०) इति सम्प्रसारणे प्रतिषिद्धे पूर्ववत् प्रक्रिया ।। ३ ।।

**सिद्धाञ्जनम्–** अस्यामृचि अङ्गिरःसरमाबृहस्पतयो निर्दिष्टाः। हिरण्यस्तूपस्य ऐन्द्रसूक्तार्थ विचारे (३२ सू., ३३ सू.) अङ्गिरस्तत्वप्रतिपादने च गोलामरहस्यम् उक्तम् । तत्सर्वमवधेयम्। सरमा देवशुनी सहजावबोधचक्षुर्लक्षणा गोगुप्तिस्थानं गत्वा दृष्ट्वा च इन्द्राय प्रथमं दर्शयति । अत्र अङ्गिरसो मन्त्रमुच्चारयन्तो बलभेदने इन्द्राय साहाय्यमाचरन्ति । ततो बलम् असुरं हत्वा ता गाः स इन्द्रो लभते । इदं सर्वं प्रागेव सरहस्यं व्याख्यातम् । अत्रैक एव विषयो वक्तव्यः। 'सरमा तनयाय धासिं विदत्' इति मन्त्रभागस्य स्थूलार्थम् उपपादयितुमित्थमाहुः– यथा लोके व्याधः वनान्तर्गतमृगान्वेषणाय श्वानं विसृजति तथेन्द्रः सरमां व्यसृजद्गा अन्वेष्टुम् । तदा सरमैवम् अवोचत् *'हे इन्द्र अस्मदीयशिशवे तद्गोक्षीराद्यन्नं यदि प्रयच्छसि तर्हि गमिष्यामि'* इति । इदं त्वत्र ग्राह्यं तत्त्वम् । इन्द्रो दिव्यः शुद्धसत्त्वात्मकमनोमयधामाधिराजः । तस्य सरमा देवशुनी तत्त्वान्वेषणसमर्था यजमाने सहजावबोधचक्षुःस्वरूपिणी गोपदवेदनीयचिद्रश्मि गुप्तिस्थानं पर्वतगुहापदवाच्यं अजागरितचित्कम् अधिगम्य दिव्यसत्वमनःप्रवेशाय मार्गं दृष्ट्वा प्रदर्शयति । अनेन सहजावबोधदृष्टेः सन्ततिः प्रतिष्ठां लभते । इन्द्रस्य गोलाभात्परं एषा सहजा दृष्टिः प्रतिष्ठिता भवति। तस्मात् 'तनयः सन्ततिः धासिं धारकं प्रतिष्ठाभूतं जागरितस्थाने पदम् अविदत्' इति रहस्यम् ।

अथ ऋगर्थः स्पष्टो भवति । **इन्द्रस्य अङ्गिरसां च इष्टौ** एषणे, सरमायाः प्रेषणे **सरमा** उक्तलक्षणा देवशुनी **तनयाय** स्वीयतनयाय सन्तानाय, स्थूलपक्षे पुत्राय, **धासिम्** धारकम् आधारं प्रतिष्ठामिति यावत्, अन्नमिति स्थूलं, **विदत्** अविन्दत् । सरमया गोषु निवेदितासु **बृहस्पतिः** अङ्गिरसां मुख्यः, इन्द्र एवेति सायणः । **अद्रिम्** अत्तारम् असुरं बलं **भिनत्** अभिनत् हतवान् ।

गमिष्यामीति । स तथेत्यब्रवीत् । ततो गत्वा गवां स्थानम् अज्ञासीत् । ज्ञात्वा चास्मै न्यवेदयत् । त(या)था निवेदितासु गोषु तमसुरं हत्वा गाः स इन्द्रोऽलभत' इति । अयमर्थोऽस्यां प्रतिपाद्यते । इन्द्रस्य **अङ्गिरसाम्** ऋषीणाम् च **इष्टौ** प्रेषणे सति **सरमा** देवशुनी **तनयाय** स्वपुत्राय **धासिम्** अन्नम् **विदत्** अविन्दत् । तया गोषु निवेदितासु **बृहस्पतिः** बृहतां देवानामधिपतिरिन्द्रः **अद्रिम्** अत्तारमसुरम् **भिनत्** अवधीत् । तेनापहृताः गाः **विदत्** अलभत । ततः **नरः** नेतारो देवाः **उस्रियाभिः** गोभिः सह **सम् वावशन्त** भृशं हर्षशब्दमकुर्वन् ।। ३ ।।

**सायण–** अत्रेदम् आख्यानम् । सरमा नाम देवशुनी । पणिभिर्गोष्वपहृतासु तदन्वेषणाय तां सरमामिन्द्रः प्राहैषीत् । यथा लोके व्याधो वनान्तर्गतमृगान्वेषणाय श्वानं विसृजति तद्वत् । सा च सरमा एवमवोचत्– 'हे इन्द्र! अस्मदीयाय शिशवे तद्गोसम्बन्धि क्षीराद्यन्नं यदि प्रयच्छसि तर्हि गमिष्यामीति। स तथेत्यब्रवीत् । तथा च शाट्यायनकम्– 'अन्नादिनी ते सरमे प्रजां करोमि या नो गा अन्वविन्दः' इति । ततो गत्वा गवां स्थानमज्ञासीत् । ज्ञात्वा चास्मै न्यवेदयत् । तथा निवेदितासु गोषु तमसुरं हत्वा ता गाः स इन्द्रोऽलभतेति । अयमर्थोऽस्यां प्रतिपाद्यते ।। **इन्द्रस्याङ्गिरसाम्** ऋषीणां च **इष्टौ** प्रेषणे सति **सरमा** देवशुनी **तनयाय** स्वपुत्राय **धासिम्** अन्नं **विदत्** अविन्दत् । धासिः इत्यन्ननाम, 'धासिः इरा' (नि.२.७.११) इति तन्नामसु पाठात् । तथा गोषु निवेदितासु **बृहस्पतिः** बृहतां देवानामधिपतिरिन्द्रः **अद्रिम्** अत्तारम् असुरं **भिनत्** अवधीत् । तेनापहृताः **गाः विदत्** अलभत । ततः **नरः** नेतारो देवाः **उस्रियाभिः** गोभिः सह । **उस्रिया** इति गोनाम । **सम् वावशन्त** भृशं हर्षशब्दमकुर्वन् । यद्वा गोभिः साधनभूताभिस्तदीयं क्षीरादिकमकामयन्त समगच्छन्तेत्यर्थः ।

**इष्टौ** 'इष गतौ' इत्यस्मात् भावे क्तिनि 'मन्त्रे वृष' इत्यादिना क्तिन उदात्तत्वम् । **विदत्** । 'विदॢ लाभे' । लुङि लृदित्वात् अङ् । 'बहुलं छन्दस्यमाङ्योगेऽपि' इति अडभावः । अङ एव स्वरः शिष्यते । पादादित्वान्निघाताभावः । **सरमा** । 'सरमा सरणात्' (निरु.११.२४) इति यास्कः । सर्तेः औणादिकः अमप्रत्ययः। **धासिम्** । 'धेट् पाने'। धीयते पीयते इति धासिः । औणादिकः सिप्रत्ययः । यद्वा । दधातेः पोषणार्थात् सिप्रत्ययः । **बृहस्पतिः** । 'तद्बृहतोः करपत्योश्चोरदेवतयोः सुट् तलोपश्च' (पा.सू.६.१.१५७.ग.) इति सुडागमस्तलोपश्च । बृहच्छब्दः अन्तोदात्तः । तस्य केचिदाद्युदात्तत्वं वर्णयन्तीत्युक्तम् । पतिशब्दो डतिप्रत्ययान्त

आद्युदात्तः । अतः 'उभे वनस्पत्यादिषु' इति पूर्वोत्तरपदयोर्युगपत्प्रकृतिस्वरत्वम् । **उस्रियाभिः** । निवसत्यस्यां क्षीरादिकमिति उस्रा गौः । 'वस निवासे' इत्यस्मात् 'स्फायितञ्च' इत्यादिना अधिकरणे रक् । 'वचिस्वपि' इत्यादिना सम्प्रसारणम् । 'उस्राशब्दात् स्वार्थे पृषोदरादित्वेन घप्रत्ययः' इति निघण्टुभाष्यम् । घस्य इयादेशः । प्रत्ययस्वरः । **वावशन्त** । 'वाशृ शब्दे' । अस्मात् यङन्तात् लङि झस्य अन्तादेशे सति तस्य 'छन्दस्युभयथा' इति आर्धधातुकत्वात् अतोलोपयलोपौ । व्यत्ययेन धातोर्ह्रस्वत्वम् । यद्वा । 'वश कान्तौ' इत्यस्मात् यङि 'न वशः' (पा.सू.६.१.२०) इति सम्प्रसारणे प्रतिषिद्धे पूर्ववत् प्रक्रिया ।। ३ ।।

**सिद्धाञ्जनम्–** अस्यामृचि अङ्गिरःसरमाबृहस्पतयो निर्दिष्टाः। हिरण्यस्तूपस्य ऐन्द्रसूक्तार्थ विचारे (३२ सू., ३३ सू.) अङ्गिरस्तत्वप्रतिपादने च गोलामरहस्यम् उक्तम् । तत्सर्वमवधेयम्। सरमा देवशुनी सहजावबोधचक्षुर्लक्षणा गोगुप्तिस्थानं गत्वा दृष्ट्वा च इन्द्राय प्रथमं दर्शयति । अत्र अङ्गिरसो मन्त्रमुच्चारयन्तो बलभेदने इन्द्राय साहाय्यमाचरन्ति । ततो बलम् असुरं हत्वा ता गाः स इन्द्रो लभते । इदं सर्वं प्रागेव सरहस्यं व्याख्यातम् । अत्रैक एव विषयो वक्तव्यः। 'सरमा तनयाय धासिं विदत्' इति मन्त्रभागस्य स्थूलार्थम् उपपादयितुमित्थमाहुः– यथा लोके व्याधः वनान्तर्गतमृगान्वेषणाय श्वानं विसृजति तथेन्द्रः सरमां व्यसृजद्गा अन्वेष्टुम् । तदा सरमैवम् अवोचत् 'हे इन्द्र अस्मदीयशिशवे तद्गोक्षीराद्यन्नं यदि प्रयच्छसि तर्हि गमिष्यामि' इति । इदं त्वत्र ग्राह्यं तत्त्वम् । इन्द्रो दिव्यः शुद्धसत्त्वात्मकमनोमयधामाधिराजः । तस्य सरमा देवशुनी तत्त्वान्वेषणसमर्था यजमाने सहजावबोधचक्षुःस्वरूपिणी गोपदवेदनीयचिद्रश्मि गुप्तिस्थानं पर्वतगुहापदवाच्यं अजागरितचित्कम् अधिगम्य दिव्यसत्वमनःप्रवेशाय मार्गं दृष्ट्वा प्रदर्शयति । अनेन सहजावबोधदृष्टेः सन्ततिः प्रतिष्ठां लभते । इन्द्रस्य गोलाभात्परं एषा सहजा दृष्टिः प्रतिष्ठिता भवति। तस्मात् 'तनयः सन्ततिः धासिं धारकं प्रतिष्ठाभूतं जागरितस्थाने पदम् अविदत्' इति रहस्यम् ।

अथ ऋगर्थः स्पष्टो भवति । **इन्द्रस्य अङ्गिरसां च इष्टौ** एषणे, सरमायाः प्रेषणे **सरमा** उक्तलक्षणा देवशुनी **तनयाय** स्वीयतनयाय सन्तानाय, स्थूलपक्षे पुत्राय, **धासिम्** धारकम् आधारं प्रतिष्ठामिति यावत्, अन्नमिति स्थूलं, **विदत्** अविन्दत् । सरमया गोषु निवेदितासु **बृहस्पतिः** अङ्गिरसां मुख्यः, इन्द्र एवेति सायणः । **अद्रिम्** अत्तारम् असुरं बलं **भिनत्** अभिनत् हतवान् ।

गाः **विदत्** अलभत च वलेनापहृताः गाः । **नरः** नेतारो देवाः **उस्रियाभिः** प्राप्ताभिर्गोभिः सह **सम् वावशन्त** अत्यन्तहर्षेण शब्दमकुर्वन् ।। **इष्टौ**-इष गतौ । **विदत्**-विदॢ-लाभे । **सरमा**-सरतेरौणादिकोऽमप्रत्ययः । **धासिम्**-दधातेरिति वयम्, धेट् पाने इत्यस्मादिति स्थूलपक्षीयाः। **उस्रियाभिः** उस्राशब्दात् पृषोदरादित्वात् घप्रत्ययः । **वावशन्त** वाशृ-शब्दे, अस्माद्यङन्ताल्लङ्, यलोपादिकं सर्वं छान्दसम् ।। ३ ।।

**नीतिमञ्जरी–** तत्वविदपि संसारान्न मुच्यत इत्याह–

**तत्त्वविदपि संसारे मूढो भवति लोभतः ।**
**तत्वज्ञा सरमाऽयाचदिन्द्रमन्नं गवां ग्रहे ।।**

तत्वं वेत्तीति तत्ववित् । **संसारे** संसरणे **मूढो भवति लोभतः** । मायया बध्यत इत्यर्थः । तत्र सरमादृष्टान्तेन द्रढयति । यथा सरमा देवशुनी **गवां ग्रहे** इन्द्रस्य पणिभिः गावो गृहीताः । तासां दर्शनाय इन्द्रेण सरमा प्रेषिता । तत्किमिच्छन्तीति (ऋ.१०-१०८-१) अग्रे स्पष्टं दर्शयिष्यति । तस्मिन् गवां ग्रहे **तत्त्वज्ञा** अपि ब्रह्मज्ञा अपि । अस्या ब्रह्मज्ञत्वं गोधा घोषेति प्रतिपादितम् । सापि मायया बाधिता सती इन्द्रं स्वतनयार्थम् अन्नं ययाचे । अन्यो जनोऽपि गास्त्रातुमुद्यमं करोति । सा तत्वज्ञापि लोभमूढाऽभूदित्युक्तम् । तत्रेतिहासः– सरमानाम देवशुनी, पणिभिः गोष्वपहृतासु तद्गवेषणाय तां सरमां इन्द्रः प्राहैषीत् । यथा लोके व्याधो वनान्तर्गत-मृगान्वेषणाय श्वानं विसृजति तद्वत् । सा सरमा एवम् अवोचत्– हे इन्द्र! अस्मदीयाय शिशवे तद्गवां सम्बन्धि यदि क्षीराद्यन्नं प्रयच्छसि तर्हि गमिष्यामीति । स तथेत्यब्रवीत् । तथा शाट्यायने– 'अन्नादां ते प्रजां करोमीति यदि नो गा अन्वविन्द' इति । ततो गत्वा गवां स्थानम् अज्ञासीत् । ज्ञात्वा च तस्मै निवेदयति । अथ निवेदितासु गोषु तान् असुरान् हत्वा गाः स इन्द्रोऽलभतेति । तदर्थेयमृक् । (ऋ.१.६२.३)

**इन्द्रस्याङ्गिरसां चेष्टौ विदत्सरमा तनयाय धासिम् ।**
**बृहस्पतिर्भिनदद्रिं विदद्गाः समुस्रियाभिर्वावशन्त नरः ।। ३ ।।**

किमिच्छन्तीति सूक्ते प्रोक्तः सरमासम्बन्धीतिहासो बृहद्देवतायामेवं वर्णितोऽस्ति–
(बृहद्देवता– अ.८,श्लो.२४-३६) असुराः पणयो नाम रसापारनिवासिनः ।
गास्तेऽपजह्रुरिन्द्रस्य

## ऋक्संहिता पदपाठसहिता

**स सुष्टुभा स स्तुभा सप्त विप्रैः स्वरेणाद्रिं स्वर्यो३ नवग्वैः ।**
**सरण्युभिः फलिगमिन्द्र शक्र वलं रवेण दरयो दशग्वैः ।। ४ ।।**
सः । सुऽस्तुभा । सः । स्तुभा । सप्त । विप्रैः । स्वरेण । अद्रिम् । स्वर्यः । नवऽग्वैः ।
सरण्युऽभिः । फलिऽगम् । इन्द्र । शक्र । वलम् । रवेण । दरयः । दशऽग्वैः ।। ४ ।।

**स्कन्द–** य उक्तगुणोऽसि सः **सुष्टुभा** स्तोभतिरर्चतिकर्मा (तु.निघ.३,१४) । शोभनया स्तुत्या । सः एव **स्तुभा** स्तुतिमात्रेण **सप्त** सप्तभिः । कैः । सामर्थ्याद् ऋषिभिः । कतमैः । ये एवैते सर्वलोकप्रसिद्धाः सप्तर्षयः । 'सप्तर्षयो भरद्वाजः कश्यपो गौतमोऽत्रिः । विश्वामित्रो जमदग्निर्वसिष्ठः सप्तमः स्मृतः' इति । कीदृशैः । **विप्रैः** मेधाविभिः । स्वरेण स्वरति, वेनति' (निघ.३,१४) इत्यर्चतिकर्मसु पाठात् स्वरशब्द इह स्तोतृवचनः । अन्येन च स्तोत्रा जनेन । **स्वर्यः** स्तुत्यः । **नवग्वैः** नवा सर्वदैव धर्मवर्जिता गतिर्येषां ते नवग्वाः । नवनीते वा गतिरभिलाषो येषां ते नवग्वाः । अङ्गिरसः । कुत एतत् । 'अङ्गिरसो नः पितरो नवग्वाः' (ऋ.१०,१४,६), 'अयास्यो अङ्गिरसो नवग्वाः' (ऋ.१०,१०८,८) इत्यादिषु नवग्वा इत्यस्याङ्गिरस्सु प्रसिद्धत्वात् । तैश्च कीदृशैः । **सरण्युभिः** सरणकामैः । सखित्वात् सर्वत्र त्वया सह । **अद्रिं** दुर्गं पर्वतं तत्स्थं च **फलिगम्** असुरम् । हे **इन्द्र! शक्र!** शक्त! **वलम्** च बलम् नामासुरम् । **रवेण** शब्देनैव महता, **दरयः** विदारितवानसि ।

**दशग्वैः** दशभिर्मासैः सिद्धिं गतत्वात् दशग्वा भृगव उच्यन्ते । **स्वर्य** इत्येतेन चास्य सम्बन्धः । भृगुभिश्च स्तुत्यः । यस्त्वं सुष्टुभा स्तुत्यः, स्तुतिमात्रेण च सप्तभिश्चान्येन च स्तोत्रा जनेन अङ्गिरोभिश्च भृगुभिश्च स्तुत्यः, सोऽद्रिं 'फलिगं बलं महता शब्देनैव व्यदारय इति समस्तार्थः । अथवा 'स सुष्टुभा स स्तुभा' इति तृतीयानिर्देशात् स्तुतः सन्निति वाक्यशेषः । 'सप्त, विप्रैः' इत्याद्याश्च सहयोगलक्षणास्तृतीयाः । 'स्वरेण, स्वर्यः' इत्येतावपि 'स्वृ शब्दोपतापयोः' इत्यस्य उपतापयितृवचनौ । यस्त्वं स्वर्यं उपतापयिता शत्रूणां सुष्टुभा स्तुतिमात्रेण च स्तुतः सन् सप्तर्षिभिरङ्गिरोभिर्भृगुभिश्च सह स्वरेण शत्रूणामुपतापयित्रा वज्रेण रवेण शब्देन च महता अद्रिं व्यदारय इति । तथा च योद्धॄनृषीनपि समरमादर्शयिष्यति– 'एह गमन्नृषयः सोमशिताः' (ऋ. १०,१०८,८) इति, 'बृहस्पतिर्या अविन्दन्निगूळ्हाः सोमो ग्रा(ग्रा)वाण ऋषयश्च विप्राः' (ऋ.१०,१०९,११) इति च ।। ४ ।।

**वेङ्कटमाधव– सः** इन्द्रः स्तोत्रेण शोभनेन सप्तभिः ऋषिभिः प्रयुज्यमानेन आगतबलः सिंहनादेन अद्रिम् स्वरणकुशलः अङ्गिरोभिः सह दारयति । तदनुसरणमिच्छद्भिः **दशग्वैः** अङ्गिरोभिर्वेष्टयितारम् **फलिगम्** मेघाकारम् **वलम्** असुरम् **इन्द्र! शक्र!** दारितवानसि । नवभिर्मासैरङ्गिरस्सु सत्रमासीनेषु केचन पशूनलभन्त, दशभिरपरे । ततो नवग्वा दशग्वाश्चोच्यन्ते । यास्कस्त्वाह– 'नवगतयो नवनीतगतयो वा' (या.११,१९) इति ।। ४ ।।

**मुद्गल–** अङ्गिरसो द्विविधाः । सत्रयागमनुतिष्ठन्तो ये नवभिर्मासैः समाप्य गताः ते नवग्वाः । ये तु दशभिर्मासैः समाप्य जग्मुः ते दशग्वाः । तादृशैरुभयविधैः **विप्रैः** मेधाविभिः **सरण्युभिः** सरणं शोभनां गतिमिच्छद्भिः **सप्त** सप्तसङ्ख्याकैः । सप्त ह्यत्र मेधातिथिप्रभृतयोऽङ्गिरसो दृश्यन्ते । एवम्भूतैरङ्गिरोभिः **सुष्टुभा** शोभनस्तोभयुक्तेन स्वरेण उदात्तादिश्रव्यस्वरोपेतेन **स्तुभा** स्तोत्रेण **स्वर्यः** सुष्ठु प्राप्यः **सः** त्वम् । हे **शक्र!** शक्तिमन्! **इन्द्र** । एवम्भूतः सः त्वम् **अद्रिम्** आदरणीयम् । वज्रेण छेत्तव्यमित्यर्थः । **फलिगम्** फलं प्रतिबिम्बम्, तदस्मिन्नस्तीति फलि स्वच्छमुदकम्, तद् गच्छत्याधारत्वेनेति फलिगः । एवम्भूतम् **बलम्** मेघम् **रवेण** आत्मीयेन शब्देन **दरयः** अभीषयः त्वदीयशब्दश्रवणमात्रेण मेघो बिभेतीत्यर्थः ।। ४ ।।

**सायण–** अङ्गिरसो द्विविधाः । सत्रयागमनुतिष्ठन्तो ये नवभिर्मासैः समाप्य गतास्ते नवग्वाः । 'नवग्वा नवनीतगतयः' (निरु.११.१९) इति यास्को व्याचख्यौ । ये तु दशभिर्मासैः समाप्य जग्मुस्ते दशग्वाः। तादृशैरुभयविधैः **विप्रैः** मेधाविभिः, **सरण्युभिः** सरणं शोभनां गतिमिच्छद्भिः, **सप्त** सप्तसङ्ख्याकैः । सप्त ह्यत्र मेधातिथिप्रभृतयोऽङ्गिरसो दृश्यन्ते । एवम्भूतैरङ्गिरोभिः, **सुष्टुभा** शोभनस्तोभयुक्तेन **स्वरेण** उदात्तादिश्रव्यस्वरोपेतेन । यद्वा । मन्द्रमध्यमादिस्वरेण **स्तुभा** स्तोत्रेण **स्वर्यः** सुष्टु प्राप्यः । यद्वा । शब्दनीयः स्तुत्य इत्यर्थः । हे **शक्र** शक्तिमन् **इन्द्र!** एवम्भूतः सः त्वम् **अद्रिम्** आदरणीयं वज्रेण छेत्तव्यमित्यर्थः । **फलिगम्** (प्रति)फलं प्रतिबिम्बम् । तदस्मिन्नस्तीति फलि स्वच्छमुदकम् । तद्गच्छति आधारत्वेनेति फलिगः । यद्वा । व्रीह्यादि फलम् । तदस्मिन् सति भवतीति फलि वृष्टिजलम् । तद्गच्छतीति फलिगः । एवम्भूतं **वलं** मेघं रवेण आत्मीयेन शब्देन **दरयः** अभाययः । त्वदीयशब्दश्रवणमात्रेण मेघो बिभेतीत्यर्थः । यद्वा । **अद्रिः** पर्वतः । अद्यतेऽस्मिन् पटलादिकमिति । फलिगो मेघः । 'फलिगः उपलः' (नि.१.१०.१७) इति तन्नामसु पाठात् । **वलो**ऽसुरः । 'देवा वै वले गाः पर्यपश्यन्' (ऐ.ब्रा.

६.२४) इत्यादौ असुरे प्रयुक्तत्वात् । एते त्रयोऽपि त्वदीयशब्दश्रवणमात्रेणाबिभयुरित्यर्थः । सः इत्येकः पादपूरणः । **सुष्टुभा** । स्तोभतिः स्तुतिकर्मा । सम्पदादिलक्षणो भावे क्विप् । शोभनः स्तुप् स्तोभो यस्य । 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । 'उपसर्गात्सुनोति' इति षत्वम् । **स्तुभा** । करणभूतस्यापि स्तोत्रस्य स्वव्यापारे कर्तृत्वात् स्तोभति स्तौतीति 'क्विप् च' इति कर्तरि क्विप् । 'सावेकाचः' इति विभक्तेरुदात्तत्वम् । **सप्त** । 'सुपां सुलुक्' इति भिसो लुक् । स्वर्यः । 'स्वृ शब्दोपतापयोः' । 'ऋहलोर्ण्यत्' इति ण्यत् । वृद्धयभावश्छान्दसः । 'तित्स्वरितम्' इति स्वरितत्वम् ।

**नवग्वैः** । नवशब्दे उपपदे गमेर्भावे क्विपि 'गमः क्वौ' (पा.सू. ६.४.४०) इत्यनुनासिकलोपे 'ऊ च गमादीनामिति वक्तव्यम्' (पा.सू.६.४.४०.२) इति ऊकारान्तादेशः । नवभिः गूः गमनं येषां ते नवग्वाः । अकारोपजनश्छान्दसः । यद्वा । गमेर्भावे ड्वप्रत्ययः । पूर्ववद् बहुव्रीहिः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । **सरण्युभिः** । सरणमात्मन इच्छन्तः सरण्यवः । क्यचि अन्त्यलोपश्छान्दसः । 'क्याच्छन्दसि' इति उः । **फलिगम्** । फलि उदकं गच्छतीति फलिगः । 'डोऽन्यत्रापि दृश्यते' (पा.म.३.२.४८) इति गमेर्डः । **वलम्** । वृणोतीति वलः । पचाद्यच् । कपिलकादित्वात् लत्वम् (पा.म.८.२.१८)। **दरयः** । 'दृ विदारणे' । वृद्धौ कृतायां 'दृ भये' इति घटादिषु पाठात् मित्त्वे 'मितां ह्रस्वः' इति ह्रस्वत्वम् ।

**सिद्धाञ्जनम्–** नवग्वा दशग्वा इति अङ्गिरसो द्विविधा इति (१.३३.६) प्रागुक्तम् नवसङ्ख्याकगोशब्दलक्षितचिद्रश्मियुक्तैः **नवग्वैः** अङ्गिरोभिस्तथा दशसङ्ख्याकरश्मियुक्तैः **दशग्वैः** च सहायभूतैः वलं विदारितवानिन्द्र इत्यादि कीर्त्यते । सः **सरण्युभिः** सरणं गमनमिच्छद्भिः **सप्त** सप्तभिः, विभक्तिलोपः, **विप्रैः** मेधाविभिः **नवग्वैः दशग्वैः** अङ्गिरोभिः **सुष्टुभा** शोभन-स्तोभयुक्तेन स्वरेण स्तोत्रवागर्थानुरूपेण नादेन, उदात्तादिनेति वा, **स्तुभा** स्तुत्या **स्वर्यः** शब्दनीयः स्तुत्यः, सः एवम्भूतः स त्वं हे **शक्र इन्द्र** शक्तिमन्निन्द्र! **अद्रिम्** अत्तारम् असुरं पर्वतं वा **फलिगम्** फलं गवात्मकं अबात्मकं वा अस्मिन्नस्तीति फलि आवरणस्थानं, तद्गच्छतीति फलिगः तं **वलम्** गवां वलयितारं पूर्वोक्तं असुरं **रवेण** शब्देन **दरयः** अदारयः, विदारितवानसि ।। अत्र अद्रि-फलिग-वलानां सामानाधिकरण्यं गृहीतम् । अद्रिः पर्वतः, फलिगो मेघः, वलः असुरः इति पृथगेते त्रय इति गृहीत्वा पक्षान्तरव्याख्यानमाह सायणः । रहस्यार्थपरेऽस्मिन् व्याख्याने

त्रयाणां भेदोऽयमकिञ्चित्करः । **सुष्टुभा**-स्तोभतिः स्तुतिकर्मा, स्तुप्, सम्पदादिलक्षणः किप्, शोभना स्तुप्, स्तोभो यस्य तेन । अन्ये गताः । **दरयः**-दृ विदारणे, 'मितां ह्रस्वः' इति ह्रस्वत्वम् ।। ४ ।।

## ऋक्संहिता पदपाठसहिता

**गृणानो अङ्गिरोभिर्दस्म वि वरुषसा सूर्येण गोभिरन्धः ।**
**वि भूम्या अप्रथय इन्द्र सानु दिवो रज उपरमस्तभायः ।। ५ ।।**
**गृणानः । अङ्गिरःऽभिः । दस्म । वि । वः । उषसा । सूर्येण । गोभिः । अन्धः । वि । भूम्याः । अप्रथयः । इन्द्र । सानु । दिवः । रजः । उपरम् । अस्तभायः ।।५।।**

**स्कन्द– गृणानः** स्तूयमानः, **अङ्गिरोभिः** । हे **दस्म!** शत्रूणाम् उपक्षपयितः! **वि वः** विवृतमकार्षीः । केन । **उषसा सूर्येण** च । **गोभिः** रश्मयः अत्र गाव उच्यन्ते । 'यत्र गावो भूरिशृङ्गाः' (ऋ.१,१५४,६) इति यथा । रश्मिभिश्च । **अन्धः** तमोऽत्रान्ध उच्यते । गवामदर्शनाय यत्पणिभिः कृतं तमस्तत् । सर्वैर्ज्योतिर्भिः प्रकाशमकार्षीरित्यर्थः । अथवा यः इति उषसा सूर्येणेति एताभ्यामेव द्वाभ्यां सम्बध्यते । गोभिः इत्येतत्तु गृणान इत्येतेन सम्बध्यते । गोशब्दश्च स्तुतिवचनः । 'गोभिर्यदीमन्ये अस्मत्' (ऋ.८,२,६) इति यथा । स्तुतिभिः स्तूयमान इत्यर्थः । अथवा गोशब्दः सास्नादिमद्वचन एव । सहयोगलक्षणा तु तृतीया । 'अन्धः' (निघ. २,७) इति अन्ननाम । दुर्गस्थं यत् पणीनामन्नं तदपहृताभिर्गोभिः सह प्रकाशम् अकार्षीरित्यर्थः । एतास्मिंश्चार्थे उषसा सूर्येण इति तृतीया सहयोगलक्षणापि सम्भवति । उषसा सूर्येण च सह विवृतमकार्षीः इति । किञ्च **वि भूम्याः अप्रथयः** विशब्दोऽत्र विगमे । पणीनां स्वभूतायाः भूमेः वि अप्रथयः विगतप्रथनमकरोः । हे **इन्द्र! सानु** उच्छ्रितं प्रदेशम् । पणीनामुच्चानि गिरिदुर्गाणि पातितवानसीत्यर्थः । किञ्च **दिवः रजः उपरम्** रजोलोकः उपरि भवति इति उपरः । दिव उपरि भवो लोकः महआख्यः तपआख्यो वा । तमपि त्वमेक **अस्तभायः** स्तभ्नातिः प्रतिबन्धार्थः । सोऽपि त्वत्प्रतिबन्ध एवेत्यर्थः ।। ५ ।।

**वेङ्कटमाधव–** उपस्तूयमानः अङ्गिरोभिः उपक्षपयितः! विवारितवानसि **उषसा सूर्येण** च सहायाभ्याम् । पशुनिमित्तम् अन्धकारम् **भूम्याः** च उच्छ्रितं देशम् वि **अप्रथयः** विषमां समीचकर्थ । **दिवः** लोकस्य मूलम् अधः स्थित्वा अस्तभ्नाः ।। ५ ।।

**मुद्गल–** हे **दस्म!** दर्शनीय! शत्रूणामुपक्षपयितः! वा । इन्द्र! त्वम् **अङ्गिरोभिः** ऋषिभिः **गृणानः** स्तूयमानः सन् **उषसा सूर्येण** च सह **गोभिः** किरणैः अन्धकारम् **वि वः** व्यवृणोः । व्यनाशय इत्यर्थः । तथा हे इन्द्र! त्वम् **भूम्याः** पृथिव्याः **सानु** समुच्छ्रितप्रदेशम् **वि अप्रथयः** विशेषेण विस्तीर्णमकरोः । विषमामिमां समीकृतवानित्यर्थः । तथा **दिवः** अन्तरिक्षस्य **रजः** रजसो लोकस्य **उपरम्** उप्तं मूलप्रदेशम् **अस्तभायः** अस्तभ्नाः । यथा अन्तरिक्षस्य मूलं दृढं भवति तथाऽकार्षीरित्यर्थः ।। ५ ।।

**सायण–** हे **दस्म** दर्शनीय, शत्रूणामुपक्षयितः, वा इन्द्र! त्वम् **अङ्गिरोभिः** ऋषिभिः **गृणानः** स्तूयमानः सन् **उषसा सूर्येण** च सह **गोभिः** किरणैः **अन्धः** अन्धकारं **वि वः** व्यवृणोः व्यनाशय इत्यर्थः । तथा हे इन्द्र त्वं **भूम्याः** पृथिव्याः **सानु** समुच्छ्रितप्रदेशं **वि अप्रथयः** विशेषेण विस्तीर्णमकरोः । विषमामिमां समीकृतवानित्यर्थः । तथा **दिवः** अन्तरिक्षस्य **रजः** रजसो लोकस्य **उपरम्** उप्तं मूलप्रदेशम् **अस्तभायः** अस्तभ्नाः । यथाऽन्तरिक्षलोकस्य मूलं दृढं भवति तथाऽकार्षीरियर्थः । **गृणानः** कर्मणि लटः शानचि यकि प्राप्ते व्यत्ययेन श्रा । 'प्वादीनां ह्रस्वः' इति ह्रस्वत्वम् । चित्स्वरेणान्तोदात्तत्वम् । **दस्म**- 'दसु उपक्षये'। 'इषियुधीन्धिदसि' (उ.सू. १.१४२) इत्यादिना मक् । **वः**– 'वृञ् वरणे' लुङि सिपि 'मन्त्रे घस' इत्यादिना च्लेर्लुक् । गुणे 'हल्ङ्याभ्यः' इति सलोपः । 'बहुलं छन्दस्यमाङ्योगेऽपि' इति अडभावः । **अन्धः** । 'तमोऽप्यन्ध उच्यते नास्मिन् ध्यानं भवति' (निरु.५.१) इति यास्कः । **रजः** । 'लोका रजांस्युच्यन्ते' (निरु.४.१९) इत्युक्तत्वात् रजःशब्दो लोकवचनः । 'सुपां सुलुक्' इति षष्ठ्या लुक् । **अस्तभायः** । लङि 'स्तम्भुस्तुम्भु' (पा.सू.३.१.८२) इत्यादिना श्नाप्रत्ययः । 'छन्दसि शायजपि' (पा.सू.३.१.८४) इति अहावपि व्यत्ययेन भाप्रत्ययस्य शायजादेशः । 'अनिदिताम्' इति नलोपः । अडागमः ।। ५ ।।

**सिद्धाञ्जनम्–** हे **दस्म** शत्रूणामुपक्षपयितः! बलवन् **इन्द्र!** त्वं **अङ्गिरोभिः** ऋषिभिः **गृणानः** स्तूयमानः सन् **उषसा सूर्येण गोभिः** च सह, प्रज्ञाप्रभातकृतज्योतिःसम्बन्धिचिद्रश्मिभिः **अन्धः** अन्धकारं चिदावरकं तमः **वि वः** व्यवृणोः व्यनाशयः । तथा **भूम्याः** पृथिव्याः स्थूलायाः जागरितस्थानप्रज्ञाक्षेत्रभूतायाः **सानु** समुच्छ्रितं प्रदेशं शिखरं **वि अप्रथयः** विशेषेण प्रथितवानसि, जागरितप्रज्ञाक्षेत्रं विशेषेण विस्तीर्णमकरोः । तथा **दिवः** अन्तरिक्षस्य **रजः** रजसः मध्यमलोकस्य

**उपरम्** उपरि मूलप्रदेशं, मध्यमस्थानप्रज्ञाक्षेत्रं **अस्तभायः** तस्य ऊर्ध्वं मूलं यथा दृढं भवति तथा अकरोः ।

**गृणानः**-कर्मणि लटः शानचि यकि प्राप्ते व्यत्ययेन श्ना । **दस्म** 'दसु उपक्षये' मक् । **वः**– 'वृञ् वरणे' लुङ्, च्लेर्लुक् । **अन्धः** 'तमोऽप्यन्ध उच्यते' इति यास्कः । **रजः** लोकवचनः, षष्ठ्या लुक् । **अस्तभायः**-स्तभ्नातेः लङि व्यत्ययेन शायजादेशः, नलोपः अडागमश्च ।।

।। प्रथमाष्टके पञ्चमाध्याये प्रथमो वर्गः ।।

## ।। अथ द्वितीयो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

**तदु प्रयक्षतममस्य कर्म दस्मस्य चारुतममस्ति दंसः ।**
**उपह्वरे यदुपरा अपिन्वन्मध्वर्णसो नद्य१श्चतस्रः ।। ६ ।।**

तत् । ऊँ इति । प्रयक्षऽतमम् । अस्य । कर्म । दस्मस्य । चारुऽतमम् । अस्ति । दंसः । उपऽह्वरे । यत् । उपराः । अपिन्वत् । मधुऽअर्णसः । नद्यः । चतस्रः ।। ६ ।।

**स्कन्द– तत्** उ उकार एवार्थे । तदेव । **प्रयक्षतमम्** यक्ष पूजायाम् । प्रकर्षेण पूज्यतमम् । **अस्य** इन्द्रस्य **कर्म, दस्मस्य** शत्रूणामुपक्षपयितुः **चारुतमम् अस्ति दंसः** । एकवाक्यता प्रसिद्ध्यर्थं यद्यपि तथापीत्येतद्द्वयमप्यत्राध्याहर्तव्यम् । यद्यपि चारुतमं शोभनतमम् अन्यदस्ति **दंसः** कर्म असुरवधादि तथापि त्रैलोक्यस्थितिहेतुत्वात्तदेव प्रयक्षतममस्येति । कतमत् । उच्यते– **उपह्वरे** ह्वरतिरत्तिकर्मा (तु.निघ.२,८) । ह्वरो भक्षः । तस्य समीपे उपह्वरे । हविर्भक्षणानन्तरं सोमपानानन्तरं चेत्यर्थः । अथवा उपह्वरोऽन्तरिक्षप्रदेशः तत्र । **यत् उपराः** मेघनामैतत् (तु.निघ. १,१०) । जात्यपेक्षं चात्र स्त्रीलिङ्गम् । मेघजातिः(तीः) **अपिन्वत्** अन्तर्णीतण्यर्थोऽत्र पिन्विर्द्रष्टव्यः । अपिन्वयत् असेचयत् । क्षारितवान् इत्यर्थः । कीदृशीः । **मध्वर्णसः** मधुरोदकाः **नद्यः** शब्दकारिणीः **चतस्रः** चतुस्सङ्ख्याकाः । अथवा चतस्रः इति कर्मप्रवचनीययोगलक्षणा द्वितीया । तच्छ्रुतेश्च कर्मप्रवचनीयः प्रतिशब्दोऽध्याहार्यः । चतस्रो दिशः प्रति । चतसृष्वपि दिक्ष्वित्यर्थः ।। ६ ।।

**वेङ्कटमाधव– तत्** एव पूज्यतमम् **अस्य कर्म** । दर्शनीयस्य कल्याणतमम् **अस्ति** कर्म ।

किं तदित्याह– **उपह्वरे** इति, **चतस्रः** दिशः मधूदकाः नदीः मनुष्यसमीपे अदुहत् दिग्भ्यो नदीर्मनुष्यान् प्रापयति ॥ ६ ॥

**मुद्गल– अस्य दस्मस्य** दर्शनीयस्य इन्द्रस्य **तत्** उ तदेव **कर्म, प्रयक्षतमम्** अतिशयेन पूज्यम् । **दंसः कर्म, चारुतमम्** अतिशयेन शोभनम् अस्ति । किं तदित्यत आह– अयमिन्द्रः, **उपह्वरे** उपह्वर्तव्ये गन्तव्ये पृथिव्याः सम्बन्धिनि समीपे देशे, **उपराः** उप्ताः स्थापिताः । **मध्वर्णसः** मधुरोदकाः **चतस्रः नद्यः** प्रधानभूताः गङ्गानदीः **अपिन्वत्** असिञ्चन् इति । **यत्** एतत् कर्म तदन्येन कर्तुमशक्यत्वात् पूज्यमित्यर्थः ॥ ६ ॥

**सायण–** प्रवर्ग्येऽभिष्टवे 'तदु प्रयक्षतमम्' इत्येषा । 'अथोत्तरम्' इत्यत्र सूत्रितं– 'तदु प्रयक्षतममस्य कर्मात्मन्वन्नभो दुह्यते घृतं पयः' (आश्व.श्रौ.४.७) इति ॥

**दस्मस्य** दर्शनीयस्य, **अस्य** इन्द्रस्य **तदु** तदेव **कर्म प्रयक्षतमम्** अतिशयेन पूज्यम् । **दंसः** इति कर्मनाम । दंसः तदेव कर्म **चारुतमम्** अतिशयेन शोभनम् । किं तदित्यत आह । अयमिन्द्रः **उपह्वरे** उपह्वर्तव्ये गन्तव्ये पृथिव्याः सम्बन्धिनि समीपदेशे **उपराः** उप्ताः स्थापिताः **मध्वर्णसः** मधुरोदकाः **चतस्रः नद्यः** प्रधानभूता गङ्गादिनदीः **अपिन्वत्** असिञ्चदिति **यत्** एतत् कर्म तदन्येन कर्तुमशक्यत्वात् पूज्यमित्यर्थः । **प्रयक्षतमम्** 'यक्ष पूजायाम्'। यक्ष्यते इति यक्षः । अतिशयेन यक्षो यक्षतमः । पुनः प्रादिसमासे अव्ययपूर्वपदप्रकृतिस्वरत्वम् । **दंसः** 'दसि दंसनदर्शनयोः'। चुरादिरात्मनेपदी । दंस्यते कर्तव्यतया दृश्यते इति दंसः कर्म । औणादिकः कर्मणि असुन् । **उपह्वरे** । 'ह्वृ कौटिल्ये' । कौटिल्यलक्षणगतिवाचिनात्र गतिमात्रं लक्ष्यते । उपह्वरन्ति गच्छन्त्यस्मिन् नद्य इत्युपह्वरो भूप्रदेशः । 'पुंसि संज्ञायां घः प्रायेण' (पा.सू.३.३. ११८) इत्यधिकरणे घप्रत्ययः । गुणः । कृदुत्तरपदप्रकृतिस्वरत्वम् । **अपिन्वत्** । 'पिवि सेचने' । भौवादिकः । **चतस्रः** । शस् । 'त्रिचतुरोः स्त्रियां तिसृचतसृ' (पा.सू.७.२.९९) इति चतुर् शब्दस्य चतस्रादेश आद्युदात्तो निपातितः । पूर्वसवर्णदीर्घे प्राप्ते 'अचि र ऋतः' (पा.सू.७.२. १००) इति रेफादेशः । चतुर् शब्दस्य आद्युदात्तत्वात् स्थानिवद्भावेन चतस्रादेशस्य आद्युदात्तत्वे सिद्धेऽपि पुनराद्युदात्तनिपातनसामर्थ्यात् यणादेशस्य वा पूर्वविधौ स्थानिवद्भावात् 'चतुरः शसि' इत्यन्तोदात्तत्वस्याभावः । न च 'न पदान्त' इति स्थानिवद्भावप्रतिषेधः, स्वरदीर्घयलोपेषु लोपाजादेश एव न स्थानिवत् अन्यत्तु स्थानिवदेव (पा.सू.१.१.५८.१) इति नियमात् ॥

**सिद्धाञ्जनम्– दस्मस्य** प्रबलकर्मणः **अस्य** इन्द्रस्य **तदु** तदेव **प्रयक्षतमम्** अतिशयेन पूज्यतमं **दंसः** कर्म, तदेव **चारुतमम्** कर्म **अस्ति** अतिशयेन शोभनं कर्म च भवति । किं तत् ? आह । अयमिन्द्रः **उपह्वरे** उपह्वर्तव्ये कौटिल्येन गन्तव्ये पृथिव्याः सम्बन्धिनि विषमप्रदेशे **उपराः** उपरि उत्कृष्टे **स्थापिता मध्वर्णसः** मधुरोदकाः **चतस्रो नद्यः** चतुस्सङ्ख्याकाः नदीः **अपिन्वत्** असिञ्चत् इति **यत्** तदेतत्कर्म प्रयक्षतममिति सम्बन्धः । का इमाश्चतस्रो नद्यः? गङ्गाद्या इति सायणः । पुराणेष्वपि प्रसिद्धाश्चतस्रो नद्यः गङ्गाद्याः उपरि स्थापिताः, ता इन्द्रः प्रवाहयति इति तु न कथ्यते तेन । भूरादितत्त्वसप्तके अपरार्धभूतं त्रैलोक्यं वर्जयित्वा, अवशिष्टतत्त्वचतुष्टयसम्बन्धिन्यः सत्यचिन्मयज्योतिरानन्दबलाद्यमृतवाहिन्यः चतस्रः स्यन्दमानाः आपः न केनापि इन्द्रादन्येन पृथिवीं जागरितस्थानां स्थूलप्रज्ञाभुवं प्रापयितुं शक्याः । अत एव अद्भुततमं महनीयं ऐन्द्रं कर्म । उपराशब्दः उपरमन्तेऽत्रेति व्युत्पाद्यते सायणीये, अन्यत्र 'उपरि उत्कृष्टे स्थापिताः' इति सायण एवाचष्ट । **प्रयक्षतमम्**-यक्ष्यत इति यक्षः, यक्ष पूजायाम् । **उपह्वरे**-ह्वृ कौटिल्ये, उपह्वरन्ति अस्मिन् । **अपिन्वत्**-पिवि सेचने ।।

## ऋक्संहिता पदपाठसहिता

**द्विता वि व॑व्रे स॒नजा॒ सनी॑ळे अ॒यास्यः॒ स्तव॑मानेभिर॒र्कैः ।**
**भगो॒ न मेने॒ पर॒मे व्यो॑मन्नधा॑रय॒द्रोद॑सी सु॒दंसाः॑ ।। ७ ।।**
**द्विता । वि । व॒व्रे । स॒नऽजा॑ । सनी॑ळे इति॒ सऽनी॑ळे । अ॒यास्यः॑ । स्तव॑मानेभिः । अ॒र्कैः ।**
**भगः॑ । न । मेने॒ इति॑ । प॒रमे । विऽओ॑मन् । अधा॑रयत् । रोद॑सी॒ इति॑ । सु॒ऽदंसाः॑ ।।**

**स्कन्द– द्विता** द्विताशब्दो द्विधाशब्दस्यार्थे । विशब्दश्चात्रानेकत्वप्रतिपादनमात्रपरः । अनेकधाऽपि **वव्रे** सम्भुक्तवान् । **सनजा** सनशब्दश्चिरपर्यायः चिरजाते । के । सामर्थ्यात् द्यावापृथिव्यौ । कीदृश्यौ । **सनीळे** समानस्थाने सृष्टिकालोत्पन्ने । एकस्मिन् कारणात्मनि व्यवस्थिते उभे अपि द्यावापृथिव्यावनेकधा सम्भुक्तवानित्यर्थः । कीदृशः । उच्यते– **अयास्यः** अयास्यो नामाङ्गिरसोऽभिप्रेतः । कथमवगम्यते । 'एह गमन्नृषयः सोमशिता अयास्यो अङ्गिरसो नवग्वा' (ऋ.१०,१०८,८) इति दर्शनात् । **स्तवमानेभिः** प्रथमार्थे तृतीयैषा । इन्द्रः स्तुवन् **अर्कैः** मन्त्रैः । इन्द्रप्रसादादित्यर्थः । अथवा आनेतुमशक्यत्वादयास्य इन्द्रः एवोच्यते । स्तवमानेभिरिति तु कर्मणि शानच् प्रत्ययो द्रष्टव्यः । मन्त्रैः स्तूयमान इन्द्रः उभे अपि द्यावापृथिव्यौ

सम्भजते इत्यर्थः । किञ्च, **भगः न मेने,** भग आदित्यः । मेने स्त्रियौ रात्र्युषसाविहाभिप्रेते । यथा आदित्यो रात्र्युषसोः तदायत्तत्वात्तत्स्थितेः । एवम् **परमे व्योमन्** स्थाने कारणात्माख्ये । **अधारयत् रोदसी, सुदंसाः** सुकर्मा इन्द्रः । कृत्स्नस्य हि जगतो धारणं धर्मायत्तम् । धर्माधर्मौ वृष्टिद्वारकायादिन्द्रायत्तौ । अत एतदुच्यते 'अधारयद्रोदसी सुदंसाः' इति ।। ७ ।।

**वेङ्कटमाधव–** द्वैधम् **वि वव्रे** चिरजाते एकाधारे द्यावापृथिवी स्तूयमानैः स्तोत्रैरिन्द्रः गमनकुशलः । **भगः** न अहोरात्रे **परमे** व्योम्नि अन्तरिक्षे द्यावापृथिव्यौ धारयति सुकर्मा ।। ७ ।।

**मुद्गल– अयास्यः** यासः प्रयत्नः तत्साध्यो यास्यः, न यास्यः अयास्यः । युद्धरूपैः प्रयत्नैः साधयितुमशक्य इत्यर्थः । कथं साध्य इत्यत आह– **स्तवमानेभिः** स्तोत्रं कुर्वद्भिः पुरुषैः । **अर्कैः** स्तुतिरूपैर्मन्त्रैः स्तूयमानः सन्निन्द्रः सुसाध्यो भवति । **सनजा** सनेति निपातो नित्यार्थः । नित्यजाते सर्वदा विद्यमानस्वभावे इत्यर्थः । प्रथमभावविकारवाचिना जनिना द्वितीयो भावविकारः सत्ता लक्ष्यते । यथा 'औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः' इति औत्पत्तिकमिति नित्यं ब्रूमः' इति शबरभाष्यम् (१,१,५) । **सनीळे** समानं नीळं निवासस्थानं ययोस्ते । संलग्ने इत्यर्थः । एवंविधे द्यावापृथिव्यौ **द्विता** द्विधा **वि वव्रे** विवृते अकरोत् । भेदेनास्थापयदित्यर्थः । **मेने** मननीये **परमे** उत्कृष्टे **व्योमन्** व्योमनि विविधरक्षणे नभसि वर्तमानः **भगः न** सूर्य इव, **सुदंसाः** शोभनकर्मा इन्द्रः, **रोदसी** द्यावापृथिव्यौ **अधारयत्** अपोषयत् ।। ७ ।।

**सायण– अयास्यः** । यासः प्रयत्नः । तत्साध्यो यास्यः । न यास्योऽयास्यः । युद्धरूपैः प्रयत्नैः साधयितुमशक्य इत्यर्थः । कथं साध्यते इत्यत आह– **स्तवमानेभिः** स्तोत्रं कुर्वद्भिः पुरुषैः **अर्कैः** स्तुतिरूपैर्मन्त्रैः स्तूयमानः सन्निन्द्रः सुसाध्यः भवति । यद्वा । अयास्यः पञ्चवृत्तिर्मुख्यप्राणः । स हि आस्यात् मुखात् अयते गच्छति निष्क्रामति । तदुपासकोऽप्यङ्गिरा उपचारात् अयास्य उच्यते । तथा च छन्दोगैराम्नातं– 'तं हायास्य उद्गीथमुपासाञ्चक्रे एतमु एवायास्यं मन्यन्त आस्याद्यदयते तेन' (छा.उ.१.२.१२) इति । अथवा । अयमास्ये मुखे वर्तते इत्ययास्यः । तथा च वाजसनेयकं 'ते होचुः क नु सोऽभूद्यो न इत्थमसक्तेत्यय-मास्येऽन्तरिति' (बृ.उ.१.३.८) इति । पूर्ववदुपासकोऽप्ययास्यः । तेन ऋषिणा **स्तवमानेभिः** गुणिनिष्ठगुणाभिधानलक्षणां स्तुतिं कुर्वद्भिः **अर्कैः** मन्त्रैः करणभूतैः स्तूयमानः सन् **सनजा** सना इति निपातो नित्यार्थः । नित्यजाते सर्वदा विद्यमानस्वभावे इत्यर्थः । प्रथमभावविकारवाचिना जनिना द्वितीयो भावविकारः सत्ता

लक्ष्यते। यथा 'औपत्तिकस्तु शब्दस्यार्थेन सम्बन्धः' इति। 'औत्पत्तिकमिति नित्यं ब्रूमः' (शा.भा.१.१.५) इति हि तद्भाष्यम्।

**सनीळे** समानं नीळम् ओको निवासस्थानं ययोस्ते। संलग्ने इत्यर्थः। एवंविधे द्यावापृथिव्यौ **द्विता** द्विधा **वि वव्रे** विवृते अकरोत् भेदेनास्थापयदित्यर्थः। **मेने** मननीये **परमे** उत्कृष्टे व्योमन् विविधरक्षणे नभसि वर्तमानः **भगो न** सूर्य इव **सुदंसाः** शोभनकर्मेन्द्रः **रोदसी** द्यावापृथिव्यौ **अधारयत्** अपोषयत्। यद्वा। मेना इति स्त्रीनाम। तथा च यास्कः– 'मे नाम्ना इति स्त्रीणां मेना मानयन्त्येनाः' (निरु.३.२१) इति। स्त्रीरूपमापन्ने रोदसी इन्द्रोऽपुष्यदित्यर्थः ॥

**द्विता**। द्विधा इत्यस्य धकारस्य तकारः छान्दसः। **सनजा**। 'जनी प्रादुर्भावे' अस्माद् भावे 'अन्येभ्योऽपि दृश्यते' इति दृशिग्रहणस्य सर्वोपाधिव्यभिचारार्थत्वात् केवलादपि जनेर्डप्रत्ययः। सना नित्यं जो जननं ययोस्ते सनजे। पूर्वपदस्य ह्रस्वश्छान्दसः। एवमादित्वादन्तोदात्तत्वम्। तदेव बहुव्रीहिस्वरेण शिष्यते। 'सुपां सुलुक्' इति विभक्तेः आकारः। **अयास्यः**। 'यसु प्रयत्ने'। यासः प्रयत्नः। तत्र भवो यास्यः। 'भवे छन्दसि' इति यत्। न यास्योऽयास्यः। 'परादिश्छन्दसि बहुलम्' इत्युत्तरपदाद्युदात्तत्वम्। श्रुत्युक्तनिर्वचने तु पृषोदरादित्वात् अभिमतरूपस्वरसिद्धिः। **मेने**। सप्तम्येकवचनस्य 'सुपां सुलुक्' इति शेआदेशः। 'शे' (पा.सू.१.१.१३) इति प्रगृह्यत्वम्। यद्वा। मन्यते इति मेना। पचाद्यच्। 'नशिमन्योरलिट्येत्वं वक्तव्यम्' (पा.सू.६.४.१२०.५) इति एत्वम्। ततष्टाप्। द्विर्वचने 'ईदूदेद्द्विवचनम्' (पा.सू.१-१-११) इति प्रगृह्यत्वम्। **सुदंसाः**। दंस इति कर्मवाची। असुन्प्रत्ययान्तः आद्युदात्तः। बहुव्रीहौ 'आद्युदात्तं द्व्यच्छन्दसि' इत्युत्तरपदाद्युदात्तत्वम् ॥ ७ ॥

**सिद्धाञ्जनम्–** अयास्यो मुख्यः प्राण इति औपनिषद्बलात् प्राहुः। आङ्गिरसो बृहस्पतिरयास्य इति इन्द्र एवोपचर्यते साहचर्यादिति च कथ्यते। उभयविधोक्तेरनुपयोग एवात्र मन्त्रार्थपरिग्रहे। अयास्यशब्दं प्रति सायणस्य प्रथमोक्तिर्वक्ष्यमाणप्रकारा साधीयसीति तामेवावलम्ब्य व्याचक्ष्महे। **अयास्यः** यासः प्रयत्नः तत्साध्यः यास्यः, न यास्यः न प्रयत्नसाध्यः, कृच्छ्रेण तपसा अन्यथा वा मानुषेण बलेन न साध्य इन्द्रः, तस्य प्रसादादेव लभ्यः, तदर्थमेव ऋषयः स्तुतिभिः नमःशब्दप्रतिपादितसर्वस्वदानलक्षणया भक्त्या प्रीत्या रत्या प्रसादयन्ति। ईदृश्य ऋच एव बीजं भवति 'नायमात्मा प्रवचनेन लभ्यः' इत्युपनिषत्सिद्धान्तस्य। यदा स्तोत्रैरिन्द्रः स्तोतरि प्रीतो

भवति, तदा तदीयं कर्म कीर्त्यते पुरस्तात् । एवमुक्तलक्षण इन्द्रः **स्तवमानेभिः** स्तोत्रं कुर्वद्भिः ऋषिभिः **अर्कैः** उज्ज्वलस्तोत्रात्मकैः मन्त्रैः स्तूयमानः, अत एव प्राप्तबलः । प्रीतः किं करोति स्तोत्रं यजमानाय ?

**सनजा** सनेति निपातो नित्यार्थः, नित्यजाते सर्वदा सिद्धसद्भावे इत्यर्थः, **द्विता** द्विधा **सनीळे** समानवासस्थाने **रोदसी** द्यावापृथिव्यौ **वि वव्रे** विवृते अकरोत् । ऊर्ध्वा दिव्या मानसी चितिः द्यौः, अधरा पार्थिवा चितिः पृथिवी। अपरिपक्वदशायां पुरुषस्य यथाजातावस्थायां उभयोरेकवद्भावः व्यामिश्रतया भवति । यजनाध्वनि प्रवृत्तस्य परिपाके सति, उभे अपि पूर्वोक्ते विवेचिते, पृथक्कृते भवतः, अनभिव्यक्तदशामुज्झित्वा स्वाभिव्यक्तिम् भजते द्यौः, तथा पृथिवी चोक्तलक्षणचित्का । **सनजा, सनीळे** इति विशेषणमेवमर्थकं बोध्यम् । तथा उभे अपि पृथगवस्थाप्य, **मेने** मननीये **परमे** उत्कृष्ट **व्योमनि** आकाशे, न भौतिके नभसि, किन्तु सर्वोत्कृष्टे चिन्मयाकाशे वर्तमानः **भगो न** सूर्य इव **सुदंसाः** शोभनकर्मेन्द्रः ते रोदसी **अधारयत्** अपोषयत्, ऊर्ध्वामधरामुभयीमपि मानुषीं चितिमवर्धयत् ।। अत्र **सुदंसाः** शोभनदर्शनः दर्शनीय इत्यपि युक्तोऽर्थः । कृतकृत्यस्य कर्मणः परं दर्शनीयत्वमुचितम् । एवं भग इवेति शोभाद्योतनायोक्तम् ।। **द्विता** द्विधा, तस्य घश्छान्दसः। **सनजा**– सना नित्यं जः जननं ययोस्ते सनजे, पूर्वपदह्रस्वः, विभक्तेराकारश्छान्दसः। **मेने**–मन्यतेः छान्दसम् ।। ७ ।।

## ऋक्संहिता पदपाठसहिता

**सनाद्दिवं परि भूमा विरूपे पुनर्भुवा युवती स्वेभिरेवैः ।**
**कृष्णेभिरक्तोषा रुशद्भिर्वपुर्भिरा चरतो अन्यान्या ।। ८ ।।**

**सनात् । दिवम् । परि । भूम । विरूपे इति विऽरूपे । पुनःऽभुवा । युवती इति । स्वेभिः । एवैः । कृष्णेभिः । अक्ता । उषाः । रुशत्ऽभिः । वपुःऽभिः । आ । चरतः । अन्याऽअन्या ।। ८ ।।**

**स्कन्द**– 'सनात्' इति पञ्चमीनिर्देशात् प्रभृतीति वाक्यशेषः, चिरात्प्रभृति । **दिवम् परि** द्युलोकं प्रति । **भूम**शब्दोऽत्र भूतजातवचनः । 'द्यावा च भूमा जनुषस्तु जेते' (ऋ.१,६१,१४) इति यथा । सर्वं भूतजातम् । **विरूपे पुनर्भुवा** पुनः पुनर्भाविन्यौ । **युवती** सर्वदैव तरुण्यौ जरावर्जिते नित्ये इत्यर्थः । **स्वेभिः, एवैः** अवतेर्गत्यर्थस्य एवानि आगमनान्यत्राभिप्रेतानि ।

आत्मीयैर्नियतकालैरागमनैः । **कृष्णेभिरक्ता** । शुद्धोऽपि चात्रानुपूर्वार्थे द्रष्टव्यः । कृष्णैरनुगता । काऽसौ, सामर्थ्याद्रात्रिः । **उषा रुशद्भिः** दीप्तैः शुक्लैः अनुगता । कैः । **वपुर्भिः** रूपनामैतत् (तु.निघ.३,७) । तमोलक्षणैः ज्योतिर्लक्षणैश्च रूपैः । **आ चरतः** गच्छतः । न केवलं दिवं भूतजातं च प्रति । किं तर्हि । **अन्यान्या** अन्योन्यञ्च । रात्रिर्हि तमोलक्षणेन रूपेणोषसं प्रत्यागच्छति, उषःकालेऽपि तमसोऽनुगमनदर्शनात् । उषा अपि ज्योतिर्लक्षणेन रूपेण रात्रिं प्रत्यागच्छति, रात्रावपि कियतश्चित् प्रकाशस्यानुगमदर्शनादिति । चिरादेव प्रभृति विरूपत्वादिगुणे रात्र्युषसौ कृष्णशुक्लाभ्यां तमोज्योतीरूपाभ्यामनुगते नियतकालैः आत्मीयैरागमनैर्दिवं सर्वं च भूतजातमन्योन्यञ्च प्रत्यागच्छतः इति समस्तार्थः । एवमियमृक् स्वरूपेणैव रात्र्युषःकर्मकीर्तन-मात्ररूपत्वाद्रात्र्युषोदेवतां प्राप्नोति । ऐन्द्रं चेदं सूक्तम् । अतो यत्तच्छब्दावध्याहृत्य पूर्वयार्चा एकवाक्यता योज्या परया वा । ये विरूपत्वादिगुणे रात्र्युषसौ दिवं भूतजातमन्योन्यं च प्रत्यागच्छतस्ते अप्यधारयत्, न केवले रोदसी– इत्येवं पूर्वयैकवाक्यता । परया तु ये विरूपत्वादिगुणे रात्र्युषसौ दिवं भूतजातमन्योन्यं च प्रत्यागच्छतस्ताभ्यां सहेति ।। ८ ।।

**वेङ्कटमाधव–** चिरादारभ्य दिवम् भूमिश्च लक्ष्यीकृत्य नानारूपे पुनःपुनर्जायमाने तरुणे स्वैः गमनैरहोरात्रे चरतः । रात्रिः कृष्णैः वर्णैश्चरति, श्वेतैः अहः । एवम् अन्यान्या आ चरतः एकस्या उपर्यन्या तस्या उपर्यन्येति ।। ८ ।।

**मुद्गल–** **विरूपे** शुक्लकृष्णतया विषमरूपे । **पुनर्भुवा** पुनःपुनः प्रतिदिवसं जायमाने **युवती** तरुण्यौ रात्र्युषसोः सर्वदैकरूप्यात् । एवम्भूते रात्र्युषसौ, **दिवम्** द्युलोकम् **भूमा** भूमिश्च **सनात्** चिरकालादारभ्य, **स्वेभिः एवैः** स्वकीयैर्गमनैः, **परि चरतः** पर्यावर्तेते । अयमेवार्थः स्पष्टी-क्रियते । **अक्ता** रात्रिः **कृष्णेभिः** अन्धकाररूपैर्वर्णैरुपलक्षिता उषाः च **रुशद्भिः** दीप्यमानैः **वपुर्भिः** स्वशरीरभूतैस्तेजोभिरुपलक्षिता **अन्यान्या** परस्परव्यतिहारेण **आ चरतः** आवर्तेते । हे इन्द्र! एतत्सर्वं त्वयैव कार्यते, त्वदधीनत्वात् सर्वासां देवतानामित्यर्थः ।। ८ ।।

**सायण–** **विरूपे** शुक्लकृष्णतया विषमरूपे **पुनर्भुवा** पुनःपुनः प्रतिदिवसं जायमाने **युवती** तरुण्यौ रात्र्युषसोः सर्वदैकरूप्यात् । एवम्भूते रात्र्युषसी दिवं द्युलोकं **भूम** भूमिं च **सनात्** चिरकालादारभ्य **स्वेभिरेवैः** स्वकीयैर्गमनैः **परि चरतः** पर्यावर्तेते । अयमेवार्थः स्पष्टीक्रियते । **अक्ता** रात्रिः **कृष्णेभिः** अन्धकाररूपैर्वर्णैरुपलक्षिता **उषाः** च **रुशद्भिः** दीप्यमानैः **वपुर्भिः**

स्वशरीरभूतैस्तेजोभिरुपलक्षिता **अन्यान्या** परस्परव्यतिहारेण **आ चरतः** आवर्तेते । हे इन्द्र! एतत्सर्वं त्वयैव कार्यते त्वदधीनत्वात् सर्वासां देवतानामित्यर्थः । **भूम**– 'सुपां सुलुक्' इति द्वितीयाया डादेशः । छान्दसो ह्रस्वः । **एवैः** । 'इण् गतौ' । 'इणशीङ्भ्यां वन्' (उ.सू.१.१५०) इति भावे वन्प्रत्ययः । नित्त्वादाद्युदात्तत्वम् । **अक्ता**– नक्ता इति रात्रिनाम । नलोपश्छान्दसः । **वपुर्भिः** । 'अर्तिपृवपि' (उ.सू.२.२७४) इत्यादिना उस्(न्)? । नित्त्वादाद्युदात्तः । **अन्यान्या** । 'कर्मव्यतिहारे सर्वनाम्नो द्वे भवत इति वक्तव्यं समासवच्च बहुलम्' (पा.म.८.१.१२.११) इति द्विर्भावे 'तस्य परम् आम्रेडितम्' (पा.सू.८.१.२) इति आम्रेडितसञ्ज्ञायाम् 'अनुदात्तं च' (पा.सू.८.१.३) इति आम्रेडितस्यानुदात्तत्वम् ॥ ८ ॥

**सिद्धाञ्जनम्**– अन्तर्यागमार्गे सर्वदा एकरूपा चित्प्रकाशस्थितिर्न भवति, अहोरात्रयोर्गतिरिव पर्यायतो वर्तते दशाविशेषः, प्रभातमपि बहुकृत्वो भवतीति बहुधा गतेषु सूक्तव्याख्यानेषु रहस्यं प्रतिपादितम् । तदिहावधेयम् । अस्यामृचि दिनमेव लक्षितं उषःशब्देनेति बोध्यम् । द्यौर्भूमिश्च स्थूलपक्षानुसारेण अहोरात्रयात्राविषयभूते एव वर्तेताम् । रहस्यं तु साङ्केतिकशब्दार्थपरत्वेनैव ग्राह्यम् । पूर्वं द्यावापृथिव्यौ विवृत्य अवस्थाप्य धारितवानिन्द्र इत्युक्तम् । अधुना तयोः पर्ययेण अहोरात्रैः परिचरणं वर्धनाय भवतीत्युच्यते ॥ **विरूपे** विभिन्नवर्णतया पृथग्ग्राह्यरूपयुक्ते **पुनर्भुवा** पुनः पुनर्जायमाने पर्यायेणावर्तमाने **युवती** तरुण्यै, अश्रान्तपोषकत्वद्योतनार्थमिदं विशेषणम्, एवम्भूते रात्र्युषसौ **दिवम्** द्युलोकं **भूम** भूमिं च **सनात्** बहोः कालादारभ्य **स्वेभिः** स्वकीयैः **एवैः** गमनैः **परि आ चरतः** पर्यावर्तेते । तदेवाह- **अक्ता** रात्रिः **कृष्णेभिः** अन्धकारलक्षणै-र्वर्णैरुपलक्षिता **उषाः** रुशद्भिः दीप्यमानैः वपुर्भिः शरीरभूतैः तेजोभिर्युक्ता **अन्यान्या** परस्पर-व्यतिहारेण **आ चरतः** आवर्तेते । अहोरात्राभ्यां द्यावापृथिव्योः क्रियमाणा परिचर्या इन्द्रकृत्यस्यैव पोषयित्री पूरयित्री वेति इन्द्रस्तुताविदमुक्तम् ॥ **भूम**-द्वितीयायाः डादेशः ह्रस्वश्छान्दसः । **एवैः**- इण् गतौ, 'इण्शीभ्यां वन्' इति वन्प्रत्ययः। **अक्ता**- नक्ता रात्रिनाम, नलोपश्छान्दसः। अन्यान्या कर्मव्यतिहारे सर्वनाम्नो द्वे भवतः, समासवच्च बहुलमिति द्विर्भावः ॥ ८ ॥

## ऋक्संहिता पदपाठसहिता

**सनेमि सख्यं स्वपस्यमानः सूनुर्दाधार शवसा सुदंसाः ।**
**आमासु चिद्दधिषे पक्वमन्तः पयः कृष्णासु रुशद्रोहिणीषु ॥ ९ ॥**

**सनेमि । सख्यम् । सुऽअपस्यमानः । सूनुः । दाधार । शवसा । सुऽदंसाः ।**
**आमासु । चित् । दधिषे । पक्वम् । अन्तरिति । पयः । कृष्णासु । रुशत् । रोहिणीषु ।।**

**स्कन्द– सनेमि** 'सनेमि' (निघ.३,२७) इति पुराणनाम । चिरन्तनम् **सख्यम् स्वपस्यमानः** शोभनानि कर्माणि येषां ते स्वपसः स्थितप्रकृतयोऽत्यन्तमहात्मानः, तद्वदाचरन् स्वपस्यमानः । आत्मीययोर्मातापित्रोः, **सूनुः** पुत्रः **दाधार** धारयति **शवसा** स्वेन बलेन **सुदंसाः** सुकर्मा । इन्द्रः रात्र्युषोभ्यां सह पूर्वप्रवृत्तं सख्यं न जहातीत्येवमिह व्याख्यातव्यम् । परोऽर्धर्चः प्रत्यक्षकृतो भिन्नं वाक्यम् । **आमासु चित्** आमम् अपक्वम् । अपक्वास्वपि अभक्षयोग्यास्वपि सतीष्वित्यर्थः । **दधिषे** वृष्टिद्वारेण त्वं धारयसि । **पक्वम्** भक्षयोग्यम् **अन्तः** मध्ये **पयः** क्षीरम् **कृष्णासु** अपि गोषु **रुशत्** दीप्तम् । शुक्लमित्यर्थः । **रोहिणीषु** रोहितासु च । एतदुक्तं भवति– सर्वत्र कारणानुरूपं कार्यम् । भवतस्त्वेतन्माहात्म्यादभक्ष्यासु कृष्णासु रोहितासु च गोषु भक्ष्यं शुक्लञ्च पय इति ।।९।।

**वेङ्कटमाधव–** पुराणं **सख्यं** शोभनानि कर्माणीच्छन् शवसा स्तूयमान इति । इन्द्रं बलवत्तयाह– 'ओजसो जातमुत मन्य एनम्' (ऋ.१०,७३,१०) इति मन्त्रः । सुकर्मा त्वम् आर्द्रासु कृष्णासु रोहिणीषु च गोषु **पक्वम्** श्वेतं **पयः अन्तः** धारयसि ।। ९ ।।

**मुद्गल– स्वपस्यमानः** स्वपः शोभनं कर्म, तदिवाचरन् **शवसा** शवसो बलस्य **सूनुः** पुत्रः । भविष्यवानित्यर्थः । **सुदंसाः** शोभनयागादिकर्मयुक्तः । एवम्भूतः इन्द्रः **सख्यम्** यजमानानां सखित्वम् **सनेमि** पुराणम् **दाधार** धारयति । पोषयतीत्यर्थः । किञ्च **आमासु चित्** आर्द्रासु अपरिपक्वासु गोषु च **अन्तः** मध्ये **पक्वम्** परिपक्वम् **पयः दधिषे** धारयसि । तथा **कृष्णासु** कृष्णवर्णासु **रोहिणीषु** लोहितवर्णासु च गोषु तद्विपरीतम् **रुशत्** दीप्यमानं श्वेतवर्णं पयो **दधिषे** ।।

**सायण– स्वपस्यमानः** स्वपः शोभनं कर्म । तदिवाचरन् **शवसा** शवसो बलस्य 'सूनुः पुत्रः । अतिबलवानित्यर्थः । **सुदंसाः** शोभनयागादिकर्मयुक्तः । एवम्भूत इन्दः **सख्यं** यजमानानां सखित्वं **सनेमि** पुराणं **दाधार** धारयति पोषयतीत्यर्थः । सनेमीति पुराणनाम । 'प्रवयाः सनेमि' (नि.३.२७.४) इति पाठात् । किञ्च **आमासु चित्** आर्द्रासु अपरिक्वासु गोषु च **अन्तः** मध्ये **पक्वं** परिपक्वं **पयः दधिषे** धारयसि । तथा **कृष्णासु** कृष्णवर्णासु **रोहिणीषु** लोहितवर्णासु च गोषु तद्विपरीतं **रुशत्** दीप्यमानं **श्वेतवर्णं** पयः दधिषे । **सख्यम्** सख्युर्भावः सख्यम् ।

'सख्युर्यः' इति यः' । प्रत्ययस्वरः । **दाधार** 'धृञ् धारणे' । तु(जा)दादित्वात् अभ्यासस्य दीर्घत्वम् । **पक्वम्** । 'पचो वः' (पा.सू.८.२.५२) इति निष्ठातकारस्य वत्वम् । **रोहिणीषु** । 'रुह बीजजन्मनि प्रादुर्भावे'। 'रुहे रश्च लो वा' (उ.सू.३.३७४) इति इतन्प्रत्ययान्तो रोहितशब्द आद्युदात्तो वर्णवाची । 'वर्णादनुदात्तात्तोपधात्तो नः' (पा.सू.४.१.३९) इति ङीप्, तत्सन्नियोगेन तकारस्य नकारादेशश्च । ङीपः पित्त्वादनुदात्तत्वे प्रातिपदिकस्वर एव शिष्यते ।। ९ ।।

**सिद्धाञ्जनम्–** अस्यामृचि किमपि रहस्यमेव परोक्षवचनेनावेदितमिति सुधियां स्पष्टं स्यात् । किं तत् ? यजमाने सख्यं दधानो जात इन्द्रोऽतिबलः सुकर्मा अपरिपक्वेष्वपि गोशब्दसङ्केतकेषु चिद्रश्मिषु अन्तःपक्वं अमृतं धत्ते । ताश्च चिद्रश्मिप्रतिपादिकाः गावः **कृष्णासु** रात्रिषु दशाविशेषेषु, **रोहिणीषु** प्रभातावद्योतकलोहितवर्णासु उषस्सु दशाभेदेषु च, अन्तः **पयः** अमृतं धरन्त्येव । तथा अपक्वास्वप्याधारभूतासु गोषु वर्तमानं अमृतं पक्वं यथा भवति तथा धत्ते भगवानिन्द्रः । स्थूलार्थानुसारेण तात्पर्ये भाववैशिष्ट्यं मृग्यमिति किमु वक्तव्यम्?

अथ शब्दार्थो भवति । **स्वपस्यमानः** स्वपः शोभनं कर्म तदिवाचरन्, **सूनुः** पुत्रः, यजमानार्थं जातः **शवसा** दीप्तेन बलेन **सुदंसाः** शोभनकर्मा **सनेमि** पुराणं **सख्यं** यजमाने सखित्वं **दाधार** दधार धारयति पोषयति । **आमासु चित्** आर्द्रासु अपरिपक्वास्वपि गोषु अन्तः मध्ये **पक्वम्** परिपक्वं **पयः** दुग्धं अमृतं **दधिषे** धारयसि । तथा **कृष्णासु** कृष्णवर्णासु **रोहिणीषु** लोहितवर्णासु गोषु च **रुशत्** दीप्यमानं पयः धारयसि हे इन्द्र । **पक्वम्**– 'पचो वः' इति निष्ठातकारस्य वत्वम् ।। ९ ।।

## ऋक्संहिता पदपाठसहिता

**सनात्सनीळा अवनीरवाता व्रता रक्षन्ते अमृताः सहोभिः ।**
**पुरू सहस्रा जनयो न पत्नीर्दुवस्यन्ति स्वसारो अह्रयाणम् ।। १० ।।**
सनात् । सऽनीळाः । अवनीः । अवाताः । व्रता । रक्षन्ते । अमृताः । सहःऽभिः ।
पुरु । सहस्रा । जनयः । न । पत्नीः । दुवस्यन्ति । स्वसारः । अह्रयाणम् ।। १० ।।

**स्कन्द– सनात्** चिरादेव प्रभृति, **सनीळाः** समानमिन्द्राख्यं स्थानं यासां ताः सनीळाः । केवलेन्द्रविषया इत्यर्थः । काः पुनरेताः । स्तुतयः । कीदृश्यः । **अवनीः** अवतेः प्रीत्यर्थस्येदं

रूपम् । प्रीतिजनन्यः **अवाताः** वातिर्गतिकर्मा (तु.निघ.२,१४) अगतपूर्वा अन्यत्र स्तुत्ये । **व्रता** वृत्रवधादीनीन्द्रस्य कर्माणि । **रक्षन्ते, अमृताः** नित्याः **सहोभिः** बलैः सह । अकीर्त्यमानानि हीन्द्रस्य कर्माणि च बलानि च विस्मरणाद् विलयं गच्छेयुः । तानि कीर्तयन्त्यः स्तुतयो रक्षन्तीत्युच्यते । कियत्यः स्तुतयो व्रतानि वा । उच्यते । **पुरु सहस्रा** बहूनि सहस्राणि । कथं पुना रक्षन्ति । उच्यते । **जनयः न पत्नीः** । जनिशब्दोऽत्र जननीवचनो द्रष्टव्यः । नशब्दश्चोपमार्थीयः पत्नीरित्यत्राप्यनुषक्तव्यः । जनन्य इव पत्न्य इव च । यथा मातरो भार्या वा महता यत्नेन पुत्रं पतिं वा रक्षेयुः तद्वदित्यर्थः ।। १० ।।

**वेङ्कटमाधव–** चिरादारभ्य पाणेरेकस्मादुत्पन्नाः अङ्गुलयः सुश्लिष्टाः कर्माणि रक्षन्ते कार्यकरणवेगैः अम्लानाः पुरूणि सहस्राणीन्द्रार्थम् । पुत्रजनयः पत्न्यः इव पुमांसम् अहीतयानमिन्द्रम् अङ्गुल्यः परिचरन्ति ।। १० ।।

**मुद्गल– सनात्** चिरकालादारभ्य, **सनीळाः** समाननिवासस्थानाः । **अवाताः** वातं गमनं तद्रहिताः एकपाण्यवस्थानात् । **अवनीः** अङ्गुलयः **पुरु** पुरूणि बहूनि **सहस्रा** असङ्ख्यातानि **व्रताः** व्रतानि इन्द्रसम्बन्धीनि कर्माणि **अमृताः** पुनःपुनः करणेऽप्यालस्यरहिताः सत्यः **सहोभिः** आत्मीयैर्बलैः **रक्षन्ते** पालयन्ति । अपि **च स्वसारः** स्वयमेव सरन्त्योऽङ्गुल्यः **पत्नीः** पालयित्र्यः **अह्रयाणम्** लज्जारहितम् । प्रगल्भमित्यर्थः । **जनयः न** देवानां पत्न्य इव **दुवस्यन्ति** परिचरन्ति । अञ्जलिबन्धनेनेन्द्रं प्रीणयन्तीत्यर्थः ।। १० ।।

**सायण– सनात्** चिरकालादारग्य **सनीळाः** समाननिवासस्थानाः **अवाताः** वातं गमनं तद्रहिताः एकपाण्यवस्थानात् । 'अवनयः' इति अङ्गुलिनाम । एवम्भूताः **अवनीः** अङ्गुलयः **पुरु** पुरूणि बहुनि **सहस्रा** असङ्ख्यातानि **व्रताः** व्रतानि इन्द्रसम्बन्धीनि कर्माणि **अमृताः** पुनः पुनः करणेऽप्यालस्यरहिताः सत्यः **सहोभिः** आत्मीयैर्बलैः **रक्षन्ते** पालयन्ति । अपि च **स्वसारः** स्वयमेव सरन्त्योऽङ्गुलयः **पत्नीः** पालयित्र्यः **अह्रयाणं** लज्जारहितं प्रगल्भमित्यर्थः । यद्वा । अहीतयानं प्रशस्तगमनमिन्द्रं **जनयो न** । जनयः इति देवानां पत्न्य उच्यन्ते । 'देवानां वै पत्नीर्जनयः' इति श्रुतेः । ता इव **दुवस्यन्ति** परिचरन्ति । अञ्जलिबन्धनेन इन्द्रं प्रीणयन्तीत्यर्थः ।

**अवनीः** । 'अवनयोऽङ्गुलयो भवन्त्यवन्ति कर्माणि' (निरु.३.९) इति यास्कः । 'सुपां

सुलुक्' इति जसः पूर्वसवर्णदीर्घत्वम् । **अवाताः** 'वा गतिगन्धनयोः' । 'असिहसि' इत्यादिना भावे तन्प्रत्ययः । बहुव्रीहौ 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । **व्रता** । 'शेश्छन्दसि बहुलम्' । इति शेर्लोपः । **दुवस्यन्ति** । दुवस्यतिः परिचरणकर्मा । कण्ड्वादिः । अतो यक एव स्वरः शिष्यते । पादादित्वात् निघाताभावः । **अह्रयाणम्** 'ह्री लज्जायाम्' । 'बहुलं छन्दसि' इति श्लोरभावः । व्यत्ययेन शानच् । मुगभावश्छान्दसः । नञ्समासे अव्ययपूर्वपदप्रकृतिस्वरत्वम् । यद्वा । 'बहुलं छन्दसि' इति शपो लुकि 'छन्दस्युभयथा' इति शानच आर्धधातुकत्वेन ङित्त्वाभावे गुणायादेशौ । पूर्ववत् समासस्वरौ । यास्कस्तु एवं व्याख्यत्-'अह्रयाणोऽह्रीतयानः' (निरु.५.१५) इति ।। २ ।।

**सिद्धाञ्जनम्– सनात्** चिरकालादारभ्य **सनीळाः** समानवासस्थानाः, अपामिव स्वसॄणां जामीनां सनामित्वं उद्घोषितं सर्वत्र वेदे । अवनयः अङ्गुलय इति कर्मपरार्थसाधनाय यास्कमुदाहरति सायणः, अङ्गुलीनां एकपाण्यवस्थानात् 'सनीळा' इत्युपपादयति । **अवाताः** वातं गमनं तद्रहिताः निष्कम्पाः दृढा इत्यर्थः, **अवनीः** अवनयः रक्षणहेतुभूताः **अमृताः** मृतिरहिताः अक्षय्या इत्यर्थः । एवम्भूताः **स्वसारः** सहजन्मानः दिव्याः शक्तयः **सहोभिः** स्वकीयैर्बलैः **पुरु सहस्रा** असंख्यातानि **व्रताः** व्रतानि कर्माणि, इन्द्रेण यजमानाय कृतानि क्रियमाणानि च **रक्षन्ते** पालयन्ति, अपि च ताः **पत्नीः** पत्न्यः पालयित्र्यः **अह्रयाणम्** अह्रीतयानं प्रगल्भगतिकं इन्द्रं **जनयो न** देवपत्न्य इव **दुवस्यन्ति** परिचरन्ति । **अवनीः** अवतेः करणे अनिप्रत्ययः । **दुवस्यन्ति–** परिचरणकर्मा दुवस्यतिः । **अह्रयाणम्–** 'ह्री लज्जायां, श्लोरभावश्छान्दसः, व्यत्ययेन शानच् इत्येकः पक्षः । अह्रम् इति ह्रीरहितमित्यर्थे छान्दसः प्रयोगः, तथाभूतं यानं गमनं यस्य तम् । 'अह्रयाणोऽह्रीतयानः' इति यास्कः ।।

।। इति प्रथमाष्टके पञ्चमाध्याये द्वितीयो वर्गः ।।

## ।। अथ तृतीयो वर्गः ।।

### ऋक्संहिता पदपाठसहिता

**सनायुवो नमसा नव्यो अर्कैर्वसूयवो मतयो दस्म दद्रुः ।**
**पतिं न पत्नीरुशतीरुशन्तं स्पृशन्ति त्वा शवसावन्मनीषाः ।। ११ ।।**

**सनाऽयुवः । नमसा । नव्यः । अर्कैः । वसुऽयवः । मतयः । दस्म । दद्रुः । पतिम् । न । पत्नीः । उशतीः । उशन्तम् । स्पृशन्ति । त्वा । शवसाऽवन् । मनीषाः ।।**

**स्कन्द–** अत्रैकवाक्यताप्रसिद्ध्यर्थं यत्तच्छब्दावध्याहर्तव्यौ । यस्त्वम् **नमसा** नमस्कारेण **नव्यः** स्तुत्यः । **अर्कैः** मन्त्रैश्च, तं **सनायुवः** चिरकामाः । **वसूयवः** धनकामाः **मतयः** अस्मदीयाः स्तुतयः । चिरं धनमिच्छन्त्योऽस्मदीयाः स्तुतय इत्यर्थः । यश्च स्तोतॄणां कामः स स्तुतिषु पूर्यते । किं कुर्वन्ति । उच्यते । हे **दस्म** । **दद्रुः** गच्छन्ति त्वां प्रति । गत्वा च **पतिम् न पत्नीः उशतीः उशन्तम् स्पृशन्ति त्वा** । त्वया सह सम्बध्यन्त इत्यर्थः । **शवसावन्! मनीषाः** हे शवसावन्! बलवन्! मनीषाः मनसैषणीयाः । अत्यन्तोत्कृष्टा इत्यर्थः । स्तुतिवचनो वा मनीषाशब्दः । मतय इत्येतेन च गमनसम्बन्धित्वेन स्तुतय उपात्ताः, न स्पर्शसम्बन्धित्वेनेत्येवमपुनरुक्तत्वम् ।। ११ ।।

**वेङ्कटमाधव–** चिरत्वमाश्रयन्त्य नवतरा नमस्कारेण अन्नैश्च धनकामा मम **मतयः** स्तुतयो मत्तः निर्गच्छन्ति । ततः ताः पतिम् इव पत्न्यः कामयमाना कामयमान! त्वा स्पृशन्ति बलवन् ।।

**मुद्गल–** हे **दस्म!** दर्शनीय इन्द्र! **अर्कैः** शस्त्ररूपैर्मन्त्रैः । **नमसा** नमस्कारेण यस्त्वम् **नव्यः** स्तुत्यो भवसि । **सनायुव** सनातनम् अग्निहोत्रादि नित्यकर्म आत्मन इच्छन्तः **वसूयवः** धनमिच्छन्तः, **मतयः** मेधाविनः त्वाम् **दद्रुः** बहुना प्रयासेन जग्मुः । हे **शवसावन्!** बलवन् इन्द्र! तैः प्रयुक्ताः **मनीषाः** स्तुतयः **त्वा** त्वाम् **स्पृशन्ति** प्राप्नुवन्ति । दृष्टान्तः– **उशतीः** उशंत्यः कामयमानाः, **पत्नीः** पत्न्यः, **उशन्तम्** कामयमानम् **पतिम् न** यथा पतिं सम्भजन्ते तद्वत् ।। ११ ।।

**सायण–** हे **दस्म** दर्शनीयेन्द्र! **अर्कैः** शस्त्ररूपैर्मन्त्रैः **नमसा** नमस्कारेण यस्त्वं **नव्यः** स्तुत्यो भवसि । **सनायुवः** सनातनम् अग्निहोत्रादि नित्यं कर्म आत्मन इच्छन्तः **वसूयवः** वसु धनमात्मन इच्छन्तो धनकामा वा **मतयः** मेधाविनस्त्वां **दद्रुः** बहुना प्रयासेन जंग्मुः । हे **शवसावन्** बलवन्निन्द्र! तैः प्रयुक्ताः **मनीषाः** स्तुतयः **त्वा** त्वां **स्पृशन्ति** प्राप्नुवन्ति । तत्र दृष्टान्तः। **उशतीः** उशत्यः कामयमानाः **पत्नीः** पत्न्यः **उशन्तं** कामयमानं **पतिं न** यथा पतिं सम्भजन्ते तद्वत् । **सनायुवः** । 'सना' इत्येतदव्ययं नित्यत्वमाचष्टे । तेन च तद्वान् लक्ष्यते । सना सनातनं कर्म आत्मन इच्छन्तीति सनायुवः । 'क्याच्छन्दसि' इति उप्रत्ययः। जसि

वर्णव्यत्ययेन उत्वम् । **मतयः** । 'मन ज्ञाने' मन्यन्ते इति मतयः स्तोतारः । 'क्तिच्क्तौ च सञ्ज्ञायाम्' इति क्तिच् । 'न क्तिचि दीर्घश्च' इति निषेधे प्राप्ते बाहुलकात् 'अनुदात्तोपदेश' इत्यादिना अनुनासिकलोपः । चित्त्वादन्तोदात्तत्वम् । **दद्रुः** । 'द्रा कुत्सायां गतौ' लिटि उसि 'आतो लोप इटि च' इति आकारलोपः । **उशतीः** । 'वश कान्तौ'। लटः शतृ । अदादित्वात् शपो लुक् । शतुर्ङित्त्वात् 'ग्रहिज्या' इत्यादिना सम्प्रसारणम् । 'उगितश्च' इति ङीप् । 'शतुरनुमः' इति नद्या उदात्तत्वम् । 'वा छन्दसि' इति पूर्वसवर्णदीर्घः । **शवसावन्** । मतुपि आकारोपजनश्छान्दसः । यद्वा । मत्वर्थीय आवनिप् ।। ११ ।।

**सिद्धाञ्जनम्–** हे **दस्म** दर्शनीयेन्द्र! उचितोऽत्र सौन्दर्यार्थः, उत्तरार्धे 'उशतीरुशन्तम्' इति श्रवणात् । **अर्कैः** मन्त्रैः **नमसा** नमस्कारेण, सर्वथा प्रपदनेन यस्त्वं **नव्यः** स्तुत्यो भवति, तं त्वा **सनायवः** सनेत्यव्ययं नित्यत्वार्थे, नित्यं वस्तु नित्यत्वं वा आत्मन इच्छन्तः **वसूयवः** वसु सत्त्वात्मकं धनमात्मन इच्छन्तः **मतयः** मन्तारो ध्यातारो मेधाविनः **दद्रुः** प्रयासेन जग्मुः, त्वयि सक्ता भवन्तीत्यर्थः, द्रातिर्गत्यर्थः । हे **शवसावन्** बलवन्निन्द्र! **मनीषाः** मनस ईषयित्र्यः बुद्धयः, तल्लक्षिताः स्तुतयो वा **त्वा** त्वां **स्पृशन्ति** त्वयि लगन्तीत्यर्थः । तत्र दृष्टान्तः-**उशतीः** उशत्यः कामयमानाः **पत्नीः** पत्न्यः **उशन्तम्** कामयमानं **पतिम् न** यथा भर्तारं सम्भजन्ते तद्वत् । **सनायुवः** सना सनातनं वस्तु कर्म ज्ञानं वा आत्मन इच्छन्ति, 'क्याच्छन्दसि' इत्युप्रत्ययः, जसि वर्णव्यत्ययेन उत्वम् । **मतयः**-'मन ज्ञाने' क्तिच् । **दद्रुः**-द्रातिर्गत्यर्थः, लिट् । **उशतीः**- 'वश कान्तौ' लटः शतृ । **शवसावन्**-मतुपि आकारोपजनश्छान्दसः ।। ११ ।।

## ऋक्संहिता पदपाठसहिता

**सनादेव तव रायो गभस्तौ न क्षीयन्ते नोप दस्यन्ति दस्म ।**
**द्युमाँ असि क्रतुमाँ इन्द्र धीरः शिक्षा शचीवस्तव नः शचीभिः ।। १२ ।।**
सनात् । एव । तव । रायः । गभस्तौ । न । क्षीयन्ते । न । उप । दस्यन्ति । दस्म ।
द्युऽमान् । असि । क्रतुऽमान् । इन्द्र । धीरः । शिक्ष । शचीऽवः । तव । नः । शचीभिः ।।

**स्कन्द– सनात्** चिरात् एव प्रभृति, **तव रायः** धनानि **गभस्तौ** बाहुनामैतत् (तु.निष. २,४) । तत्सम्बन्धात्त्विह हस्ते वर्तते । सप्तमीनिर्देशाच्च स्थितानीति वाक्यशेषः । हस्ते स्थितानि । **न क्षीयन्ते नोपदस्यन्ति** क्षयस्य समीपीभवन्ति **दस्म!** तव यानि धनानि तानि

नेदानीं क्षीयन्ते, नाप्यागामीति काले इत्यर्थः । किञ्च **द्युमान्** दीप्तिमान् **असि क्रतुमान्** कर्मवांश्च हे **इन्द्र! धीरः** प्रज्ञावांश्च । य ईदृशोऽ(स्ति)सि तं ब्रूमः– **शिक्ष** देहि । **हे शचीवः** कर्मवन् प्रज्ञावन् वा । **नः** अस्मभ्यम् तव **शचीभिः** कर्मभिः यागाख्यैर्हेतुभूतैः । यस्मात्त्वां यजामहे तस्मादित्यर्थः ।। १२ ।।

**वेङ्कटमाधव–** चिरात् एव तव धनानि हस्तस्थितानि न च नश्यन्ति, न च न्यूनीभवन्ति दर्शनीय । दीप्तिमान् असि कर्मवांश्च इन्द्र धृष्ट । प्रयच्छ कर्मवन् तव प्रज्ञाभिः अस्मभ्यम् ।।

**मुद्गल– हे दस्म!** दर्शनीय! इन्द्र! **तव गभस्तौ** तव हस्तौ, **सनात्** एव चिरकालादारभ्य स्थितानि **रायः** धनानि, **न क्षीयन्ते** न विनश्यन्ति, **न उप दस्यन्ति** च । स्तोतृभ्यो दत्तेऽपि त्वद्धस्तगतं धनम् उपक्षयं न प्राप्नोति, अपि तु वर्धते । हे **इन्द्र! धीरः** बुद्धिमान् त्वम् **द्युमान्** दाप्तिमान् (**क्रतुमान्**)लोकरक्षणहेतुभूतकर्मयुक्तोऽसि । हे **शचीवः**! कर्मवन् इन्द्र! **तव शचीभिः** त्वदीयैः कर्मभिः, **नः** अस्मभ्यं धनम् **शिक्ष** देहि ।। १२ ।।

**सायण–** हे **दस्म** दर्शनीयेन्द्र! गभस्तिरिति बाहुनाम । **तव गभस्तौ** हस्ते **सनादेव** चिरकालादारभ्य स्थितानि **रायः** धनानि **न क्षीयन्ते** न विनश्यन्ति । **नोप दस्यन्ति** च स्तोतृभ्यो दत्तेऽपि त्वद्धस्तगतं धनमुपक्षयं न प्राप्नोति अपि तु वर्धते । हे **इन्द्र! धीरः** बुद्धिमान् धृष्टो वा त्वं **द्युमान्** दीप्तिमान् **असि** । तथा **क्रतुमान्** लोकरक्षणहेतुभूतकर्मयुक्तोऽसि । हे **शचीवः** कर्मवन्निन्द्र! **तव शचीभिः** त्वदीयैः कर्मभिः **नः** अस्मभ्यं धनं **शिक्ष** देहि । शिक्षतिर्दानकर्मा । **क्षीयन्ते** । 'क्षीञ् हिंसायाम्' । अस्मात् कर्मकर्तरि कर्मवद्भावात् यगात्मनेपदे । 'वत्करणं स्वाश्रयमपि यथा स्यात्' (का.३.१.८७) इति कर्तृवद्भावात् 'अचः कर्तृयकि' (पा.सू.६. १.१९५) इत्याद्युदात्तत्वम् । 'चादिलोपे विभाषा' इति निघातप्रतिषेधः । **शचीवः** । शची अस्यास्तीति शचीवान् । 'छन्दसीरः' इति मतुपो वत्वम् । सम्बुद्धौ मतुवसो रुः' इति नकारस्य रुत्वम् ।। १२ ।।

**सिद्धाञ्जनम्–** हे **दस्म** दर्शनीयेन्द्र! **तव गभस्तौ** तव हस्ते **सनादेव** चिरकालादेव स्थितानि **रायः** धनानि **न क्षीयन्ते** न क्षयमाप्नुवन्ति । अनश्वराणि हि इन्द्रधनान्यलौकिकानि । **नोप-दस्यन्ति** नोपक्षयं गच्छन्ति, भक्तेभ्यो दत्तेष्वपि तेषु धनेषु नोपक्षयं प्राप्नुवन्ति, न ह्रासं गच्छन्ति ।

हे **इन्द्र! धीरः** धीमान् त्वं **द्युमान् असि** दीप्तिमान् भवसि, तथा **क्रतुमान्** प्राज्ञदृढसङ्कल्पयुक्तो भवसि। हे **शचीवः** शचीयुक्त, शक्तिमन् **तव शचीभिः** त्वदीयाभिः शक्तिभिः **नः** अस्मान् **शिक्ष** शिक्षय ग्राहय वेदितव्यानीति शेषः । **शिक्षा–** 'शिक्ष विद्योपादाने' अन्तर्भावितण्यर्थः, 'शिक्ष धनं देहि' इति सायणः ।। १२ ।।

## ऋक्संहिता पदपाठसहिता

**सनायते गोतम इन्द्र नव्यमतक्षद्ब्रह्म हरियोजनाय ।**
**सुनीथाय नः शवसान नोधाः प्रातर्मक्षू धियावसुर्जगम्यात् ।। १३ ।।**
**सनाऽयते । गोतमः । इन्द्र । नव्यम् । अतक्षत् । ब्रह्म । हरिऽयोजनाय । सुऽनीथाय । नः । शवसान । नोधाः । प्रातः । मक्षु । धियाऽवसुः । जगम्यात् ।। १३ ।।**

**स्कन्द– सनायते** चिरं कामयमानाय तुभ्यम् । **गोतमः!** सोऽयमित्यभिसम्बन्धात् पितृशब्दोऽयं पुत्रे प्रयुक्तः । गोतमपुत्र हे **इन्द्र! नव्यम्** नवम् अन्यैः स्तोतृभिरकृतपूर्वम् **अतक्षत्** 'तक्षतिः करोतिकर्मा' (या.४,१९) व्यत्ययेन च उत्तमपुरुषस्य स्थाने प्रथमपुरुषः । अकार्षं स्तुतिलक्षणम् ब्रह्म । कीदृशाय मह्यम् । उच्यते । **हरियोजनाय सुनीथाय** सुस्तुतये च । **नः** प्रथमैकवचनस्य स्थाने द्वितीयाबहुवचनमेतत् । अहं, हे **शवसान!** शत्रून् प्रति गन्तः! बलवतामाचारवन्! वा, **नोधाः** नामर्षिः । परस्तु पादः प्रत्यक्षः कृतः भिन्नं वाक्यमुक्तार्थश्च ।।

**वेङ्कटमाधव–** चिरन्तनत्वमनुपालयते । **गोतमः नोधाः इन्द्र!** तुभ्यं नवतरं स्तोत्रम् अकरोत् । अश्वान् यो योजयति गमनाय । शोभननयनाय अस्माकं बलाचरणशील! अन्त्योपसंहारार्था । उपान्त्यया धनमाशास्ते । धनार्थाः स्तुतयः इत्युवाच– 'सनायुवो नमसा' (ऋ.१,६२,११) इति ।। १३ ।।

**मुद्गल–** स इन्द्रः **सनायते** नित्य इवाचरति, सर्वेषामाद्यो भवति । हे **शवसान!** बलवन्! **इन्द्र! हरियोजनाय** हरी अश्वौ रथे योजयतीति हरियोजनः । **सुनीथाय** सुष्ठु नेत्रे । एवम्भूताय तस्मै तुभ्यम् **गोतमः** गोतमस्य ऋषेः पुत्रः **नोधाः** ऋषिः **नव्यम्** नूतनम् **ब्रह्म** एतत्सूक्तरूपं **स्तोत्रम् नः** अस्मदर्थम् **अतक्षत्** अकरोत् । अतोऽस्माभिरनेन स्तोत्रेण स्तुतः सन् **धिया** बुद्ध्या प्राप्तवसुरिन्द्रः प्रातःकाले **मंक्षु** शीघ्रम् **जगम्यात्** आगच्छतु ।। १३ ।।

**सायण–** स इन्द्रः **सनायते** नित्य इवाचरति सर्वेषामाद्यो भवति । हे **शवसान** बलवन् **इन्द्र! हरियोजनाय** हरी अश्वौ रथे योजयतीति हरियोजनः । **सुनीथाय** सुष्ठु नेत्रे । एवम्भूताय तस्मै तुभ्यं **गोतमः** गोतमस्य ऋषेः पुत्रः **नोधाः** ऋषिः **नव्यं** नूतनं **ब्रह्म** एतत्सूक्तरूपं स्तोत्रं **नः** अस्मदर्थम् **अतक्षत्** अकरोत् । अतोऽस्माभिरनेन स्तोत्रेण स्तुतः सन् **धिया** बुद्ध्या कर्मणा वा प्राप्तवसुरिन्द्रः प्रातःकाले एव **मंक्षु** शीघ्रं **जगम्यात्** आगच्छतु ।। **सनायते** । सना इति निपातो नित्यशब्दसमानार्थः । तस्मादाचारार्थे क्यप्रत्ययः। **सुनीथाय** । 'णी प्रापणे' इत्यस्मात् औणादिकः थक्प्रत्ययः । थाथादिस्वरः ।। १३ ।।

**सिद्धाञ्जनम्–** **सनायते** सनायमानाय नित्य इवाचरते, सनेति निपातो नित्यशब्दसमानार्थः, क्याङ् व्यत्ययेन शत, **हरियोजनाय** हर्योः अश्वयोः योजनं योगो यस्य तस्मै हरिनामकाश्वयुक्ताय **सुनीथाय** सुष्ठु नेत, एवंभूताय तुभ्यं हे इन्द्र, **शवसान** बलवन्, **गोतमः** गोमत्तमः, गोतमस्यर्षे पुत्रो वा **नोधाः** नवनं स्तोत्रं दधानः, नोधःसंज्ञक ऋषिः **नव्यम्** नूतनं **ब्रह्म** मन्त्रात्मकं एतत् सूक्तं **नः** यजमानलोकायेत्यर्थः **अतक्षत्** अकरोत् । **प्रातर्मंक्षू** इत्यादि व्याख्यातम् ।। **सुनीथाय** नयतेः औणादिकः थक् ।। १३ ।।

**।। इति प्रथमस्य पञ्चमे तृतीयो वर्गः ।।**

## ।। अथ चतुर्थो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

**(सूक्तम् ६३)**

**९ नोधा गौतमः । इन्द्रः । त्रिष्टुप् ।**

**त्वं महाँ इन्द्र यो ह शुष्मैर्द्यावा जज्ञानः पृथिवी अमे धाः ।**
**यद्ध ते विश्वा गिरयश्चिदभ्वा भिया दृळ्हासः किरणा नैजन् ।। १ ।।**

**त्वम् । महान् । इन्द्र । यः । ह । शुष्मैः । द्यावा । जज्ञानः । पृथिवी इति । अमे । धाः । यत् । ह । ते । विश्वा । गिरयः । चित् । अभ्वा । भिया । दृळ्हासः । किरणाः । न । ऐजन् ।। १ ।।**

**स्कन्द–** **त्वम् महान्** हे इन्द्र, **यः ह शुष्मैः** हशब्दः पदपूरणः । यः आत्मीयैर्बलैः

**द्यावा पृथिवी जज्ञानः** जायमानः । जन्मन एव प्रभृतीत्यर्थः । **अमे,** भयमिह अमशब्देनोच्यते । 'सेनेव सृष्टामं दधाति' (ऋ.१,६६,४) इति यथा । भये, **धाः** दधासि । जन्मन एव प्रभृति द्यावापृथिव्योर्भयमुदपीपद इत्यर्थः । **यत्** यस्य । षष्ठ्या अत्र लुक् । ह पादपूरणः चार्थे वा । यस्य ते, **विश्वा** सर्वाणि भूतानि, **गिरयः चित्** चिच्छब्दश्चार्थे । पर्वताश्च **अभ्वा भिया** 'अभ्वः' (निघ.३,३) इति महन्नाम । महता भयेन **दृळ्हासः** गिरीणामिदं विशेषणम् । दृढा अपि सन्तो गिरयः । **किरणा न ऐजन्** 'किरणा' (निघ.१,५) इति रश्मिनाम । एजृ कम्पने । यथोदकेऽन्यत्र वा आदित्यस्य रश्मयः कम्पन्ते तद्वत् कम्पन्त इत्यर्थः । तदेतत् पुरस्तादप्युक्तम्– 'अस्येदु भिया गिरयश्च' (ऋ.१,६१,१४) इति ।। १ ।।

**वेङ्कटमाधव– त्वम् महान्** इन्द्र! यः खलु बलैः **द्यावा पृथिवी** प्रादुर्भवन् भये अधा । यस्माच्च तव गिरय अपि व्याप्तेन महता भयेन दृढा अपि रश्मय इव चलनस्वभावाः कम्पन्ते । 'स त्वं' महानिति ।। १ ।।

**मुद्गल–** 'त्वं महान्' इति नवर्चं षष्ठं सूक्तम् । नोधा ऋषिः । त्रिष्टुप् छन्दः । इन्द्रो देवता ।।

हे **इन्द्र! त्वम् महान्** गुणैः सर्वाधिको भवसि । **यः** ह यः खलु त्वम् **अमे** असुरकृते भये सति **जज्ञानः** तदानीमेव प्रादुर्भूतः सन् **शुष्मैः** शत्रूणां शोषकैरात्मीयैर्बलैः **द्यावा पृथिवी** द्यावापृथिव्यौ **धाः** अधारयः । तादृशाद्भयात् अमूमुच इत्यर्थः । किञ्च **यत् ह ते** यस्य खलु तव सम्बन्धिन्या **भिया** भीत्या **विश्वा** विश्वानि व्याप्तानि यानि भूतजातानि **गिरयः चित्** ये च शिलोच्चयाः, **अभ्वा** अन्यान्यपि महान्ति यानि सन्ति, सर्वेऽपि **दृळ्हासः** दृढा अपि **ऐजन्** अकम्पन्त । दृष्टान्तः । **किरणाः न** यथा सूर्यरश्मय इतस्ततो नभसि कम्पन्ते तद्वत् ।।१।।

**सायण–** हे **इन्द्र त्वं महान्** गुणैः सर्वाधिको भवसि । **यो ह** यः खलु त्वम् **अमे** असुरकृते भये सति **जज्ञानः** तदानीमेव प्रादुर्भूतः सन् **शुष्मैः** शत्रूणां शोषकैरात्मीयैर्बलैः **द्यावा पृथिवी** द्यावापृथिव्यौ **धाः** अधारयः। तादृशाद्भयात् अमूमुचः इत्यर्थः । किञ्च **यद्ध ते** यस्य खलु तव सम्बन्धिन्या **भिया** भीत्या **विश्वा** विश्वानि व्याप्तानि यानि भूतजातानि **गिरयश्चित्** ये च शिलोच्चयाः । **अभ्वा** । महन्नामैतत् । अन्यान्यपि महान्ति यानि सन्ति तेऽपि सर्वे **दृळ्हासः**

दृढा अपि **ऐजन्** अकम्पिषत । तत्र दृष्टान्तः । **किरणा न** यथा सूर्यरश्मय इतस्ततो नभसि कम्पन्ते तद्वत् । **जज्ञानः** । 'जनी प्रादुर्भावे' । लिटः कानच् । 'गमहन' इत्यादिना उपधालोपः । स्थानिवद्भावात् द्विर्भावादि । 'चितः' इत्यन्तोदात्तत्वम् । द्यावापृथिवी इत्यस्य समस्तपदस्य मध्ये जज्ञान इत्यस्य पाठः छान्दसः । **यत्** 'सुपां सुलुक्' इति षष्ठ्या लुक् । **अभ्वा** । आ समन्ताद्भवन्ति मद्भावं प्राप्नुवन्तीति अभ्वा महान्तः । आङ्पूर्वात् भवतेः औणादिको इन्प्रत्ययः । उपसर्गस्य ह्रस्वत्वं च । यद्वा । नञ्पूर्वाद् भवतेः प्राप्त्यर्थात् 'नञि भुवो डित्' इति क्वन्प्रत्ययः । महान्तो हि प्राप्तुं न शक्यन्ते । 'शेश्छन्दसि बहुलम्' इति शेर्लोपः । **किरणाः** । कीर्यन्ते विक्षिप्यन्ते इति किरणाः । 'कॄ विक्षेपे' । 'कॄपृवृजिमन्दिनिधाञ्भ्यः क्युः' (उ.सू.२. २३९) इति क्युप्रत्ययः । योरनादेशे प्रत्ययाद्युदात्तत्वम् । 'ऋत इद्धातोः' इति इत्वम् । **ऐजन्** । 'एजृ कम्पने' । लङि आडागमः । स चोदात्तः । वृद्धिश्च ।। १ ।।

**सिद्धाञ्जनम्–** 'त्वं महान्' इति नवर्चं षष्ठं सूक्तं नोधस आर्षं त्रैष्टुभमैन्द्रम् । अनुक्रम्यते च– 'त्वं नव' इति । समूळ्हे दशरात्रे द्वितीये छन्दोमे मरुत्वतीयशस्त्रे एतत्सूक्तम् । 'विश्वजितोऽग्निं नरः' इति खण्डे सूत्रितं- 'तां सु ते कीर्तिं त्वं महाँ इन्द्र यो ह' (आश्व.श्रौ. ८.७) इति ।।

हे **इन्द्र, त्वम् महान्** प्रभावेण सर्वाधिकोऽसि । **यो ह** यः खलु **शुष्मैः** स्वकीयैः बलैः **जज्ञानः** प्रादुर्भूतः सन् **द्यावा पृथिवी** द्यावापृथिव्यौ **अमे** स्वीये बले **धाः** अधारयः । ऊर्ध्वाधरचित्कक्ष्याभूमौ द्यावापृथिव्यौ सुप्रतिष्ठे विधत्ते । यजमानाय प्रादुर्भावमात्रेणेन्द्र इति तत्त्वम् । किञ्च **यत् ह ते** यस्य खलु तव सम्बन्धिन्या **भिया** भीत्या **विश्वा** सर्वाणि भूतजातानि **गिरयश्चित्** शिलोच्चयाश्च **अभ्वा** बलेन महान्ति यान्यन्यानि सन्ति तानि च **दृळ्हासः** उक्ताः सर्वे दृढा अपि **ऐजन्** अकम्पन्त, कम्पन्ते इति सार्वकालिकं तत्त्वम् । तत्र दृष्टान्तः– **किरणाः न** कीर्यमाणाः विक्षिप्यमाणा रश्मयो यथा कम्पन्ते तद्वत्, रेणव इव कम्पन्ते दृढान्यपि वस्तूनीत्यर्थः। इन्द्रबलेन भयाद् रोदस्योः कम्पः पृथिव्याः दृढीकरणं दिवः स्तम्भनमित्येवंजातीयकं इन्द्रमहिमानुवर्णनं विशेषतां योजातीयसूक्ते द्रष्टव्यम् (२.१२) ।। **जज्ञान** 'जनी प्रादुर्भावे, लिटः कानच् । **द्यावापृथिवी**- समासमध्ये पाठश्छान्दसः। **अभ्वा**- महन्नाम, बलमहत्त्वे प्रयोगः । **किरणाः**- 'कॄ-विक्षेपे' क्युप्रत्ययः । **ऐजन्**- 'एजृ कम्पने, लङ् ।। १ ।।

## ऋक्संहिता पदपाठसहिता

**आ यद्धरी इन्द्र विव्रता वेरा ते वज्रं जरिता बाह्वोर्धात् ।**
**येनाविहर्यतक्रतो अमित्रान्पुर इष्णासि पुरुहूत पूर्वीः ।। २ ।।**
**आ । यत् । हरी इति । इन्द्र । विऽव्रता । वेः । आ । ते । वज्रम् । जरिता । बाह्वोः । धात् । येन । अविहर्यतक्रतो इत्यविहर्यतऽक्रतो । अमित्रान् । पुरः । इष्णासि । पुरुऽहूत । पूर्वीः ।। २ ।।**

**स्कन्द–** **आ यत्** । यदिति व्यत्ययेन नपुंसकता । यश्च **हरी** प्रति हे **इन्द्र!** । कीदृशौ । **विव्रता** विविधकर्माणौ **आ वेः** वेतेर्गतिकर्मणः विदेर्वा ज्ञानार्थस्येदं रूपम् । रथे योक्तुमागच्छसि वेत्सि वेत्यर्थः । यस्य च **ते वज्रम् जरिता** स्तोता । **बाह्वोः** बाहुसम्बन्धाद्धस्तावत्र 'बाहु-शब्देनोच्येते । हस्तयोः **आ धात्** आधत्ते । स्तुतिभिश्च स्तोता शत्रुवधार्थं हस्ताभ्यां ग्राहयतीत्यर्थः । अथवा भिन्नमेव वाक्यं पूर्वानपेक्षम् । **यद्धरी** इति तु यच्छब्दो यदाशब्दस्यार्थे । तच्छ्रुतेश्च तदेत्यध्याहर्तव्यम् । यदा रथे हरी योक्तुं प्रत्यागच्छसि तदा ते वज्रं जरिता हस्तयोराधत्ते इति । तेन वज्रेण किं क्रियते । उच्यते । **येन ह अविहर्यतक्रतो!** हर्यतिः कान्तिकर्मा (तु.निघ. २,६)) । अविगतो हर्यतः कामो यस्य सोऽविहर्यतकामवान् । क्रतुरिति यज्ञ(वज्र)नाम । अविहर्यतः क्रतुर्यस्य सोऽविहर्यतक्रतुः । स्तुतीर्हवींषि च प्रति कामयमानचित्त इत्यर्थः । अथवा 'हर्यतिः प्रेप्साकर्मा' (या.७,१७) । प्राप्तुमशक्यत्वात् अप्रेप्सनीयः क्रतुः प्रज्ञा कर्म वा यस्य सोऽविहर्यतक्रतुः, तस्य सम्बोधनं हे अविहर्यतक्रतो! । **अमित्रान्, पुरः** नगराणि चैषाम् **इष्णासि** 'इषु आभीक्ष्ण्ये' । हननविषयं चात्राभीक्ष्ण्यमभिप्रेतम् । अभीक्ष्णं हिंसीत्यर्थः । हे **पुरहूत** । **पूर्वीः** पुरामिदं विशेषणम् । चिरन्तनीः पुरः ।। २ ।।

**वेङ्कटमाधव–** यदा **इन्द्र!** विविधकर्माणावश्वौ रथे योजयसि, तदनन्तरमेव आदधाति तव **बाह्वोः** स्तोता, वज्रं स्तुत्या । येन वज्रेण अबाधितकर्मन् । **अमित्रान्** तत्पुरश्च बह्वीः प्रेरयसि पुरुहूत! ।। २ ।।

**मुद्गल–** हे **इन्द्र!** त्वम् **यत्** यदा **विव्रता** विविधकर्माणौ **हरी** त्वदीयाश्वौ **आ वेः** रथे आगमयसि । रथे योजयसीत्यर्थः । तदानीं **ते** तव **बाह्वोः** हस्तयोः **जरिता** स्तोता **वज्रम्, आ धात्** स्तोत्रेण स्थापयति । स्तोत्रा स्तुते प्रयत्नमन्तरेण वज्रं त्वद्धस्ते दृश्यत इत्यर्थः ।

हे **अविहर्यतक्रतो!** प्रेप्सितकर्मन्! इन्द्र! **अमित्रान्** शत्रून् येन वज्रेण **इष्णासि** अभिगच्छसि। हे **पुरुहूत!** पुरुभिर्यजमानैराहूत! त्वम् **पूर्वीः** बह्वीः **पुरः** असुरपुराणि भेत्तुमभिगच्छसीत्यर्थः ।।

**सायण–** हे **इन्द्र** त्वं **यत्** यदा **विव्रता** विविधकर्माणौ **हरी** त्वदीयावश्वौ **आ वेः** रथे आगमयसि रथं(थे) योजयसीत्यर्थः । तदानीं **ते** तव **बाह्वोः** हस्तयोः **जरिता** स्तोता **वज्रम्, आ धात्** स्तोत्रेण स्थापयति । स्तोत्रा स्तुते प्रयत्नमन्तरेण वज्रं त्वद्धस्ते दृश्यते इत्यर्थः । हे **अविहर्यतक्रतो** प्रेप्सितकर्मन्निन्द्र! **अमित्रान्** शत्रून् **येन** वज्रेण **इष्णासि** अभिगच्छसि । हे **पुरुहूत** पुरुभिर्बहुभिर्यजमानैराहूत! त्वं **पूर्वीः** बह्वीः **पुरः** असुरपुराणि भेत्तुमभिगच्छसीत्यर्थः । **विव्रता** । व्रतमिति कर्मनाम । विविधं व्रतं ययोस्तौ । 'सुपां सुलुक्' इति पूर्वसवर्णदीर्घत्वम् । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । **वेः** । 'वी गतिप्रजनकान्त्यशनखादनेषु' । अन्तर्भावितण्यर्थात् छान्दसे लङि सिपि अदादित्वात् शपो लुक् । 'बहुलं छन्दस्यमाङ्योगेऽपि' इति अडभावः । **धात्** । दधातेः छान्दसे लुङि 'गातिस्था' इति सिचो लुक् । पूर्ववत् अडभावः । **अविहर्यतक्रतो** । 'हर्यतिः प्रेप्साकर्मा' (निरु.७.१७) इति यास्कः । 'हर्य गतिकान्त्योः' । कान्तिरभिलाषः । विहर्यतोऽनभिलषितः । अविहर्यतोऽभिलषित इत्यर्थः । तादृशः क्रतुः कर्म यस्य स तथोक्तः । **अमित्रान्** । न सन्ति मित्राण्येष्विति बहुव्रीहौ 'नञो जरमरमित्रमृताः' इत्युत्तरपदाद्युदात्तत्वम् । **इष्णासि** । 'इष आभीक्ष्ण्ये' । अत्र गत्यर्थः । 'क्र्यादिभ्यः श्ना'। सिपः पित्त्वादनुदात्तवे तस्यैव स्वरः शिष्यते । यद्वृत्तयोगादनिघातः ।। २ ।।

**सिद्धाञ्जनम्–** हे **इन्द्र यत्** यदा **विव्रता** विशिष्टकर्माणौ **हरी** अश्वौ त्वदीयौ **आ वेः** आगमयसि रथे योजनाय, तदा **जरिता** स्तोता **ते** तव **बाह्वोः** हस्तयोः **वज्रम्** आयुधम्, अद्रिभिदं शत्रुच्छिदं **आ धात्** अधात्, स्तोतुः स्तोत्रेण वज्रं ते हस्तगतं कर्मणे सिद्धं भवति । तादृशः स्तोत्रप्रभाव इन्द्रप्रोत्साहनपटुः । हे **अविहर्यतक्रतो!** अभिलषितकर्मन्, 'हर्यतिः प्रेप्साकर्मा' इति यास्कः, 'हर्य गतिकान्त्योः' कान्तिरभिलाषः । विहर्यतः अनभिलषितः अविहर्यतः अभिलषितः इति सायणः, एवं उभयथापि प्रेप्सितकर्मा अभिलषितकर्मा वा एकार्थ एव भवति शब्दः । **अविहर्यत** इत्यत्र हर्यतिक्रियायाः प्रतिषेधद्वयेन क्रूरमपि शत्रुवधादिकर्म प्रेप्सितं एवेत्यवधार्यते । अत्रैके नञर्थ एक एव भवति, वि इत्युपसर्गो विशिष्टार्थे ग्राह्य इति कृत्वा अनभिलषितकर्मा इन्द्रः, शत्रूणामिन्द्रस्य कर्म नेष्टमित्याहुः । सकृदेव प्रयोगोऽस्य, तस्माद् दुर्निर्णयार्थः। तथाभूतेन्द्र!

**अमित्रान्** शत्रून् येन वज्रेण **इष्णासि** अभिगच्छसि । हे **पुरुहूत** बहुभिराहूत! **पूर्वीः** बह्वीः **पुरः** पुर्यः, असुरपुराणि भेत्तुं अभिगच्छसि, तद्वज्रं जरिता बाह्वोरधादिति सम्बन्धः । **विव्रता**-विशिष्टं व्रतं कर्म ययोस्तौ विव्रतौ । **वेः**- 'वी गत्यादिषु' अदादिः, लङ् । **धात्**-दधातेः लुङ् । **इष्णासि**-आभीक्ष्ण्ये श्नाविकरणी इषधातुः, अत्र गत्यर्थः ॥ २ ॥

## ऋक्संहिता पदपाठसहिता

**त्वं स॒त्य इ॑न्द्र धृ॒ष्णुरे॒तान्त्वमृ॑भु॒क्षा नर्य॒स्त्वं षाट् ।**
**त्वं शुष्णं॑ वृ॒जने॑ पृ॒क्ष आ॒णौ यूने॒ कुत्सा॑य द्यु॒मते॒ सचा॑ह॒न् ॥ ३ ॥**

**त्वम् । स॒त्यः । इ॒न्द्र॒ । धृ॒ष्णुः । ए॒तान् । त्वम् । ऋ॒भु॒क्षाः । नर्यः॑ । त्वम् । षाट् ।**
**त्वम् । शुष्ण॑म् । वृ॒जने॑ । पृ॒क्षे । आ॒णौ । यूने॑ । कुत्सा॑य । द्यु॒ऽमते॑ । सचा॑ । अ॒ह॒न् ॥**

**स्कन्द– त्वम् सत्यः** अविसंवादी हे **इन्द्र! धृष्णुः** धर्षयिता च । साधु चाभिभवितेत्यर्थः । कान् । **एतान्** शत्रून् । **त्वम् ऋभुक्षाः** महान् । **नर्यः** नरेषु साधुः नरेभ्यो वा । नराणां चानुग्रहपर इत्यर्थः । **त्वम्** एव **षाट्** असुराभिभवनशीलः **त्वम्** एव **शुष्णम्** नामासुरम् **वृजने** ऋग्भिः वर्जनीये । बलनाम वा वृजनशब्दः (तु.निघ.२,९) । सामर्थ्याच्चात्रान्तर्णीतमत्वर्थः । **पृक्षे** शूरैः सम्पर्चनीये **आणौ** सङ्ग्रामनामैतत् (तु.निघ.२,१७) । सङ्ग्रामे **यूने कुत्साय द्युमते**, तादर्थ्य एताश्चतुर्थ्यः । यूनश्च दीप्तिमतश्च कुत्सनाम्न ऋषेरर्थाय । **सचा** सह कुत्सेनैव मरुद्भिर्वा **अहन्** हतवानसि ॥ ३ ॥

**वेङ्कटमाधव– त्वम्** सत्यकर्मा **इन्द्र!** धर्षयसि **एतान्** अमित्रान् । त्वम् महान् नृहितः । त्वम् सहसे सपत्नान् । त्वम् शुष्णासुरं शत्रूणां छेदके इतरेतरसम्पर्चने युद्धे **यूने कुत्साय** दीप्तिमते सहायभूतः हतवानसि ॥ ३ ॥

**मुद्गल– हे इन्द्र! त्वम् सत्यः** सत्सु भवः । सर्वोत्कृष्ट इत्यर्थः । **एतान्** शत्रून् अभिगतः सन् **धृष्णुः** तेषां धर्षयिता तिरस्कर्ता । किञ्च **त्वम् ऋभुक्षाः** ऋभूणामधिपतिः, **नर्यः** नेतृभ्यो हितः । तथा **त्वम् षाट्** शत्रूणामभिभविता, हन्तेत्यर्थः । किञ्च **वृजने** इत्यादीनि त्रीणि सङ्ग्रामनामानि । अत्र पूर्वे विशेषणे । **वृजने** वर्जनयुक्ते । सङ्ग्रामे हि वीराः पुरुषाः वर्ज्यन्ते हिंस्यन्ते । **पृक्षे** सम्पर्चनीये वीरैः योद्धुं प्राप्तव्ये । एवंविधे **आणौ** सङ्ग्रामे **द्युमते** दीप्तिमते

**यूने** तरुणाय **कुत्साय सचा** त्वं सहायो भूत्वा **शुष्णम्** शोषयितारम् एतत्संज्ञमसुरम् **अहन्** अवधीः ।। ३ ।।

**सायण–** हे **इन्द्र त्वं, सत्यः** सत्सु भवः सर्वोत्कृष्ट इत्यर्थः । **एतान्** शत्रूनभिगतः सन् **धृष्णुः** तेषां धर्षयिता तिरस्कर्ता । किञ्च त्वम् **ऋभुक्षाः** ऋभूणामधिपतिः । तेषु कृतनिवासो वा । यद्वा । महन्नामैतत् । महान् प्रवृद्धोऽसि । **नर्यः** नृभ्यो हितः। तथा **त्वं षाट्** शत्रूणाम् अभिभविता, हन्तेत्यर्थः । किञ्च **वृजने** इत्यादीनि त्रीणि सङ्ग्रामनामानि । अत्र पूर्वे विशेषणे । **वृजने** वर्जनयुक्ते । सङ्ग्रामे हि वीराः पुरुषा वर्ज्यन्ते हिंस्यन्ते । **पृक्षे** सम्पर्चनीये वीरैः योद्धुं प्राप्तव्ये । एवंविधे **आणौ** सङ्ग्रामे **द्युमते** दीप्तिमते **यूने** तरुणाय **कुत्साय सचा** त्वं सहायो भूत्वा **शुष्णं** शोषयितारमेतत्संज्ञमसुरम् **अहन्** अवधीः । **ऋभुक्षाः** । ऋभुरिति मेधाविनाम । उरु विस्तीर्णं भाति । यद्वा । ऋतेन यज्ञेन भाति भवतीति वा ऋभुः । उरुशब्दे ऋतशब्दे वोपपदे भातेर्भवतेर्वा 'मृगय्वादयश्च' (उ.सू.१.३८) इति कुप्रत्ययः पूर्वपदस्य ऋभावश्च निपात्यते। क्षयतिरैश्वर्यकर्मा । तेषामीष्टे इति ऋभुक्षाः । यद्वा । 'क्षि निवासगत्योः'। तेषु निवसतीति 'पतेस्थ' (उ.सू.४.४५२) इति विधीयमान इनिप्रत्ययो बहुलवचनादस्मादपि भवति । टिलोपश्च। सौ 'पथिमथ्यृभुक्ष्णामात्' (पा.सू.७.१.८५) इति आत्वम् । प्रत्ययस्वरः । **षाट्** । 'सह अभिभवे' । 'छन्दसि सहः' (पा.सू.३.२.१३) इति केवलादपि ण्विः । षत्वं छान्दसम् । **द्युमते** । द्यौर्दीप्तिरस्मिन्नस्तीति द्युमान् । 'स्वादिष्वसर्वनामस्थाने' इति पदसंज्ञायां 'दिव उत्' इति उत्वम् । 'ह्रस्वनुड्भ्यां मतुप्' इति मतुप उदात्तत्वम् ।। ३ ।।

**सिद्धाञ्जनम्–** हे **इन्द्र, त्वम् सत्यः** ध्रुवः, अव्यभिचरितकर्मेत्यर्थः । 'सत्सु भवः सर्वोत्कृष्टः' इति सायणः । **एतान्** एतेषां शत्रूणां, विभक्तिव्यत्ययः, **त्वम् धृष्णुः** धर्षयिता **ऋभृक्षाः** ऋभूणां अधिपतिः, ऋभुषु दिव्यशिल्पिषु इन्द्रसहकारिषु कृतनिवासो वा । **नर्यः** नृभ्यो हितः **त्वम् षाट्** साहयिता, शत्रूणामभिभविता असि । किञ्च, **वृजने** वर्जनयुक्ते हिंसनयुक्ते **पृक्षे** सम्पर्चनीये वीर्यैः प्राप्तव्ये **आणौ** सङ्ग्रामे, **द्युमते** दीप्तिमते **यूने** तरुणाय **कुत्साय** एतत्संज्ञकाय ऋषये, प्रागुक्तलक्षणप्रतिमानभूताय ऋषये **सचा त्वं** सहायो भूत्वा **शुष्णम्** शोषयितारम् असुरम् **अहन्** अवधीः । **ऋभुक्षाः–** ऋभवो विचारिताः (१.२०) क्षयतिरैश्वर्यकर्मा, तेषामीष्ट इति ऋभुक्षाः, 'क्षि निवासे' ऋभुषु क्षियति निवसतीति वा । **षाट्–** 'सह अभिभवे' छन्दसि सह इति केवलादपि ण्विः, षत्वं छान्दसम् ।। ३ ।।

## ऋक्संहिता पदपाठसहिता

**त्वं ह त्यदिन्द्र चोदीः सखा वृत्रं यद्वज्रिन्वृषकर्मन्नुभ्नाः ।
यद्ध शूर वृषमणः पराचैर्वि दस्यूँर्योनावकृतो वृथाषाट् ॥ ४ ॥**

**त्वम् । ह । त्यत् । इन्द्र । चोदीः । सखा । वृत्रम् । यत् । वज्रिन् । वृषऽकर्मन् । उभ्नाः । यत् । ह । शूर । वृषऽमनः । पराचैः । वि । दस्यून् । योनौ । अकृतः । वृथाषाट् ॥ ४ ॥**

**स्कन्द–** हशब्दः पदपूरणः । **त्वम्, त्यत्** तदा हे **इन्द्र! चोदीः** वृत्रवधाय चोदितवानसि । **सखा** द्वितीयाबहुवचनस्य स्थाने इदं प्रथमैकवचनम् । सखीन् मरुतः । अथवा प्रत्यक्षकृतत्वान्मन्त्रस्य सखेत्येतदव्यतिरिक्तप्रातिपदिकार्थप्रथमान्तं, यत्तच्छब्दावध्याहृत्य एकवाक्यत्वं नेयम् । यस्त्वं मरुतां सखा स चोदितवानसि । कम् । सामर्थ्यात् मरुतः । कदा । उच्यते । **वृत्रं, यत्** यदा हे **वज्रिन्** वृषकर्मन्! वृष्टिकर्मक । सर्वदैव वृष्टिकारिन् इत्यर्थः । **उभ्नाः** उभ उम्भ पूरणेऽन्यत्र । इह तु सामर्थ्याद्वधार्थः । हतवानसि । यदा च हे शूर! **वृषमणः** वृष्टिपरमनस्क! **पराचैः** अश्वतिर्गत्यर्थः । परागमनैः । तदीयस्थानप्राप्तिमात्रेणैवेत्यर्थः । **दस्यून् योनौ** स्वस्मिन्नवस्थाने स्थितान् **वि अकृतः** कृन्ततेर्वधकर्मण इदं रूपम् । विविधं हतवानसि । **वृथाषाट्** अव्यतिरिक्तप्रातिपदिकार्थप्रथमान्तत्वाद् यत्तच्छब्दावध्याहृत्यैकवाक्यता नेया । यस्त्वं **वृथाषाट्** अयत्नेनैवाभिभविता स यदा दस्यून् योनौ व्यकृत इति ॥ ४ ॥

**वेङ्कटमाधव–** त्वम् खलु तत् अचूचुदः सखा सन् सख्युः कुत्सस्य वर्तयितारं शुष्णम् । यदा **वज्रिन्** वर्षणशीलकर्मन्! वचोभिर्बाधकैः पूरितवानसि, यदा खलु शूर! वर्षणपरमनस्क! कुत्सस्य शत्रून् पराचीनान् कुत्सावासे विकृत्तवानसि अनायासेन शत्रूनभिभवन् । तदा शुष्णं त्वत्सहायाश्चाचूचुद इति ॥ ४ ॥

**मुद्गल–** हे इन्द्र! **त्वम् ह** त्वं खलु, **सखा** कुत्सस्य सहायः सन् **त्यत्** प्रसिद्धं धनं जयलक्षणम् **चोदीः** प्रेरितवान् । अकार्षीरित्यर्थः । हे **वृषकर्मन्!** वृष्ट्युदकसेचनरूपकर्मोपेत **वज्रिन्!** वज्रवन्! इन्द्र! वृत्रम् सर्वस्य धनस्याऽऽवरीतारं कुत्सस्य शत्रुम् **यत्** यदा उभ्ना अतुभ्नाः अहिंसीः । अपि च हे **शूर!** शत्रूणां प्रेरक! **वृषमणः!** कामाभिवर्षकमनस्क इन्द्र! **वृथाषाट्** अनायासेन शत्रूणामभिभविता, त्वम् **यत् ह** यदा खलु **योनौ** वीरैर्मिश्रणीये सङ्ग्रामे **दस्यून्**

कुत्सस्य उपक्षपयितॄन् अन्यान् शत्रून् **पराचैः वि अकृतः** पराङ्मुखा यथा भवन्ति तथा व्यच्छिनः। तदानीं कुत्सः सर्वं यशः प्राप्नोदित्यर्थः ।। ४ ।।

**सायण–** हे **इन्द्र! त्वं ह** त्वं खलु **सखा** कुत्सस्य सहायः सन् **त्यत्** तत् प्रसिद्धं धनं जयलक्षणं यशो वा **चोदीः** प्रेरितवान् अकार्षीरित्यर्थः । हे **वृषकर्मन्** वृष्ट्युदकसेचनरूपकर्मोपेत, **वज्रिन्** वज्रवन्निन्द्र! **वृत्रं** सर्वस्य धनस्यावरीतारं कुत्सस्य शत्रुं **यत्** यदा **उभ्नाः** अतुभ्नाः अहिंसीः । अपि च हे **शूर** शत्रूणां प्रेरक, **वृषमणः** कामाभिवर्षकमनस्केन्द्र! **वृथाषाट्** अनायासेन शत्रूणामभिभविता त्वं **यद्ध** यदा खलु **योनौ** वीरैर्मिश्रणीये सङ्ग्रामे **दस्यून्** कुत्सस्योपक्षपयितॄन् अन्यान् शत्रून् **पराचैः** परागमनैः **वि अकृतः** पराङ्मुखा यथा भवन्ति तथा व्यच्छिनः । तदानीं कुत्सः सर्वं यशः प्राप्नोदित्यर्थः । **चोदीः** 'चुद प्रेरणे' लुङि 'नेटि' (पा.सु.७.२.४) इति सिचि वृद्धिप्रतिषेधः । **उभ्नाः** 'णभ तुभ हिंसायाम्' । क्रैयादिकः । लङि सिपि तलोपश्छान्दसः । 'बहुलं छन्दस्यमाङ्योगेऽपि' इति अडभावः । **पराचैः** इत्येतदव्ययं नीचैरुच्चैरितिवत् इति भट्ट-भास्करमिश्रः । 'पराचैः पराञ्चनैः' (निरु.११.२५) इति निरुक्तम् । **दस्यून्** । 'दीर्घादटि समानपादे' इति नकारस्य रुत्वम् । 'अत्रानुनासिकः पूर्वस्य तु वा' इति उकारस्य सानुनासिकता । **अकृतः** 'कृती छेदने' । लङि सिपि तुदादित्वात् शप्रत्ययः । आगमानुशासनस्यानित्यत्वात् 'शे मुचादीनाम्' इति नुमागमस्याभावः । शस्य ङित्त्वाद् गुणाभावः ।। ४ ।।

**सिद्धाञ्जनम्–** हे **इन्द्र त्वम् ह** त्वं खलु **सखा** सहायः सन् कुत्सस्य, **त्यत्** तत् प्रसिद्धं अनिर्वाच्यं दिव्यं धनं **चोदीः** प्रेरितवानसि । हे **वृषकर्मन्** तेजोबलादिसेचनकर्मयुक्त, **वज्रिन्** वज्रवन्! **वृत्रम् आवरीतारं** सर्वस्यापि ज्योतिरादेर्दिव्यस्य धनस्य, अत एव यजमानप्रतिमान-भूतकुत्सस्य शत्रुं **यत्** यदा **उभ्नाः** अतुभ्नाः अहिंसीः, अपि च हे **शूर वृषमणः** दिव्यधनाभिवर्षक-मनोयुक्तेन्द्र! **वृथाषाट्** अनायासेन अभिभविता शत्रूणां, त्वं **यत् ह** यदा खलु **योनौ** स्वावासमूलस्थाने **दस्यून्** उपक्षपयितॄन् वृत्रबान्धवान् **पराचैः** परागमनैः व्यकृतः पराङ्मुखा यथा भवन्ति तथा व्यच्छिनः, तदानीं कुत्सः प्राप्तव्यं सर्वं प्राप्नोदित्यर्थः । **चोदीः** 'चुद प्रेरणे' लुङ् । **उभ्नाः** 'तुभ हिसायां' क्रैयादिकः, तलोपश्छान्दसः । **पराचैः** अव्ययं नीचैरुच्चैरितिवदिति भट्टभास्करमुदाहरति सायणः, 'पराचैः परागमनैः' इति यास्कः । **अकृतः** 'कृती छेदने' लङ्, नुमागमाभावश्छान्दसः ।। ४ ।।

## ऋक्संहिता पदपाठसहिता

**त्वं ह त्यदिन्द्रारिषण्यन्दृळ्हस्य चिन्मर्तानामजुष्टौ ।**
**व्य१स्मदा काष्ठा अर्वते वर्घनेव वज्रिञ्छ्नथिह्यमित्रान् ॥ ५ ॥**
**त्वम् । ह । त्यत् । इन्द्र । अरिषण्यन् । दृळ्हस्य । चित् । मर्तानाम् । अजुष्टौ । वि । अस्मत् । आ । काष्ठाः । अर्वते । वः । घनाऽइव । वज्रिन् । श्नथिहि । अमित्रान् ॥**

**स्कन्द–** य उक्तगुणः **त्वम्, त्यत्** व्यत्ययेनात्र नपुंसकता । सः त्वं हे इन्द्र! **अरिषण्यन्** अस्मानहिंसन् अस्मद्धिंसापरिहारार्थमित्यर्थः । दृळ्हस्यापि (दृढस्यापि) मेघस्य वृष्टिनिरोधेन **मर्तानाम्, अजुष्टौ** अप्रीतौ वर्तमानस्य स्वभूता । **अस्मत्** षष्ठ्यर्थे पञ्चम्येषा, अस्माकं स्वभूताय । **आ** मर्यादार्थोऽयम् । मर्यादया **काष्ठाः अर्वते** अश्वाय । अश्वग्रहणं चात्र कृत्स्नस्य द्विपदश्चतुष्पदश्चोपलक्षणार्थं द्रष्टव्यम् । यावत् किञ्चिदस्माकं स्वभूतं द्विपाच्चतुष्पाच्च सर्वस्यार्थायेत्यर्थः । **वि वः** विवृणु प्रकाशीकुरु । पातयेत्यर्थः । किञ्च **घनेव** यथा घनेन लोहकारो लोहं हन्ति तद्वत् । हे **वज्रिन्! श्नथिहि** वधकर्माऽयम् (तु.निघ.२,१९) । जहि अस्मदीयान् शत्रून् ॥ ५ ॥

**वेङ्कटमाधव– त्वम्** ह तत् **इन्द्र!** अहिंसन् दृढम् अपि पुरुषः मनुष्याणाम् अप्रीतौ । न हंसि मनुष्यहितमित्यर्थः । स त्वमद्य अस्माकं युद्धप्रवेशार्थमश्वानाम् दिश आ वि व । प्रवेशयाश्वान् सङ्गाममध्य इत्यर्थः । स त्वम् घनेन लोहपिण्डमिव **अमित्रान् श्नथिहि** कुरु नानादिक्कानिति ॥ ५ ॥

**मुद्गल–** हे **इन्द्र! त्वम् ह** खलु **त्यत्** तस्य **दृळ्हस्य चित्** दृढस्य कस्यचिदपि **अरिषण्यन्** रषणं हिंसनम् अनिच्छन् । एवंस्वभावो भवसि देवतात्वेनानुग्रहीतृत्वात् । तथापि **मर्तानाम्** स्तोतॄणाम् अस्माकं शत्रुभिः **अजुष्टौ** अप्रीतौ सत्याम् **अस्मत् अर्वते** अस्मदीयाश्वाय गन्तुम् **काष्ठाः** दिशः **आ समन्तात् वि वः** विवृताः कुरु । यथा सर्वासु दिक्षु अस्मदीया अश्वाः प्रतिरोधमन्तरेण गच्छन्ति तथा कुर्वित्यर्थः । किञ्च तत्रत्यान् **अमित्रान्** हे **वज्रिन्** वज्रवन् इन्द्र! **घनेव** कठिनेन पर्वतेनेव वज्रेण **श्नथिहि** जहीत्यर्थः ॥ ५ ॥

**सायण–** हे **इन्द्र त्वं ह** त्वं खलु **त्यत्** तस्य **दृळ्हस्य चित्** दृढस्य कस्यचिदपि **अरिषण्यन्** रेषणमनिच्छन् एवंस्वभावो भवसि । देवतात्वेनानुग्रहीतृत्वात् । तथापि **मर्तानां**

स्तोतॄणाम् अस्माकं शत्रुभिः **अजुष्टौ** अप्रीतौ सत्याम् **अस्मत् अर्वते** अस्मदीयाश्वाय गन्तुं **काष्ठाः** दिशः **आ** समन्तात् **वि वः** विवृताः कुरु । यथा सर्वासु दिक्षु अस्मदीया अश्वाः प्रतिरोधमन्तरेण गच्छन्ति तथा कुरु इत्यर्थः । किञ्च तत्रत्यान् **अमित्रान्** हे **वज्रिन्** वज्रवन्निन्द्र **धनेव** धनेन कठिनेन पर्वतेनेव वज्रेण **श्नथिहि** श्नथय जहीत्यर्थः । यद्वा । **मर्तानां** मनुष्याणां मध्ये यस्मिन् कस्मिंश्चित्तव अप्रीतौ सत्यां तस्य शत्रोर्दृढस्यापि **अरिषण्यन्** रेषणं हिंसनम् अनिच्छन् वर्तसे । यस्मिंस्तु कुत्सादौ प्रीतिरस्ति तस्य शत्रुवधं चकृषे । अतस्तव प्रियाणाम् अस्माकम् अर्वते इत्यादि पूर्ववत् । **त्यत्** 'सुपां सुलुक्' इति षष्ठ्या लुक् । **अरिषण्यन्** । रिष्टशब्दात् क्यचि 'दुरस्युर्द्रविणस्युर्वृषण्यति रिषण्यति' (पा.सू.७.४.३६) इति रिषणभावो निपात्यते । नञ्समासे अव्ययपूर्वपदप्रकृतिस्वरत्वम् । **अस्मत्**- पूर्ववत् षष्ठ्या लुक् । **अर्वते** । 'अर्वणस्त्रसावनञः' इति नकारस्य तकारादेशः । वनिप्सुपौ पित्वादनुदात्तौ । परिशेषात् धातुस्वरः । **घनेव** । 'मूर्तौ घनः' (पा.सू.३.३.७७) इति काठिन्ये गम्यमाने हन्तेः अप्प्रत्ययान्तो निपात्यते । **श्नथिहि** । श्नथः हिंसार्थः । ण्यन्तात् लोटि 'बहुलं छन्दसि' इति शपो लुक् ।। ५ ।।

**सिद्धाञ्जनम्**– हे **इन्द्र त्वम् ह** त्वं खलु **मर्तानाम्** मनुष्याणां मध्ये यस्मिन् कस्मिन् वा **अजुष्टौ** अप्रीतौ सत्यां, **त्यत्** तस्य, विभक्तिव्यत्ययः, **दृळ्हस्य चित्** अप्रह्वस्यापि तवाप्रियकारिणः शत्रुवत् स्थितस्यापीत्यर्थः । **अरिषण्यन्** रेषणं हिंसनम् अनिच्छन्नसि । सर्वानुग्रहकारकस्य देवराजस्य तवैष स्वभावः । तथापि ऋषीणां कुत्सादीनां तु साहाय्यं करोष्येव, तस्मात्, **अस्मत्** तव प्रियाणां यजमानानां कुत्सायमानानाम् अस्माकं, न तु **मर्तानाम्** केवलानां, **अर्वते** अश्वाय गन्तुं **काष्ठाः** दिशः **आ वि वः** समन्तात् विवृताः कुरु, यथा सर्वासु दिक्षु अस्मदीयाश्वाः भोगक्रियासमर्थप्राणबलात्मानः निष्प्रतिरोधं गच्छन्ति व्याप्नुवन्ति तथा कुरु । अपि च हे **वज्रिन्** वज्रवन्! **अमित्रान्** तत्र दिक्षु व्यापृतान् शत्रून् **घना इव** घनेन कठिनेन दण्डादिनेव वज्रेण **श्नथिहि** श्नथय जहि । **(अ)रिषण्यन्** रिष्टशब्दात् क्यच्, रिषणभावो निपातितः ।। ५ ।।

।। इति प्रथमाष्टके पञ्चमाध्याये चतुर्थो वर्गः ।।

## ।। अथ पञ्चमो वर्गः ।।

### ऋक्संहिता पदपाठसहिता

**त्वां ह त्यदिन्द्रार्णसातौ स्वर्मीळ्हे नर आजा हवन्ते ।**
**तव स्वधाव इयमा समर्य ऊतिर्वाजेष्वतसाय्या भूत् ।। ६ ।।**
**त्वाम् । ह । त्यत् । इन्द्र । अर्णऽसातौ । स्वःऽमीळ्हे । नरः । आजा । हवन्ते । तव । स्वधाऽवः । इयम् । आ । सऽमर्ये । ऊतिः । वाजेषु । अतसाय्या । भूत् ।। ६ ।।**

**स्कन्द–** त्यत् इति **त्वाम्** इत्येतेन सामानाधिकरण्यात् द्वितीयास्थाने प्रथमा । व्यत्ययेन चात्र नपुंसकता । य उक्तगुणस्तं **त्वां हे इन्द्र! अर्णसातौ** अर्ण उदकम्, तत्सम्भजनवेलायाम् । मेघवधोत्तरकाल उदकदानवेलायामित्यर्थः । **स्वर्मीळ्हे** उदकार्थे च मेघेन सह सङ्ग्रामे **नरः** मनुष्याः । **आजा** अन्यस्मिंश्च सङ्ग्राम **हवन्ते** । उदकसम्भजनवेलायां दानार्थमुदकार्थे सङ्ग्रामे युद्धार्थम् अन्यस्मिंश्च साहाय्यार्थमाह्वयन्तीत्यर्थः । य ईदृशोऽसि तं ब्रूमः । **तव** हे **स्वधावः! इयम् आ** मर्यादया समर्ये सङ्ग्राम **ऊतिः** पालनं **वाजेषु** निमित्ते एषा सप्तमी । प्रयोजनस्य च निमित्तत्वेन विवक्षा । **समर्यः** इत्येतेन चास्य सम्बन्धः । अन्नेषु च निमित्तेषु यः सङ्ग्रामः । अन्नार्थो यः सङ्ग्रामः तत्रेत्यर्थः । **अतसाय्या** तसु उपक्षये इत्येतस्य, अत सातत्यगमने इत्यस्य वैतद्रूपम् । अनुपक्षीणा सन्ततगामिनी वा **भूत्** भवतु । यदेतदन्नार्थसङ्ग्रामे प्रवृत्तं पालनम् एतदक्षीणं सततगामि वा भवत्वित्यर्थः । कस्य, सामर्थ्यादस्माकं स्तोतॄणां वा ।। ६ ।।

**वेङ्कटमाधव–** **त्वाम्** खलु तत् **इन्द्र!** उदकस्य दातरि सर्वस्य सेचके मनुष्या मेघैः सह युद्धे तदर्थम् **हवन्ते** । तव अन्नवन्! **इयम् ऊतिः** युद्धेषु समाश्रयणीया समनुष्ये प्रदेशे अस्मद्रक्षणाय अभूत् ।। ६ ।।

**मुद्गल–** हे इन्द्र! **अर्णसातौ** अर्णानां गन्तॄणां युद्धप्रवृत्तानां पुरुषाणां सातिर्लाभो यस्मिन् तस्मिन् **स्वर्मीळ्हे** सुष्ठु वरणीयं धनं यस्मिन् । एवम्भूत **आजा** आजौ सङ्ग्रामे **त्यत्** प्रसिद्धम् **त्वाम् ह** त्वामेव **नरः** योद्धुकामा पुरुषा सहायार्थम् **हवन्ते** आह्वयन्ति । वृष्टिविरोधकेन वृत्रेण सह वर्षणार्थं तव यत् युद्धं तत्र स्तोतारः त्वां प्रोत्साहयन्तीति भावः । यस्मादेवं तस्मात् हे **स्वधावः** अन्नवन् इन्द्र! **समर्ये** सङ्ग्रामे तव सम्बन्धिनी **इयम् ऊतिः** त्वदीयम् इदं रक्षणम् **आ** अस्मदाभिमुख्येन **भूत्** भवतु । **वाजेषु** सङ्ग्रामेषु या सैषा **ऊतिः अतसाय्या** योद्धृभिः प्राप्तव्या भवति ।। ६ ।।

**सायण–** हे **इन्द्र! अर्णसातौ** अर्णानां गन्तॄणां युद्धे प्रवृत्तानां पुरुषाणां सातिर्लाभो यस्मिन् **स्वर्मीळ्हे** । मीळ्हमिति धननाम । सुष्ठु अरणीयं धनं यस्मिन् । एवम्भूते **आजा** आजौ सङ्ग्रामे **त्यत्** तं प्रसिद्धं त्वामेव **नरः** योद्धुकामाः पुरुषाः सहायार्थं **हवन्ते** आह्वयन्ति । यद्वा । अर्णस उदकस्य सातिर्लाभो यस्मिन् वृत्रादियुद्धे तस्मिन्नित्यर्थः । वृष्टिनिरोधकेन वृत्रेण सह वर्षणार्थं **तव** यद्युद्धं तत्र स्तोतारस्त्वां प्रोत्साहयन्तीति भावः । यस्मादेवं तस्मात् हे **स्वधावः** हे अन्नवन् बलवन् वा इन्द्र! **समर्ये** सङ्ग्रामे तव सम्बन्धिनी इयम् **ऊतिः** त्वदीयमिदं रक्षणम् **आ** अस्मदाभिमुख्येन **भूत्** भवतु । **वाजेषु** सङ्ग्रामेषु या एषा ऊतिः **अतसाय्या** योद्धृभिः प्राप्तव्या भवति ।। **त्यत्** 'सुपां सुलुक्' इति द्वितीयाया लुक् । **अर्णसातौ** 'ऋ गतौ' । बहुलवचनात् औणादिको नप्रत्ययः । 'षणु दाने' इत्यस्माद् भावे क्तिनि 'जनमनखनाम्' इत्यनुनासिकस्य आत्वम् । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । यद्वा 'उदके नुट् च' (उ.सू.४.६३६) इति अर्तेः असुन्प्रत्ययो नुडागमश्च । 'पीवोपवसनादीनां छन्दसि लोपो वक्तव्यः' (पा.सू.६.३.१०९.६) इति सलोपः । नित्वादाद्युदात्तत्वम् । पूर्ववद् बहुवीहिस्वरः। **स्वर्मीळ्हे** । स्वर् शब्दः 'न्यङ्स्वरौ स्वरितौ' (फि.सू.७४) इति स्वरितः । बहुव्रीहिस्वरेण स एव शिष्यते । **आजा** । 'सुपां सुलुक्' इति सप्तम्या डादेशः । **स्वधावः** 'मतुवसो रुः' इति मतुपो रुत्वम् । **अतसाय्या** । 'अत सातत्यगमने' । औणादिकः साय्यप्रत्ययः तस्य आडागमश्च । आगमानुदात्तत्वे प्रत्ययाद्युदात्तत्वम् । **भूत्** । 'छन्दसि लुङ्लङ्लिटः' इति प्रार्थनायां लुङि 'बहुलं छन्दस्यमाङ्योगेऽपि' इति अडभावः ।। ६ ।।

**सिद्धाञ्जनम्–** हे **इन्द्र! अर्णसातौ** अर्णसां अपां सातिर्लाभो यस्मिन् । **स्वर्मीळ्हे** स्वः आदित्यलक्षितं तेजः तस्य मीळ्हं सेचनं वर्षणं यस्मिन् तस्मिन् । **आजा** आजौ युद्धे **त्यत्** तं प्रसिद्धं **त्वाम् ह** त्वामेव **नरः** नेतारः पुरुषाः **हवन्ते** आह्वयन्ति । हे **स्वधावः** स्वधा-शब्दवाच्यस्वधारणसहजसामर्थ्ययुक्त! **समर्ये** सम्यगरणीये प्रयत्नेन गन्तव्ये सङ्ग्रामे तव इयम् **ऊतिः** त्वदीयेयं रक्षा **आ भूत्** अस्मदाभिमुख्येन भवतु, यैषा रक्षा **वाजेषु** समृद्धिषु लब्धव्यासु **अतसाय्या** प्राप्तव्या भवति । **अर्णसातौ**–अर्तेरसुन्प्रत्ययो नुडागमश्च, छन्दसि सलोपः । **स्वधावः** 'मतुवसो रुः' इति मतुपो रुत्वम् । **अतसाय्या**- अत सातत्यगमने, औणादिकः साय्यप्रत्ययः ।।

## ऋक्संहिता पदपाठसहिता

**त्वं ह॒ त्यदि॑न्द्र स॒प्त यु॒ध्यन्पुरो॑ वज्रिन्पुरु॒कुत्सा॑य दर्दः ।**
**ब॒र्हिर्न यत्सु॒दासे॑ वृथा॒ वर्गं॒हो रा॑जन्वरि॑वः पू॒रवे॑ कः ॥ ७ ॥**
त्वम् । ह॒ । त्यत् । इ॒न्द्र॒ । स॒प्त । यु॒ध्यन् । पुरः॑ । व॒ज्रि॒न् । पु॒रु॒ऽकु॒त्सा॑य । द॒र्द॒रि॒ति॑ द॒र्दः । ब॒र्हिः । न । यत् । सु॒ऽदासे॑ । वृथा॑ । वर्क् । अं॒होः । रा॒ज॒न् । वरि॑वः । पू॒रवे॑ । क॒रि॒ति॑ कः ॥ ७ ॥

**स्कन्द– त्वम् ह त्यत्** स हे **इन्द्र!** असुराणां स्वभूताः **सप्त पुरः युध्यन्** असुरैः सह । **वज्रिन्! पुरुकुत्साय** पुरुकुत्सनाम्नो राज्ञोऽर्थाय **दर्दः** दारितवान् नाशितवान् । योऽहं किं कृतवान् । उच्यते । **बर्हिः न** दर्भानिव आमूलात् **यत्** यः **सुदासे** सुदा नाम राजा । षष्ठ्यर्थे चात्र चतुर्थी । सुदासो राज्ञः **वृथा** अयत्नेनैव **वर्क्** ओ व्रश्चू छेदने, भिन्नवानसि । **अंहोः** अंहुशब्दस्यांहः पर्यायस्य द्वितीयार्थे षष्ठी । अंहः पापम् । यश्च हे **राजन्!** दीप्त ईश्वर वा **वरियवः** धनम् **पूरवे** राज्ञे कः कृतवान् । दत्तवानित्यर्तः ॥ ७ ॥

**वेङ्कटमाधव– त्वम् ह** तत् **इन्द्र! पुरुकुत्साय** ऋषये **सप्त पुरः युध्यन्** दारितवान् असि । किञ्च यत् सुदासे राज्ञे तदधम् । **अंहोः** असुरस्य यत् धनम् **बर्हिः** इव अनायासेन अच्छिनः, तत् धनम् **राजन्** । **पूरवे** पूरयत कृतवान् असि ॥ ७ ॥

**मुद्गल–** हे **वज्रिन्!** वज्रवन् इन्द्र! **पुरुकुत्साय** ऋषये **युध्यन्** तदीयैः शत्रुभिः सह युद्धं कुर्वाणः **त्वम् ह** त्वमेव **सप्त पुरः** तदीयानि सप्तसङ्ख्याकानि नगराणि **दर्दः** व्यदारय अभैत्सीरित्यर्थः । अपि च **सुदासे** एतत्सञ्ज्ञाय **अंहोः** एतत्सञ्ज्ञस्यासुरस्य सम्बन्धि यत् धनमस्ति **त्यत्** तद् **वृथा** अनायासेन **बर्हिः न** बर्हिरिव **वर्क्** अवृणक्, अच्छिन इत्यर्थः । तदनन्तरं पूर्ववत् त्वाम् **पूरवे** हविषा पूरयते तस्मै सुदासे, हे **राजन्** स्वामिन्! इन्द्र **वरिवः** धनम् **कः** अकार्षीः ॥ ७ ॥

**सायण–** हे **वज्रिन्** वज्रवन् इन्द्र! **पुरुकुत्साय** एतत्सञ्ज्ञाय ऋषये **युध्यन्** तदीयशत्रुभिः सह युद्धं कुर्वाणः **त्वम्** एव **त्यत्** ताः **सप्त पुरः** तदीयानि सप्तसङ्ख्यानि नगराणि **दर्दः** व्यदारयः अभैत्सीरित्यर्थः । अपि च **सुदासे** एतत्सञ्ज्ञाय राज्ञे **अंहोः** एतत्सञ्ज्ञस्यासुरस्य सम्बन्धि यत् धनमस्ति तद् **वृथा** अनायासेन **बर्हिर्न** बर्हिरिव **वर्क्** अवृणक् अच्छिनः इत्यर्थः । तदनन्तरं

**पूरवे** त्वां हविषा पूरयते तस्मै सुदासे हे **राजन्** स्वामिन् हे इन्द्र! **वरिवः** धनं **कः** अकार्षीः। **त्यत्** 'सुपां सुलुक्' इति विभक्तेर्लुक्। **दर्दः**। 'दॄ विदारणे'। अस्मात् यङ्लुङन्तात् लङि सिपि 'अदादिवच्च' इति वचनात् शपो लुक्। 'हल्ङ्याब्भ्यः' इति सलोपः। 'बहुलं छन्दस्यमाङ्योगेऽपि' इति अडभावः। **सुदासे** शोभनं ददातीति सुदाः। असुन्। 'सुदाः कल्याणदानः' (निरु.२.२४) इति यास्कः। **वर्क्**। 'वृजी वर्जने'। लङि सिपि 'बहुलं छन्दसि' इति विकरणस्य लुक्। लघूपधगुणे पूर्ववत् सलोपः अडभावश्च। 'चोः कुः' इति कुत्वम्। **कः**। 'डु कृञ् करणे' लुङि सिपि 'मन्त्रे घस' इति च्लेर्लुक्। पूर्ववत् सलोपाडभावौ॥ ७॥

**सिद्धाञ्जनम्**– हे **वज्रिन्** वज्रवन् इन्द्र! **पुरुकुत्साय** एतत्सञ्ज्ञकाय ऋषये **युध्यन्** तच्छत्रुभिः सह युद्धं कुर्वन्, **त्वम् ह** त्वमेव **त्यत्** ताः **सप्त पुरः** सप्त असुरपुराणि **दर्दः** व्यदारयः॥ ऐतिहासिकः पुरुकुत्स ऋषिः। रहस्यं तु, कुत्सवत् पुरुकुत्सोऽपि इन्द्रसख्यास्पदम्, प्रतिमानभूतो बहुलभागः कुत्स एव, पुरुशब्दो बह्वर्थकः स्मार्यः। तादृशस्य यजमानस्य शत्रवः असुरा एव। तेषां पुराणि सप्त अभैत्सीदिन्द्रः। अत्रेदमवधेयम्। यद्यपि सप्ततत्त्वानुसारेण अपरार्धगतत्रिलोक्यामेव असुराणां पुराणि भवन्ति, देवैः सह तेषां युद्धानि सम्भवन्ति, तथापि अपरार्धे एकैकस्मिन् लोके सप्त उपकक्ष्याः वर्तन्ते। ताश्च भूरादिसत्य लोकान्तर्गतमहाकक्ष्यांशभूता अपि, अंशभूयस्त्वन्यायेन अन्नप्राणमनःसम्बन्धिन्यस्तत्तद्भूमिका गताः ज्ञेयाः। असुराणां पुराणि एवं सप्त कथितानि मध्यमस्थाने प्राणमये लोके इति बोध्यम्। यद्यपि त्रैलोक्याक्रमणपटवः भवन्ति वृत्रादयः, तेषां वृत्तिवैशिष्ट्यं मध्यमस्थाने। अथ यत् **सुदासे** एतत्सञ्ज्ञकाय। रहस्यं तु शोभनदानप्रतीताय प्रतिमानभूताय यजमानाय, **अंहोः** एतत्सञ्ज्ञकस्यासुरस्य पापात्मनः सम्बन्धि यद्धलमस्ति तत् **वृथा** अनायासेन **बर्हिर्न वर्क्** बर्हिरिव अवृणक् अच्छिनः। अपि च हे **राजन्** इन्द्र! **पूरवे** दानेन पूरयित्रे सुदासे **वरिवः** विशालावकाशदानात्मकं सुखं **कः** अकार्षीः॥ **दर्दः**– 'दॄ विदारणे' यङ्लुगन्ताल्लङ्, अन्यत् छान्दसम्। **वर्क्**- 'वृजी वर्जने' लङ्, विकरणस्य लुक्। अन्ये गताः॥

## ऋक्संहिता पदपाठसहिता

**त्वं त्यां न इन्द्र देव चित्रामिषमापो न पीपयः परिज्मन्।**
**यया शूर प्रत्यस्मभ्यं यंसि त्मनमूर्जं न विश्वध क्षरध्यै॥ ८॥**

त्वम्। त्याम्। नः। इन्द्र। देव। चित्राम्। इषम्। आपः। न। पीपयः। परिऽज्मन्।
यया। शूर। प्रति। अस्मभ्यम्। यंसि। त्मनम्। ऊर्जम्। न। विश्वध। क्षरध्यै॥

**स्कन्द– त्वम् नः** अस्माकं (स्वभूतां) हे **इन्द्र!** देव! **चित्राम्** पूजनीयां विचित्रां वा **इषम्** सोमलक्षणमन्नम् । यथा वसतीवर्येकधना आपः वर्धयन्ति तद्वत् **पीपयः** अवर्धयः । **परिज्मन्** अजेर्गत्यर्थस्येदं रूपम् । सर्वतो गच्छन् । यत्र तत्र वर्तमान इत्यर्थः । या कीदृशी इट् । उच्यते । **यया** निमित्तभूतया हे शूर! **अस्मभ्यम्** अस्मदर्थम् प्रति **यंसि** यमु बन्धने । प्रतिबध्नासि । **त्मनम्** आत्मानम् । क । सामर्थ्यात् वेद्याम् । यामस्मदनुग्रहार्थं पातुमस्मदीयायां वेद्यामात्मानं व्यवस्थापयसीत्यर्थः । **ऊर्जम् न** यथा महता यत्नेन कश्चित् (किञ्चित्)कचिद् व्यवस्थापयेत् तद्वत् । किमर्थं पुनर्वर्धयानि । उच्यते । **विश्वध क्षरध्यै** सर्वदा क्षरितुम् । कथं नाम सर्वदा यजत्स्वस्मासु त्वदर्थः सोमः क्षरेदित्येवमर्थमित्यर्थः ।। ८ ।।

**वेङ्कटमाधव– त्वम्** तत् अन्नम् अस्माकम् **चित्राम् आपः** इव **पीपयः** परितो गमने । **यया** इषा । **शूर! त्मनम्** आत्मानम् **अस्मभ्यम्** अन्नम् इव सर्वदा कामानां क्षरणाय प्रति-यच्छसि । **इन्द्र!** तव यागार्थं वर्धय अन्नमिति ।। ८ ।।

**मुद्गल–** हे **देव!** द्योतमान! **इन्द्र!** त्वम् **नः** अस्माकम् **चित्राम्** चायनीयाम् **त्याम्** ताम् **इषम्** अन्नम् **परिज्मन्** परितो व्याप्तायां भूमौ **पीपयः** प्रावर्धयः । यथा सर्वा भूमिरन्नेन पूर्णा भवति तथा कुर्वित्यर्थः । दृष्टान्तः । **आपः न** यथा अपो वृष्ट्युदकानि भूम्यां वर्षणेन प्रवर्धयसि तद्वत् । हे शूर! **इन्द्र! यया** इषा **त्मनम्** आत्मानं जीवम् **अस्मभ्यम् प्रति यंसि** प्रयच्छसि । दृष्टान्तः । **विश्वध** विश्वतः सर्वतः **क्षरध्यै** क्षरितुम् **ऊर्जम् न** उदकमिव । यथाऽस्मभ्यं बहुलम् उदकं प्रयच्छसि तद्वत्प्राणधारणरूपं जीवनमपि प्रयच्छसीति भावः ।। ८ ।।

**सायण–** हे **देव** द्योतमान **इन्द्र!** त्वं **नः** अस्माकं **चित्रां** चायनीयां **त्यां** ताम् **इषम्** अन्नं **परिज्मन्** परितो व्याप्तायां भूमौ **पीपयः** प्रावर्धयः । यथा सर्वा भूमिरन्नेन परिपूर्णा भवति तथा कुर्वित्यर्थः । तत्र दृष्टान्तः । **आपो न** यथा अपो वृष्ट्युदकानि भूम्यां वर्षणेन प्रवर्धयसि तद्वत् । यद्वा । भूमौ वर्तमानान् अस्मान् यथा अपः पाययसि तद्वत् चित्रामिषमपि पाययेति भावः । हे **शूर** इन्द्र! **यया** इषा **त्मनम्** आत्मानं जीवम् **अस्मभ्यं प्रति यंसि** प्रयच्छसि । तत्र दृष्टान्तः । **विश्वध** विश्वतः सर्वतः **क्षरध्यै** क्षरितुम् **ऊर्जं न** उदकमिव । यथाऽस्मभ्यं बहुलमुदकं प्रयच्छसि तद्वत्प्राणधारणरूपं जीवनमपि प्रयच्छसीति भावः ।।

**आपः** । शसि प्राप्ते व्यत्ययेन जस् । 'अप्तृन्' इत्यादिना दीर्घः । **पीपयः** 'स्फायी ओप्यायी वृद्धौ' । ण्यन्तात् छान्दसे लुङि 'प्यायः पी' (पा.सू.६.१.२८) इति व्यत्ययेन पीभावः । 'णिश्रिद्रुस्रुभ्यः' इति च्लेः चङादेशः । णिलोपादीनि । यद्वा । 'पीङ् पाने' इत्यस्मात् लुङि चङि पूर्ववत् । 'बहुलं छन्दस्यमाङ्योगेऽपि' इति अडभावः । **परिज्मन्** । जमतिर्गतिकर्मा । 'अज गतिक्षेपणयोः'। आभ्यां परिपूर्वाभ्यां 'श्वन्नुक्षन्' इत्यादौ कनिन्प्रत्ययान्तो निपातितः । 'सुपां सुलुक्' इति सप्तम्या लुक् । **यंसि** । 'यम उपरमे' । 'बहुलं छन्दसि' इति शपो लुक् । **त्मनम्** । 'आङोऽन्यत्रापि छन्दसि दृश्यते' (का.६.४.१४१.१) इत्यात्मनः आकारलोपः । सञ्ज्ञापूर्वकस्य विधेरनित्यत्वात् उपधादीर्घाभावः । **विश्वध** । विश्वशब्दात्तसिलः सकारलोपो धत्वं च पृषोदरादिरत्वात् । **क्षरध्यै** । 'क्षर संचलने'। 'तुमर्थे सेसेन्' इति अध्यैन्प्रत्ययः । नित्त्वादाद्युदात्तत्वम् ।। ८ ।।

**सिद्धाञ्जनम्–** हे **देव** द्योतमान, **इन्द्र!** त्वम्, **नः** अस्माकं **चित्राम्** नानाविधां **त्याम्** तां प्रसिद्धां त्वदीयां दिव्यां **इषम्** एषणाशक्तिं प्रेरणाबलमित्यर्थः । **परिज्मन्** परितो व्याप्ते प्रदेशे **पीपयः** प्रावर्धयः । तत्र दृष्टान्तः– **आपो न** जलानि यथा सर्वतः प्रयासवर्जं व्याप्नुवन्ति करोषि, तथाऽस्माकं एषणाशक्तिमपि अनुगृह्य अस्मत्तः सर्वतः प्रसारां विहितवानसि । तथा सर्वदा विधेहीत्यर्थः । तामेव चित्राम् इषम् उत्तरवाक्येन विशिनष्टि। हे **शूर** इन्द्र । **यया** इषा **त्मनम्** आत्मानं जीवं **अस्मभ्यम् प्रति, यंसि** प्रयच्छसि। तत्र दृष्टान्तः– **विश्वध** विश्वतः **क्षरध्यै** क्षरितुं **ऊर्जम् न** शक्तिप्रवाहमिव, ऊर्जमुदकनामेति पक्षोऽपि न बाधते तात्त्विकं तात्पर्यम् । शक्तिप्रवाहं उदकानि वा सर्वत्र क्षरणाय सृजसि, तथा एषणाबलेनास्मभ्यं जीवमात्मानं धत्से इति भावः । **आपः**- अपः, दीर्घश्छान्दसः । **पीपयः**- स्फायी ओप्यायी वृद्धौ, ण्यन्तात् छान्दसे लुङि प्यायः पीभावः । **परिज्मन्** परिपूर्वात् जमतेर्गत्यर्थात्, सप्तम्या लुक् । **विश्वध**-तसिलः सलोपो धत्वं च पृषोदरादित्वात् । **क्षरध्यै**– 'क्षर सञ्चलने' तुमर्थे अध्यैन्प्रत्ययः । अन्ये गताः ।।

## ऋक्संहिता पदपाठसहिता

**अका॑रि त इ॑न्द्र॒ गोत॑मेभि॒र्ब्रह्मा॒ण्योक्ता॒ नम॑सा॒ हरि॑भ्याम् ।**
**सु॒पेश॑सं॒ वाज॒मा भ॑रा नः प्रा॒तर्म॒क्षू धि॒याव॑सु॒र्जग॑म्यात् ।। ९ ।।**

**अकारि । ते । इन्द्र । गोतमेभिः । ब्रह्माणि । आऽउक्ता । नमसा । हरिऽभ्याम् । सुऽपेशसम् । वाजम् । आ । भर । नः । प्रातः । मक्षु । धियाऽवसुः । जगम्यात् ॥**

**स्कन्द– अकारि** इति बहुवचनस्य स्थाने एकवचनम् । अकारिषन्त । **ते** त्वदर्थानि । हे **इन्द्र!** गोतमपुत्रैरस्माभिः स्तुतिलक्षणानि **ब्रह्माणि** । (कृत्वा च) **ओक्ता** मर्यादयोक्तानि । **नमसा** नमस्कारेण सह हविर्लक्षणेनान्नेन वा । हविरपि दत्तमित्यर्थः । एतत् ज्ञात्वा **हरिभ्याम् सुपेशसम्** सुरूपं **वाजम्** अन्नम् । **आ भर** आहर **नः** अस्मदर्थम् । प्रातः इत्ययं तु पादः प्रत्यक्षकृतत्वाद् भिन्नं वाक्यम् उक्तार्थश्च ॥ ९ ॥

**वेङ्कटमाधव– अकारि ते इन्द्र!** गोतमैः । तदेवाह– **ब्रह्माणि** शस्त्राणि च उक्तानि नमस्कारेण तव सह अश्वाभ्याम् । 'आ यद्धरी इन्द्र विप्रता' (ऋ.१,६३,२) इत्यश्वयोः स्तुतिः । सुरूपमन्नम् **आ भर** अस्मभ्यमिति ॥ ९ ॥

**मुद्गल– हे इन्द्र! ते** तव **गोतमेभिः** गन्तृतमैरेतत्सञ्ज्ञैर्ऋषिभिः **अकारि** स्तोत्रं कृतमित्यर्थः । एतदेव स्पष्टीकरोति– **ब्रह्माणि** मन्त्रजातानि **नमसा** हविर्लक्षणेनान्नेन सह **हरिभ्याम्** अश्वाभ्यां युक्ताय तुभ्यम् **आ उक्ता** आभिमुख्येन उक्तानि । स त्वम् **सुपेशसम्** बहुविधरूपयुक्तम् **वाजम्** अन्नम् **नः** अस्मभ्यम् **आ भर** आहर आदेहीति यावत् । **धियावसुः** धिया बुद्ध्या प्राप्तधन इन्द्रः प्रातः काले अस्मद्रक्षणार्थम् **जगम्यात्** आगच्छतु ॥ ९ ॥

**सायण–** हे **इन्द्र! ते** तव **गोतमेभिः** गन्तृतमैरेतत्सञ्ज्ञैर्ऋषिभिः **अकारि** स्तोत्रं कृतमित्यर्थः । एतदेव स्पष्टीकरोति । **ब्रह्माणि** मन्त्रजातानि **नमसा** हविर्लक्षणेनान्नेन सह **हरिभ्याम्** अश्वाभ्यां युक्ताय तुभ्यम् **ओक्ता** आभिमुख्येन उक्तानि । यद्वा । मर्यादायाम् आकारः । यथाशास्त्रं प्रयुक्तानि । स त्वं, **सुपेशसम्** । पेश इति रूपनाम । बहुविधरूपयुक्तं **वाजम्** अन्नं **नः** अस्मभ्यम् **आ भर** आहर देहीति यावत् । धिया बुद्ध्या कर्मणा वा प्राप्तधन इन्द्रः प्रातःकाले अस्मद्रक्षणार्थं **जगम्यात्** आगच्छतु । **ओक्ता** । 'शेश्छन्दसि बहुलम्' इति शेर्लोपः । **सुपेशसम्** । 'क्शि अवयवे' असुन् । बहुव्रीहौ 'आद्युदात्तं द्व्यच्छन्दसि' इत्युत्तरपदाद्युदात्तत्वम् । **भर** । 'हृग्रहोर्भः' इति भत्वम् । 'द्व्यचोतस्तिङः' इति संहितायां दीर्घः ॥ ९ ॥

**सिद्धाञ्जनम्–** हे **इन्द्र! ते** तुभ्यं **गोतमेभिः** ऋषिभिः एतत्सञ्ज्ञकैः अस्माभिः गोमत्तमैः.

गन्तृतमैरिति सायणः, **अकारि** कृतं स्तोत्रम् । **ब्रह्माणि** मन्त्रजातानि **नमसा** नमःशब्द वाच्यप्रपदनेन सह **हरिभ्याम्** अश्वाभ्यां युक्ताय तुभ्यं **आ उक्ता** आकारो मर्यादायां, यथाविधि प्रयुक्तानि भवन्ति । इदानीं त्वं **नः** अस्मभ्यं **सुपेशसम्** नानाशोभनरूपयुक्तां **वाजम्** समृद्धिं **आ भर** आहर, प्रयच्छ । प्रातरादि शिष्टं व्याख्यातम् ।। ९ ।।

**।। इति प्रथमाष्टके पञ्चमाध्याये पञ्चमो वर्गः ।।**

## ।। अथ षष्ठो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

**(सूक्तम् ६४)**

**१५ नोधा गौतमः । मरुतः । जगती, १५ त्रिष्टुप् ।**

**वृष्णे॒ शर्धा॑य सु॒मखा॑य वे॒धसे॒ नोधः॑ सुवृ॒क्तिं प्र भ॑रा म॒रुद्भ्यः॑ ।**
**अ॒पो न धीरो॒ मन॑सा सु॒हस्त्यो॒ गिरः॒ सम॑ञ्जे वि॒दथे॑ष्वा॒भुवः॑ ।। १ ।।**
**वृष्णे॑ । शर्धा॑य । सु॒ऽमखा॑य । वे॒धसे॑ । नोधः॑ । सु॒ऽवृ॒क्तिम् । प्र । भ॒र । म॒रुत्ऽभ्यः॑ ।**
**अ॒पः । न । धीरः॑ । मन॑सा । सु॒ऽहस्त्यः॑ । गिरः॑ । सम् । अ॒ञ्जे । वि॒दथे॑षु । आ॒ऽभुवः॑ ।।**

**स्कन्द–** मारुतम् सूक्तम् । मरुदेवतमिदं सूक्तम् । **वृष्णे** इत्यादि गणापेक्षमेकवचनम् । वर्षित्रे गणाय **शर्धाय** उत्साहिने **सुमखाय** सुयज्ञाय **वेधसे** प्राज्ञाय । हे **नोधः** । आत्मनः एवायं शरीरात्मनः प्रैषः । हे मदीयशरीरात्मन्! **सुवृक्तिम्** सुष्ठु वर्जितां दोषैः स्तुतिम् **प्र भर** प्रहर । उच्चारयेत्यर्थः । **मरुद्भ्यः** षष्ठ्यर्थे चतुर्थ्येषा । तच्छ्रुतेश्च गणशब्दाध्याहारः । मरुतां गणाय । अथवा शुद्धोऽपि मरुच्छब्दस्तद्धितार्थे द्रष्टव्यः । एकवचनस्य स्थाने बहुवचनम् । मारुताय मरुत्समूहाय इत्यर्थः । अहमप्यन्तरात्मा **अपः न** यथा इन्द्रो वृष्टिलक्षणा अपोऽभिव्यनक्ति तद्वत् । **धीरः** प्रज्ञावान् मनसा सह **सुहस्त्यः** सुवर्णालङ्कृतहस्तवान् । सुहस्त्यः गिरः । **सम् अञ्जे** । अञ्जिः व्यक्त्यर्थः । समभिव्यनज्मि । **विदथेषु** यज्ञेषु । **आभुवः** अपठितमपि महन्नामैतत्, महतीः । अहमन्तरात्मा मरुद्गणस्यार्थाय मनसा सह स्तुतीरभिव्यनज्मि । त्वं तु नोधः! शरीरात्मन्! ता उच्चारयेत्यर्थः ।। १ ।।

**वेङ्कटमाधव–** वर्षित्रे मारुताय **शर्धाय** सुधनाय 'नञ्सुभ्याम्' (पा.६,२,१७२) इति न

दृष्टम् अपि वा सुष्ठु प्रयच्छते विधात्रे स्तुतिम् **प्र भर** । तदेवाह– **नोधः!** त्वं स्तुतिं **प्र भर** । **मरुभ्यः** इति आत्मानमित्थमुक्त्वा स्वयमेव तथा करोमीति वदति– उदकानि धृष्टः शोभनाङ्गुलिकः कश्चित् यथोत्सिश्चत्येवमहमेषां यज्ञे प्रयोक्तुं योग्याः गिरः मनसा **सम् अञ्जे** संश्लेषयामि रचयामीति ।। १ ।।

**मुद्गल–** 'वृष्णे शर्धाय' इति पञ्चदशर्चं सप्तमं सूक्तम् । नोधा ऋषिः । अन्त्या त्रिष्टुप् । शिष्टा जगत्यः मरुतो देवताः । अत्र पूर्वार्धेन स्तुतौ नोधाः प्रेर्यते । हे **नोधः! वृष्णे** कामानां वर्षित्रे **सुमखाय** शोभनयज्ञाय **वेधसे** पुष्पफलादीनां कर्त्रे । वायौ सति पुष्पाणि फलानि चोत्पद्यन्ते । एवंविधाय **मरुद्भ्यः** मरुतां मितराविणाम् **शर्धाय** समूहाय **सुवृक्तिं** सुष्ठु आवर्जकं स्तोत्रम् **प्र भर** प्रेरय, स्तुहीति यावत् । स्तुतौ प्रेरितो नोधा आह– **धीरः** धीमान् **सुहस्त्यः** शोभनाङ्गुलियुक्तः । कृताञ्जलिरित्यर्थः । एवम्भूतोऽहम् । **मनसा, गिरः** स्तुतिलक्षणा वाचः **सम् अञ्जे** सम्यग् व्यक्ताः करोमि । या गिरः **विदथेषु** यज्ञेषु **आभुवः** यथाशास्त्रं प्रयुक्ता भवन्तीति आभुवो देवताभिमुखीकरणाय समर्थाः । यज्ञयोग्यैः स्तोत्रैर्मनःपूर्वकं मरुद्गणं स्तौमीति भावः । दृष्टान्तः– **अपः न** यथा पर्जन्यो युगपदेव बहुषु प्रदेशेषु बहुशो जलानि वर्षति तद्वत् ।।

**सायण–** 'वृष्णे शर्धाय' इति पञ्चदशर्चं सप्तमं सूक्तम् । नोधस आर्षं मारुतम् । अन्त्या त्रिष्टुप् । शिष्टा चतुर्दश जगत्यः । तथा चानुक्रान्तं- 'वृष्णे पञ्चोना मारुतं त्रिष्टुबन्तम्' इति । चातुर्विंशिकेऽहनि आग्निमारुते इदं मारुतं निविद्धानीयम् । सूत्रितं च– 'पृक्षस्य वृष्णो वृष्णे शर्धाय यज्ञेन वर्धतेत्याग्निमारूतम्' (आश्व.श्री.७.४) इति । आभिप्लविके पञ्चमेऽहन्यपि एतत् आग्निमारुते मारुतनिविद्धानम् । सूत्रितं च– 'पृक्षस्य वृष्णो वृष्णे शर्धाय नृ चित्सहोजा' इत्यग्निमारुतम्' (आश्व.श्री.७.७) इति ।।

अत्र पूर्वार्धेन स्तुतौ नोधाः प्रेर्यते । हे **नोधः! वृष्णे** कामानां वर्षित्रे **सुमखाय** शोभनयज्ञाय **वेधसे** पुष्पफलादीनां कर्त्रे । वायौ सति हि पुष्पाणि फलानि चोत्पद्यन्ते । एवंविधाय **मरुभ्यः** । विभक्तिव्यत्ययः । मरुतां मितराविणां **शर्धाय** समूहाय **सुवृक्तिं** सुष्ठु आवर्जकं सुष्ठु प्रवृत्तं वा स्तोत्रं **प्र भर** प्रेरय स्तुहीति यावत् । स्तुतौ प्रेरितो नोधा आह– **धीरः** धीमान् **सुहस्त्यः** शोभनाङ्गुलियुक्तः । कृताञ्जलिरित्यर्थः । एवम्भूतोऽहं **मनसा, गिरः** स्तुतिलक्षणा वाचः **सम् अञ्जे** सम्यग्व्यक्ताः करोमि । या गिरः **विदथेषु** यज्ञेषु **आभुवः** । 'आङ् मर्यादायाम्' । यथाशास्त्रं

प्रयुक्ता भवन्तीति आभुवः देवताभिमुखीकरणाय समर्थाः । यज्ञयोग्यैः स्तोत्रैर्मनःपूर्वकं मरुद्गणं स्तौमीति भावः । तत्र दृष्टान्तः– **अपो न** । यथा पर्जन्यो युगपदेव बहुषु प्रदेशेषु बहुशो जलानि वर्षति तद्वत् । **वृष्णे–** 'वृषु सेचने' । 'कनिन्युवृषितक्षि' इत्यादिना कनिन्प्रत्ययः । कित्त्वाद्गुणाभावो नित्त्वादाद्युदात्तत्वम् । चतुर्थ्येकवचने 'अल्लोपोऽनः' इति अकारलोपः । **शर्धाय** । 'शृधु प्रसहने' । शर्ध्यते प्रसह्यते अनेन पर्वतादिकमिति शर्धो मरुत्सङ्घः । करणे घञ् । ञित्त्वादाद्युदात्तत्वम् । **सुमखाय** । शोभनो मखो यस्य । 'नञ्सुभ्याम्' इति प्राप्ते व्यत्ययेन पूर्वपदप्रकृतिस्वरत्वम् । **नोधः** । पादादित्वात् षाष्ठिकमामन्त्रिताद्युदात्तत्वम् । **सुहस्त्यः** । हस्ते भवा हस्त्याः । 'भवे छन्दसि' इति यत् । 'यतोऽनावः' इत्याद्युदात्तत्वम् । ततः सुशब्देन बहुव्रीहौ 'आद्युदात्तं द्व्यच्छन्दसि' इत्युत्तरपदाद्युदात्तत्वम् ।। १ ।।

**सिद्धाञ्जनम्–** अत्र पूर्वार्धेन स्वात्मन एव नोधसः सम्बोधनम् । उत्तरार्धेन नोधाः स्तौति । हे **नोधः** नवनं दधान, स्तोतः, **वृष्णे** वर्षित्रे **सुमखाय** शोभनयजनाय **वेधसे** विधात्रे **मरुद्भ्यः शर्धाय** मरुतां गणाय, मरुद्भ्य इति विभक्तिव्यत्ययः । **सुवृक्तिम्** सुष्ठु आवर्जकं स्तोत्रं **प्र भर** प्रकर्षेण हर, प्रेरय । एवं प्रेरितो नोधाः स्तौति, **धीरः** धीमान् **सुहस्त्यः** शोभनाङ्गुलियुक्तः कृताञ्जलिबन्धः सर्वथा प्रह्व इति यावत्, एवम्भूतोऽहं **मनसा** मत्या अन्तःकरणेन **गिरः** स्तोत्रात्मिकाः वाचः **सम् अञ्जे** सम्यग्व्यक्ताः करोमि, स्तोत्रात्मिकाः स्तोतुर्धियः वाग्रूपाविष्कारे हि पूर्णतां यान्ति । याः गिरः **विदथेषु** ज्ञानैकगम्येषु यजनसदनेषु **आ भुवः** आभिमुख्येन भवन्ति, देवताभिमुखीकरणाय कल्पन्ते । तत्र दृष्टान्तः- **अपो न** यथा आपः निरर्गलं क्षरन्ति तथा मे स्तुतयोऽपि प्रवर्तमानाः प्रयुक्ता भवन्ति । **शर्धाय** 'शृधृ प्रसहने' शर्ध्यते प्रसह्यते पर्वतादिकमनेनेति शर्धः मरुत्समूहः, करणे घञ् । **सुहस्त्यः**- हस्ते भवा हस्त्याः, शोभना हस्त्या यस्यासौ ।। १ ।।

## ऋक्संहिता पदपाठसहिता

**ते जज्ञिरे दिव ऋष्वास उक्षणो रुद्रस्य मर्या असुरा अरेपसः ।**
**पावकासः शुचयः सूर्याइव सत्वानो न द्रप्सिनो घोरवर्पसः ।। २ ।।**

ते । जज्ञिरे । दिवः । ऋष्वासः । उक्षणः । रुद्रस्य । मर्याः । असुराः । अरेपसः । पावकासः । शुचयः । सूर्याःऽइव । सत्वानः । न । द्रप्सिनः । घोरऽवर्पसः ।। २ ।।

**स्कन्द– ते** मरुतः **जज्ञिरे, दिवः** सकाशात् । द्यौरेषां मातेत्यर्थः । यस्त्वैतिहसिकाः- दितौ कश्यपाज्जन्म मरुतां स्मरन्ति, तत् महाभाग्यादेव जन्मान्तरं द्रष्टव्यम् । **ऋष्वासः** महान्तः **उक्षणः** सेक्तारः, वर्षितार इत्यर्थः । **रुद्रस्य** षष्ठीनिर्देशात् पुत्रा इति वाक्यशेषः । 'रुद्रस्य ये मीळ्हुषः सन्ति पुत्राः' (ऋ.६,६६,३), 'यामन् रुद्रस्य सूनवः' (ऋ.१,८५,१) इत्यादिषु रुद्रपुत्रत्वदर्शनात् । **मर्याः** मनुष्याकाराः **असुराः** प्राणवन्तः प्रज्ञावन्तो वा **अरेपसः** पापवर्जिताः **पावकासः** शोधयितारः **शुचयः** दीप्ताः । कथम् । **सूर्याः इव । सत्वानो न** 'षणु दाने' इत्यस्यैतद्रूपम् । 'न'शब्दश्चोपमार्थीयत्वात् 'अस्त्युपमार्थस्य सम्प्रत्यर्थे प्रयोगः' (नि तु.या. ७,३१) इति पदपूरणः । दातारः । **द्रप्सिनः** वृष्ट्युदकलक्षणेन रसेन रसवन्तः अथवा **सत्वानो** **नेति** नशब्दश्रुतिसामर्थ्याद् यथेन्द्रप्रभृतयो दातारो द्रप्सिनः तथा द्रप्सिन इत्येवं योजयितव्यम् । **घोरवर्पसः** घोररूपाः ।। २ ।।

**वेङ्कटमाधव– ते** प्रादुरभवन् द्युलोकात् दर्शनीयाः सेक्तारः रुद्रपुत्राः बलिनः अपापाः शोधकाः निर्मलाः सूर्या इव भूतानि इव विप्रुड्भिर्युक्ताः घोररूपाः । सिंहादयः **सत्वानः** इति ।।

**मुद्गल– ते** मरुतः **दिवः** अन्तरिक्षात् **जज्ञिरे** प्रादुर्बभूवुः । कीदृशाः । **ऋष्वासः** दर्शनीयाः **उक्षणः** सेक्तारः । युवान इत्यर्थः । **रुद्रस्य मर्याः** रुद्रस्य पुत्रा मरुतः **असुराः** शत्रूणां निरसितारः **अरेपसः** पापरहिताः **पावकासः** सर्वेषां शोधकाः **सूर्या इव शुचयः** दीप्ताः **सत्वानः न** यथा परमेश्वरस्य भूतगणा अतिशयेन बलपराक्रमाः, तत्सदृशा इत्यर्थः । **द्रप्सिनः** वृष्ट्युदकबिन्दुभि- र्युक्ताः मरुतः **घोरवर्पसः** शत्रूणां भयङ्कररूपाः ।। २ ।।

**सायण– ते** मरुतः **दिवः** अन्तरिक्षात् **जज्ञिरे** प्रादुर्बभूवुः । कीदृशाः । **ऋष्वासः** दर्शनीयाः **उक्षणः** सेक्तारः । युवान इत्यर्थः । **रुद्रस्य मर्याः** । मर्यशब्दो मनुष्यवाची । इह मरुतां मर्त्यत्वासम्भवात्पुत्रा इत्यस्मिन्नर्थे पर्यवस्यति । मरुतां रुद्रपुत्रत्वं च मन्त्रान्तरे स्पष्टम्- 'आ ते पितर्मरुतां सुम्नमेतु' (ऋ.सं.२.३३.१) इति । **असुराः** शत्रूणां निरसितारः **अरेपसः** । रेप इति पापनाम । पापरहिताः । **पावकासः** सर्वेषां शोधकाः । **सूर्या इव शुचयः** दीप्ताः **सत्वानो न** यथा परमेश्वरस्य भूतगणा अतिशयितबलपराक्रमाः तत्सदृशा इत्यर्थः । **सत्वान** इति भूतगणा उच्यन्ते- 'अथो ये अस्य सत्वानः' (तै.सं.४.५.१.३) इत्यादौ तथा दर्शनात् । **द्रप्सिनः** वृष्ट्युदकबिन्दुभिर्युक्ताः । 'मरुतः सृष्टां वृष्टिं नयन्ति' (तै.सं.२.४.१०.२) इति श्रुतेः ।

**घोरवर्पसः** । वर्प इति रूपनाम । घोररूपाः । शत्रूणां भयङ्कररूपा इत्यर्थः । यद्वा **सत्वानो न घोरवर्पसः** यथा भूतगणा भयङ्कररूपास्तद्वदेतेऽपीत्यर्थः ।। **ऋष्वासः** । 'ऋषी गतौ'। गत्यर्था बुद्ध्यर्था इति, अत्र ज्ञानार्थः । 'सर्व निघृष्व' (उ.सू.१.१५१) इत्यादौ वप्रत्ययान्तो निपातितः । 'आजसेरसुक्' । **उक्षणः** । 'वा षपूर्वस्य निगमे' इति उपधादीर्घाभावः । **अरेपसः** । बहुव्रीहौ 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । **सत्वानः** । 'षद्लृ विशरणगत्यवसादनेषु' । 'प्र ईरसद्योस्तुट् च' (उ.सू.४.५२६) इति विधीयमानः कनिन्प्रत्ययो बहुलवचनात् केवलादपि भवति । प्रत्ययस्य पित्वादनुदात्तत्वे धातुस्वरः शिष्यते ।। २ ।।

**सिद्धाञ्जनम्– ते** मरुतः **दिवः** अन्तरिक्षात्, मध्यमस्थानात् **जज्ञिरे** प्रादुर्भूताः । मरुतोऽधिकृत्य, 'मरुतः पृश्निमातरः' इत्यत्रोपन्यस्तम्, अन्यत्र च (१.२३.१०)। कीदृशाः ? **ऋष्वासः** उत्कृष्टाः **उक्षणः** सेक्तारः वर्षितारः **रुद्रस्य मर्याः** मर्यो मनुष्यवाची, अत्र पुत्रोपलक्षणं, रुद्रसूनवः । **असुराः** निरसितारः शत्रूणाम्, **अरेपसः** पापवर्जिताः **पावकासः** शोधकाः, **सूर्या इव** सुष्ठु प्रेरकाः सूर्यरश्मय इव **शुचयः** दीप्ताः **सत्वानः न** अतिशयेन बलपराक्रमोपेताः भूतगणा इव **द्रप्सिनः** द्रप्सो बिन्दुः, ध्वजे च वर्तते (१.१४.४) धीप्राणशक्तिवर्षबिन्दुयुक्ताः । **घोरवर्पसः** भयङ्कररूपाः ।। **सत्वानः**- अवसादनार्थात् सीदतेः तुट् विधीयते, सत्वन्शब्दस्य प्रथमा-बहुवचनम् । अन्ये गताः ।। २ ।।

## ऋक्संहिता पदपाठसहिता

**युवा॑नो रु॒द्रा अ॒जरा॑ अभो॒ग्घनो॑ ववक्षुरध्रि॑गावः पर्व॑ता इव ।**
**दृ॒ळ्हा चि॒द्विश्वा॒ भुव॑नानि॒ पार्थि॑वा॒ प्र च्या॑वयन्ति दि॒व्यानि॑ म॒ज्मना॑ ।। ३ ।।**
युवा॑नः । रु॒द्राः । अ॒जरा॑ः । अ॒भो॒क्ऽहनः॑ । व॒व॒क्षुः । अध्रि॑ऽगावः । पर्व॑ताःऽइव ।
दृ॒ळ्हा । चि॒त् । विश्वा॑ । भुव॑नानि । पार्थि॑वा । प्र । च्य॒व॒यन्ति॒ । दि॒व्यानि॑ । म॒ज्मना॑ ।।

**स्कन्द– युवानः** तरुणाः रुद्राः । सोऽयमित्यभिसम्बन्धात् पितृशब्दस्यैष पुत्रे प्रयोगः । रुद्रपुत्राः । **अजराः** जरावर्जिताः । **अभोग्घनः** यागादिना यस्तेषामभोग्यस्तस्य हन्तारः **ववक्षुः** 'ववक्षिथ' (निघ.३,३) इति महन्नामसु पाठात् ववक्षतिर्महत्त्वार्थः । बहुवचनस्य स्थाने एकवचनम् । उवक्षवो महान्त इत्यर्थः । **अध्रिगावः** गौः द्यौः, तत्राऽधृताः अव्यवस्थातारः अध्रिगावः । अधार्यगमना वा अध्रिगावः । **पर्वताः इव दृळ्हा चित्** पर्वतवद् यानि दृढानि

तान्यपि **विश्वा भुवनानि** भूतानि, यानि न रोचन्ते तानि **पार्थिवा** पार्थिवानि च स्वेभ्यः स्थानेभ्यः **प्र च्यावयन्ति, दिव्यानि, मज्मना** स्वेन बलेन ।। ३ ।।

**वेङ्कटमाधव–** तरुणाः रुद्रपुत्राः अमृताः देवानाम् अभोजयितॄणामयजमानानां हन्तारः वहन्ति अधृतगमनाः शिलोच्चया इव । दृढानि अपि विश्वानि पार्थिवानि **भुवनानि** दिव्यानि अपि च बलेन **प्रच्यावयन्ति** ।। ३ ।।

**मुद्गल– युवानः** तरुणाः **रुद्राः** रुद्रपुत्राः **अजराः** जराराहिताः **अभोग्घनः** ये देवान् हविर्भिर्न भोजयन्ति तेषां हन्तारः । **अध्रिगावः** अधृतगमनाः परैरनिवारितगतयः । पर्वता इव दृढाङ्गाः । एवम्भूताः मरुतः **ववक्षुः** स्तोतॄणाम् अभिमतं प्रापयितुमिच्छन्ति । अपि च **विश्वा** सर्वाणि **भुवनानि** सद्भावं प्राप्तानि **पार्थिवा** पृथिव्यां भवानि **दिव्यानि** दिवि भवानि च वसूनि **दृळ्हा चित्** दृढान्यपि **मज्मना** शोधकबलेन **प्र च्यावयन्ति** प्रचालयन्ति ।। ३ ।।

**सायण– युवानः** तरुणाः । **रुद्राः** रुद्रपुत्राः । **अजराः** जराराहिताः । **अभोग्घनः** ये देवान् हविर्भिर्न भोजयन्ति तेषां हन्तारः । **अध्रिगावः** अधृतगमनाः, परैरनिवारितगतयः । **पर्वता इव** दृढाङ्गाः । एवम्भूता मरुतः **ववक्षुः** स्तोतॄणाम् अभिमतं प्रापयितुमिच्छन्ति । अपि च **विश्वा** सर्वाणि **भुवनानि** सद्भावं प्राप्तानि **पार्थिवा** पृथिव्यां भवानि **दिव्यानि** दिवि भवानि च वसूनि **दृळ्हा चित्** दृढान्यपि । **मज्मना,** मज्मनेति बलनाम । मज्मना शोधकेन बलेन । **प्र च्यावयन्ति** प्रचालयन्ति । **अभोग्घनः** । भोजयन्तीति भोजः । न भोजः अभोजः । तेषां हन्तारः । 'बहुलं छन्दसि' इति हन्तेः क्विप् । 'झयो होऽन्यतरस्याम्' (पा.सू.८.४.६२) इति हकारस्य घत्वम् । 'इन्हन्पूषार्यम्णां शौ' (पा.सू.६.४.१२) इति नियमाद् दीर्घाभावः । **ववक्षुः** । 'वह प्रापणे' अस्मात् इच्छासनि 'एकाचः' इति इट्प्रतिषेधः । द्विर्भावः । ढत्वकत्वषत्वानि । 'सन्यतः' इति इत्वाभावश्छान्दसः । लिटि उसि 'अमन्त्रे' (पा.सू.३.१.३५) इति निषेधात् आम्प्रत्ययाभावे 'अतो लोपः' इति अकारलोपः । प्रत्ययस्वरः । पादादित्वात् निघाताभावः ।।

**सिद्धाञ्जनम्– युवानः** यौवनसम्पन्नाः **रुद्राः** उग्राः, रुद्रविभूतयो वा **अजराः** जराराहिताः **अभोग्घनः** ये देवान् न भोजयन्ति तेषां यज्ञशत्रूणाम् अयज्वनां हन्तारः । **अध्रिगावः** अधृतगमनाः, येषां गतयो न केनापि निवारिता भवन्ति त इत्यर्थः । **पर्वता इव** स्थिराः स्वयं

क्षोभरहिताः । **ववक्षुः** स्तोतृणाम् अभीष्टं वोढुं प्रापयितुमिच्छन्ति । किञ्च **विश्वा** भुवनानि सर्वाणि सद्भावं प्राप्तानि **पार्थिवा** पृथिव्यां भवानि **दिव्यानि** दिवि भवानि वा वस्तूनि **दृळ्हा चित्** दृढान्यपि **मज्मना** शोधकेन स्वीयबलेन **प्र च्यावयन्ति** प्रचालयन्ति । एतावान् मारुतबलमहिमा । **अभोग्घनः**- भोजयन्तीति भोजः, न भोजः अभोजः, अभोजां हन्तारः अभोग्घनः । 'बहुलं छन्दसि' हन्तेः क्विप् । **ववक्षुः** 'वह प्रापणे' अस्मात्सनि लिट्, द्विर्भावः, अन्यत् छान्दसम् ।। ४ ।।

## ऋक्संहिता पदपाठसहिता

**चित्रैरञ्जिभिर्वपुषे व्यञ्जते वक्षःसु रुक्माँ अधि येतिरे शुभे ।**
**अंसेष्वेषां नि मिमृक्षुरृष्टयः साकं जज्ञिरे स्वधया दिवो नरः ।। ४ ।।**

चित्रैः । अञ्जिऽभिः । वपुषे । वि । अञ्जते । वक्षःऽसु । रुक्मान् । अधि । येतिरे । शुभे । अंसेषु । एषाम् । नि । मिमृक्षुः । ऋष्टयः । साकम् । जज्ञिरे । स्वधया । दिवः । नरः ।। ४ ।।

**स्कन्द– चित्रैरञ्जिभिः** । अञ्जिर्मरुतां रत्नप्रायः आभरणविशेषः । विविधैरञ्जिभिः **वपुषे** रूपाय । शोभार्थमित्यर्थः । **व्यञ्जते** अञ्जिस्सामर्थ्यादिह भूषाया द्रष्टव्यः । विविधं भूषयन्त्यात्मानमित्यर्थः । **वक्षःसु रुक्मान् अधि** वक्षो हृदयप्रदेशः । रुक्म आभरणविशेषः । अधिशब्द उपरिभावे । हृदयप्रदेशानां चोपरि रुक्मान् अधि **येतिरे** । यततिरत्र बन्धने द्रष्टव्यः, आबध्नन्ति । **शुभे** शोभार्थम् । अंसेषु चैषाम् व्यवस्थिताः **नि मिमृक्षुः** । निशब्दः प्रकर्षे । मृक्षतिरपि 'प्रयज्यवो मरुतो भ्राजदृष्टयः' (ऋ.५,५५,१) इत्येवमादिषु ऋष्टीनां भ्राजितृत्वदर्शनाद् भ्राजनार्थः । सुष्ठु भ्राजन्ते । शोभन्त इत्यर्थः । के । उच्यते । **ऋष्टयः** । 'अंसेषु व ऋष्टयः' (ऋ.५,५४,११) इत्यादिर्शनात् । तोरणाः शक्तयो वा ऋष्टय उच्यन्ते । **साकम् जज्ञिरे** सह च ते जाताः । न च केवलाः, किं तर्हि । **स्वधया** अन्नेन सह **दिवः** सकाशात् **नरः** मनुष्याकाराः ।। ४ ।।

**वेङ्कटमाधव–** नानारूपैः आभरणैः शोभार्थम् अङ्गानि अलङ्कुर्वन्ति । वक्षःसु रौक्मान् कवचान् अधियातयन्ति शोभार्थम् । अंसेषु च एषाम् निषक्ता भवन्ति । **ऋष्टयः** आयुधविशेषाः । सह प्रादुर्भवन्ति बलेन **दिवः** नेतारः ।। ४ ।।

**मुद्गल–** **वपुषे** रूपाय शोभार्थं मरुतः । **चित्रैः** नानाविधैः **अञ्जिभिः** रूपाभिव्यञ्जन-समर्थैराभरणैः स्वशरीराणि **व्यञ्जते** व्यक्तीकुर्वन्ति । अलङ्कुर्वन्तीत्यर्थः । **वक्षःसु** भुजान्तरेषु **रुक्मान्** रोचमानान् हारान् **अधि येतिरे** उपरि चक्रिरे । किमर्थम् । **शुभे** शोभार्थम् । अपि च **एषाम्** मरुताम् **अंसेषु ऋष्टयः** आयुधानि **नि मिमृक्षुः** निमृष्टाः स्थिता बभूवुः । तैरायुधैः सहिताः **नरः** नेतारो मरुतः **दिवः** अन्तरिक्षात्, **स्वधया** स्वकीयेन बलेन **साकम्** सह **जज्ञिरे** प्रादुर्बभूवुः ।। ४ ।।

**सायण–** वपुरिति रूपनाम । **वपुषे** रूपाय शोभार्थं मरुतः **चित्रैः** नानाविधैः **अञ्जिभिः** रूपाभिव्यञ्जनसमर्थैराभरणैः स्वशरीराणि **व्यञ्जते** व्यक्तीकुर्वन्ति । अलङ्कुर्वन्तीत्यर्थः । **वक्षःसु** भुजान्तरेषु **रुक्मान्** रोचमानान् हारान् **अधि येतिरे** उपरि चक्रिरे । किमर्थम् । **शुभे** शोभार्थम् । अपि च **एषां** मरुताम् **अंसेषु, ऋष्टयः** आयुधानि **नि मिमृक्षुः** निसृष्टाः स्थिता बभूवुः । तैरायुधैः सहिताः **नरः** नेतारो मरुतः **दिवः** अन्तरिक्षात् **स्वधया** स्वकीयेन बलेन **साकं** सह **जज्ञिरे** प्रादुर्बभूवुः । **येतिरे** 'यती प्रयत्ने' लिटि 'अत एकहल्मध्ये' इति एत्वाभ्यासलोपौ । **शुभे** 'शुभ दीप्तौ'। सम्पदादिलक्षणो भावे क्विप् । 'सावेकाचः' इति चतुर्थ्या उदात्तत्वम् । **मिमृक्षुः** । 'मृजूष् शुद्धौ' सनि ऊदित्वात् इडभावः । 'हलन्ताच्च' इति सनः कित्त्वाद्गुणाभावः । द्विर्वचनादि । 'सन्यतः' इति इत्वम् । लिटि उसि 'अतो लोपः' इति अकारलोपः। **जज्ञिरे** । 'जनी प्रादुर्भवे'। लिटि 'गमहन' इत्यादिना उपधालोपः ।। ४ ।।

**सिद्धाञ्जनम्–** **वपुषे** शरीराय, मरुतः **चित्रैः** विविधैः **अञ्जिभिः** रूपाभिव्यञ्जकैरलङ्कारैः **व्यञ्जते** स्वीयरूपाणि व्यक्तानि कुर्वन्ति । **वक्षःसु** भुजान्तरेषु **रुक्मान्** रोचमानान् हारान् **अधि येतिरे** उपरि चक्रिरे । किमर्थम्, **शुभे** शोभार्थम् । अथ च **एषां** मरुतां **अंसेषु** स्कन्धेषु **ऋष्टयः** आयुधानि **नि मिमृक्षुः** निमृष्टाः परिष्कृताः तस्थुः । **साकम्** तैरायुधैः सहिताः **नरः** नेतारो बलिनो मरुतः **दिवः** अन्तरिक्षलोकात् **स्वधया** स्वभावसिद्धया शक्त्या **जज्ञिरे** प्रादुर्बभूवुः । अत्रेदमवधेयम् । यद्यपि अत्रोक्ताः प्रचण्डकर्मणामलङ्कारा विद्युदादय इत्यधुनातनानां मतं सायणीय-व्याख्याबलमीषदवलम्ब्य ऊहमात्रम् अवतिष्ठते, मन्त्रद्रष्टारस्त्वन्यथा गायन्ति । एतानि रहस्यानि धीरस्यैव विदितानीति, न कोऽपि मरुतां जन्मरहस्यं वेदेत्यादि । विशेषतो वसिष्ठसूक्ते (७.५६) 'नकिर्ह्येषां जनूंषि वेद' 'एतानि धीरो निण्या चिकेत' इत्यादि । **येतिरे** 'यती प्रयत्ने' लिट् ।

**शुभे**- 'शुभ दीप्तौ, सम्पदादिलक्षणः क्विप् । **मिमृक्षुः**- 'मृजू शुद्धौ, सनि लिट् । **जज्ञिरे**- 'जनी प्रादुर्भावे' लिट् ।। ४ ।।

## ऋक्संहिता पदपाठसहिता

**ईशानकृतो धुनयो रिशादसो वातान्विद्युतस्तविषीभिरक्रत ।**
**दुहन्त्यूधर्दिव्यानि धूतयो भूमिं पिन्वन्ति पयसा परिज्रयः ।। ५ ।।**

ईशानऽकृतः । धुनयः । रिशादसः । वातान् । विऽद्युतः । तविषीभिः । अक्रत । दुहन्ति । ऊधः । दिव्यानि । धूतयः । भूमिम् । पिन्वन्ति । पयसा । परिऽज्रयः ।। ५ ।।

**स्कन्द– ईशानकृतः** स्तोतृणामीश्वराणां कर्तारः । **धुनयः** कम्पयितारः शत्रूणाम् । **रिशादसः** रिशतिर्हिंसार्थः । असु क्षेपणे । हिंसितुः क्षेप्तारः । प्रतिहिंसितार इत्यर्थः । **वातान् विद्युतः** च **तविषीभिः** स्वैर्बलैः **अक्रत** कुर्वन्ति । कृत्वा च **दुहन्ति ऊध** ऊधस्सादृश्यात् ऊधश्शब्देन मेघ इहोच्यते । प्रक्षारयन्ति मेघम् । **दिव्यानि** अत्यन्तोत्कृष्टान्युदकानि **धूतयः** धूनयितारो मेघस्य । दुग्ध्वा च **भूमिम्, पिन्वन्ति** 'पिवि सेचने' सिञ्चन्ति पयसा वृष्टिलक्षणेनोदकेन **परिज्रयः** अजेर्गत्यर्थस्येदं रूपम् । सर्वतोगामिनः ।। ५ ।।

**वेङ्कटमाधव–** स्तोतॄन् ईशितॄन् कुर्वाणाः, कम्पयितारः **रिशादसः वातान् विद्युतः** च वर्षाय बलैः कुर्वन्ति । **दुहन्ति** मेघं **दिव्यानि** उदकानि कम्पयितारः । **भूमिम्** ओषधीः दुहन्ति उदकेन परितो गन्तारः ।। ५ ।।

**मुद्गल– ईशानकृतः** स्तोतारमीशानं धनाधिपतिं कुर्वाणाः । **धुनयः** मेघादीनां कम्पयितारः । **रिशादसः** हिंसकानामत्तारः । एवम्भूता मरुतः **तविषीभिः** आत्मीयैर्बलैः **वातान्** पुरोवातादीन् **विद्युतः** विद्योतमानास्तडितश्च **अक्रत** कुर्वन्ति । कृत्वा च **परिज्रयः** परितो गन्तारः **धूतयः** कम्पयितारो मरुतः **दिव्यानि** दिवि भवानि **ऊधः** ऊधःस्थानीयानि अभ्राणि **दुहन्ति** रिक्तीकुर्वन्ति । जलरहितानि कुर्वन्तीत्यर्थः । तदनन्तरम् **भूमिम्** पयसा मेघान्निर्गतेनोदकेन **पिन्वन्ति** सिञ्चन्ति ।।

**सायण– ईशानकृतः** स्तोतारमीशानं धनाधिपतिं कुर्वाणाः । **धुनयः** मेघादीनां कम्पयितारः **रिशादसः** रिशानां हिंसकानामत्तारः । यद्वा रिशतां हिंसतामसितारो निरसितारः । एवम्भूता मरुतः **तविषीभिः** आत्मीयबलैः **वातान्** पुरोवातादीन् **विद्युतः** विद्योतमानास्तडितश्च **अक्रत**

कुर्वन्ति । कृत्वा च **परिज्रयः** परितो गन्तारः । **धूतयः** कम्पयितारो मरुतः **दिव्यानि** दिवि भवानि **ऊधः** उधःस्थानीयान्यभ्राणि **दुहन्ति** रिक्तीकुर्वन्ति । जलरहितानि कुर्वन्तीत्यर्थः । तदनन्तरं **भूमिं** पयसा मेघान्निर्गतेनोदकेन **पिन्वन्ति** सिञ्चन्ति ।। **रिशादसः** । 'रिश हिंसायाम्' । इगुपधलक्षणः कः । रिशन्ति हिंसन्तीति रिशाः शत्रवः । तानदन्तीति रिशादसः । असुन् । नित्त्वादाद्युदात्तत्वम् । कृदुत्तरपदप्रकृतिस्वरत्वम् । यद्वा । रिशच्छब्दात् शत्रन्तात् 'असु क्षेपणे' इत्यस्मात् क्विप् । व्यत्ययेन पूर्वपदस्य उपधादीर्घः अन्तोदात्तत्वं च । **अक्रत** । करोतेश्छान्दसो वर्तमाने लुङ् । 'मन्त्रे घस' इति च्लेर्लुक् । **ऊधः** । 'सुपां सुलुक्' इति विभक्तेर्लुक् ।। ५ ।।

**सिद्धाञ्जनम्– ईशानकृतः** स्तोतारं स्वामिनं कुर्वन्तः । **धुनयः** कम्पयितारः **रिशादसः** हिंसकानां अत्तारः । एवम्भूता मरुतः **तविषीभिः** स्वकीयैर्बलैः **विद्युतः** विद्योतमानान् **वातान्** वायून् प्राणशक्तिविसरान् **अक्रत** कुर्वन्ति । तथा कृत्वा **परिज्रयः** परितो गन्तारः **धूतयः** कम्पयितारः **दिव्यानि** दिवि भवानि **ऊधः** प्राणबलादिभूयिष्ठानि मध्यमस्थानगतानि साराधारभूतानि ऊधांसि **दुहन्ति** रिक्तीकुर्वन्ति । तथाकरणेन **भूमिम्** अन्नमयक्षेत्रं **पयसा** जीवनाधारभूतेन प्राणमयेन रसेन **पिन्वन्ति** सिञ्चन्ति ।। मारुतसूक्तेषु बाह्यार्थस्यापाततो बलीयस्त्वदर्शनात् अन्तरर्थः क्लेशेनैव साध्य इति मा भूद् भ्रमः । अत एव स्थूलवर्णनात् मारुतं रहस्यं दुर्विज्ञेयमिति मन्त्रद्रष्टार एव प्रमाणं पूर्वम् अस्माभिः स्मारितम् । रिशादसादयः सर्वे गताः ।। ५ ।।

।। इति **प्रथमाष्टके पञ्चमाध्याये षष्ठो वर्गः** ।।

## ।। अथ सप्तमो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

**पिन्वन्त्यपो मरुतः सुदानवः पयो घृतवद्विदथेष्वाभुवः ।**
**अत्यं न मिहे वि नयन्ति वाजिनमुत्सं दुहन्ति स्तनयन्तमक्षितम् ।। ६ ।।**

**पिन्वन्ति । अपः । मरुतः । सुऽदानवः । पयः । घृतऽवत् । विदथेषु । आऽभुवः । अत्यम् । न । मिहे । वि । नयन्ति । वाजिनम् । उत्सम् । दुहन्ति । स्तनयन्तम् । अक्षितम् ।। ६ ।।**

**स्कन्द– पिन्वन्ति** पिन्वतिरिह सामर्थ्यात् क्षरणार्थः न सेचनार्थः । क्षारयन्ति वृष्टिलक्षणाः

**अपः** मरुतः । न चाप एव केवलाः, किं तर्हि, **पयः घृतवत्** क्षीरं च घृतसंयुक्तं वर्षयन्ति । वृष्टिद्वारेणैव गाः प्रभूतक्षीराः कुर्वन्तीत्यर्थः । क । **विदथेषु** यज्ञनामैतत् (तु.निघ.३,१४) । इह तत्सम्बद्धेषु देशेषु । येषु यज्ञाः क्रियन्ते तेष्वित्यर्थः । **आभुवः** महान्तः । किञ्च **अत्यं न मिहे** 'अत्यः' (निघ.१,१४) इति अश्वनाम । 'मिह सेचने' । यथा कश्चिदश्वं सेचनाय इतश्चेतश्च नयेत् तद्वत् **वि नयन्ति** विविधमितश्चेतश्च नयन्ति । कीदृशम् । **वाजिनम्** वाज इत्यपठितमपि बलनाम वेगवचनं वा । उपमानभूतस्य चात्यस्येदं विशेषणम् । बलवन्तं वेगवन्तं वाऽश्वमिव । अथवा 'वाजः' (निघ.२,७) इत्यन्ननाम । इह च तत्कारणत्वाद्वृष्टिलक्षणे उदके प्रवृत्तम् । वक्ष्यमाणमेघस्येदं विशेषणं वृष्ट्युदकवन्तम् । **उत्सम्** उत्सशब्दोऽत्र मेघवचनः । 'अदर्दरुत्सम्' (ऋ.५,१२,१) इति यथा । मेघं विनीय **दुहन्ति** क्षारयन्ति । **स्तनयन्तम्** गर्जन्तम् । **अक्षितम्** अक्षीणम् । प्रभूतोदकमित्यर्थः । अथवा अक्षितम् अहिंसितपूर्वम् अन्येन केनचित् ।। ६ ।।

**वेङ्कटमाधव–** पिन्वन्ति उदकानि मरुतः सुदानवः, उदकम् क्षरणवत् यज्ञेषु आभवन्तः । अन्तरिक्षादिभ्यः दुहन्ति वर्षोदकमिति । 'घृतेन नो घृतप्वः पुनन्तु' (ऋ.१०,१७,१०) इति मन्त्रः । अश्वम् इव बलिनम् अमी सेचनाय मेघम् शिक्षयन्ति । दुहन्ति च **स्तनयन्तम्** अक्षीणम् उत्साख्यं मेघम् ।। ६ ।।

**मुद्गल– सुदानवः** शोभनदानाः मरुतः **पयः** क्षीरवत् सारवतीः **अपः पिन्वन्ति** सिञ्चन्ति । **आभुवः** ऋत्विजः । ते **विदथेषु** यज्ञेषु **घृतवत्** । यथा घृतं सिञ्चत्येवं मरुतोऽपि वृष्टिं कुर्वन्तीति भावः । तत्र हेतुमाह– **अत्यम् न** यथा अश्वं सादिनो **विनयन्ति** युद्धार्थं शिक्षन्त्येवं मरुतः **वाजिनम्** वेगवन्तं मेघम् **मिहे वि नयन्ति** वर्षणाय स्वाधीनं कुर्वन्तीति भावः । विनीय च **स्तनयन्तम्** गर्जन्तम् **अक्षितम्** अक्षीणम् । **उत्सम्** उत्सवन्त्यस्मादाप इत्युत्सो मेघः । तं **दुहन्ति**रिक्तीकुर्वन्ति ।। ६ ।।

**सायण– सुदानवः** शोभनदानाः **मरुतः, पयः** क्षीरवत् सारवतीः **अपः पिन्वन्ति** सिञ्चन्ति । **आभुवः** । आभवन्तीत्याभुव ऋत्विजः । ते **विदथेषु** यज्ञेषु **घृतवत्** । यथा घृतं सिञ्चत्येवं मरुतोऽपि वृष्टिं कुर्वन्तीति भावः । तत्र हेतुमाह । **अत्यं न** यथा अश्वं सादिनो **विनयन्ति** युद्धार्थं शिक्षन्त्येवं मरुतः **वाजिनं** वेगवन्तं मेघं **मिहे** वर्षणाय **वि नयन्ति** स्वाधीनं कुर्वन्तीति

भावः । विनीय च **स्तनयन्तं** गर्जन्तम् **अक्षितम्** अक्षीणम् । **उत्सम्** उत्सवन्त्यस्मादाप इत्युत्सो मेघः । तं **दुहन्ति** रिक्तीकुर्वन्ति । **सुदानवः**- नुप्रत्ययान्तो दानुशब्द आद्युदात्तः । बहुव्रीहौ 'आद्युदात्तं द्व्यच्छन्दसि' इत्युत्तरपदाद्युदात्तत्वम् । **मिहे** 'मिह सेचने' । सम्पदादिलक्षणो भावे क्विप् । 'सावेकाच' इति विभक्तिरुदात्ता । **स्तनयन्तम्** । 'स्तन शब्दे' । चुरादिरदन्तः । अतो लोपस्य स्थानिवद्भावाद् वृद्ध्याद्यभावः ॥ ६ ॥

**सिद्धाञ्जनम्**– मरुत्वतीयशस्त्रे 'पिन्वन्त्यपः' इत्येषा धाय्या । सूत्रितं च– 'अग्निर्नेता त्वं सोम क्रतुभिः पिन्वन्त्यप इति धाय्याः' (आश्व.श्री.५.१४) इति ॥

**सुदानवः** शोभनदानयुक्ताः **मरुतः**, **विदथेषु** ज्ञानगम्ययजनसदनेषु **आ भुवः** आभिमुख्येन भवन्तः वर्तमानाः सन्तः **घृतवत्** दीप्तियुक्तं **पयः** क्षीरं सारोपलक्षणं तद्युक्ताः **अपः** मध्यमस्थानीयतेजोबलादिसम्पद्वाहिनीः शक्तीः **पिन्वन्ति** पूरयन्ति, प्रवाहयन्ति वा । अत्रेदं वक्तव्यम् । विदथः ज्ञानागमो भवति । ज्ञानागमस्थानं ज्ञानगम्यं वा यजनमपि विदथशब्दवाच्यम् । अयमन्तर्याग एव ग्राह्यः । तत्र अन्तरिक्षस्थाना प्राणमयभूरेव यागशाला भवति । मरुतस्तत्र दीप्तियुक्ताः सारवतीरुक्तलक्षणाः अपः प्रवाहयन्ति, पूरयन्ति । पिन्वतिर्धातुः सेचने सेवने पूरणे च वर्तते । किमर्थमेवं कुर्वन्ति? आह- **अत्यम् न** अश्वं यथा सादिनः **विनयन्ति** समीचीन-सुनियतगत्यर्थं शिक्षयन्ति तथा मरुतः **वाजिनम्** बलवेगसमृद्धियुक्तं **उत्सम्** तेजोबलादि-प्रस्रवणाधारभूतं अन्तरिक्षालयं महान्तं विश्वप्राणं, **मिहे** वर्षणाय **विनयन्ति, दुहन्ति** रिक्तीकुर्वन्ति । कीदृशम् ? **स्तनयन्तम्** गर्जन्तं, **अक्षितम्** अक्षीणम् । मेघपरतया व्याख्यानायास्त्येवावकाशः । अपि तु भाववैशिष्ट्यं विचेयमेव । अत्र 'विदथेषु यज्ञेषु, आभूवः ऋत्विजः, घृतवत् घृतं यथा सिञ्चन्ति एवं मरुतोऽपि वृष्टिं कुर्वन्तीति' सायणः । इदं च अमूलम् । 'घृतवत्' इत्यत्र मतुबर्थो ग्राह्यः । नेह उपमार्थीयो वतिः । सायण एव 'घृतवत्' प्रयोगस्थलेषु सर्वत्र घृतयुक्तं पयः हव्यं वेति व्याचष्टे । 'घृतवत् पयः सारोपेतम्' (१.२२.१४) 'घृतवत् दीप्तिमत्' (३.५. ६) 'घृतवत् पयो मधुमत्' (१०.६४.६) 'घृतवत् पयः क्षरणवत्' (१०.६५.८) एवमन्यत्र च ॥ **सुदानवः**- ददातेः नुप्रत्ययान्तो दानुशब्दः । **मिहे**- सम्पदादिलक्षणः क्विप् । **स्तनयन्तम्**- स्तनयशब्द-श्चुरादिरदन्तः ॥ ६ ॥

## ऋक्संहिता पदपाठसहिता

**महिषासो मायिनश्चित्रभानवो गिरयो न स्वतवसो रघुष्यदः ।**
**मृगाइव हस्तिनः खादथा वना यदारुणीषु तविषीरयुग्ध्वम् ॥ ७ ॥**
**महिषासः । मायिनः । चित्रऽभानवः । गिरयः । न । स्वऽतवसः । रघुऽस्यदः । मृगाःऽइव । हस्तिनः । खादथ । वना । यत् । आरुणीषु । तविषीः । अयुग्ध्वम् ॥ ७ ॥**

**स्कन्द– खादथ** इति मध्यमपुरुषसंयोगात् प्रत्यक्षकृतोऽयं मन्त्रः । न चैतानि सम्बोधनानि । अतो यत्तच्छब्दावध्याहृत्यैकवाक्यतां नेयानि । ये यूयम्! **महिषासः** महान्तः **मायिनः** मायाविनः । **चित्रभानवः** विचित्रदीप्तयः । **गिरयः न स्वतवसः** पर्वता इव स्वबलाः । **रघुष्यदः**, स्यन्दतिर्गतिकर्मा । (तु.निघ.२,१४) लघुगमनाः । शीघ्रगामिन इत्यर्थः । **मृगाः इव हस्तिनः खादथ वना,** इवशब्दो हस्तिन इत्यत्राप्यनुषक्तव्यः । वनशब्दश्च वृक्षवचनः । यथा मृगास्तृणानि खादन्ति, यथा च हस्तिनो वृक्षान् भङ्क्त्वा खादन्ति, तद्वद्यूयं खादथ । किम् । सामर्थ्याच्छत्रून् । अथवा मृगा इह सिंहा व्याघ्रा वा अभिप्रेताः नान्ये । 'वनम्' (निघ.१,१२) इति उदकनाम । सामर्थ्याच्चेहान्तर्णीतमत्वर्थम् । यथा सिंहा व्याघ्रा वा भङ्क्त्वा हस्तिनः खादन्ति तद्वद्यूयमुदकवतो मेघानित्यर्थः । कदा । उच्यते । **यत् आरुणीषु** द्वितीयार्थे सप्तमी । अरुणीः बडवाः । यद्यपि चेदम् 'अरुण्यो गाव उषसाम्' (निघ,१,१५) इत्युषसामादिष्टोपयोजनं तथापि माहाभाग्यात् देवतानां मरुतामप्यविरुद्धम् । **तविषीः** बलनामैतत् (तु.निघ.२,९) इह चान्तर्णीतमत्वर्थम् । बलवतीः । **अयुग्ध्वम्** युद्धार्थं स्वरथे न्ययुङ्ग्ध्वम् । यदाऽयुध्यध्वमित्यर्थः ॥ ७ ॥

**वेङ्कट.–** महान्तः प्राज्ञाः चित्रदीप्तयः पर्वताः इव स्वबलाः बलमहत्तया लघुजवाः । सिंहमृगा इव गजान् अरण्यानि परिगृह्य यूयम् **खादथ** यदा अरुणवर्णासु बडवासु बलानि **अयुग्ध्वं** बलमादाय स्वाश्वा अधितिष्ठथेति ॥ ७ ॥

**मुद्गल– महिषासः** 'महिषः' (निघ.३,३) इति महन्नाम । महान्तः । मायेति ज्ञाननाम (तु.निघ.३,९) । **मायिनः** प्राज्ञाः । **चित्रभानवः** शोभनदीप्तयः । गिरयः न **स्वतवसः** पर्वता इव स्वकीयेन बलेन युक्ताः **रघुष्यदः** शीघ्रगमनाः हे मरुतः! एवम्भूतगुणविशिष्टा यूयम् **हस्तिनः** हस्तवन्तः **मृगाः** इव गजा इव **वना** वनानि वृक्षजातानि **खादथ** भक्षयथ । प्रभुङ्क्थेति यावत् ।

**यत्** यस्मात् **आरुणीषु** अरुणवर्णासु वडवासु **तविषीः** बलानि **अयुग्ध्वम्** संयोजितवन्तः । तस्माद् भवतामिव वाहनस्यापि प्रबलत्वात् तत्संयुक्ता भवन्तः सर्वे भञ्जन्तीत्यर्थः ।। ७ ।।

**सायण–** महिष इति महन्नाम । **महिषासः** महान्तः । मायेति ज्ञाननाम । **मायिनः** प्राज्ञाः **चित्रभानवः** शोभनदीप्तयः **गिरयो न स्वतवसः** पर्वता इव स्वकीयेन बलेन युक्ताः **रघुष्यदः** शीघ्रगमना हे मरुतः! एवम्भूतगुणविशिष्टाः यूयं **हस्तिनः** हस्तवन्तः **मृगा इव** गजा इव **वना** वनानि वृक्षजातानि **खादथ** भक्षयथ । प्रभङ्क्थेति यावत् । **यत्** यस्मात् **आरुणीषु** अरुणवर्णासु वडवासु **तविषीः** बलानि **अयुग्ध्वम्** संयोजितवन्तः । तस्माद्भवतामिव वाहनस्यापि प्रबलत्वात्तत्संयुक्ता भवन्तः सर्वे भञ्जन्तीत्यर्थः ।। **रघुष्यदः** । 'स्यन्दू प्रस्रवणे' । रघु शीघ्रं स्यन्दन्ते गच्छन्तीति रघुष्यदः । 'क्विप् च' इति क्विप् । 'अनिदिताम्' इति नलोपः । 'वालमूललघ्वलम्' (पा.सू.८.२.१८) इति लत्वविकल्पः । कृदुत्तरपदप्रकृतिस्वरत्वम् । **खादथ** । 'खाद् भक्षणे' । **अयुग्ध्वम्** । 'युजिर् योगे' । लुङि 'च्लेः सिच्' । 'एकाचः' इति इट्प्रतिषेधः । 'धि च' (पा.सू.८.२.२५) इति सकारलोपः । 'चोः कुः' इति कुत्वम् । अडागम उदात्तः । यद्वृत्तयोगादनिघातः ।। ७ ।।

**सिद्धाञ्जनम्– महिषासः** महान्तः । महिष इति महन्नाम । **मायिनः** ज्ञानवन्तः । मायेति ज्ञाननाम । **चित्रभानवः** बहुविधदीप्तयः । **गिरयो न** पर्वता इव **स्वतवसः** स्वीयेन बलेन युक्ताः **रघुष्यदः** रघु शीघ्रं स्यन्दन्ते गच्छन्तीति रघुष्यदः शीघ्रगमनाः, हे मरुतः, एवम्भूता यूयं, **हस्तिनः मृगा इव** हस्तवन्तो गजा इव **वना** वनानि वृक्षादीनि **खादथ** भक्षयथ इति बाह्ये पक्षे, सुखानि भजथ, पार्थिशरीरोपभोगक्षमाः भवथ इति रहस्यार्थः । **यत्** यस्मात् **आरुणीषु** अरुणवर्णासु सामर्थ्यात् वडवासु भोगक्षमासु, अन्यत्र गावोऽपि भवन्ति, इह तु भोगक्रियासामर्थ्यं विवक्षितम् । **तविषीः** युष्मदीयानि बलानि **अयुग्ध्वम्** यूयं संयोजितवन्तः । तस्मात् युष्मद्बलयुक्तवाहनसहिता यूयं वना खादथेति सम्बन्धः ।। **रघुष्यदः**- 'स्यन्दू प्रस्रवणे' क्विप्, अनिदितामिति नलोपः। **खादथ** 'खादृ भक्षणे । **अयुग्ध्वम्** 'युजिर् योगे' लुङ् ।। ७ ।।

## ऋक्संहिता पदपाठसहिता

**सिंहाइव नानदति प्रचेतसः पिशाइव सुपिशो विश्ववेदसः ।**
**क्षपो जिन्वन्तः पृषतीभिर्ऋष्टिभिः समित्सबाधः शवसाहिमन्यवः ।। ८ ।।**

सिंहाःऽईव । नानदति । प्रऽचेतसः । पिशाःऽईव । सुऽपिशः । विश्वऽवेदसः । क्षपः । जिन्वन्तः । पृषतीभिः । ऋष्टिऽभिः । सम् । इत् । सऽबाधः । शवसा । अहिऽमन्यवः ॥

**स्कन्द– सिंहा इव नानदति** अत्यर्थं नदन्ति मरुतः । कीदृशाः । **प्रचेतसः** प्रवृद्धज्ञानाः । **पिशा इव सुपिशः** पिङ्गलवर्णत्वात् पिशा इह अग्नय उच्यन्ते । सुपिश इति पेशशब्दस्य रूपनाम्न इदमुपधाह्रस्वत्वम् । व्यत्ययेन च नपुंसकत्वैकवचने । अग्नय इव सुपेशसः सुरूपा इत्यर्थः । **विश्ववेदसः** बहुधनाः । किं कुर्वन्तो नानदति । उच्यते । **क्षपः जिन्वन्तः** 'क्षप' (निघ.१,१२) इत्युदकनाम । जिन्वतिः प्रीतिकिर्माऽन्यत्र । इह तु क्षरणार्थः । **सम् इत्** इत्ययं च संशब्दः उपसर्गोऽपकृष्य 'जिन्वन्त' इत्यनेन सम्बन्धयितव्यः । उदकं मेघात् संक्षारयन्त इत्यर्थः । केन । **पृषतीभिः** पृषद्वर्णाभिः वडवाभिः **ऋष्टिभिः** शक्तिभिश्च तोरणैर्वा । सर्वैर्युद्धोपकरणैरित्यर्थः । **समिदिति** इच्छब्द पदपूरणः । कीदृशाः । **सबाधः** सहभूतानामपि शत्रूणां बाधितारः । **शवसा** स्वेन बलेन । **अहिमन्यवः** हि गतौ । मन्युर्मन्यतेः दीप्तिकर्मणः । अगता अविनष्टा दीप्तिर्येभ्यः ते अहिमन्यवः । दीप्तिमन्तः इत्यर्थः । अथवा अहीनदीप्तयोऽहिमन्यव उत्कृष्टदीप्तय इत्यर्थः । अथवा अहिर्मेघोऽसुरो वा । 'मन्यु' (निघ.२,१३) इत्यपि क्रोधनाम । अहिविषयः क्रोधो येषां ते अहिमन्यवः । दीप्तिमन्त इत्यर्थः ॥ ८ ॥

**वेङ्कटमाधव– सिंहा** इव शब्दं कुर्वन्ति प्रकृष्टज्ञानाः । यथा पुरुषे मांसानि अवयवश्लिष्टानि एवं पदार्थैः सर्वैरेव मरुतः सुष्ठु आश्लिष्टा भवन्ति । सर्वज्ञा उदकं पूरयन्तः **पृषतीभिः** अश्वाभिः **ऋष्टिभि**श्चायुधविशेषैः समेव शत्रून् बाधितारः **शवसा** आहननशीलाः अभिमनना ॥ ८ ॥

**मुद्गल– प्रचेतसः** प्रकृष्टज्ञाना मरुतः, **सिंहा इव, नानदति** भृशं शब्दं कुर्वन्ति । यथा सिंहा गिरिगह्वरेषु गम्भीरशब्दं कुर्वन्ति, एवं मरुत्स्वप्यागतेषु गम्भीरशब्द उत्पद्यत इति भावः । तथा **सुपिशः** शोभनावयवाः । दृष्टान्तः- **पिशा इव** यथा रुरवः स्वशरीरगतैः श्वेतबिन्दुभि-रलङ्कृतास्तद्वत् । **विश्ववेदसः** सर्वज्ञाः **क्षपः** शत्रूणां क्षपयितारः **जिन्वन्तः** स्तोतॄन् प्रीणयन्तः **शवसा** बलेन **अहिमन्यवः** आहननशीलमन्युयुक्ताः । यद्विषयः कोपो जायते तस्य हनने समर्था इत्यर्थः । एवम्भूता मरुतः **पृषतीभिः** वाहनैः **ऋष्टिभिः** आयुधैश्च सहिताः सन्तः **सबाधः** शत्रुभिः बाधितान् यजमानान् **सम् इत्** समानमेव युगपदेव । रक्षितुमागच्छन्तीति शेषः ॥ ८ ॥

**सायण–** प्रचेतसः प्रकृष्टज्ञानाः मरुतः, **सिंहा इव नानदति** भृशं शब्दं कुर्वन्ति । यथा सिंहाः गिरिगह्वरेषु गम्भीरं शब्दं कुर्वन्ति एवं मरुत्सु अप्यागतेषु गम्भीरः शब्द उत्पद्यते इति भावः । तथा **सुपिशः** शोभनावयवाः शोभनालङ्कारा वा । तत्र दृष्टान्तः- **पिशाइव** । पिश इति रुरुनाम । यथा रुरवः स्वशरीरगतैः श्वेतबिन्दुभिरलङ्कृतास्तद्वत् । **विश्ववेदसः** सर्वज्ञाः **क्षपः** शत्रूणां क्षपयितारः । **जिन्वन्तः** स्तोतॄन् प्रीणयन्तः । **शवसा** बलेन **अहिमन्यवः** आहनन-शीलमन्युयुक्ताः । यद्विषयः कोपो जायते तस्य हनने समर्था इत्यर्थः । यद्वा । मननं ज्ञानं मन्युः । अहीनज्ञानाः उत्कृष्टबुद्धय इत्यर्थः । एवम्भूता मरुतः **पृषतीभिः** । पृषत्य इति मरुतां वाहनस्याख्या । पृषत्यः श्वेतबिन्द्वङ्किता मृग्य इत्यैतिहासिकाः । नानावर्णा मेघमाला इति नैरुक्ताः । ताभिः, **ऋष्टिभिः** आयुधैश्च सहिताः सन्तः । **सबाधः** शत्रुभिर्बाधितान् यजमानान् **समित्** समानमेव युगपदेव रक्षितुमागच्छन्तीति शेषः । **नानदति** । 'नद अव्यक्ते शब्दे' । अस्माद् यङ्लुङन्ताल्लट् । **पिशाइव** । 'पिश अवयवे' इगुपधलक्षणः कः । **सुपिशः** । सुपूर्वात् 'पिश अवयवे' इत्यस्मात् 'क्विप् च' इति क्विप् । **पृषतीभिः** 'पृषु सेचने'। 'वर्तमाने पृषद्बृहन्महज्जगच्छतृवच्च' (उ.सू.२.२४१) इति शतृवद्भावात् 'उगितश्च' इति ङीप् । अत एव 'शतुरनुमः' इति नद्या उदात्तत्वे प्राप्ते 'बृहन्महतोरुपसङ्ख्यानम्' इति नियमात्तस्याभावः ।।

**सिद्धाञ्जनम्– प्रचेतसः** प्रकृष्टचेतोयुक्ताः मरुतः । **सिंहा इव नानदति** वचनव्यत्ययः, अधिकं शब्दं कुर्वन्ति । सिंहानामिव मरुतामागमने गम्भीरः शब्द उत्पद्यते । इदं च रहस्यं अन्तर्याजिनां विदितम् । तथा **सुपिशः** शोभनावयवाः **पिशा इव** पिशाख्याः मृगविशेषाः रुरवः यथा श्वेतबिन्दुभिरलङ्कृतशरीराः सन्ति तथाभूताः **विश्ववेदसः** सर्वज्ञानिनः, **क्षपः** रात्रीः **जिन्वन्तः** उल्लासयन्तः । रात्रिषु यज्ञशत्रूणां प्राबल्ये सति मरुतां कृत्यानि तमसः प्रध्वंसमापाद्य निर्णिद्रतां विदधते, तस्माद् रात्रीणां जिन्वनं उल्लासनं प्रीणनं वा भवति । **क्षपः** 'शत्रूणां क्षपयितारः' इति मरुद्विशेषणं प्राह सायणः, 'जिन्वन्तः स्तोतॄन् प्रीणयन्तः' इति च । अपि च शवसा बलेन अहिमन्यवः अहेः सर्पस्य मन्युरिव क्रोध इव येषां मन्युः ते सर्पवत्क्रुद्धाः. आहननशीला मन्युयुक्ता इत्येके । एवम्भूता मरुतः **पृषतीभिः** चित्रवर्णबिन्दुयुक्ताभिः । 'मरुद्वाहाः पृषत्यः विचारिताः (१.३६.६, १.३७.२) **ऋष्टिभिः** आयुधैश्च सहिताः **सबाधः** बाधासहितान् शत्रुभिर्बाधितान् यजमानान् **सम् इत्** सम्भूयैव गणश आगच्छन्ति रक्षितुमिति शेषः ।। **नानदति**- नदतेर्यङ्लुगन्ताल् लट् । **सुपिशः**- सुपूर्वात् 'पिश अवयवे' इत्यस्मात् क्विप् ।। ८ ।।

## ऋक्संहिता पदपाठसहिता

**रोदसी आ वदता गणश्रियो नृषाचः शूराः शवसाहिमन्यवः ।**
**आ बन्धुरेष्वमतिर्न दर्शता विद्युन्न तस्थौ मरुतो रथेषु वः ।। ९ ।।**
**रोदसी इति । आ । वदत । गणऽश्रियः । नृऽसाचः । शूराः । शवसा । अहिऽमन्यवः ।**
**आ । बन्धुरेषु । अमतिः । न । दर्शता । विऽद्युत् । न तस्थौ । मरुतः । रथेषु । वः ।।**

**स्कन्द–** **'रोदसी आ'** आकारोऽत्र प्रतिशब्दस्यार्थे । उभे अपि द्यावापृथिव्यौ प्रति **वदत ।** गर्जतेत्यर्थः । हे **गणश्रियः!** गणमाश्रिताः गणरूपाः इत्यर्थः । **नृषाचः** । यागकाले मनुष्याणां सेवितारः! **शूराः!** केन वदाम । उच्यते । **शवसा** स्वबलेन । **अहिमन्यवः** नेदं सम्बोधनम् । प्रत्यक्षकृतश्चायं मन्त्रः । अतो यत्तच्छब्दावध्याहृत्यैकवाक्यता नेया । ये यूयमहिमन्यवः ते । किञ्च **बन्धुरेषु** सारथिस्थानेषु **अमतिः न दर्शता** 'अमतिः' (निघ.३,७) इति रूपनाम । सामर्थ्याच्चेहान्तर्णीतमत्वर्थः । यथा काचिद्रूपवती स्त्री दर्शनीया तद्वद्दर्शनीया । **विद्युत् न आ तस्थौ** आतिष्ठति । व्यवतिष्ठत इत्यर्थः । नशब्दस्तु उपरिष्टादुपचार उपमार्थीयत्वात् 'अस्त्युपमार्थीयस्य सम्प्रत्यर्थे प्रयोगः' (तु.या.७,३१) इति पदपूरणः । अथवा विद्युन्नेति नशब्दश्रुतिसामर्थ्यादुभे अप्येते उपमाने । यथा रूपवती काचिद् दर्शनार्हा स्त्री क्वचिद् व्यवतिष्ठते, यथा विद्युद्दीप्यमाना व्यवतिष्ठते, एवं बन्धुरेषु व्यवतिष्ठत इत्यर्थः । कः । सामर्थ्यात् सारथिः । क ते बन्धुराः । उच्यते । हे मरुतः! **रथेषु वः** युष्माकं स्वभूतेषु ।। ९ ।।

**वेङ्कटमाधव–** **रोदसी** स्वनिर्गमनेन शब्दापयत हे **गणश्रियः** । इतरेतरयुक्ताः, मनुष्याणां सम्भक्तारः! **शूराः** । **शवसा अहिमन्यवः** । **रथेषु** ये बन्धुरास्तेषु **अमतिः** इव रूपमिव दर्शनीया **विद्युत्** न अवतिष्ठते, भूयोभूयः प्रस्फुरति, यथा पदार्थानां रूपं बहिः स्थितमिति ।। ९ ।।

**मुद्गल–** हे **गणश्रियः!** गणशः श्रयमाणाः सप्तगणरूपेणावस्थिताः! **नृषाचः** नॄन् यजमानान् हविःस्वीकरणाय सेवमानाः! **शूराः!** शौर्योपेताः! एवम्भूता हे मरुतः! **शवसा** बलेन **अहिमन्यवः** आहननस्वभावकोपयुक्ताः सन्तः **रोदसी** द्यावापृथिव्यौ **आ वदत** आसमन्तात् शब्दयत । युष्मदागमने सति भवदीयशब्देन द्यावापृथिव्यौ पूर्णे कुरुतेति भावः । किञ्च हे मरुतः! । **वः** युष्माकं तेजः **बन्धुरेषु** बन्धककाष्ठनिर्मितं सारथेः स्थानं बन्धुरमित्युच्यते । तद्युक्तेषु रथेषु **आ तस्थौ** आतिष्ठति, अवस्थितं सत् सर्वैर्दृश्यते । दृष्टान्तद्वयमुच्यते । **अमतिः न** यथा निर्मलं

रूपं सर्वैर्दृश्यते । **दर्शता विद्युत् न** यथा दर्शनीया विद्युन्मेघस्था सर्वैर्दृश्यते एवं रथे स्थितानां युष्माकं ज्योतिरपि सर्वैर्दृश्यत इत्यर्थः ।। ९ ।।

**सायण–** हे **गणश्रियः** गणशः श्रयमाणाः सप्तगणरूपेणावस्थिताः । **नृषाचः** नॄन् यजमानान् हविःस्वीकरणाय सेवमानाः । **शूराः** शौर्योपेताः । एवम्भूता हे मरुतः ! **शवसा** बलेन **अहिमन्यवः** आहननस्वभावकोपयुक्ताः सन्तः **रोदसी** द्यावापृथिव्यौ **आ वदत** आ समन्ताच्छब्दयत । युष्मदागमने सति भवदीयशब्देन द्यावापृथिव्यौ पूर्णे कुरुतेति भावः । किञ्च हे **मरुतः! वः** युष्माकं तेजः **बन्धुरेषु** बन्धककाष्ठनिर्मितं सारथेः स्थानं बन्धुरमित्युच्यते । तद्युक्तेषु रथेषु **आ तस्थौ** आतिष्ठति । अवस्थितं सत्सर्वैर्दृश्यते । तत्र दृष्टान्तद्वयमुच्यते । **अमतिर्न** । अमतिरिति रूपनाम । यथा निर्मलं रूपं सर्वैर्दृश्यते । **दर्शता विद्युन्न** । यथा वा दर्शनीया विद्युन्मेघस्था सर्वैर्दृश्यते एवं रथे स्थितानां युष्माकं ज्योतिरपि सर्वैर्दृश्यते इत्यर्थः । **वदता** । 'ऋचि तुनुघ' इत्यादिना दीर्घः । **नृषाचः** । पादादित्वादामन्त्रिताद्युदात्तत्वम् । **अमतिः** । 'अम गत्यादिषु' । 'अमेरतिः' (उ.सू.४.४९९)इति औणादिकोऽतिप्रत्ययः । प्रत्ययाद्युदात्तत्वम् । **दर्शता** 'भृमृदृशि' इत्यादिनाऽतच्प्रत्ययः। चित्वादन्तोदात्तत्वम् ।। ९ ।।

**सिद्धाञ्जनम्–** हे **गणश्रियः** गणशः श्रयन्ते अवतिष्ठन्ते इति गणश्रियः । **नृषाचः** नॄन् मनुष्यान् यजमानान् सचन्ते सेवन्ते इति नृषाचः । **शूराः** शौर्ययुक्ताः । एवम्भूताः हे **मरुतः! शवसा** बलेन **अहिमन्यवः** सर्पवत् क्रुद्धाः सन्तः, **रोदसी** द्यावापृथिव्यौ **आ वदत** समन्तात् शब्दयत । अपि च हे मरुतः, **वः** युष्माकं रूपं तेजो वा **रथेषु बन्धुरेषु** सारथेः स्थानेषु **आ तस्थौ** आतिष्ठति अवस्थितं भवति । तच्च सम्यग्लक्ष्यते। तत्र दृष्टान्तः- **अमतिर्न** रूपमिव तेज इव वा । अमतिः रूपनाम तेजसि बले च वर्तते । अपि च **दर्शता** दर्शनीया सुभगा **विद्युत् न** विद्योतमाना तडिदिव लक्ष्यते ।। **वदता**- दीर्घः संहितायां छान्दसः। **अमतिः**- 'अम गत्यादिषु' अमेरौणादिकोऽतिप्रत्ययः । **दर्शता**- 'दृशिर् प्रेक्षणे' अतच्प्रत्ययः ।। ९ ।।

## ऋक्संहिता पदपाठसहिता

**विश्ववेदसो रयिभिः समोकसः संमिश्लासस्तविषीभिर्विरप्शिनः ।**
**अस्तार इषुं दधिरे गभस्त्योरनन्तशुष्मा वृषखादयो नरः ।। १० ।।**

**विश्वऽवेदसः । रयिऽभिः । सम्ऽओकसः । सम्ऽमिश्लासः । तविषीभिः । विऽरप्शिनः । अस्तारः । इषुम् । दधिरे । गभस्त्योः । अनन्तऽशुष्माः । वृषऽखादयः । नरः ।।१०।।**

**स्कन्द– विश्ववेदसः** सर्वज्ञाः बहुधना वा । **रयिभिः समोकसः,** सम् इत्येकीभावे । ओकः स्थानम् । धनैः सहैकस्थानाः । स्वसन्निधौ धनानां स्थापयितार इत्यर्थः । **संमिश्लासः तविषीभिः** बलैः संमिश्लाः । बलवन्त इत्यर्थः । **विरप्शिनः** महन्नामैतत् (तु.निघ.३,३) । महान्तः । **अस्तारः** क्षेप्तारः शत्रूणामायुधानां वा । **इषुम् दधिरे** धारयन्ति । **गभस्त्योः** बाहुनामैतत् (तु.निघ.२,४) तत्सम्बन्धात्त्विह हस्तयोः प्रयुक्तम् । आत्मीययोर्हस्तयोः **अनन्तशुष्माः** बहुबलाः । **वृषखादयः** वर्षितुर्मेघस्य खादितारः । अथवा खादिशब्द इह कवचस्य वचनः । कदूरिका-कारायुधविशेषवचनो वा । कुत एतत् । 'अंसेषु च ऋष्टयः पत्सु खादयः' (ऋ.५,५४,११), 'त्वेषं गणं तवसं खादिहस्तम्' (ऋ.५,५८,२) इत्यादिषु दर्शनात् । वृषे खादयो येषां ते वृषखादयः **नरः** मनुष्याकारा ।। १० ।।

**वेङ्कटमाधव–** सर्वज्ञाना धनैः समानस्थानाः महतोऽपि पर्वतादीन् आत्मबलैः सम्मिश्रयन्तः क्षेप्तारः **इषुम्** हस्तयोः धारयन्ति अनन्तबलाः वर्षणशीलखादिनामायुधयुक्ता नेतारः ।। १० ।।

**मुद्गल– विश्ववेदसः** सर्वज्ञाः । **रयिभिः** धनैः । **समोकसः** समाननिवासाः, समवेता वा । धनाधिपतय इत्यर्थः । **तविषीभिः** बलैः सम्मिश्लासः **सम्मिश्राः** । संयुक्ता इत्यर्थः । **वरप्शिनः** महान्तः । **अस्तारः** शत्रूणां निरसितारः । **अनन्तशुष्माः** अनवच्छिन्नबलाः । **वृषखादयः** वृषा इन्द्रः खादिः आयुधस्थानीयो येषां ते तथोक्ताः । **नरः** नेतारः । एवम्भूता मरुतः । **गभस्त्योः** बाह्वोः । **इषुम् दधिरे** शत्रूणां निरसनाय धनुर्बाणादिकम् आयुधं धारयन्ति ।। १० ।।

**सायण– विश्ववेदसः** सर्वज्ञाः । **रयिभिः** धनैः । **समोकसः** समाननिवासाः समवेता वा । धनाधिपतय इत्यर्थः । **तविषीभिः** बलैः । **सम्मिश्लासः** सम्मिश्राः । संयुक्ता इत्यर्थः। **विरप्शिनः** । महन्नामैतत् । महान्तः । **अस्तारः** शत्रूणां निरसितारः । **अनन्तशुष्माः** अनवच्छिन्नबलाः । **वृषखादयः** वृषा इन्द्रः खादिः आयुधस्थानीयो येषां ते तथोक्ताः । यद्वा । वृषा सोमः खादिः खाद्यः पेयो येषां ते । **नरः** नेतारः । एवम्भूता मरुतः । गभस्तिरिति बाहुनाम । **गभस्त्योः** बाह्वोः । **इषुं दधिरे** शत्रूणां निरसनाय धनुर्बाणादिकम् आयुधं धारयन्ति ।

**समोकसः**। 'उच समवाये' असुनि बहुलवचनात् कुत्वमिति 'ओक उचः के' इत्यत्रोक्तम् (का.७.३.१४)। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । **सम्मिश्लासः** । कपिलकादित्वात् लत्वम् । **विरप्शिनः**। 'रप लप व्यक्तायां वाचि' । विपूर्वादस्मात् बहुलवचनात् शक्प्रत्ययः । विविधं शब्दं रपन्तीति विरप्शाः स्तोतारः । ते एषां सन्तीति विरप्शिनः । यद्वा । विविधं रपणं विरप्शम् । तदेषामस्तीति । मरुतो हि विविधं शब्दं कुर्वते । इनिप्रत्ययस्वरः । **अस्तारः** । ताच्छीलिकः तृन् । इडभावश्छान्दसः । नित्त्वादाद्युदात्तत्वम् । **अनन्तशुष्माः** नास्त्यन्तोऽ स्येति अनन्तः । 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । अनन्तः शुष्मो बलं येषाम् । बहुवीहौ पूर्वपदप्रकृतिस्वरत्वम् । **वृषखादयः** । 'खाद भक्षणे'। औणादिक इन्प्रत्ययः । नृपशब्दः कनिन्प्रत्ययान्त आद्युदात्तः । बहुवीहौ पूर्वपदप्रकृतिस्वरत्वम् ।। १० ।।

**सिद्धाञ्जनम्– विश्ववेदसः** सर्वज्ञाः । **रयिभिः** धनैः । **समोकसः** समाननिवासाः । समवेतानां मरुतां धनं ओकश्च समाने इत्यर्थः । तथा **तविषीभिः** बलैः । **सम्मिश्लासः** सम्मिश्राः संयुक्ताः इतरेतरबलभाज इत्यर्थः । **विरप्शिनः** महान्तः । महन्नामैतत् । विविधरपणशीला इत्यन्यत्र (१.८.८) सायणः । तर्हि नानाविधघोषकारिणः, **अस्तारः** निरसितारः शत्रूणां, **अनन्तशुष्माः** अवच्छेदरहितबलाः, **वृषखादयः** सकृदेवायं प्रयोगः, अतः कष्टं वर्तत एव, खादिशब्दो हस्तत्राणार्थः। 'हस्तेषु खादिश्च कृतिश्च सन्दधे' (१.१६८.३) इत्यत्र खादिः हस्तत्राणकः, कृतिः कर्तनी । खादिर्भक्ष्ये वर्ततेऽन्यत्र (१.१६६.६) 'प्रपथेषु खादयः' खादयः खाद्यानि भक्ष्याणीति सायणः । अत एव अत्र द्विधा व्याचष्टे- 'वृषा इन्द्रः खादिः आयुधं येषां ते, वृषा सोमः खादिः खाद्यः पेयो येषां ते' इति । सर्वथा वृषशब्दस्यावयवार्थ एवात्र निर्णये द्वारं दद्यात् । तर्हि वृषपदेन बलं लक्ष्यते तदेव खाद्यं भवति मरुतामित्यस्माकमूहः ।। अपि च **नरः** नेतारः बलिन एवम्भूताः मरुतः **गभस्त्योः** बाह्वोः **इषुम्** बाणं, **दधिरे** धारयन्ति ।। **समोकसः**- 'उच समवाये, असुन्। **सम्मिश्लासः**- कपिलकादित्वात् लत्वम् । **विरप्शिनः**- 'रप लप व्यक्तायां वाचि' । **अस्तारः**- ताच्छीलिकस्तृन्, इडभावश्छान्दसः । अनन्तशुष्मा अनन्तः शुष्मो येषां ते ।। १० ।।

।। इति प्रथमाष्टके पञ्चमाध्याये सप्तमो वर्गः ।।

## ।। अथ अष्टमो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

**हिरण्ययेभिः पविभिः पयोवृध उज्जिघ्नन्त आपथ्यो३ न पर्वतान् ।**
**मखा अयासः स्वसृतो ध्रुवच्युतो दुध्रकृतो मरुतो भ्राजदृष्टयः ।। ११ ।।**
हिरण्ययेभिः । पविऽभिः । पयःऽवृधः । उत् । जिघ्नन्ते । आऽपथ्यः । न । पर्वतान् ।
मखाः । अयासः । स्वऽसृतः । ध्रुवऽच्युतः । दुध्रऽकृतः । मरुतः । भ्राजत्ऽऋष्टयः ।।११।।

**स्कन्द– हिरण्ययेभिः पविभिः** । पवी रथनेमिरुच्यते । हिरण्मयीभी रथचक्रधाराभिः । **पयोवृधः** उदकस्य वर्धयितारः । **उज्जिघ्नन्ते** उच्छब्द ऊर्ध्वतायाम् । प्रदर्शनार्थं चोर्ध्वतोपादानम् । ऊर्ध्वमधस्तिर्यक् च घ्नन्ति । कथम् । **आपथ्यो न** 'आपथयो विपथयोऽन्तस्पथा अनुपथाः' (ऋ.५,५२,१०) इति प्रयोगदर्शनात् आपथयो मरुत उच्यन्ते । तेषां स्वभूता आपथ्यः । अथवा अविद्यमानो नियतः पन्था यस्मिन् तदपथम् अन्तरिक्षम् । तत्र भवा आपथ्यः । का एताः वृष्टिलक्षणा आपः । यथा वृषिलक्षणा आपो नद्यादिभावेन व्यवस्थिताः कूलादीनि घ्नन्ति तद्वदित्यर्थः । किं घ्नन्ति । उच्यते । **पर्वतान्** मेघनामैतत् (तु.निघ.१,१०) । मेघानामुपरि चङ्क्रम्यमाणाः । रथचक्रधाराभिः मेघान् भिन्दन्तीत्यर्थः । श्यावाश्वोऽपि वक्ष्यति– 'उत पथ्या रथानामद्रिं भिन्दन्त्योजसा' (ऋ.५,५२,९) इति । कीदृशाः । उच्यते । **मखाः** अपठितमपि महन्नामैतत् द्रष्टव्यम् । महान्तः । अथवा मखा इति यज्ञनामैतत् मखयतेः अर्चतिकर्मणः । तं कुर्वन्तीति मखाः । वृष्टिद्वारेण यज्ञस्य कर्तारः । **अयासः** गमनशीलाः । **स्वसृतः** सर्वत्र स्वयंगामिनः । **ध्रुवच्युतः** । स्थिराणामपि च्यावयितारः । **दुध्रकृतः** कृन्ततिर्वधकर्मा (तु.निघ. २,१९) । दुर्धराणां कर्तितारः । अत्यन्तमपि बलवतां हन्तार इत्यर्थः । अथवा करोतेरेवैतद्रूपम् । दुध्रशब्दस्तु दुर्धरतायां द्रष्टव्यः । आत्मनो दुर्धरतायाः कर्तारः । के । उच्यते । **मरुतः भ्राजदृष्टयः** दीप्तशक्तयो दीप्ततोरणा वा ।। ११ ।।

**वेङ्कटमाधव–** हिरण्मयैः **पविभिः** उदकस्य वर्धयितारः उद्बाधयन्ति, तृणानि इव **पर्वतान्** दातारः । गच्छन्तः स्वयमेव सरन्तः ध्रुवाणामपि च्यावयितारः दुर्धरस्य कर्मणः कर्तारः दीप्तायुधाः मरुतः ।। ११ ।।

**मुद्गल– मरुतः, हिरण्ययेभिः** सुवर्णमयैः । **पविभिः** रथानां चक्रैः । **पर्वतान्** पर्ववतो मेघान् । **उज्जिघ्नन्ते** ऊर्ध्वं गमयन्ति । स्थानात् प्रच्यावयन्तीत्यर्थः । दृष्टान्तः । **आपथ्यः न** यथा पथि गच्छन् रथो मार्गे आस्थितं वृक्षादिकं चूर्णीकृत्योर्ध्वं नयति । कीदृशा मरुतः । **पयोवृधः** पयसो वृष्ट्युदकस्य वर्धयितारः । **मखाः** यज्ञवन्तः । **अयासः** देवयजनदेशं प्रति गन्तारः । **स्वसृतः** शत्रून् प्रति स्वयमेव सरन्तो गच्छन्तः । **ध्रुवच्युतः** ध्रुवाणां निश्चलानां पर्वतादीनामपि च्यावयितारः । **दुध्रकृतः** दुध्रं दुष्टानां धारयितारमात्मानं कुर्वाणाः । **भ्राजदृष्टयः** दीप्यमानायुधाः ।। ११ ।।

**सायण– मरुतः हिरण्ययेभिः** सुवर्णमयैः । यद्वा । हितरमणीयैः **पविभिः** रथानां चक्रैः **पर्वतान्** पर्ववतो मेघान्, यद्वा शिलोच्चयान् **उज्जिघ्नन्ते** ऊर्ध्वं गमयन्ति । स्थानात् प्रच्यावयन्तीत्यर्थः । तत्र दृष्टान्तः । **आपथ्यः न** यथा पथि गच्छन् रथो मार्गे आस्थितं तृणवृक्षादिकं चूर्णीकृत्योर्ध्वं नयति गमयति । यद्वा । यथा संयुक्ता गजा मार्गस्थितं वृक्षादिकं भग्नं कुर्वन्ति । कीदृशा मरुतः । **पयोवृधः** पयसो वृष्ट्युदकस्य वर्धयितारः । यद्वा पृश्नेः पयसा वर्धमानाः । 'पृश्नियै वै पयसो मरुतो जाताः' (तै. सं.२.२.११.४)। इति श्रूयते । **मखाः** । मख इति यज्ञनाम । तद्वन्तः । **अयासः** देवयजनदेशं प्रति गन्तारः । **स्वसृतः** शत्रून्प्रति स्वयमेव सरन्तो गच्छन्तः । **ध्रुवच्युतः** ध्रुवाणां निश्चलानां पर्वतादीनामपि च्यावयितारः । **दुध्रकृतः** दुध्रं दुष्टानां धारयितारमात्मानं कुर्वाणाः । यद्वा दुर्धरम् अन्यैधर्तुमशक्यम् आत्मानं कुर्वाणाः ।

**भ्राजदृष्टयः** दीप्यमानायुधाः ।। **उज्जिघ्नन्ते** । हन्तेर्व्यत्ययेनात्मनेपदम् । 'बहुलं छन्दसि' इति शपः श्लुः । 'बहुलं छन्दसि' इति अभ्यासस्य इत्वम् । 'गमहन' इत्यादिना उपधालोपः । 'हो हन्तेः' इति घत्वम् । व्यत्ययेन अन्तादेशः । **आपथ्यः** । पथि भवः । 'भवे छन्दसि' इति यत् । 'नस्तद्धिते' (पा.सू.६.४.१४४) इति टिलोपः । व्यत्ययेनान्तस्वरितत्वम् । यद्वा । 'छन्दसीवनिपौ' इति मत्वर्थीय ईकारः । 'उदात्तस्वरितयोर्यणः' इति विभक्तेः स्वरितत्वम् । **अयासः** । 'अय पय गतौ'। अयन्ते इत्ययाः । पचाद्यच् । 'आज्जसेरसुक्' । **दुध्रकृतः** । अत्र दुःशब्देन दुष्टा लक्ष्यन्ते । 'धृञ् धारणे' । दुष्टान् धारयतीति दुध्रः । मूलविभुजादित्वात् (पा.सू.३.२.५.२) कप्रत्ययः । यद्वा । 'ईषद्दुःसुषु' इति दुःशब्दे उपपदे कर्मणि खल् । गुणाभावश्छान्दसः । तं कुर्वन्तीति दुध्रकृतः । करोतेः 'क्विप् च' इति क्विप् । रेफलोपश्छान्दसः ।।

**सिद्धाञ्जनम्– मरुतः, हिरण्ययेभिः** हिरण्मयैः **पविभिः** रथचक्रैः । **पर्वतान्** शिलोच्चयान् । **उज्जिघ्नन्ते** ऊर्ध्वं गमयन्ति, तादृशो मारुतवेगप्रभावः । तत्र दृष्टान्तः- **आ पथ्यो न** समन्तात्पथि मार्गे गच्छन् रथो यथा वेगातिशयात् मार्गस्थान् वृक्षादीन् भङ्क्त्वा ऊर्ध्वं नयति तद्वत् । कीदृशा मरुतः? **पयोवृधः** पयसां सारवतीनां उक्तलक्षणानाम् अपां वर्धयितारः । **मखाः** मखो यज्ञः तद्वन्तः अन्तर्भावितमत्वर्थः । **अयासः** गन्तारः, यजमानस्य यजनं प्रति । **स्वसृतः** स्वयमेव सरन्तो गच्छन्तः शत्रून् प्रति । **ध्रुवच्युतः** ध्रुवाणां निश्चलानां जडभूतानां पर्वतादीनां वा च्यावयितारः । **दुध्रकृतः** दुध्रं अन्यैर्धर्तुम् अशक्यम् आत्मानं कुर्वाणाः, स्तोतारं दुर्धरं कुर्वाणा वा । **भ्राजदृष्टयः** दीप्यमानायुधाः ।। **उज्जिघ्नन्ते**- हन्तेर्व्यत्ययेनात्मनेपदम् । **पथ्यः** पथि भवः, छन्दसि यत् । **अयासः** 'अय पय गतौ' अयन्ते इत्ययासः । 'आज्जसेरसुक्' । **दुध्रकृतः**- 'ईषद्दुःसुषु' इति दुःशब्दे उपपदे कर्मणि खल् । गुणाभावश्छान्दसः, तथा रेफलोपश्च । दुध्रः, तं कुर्वन्तीति दुध्रकृतः, करोतेः क्विप् ।। ११ ।।

## ऋक्संहिता पदपाठसहिता

**घृषुं पावकं वनिनं विचर्षणिं रुद्रस्य सूनुं हवसा गृणीमसि ।**
**रजस्तुरं तवसं मारुतं गणमृजीषिणं वृषणं सश्चत श्रिये ।। १२ ।।**
**घृषुम् । पावकम् । वनिनम् । विऽचर्षणिम् । रुद्रस्य । सूनुम् । हवसा । गृणीमसि ।**
**रजःऽतुरम् । तवसम् । मारुतम् । गणम् । ऋजीषिणम् । वृषणम् । सश्चत । श्रिये ।।**

**स्कन्द– घृषुम्** घृ क्षरणदीप्त्योः । दीप्तम् । अथवा घृषुरित्यपठितमपि महन्नाम । महान्तं परिमाणतः । **पावकम्** शोधयितारं गन्तारं वा शत्रून् प्रति । **वनिनम्** उदकवन्तं सम्भक्तारं वा यष्टॄणाम् । **विचर्षणिम्** विद्रष्टारं सर्वस्य । **रुद्रस्य सूनुम्** अपत्यभूतम् । **हवसा** ह्वयतिरर्चतिकर्मा (तु.निघ.३,१४) । आह्वानं हवः स्तुतिः तया । **गृणीमसि** स्तुमो वयम् । यूयमपि हे मदीयाः पुत्राः पौत्राश्च ऋत्विजो वा । **रजस्तुरम्** रज उदकम् (तु.या.४,१९) । तूर्वतिर्हिंसार्थः । उदकार्थं मेघानां हिंसितारम् । **तवसम्** महान्तं वीर्यतः । **मारुतम् गणम् ऋजीषिणम्** यत् सोमस्य पूयमानस्यातिरिच्यते तदृजीषम् । तत्तु हययोर्भागो न मरुताम् । अतोऽत्र ऋजीषेण स्वसम्बन्धिसोमो लक्ष्यते । ऋजीषसम्बन्धिसोमवन्तमित्यर्थः । **वृषणम्** वर्षितारम् । **सश्चत** सश्चतिर्गतिकर्मा (तु.निघ.२,१४) । शुद्धोऽपि सोपसर्गार्थे द्रष्टव्यः । स्तुतिभिर्हविर्भिश्च उपगच्छत । किमर्थम् । **श्रिये** यज्ञफललक्षितायाः श्रियोऽर्थाय ।। १२ ।।

**वेङ्कटमाधव–** घर्षणशील शोधक भजनवन्तं विद्रष्टारं रुद्रस्य पुत्रं स्तोत्रेण स्तुमः । उदकस्य प्रेषयितारं वृद्धम् मारुतम् गणम् तृतीयसवनेऽन्वयात् । **ऋजीषिणम्** वर्षितारम् । सेवध्वं श्र्यर्थम् ।।

**मुद्गल– घृषुं** शत्रूणां बलस्य घर्षकं विनाशयितारम् । **पावकम्** सर्वेषां शोधकम् । **वनिनम्** उदकवन्तं वृष्टिप्रदमित्यर्थः । **विचर्षणिम्** विशेषेण सर्वस्य द्रष्टारम् । **रुद्रस्य** महादेवस्य **सूनुम्** पुत्रभूतम् । एवंविधं मरुतां समूहम् । **हवसा** आह्वानसाधनेन स्तोत्रेण **गृणीमसि** शब्दयाम । स्तुम इत्यर्थः । हे ऋत्विग्यजमानाः! यूयमपि । **श्रये** ऐश्वर्याय धनार्थम् । **मारुतम् गणम्** मरुतां सङ्घम् । **सश्चेत** प्राप्नुत । कीदृशम् । **रजस्तुरम्** पार्थिवस्य पांसोस्त्वरयितारं प्रेरकमित्यर्थः । **तवसम्** प्रवृद्धम् । **ऋजीषिणम्** । तृतीयसवने हि मरुतः स्तूयन्ते । तत्र च ऋजीषम् अभिषुण्वन्तीति ऋजीषसम्बन्धः श्रुतः । अतस्तद्वन्तम् **वृषणम्** कामानां वर्षितारम् ।। १२ ।।

**सायण– घृषुं** शत्रूणां बलस्य घर्षकं विनाशयितारम् । **पावकं** सर्वेषां शोधकम् । **वनिनम्** । वनमित्युदकनाम । उदकवन्तम् । वृष्टिप्रदमियर्थः । **विचर्षणिं** विशेषेण सर्वस्य द्रष्टारम् । **रुद्रस्य** महादेवस्य **सूनुं** पुत्रभूतम् । एवंविधं मरुतां समूहम् । **हवसा** आह्वानसाधनेन स्तोत्रेण । **गृणीमसि** शब्दयामः स्तुम इत्यर्थः । हे ऋत्विग्यजमानाः! यूयमपि, **श्रिये** ऐश्वर्याय धनार्थं **मारुतं गणं** मरुतां सङ्घम् । **सश्चत** प्राप्नुत । कीदृशम् । **रजस्तुरं** पार्थिवस्य पांसोस्त्वरयितारं प्रेरकमित्यर्थः । **तवसं** प्रवृद्धम् । **ऋजीषिणम्** । तृतीयसवने हि मरुतः स्तूयन्ते । तत्र च ऋजीषम् अभिषुण्वन्तीति ऋजीषसम्बन्धः श्रुतः । अतस्तद्वन्तं, **वृषणं** कामानां वर्षितारम् ।। **हवसा** । ह्वेञः असिप्रत्यये 'बहुलं छन्दसि' इति सम्प्रसारणम् । **गृणीमसि** । 'गृ शब्दे'। इदन्तो मसिः । 'प्वादीनां ह्रस्वः' इति ह्रस्वत्वम् । **रजस्तुरम्** रजांसि तुतोर्तीति रजस्तूः । 'तुर त्वरणे' । 'क्विप्' च इति क्विप् । **वृषणम्** । 'वा षपूर्वस्य निगमे' इति दीर्घाभावः । **सश्चत** । 'ग्लुञ्च षस्ज गतौ' इत्यत्र सश्चिमप्येके इति धातुवृत्तावुक्तम् । गतिकर्मसु च सश्चतीति पठितम् । **श्रिये** । 'सावेकाचः' इति विभक्तेरुदात्तत्वम् ।। १२ ।।

**सिद्धाञ्जनम्– घृषुम्** धर्षकं शत्रुबलस्य । **पावकम्** शोधकं सर्वेषाम् । **वनिनम्** वनवन्तं, उदके सुखे च वनं, सुखवन्तम् । **विचर्षणिम्** विशेषेण सर्वस्य द्रष्टारम् । **रुद्रस्य सूनुम्** रुद्रपुत्रम् । मरुद्गणस्य रुद्रपुत्रत्वं विश्रुतं वेदे । एवम्भूतं मरुद्गणं, **हवसा** हवेन आह्वानेन, स्तोत्रस्योपलक्षणमिदम् । **गृणीमसि** स्तुमः । भोः सखायो यजमानाः, यूयमपि **श्रिये** सम्पत्तये ।

**मारुतम् गणं** मरुतां समूहम् । **सश्चत** प्राप्नुत, आश्रयत । कीदृशम्? **रजस्तुरं** रजसः अन्तरिक्षस्य जगत्प्राणायतनस्य त्वरयितारं, यजमाने प्राणबलातिशयस्याधानार्थम् इति शेषः । **तवसं** बलवृद्धम् । **ऋजीषिणं** ऋजीषं शत्रूणां अपार्जकं बलं तद्वन्तं (१.३२.६) **वृषणम् वर्षितारं** वीर्यवन्तमित्यर्थः ।। **हवसा**-ह्वेञः असिप्रत्यये सम्प्रसारणं छन्दसि । **गृणीमसि**- 'गृ शब्दे' इदन्तो मसिः । **रजस्तुरम्**- रजः तुतोर्ति इति रजस्तूः, तुर त्वरणे, क्विप् । **वृषणम्**- दीर्घाभावः छन्दसि । **सश्चत** सश्चतिर्गतिकर्मा ।। १२ ।।

## ऋक्संहिता पदपाठसहिता

**प्र नू स मर्तः शवसा जनाँ अति तस्थौ व ऊती मरुतो यमावत ।**
**अर्वद्भिर्वाजं भरते धना नृभिरापृच्छ्यं क्रतुमा क्षेति पुष्यति ।। १३ ।।**

**प्र । नु । सः । मर्तः । शवसा । जनान् । अति । तस्थौ । वः । ऊती । मरुतः । यम् । आवत । अर्वत्ऽभिः । वाजम् । भरते । धना । नृऽभिः । आऽपृच्छ्यम् । क्रतुम् । आ । क्षेति । पुष्यति ।। १३ ।।**

**स्कन्द–** प्रशब्दः प्रकर्षे । तस्थौ इत्येतेन च सम्बन्धयितव्यः । नु (निघ.२,१५) इति क्षिप्रनाम । क्षिप्रम् । **स मर्तः शवसा जनान् अति** जनानिति कर्मश्रुतेः अतीति चोपसर्गाद्योग्य-क्रियाध्याहारः । जनानतीत्य **प्र तस्थौ** प्रकर्षेण तिष्ठति । **व ऊती** युष्माकं पालनेन । हे **मरुतः! यम् आवत** पालयत यूयम् । यं मनुष्यं पालयथ यूयं स युष्मत्पालनेनान्येभ्योऽधिकं बलं प्राप्नोतीत्यर्थः । न च बलमेव केवलम् । किं तर्हि । **अर्वद्भिः** अश्वैः सह । **वाजम्** अन्नम् । **भरते** हरति आत्मानं प्रति प्रापयति । लभत इत्यर्थः । धनानि च । **नृभिः** परिचारकमनुष्यैः सह । **आपृच्छ्यम्** क्रतुम् सर्वार्थेषु च अप्रश्नार्हां प्रज्ञाम् । अथवा नृभिरित्येतदापृच्छ्यम् इत्येतेन सम्बध्यते । सर्वार्थेषु सर्वमनुष्यैराप्रश्नार्हां च प्रज्ञामिति । **आक्षेति** सर्वदा च स्वस्मिन् स्थाने निवसति । **पुष्यति** सर्वप्रकारां च पुष्टिं प्राप्नोति ।। १३ ।।

**वेङ्कटमाधव–** प्रकर्षेण अभितिष्ठति क्षिप्रं स **मर्त** अन्यान् जनान्, यं यूयं रक्षणेन मरुतः । रक्षथ । अश्वैः अन्नं च बिभर्ति, धनानि च दासैः । आप्रष्टव्यं चित्रकर्म अधितिष्ठति, **पुष्यति** च प्रजादिभिः ।। १३ ।।

**मुद्गल– सः मर्तः** मनुष्यः । **शवसा** बलेन । **जनान्** जातानन्यान् पुरुषान् **अति** अतीत्य **नु** क्षिप्रम् **प्र तस्थौ** प्रतिष्ठितो भवति । हे **मरुतः! वः** युष्माकम् **ऊती** ऊत्या रक्षणेन । **यम्** पुरुषम् **आवत** अरक्षत । अपि च स पुरुषः **अर्वद्भिः** अश्वैः साधनभूतैः **वाजम्** अन्नम् । **नृभिः** स्वकीयैर्मनुष्यैः । **धना** धनानि च **भरते** सम्पादयति । तथा **आपृच्छ्यम्** आप्रष्टव्यं शोभनम् । **क्रतुम्** अग्निष्टोमादिकम् । **आ क्षेति** प्राप्नोति । **पुष्यति** पुरुभिः पुष्टो भवति च ।।

**सायण– सः मर्तः** मनुष्यः । **शवसा** बलेन । **जनान्** जातान् अन्यान् पुरुषान् । **अति** अतीत्य । **नु** क्षिप्रम् । **तस्थौ** प्रतिष्ठितो भवति । हे **मरुतः! वः** युष्माकम् **ऊती** ऊत्या रक्षणेन यं पुरुषम् । **आवत** अरक्षत । अपि च स पुरुषः **अर्वद्भिः** अश्वैः साधनभूतैः **वाजम्** अन्नं **नृभिः** स्वकीयैर्मनुष्यैः **धना** धनानि च । **भरते** सम्पादयति । तथा **आपृच्छ्यम्** आप्रष्टव्यं शोभनं **क्रतुम्** अग्निष्टोमादिकर्म **आ क्षेति** आप्नोति । **पुष्यति** प्रजया पशुभिः पुष्टो भवति च ।। **ऊती** । तृतीयायाः पूर्वसवर्णदीर्घत्वम् । **नृभिः** । 'नृ चान्यतरस्याम्' इति विभक्त्युदात्तत्व-प्रतिषेधः । **आपृच्छ्यम्** । 'छन्दसि निष्टर्क्य' इत्यादौ आङ्पूर्वात् पृच्छतेः क्यप्प्रत्ययान्तो निपात्यते । ग्रहिज्यादिना सम्प्रसारणम् । प्रत्ययस्य पित्त्वादनुदात्तत्वे धातुस्वरः शिष्यते । कृदुत्तरपदप्रकृतिस्वरत्वम् । **क्षेति** । 'क्षि निवासगत्योः' । 'बहुलं छन्दसि' इति विकरणस्य लुक् । **पुष्यति** । 'पुष पुष्टौ' । दिवादित्वात् श्यन् । नित्त्वादाद्युदात्तस्वम् । तिङः परत्वान् निघाताभावः ।। १३ ।।

**सिद्धाञ्जनम्– सः मर्तः** स मनुष्यः । **जनान्** अन्यान् पुरुषान् । **शवसा** बलेन । **नु** क्षिप्रम् । **अति** अतीत्य **प्र तस्थौ** प्रतिष्ठितो भवति । हे **मरुतः**, यूयं **यम्** पुरुषं वः युष्माकं **ऊती** ऊत्या रक्षया **आवत** अरक्षत, किञ्च सः **अर्वद्भिः** अश्वैः प्राणबलभोगात्मभिः साधनभूतैः **वाजम्** सर्वां बलसमृद्धिं **नृभिः** स्वकीयैर्नेतृत्वलक्षणैर्बलविशेषैः, **धना** धनानि विविधानि च **भरते** सम्पादयति । **आपृच्छ्यम्** आप्रष्टव्यं सर्वतः माननीयतया जनैः प्रष्टव्यम् महनीयमित्यर्थः । **क्रतुम्** प्राज्ञं इच्छाबलं **आ क्षेति** प्राप्नोति । **पुष्यति** पुष्टो भवति च ।। **ऊती** तृतीयायाः पूर्वसवर्ण-दीर्घत्वम् । **आपृच्छ्यम्**- आङ्पूर्वात् पृच्छतेः क्यप्प्रत्ययान्तो निपात्यते । **क्षेति**-'क्षि निवास-गत्योः' विकरणस्य लुक् छन्दसि ।। १३ ।।

## ऋक्संहिता पदपाठसहिता

**चर्कृत्यं मरुतः पृत्सु दुष्टरं द्युमन्तं शुष्मं मघवत्सु धत्तन ।**
**धनस्पृतमुक्थ्यं विश्वचर्षणिं तोकं पुष्येम तनयं शतं हिमाः ।। १४ ।।**
**चर्कृत्यम् । मरुतः । पृत्ऽसु । दुस्तरम् । द्युऽमन्तम् । शुष्मम् । मघवत्ऽसु । धत्तन ।**
**धनऽस्पृतम् । उक्थ्यम् । विश्वऽचर्षणिम् । तोकम् । पुष्येम । तनयम् । शतम् । हिमाः ।।**

**स्कन्द–** **चर्कृत्यम्** कृन्ततिर्वधकर्मा (तु.निघ.२,१९) । अत्यर्थं शत्रूणां हन्तृ । हे मरुतः! **पृत्सु** सङ्ग्रामेषु **दुष्टरम्** अवतरतीति वधकर्मसु पाठात् तरतिर्वधार्थः' (तु.निघ.२,१९) । शत्रुभिः दुर्हणम् । **द्युमन्तं** दीप्तिमत् । **शुष्मम्** बलम् । **मघवत्सु** धनवत्सु सत्सु **धत्तेन** स्थापयत । पूर्वम् अस्मभ्यं धनं दत्त, ततो धनवद्भ्यः सद्भ्यो बलमित्यर्थः । किञ्च **धनस्पृतम्** 'स्पृ प्रीतिपालनयोः' । धनेन प्रीयमाणं धनस्य वा पालयितारम् । **उक्थ्यम्** प्रशस्यम् । **विश्वचर्षणिम्** सर्वस्य विद्रष्टारम् । अशेषस्य यज्ञस्य ज्ञातारमित्यर्थः । **तोकं** पुत्रम् । **पुष्येम** दैवादिकः पुषिः वृद्ध्यर्थत्वादकर्मकः, क्रैयादिकस्तु वर्धनार्थत्वात् सकर्मकः । इह तु तोकं कर्म श्रुतम् । अतोऽयं व्यत्ययेन क्रैयादिकस्य पुषेः श्यन् द्रष्टव्यः । युष्मत्प्रसादेन पुष्णीयाम । **तनयम्** पौत्रं च । अथवा पुष्येमेति दैवादिकस्य पुषेः रूपम् । धनस्पृतम् इत्यादिद्वितीया तृतीयार्थे । धनस्पृतत्वादि-गुणेन तोकेन तनयेन च वर्धिषीमहीत्यर्थः । कियन्तं कालम् । उच्यते । **शतम् हिमाः** शतवर्षम् ।। १४ ।।

**वेङ्कटमाधव–** पौनःपुन्येन कर्तव्यम् मरुतः सङ्ग्रामेषु तरितुमशक्यं दीप्तिमद् बलं हविष्मत्सु निधत्त । धनानां स्प्रष्टारं प्रशस्यं सर्वस्य द्रष्टारं पुत्रं तत्पुत्रं च पोषयेम लभेमहि शतम् हिमाः जीवन्तः ।। १४ ।।

**मुद्गल–** हे **मरुतः! मघवत्सु** हविर्लक्षणधनयुक्तेषु यजमानेषु पुत्रम् **धत्तन** स्थापयत, दत्तेति यावत् । कीदृशं पुत्रम् । **चर्कृत्यम्** कार्येषु पुनःपुनः पुरस्कर्तव्यम् । सर्वकर्मकुशलमित्यर्थः । **पृत्सु** सङ्ग्रामेषु **दुष्टरम्** दुःखेन तरितव्यम् । अजेयमित्यर्थः । **द्युमन्तम्** दीप्तिमन्तम् । **शुष्मम्** शत्रूणां शोषकम् । **धनस्पृतम्** धनानां स्प्रष्टारम् । **उक्थ्यम्** उक्थं स्तोत्रं तदर्हम् । प्रशस्यमित्यर्थः । **विश्वचर्षणिम्** विशेषेण द्रष्टारं सर्वज्ञम् । एवंविधम् **तोकम्** पुत्रम् **तनयम्** पौत्रञ्च । **शतम् हिमाः** हेमन्तर्तूपलक्षितान् शतं संवत्सरान् जीवन्तः सन्तः **पुष्येम** पोषयेम ।।

**सायण–** हे **मरुतः! मघवत्सु** हविर्लक्षणधनयुक्तेषु यजमानेषु पुत्रं **धत्तन** स्थापयत । दत्तेति यावत् । कीदृशं पुत्रम् । **चर्कृत्यं** कार्येषु पुनःपुनः पुरस्कर्तव्यम् । सर्वकर्मकुशलमित्यर्थः । **पृत्सु** सङ्ग्रामेषु । **दुष्टरं** दुःखेन तरितव्यम् । अजेयमित्यर्थः । **द्युमन्तं** दीप्तिमन्तं, **शुष्मं** शत्रूणां शोषकं बलवन्तं, **धनस्पृतं** धनानां स्प्रष्टारं धनैः प्रीतं वा । **उक्थ्यम्** उक्थं स्तोत्रं तदर्हम् । प्रशस्यमित्यर्थः । **विश्वचर्षणिं** विशेषेण द्रष्टारं सर्वज्ञम् । एवंविधं **तोकं** पुत्रं **तनयं** पौत्रं च **शतं हिमाः** हेमन्तर्तूपलक्षितान् शतं संवत्सरान् जीवन्तः सन्तः **पुष्येम** पोषयेम । अत्र हिमशब्देन तद्युक्ता हेमन्तर्तवोऽभिधीयन्ते । तथा च ब्राह्मणमेवमाम्नायते 'शतं हिमा इत्याह शतं त्वा हेमन्तानिन्धिषीयेति वावैतदाह' (तै.सं.१.५.८.५) इति ।। **चर्कृत्यम्** । 'प्रकृतिग्रहणे यङ्-लुगन्तस्यापि ग्रहणम्' (परिभा.९३.९) इति न्यायेन करोतेर्यङ्लुगन्तात् 'विभाषा कृवृषोः' (पा.सू.३.१.१२०) इति क्यप् । तुगागमः । प्रत्ययस्य पित्त्वादनुदात्तस्वे धातुस्वरः शिष्यते । **पृत्सु** 'पदादिषु मांस्पृत्स्नूनामुपसङ्ख्यानम्' (पा.सू.६.१.६३.१) इति पृतनाशब्दस्य पृदादेशः । **दुष्टरम्** । 'तॄ प्लवनतरणयोः'। 'ईषद्दुःसुषु' इति खल् । सुपामादेराकृतिगणत्वात् षत्वम् । लित्स्वरेण प्रत्ययात्पूर्वस्योदात्तत्वम् । **धत्तन** । 'तप्तनप्तनथनाश्च' इति तस्य तनादेशः ।। १४ ।।

**सिद्धाञ्जनम्–** हे **मरुतः! मघवत्सु** धनवत्सु यजमानेषु । **शुष्मम्** बलं **धत्तन** स्थापयत । कीदृशं शुष्मम्? **चर्कृत्यम्** पुनः पुनः पुरस्कर्तव्यं, सर्वकर्मकुशलं **पृत्सु** सङ्ग्रामेषु **दुष्टरम्** दुःखेन तरितव्यं, अजेयम् । **द्युमन्तम्** दीप्तिमन्तं **धनस्पृतम्** धनैः प्रीतं **उक्थ्यम्** उक्थं स्तोत्रं तदर्हं, प्रशस्यं, **विश्वचर्षणिम्** विशेषेण द्रष्टारम्, ईदृशं शुष्मं धत्तन । अथ च वयं **शतम् हिमाः** शतसङ्ख्याकान् हिमप्रधानहेमन्तर्तूपलक्षितान् संवत्सरान् । **तोकम्** पुत्रं, तल्लक्षितां अन्तर्याग-विद्यासन्ततिं, **तनयम्** तदीयसन्ततिं च **पुष्येम** पोषयेम । उत्तरोत्तराभिवृद्धिरस्त्वस्माकमिति प्रार्थना ।। **चर्कृत्यम्-** करोतेः यङ्लुगन्तात् क्यप्, तुगागमः, प्रकृतिग्रहणे यङ्लुगन्तस्यापि ग्रहणमिति न्यायेनैवम् । **दुष्टरम्**-दुस्तरं सुपामादेराकृतिगणत्वात् षत्वम् । **धत्तन**-तप्तनप्तनथनाश्चेति तस्य तनादेशः ।। **हिमाः**- 'हन्तेर्हि च' इति मक्प्रत्ययः ।। १४ ।।

## ऋक्संहिता पदपाठसहिता

**नू ष्ठिरं मरुतो वीरवन्तमृतीषाहं रयिमस्मासु धत्त ।**
**सहस्रिणं शतिनं शूशुवांसं प्रातर्मक्षू धियावसुर्जगम्यात् ।। १५ ।।**

नु । स्थिरम् । मरुतः । वीरऽवन्तम् । ऋतिऽसहम् । रयिम् । अस्मासु । धत्त । सहस्रिणम् । शतिनम् । शूशुऽवांसम् । प्रातः । मक्षु । धियाऽवसुः । जगम्यात् ।। १५ ।।

**स्कन्द–** क्षिप्रं हे **मरुतः** । **वीरवन्तम्** पुत्रैः पौत्रैश्च युक्तम् । **ऋतीषाहम्** गन्तव्यत्वाद् ऋतयः शत्रव इहोच्यन्ते । तेषाम् अभिभवितारम् । **रयिम् अस्मासु धत्त सहस्रिणम् शतिनं** सहस्रसङ्ख्याकं शतसङ्ख्याकं च । अत्यन्तबह्वित्यर्थः । **शूशुवांसम्** श्वयतिर्वृद्ध्यर्थः, प्रवर्धमानम् **प्रातः मक्षू** इत्ययं तु पादः प्रत्यक्षकृतत्वाद् भिन्नं वाक्यम् उक्तार्थश्च । गणापेक्षं चात्रैकवचनं द्रष्टव्यम् ।। १५ ।।

**वेङ्कटमाधव–** क्षिप्रम् **स्थिरम्, मरुतः!** पुत्रयुक्तं शत्रूणाम् अभिभवितारम् । **रयिम् अस्मासु धत्त** सहस्रशतसङ्ख्याकं वर्धमानमिति ।। १५ ।।

**मुद्गल–** हे **मरुतः! स्थिरम्** स्थासुम् । **वीरवन्तम्** वीरैः पुत्रैः तद्वन्तम् । **ऋतीषाहम्** गन्तॄणां शत्रूणामभिभवितारम् । एवंविधम् **रयिम्** पुत्रलक्षणं धनम् **नु** क्षिप्रम् **अस्मासु, धत्त** स्थापयत । **सहस्रिणम् शतिनम्** एतत्सङ्ख्याकधनवन्तम्, अत एव **शूशुवांसम्** प्रवृद्धम् । अपि चास्माकं रक्षणाय **धिया** बुद्ध्या प्राप्तधनो मरुद्गणः **प्रातःकाले जगम्यात्** आगच्छतु ।।

**सायण–** ऐकादशिनस्य मारुतस्य पशोर्वपायागस्य 'नू ष्ठिरम्' इत्येषा याज्या । सूत्रितं च- 'शुची वो हव्या मरुतः शुचीनां नू ष्ठिरं मरुतो वीरवन्तम्' (आश्व.श्री.३.७) इति ।। हे **मरुतः! स्थिरं** स्थास्नुं **वीरवन्तं** वीरैः पुत्रैस्तद्वन्तम् । यद्वा । वीर्योपेतम् । **ऋतीषाहं** गन्तॄणां शत्रूणाम् अभिभवितारं, एवंविधं **रयिं** पुत्रलक्षणं धनम् **अस्मासु धत्त** स्थापयत । **सहस्रिणं शतिनम्** एतत्संख्याकधनवन्तं अत एव **शूशुवांसं** प्रवृद्धम् । अपि चास्माकं रक्षणाय **धिया** बुद्ध्या कर्मणा वा प्राप्तधनो मरुद्गणः **प्रातःकाले जगम्यात्** आगच्छतु ।। **नू ष्ठिरम्** । 'ऋचि तुनुघ' इति दीर्घः । 'पूर्वपदात्' इति षत्वम् । **ऋतीषाहम्** । 'ऋ गतौ'। कर्तरि क्तिच् । 'षह अभिभवे' । 'छन्दसि सहः' इति ण्विप्रत्ययः । 'अन्येषामपि दृश्यते' इति पूर्वपदस्य दीर्घत्वम् । सुषामादित्वात् षत्वम् । **शूशुवांसम्** । 'टु ओश्वि गतिवृद्ध्योः' । लिटः क्वसुः । 'विभाषा श्वे' (पा.सू.६.१.३०) इति सम्प्रसारणम् । द्विर्वचने तुजादित्वाद् अभ्यासस्य दीर्घत्वम् । 'वस्वेकाजाद्धसाम्' इति नियमात् इडभावः । प्रत्ययस्वरः ।। १५ ।।

**सिद्धाञ्जनम्–** हे **मरुतः! स्थिरम्** स्थास्नुम्, चिरस्थायिनम् । **वीरवन्तम्** वीर्योपेतम् । **ऋतीषाहम्** ऋतिसहं ऋतीनां गन्तॄणां शत्रूणां साहयितारम् । एवंविधसामर्थ्ययुक्तं **रयिम्** धनं **अस्मासु धत्त नु** स्थापयत क्षिप्रम् । नेदं सामान्यं लौकिकं धनं, विशिष्टं विचित्रं किमपि दिव्यं मारुतं धनमिति विशेषेण प्रतिपादितम् । किञ्च तमेव रयिं विशिनष्टि । **सहस्रिणम्** सहस्रसङ्ख्याकं **शतिनम्** शतसङ्ख्याकं, विविधं अधिकाधिकं **शूशुवांसम्** प्रवृद्धम् धत्तेति सम्बन्धः । प्रातरित्यादि शिष्टं गतम् ।। **नू ष्ठिरम्**- नु, संहितायां दीर्घः, पूर्वपदादिति षत्वम्। **ऋतीषाहम्**- 'ऋ गतौ, कर्तरि क्तिच्, 'षह अभिभवे' 'छन्दसि सहः' इति ण्विप्रत्ययः, पूर्वपदस्य दीर्घत्वम् । **शूशुवांसम्**-श्वयतेर्वृद्ध्यर्थात् लिटः क्वसुः, 'विभाषा श्वेः' इति सम्प्रसारणम् ।। १५ ।।

**।। इति प्रथमाष्टके पञ्चमाध्याये अष्टमो वर्गः ।। प्रथमे मण्डल एकादशोऽनुवाकः समाप्तः ।।**

## ।। अथ नवमो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

**द्वादशोऽनुवाकः**

**(सूक्तम् ६५)**

**१० पराशरः । शाक्त्यः । अग्निः । द्विपदा विराट् ।**

**पश्वा न तायुं गुहा चर्तन्तं नमो युजानं नमो वहन्तम् ।**
**सजोषा धीराः पदैरनु ग्मन्नुप त्वा सीदन्विश्वे यजत्राः ।। १,२ ।।**
**पश्वा । न तायुम् । गुहा । चतन्तम् । नमः । युजानम् । नमः । वहन्तम् ।**
**सऽजोषाः । धीराः । पदैः । अनु । ग्मन् । उप । त्वा । सीदन् । विश्वे । यजत्राः ।।**

**स्कन्द–** 'शाक्त्यः पराशरः । 'पश्वा न तायुम्' इत्येवमादि शक्तिपुत्रः पराशरो नामापश्यत् । ततोऽग्नेः' । यत्पूर्वं मारुतमुक्तं ततः परमिदं सूक्तपञ्चदशकम् अग्निदेवत्यं प्रत्येतव्यम् । प्राग् इत्था हि सोमात् (तु.ऋ.१,८०) इत्यर्थः । 'पश्वा न तायुम्' इत्येतस्मिन् ऋग्द्वये इतिहासमाचक्षत– 'अग्निर्यमीश्च वरुणानीश्च कामयाञ्चक्रे । तं परदाराभिमर्शनात् जराऽऽविवेश । अथ तयाऽऽविष्टो हवींषि वोढुम् अशक्नुवन् वज्राच्च वषट्काराच्च बिभ्यन् अनाशनम् उष्ट्वा चाप्स्वौषधीषु च प्रविवेश । तमापः स्वेनामृतरसेन वर्धयाञ्चक्रुः । देवा अपि यमवरुणपुरस्सराः उपगम्याऽजरमायुस्तस्य कृत्वा प्रयाजानूयाजांश्च प्रतिज्ञाय पुनरपि हविषां वोढारञ्च नियुयुजिरे इति ।

तदेतद्विस्तरेण 'महत् तदुत्वम्' (ऋ.१०,५१,१) इत्यत्र वक्ष्यति । सङ्क्षेपेण त्विहोच्यते– 'पश्वा न तायुम्' इति । पश्वा इतीत्थम्भूतलक्षणे तृतीया । 'तायु' (निघ.३,२४) इति स्तेननाम । पशुनेवापहृतेन सम्बद्धं स्तेनं **गुहा** गूढं प्रच्छन्नम् । **चतन्तम्** 'तेऽभिष्ट्वा चातयामसि' (ऋ.१०,१५५,१) इति दर्शनात् चातयतिर्नाशने प्रसिद्धः । अतोऽत्र प्रकृत्यन्तरश्चततिर्नाशनार्थः । नश्यन्तं त्वाम् नष्ट्वा च नवयुवानम् । नमःकारणत्वादापोऽत्र नमःशब्देनोच्यन्ते । तृतीयार्थे चैषा द्वितीया । अन्नकारणेनाब्लक्षणेन युज्यमानम् । अप्सु प्रविशन्तमित्यर्थः । प्रविश्य च **नमो वहन्तम्** अमृतरसलक्षणम् अन्नम् आत्मानं प्रति प्रापयन्तम् । अमृतरसं पिबन्तमित्यर्थः । **सजोषा** सहप्रीतयः **धीराः** प्राज्ञाः । त्वदीयैरेव **पदैः** त्वाम् **अनुग्मन्** अनुगतवन्तः । अनुगम्य च **उप सीदन्** त्वाम् **विश्वे यजत्राः** यष्टव्या देवाः ।। १ ।।

**वेङ्कटमाधव–** पराशरः शाक्त्यः । द्विपदा विंशत्यक्षरा । प्रायेण द्वयोर्द्वयोरैकार्थ्यं दृश्यते । 'अग्नेस्त्रयो ज्यायांसो भ्रातरः आसन्, ते देवेभ्यो हव्यं वहन्तः प्रामीयन्त, सोऽग्निरबिभेदित्थं वा वास्य आर्तिमारिष्यतीति । स निलायत । सोऽपः प्राविशत् । तं देवताः प्रैषमैच्छन्' (तै. २,६,५,१) इति ब्राह्मणम् । तत्रेदमुच्यते– 'पशुना इव स्तेनं गुहायां गच्छन्तम् अन्नमात्मना संयुञ्जानं संयुक्तश्च अन्नम् **वहन्तम्** समादाय गच्छन्तं सङ्गताः प्राज्ञाः **पदैः** अन्वगच्छन्, उपासीदंश्च त्वाम् विश्वे देवाः ।। १,२ ।।

**मुद्गल–** द्वादशेऽनुवाके नव सूक्तानि । तत्र 'पश्वा' इत्यादीनि षट् सूक्तानि द्वैपदानि । तेष्वध्ययनसमये द्वे द्वे ऋचौ चतुष्पदामेकैकामृचं कृत्वा समाम्नायते । अयुक्सङ्ख्यासु तु याऽन्त्याऽतिरिच्यते सा तथैवाम्नायते । प्रायेणार्थोऽपि द्वयोर्द्विपदयोरेक एव । प्रयोगे तु ताः पृथक् शंसनीयाः । तत्र 'पश्वा' इति दशर्चं प्रथमं सूक्तम् । शक्तिपुत्रः पराशरः ऋषिः । द्विपदा विराट् छन्दः । 'विंशतिका द्विपदा विराजः' (ऋअ.१,१२,८) इति तल्लक्षणम् । अग्निर्देवता ।। **धीराः** मेधाविनो देवाः **सजोषाः** समानप्रीतयः सन्तः, हे अग्ने! त्वाम् **पदैः** मार्गैः पादकृतैर्लाञ्छनैः **अनुग्मन्** अन्वगमन् । कीदृशम् । **पश्वा** अपहृतेन पशुना सह वर्तमानम् **तायुं न** यथा स्तेनः परकीयं पश्वादिधनम् अपहृत्य दुष्प्रवेशे गिरिगह्वरे वर्तते तद्वत् **गुहा चतन्तम्** अब्रूपायां गुहायां गच्छन्तं वर्तमानम् । चततिर्गतिकर्मा (तु.निघ.२,१४) । तथा **नमः युजानम्** हविर्लक्षणमन्नम् आत्मना संयुजानम् । **नमः वहन्तम्** देवेभ्यः प्रत्तं हविर्वहन्तम् । **यजत्राः** यजनीयाः **विश्वे** सर्वे देवाः, हे अग्ने! **त्वा** त्वाम् **उप सीदन्** समीपं प्राप्नुवन्, ददृशुरित्यर्थः ।। १,२ ।।

**सायण–** द्वादशेऽनुवाके नव सूक्तानि । तत्र 'पश्वा' इत्यादीनि षट् सूक्तानि द्वैपदानि । तेष्वध्ययनसमये द्विपदे द्वे द्वे ऋचौ चतुष्पदामेकैकामृचं कृत्वा समाम्नायते । अयुक्सङ्ख्यासु तु या अन्या अतिरिच्यते सा तथैवाम्नायते । प्रायेणार्थोऽपि द्वयोर्द्विपदयोरेक एव । प्रयोगे तु ताः पृथक् पृथक् शंसनीयाः । सूत्र्यते हि- 'पश्वा न तायुमिति द्वैपदम्' (आश्व.श्रौ.१.१२) इति । तत्र 'पश्वा' इति दशर्चं प्रथमं सूक्तम् । अत्रानुक्रम्यते- 'पश्वा दश पराशरः शात्त्यो द्वैपदं तत्' इति । शक्तिपुत्रः पराशर ऋषिः । तत्पुत्रत्वं च स्मर्यते- 'वसिष्ठस्य सुतः शक्तिः शक्तेः पुत्रः पराशरः' इति । द्विपदा विराट् छन्दः । 'विंशतिका द्विपदा विराजः' (अनु.१२.८) इति हि तल्लक्षणम् । अग्निर्देवता । 'परमाग्नेयमैन्द्रात्' इति परिभाषितम् । 'पश्वा न तायुम्' इत्यारभ्य' 'इत्था हि' इत्यतः प्राक् यत्सूक्तजातं तत्सर्वमाग्नेयमिति । तस्यार्थः । 'द्वैपदं तत्' इत्युक्तत्वादिदमादीनि षट् सूक्तानि तुह्यादिपरिभाषया द्वैपदानि । दशमेऽहनि वैश्वदेवशस्त्रे वैश्वदेवसूक्तात् पूर्वमेतत् द्वैपदं सूक्तं शंसनीयम् । सूत्रमुदाहृतम् ।।

**धीराः** मेधाविनो देवाः **सजोषाः** समानप्रीतयः सन्तः, हे अग्ने! त्वां **पदैः** मार्गे पादकृतैर्लाञ्छनैः **अनुग्मन्** अन्वगमन् । कीदृशम् । **पश्वा** अपहृतेन पशुना सह वर्तमानं **तायुं न** । तायुरिति स्तेननाम । यथा स्तेनः परकीयं पश्वादिधनमपहृत्य दुष्प्रवेशे गिरिगह्वरे वर्तते तद्वत् । **गुहा चतन्तं** अब्रूपायां गुहायां गच्छन्तं वर्तमानम् । चततिर्गतिकर्मा । तथा च तैत्तिरीयैरग्नेरप्सु प्रवेशः समाम्नायते 'स निलायत सोऽपः प्राविशत्' (तै.सं.२.६.६.१) इति । यद्वा । अश्वत्थगुहायां वर्तमानम् । श्रूयते च- 'अग्निर्देवेभ्यो निलायत । अश्वो रूपं कृत्वा सोऽश्वत्थे संवत्सरमतिष्ठत्' (तै.ब्रा.१.१.३.९) इति । तथा **नमो युजानं** हविर्लक्षणमन्नम् आत्मना संयुजानं **नमो वहन्तं** देवेभ्यः प्रत्तं हविर्वहन्तम् । **यजत्राः** यजनीयाः **विश्वे** सर्वे देवाः, हे अग्ने! **त्वा** त्वाम् **उप सीदन्** समीपं प्राप्नुवन् । ददृशुरित्यर्थः ।। **पश्वा** । तृतीयैकवचनस्य 'जसादिषु च्छन्दसि वावचनम्' इति नाभावाभावः । 'उदात्तयणः' इति विभक्तेरुदात्तत्वम् । **गुहा** । भिदादिषु पाठात् अङ्प्रत्ययान्तः । वृषादिषु पाठादाद्युदात्तत्वम् । 'सुपां सुलुक्' इति सप्तम्या लुक् । **युजानम्** । शानचि 'बहुलं छन्दसि' इति विकरणस्य लुक् । **सजोषाः** । 'जुषी प्रीतिसेवनयोः' । समानं जुषन्त इति सजोषसः । 'समानस्य छन्दसि' इति सभावः । कृदुत्तरपदप्रकृतिस्वरत्वम् । 'सुपां सुलुक्' इति जसः सुः । **ग्मन्** । गमेर्लुङि 'मन्त्रे घसः' इति च्लेर्लुक् । 'गमहन' इत्यादिना

उपधालोपः । 'बहुलं छन्दस्यमाङ्योगेऽपि' इति अडभावः । **यजत्राः** । 'अमिनक्षि' इत्यादिना अत्रन्प्रत्ययः । नित्त्वादाद्युदात्तत्वम् ।। १,२ ।।

**सिद्धाञ्जनम्**– हे अग्ने! **सजोषाः** त्वयि समानप्रीतयः । **धीराः** मेधाविनः । **पश्वा** पशुना सह । **गुहा** गुहायां रहस्यस्थले **चतन्तं** निगूढं वर्तमानम् । **तायुं न** स्तेनमिव स्थितम्, **पश्वा** पश्यतीति पशुः तेन पशुना गवात्मनाऽवस्थितेन अन्तश्चक्षुषा दिव्यचक्षुषा वा सह **गुहा** गुहायां निगूढेऽन्तर्हृदये 'आपोमये प्राणे' वा **चतन्तं** निलीय वर्तमानं, **नमः** नमस्कारं, उपासकैरर्प्यमाणं शरणागतिलक्षणं प्रणामं, **युजानम्** आत्मना योजयन्तं, स्वीकुर्वाणमित्यर्थः । **नमः** उक्तलक्षणं नमस्कारं **वहन्तम्** बिभ्रतम्, प्रापयन्तमित्यर्थः, एवम्भूतं त्वां **पदैः** पादकृतलक्ष्मभिर्मार्गैः **अनु ग्मन्** अनुगच्छन्ति। अथ **विश्वे** सर्वे **यजत्राः** यजनीयाः देवाः **त्वा** त्वां **उप सीदन्** समीपे प्राप्नुवन्ति, रहसि त्वामुपयन्ति ।।

पशुपदं गां लक्षयति, अवयवार्थानुगमात् पशुपदोपलक्षितगोपदस्य दृष्टिरर्थोऽवधेयः । गोरूपा दृष्टिः, सा च दिव्या अन्तर्बोधरूपा वा । अयं भावः- यथा गोधनं हृत्वा चोरः गुहायां रहसि निलीय वर्तते तथा गोरूपामन्तर्दृष्टिं हृत्वा तद्युक्तः भगवानग्निः अन्तर्गुहायां निलीनो भवति । अपि च उपासकैरर्प्यमाणं नमःशब्दलक्षितं आराधनसर्वस्वम् अङ्गीकृत्य तेन सह रहसि स्थानेऽवतिष्ठते । यथा पदपङ्क्तिभिश्चोरमनुसरन्ति धीमन्तः तथा पदकृतलक्ष्मभिः अग्निमनुयान्ति **धीराः** द्रष्टारः । एवम् अग्निलाभे सति सर्वेऽपि देवाः आगत्य अग्निमुपासते । अयमर्थः किञ्चिद्भेदेन अन्यत्रापि संहितायां लक्ष्यते । पदपङ्क्तिभिर्नष्टं पशुमिव गुहायां निलीनं अग्निं **धीराः** कवयो देवाश्च अविन्दन्निति भालन्दनस्य वत्सप्रेर्यन्त्रदृष्टिर्भवति 'इमं विधन्तो अपां सधस्थे पशुं न नष्टं पदैरनुग्मन् । गुहा चतन्तमुशिजो नमोभिरिच्छन्तो धीरा भृगवो अविन्दन्' (१०.४६.२) । यद्यपि चततिर्गतिकर्मेति व्याहरति सायणः, तथापि 'चतन्तं निलीनं' इति स एव सुष्ठु व्याचष्टे । इदं च सूक्तं रहस्यार्थपरमिति आपातत एव स्फुरेद्धीमताम् । सम्पूर्णोऽयं पाराशर्योऽनुवाकः तत्त्वगर्भितः । अत्र दृष्टान्तोदाहरणाय लोकप्रसिद्धाः गवाश्वादयः प्रयुक्ता एव भवन्ति । तादृशान् प्रयोगान् वर्जयित्वा, सर्वत्र गौः अश्वः आपः अद्रिः इत्यादयः सर्वेऽपि शब्दाः साङ्केतिका ग्राह्याः । तस्मात् पुरस्ताद्व्याख्याने 'आपः' इत्यादेः विस्तृतं सङ्केतार्थमनुत्तया 'साङ्केतिकः' इत्युल्लिख्य चलिष्यति मन्त्रार्थविवृतिः । एवम् अवकाशलाभाय विस्तरो वर्ज्यते ।। **पश्वा**-तृतीयैकवचने

छन्दसि नाभावाभावः। **गुहा**-सप्तम्या लुक्। **युजानम्**-शानचि विकरणस्य लुक् । **यजत्राः**-'अमिनक्षि' इत्यादिना अत्रन्प्रत्ययः ।। १,२ ।।

## ऋक्संहिता पदपाठसहिता

**ऋतस्य॑ दे॒वा अनु॑ व्र॒ता गु॒र्भुव॒त्परि॑ष्टि॒र्द्यौर्न भूम॑ ।**
**वर्ध॑न्तीमापः॑ प॒न्वा सुशि॑श्विमृ॒तस्य॒ योना॒ गर्भे॒ सुजा॑तम् ।। ३,४ ।।**
**ऋतस्य॑ । दे॒वाः । अनु॑ । व्र॒ता । गु॒ः । भुव॑त् । परि॑ष्टिः । द्यौः । न भूम॑ । वर्ध॑न्ति । ई॒म् । आपः॑ । प॒न्वा । सुऽशि॑श्विम् । ऋ॒तस्य॑ । योना॑ । गर्भे॑ । सुऽजा॑तम् ।। ३,४ ।।**

**स्कन्द–** **ऋतस्य** गतस्याग्नेरप्सु **देवाः** यमप्रभृतयः **अनु व्रता गुः** गमनाख्यानि कर्माण्यनुगतवन्तः । यतो यतो निर्गतस्ततोऽनुगतवन्त इत्यर्थः । **भुवत् परिष्टिः** नष्टस्य चाग्नेरभवत् पर्येषणा । कियती । उच्यते । **द्यौः न भूम** विस्तीर्णपर्यायोऽत्र भूमशब्दः, न बहुवचनः । भूतजातवचनो वा । द्यौरिव विस्तीर्णा । सर्वस्मिन् जगतीत्यर्थः । **वर्धन्ति ईम्** भूतेऽत्र लट् द्रष्टव्यः । ईम् शब्दश्च एनमित्यस्यार्थे । अवर्धयंश्चैनमग्निम् आपः । **पन्वा** पननीयेन स्तुत्येनामृतरसेन । **सुशिश्विम्** श्वयतिर्वृद्ध्यर्थः । सुष्ठु वृद्धम् । अथवा शिशुशब्दस्येदं रूपम् । सुष्ठु शिशुं सन्तम् । अत्यन्तं क्षीणमित्यर्थः । क प्रदेशे । उच्यते । **ऋतस्य योना** 'ऋतम्' (निघ.१,१२) इत्युदकनाम । उदकस्य योनौ गर्भे गर्भस्थानमत्र गर्भशब्देनोच्यते । आत्मन एव योनौ यः प्रदेशो गर्भस्थानं तत्रेत्यर्थः । **सुजातम्** सुष्ठु शोभनं वा जातम् ।। ३,४ ।।

**वेङ्कटमाधव–** अग्नेः देवाः अन्वगच्छन् कर्माणि निलीनस्य । क, किं कृत्वा गच्छतीति तदा **भवत् परिष्टिः** पर्येषणम् अन्वेषणम् । द्यौः इव चासीद् भूमिरग्न्यन्वेषणार्थमागतैर्देवैः । तं चैनम् अग्निं वर्धयन्ति आपः स्तोत्रेण सुष्ठु वृद्धम् उदकस्य अन्तः **गर्भे** सुष्ठु प्रादुर्भूतमिति ।।

**मुद्गल–** उक्त एवार्थः स्पष्टीक्रियते । **देवाः, ऋतस्य** गतस्य पलायितस्याग्नेः **व्रता** व्रतानि कर्माणि गमनावस्थानशयनादिरूपाणि **अनु गुः** अन्वेष्टुम् अगमन् । तदनन्तरम् **परिष्टिः** परितः सर्वतोऽन्वेषणम् । **भुवत्** अभवत् । **भूम** भूमिरपि अग्नेः, अन्वेष्टृभिर्देवैः **द्यौः न** स्वर्गः इवाभूत् । इन्द्रादयः सर्वे देवा अग्नेर्गवेषणाय भूलोकं प्राप्ता इत्यर्थः । **आपः** अब्देवताः **ईम्** एनम् उदके प्रविष्टम् अग्निम् **वर्धन्ति** वर्धयन्ति । यथा देवा न पश्यन्ति तथाऽरक्षन्नित्यर्थः । कीदृशम् ।

**पन्वा** स्तोत्रा **सुशिश्विम्** सुष्ठु प्रवर्धितम् । **ऋतस्य योना** यज्ञस्य कारणभूते जले **गर्भे** गर्भस्थाने मध्ये **सुजातम्** सुष्ठु प्रादुर्भूतम् । एवमप्सु वर्तमानम् अग्निं देवेभ्यो मत्स्यः प्रावोचत् । तदनन्तरं देवास्तमज्ञासिषुरिति भावः ।। ३,४ ।।

**सायण–** उक्त एवार्थः स्पष्टीक्रियते । **देवाः, ऋतस्य** गतस्य पलायितस्याग्नेः **व्रता** व्रतानि कर्माणि गमनावस्थानशयनादिरूपाणि **अनु गुः** अन्वेष्टुम् अगमन् । तदनन्तरं **परिष्टिः** परितः सर्वतोऽन्वेषणं **भुवत्** अभवत् । **भूम** भूमिरप्यग्नेरन्वेष्टृभिर्देवैः **द्यौर्न** स्वर्ग इवाभूत् । इन्द्रादयः सर्वे देवा अग्नेर्गवेषणाय भूलोकं प्राप्ताः इत्यर्थः । **आपः** अब्देवताः **ईम्** एनम् उदकं प्रविष्टम् अग्निं **वर्धन्ति** प्रवर्धयन्ति । यथा देवा न पश्यन्ति तथाऽरक्षन्नित्यर्थः । कीदृशम् । **पन्वा** स्तोत्रेण **सुशिश्विं** सुष्टु प्रवर्धितम् । **ऋतस्य योना** । योनिरित्युदकनाम । ऋतस्य यज्ञस्यान्नस्य वा कारणभूते जले **गर्भे** गर्भस्थाने मध्ये **सुजातं** सुष्टु प्रादुर्भूतम् । एवम् अप्सु वर्तमानम् अग्निं देवेभ्यो मत्स्यः प्रावोचत् । तदनन्तरं देवास्तमाज्ञासिषुरिति भावः । तथा च तैत्तिरीयकं-'स निलायत सोऽपः प्राविशत्तं देवताः प्रैषमैच्छन् तं मत्स्यः प्राब्रवीत्' (तै.सं.२.६.६.१) इति ।। **व्रता** । 'शेश्छन्दसि बहुलम्' इति शेर्लोपः । **गुः** । 'इण् गतौ' । 'इणो गा लुङि' इति गादेशः । 'गातिस्था' इति सिचो लुक् । 'आतः ' इति झेर्जुस् । 'उस्यपदान्तात्' इति पररूपत्वम् । **परिष्टिः** । 'इषु इच्छायाम्' । क्तिनि 'तितुत्र' इति इट्प्रतिषेधः । शकन्ध्वादित्वात्पररूपत्वम् (पा.सू.६.१.९४.१) । 'तादौ च निति' इति गतेः प्रकृतिस्वरत्वम् । **भूम** । 'सुपां सुलुक्' इति सोः डादेशः । ह्रस्वश्छान्दसः । **वर्धन्ति** । 'छन्दस्युभयथा' इति शप आर्धधातुकत्वात् 'णेरनिटि' इति णिलोपः । शपः पित्त्वादनुदात्तत्वम् । तिङश्च लसार्वधातुकस्वरेण धातुस्वरः शिष्यते । **पन्वा** । 'पन स्तुतौ' । औणादिको भावे उप्रत्ययः । **सुशिश्विम्** । 'टु ओश्वि गतिवृद्ध्योः' । 'आदृगमहनजनः' इत्यत्र 'उत्सर्गश्छन्दसि' (पा.सू.३.२.१७१.२) इति वचनात् किप्रत्ययः । 'वचिस्वपि' इत्यादिना सम्प्रसारणम् । लिड्वद्भावाद् द्विर्भावे 'बहुलं छन्दसि' इति उकारस्य इत्वम् । छान्दसो यणादेशः। 'सुः पूजायाम्' (पा.सू.१.४.९१) इति सोः कर्मप्रवचनीयत्वम् । 'स्वती पूजायाम्' (पा.म.२.२.१८.४) इति प्रादिसमासः । अव्ययपूर्वपदप्रकृतिस्वरत्वम् ।। ३,४ ।।

**सिद्धाञ्जनम्–** **देवाः** अग्नेरन्वेषणार्थं तमनुगच्छन्तो देवाः, **ऋतस्य** सत्यस्य **व्रता** व्रतानि

नियतानि कर्माणि नियताः पद्याश्च **अनु गुः** अनुगच्छन्ति । अथ सोऽग्निः **भूम** भूमिं **परिष्टिः** परित इच्छन् सर्वत आवृण्वन् **द्यौर्न** द्युलोक इव **भवत्** भवति, तिष्ठति । सर्वेऽपि देवाः अग्निमन्विष्य यदा प्राप्नुवन्ति तदा स प्रवृद्धः विशालोन्नतो द्युलोक इव भुवमाक्रामन् दीप्यत इत्यर्थः । **ईम्** एनम् **आपः** (साङ्केतिक्यः) तेजोगर्भिताः प्राणशक्तिवाहिन्यः **वर्धन्ति** वर्धयन्ति पोषयन्ति । कीदृशम् ? **पन्वा** कर्मणा परिश्रमेण **सुशिश्विम्** आकारेण सुष्ठु वर्धमानं, **ऋतस्य योना** सत्यस्य मूलस्थाने स्वावासे **गर्भे सुजातम्** अपां स्वीये गर्भे सुष्ठु प्रादुर्भूतम् ।। **व्रता**-शेर्लोपः। **गुः**- 'इण् गतौ, इणो गादेशः, लुङि अडागमाभावः । **परिष्टिः**- 'इषु इच्छायां' क्तिन्, शकन्ध्वादित्वात् पररूपत्वम् । **भूम**-सोडदिशः, ह्रस्वश्छान्दसः। **वर्धन्ति**-छन्दसि णिलोपः । **पन्वा**-पनधातुः स्तुत्यर्थं प्रसिद्धः परिश्रमात्मके कर्मणि चेति प्रागुक्तम् (१.५५.२)। **सुशिश्विम्** श्वयतेः सूपपदात् किप्रत्ययः, वचिस्वपि इत्यादिना सम्प्रसारणम् ।। ३,४ ।।

## ऋक्संहिता पदपाठसहिता

**पुष्टिर्न रण्वा क्षितिर्न पृथ्वी गिरिर्न भुज्म क्षोदो न शम्भु ।**
**अत्यो नाज्मन्त्सर्गप्रतक्तः सिन्धुर्न क्षोदः क ईं वराते ।। ५,६ ।।**

**पुष्टिः । न । रण्वा । क्षितिः । न । पृथ्वी । गिरिः । न । भुज्म । क्षोदः । न । शम्ऽभु । अत्यः । न । अज्मन् । सर्गऽप्रतक्तः । सिन्धुः । न । क्षोदः । कः । ईम् । वराते ।।५,६।।**

**स्कन्द–** उपमानोपमेयसाधारणगुणवचनाना शब्दानां सर्वत्रोपमेयवृत्तित्वदर्शनात् इह चाग्नेः पुल्लिङ्गस्योपमेयत्वात् 'पुष्टिः न रण्वा' इत्यादिषु व्यत्ययेन स्त्रीलिङ्गनपुंसकलिङ्गत्वे । रण्वेत्यपि रमे रूपम् । धनादिपुष्टिरिव रमणीयः प्रीतिकरदर्शनोऽग्निः । **क्षितिः न पृथ्वी** 'क्षिति' (निघ.२,१) इति पृथिवीनाम । दावरूपस्याग्नेरिदमुपमानम् । 'पृथिवीव च पृथुः दावरूपः सन् । **गिरिर्न भुज्म** पर्वत इव फलादिनोपभोग्यः । **क्षोदो न शम्भु** 'क्षोद' (निघ.१,१२) इत्युदक-नाम । उदकमिव तृट्छेदादिना सुखस्य भावयिता । **अत्यः न** एते अपि द्वे दावरूपस्यैवोपमाने । अश्व इव च **अज्मन्** गमने **सर्गप्रतक्तः** सर्गशब्दो वेगवचनः । तक्षतिर्गतिकर्मा । वेगगामिदाव-रूपः । **सिन्धुः न क्षोदः** सिन्धुर्नदी । षष्ठ्यर्थे चैषा प्रथमा । सिन्धोरिव चोदकम् । **क ईम्** एतं दावरूपं सन्तम् । **वराते** वारयति । न कश्चिद्वारयितुं शक्नोतीत्यर्थः ।। ५,६ ।।

**वेङ्कटमाधव–** हव्यवाहनाद् भीतोऽरण्यं प्राविशत्, तद् द्वाभ्यां स्तौति । **पुष्टिः** इव रमणीया,

भूमिः इव विस्तार्णा, गिरिः इव भोगसाधनम्, उदकम् इव सुखभावयितृ । सोऽयम् अश्व इव गमने भवति । गमनप्रवृत्तं तम् इमं कः वारयति । यथा सिन्धुः उदकं कूलाभ्यां वारयति तद्वदिति ।। ५,६ ।।

**मुद्गल– रण्वा** रमणीया सर्वेषां हृद्या **पुष्टिः न** अभिमतफलानाम् अभिवृद्धिरिव अग्निः सर्वेषां रमणीयः । ऐहिकामुष्मिकसकलव्यवहारस्याग्न्यधीनत्वात् । यद् वा पुष्टिरिव रण्वा गन्तव्यः शब्दनीयः । यथा पुष्टिः प्राप्यते तद्वदग्निः यज्ञ हविर्भिः प्राप्यत इति भावः । **पृथ्वी** विस्तीर्णा **क्षितिः न** भूमिरिव अग्निरपि विस्तीर्णः । सर्वभूतेषु जाठररूपेणावस्थानात् । **गिरिः न** पर्वत इव **भुज्म** सर्वेषां भोजयिता । यथा गिरौ विद्यमानं फलमूलादिकमाहृत्य सर्वे भुञ्जते तद्वदग्नावपि पचन्तः सर्वे भुञ्जते । **शम्भु** सुखकरम् । **क्षोदः न** उदकमिव । यथोदकं सुखं करोति तद्वदग्निः सर्वेषां सुखकारीत्यर्थः । **अज्मन्** अज्मनि सङ्ग्रामे **अत्यः न** सततगमनशीलो जात्यश्व इव **सर्गप्रतक्तः** सर्गेण विसर्गेण प्रगमितः । यथा सादिना प्रेषितो जात्यश्वो हन्तव्यसमीपम् आशु गच्छति तद्वदग्निरपि स्तोतृभिः प्रेषितः सन् शत्रून् हन्तुं शीघ्रं गच्छतीति भावः । अपि च **सिन्धुः न क्षोदः** स्यन्दनशीलमुदकमिव अयमपि शीघ्रगामी । यथा निम्नप्रदेशाभिमुखो जलप्रवाहो दुर्निवारः तद्वद् दग्धव्याभिमुखोऽग्निरपीत्यर्थः । अतो यस्मादेवं तस्मात् **ईम्** एनम् अग्निम् । **कः वराते** को वारयते । न कोऽपि वारयितुं शक्नोतीत्यर्थः ।। ५,६ ।।

**सायण– रण्वा** रमणीया सर्वेषां हृद्या **पुष्टिर्न** अभिमतफलानाम् अभिवृद्धिरिव अग्निः सर्वेषां रमणीयः । ऐहिकामुष्मिकसकलव्यवहारस्य अग्न्यधीनत्वात् । यद्वा । पुष्टिरिव रण्वा गन्तव्यः शब्दनीयः स्तुत्यो वा । यथा पुष्टिः प्राप्यते तद्वदग्निर्यज्ञे हविर्भिः प्राप्यते इति भावः । **पृथ्वी** विस्तीर्णा **क्षितिर्न** भूमिरिव अग्निरपि विस्तीर्णः । सर्वेषु भूतेषु जाठररूपेणावस्थानात् । **गिरिः न** पर्वत इव **भुज्म** सर्वेषां भोजयिता । यथा गिरौ विद्यमानं फलमूलादिकम् आहृत्य सर्वे भुञ्जते तद्वदग्नावपि पचन्तः सर्वे भुञ्जते । यद्वा । अग्नावाहुतिं हुत्वा यजमानाः स्वर्गफलं भुञ्जते । अथवा गिरिर्यथा दुर्भिक्षे सर्वान् प्राणिनो भुनक्ति स्वकीयफलमूलादिदानेन पालयति तद्वदयमपि पापादनुष्ठातॄन् प्रमुञ्चति । तथा चाम्नायते- 'अग्निर्मा तस्मादेनसः प्र मुञ्चतु' (तै.सं.१.८.५.३) इति । **शम्भु** सुखकरं **क्षोदो न** उदकमिव । यथोदकं सुखं करोति तद्वदग्निः सर्वेषां सुखकारी-त्यर्थः । **अज्मन्** । सङ्ग्रामनामैतत् । अज्मनि सङ्ग्रामे । **अत्यो न** सततगमनशीलो जात्यश्व

इव **सर्गप्रतक्तः** सर्गेण विसर्जनेन प्रगमितः । यथा सादिना प्रेषितो जात्यश्वो हन्तव्यसमीपमाशु गच्छति तद्वदग्निरपि स्तोतृभिः प्रेषितः सन् शत्रून् हन्तुं शीघ्रं गच्छतीति भावः । अपि च **सिन्धुर्न क्षोदः** स्यन्दनशीलमुदकमिव अयमपि शीघ्रगामी । यथा निम्नप्रदेशाभिमुखो जलप्रवाहो दुर्निवारः तद्वदध्वाभिमुखोऽग्निरपीत्यर्थः । अतो यस्मादेवं तस्मात् **ईम्** एनम् अग्निं **कः वराते** को वारयेत् । कोऽपि वारयितुं न शक्नोतीत्यर्थः ।।

**रण्वा** । रविर्गत्यर्थः । रण्व्यते प्राप्यते इति रण्वः । 'कृत्यल्युटो बहुलम्' इति बहुलवचनात् कर्मणि पचाद्यच् । **भुज्म** । 'भुज पालनाभ्यवहारयोः'। 'इषियुधीन्धि' इति विधीयमानो मक् बहुलवचनादस्मादपि भवति । 'सुपां सुलुक्' इति सोर्लुक् । **अज्मन्** । 'अज गतिक्षेपणयोः' । मनिनि 'वलादावार्धधातुके विकल्प इष्यते' (का.२.४.५६.२) इति वचनात् वीभावाभावः । 'सुपां सुलुक्' इति सप्तम्या लुक् । **सर्गप्रतक्तः** । 'सृज विसर्गे' इत्यस्मात् घञन्तः सर्गशब्द आद्युदात्तः । 'तञ्चु गतौ' । अस्मादन्तर्भावितण्यर्थात् निष्ठायां 'यस्य विभाषा' इति इट्प्रतिषेधः । 'अनिदिताम्' इति नलोपः । सर्गेण प्रतक्तः । 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरत्वम् । **वराते** । 'वृञ् वरणे' अन्तर्भावितण्यर्थात् लेटि 'लेटोऽडाटौ' इति आडागमः । व्यत्ययेन शप् । 'वैतोऽन्यत्र' (पा.सू.३.४.९६) इति ऐत्वस्य विकल्पितत्वादभावः ।।

**सिद्धाञ्जनम्**– अयमग्निः, **रण्वा** रमणीया **पुष्टिर्न** वृद्धिरिव लक्ष्यते । **पृथ्वी** विस्तीर्णा **क्षितिर्न** भूमिरिव अस्माकं वासभूरित्यर्थः । **गिरिर्न** पर्वत इव **भुज्म** भोगयोग्यः । **क्षोदो न** स्रोत इव **शम्भु** सुखकरं वस्तु, सुखस्य भावयिता । **अज्मन्** सङ्ग्रामे **सर्गप्रतक्तः** सर्गेण विसर्जनेन प्रचोदनेन प्रतक्तः प्रगमितः प्रेषितः, **अत्यो न** जात्यश्व इव, स्तोतॄणां शत्रून् अभिगच्छतीत्यर्थः । **सिन्धुः** स्यन्दमानं **क्षोदो न** उदकमिव शीघ्रगामी, यथा निम्नप्रदेशाभिमुखो जलप्रवाहो दुर्निवारः तथाऽयमग्निरपीत्यर्थः । तस्मात् **ईम्** एनं **कः वराते** वारयेत् ? न कोऽपि वारयिताऽस्तीत्यर्थः ।। अग्नेः प्रादुर्भावे, तदधिगमे तद्वर्धने च तदीयप्रभावो वर्णितः, उत्तरत्रापि स एव आग्नेयो महिमा एवं लोकोत्तरकाव्यशोभातिशायिभिः मन्त्रवर्णैर्वर्ण्यते ।। **रण्वा**- रविर्गत्यर्थः । रण्व्यते इति रण्वः । **भुज्म**- 'भुज पालनाभ्यवहरणयोः, मक्, सोर्लुक् । **अज्मन्**- अजतेः मनिन्, सप्तम्या लुक् । **सर्गप्रतक्तः** 'सृज विसर्गे' घञ्, 'तञ्च गतौ' अन्तर्भावितण्यर्थः, निष्ठायां क्तः। **वराते** 'वृञ् वरणे' अन्तर्भावितण्यर्थः, लेट्, व्यत्ययेन शप् ।। ५,६ ।।

## ऋक्संहिता पदपाठसहिता

**जामिः सिन्धूनां भ्रातेव स्वस्रामिभ्यान्न राजा वनान्यत्ति ।**
**यद्वातजूतो वना व्यस्थादग्निर्ह दाति रोमा पृथिव्याः ।। ७,८ ।।**
**जामिः । सिन्धूनाम् । भ्राताऽइव । स्वस्राम् । इभ्यान् । न । राजा । वनानि । अत्ति ।**
**यत् । वातऽजूतः । वना । वि । अस्थात् । अग्निः । ह । दाति । रोम । पृथिव्याः ।।**

**स्कन्द–** वैद्युतस्याग्नेरनेन पादेन स्तुतिः । **जामिः** ज्ञातिः । वैद्युतोऽग्निः **सिन्धूनाम्** आपोऽत्र सिन्धव उच्यन्ते । 'यः सिन्धूनामुपोदये सप्तस्वसा स मध्यमः' (ऋ.८,४१,२) इति यथा । वृष्टिलक्षणानाम् अपाम् । कथम् । **भ्राता इव स्वस्राम्** भगिनीनां यथा भ्राता अत्यन्तसन्निकृष्टो ज्ञातिस्तद्वदित्यर्थः । परैस्त्रिभिः पादैः दावरूपस्याग्नेः स्तुतिः । **इभ्यान् न राजा** इभा हस्तिनः तेषु भवाः साधवो वा इभ्या हस्त्यारोहाः । यथा इभ्यान् राजा आक्रम्योपभुङ्क्ते तद्वद् दावाग्निः **वनानि** वृक्षान् **अत्ति** भक्षयति । दहतीत्यर्थः । कदा । उच्यते । **यद् वातजूतः** वातेन प्रेरितः सर्ववनानि **व्यस्थात्** विपूर्वस्तिष्ठतिर्गत्यर्थः । विविधं गच्छतीत्यर्थः । तदैव च अग्निः दावरूपः । हशब्दः पदपूरणः । **दाति** लुनाति रोमस्थानीयं तृणं **पृथिव्याः** । तदैव पृथिव्यास्तृणान्यपि दहतीत्यर्थः ।। ७,८ ।।

**वेङ्कटमाधव–** बन्धुः **सिन्धूनाम्** स्यन्दमानानां नदीनाम् । **भ्राता इव,** स्वसॄणामित्यौपमिकम् । सोऽयम् इभस्थान् शत्रून् **राजा** इव काष्ठानि अत्ति । यदा वातप्रेरितः वृक्षान् अभिभवति तदानीम् अग्निः खलु छिनत्ति दहति लोमस्थानीयं तृणगुल्मादिकमपि **पृथिव्या** इति ।।७,८।।

**मुद्गल.– सिन्धूनाम्** स्यन्दनशीलानाम् अपाम् अयमग्निः । **जामिः** बन्धुः । तासामुत्पादकत्वात् । निदर्शनम्– **स्वस्राम्** स्वसॄणाम् **भ्राता इव** यथा भ्राताऽतिशयेन हितकरो भवति तद्वत् । तादृशोऽग्निः **वनानि** महान्त्यरण्यानि **अत्ति** भक्षयति । दहतीत्यर्थः । निदर्शनम्– **राजा इभ्यान् न** इभ्याः शत्रवः तान् यथा राजा समूलं हिनस्ति तद्वत् । अपि च **यत्** यदा **वातजूतः** वातेन प्रेरितः सन् **वना** वनान्यरण्यानि **वि अस्थात्** उक्तप्रकारेण विविधमातिष्ठति दग्धुं प्रवर्तते तदानीम् **अग्निः ह** असौ अग्निरेव **पृथिव्याः** भूमेः सम्बन्धीनि **रोम** ओषधिरूपाणि **दाति** च्छिनत्ति । भूम्याम् ओषधिवनस्पतिजातं यदस्ति तत्सर्वं दहतीति भावः ।। ७,८ ।।

**सायण– सिन्धूनां** स्यन्दनशीलानाम् अपाम् अयमग्निः । **जामिः** बन्धुः । तासामुत्पादकत्वात् । तथा चाम्नातम् 'अग्नेरापः' (तै.आ.८.१) इति । यद्वा । देवेभ्यः पलायितोऽप्सु वर्तमानः सन् तासामपां बन्धुर्बभूवेत्यर्थः । तत्र दृष्टान्तः । **स्वस्रां** स्वसृणां **भ्रातेव** । यथा भ्राताऽतिशयेन हितकरी भवति तद्वत् । तादृशोऽग्निः वनानि महान्त्यरण्यानि **अत्ति** भक्षयति । दहतीत्यर्थः । तत्र निदर्शनम् **राजा इभ्यान्न** भियं यन्तीति नैरुक्तव्युत्पत्त्या इभ्याः शत्रवः । तान् यथा समूलं हिनस्ति तद्वत् । यद्वा । इभ्या धनिनः । तान् यथा धनमपहरन् राजा हिनस्ति तद्वदित्यर्थः । अपि च **यत्** यदा **वातजूतः** वातेन प्रेरितस्सन् **वना** वनान्यरण्यानि **व्यस्थात्** उक्तप्रकारेण विविधमातिष्ठति दग्धुं प्रवर्तते तदानीम् **अग्निर्ह** असावग्निरेव **पृथिव्याः** भूमेः सम्बन्धीनि **रोम** औषधिरूपाणि रोमाणि **दाति** छिनत्ति । भूम्यामोषधिवनस्पतिजातं यदस्ति तत्सर्वं दहतीति भावः । **स्वस्राम्** । आमो नुडभावः छान्दसः । **अस्थात्** । लुङि 'गातिस्था' इति सिचो लुक् । **दाति** । 'दाप् लवने' अदादित्वात् शपो लुक् ।। ७,८ ।।

**सिद्धाञ्जनम्–** अयमग्निः **स्वस्राम्** स्वसृणां **भ्रातेव** यथा सोदर्यो भवति तथा **सिन्धूनाम्** (सङ्केतशब्दः) स्यन्दमानानां अपां **जामिः** सहजन्मा बन्धुः । **राजा** भूपतिः **इभ्यान् न** शत्रून् यथा निवारयति तथा **वनानि** भूरुहजातानि **अत्ति** भक्षयति । **यत्** यदा **वातजूतः** वायुना प्रेरितः सन् **वना** वनानि **व्यस्थात्** व्याप्य तिष्ठति तदा सः **अग्निर्ह** अग्निरेव **पृथिव्याः** भूमेः **रोम** तनूरुहजातानि छेत्तव्यानि **दाति** छिनत्ति । अन्नमयादुद्भूतानि यानि रोमाणीव निवारयितव्यानि अनिष्टानि भवन्ति क्वचित् तानि शोधितानि भवन्ति वातेरितेन अग्निना ।। **स्वस्राम्**- आमो नुडभावः छान्दसः । **अस्थात्**- तिष्ठतेर्लुङ् । **दाति**- 'दाप् लवने' ।। ७,८ ।।

## ऋक्संहिता पदपाठसहिता

**श्वसित्यप्सु हंसो न सीदन् क्रत्वा चेतिष्ठो विशामुषर्भुत् ।**
**सोमो न वेधा ऋतप्रजातः पशुर्न शिश्वा विभुर्दूरेभाः ।। ९,१० ।।**
श्वसिति । अप्ऽसु । हंसः । न । सीदन् । क्रत्वा । चेतिष्ठः । विशाम् । उषःऽभुत् ।
सोमः । न । वेधाः । ऋतऽप्रजातः । पशुः । न । शिश्वा । विऽभुः । दूरेऽभाः ।।९,१०।।

**स्कन्द– श्वसिति** तृणादीनि दहन्नग्निः श्वसनसदृशं शब्दं करोति । कथम् । **अप्सु हंसः न** हंस इव श्रान्तः निषीदन् । कीदृशः । **क्रत्वा चेतिष्ठः** प्रज्ञावतां मध्ये प्रज्ञया प्रज्ञावत्तमः ।

**विशाम्** षष्ठीनिर्देशादर्थायेति शेषः । यष्टृणां मनुष्याणाम् अर्थाय **उषर्भुत्** उषःकाले विबोद्धा । यदग्निहोत्रहोमार्थमुषःकालेऽग्निर्विबोध्यते तदभिप्रायमुषर्भुदित्येतद् विशेषणम् । **सोमः न वेधाः** मेधावी, **ऋतप्रजातः** ऋतमित्यादित्य उदकं वा तत उत्पन्नः । 'उदीचि प्रथमसमावृत्त आदित्ये कंसं वा मणिं वा परिमृज्य प्रतिस्वरे यत्र शुष्कगोमयमसंस्पर्शयन् धारयति तत्प्रदीप्यते' (या.७, २३)। तेनाग्निरादित्यादुत्पद्यते । वैद्युतात्मनोदकात् । कथं पुनः प्रजातः? उच्यते । **पशुर्न शिश्वा** प्रथमायाः स्थाने तृतीयैषा । पशुरिव शिशुः । यथा शिशुकः पशुः अन्यस्मात्पशोः प्रजायते तद्वदित्यर्थः । **विभुः** ईश्वरः सर्वस्य । **दूरेभाः** भा दीप्तौ । दूर एव व्यवस्थितो दीपयिता ।।

**वेङ्कटमाधव–** अनया पुनरप्सु प्रविष्टं स्तौति । श्वासशब्दं करोति **अप्सु हंसः** इव **सीदन्** प्रज्ञापकेनौषसेन तेजसा चेतयितृतमः मनुष्याणाम् उषसि प्रबुद्धः । **सोमः** इव विधाता उदकात् प्रजातः, **पशुः** इव शिशुना वत्सेन सह तेजसा प्रादुर्भवन् महान् दूरस्थः प्रकाशयति ।।९,१०।।

**मुद्गल–** अयमग्निः देवेभ्यः पलायितः सन् **अप्सु** उदकेषु **श्वसिति** प्राणिति । निगूढो वर्तत इत्यर्थः । दृष्टान्तः । **हंसः न सीदन्** उदकमध्ये उपविशन् हंस इव । कीदृशोऽग्निः । **क्रत्वा** क्रतुना ज्ञानहेतुना आत्मीयेन प्रकाशेन **विशाम्** प्रजानाम् **चेतिष्ठः** अतिशयेन चेतयिता ज्ञापयिता । रात्रौ हि सर्वे जना अन्धकारावृतं सर्वम् अग्नेः प्रकाशाज्जानन्ति । **उषर्भुत्** उषस्युषःकालेऽग्निहोत्रादौ प्रबुद्धः **सोमः न वेधाः** सोम इव विधाता स्रष्टा । सोमो यथा सकलमोषधिरूपं भोज्यजातं सृजति तथा सकलं भोक्तृजातं सृजति । अग्नेरेव भोक्तृरूपेणावस्थानात् । **ऋतप्रजातः** ऋतात् उदकात् प्रादुर्भूतः **पशुः न शिश्वा** उदकमध्ये वर्तमानोऽग्निः शयानः पशुरिव तनूकृतः सङ्कुचितगात्रोऽभूत् । ततः प्रादुर्भूतः सन् **विभुः** प्रभूतः सम्पन्नः । **दूरेभाः** दूरे विप्रकृष्टदेशेऽपि भाः प्रकाशो यस्य स तथोक्तः । एवम्भूतोऽग्निरप्सु श्वसितीति पूर्वेण सम्बन्धः ।। ९,१० ।।

**सायण–** अयमग्निर्देवेभ्यः पलायितः सन् **अप्सु** उदकेषु **श्वसिति** प्राणिति । निगूढो वर्तते इत्यर्थः । तत्र दृष्टान्तः– **हंसो न सीदन्** उदकमध्ये उपविशन् हंस इव । कीदृशोऽग्निः । **क्रत्वा** क्रतुना ज्ञानहेतुनाऽऽत्मीयेन प्रकाशेन **विशां** प्रजानां **चेतिष्ठः** अतिशयेन चेतयिता ज्ञापयिता । रात्रौ हि सर्वे जना अन्धकारावृतं सर्वमग्नेः प्रकाशाज्जानन्ति । **उषर्भुत्** उषस्युषःकालेऽग्निहोत्रादौ प्रबुद्धः **सोमो न वेधाः** सोम इव विधाता स्रष्टा । सोमो यथा सकलमोषधिरूपं भोग्यजातं सृजति । 'सोमो वा ओषधीनां राजा' (तै.सं.६.१.९.१; तै.ब्रा.३.९.१७.१) इति श्रुतेः ।

तथा सकलं भोक्तृजातं सृजति । अग्नेरेव भोक्तृरूपेणावस्थानात् । तथा च तैत्तिरीयकम्- 'अग्निरन्नादोऽन्नपतिः' (तै.ब्रा.२.५.७.३) इति । वाजसनेयकेऽपि भोक्तृभोग्ययोरग्नीषोमात्मकत्व-माम्नातम् 'एतावद्वा इदमन्नं चैवान्नादश्च सोम एवान्नमग्निरन्नादः' इति । **ऋतप्रजातः** । ऋतमित्युदकनाम । ऋतादुदकात् प्रादुर्भूतः **पशुर्न शिश्वा** उदकमध्ये वर्तमानोऽग्निः शयानः पशुरिव तनूकृतः सङ्कुचितगात्रोऽभूत् । ततः प्रादुर्भूतः सन् **विभुः** प्रभूतः सम्पन्नः । यद्वा **शिश्वा** शिशुना गर्भस्थेन वत्सेन सहिता गौरिव **विभुः** प्रभूतावयवो जात इत्यर्थः । **दूरेभाः** दूरे विप्रकृष्टदेशेऽपि भाः प्रकाशो यस्य स तथोक्तः । एवम्भूतोऽग्निरप्सु श्वसितीति पूर्वेण सम्बन्धः ।।

**श्वसिति** । 'श्वस प्राणने' । अदादित्वात् शपो लुक् । 'रुदादिभ्यः सार्वधातुके' (पा.सू. ७.२.७६) इति इडागमः । तिपः पित्त्वादनुदात्तत्वे धातुस्वरः शिष्यते । **क्रत्वा** । 'जसादिषु च्छन्दसि वा वचनम्' इति नाभावाभावः । उषसि बुध्यते इत्युषर्भुत् । 'बुध अवगमने' 'क्विप् च' क्विप् । 'एकाचो बशः' इति भष्भावः । 'अहरादीनां पत्यादिषूपसङ्ख्यानम्' (पा.सू.८.२. ७०) इति सकारस्य रेफादेशः । **शिश्वा** 'शो तनूकरणे' 'आदेचः' इति आत्वम् । 'शः कित्सन्वच्च' (उ.सू.१.२०) इति उप्रत्ययः । सन्वद्भावाद् द्विर्भावत्वे । अत एव नित्वादाद्युदात्तत्वम् । किद्वद्भावात् 'आतो लोप इटि च' इति आकारलोपः । प्रथमपक्षे 'सुपां सुलुक्' इति सोः आकारः । द्वितीये तु पूर्ववन्नाभावाभावः । **दूरेभाः** । 'तत्पुरुषे कृति बहुलम्' इति बहुव्रीहावपि बहुलवचनात् अलुक् । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् ।। ९ ।।

**सिद्धाञ्जनम्– अप्सु** उदकमध्ये **सीदन्** निषण्णः **हंसो न** हंस इव अग्निः अप्सु मध्ये (सङ्केतपदम्) उपविशन् **श्वसिति** प्राणिति । कीदृशः? **उषर्भुत्** उषसि (सङ्केतः) प्रबुद्धः, **क्रत्वा** कतुना प्राज्ञकर्मबलेन **विशाम्** जनानां **चेतिष्ठः** अतिशयेन चेतयिता, सत्यप्रभाते प्रबुद्धोऽयमग्निः मानुषेभ्यः स्वेच्छाबलेन ज्ञानं दातुं समर्थः । **सोमो न** रसात्मा सोम इव **वेधाः** विधाता, स्रष्टा, **ऋतप्रजातः** सत्यजन्मा च, सत्याद्धि अस्य उद्भवः । सः **शिश्वा** शिशुना सह **पशुर्न** पशुरिव, सवत्सा गौरिव लक्ष्यते । **विभुः** विततो भवन्, व्यापनशीलः, **दूरेभाः** दूरेऽपि भाः अस्य, दूरप्रसाराऽस्य दीप्तिर्दृश्यते । एवम्भूतोऽग्निरप्सु श्वसितीति सम्बन्धः ।। **श्वसिति**- 'श्वस प्राणने' । **क्रत्वा–** तृतीयाया नाभावाभावः। **उषर्भुत्**- उषसि बुध्यते, 'बुध अवगमने' क्विप् । **शिश्वा–** पूर्ववत् नाभावाभावः । **दूरेभाः**- बहुव्रीहिः, अलुक्, बहुलवचनात् ।। ९,१० ।।

।। इति प्रथमाष्टके पञ्चमाध्याये नवमो वर्गः ।।

## ।। अथ दशमो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

(सूक्तम् ६६)

१० पराशरः । शात्त्यः । अग्निः । द्विपदा विराट् ।

**र॒यिर्न चि॒त्रा सूरो॒ न सं॒दृगायु॒र्न प्रा॒णो नित्यो॒ न सू॒नुः ।**
**तक्वा॒ न भूर्णि॒र्वना॑ सिषक्ति॒ पयो॒ न धे॒नुः शुचि॒र्वि॒भावा॑ ।। १,२ ।।**
र॒यिः । न । चि॒त्रा । सूरः॑ । न । स॒म्ऽदृक् । आयुः॑ । न । प्रा॒णः । नित्यः॑ । न ।
सू॒नुः । तक्वा॑ । न । भूर्णिः॑ । वना॑ । सि॒सक्ति । पयः॑ । न धे॒नुः । शुचिः॑ । वि॒भाऽवा॑ ।।

**स्कन्द– रयिर्न चित्रा** धनमिव चित्रः पूजनीयो वाऽग्निः । **सूरः न संदृक्** सूर्य इव सन्द्रष्टा सन्दर्शनीयो वा । **आयुः न प्राणः** प्राणहेतुरत्र प्राण उच्यते । अन्नमिव च प्राणहेतुः । जाठरात्मना ह्यग्निराहारविपरिणामकरत्वात्तदायत्तत्वाच्च प्राणस्य भवति प्राणहेतुः । किञ्च **नित्यः न सूनुः** नित्यशब्दो ध्रुववचनः । कृतकाद्यपेक्षया च औरसः पुत्रो नित्य उच्यते । यथौरसः पुत्रोऽग्निरपि तद्वत् । साकाङ्क्षत्वाद्योग्यत्वाच्च इष्टानां लोकानां प्रापकः सुखो वेति वाक्यशेषः । अथवा पुरस्तादुपचारत्वेऽपि नशब्दस्य सूनुः इत्येतावन्मात्रमेव उपमानम् । नित्य इत्येतत्तूपमेयम् । नित्योऽग्निः सूनुरिव । यथा त्रैवर्णिकैः पितृणामनृणत्वाय पुत्रोऽवश्यमुत्पाद्यः, एवं देवानामनृणत्वायाग्निरपि अवश्यमाधेय इत्यर्थः । किञ्च **तक्वा न भूर्णिः** 'तक्वा' (निघ.३,२४) इति स्तेननाम । भूर्णिरित्यपि भ्रमे रूपं द्रष्टव्यम् न विभर्तेः । यथा भ्रमणशील आटविकश्चोरो वनानि सेवते तद्वद्दावरूपोऽग्निः वनानि **सिषक्ति** सेवते । किञ्च **पयो न धेनुः** षष्ठ्यर्थे प्रथमैषा । क्षीरमिव धेनोः स्वभूतम् **शुचिः** शुद्धः **विभावा** दीप्तिमांश्चाग्निः ।। १ ।।

**वेङ्कटमाधव–** दावाग्निमनेन सूक्तेन स्तौति– **रयिः इव चित्रा** इति । प्रकाशादाह सूर्य इव च सर्वैर्दृश्यमानः । **आयुः इव** प्राणनहेतुः, दग्धे ह्यरण्ये ओषधयः प्रादुर्भवन्ति । औरस इव पुत्रः । तस्करः इव हरणशीलः । अरण्यानि सेवते । क्षीरम् इव **धेनुः** । शसः पूर्वरूपम् । ज्वलन् दीप्तिमान् ।। १,२ ।।

**मुद्गल–** रयिः इति दशर्चं द्वैपदम् । अध्ययनतः पञ्चर्चं द्वितीयं सूक्तम् । पराशर ऋषिः । विराट् छन्दः । अग्निर्देवता ।। अयम् अग्निः **रयिः न** धनमिव **चित्रा** चायनीयः । **सूरः न**

सूर्य इव **संदृक्** संद्रष्टा सर्वेषां वस्तूनां दर्शयिता । **आयुर्न प्राणः** आयुः मुखे सञ्चरन् प्राणः । प्रश्वसन् वायुरिव प्रियतमः । यद्वा यथा प्राणवायुरायुर्जीवनमवस्थापयति, एवम् अग्निरपि जाठररूपेणायुषोऽवस्थापयिता । **नित्यो न सूनुः** नित्यो ध्रुवः पुत्र इव प्रियकारी । यथा औरसः पुत्रः पितुर्हितमेवाचरति तद्वदयमपि हितस्य स्वर्गस्य प्रापयिता । **तक्वा न** गतिमान् अश्व इव **भूर्णिः** भर्ता । यथा अश्व उपर्यारूढं पुरुषं बिभर्ति धारयति तद्वदयमपीत्यर्थः । **पयो न धेनुः** पय इव प्रीणयिता । **शुचिः** दीप्तः । **विभावा** विशिष्टप्रकाशयुक्तः । एवंगुणविशिष्टोऽग्निः **वना** वनान्यरण्यानि **सिषक्ति** दग्धुं समवैति ॥ १,२ ॥

**सायण–** अयम् अग्निः **रयिर्न** धनमिव **चित्रा** चायनीयो विचित्ररूपो वा **सूरो न** सूर्य इव **संदृक्** संद्रष्टा सर्वेषां वस्तूनां दर्शयिता । **आयुर्न प्राणः** आयुर्मुखे सञ्चरन् प्राणः प्रश्वसन्वायुरिव प्रियतमः । यद्वा । यथा प्राणवायुः आयुः जीवनम् अवस्थापयति । तथा चाम्नायते- 'यावद्ध्यस्मिन् शरीरे प्राणो वसति तावदायुः' (कौ.उ.३.२) इति । एवम् अग्निरपि जाठररूपेणायुषोऽवस्थापयिता । **नित्यो न सूनुः** नित्यो ध्रुवः पुत्र इव प्रियकारी । यथौरसः पुत्रः पितुर्हितमेवाचरति तद्वदयमपि हितस्य स्वर्गस्य प्रापयिता । तथा चाम्नायते-'पुत्रः पित्रे लोककृज्जातवेदः' (तै.ब्रा.३.७.७.१०) इति । **तक्वा न** गतिमान् अश्व इव **भूर्णिः** भर्ता । यथाऽश्व उपर्यारूढं पुरुषं बिभर्ति धारयति पोषयति वा तद्वदयमपीत्यर्थः । **पयो न धेनुः** पय इव प्रीणयिता । **शुचिः** दीप्तः **विभावा** विशिष्टप्रकाशयुक्तः । एवंगुणविशिष्टोऽग्निः **वना** वनान्यरण्यानि **सिषक्ति** दग्धुं समवैति सेवते वा ॥ **चित्रा** । 'सुपां सुलुक्' इति सोः पूर्वसवर्णदीर्घत्वम् । **नित्यः** । 'नेध्रुवे' (पा.म.४.२.१०४) इति त्यप् । प्रत्ययस्य पित्त्वादनुदात्तत्वे उपसर्गस्वर एव शिष्यते । **तक्वा** । 'तक हसने' । गतिकर्मसु पठितत्वादत्र गत्यर्थः । तकति गच्छतीति तक्वा । 'अन्येभ्योऽपि दृश्यन्ते' इति वनिप् । **भूर्णिः** । 'घृणिः पृश्निः' इत्यादौ भरतेर्निप्रत्ययान्तो निपातितः ॥ १,२ ॥

**सिद्धाञ्जनम्–** 'रयिः' इति दशर्चं द्वैपदमध्ययनतः पञ्चर्चं द्वितीयं सूक्तं पराशरस्यार्षमाग्नेयम् । अनुक्रान्तरयिः' इति । विनियोगो लैङ्गिकः ॥

अयम् अग्निः, **चित्रा रयिर्न** विचित्ररूपं विविधं धनमिव भवति । **सूरो न** सूर्य इव **सन्दृक्** सम्यक् दर्शयिता सर्वेषां पदार्थानाम् । **आयुर्न प्राणः** जीवितमिव, प्रश्वसन् वायुरिव प्रियतम

इत्यर्थः । **नित्यो न सूनुः** ध्रुवः अस्माकं पुत्र इव विश्वसनीय प्रियबन्धुः । **तक्वा न** जवनोऽश्व इव **भूर्णिः** भर्ता अस्माकम् । सः **वना** वनानि **सिषक्ति** समवैति, वनेषु सक्तो भवति । **धेनुः** गौः **पयो न** स्वीयं क्षीरं सत्त्वमिव ददाति नः । **शुचिः** शुभ्रः **विभावा** सुविशालप्रकाशयुक्तः ।। **नित्यः**- 'नेर्ध्रुव' इति त्यप्प्रत्ययः । **तक्वा**- 'तक हसने', गतिकर्मसु पठितः, तकतेर्वनिप् । **भूर्णिः** भरतेर्निप्रत्ययो निपातितः ।। १,२ ।।

## ऋक्संहिता पदपाठसहिता

**दाधार क्षेममोको न रण्वो यवो न पक्वो जेता जनानाम् ।**
**ऋषिर्न स्तुभ्वा विक्षु प्रशस्तो वाजी न प्रीतो वयो दधाति ।। ३,४ ।।**
**दाधार । क्षेमम् । ओकः । न । रण्वः । यवः । न । पक्वः । जेता । जनानाम् ।**
**ऋषिः । न । स्तुभ्वा । विक्षु । प्रऽशस्तः । वाजी । न । प्रीतः । वयः । दधाति ।।**

**स्कन्द–** **दाधार** धारयति **क्षेमं** क्षेम करोतीत्यर्थः । **ओको न रण्वः, यवः न पक्वः** ओक इति गृहनाम । यवोऽपि सस्यावस्थ इहाभिप्रेतः । द्वे अपि चैते रण्व इत्यस्योपमाने । गृहमिव च, यव इव च पक्वः सर्वस्य रमणीयोऽग्निः, प्रीतिकरः इत्यर्थः । **जेता जनानाम्** जेता च शत्रुजनानाम् । **ऋषिर्न स्तुभ्वा** स्तोभतिरर्चतिकर्मा (तु.निघ.३,१४) । होतृत्वादग्निः ऋषिरिव स्तोता देवानाम् । स्वयमपि च **विक्षु** तृतीयार्थे सप्तमी । विड्भिः मनुष्यैः **प्रशस्तः** 'शंस स्तुतौ' प्रकर्षेण स्तुतः । कथम् । **वाजी न** अश्व इवोत्कृष्टः प्रीतश्च सन्नग्निः **वयः** अन्नम् । **दधाति** ददाति स्तोतृभ्यः । अथवा 'वाजी न' इत्येतत् 'वयो दधाति' इत्यस्योपमानम्, न प्रशस्तः इत्येतस्य । अश्व इव च वयो दधाति । यथा सङ्ग्रामाश्वः सङ्ग्रामं जित्वा तद्द्वारेणान्नं ददाति तद्वत् प्रीतस्सन्नग्निर्ददातीत्यर्थः ।। २ ।।

**वेङ्कटमाधव–** करोति रक्षां गृहम् इव रमणीयम् । **यव** इव **पक्वः जेता जनानाम् ।** सोऽयमग्निरन्नं प्रयच्छति । यथा **ऋषिः** स्तोता मनुष्येषु **प्रशस्तः,** अभिरक्षणकुशलः अन्नं प्रयच्छति अश्व इव च घासेन प्रीतः इति ।। ३,४ ।।

**मुद्गल–** अयम् अग्निः, **क्षेमम्** लब्धस्य धनस्य रक्षणम् । **दाधार** धारयति । स्तोतृभ्यो दत्तस्य धनस्य रक्षणं कर्तुं शक्नोतीति भावः । **ओको न** निवासस्थानं गृहमिव **रण्वः** रमणीयः ।

**यवो न** यव इव **पक्वः** । यथा पक्वो यव उपभोगयोग्यो भवति तद्वत् अग्निरपि पाकादिकार्यहेतुतया उपभोग्य इत्यर्थः । **जनानाम् जेता** शत्रुजनानां मध्येऽभिभविता । **ऋषिः न** मन्त्रद्रष्टा ऋषिरिव **स्तुभ्वा** देवानां स्तोता **विक्षु** यजमानलक्षणेषु **प्रशस्तः** प्रख्यातः । **वाजी न** अश्व इव प्रीतः हर्षयुक्तः । यथाऽश्वो हर्षयुक्तो युद्धाभिमुखं गच्छति तद्वदयमपि देवानां हविर्वहने हर्षयुक्तो भवतीत्यर्थः । एवम्भूतोऽग्निः **वयः** अन्नं **दधाति** दधातु । अस्मभ्यं ददात्वित्यर्थः ।। ३,४ ।।

**सायण–** अयम् अग्निः, **क्षेमं** लब्धस्य धनस्य रक्षणं **दाधार** धारयति । स्तोतृभ्यो दत्तस्य धनस्य रक्षणं कर्तुं शक्नोतीति भावः । **ओको न** निवासस्थानं गृहमिव **रण्वः** रमणीयः । यद्वा गन्तव्यः । गृहवत् सर्वैः प्राप्यते इत्यर्थः । **यवो न** यव इव पक्वः । यथा पक्वो यव उपभोगयोग्यः भवति तद्वदग्निरपि पाकादिकार्यहेतुतया उपभोग्यः इत्यर्थः । **जनानां जेता** शत्रुजनानां मध्येऽभिभविता **ऋषिर्न** मन्त्रद्रष्टा ऋषिरिव **स्तुभ्वा** देवानां स्तोता **विक्षु** यजमानलक्षणेषु मनुष्येषु **प्रशस्तः** प्रख्यातः **वाजी न** अश्व इव **प्रीतः** हर्षयुक्तः। यथाऽश्वो हर्षयुक्तो युद्धाभिमुखं गच्छति तद्वदयमपि देवानां हविर्वहने हर्षयुक्तो भवतीत्यर्थः । एवम्भूतोऽग्निः **वयः** अन्नं **दधाति** दधातु । अस्मभ्यं ददात्वित्यर्थः । वय इत्यन्ननाम । 'वयः क्षद्म' इति तन्नामसु पाठात् ।। **दाधार** । 'तुजादीनाम्' इति अभ्यासस्य दीर्घत्वम् । **क्षेमम्**– क्षियति निवसत्यनेनेति क्षेमः । 'अर्तिस्तुसु' इत्यादिना मन् । नित्त्वादाद्युदात्तत्वम् । **रण्वः** 'रवि धवि गत्यर्थाः' । अस्मात् कर्मणि क्प्रत्ययः । इदित्त्वान् नुम् । **जेता** । तृनन्त आद्युदात्तः । **जनानाम्** । 'यतश्च निर्धारणम्' (पा.सू.२.३.४१) इति निर्धारणे षष्ठी । नेयं कर्मणि षष्ठी इति 'न लोकाव्ययनिष्ठा' इति षष्ठीप्रतिषेधो न भवति । **स्तुभ्वा** स्तोभतिः स्तुतिकर्मा । 'अन्येभ्योऽपि दृश्यन्ते' इति क्वनिप् ।। ३,४ ।।

**सिद्धाञ्जनम्–**अयम् अग्निः, **रण्वः** रमणीयः **ओको न** रमणीयं वासगृहमिव । **क्षेमम्** कुशलं सर्वम् अस्माकं **दाधार** बिभर्ति। **पक्वो यवो न** परिपाकवान् धान्यविशेष इव उपभोगयोग्य इत्यर्थः । **जनानाम् जेता** जनेषु मध्ये सर्वोत्कृष्टो जयशालितयेत्यर्थः । **ऋषिर्न** ऋषिरिव **स्तुभ्वा** स्तोभकृत्, स्तोता देवानामित्यर्थः । **विक्षु** प्रजासु **प्रशस्तः** प्रकर्षेण कथितः ख्यातः, विश्रुत इत्यर्थः । **प्रीतः** सन्तुष्टः **वाजी न** अश्व इव अस्मासु वर्तते । **वयः** वृद्धिः अस्माकं **दधाति** धारयते ।। **दाधार**- 'तुजादीनाम्' इत्यभ्यासस्य दीर्घत्वम् । **स्तुभ्वा**- स्तोभतेः क्वनिप् ।। ३,४ ।।

## ऋक्संहिता पदपाठसहिता

**दुरोकशोचिः क्रतुर्न नित्यो जायेव योनावरं विश्वस्मै ।**
**चित्रो यदभ्राट्छ्वेतो न विक्षु रथो न रुक्मी त्वेषः समत्सु ॥ ५,६ ॥**
**दुरोकऽशोचिः । क्रतुः । न नित्यः । जायाऽइव । योनौ । अरम् । विश्वस्मै । चित्रः । यत् । अभ्राट् । श्वेतः । न । विक्षु । रथः । न । रुक्मी । त्वेषः । समत्ऽसु ॥**

**स्कन्द–** दुष्करमोको यस्याम्, यत्र व्यवस्थातुं न शक्यते इत्यर्थः, सा दुरोकाः । दुरोकाः शोचिर्दीप्तिर्यस्य सः दुरोकशोचिः । छान्दसत्वात् सकारलोपः । दुस्सहदीप्तिकः । **क्रतुर्न नित्यः** क्रतुः कर्म प्रज्ञा वा, तद्वन्नित्यः । **जायेव योनौ** 'योनिः' (निघ.३,४) इति । गृहनाम । यथा सर्वमनुष्याणां भार्या गृहे पर्याप्ता सर्वस्मै कार्याय एवम् अग्निरलं पर्याप्तः सर्वस्मै कार्याय । स्तोतॄणां सर्वकार्याणि कर्तुं समर्थ इत्यर्थः । कीदृशः । उच्यते । **चित्रः यत् अभ्राट्** यदिति व्यत्ययेन नपुंसकता । विचित्रो यो भ्राजते । **श्वेतः न** श्वेतवर्णत्वात् श्वेत आदित्यः । आदित्य इव **विक्षु** मनुष्येषु । यश्च **रथः न रुक्मी त्वेषः समत्सु** 'रुक्मम्' (निघ.१,२) इति हिरण्यनाम । यथा रुक्मवान् रूप्येण सुवर्णेन वा खचितावयवो रथः सङ्ग्रामेषु दीप्तः स्यात्तद्वत् **त्वेषो** दीप्तः ॥ ५,६ ॥

**वेङ्कटमाधव–** दुःसेवतेजा, प्रज्ञा इव अनुस्यूतः जायेव गृहे वर्तमानः पर्याप्तो भवति । **विश्वस्मै** जनाय, **चित्रः** यदा भ्राजतेऽरण्ये, श्वेतवर्ण इवादित्यः, विक्षु, रथः इव च हिरण्मयः दीप्तः सङ्ग्रामेषु ॥ ५,६ ॥

**मुद्गल– दुरोकशोचिः** दुष्प्रापतेजाः **क्रतुर्न नित्यः** क्रतुः कर्मणां कर्ता स इव ध्रुवः । यथा स कर्मसु ध्रुवोऽप्रमत्तः सन् जागर्ति, तद्वदयमप्यग्निः कर्मसु रक्षसां दहने ध्रुवो जागर्तीत्यर्थः । **योनौ** गृहे वर्तमाना **जायेव** योषिदिव । अग्निहोत्रादिगृहे वर्तमानो वह्निः **विश्वस्मै** यष्टृजनाय **अरम्** अलं भूषणं भवति । यथा जायया गृहम् अलङ्कृतं भवति, तद्वदग्निना यज्ञगृहमप्यलङ्कृतं सद् दृश्यत इत्यर्थः । **चित्रः** चायनीयः **यत्** यदा अयम् अग्निः **अभ्राट्** भ्राजते तदानीम् **श्वेतः न** शुभ्रवर्ण आदित्य इव भवति । रात्रौ हि अहनि सूर्य इव अग्निः प्रकाशको भवति । **विक्षु** प्रजासु । **रथः न** रथ इव **रुक्मी** सुवर्णवद्रोचमानदीप्तियुक्तः **समत्सु** सङ्ग्रामेषु **त्वेषः** दीप्तः । एवम्भूतोऽग्निः यदभ्राट् इति पूर्वेणान्वयः ॥ ५,६ ॥

**सायण–** **दुरोकशोचिः** दुष्प्रापतेजाः **क्रतुर्न नित्यः** । क्रतुः कर्मणां कर्ता । स इव ध्रुवः । यथा सः कर्मसु ध्रुवोऽप्रमत्तः सन् जागर्ति तद्वदयमप्यग्निः कर्मसु रक्षसां दहने ध्रुवो जागर्तीत्यर्थः । **योनौ** गृहे वर्तमाना **जायेव** योषिदिव अग्निहोत्रादिगृहे वर्तमानो वह्निः **विश्वस्मै** सर्वस्मै यष्टृजनाय **अरम्** अलं भूषणं भवति । यथा जायया गृहमलङ्कृतं भवति तद्वदग्निना यज्ञगृहमप्यलङ्कृतं सत् दृश्यते इत्यर्थः । **चित्रः** चायनीयो विचित्रदीप्तिर्वा **यत्** यदाऽयम् अग्निः **अभ्राट्** भ्राजते तदानीं **श्वेतो न** शुभ्रवर्ण आदित्य इव भवति । रात्रौ हि अहनि सूर्य इवाग्निः प्रकाशको भवति । **विक्षु** प्रजासु **रथो न** रथ इव **रुक्मी** सुवर्णवद्रोचमानदीप्तियुक्तः **समत्सु** सङ्ग्रामेषु **त्वेषः** दीप्तः । एवम्भूतोऽग्निर्यद् अभ्राडिति पूर्वेणान्वयः ।।

**दुरोकशोचिः** । 'उच समवाये' 'ईषद्दुःसुषु' इति कृच्छ्रार्थे खल् । बहुलवचनात् कुत्वम् । लित्स्वरेण प्रत्ययात् पूर्वस्योदात्तत्वम् । दुरोकं शोचिस्तेजो यस्य । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । **अरम्** । 'वालमूल' (पा.म.८.२.१८) इत्यादिना लकारस्य रेफादेशः । **अभ्राट्** । 'भ्राजृ दीप्तौ' लङि व्यत्ययेन परस्मैपदम् । 'बहुलं छन्दसि' इति शपो लुक् । व्रश्चादिषत्वे जश्त्वम् । अडागम उदात्तः । यद्वृत्तयोगादनिघातः । **समत्सु** । समानं माद्यन्त्येष्विति समदः सङ्ग्रामाः । औणादिकः, अधिकरणे क्विप् । 'समानस्य च्छन्दसि' इति सभावः । यद्वा सम्यगत्ति भक्षयति वीरानिति समत् । सम्पूर्वादत्तेः 'क्विप् च' इति क्विप् ।। ५,६ ।।

**सिद्धाञ्जनम्–** अयमग्निः **दुरोकशोचिः** दुरोके दुःखावासे गृहे शोचिस्तेजः । यद्वा दुरोकं दुःखेनोत्पाद्यं शोचिः । 'दुरोकं दुष्प्रापं शोचिस्तेजो यस्यासौ' इति सायणः । **नित्यः क्रतुर्न** ध्रुवः क्रियापरोऽध्यवसाय इव अस्मासु व्याप्त इत्यर्थः । **योनौ** गृहे **जाया इव** पत्नीव **विश्वस्मै** सर्वस्मै जनाय **अरम्** अलं पर्याप्तो भवति, यद्वा अलं भूषणम्, यथा सर्वस्यापि जनस्य स्वगृहे जाया अलङ्काराय भवति, तथाऽयमग्निरलङ्कुरुते गृहम् । **यत्** यदा **चित्रः** अद्भुतः सन् **अभ्राट्** भ्राजते, यदा विचित्रज्वालः विविधं भासते, तदा स **विक्षु** प्रजासु **श्वेतो न** शुभ्र इव शुभ्रवर्णः पुरुष इव लक्ष्यते। **रुक्मी रथो न** हिरण्मयो रथ इव भवति । **समत्सु** युद्धेषु **त्वेषः** तेजोविशेष एव सः ।। **दुरोकशोचिः–** 'उच समवाये' कृच्छ्रार्थे खल्, बहुलवचनात् कुत्वम्, दुरोकम् । अन्यद् व्याख्यातम् । **अभ्राट्**- 'भ्राजृ दीप्तौ' लङ, व्यत्ययेन परस्मैपदं, शपो लुक् । **समत्सु**- समानं माद्यन्त्येष्विति समदः सङ्ग्रामाः, औणादिकोऽधिकरणे क्विप्, सम्पूर्वात् भक्षणार्थाद् अत्तेर्वा ।।

## ऋक्संहिता पदपाठसहिता

**सेनेव सृष्टामं दधात्यस्तुर्न दिद्युत्त्वेषप्रतीका ।**
**यमो ह जातो यमो जनित्वं जारः कनीनां पतिर्जनीनाम् ॥ ७,८ ॥**
**सेनाऽइव । सृष्टा । अमम् । दधाति । अस्तुः । न । दिद्युत् । त्वेषऽप्रतीका । यमः । ह । जातः । यमः । जनिऽत्वम् । जारः । कनीनाम् । पतिः । जनीनाम् ॥ ७,८ ॥**

**स्कन्द– सेनेव** यथा सेना सेनापतिना **सृष्टा** विसृष्टा अभ्यनुज्ञाता सती यान् प्रति गच्छति तेषां भयम् **दधाति,** एवम् अतिप्रज्वलितोऽग्निः अयम् । अमशब्दोऽत्र भयवचनः । 'द्यावा जज्ञान पृथिवी अमे धाः' (ऋ.१,६३,१) इति यथा । भयं ददाति, जनयतीत्यर्थः । कस्य । अनिर्देशात् कृत्स्नस्य जगतो रक्षसां वा । **अस्तुर्न दिद्युत्** इदमपि भयाधानस्यैव द्वितीयमुपमानम् । 'दिद्युत्' (निघ.२,२०) इति वज्रनाम । वज्रनामानि चायुधमात्रवचनानि, नेन्द्रायुधविशेषवचनान्येव । तेनात्र दिद्युत् शक्तिरुच्यते । यथा चास्तुः क्षेपणशीलस्य स्वभूता शक्तिर्यं प्रति क्षिप्यते तस्य भयं ददाति तद्वत् । कीदृशी या शक्तिः । उच्यते । **त्वेषप्रतीका** प्रतीकं दर्शनमुच्यते । दीप्तदर्शना । उज्ज्वलेत्यर्थः । किञ्च **यमः ह जातः** युगपज्जातत्वात् यमोऽत्राग्निरुच्यते । केन पुनः सहाग्निर्युगपज्जातः? । इन्द्रेण । कुत एतत् । 'समानो वा जनिता भ्रातरा युवं यमाविहेह मातरा' (ऋ.६,५९,२) इति मन्त्रान्तरे दर्शनात् । अथवा प्रयच्छति स्तोतृभ्यः कामानिति यमः । हशब्दस्तु विनिग्रहार्थीय एवार्थे । यम एव जातः । यम एव **जनित्वम्** कर्तर्ययं व्यत्ययेन त्वं द्रष्टव्यः । जनिष्यमाणः । यावत्किञ्चित् सर्वमग्न्यायत्तत्वादग्निरेवेत्यर्थः ।

किञ्च **जारः कनीनाम्** जरयिता कन्यकानाम् अग्निः । अग्निसन्निधौ व्यूढानां कन्यकानां कन्यात्वं व्यावर्त्यते । अत एवमुच्यते– 'जारः कनीनाम्' इति । **पतिः जनीनाम्** जनयन्त्यपत्यानीति जनयो भार्यास्तासां पतिः । यावती काचित् स्त्री सर्वस्याः प्रथममग्निः पतिर्भवति, पश्चान्मनुष्यः । तथा हि वक्ष्यति 'सोमः प्रथमो विविदे गन्धर्वो विविद उत्तरः । तृतीयो अग्निष्टे पतिस्तुरीयस्ते मनुष्यजाः' (ऋ.१०,८५,४०) इति । पालयितृवचनो वा पतिशब्दः । अथवा कनतिः कान्तिकर्मा (तु.निघ.२,६) । कमनीयत्वात् कनय ओषधय इहोच्यन्ते । जनयोऽप्योषधय एव जायमानत्वात् । तासां ऋषीसात्मना फलपाककरत्वात् जारोऽग्निः । पतिश्च स्वामित्वात् पालयितृत्वाद्वा ॥ ७,८ ॥

**वेङ्कटमाधव–** सेनेव उद्युक्ता बलम् दधाति, **अस्तुः** इव आयुधं दीप्तमुखम् । **यम** एव **जात** अग्निरपि यम उच्यते यमनात् । यम एव जनिष्यमाणः । जरयिता कन्यकानाम् । 'तृतीयो अग्निष्टे पतिः' (ऋ.१०,८५,४०) इत्यपि निगमो भवति । 'पालयिता जायानाम् तत्प्रधाना हि यज्ञसंयोगेन भवन्ति' (या.१०,२१) ॥ ७,८ ॥

**मुद्गल– सृष्टा** प्रेरिता **सेनेव** स्वामिना सह वर्तमाना नरसंहतिरिवायमग्निः **अमम्** शत्रूणां भयम् **दधाति** विदधाति । करोतीत्यर्थः । निदर्शनान्तरमुच्यते । **त्वेषप्रतीका** दीप्तमुखा **अस्तुर्न दिद्युत्** क्षेप्तृसम्बन्धिनी इषुरिव । सा यथा भीषयते तद्वदग्निरपि राक्षसादीन् भीषयत इत्यर्थः । यः **जातः** उत्पन्नो भूतसङ्घः यच्च **जनित्वं** जनयितव्यमुत्पत्स्यमानं भूतजातं तदुभयमपि **यमः ह** अग्निरेव । सर्वेषां भावानामाहुतिद्वाराऽग्न्यधीनत्वात् । **वनीनां** कन्यकानाम् **जारः** जरयिता । यतो विवाहसमयेऽग्नौ लाजादिद्रव्येण होमे सति तासां कन्यकात्वं निवर्तते । अतो जरयितेत्युच्यते । तथा **जनीनां** जायानां कृतविवाहानां **पतिः** भर्ता ॥ ७,८ ॥

**सायण– सृष्टा** प्रेरिता **सेनेव** स्वामिना सह वर्तमाना भटसंहतिरिव अयम् अग्निः **अमं** शत्रूणां भयं **दधाति** विदधाति । करोतीत्यर्थः । यद्वा । **सृष्टा** सेनेव **अमं** बलं दधाति । सा यथा बलवती तद्वदग्निरपि बलवानित्यर्थः । निदर्शनान्तरमुच्यते । **दिद्युदिति** वज्रनाम । तेन चात्रेषुर्लक्ष्यते । **त्वेषप्रतीका** दीप्तमुखा **अस्तुर्न दिद्युत्** क्षेप्तुः सम्बन्धिनी इषुरिव । सा यथा भीषयते तद्वदग्निरपि राक्षसादीन् भीषयते इत्यर्थः । अत्र निरुक्तं- 'सेनेव सृष्टा भयं वा बलं वा दधात्यस्तुरिव दिद्युत्त्वेषप्रतीका' (निरु.१०.२१) इत्यादि । यच्छति ददाति स्तोतृभ्यः कामानिति यमोऽग्निरुच्यते । यद्वा । इन्द्राग्न्योर्युगपदुत्पन्नत्वादग्नेर्यमत्वम् । अस्मिन्नर्थे यास्केन मन्त्रब्राह्मणे दर्शिते- 'यमो ह जात इन्द्रेण सह सङ्गतः । यमाविहेह मातरेत्यपि निगमो भवति' (निरु.१०.२१) इति । यः **जातः** उत्पन्नो भूतसङ्घो यच्च **जनित्वं** जनयितव्यमुत्पत्स्यमानं भूतजातं तदुभयमपि **यमो ह** अग्निरेव । सर्वेषां भावानामाहुतिद्वारा अग्न्यधीनत्वात् । **कनीनां** कन्यकानां **जारः** जरयिता । यतो विवाहसमये अग्नौ लाजादिद्रव्यहोमे सति तासां कन्यात्वं निवर्तते । अतो जरयितेत्युच्यते । तथा **जनीनां** जायानां कृतविवाहानां **पतिः** भर्ता । तथा चाख्यायते- 'अनुपजातपुरुषसम्भोगेच्छावस्थां स्त्रियं सोमो लेभे । स च सोमः ईषदुपजातभोगेच्छां तां विश्वावसवे गन्धर्वाय प्रादात् । स च गन्धर्वो विवाहसमयेऽग्नये प्रददौ । अग्निश्च मनुजाय

भर्त्रे धनपुत्रैः सहितामिमां प्रायच्छत्' इति । इममर्थं काचिदृक् स्पष्टं ब्रूते- 'सोमो दददन्धर्वाय गन्धर्वो दददग्नये । रयिं च पुत्रांश्चादादग्निर्मह्यमथो इमाम्' (ऋ.सं.१०.८५.४१) इति । यास्कस्त्वाह- 'तृतीयो अग्निष्टे पतिरित्यपि निगमो भवति' (निरु.१०.२१) इति । यद्वा । जनीनां पालयिता यतोऽयम् अनुष्ठितैर्यागैः फलं प्रयच्छति ।।

**सेनेव** । इनेन सह वर्तते इति सेना । 'वोपसर्जनस्य' इति सभावः । बहुव्रीहिस्वरः । जनित्वम् । 'जनी प्रादुर्भावे'। 'कृत्यार्थे तवैकेन्' इति कर्मणि त्वन्प्रत्ययः । इडागमः । नित्त्वादाद्युदात्तत्वम् । **जारः** । जरयतीति जारः । 'दारजारौ कर्तरि णिलुक् च' (पा.सू.३.३. २०.४) इति निपात्यते । **कनीनाम्** । कन्याशब्दात् षष्ठ्येकवचने 'बहुलं छन्दसि' इति बहुलग्रहणात् सम्प्रसारणम् । परपूर्वत्वम् । **जनीनाम्** । जन्यन्ते आसु इति जनयः स्त्रियः । 'इन्सर्वधातुभ्यः' इति इन्प्रत्ययः । नित्त्वादाद्युदात्तत्वम् ।। ७,८ ।।

**सिद्धाञ्जनम्– सृष्टा** प्रेरिता **सेना इव अमम्** बलं **दधाति** अस्मासु धत्ते, शत्रूणाम् अभिभवनाय प्रेरिता सेना यथा शत्रुपराजयविधायकं बलम् अस्मासु धत्ते तथा अग्निः बलम् अस्मासु धारयति । **अस्तुः** क्षेप्तुः धानुष्कस्य **दिद्युत् न** दीप्यमानो बाण इव । कीदृशी दिद्युत्? **त्वेषप्रतीका** त्वेषं भ्राजमानं प्रतीकं मुखम् अग्रं यस्याः सा । सोऽग्निः **यमः** ह द्वन्द्व एव । **जातः** प्रादुर्भूतः, जातं सर्वं द्वन्द्वात्मनाऽवस्थितम्, स एव तथा द्वन्द्वात्मनाऽवस्थितः । न केवलं जातं सर्वं प्रति द्वन्द्वात्मकता, जनितव्यमपि सर्वं द्वन्द्वं स एवेत्याह । **यमः** द्वन्द्वः **जनित्वम्** जनितव्यं च भवति । भूतं भव्यं च सर्वं द्वन्द्वं अग्निरेवेत्यर्थः । **कनीनाम्** कन्यकानां **जारः** जरयिता रहोरतिप्रदः, अनभिव्यक्तभावानां व्यञ्जयिता परिपाकविधानेनेति गौणः प्रयोगः । तथा **जनीनाम्** जनयित्रीणां मातृणां **पतिः** पालको भर्ता, भावानां उत्पादयित्रीणां शक्तीनां अयम् अग्निरेव पतिर्भवति ।। **जनित्वम्**-कृत्यार्थ 'तवैकेन्' इति कर्मणि त्वन्प्रत्ययः । **जारः**-जारयति, कर्तरि णिलुक् निपातितः । **कनीनाम्**-कन्याशब्दात् षष्ठीबहुवचने छन्दसि सम्प्रसारणम् । **जनीनाम्**- जन्यन्ते आसु, जनयः स्त्रियः, इन्प्रत्ययः ।। ७,८ ।।

## ऋक्संहिता पदपाठसहिता

**तं वंश्चराथा वयं वंसत्यास्तं न गावो नक्षन्त इद्धम् ।**
**सिन्धुर्न क्षोदः प्र नीचीरैनोन्नवन्त गावः स्वर्दृशीके ।। ९,१० ।।**

**तम् । वः । चराथा । वयम् । वसत्या । अस्तम् । न । गावः । नक्षन्ते । इद्धम् । सिन्धुः । न । क्षोदः । प्र । नीचीः । ऐनोत् । नवन्त । गावः । स्वः । दृशीके ॥**

**स्कन्द–** **वः** इति द्वितीयैकवचनस्य स्थाने बहुवचनम् । यः उक्तगुणोऽसि **तम्** त्वाम् **चराथा** चरतिर्गत्यर्थः । चरतीति चरथः पशुः । तत्प्रभवा या हृदयाद्यवदानाहुतिः सापि कारण-धर्मस्य कार्येषूपचारदर्शनात् चराथोच्यते । तया । **वयम्, वसत्या** वसतीति वसतिः स्थावररूपा व्रीहियवाद्योषधिः । तत्प्रभवा पुरोडाशाद्याहुतिरपि वसतिः । तया च । **अस्तम् न गावः** 'अस्तम्' (निघ.३,४) इति गृहनाम । यथा गृहं गावो व्याप्नुवन्ति उपगच्छन्ति वा तद्वत् । **नक्षन्ते** 'इन्वति, नक्षति' इति व्याप्तिकर्मसु पाठात् व्याप्त्यर्थोऽयम् (तु.निघ.२,१८) । व्यत्ययेन चोत्तमस्य स्थाने प्रथमपुरुषः । नक्षामहे व्याप्नुमः । अथवा 'तृक्ष स्तृक्ष णक्ष गतौ' । शुद्धोऽपि चात्र सोपसर्गार्थे द्रष्टव्यः । उपगच्छाम इत्यर्थः । **इद्धम्** आहवनीयात्मना दीप्तं सन्तम् । परोऽर्धर्चः परोक्षकृतत्वाद् भिन्नं वाक्यम् । **सिन्धुर्न क्षोदः** सिन्धोरिवोदकम् । **प्र नीचीः, ऐनोत्** इणो वा, गत्यर्थस्य एनतेः(?) वा गतिकर्मण इदं रूपम् । दावरूपोऽग्निः आ मूलादोषधीर्दग्धुं प्रकर्षेण नीचैर्गच्छति ।

किञ्च **नवन्त गावः** स्तुतयोऽत्र गावः उच्यन्ते । 'गोभिर्यदीमन्ये अस्मत्' (ऋ.८,२,६) इति यथा । स्तोतारो वा । 'गोभिः काणा अभिद्यवः' (ऋ.१,१३४,२) इति यथा । अग्निं स्तुवन्ति स्तुतयः स्तोतारो वा । शाकपूणिस्तु 'य उग्रा अर्कमानृचुः' (ऋ.१,१९,४), 'आर्चन्नत्र मरुतः' (ऋ.१,५२,१५) इत्यादिषु मरुतां स्तोतृत्वदर्शनात् मरुतोऽत्र गाव उच्यन्त इति मन्यते । अग्निं स्तुवन्तो मरुतः । **स्वः** सर्वे सर्वस्मिन् वा । **दृशीके** दर्शनीये वेद्यादौ स्थाने । अथवा दृशीकेशब्दो द्रष्टुमित्यस्य चार्थे । स्वर्दृशीके अग्निप्रकाशितं सर्वं द्रष्टुमित्यर्थः । द्युनाम वा स्वः शब्दः । द्युलोकं द्रष्टुम् । स्वर्गं प्राप्तुमित्यर्थः ॥ ९,१० ॥

**वेङ्कटमाधव–** **तम्** इमं यूयं चरन्त्या पश्वाहुत्या, **वयम्** निवसन्त्या औषधाहुत्या, गृहं यथा **गावः** आप्नुवन्ति तथाऽऽप्नवामः । **इद्धम्** समृद्धं भोगैः । **सिन्धुः** इव उदकम् अधः स्थितम् अग्निः **नीचीः** ज्वालाः उद्गमयति । ते च रश्मयः संश्लिष्टा भवन्ति सर्वस्य दर्शनीये अग्राविति ॥

**मुद्गल–** **वः** इति व्यत्ययेन बहुवचनम् । हे अग्ने! **तम्** त्वाम् । **चराथा** चरतीति चरथः पशुः, तत्प्रभवैः हृदयादिभिः साध्या आहुतिरपि चराथेत्युच्यते । उपचारात् कार्ये कारणशब्दः ।

**चराथा** चरथया पशुप्रभवहृदयादिसाधनया आहुत्या । **वसत्या** वसति निवसतीति स्थावरो व्रीह्यादिर्वसतिः । पूर्ववत्तत्साध्याऽऽहुतिर्लक्ष्यते । वसत्या पुरोडाशाद्याहुत्या च **वयम् इद्धम्** प्रदीप्तमग्निं **नक्षन्ते** व्याप्नुयाम । पुरुषव्यत्ययः । तत्र दृष्टान्तः । **अस्तं न गावः** 'अस्तम्' इति गृहनाम । यथा गावो गृहं व्याप्नुवन्ति तद्वदयमग्निः । **सिन्धुः न क्षोदः** स्यन्दनशीलमुदकमिव **नीचीः** नितरां चरन्तीरितस्ततो नितरामुद्गच्छन्तीर्ज्वालाः **प्र ऐनोत्** प्रेरयति । यथा जलप्रवाहो निम्नदेशे शीघ्रं गच्छति तद्वदग्नेर्ज्वाला दग्धव्यं प्रति गच्छन्तीति भावः । **स्वः** नभसि वर्तमाने **दृशीके** दर्शनीये तस्मिन् अग्नौ **गावः** गमनस्वभावा रश्मयः **नवन्त** सङ्गच्छन्ते ॥ ९,१० ॥

**सायण– वः** इति व्यत्ययेन बहुवचनम् । हे अग्ने **तं** त्वां **चराथा** । चरतीति चरथः पशुः । तत्प्रभवैर्हृदयादिभिः साध्या आहुतिरपि चरथा इत्युच्यते । उपचारात् कार्ये कारणशब्दः । चराथा चरथया पशुप्रभवहृदयादिसाधनया आहुत्या । **वसत्या** वसति निवसतीति स्थावरो व्रीह्यादिर्वसतिः । पूर्ववत् तत्साध्याहुतिर्लक्ष्यते । वसत्या पुरोडाशाद्याहुत्या च **वयम् इद्धं** प्रदीप्तमग्निं **नक्षन्ते** व्याप्नुयाम । पुरुषव्यत्ययः । तत्र दृष्टान्तः । **अस्तं न गावः** । अस्तमिति गृहनाम । यथा गावो गृहं व्याप्नुवन्ति तद्वत् । अत्र यास्कः- 'तं वश्चराथा चरन्त्या पश्वाहुत्या वसत्या च निवसन्त्यौषधाहुत्याऽस्तं यथा गाव आप्नुवन्ति तथाऽऽप्नुयाम' (निरु.१०.२१) इति । अयमग्निः **सिन्धुर्न क्षोदः** स्यन्दनशीलमुदकमिव **नीचीः** नितरामञ्चतीः इतस्ततो नितरामुद्गच्छन्तीर्ज्वालाः **प्र ऐनोत्** प्रेरयति । यथा जलप्रवाहो निम्नदेशे शीघ्रं गच्छति तद्वदग्नेर्ज्वालाः दग्धव्यं प्रति गच्छन्तीति भावः । **स्वः** नभसि वर्तमाने **दृशीके** दर्शनीये तस्मिन्नग्नौ **गावः** गमनस्वभावा रश्मयः **नवन्त** सङ्गच्छन्ते । नवतिर्गतिकर्मा ॥

**चराथा** । चरेरौणादिकः अथक्प्रत्ययः । दीर्घश्छान्दसः । 'सुपां सुलुक्' इति विभक्तेः आकारः । **वसत्या** । 'वहिवस्यर्तिभ्यश्चित्' (उ.सू.४.५००) इति अतिप्रत्ययः । 'उदात्तयणः' इति विभक्तेरुदात्तत्वम् । **अस्तम्** । अस्यते अस्मिन् सर्वमित्यस्तं गृहम् । 'असिहसि' इत्यादिना तन् । 'तितुत्र' इति इट्प्रतिषेधः । नित्त्वादाद्युदात्तत्वम् । **नक्षन्ते** । नक्षतिर्व्याप्तिकर्मा । 'नक्ष गतौ' । व्यत्ययेनात्मनेपदम् । 'चादिलोपे विभाषा' इति निघाताभावः । **नीचीः** । निपूर्वात् 'अञ्चतेश्चोपसङ्ख्यानम्' (पा.सू.४.१.६.२) इति ङीप् । 'अचः' इति अकारलोपे 'चौ' इति दीर्घत्वम् । 'न्यधी च' (पा.सू.६.२.५३) इति गतेः प्रकृतिस्वरत्वम् । **ऐनोत्** । 'इण गतौ' ।

अन्तर्भावितण्यर्थात् 'छन्दसि लुङ्लङ्लिटः' इति वर्तमाने लङि व्यत्ययेन श्नुः । आडागमो वृद्धिश्च । **दृशीके** । 'दृशिर् प्रेक्षणे'। 'अनिदृशिभ्यां च' इति कीकन्प्रत्ययः । नित्त्वादाद्युदात्तत्वम् ।। १० ।।

**सिद्धाञ्जनम्– वयम्, तम्** तथाभूतं त्वां, **इद्धम्** दीप्तम्, **वः** तव, वचनव्यत्ययः, **चराथा** चरणेन गमनेन, **वसत्या** वासेन, स्थानेन, उभयया गत्या स्थित्या च **गावः** पशवः **अस्तम् न** गृहमिव **नक्षन्ते** प्राप्नुमः, पुरुषव्यत्ययः । अग्नेः स्थितिगत्यनुसारेण दीप्तं तं प्राप्नुमः, गावो गोष्ठमिव । सः **सिन्धुः** स्यन्दमाना **क्षोदो न** नदी इव, **नीचीः** निम्नप्रदेशं गच्छन्तीः अपः **प्रैणोत्** प्रेरयति। **स्वर्दृशीके** सूर्यस्य दर्शने आविर्भावे सति **गावः** रश्मयः **नवन्त** तं प्रति गच्छन्ति, नवतिर्गतिकर्मा । अत्र स्वः सूर्यः, ऋतं ज्योतिः, गावः चिद्रश्मयः । अन्यदनुसन्धेयम् ।। **चराथा**-चरेरौणादिक अथक्प्रत्ययः । **वसत्या**-वसेः अतिप्रत्ययः। **अस्तम्**-अस्यतेऽस्मिन् सर्वं, तन्प्रत्ययः । **नक्षन्ते** नक्षतिः व्याप्तिकर्मा, व्यत्ययेनात्मनेपदम् । **नीचीः**-निपूर्वादञ्चतेः ङीप् । **ऐनोत्** इण् गतौ, अन्तर्भावितण्यर्थाद् वर्तमाने लङ्, व्यत्ययेन श्नुः । **दृशीके**- 'दृशिर् प्रेक्षणे' 'अनिदृशिभ्यां च' इति कीकन्प्रत्ययः ।। १० ।।

।। इति प्रथमाष्टके पञ्चमाध्याये दशमो वर्गः ।।

## ।। अथ एकादशो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

(सूक्तम् ६७)

१० पराशरः । शाक्त्यः । अग्निः । द्विपदा विराट् ।

**वनेषु जायुर्मर्तेषु मित्रो वृणीते श्रुष्टिं राजेवाजुर्यम् ।**
**क्षेमो न साधुः क्रतुर्न भद्रो भुवत्स्वाधीर्होता हव्यवाट् ।। १,२ ।।**
वनेषु । जायुः । मर्तेषु । मित्रः । वृणीते । श्रुष्टिम् । राजाऽइव अजुर्यम् । क्षेमः । न । साधुः । क्रतुः । न । भद्रः । भुवत् । सुऽआधीः । होता । हव्यऽवाट् ।। १,२ ।।

**स्कन्द– वनेषु जायुः** दावरूपेण जननशीलोऽग्निः । **मर्तेषु मित्रः** मर्तेष्विति षष्ठ्यर्थे सप्तमी । मनुष्याणां मित्रम् । **वृणीते** सम्भजते । किम् । **अजुर्यम्** अजराम् । न कदाचिज्जीर्यत इत्यर्थः ।

कथं वृणीते । उच्यते । **श्रुष्टिं राजेव** श्रुष्टिशब्दोऽत्र दूतवचनः, न क्षिप्रनाम । दूतमात्मीयं परकीयं वा राजेव । **क्षेमः न साधुः** क्षेम इति द्वितीयार्थे प्रथमा । क्षेममिव च साधुः । यो हि साधुः न तस्य कुतश्चिद् अक्षेममस्ति । **क्रतुर्न भद्रः** क्रतुरितीयमपि द्वितीयार्थे एव प्रथमा । विज्ञानमिव च भद्रः पुरुषः । अथवा क्षेमः क्रतुरिति स्वार्थ एव प्रथमा । क्षेमकरस्तु क्षेम उच्यते । नकारस्तु पुरस्तादुपचारोऽप्युपमार्थीयः साधुरित्येतेन सम्बध्यते । साधुरिव क्षेमकरोऽग्निः, विज्ञानमिव भद्र इत्यर्थः । किञ्च **भुवत् स्वाधीः** स्वाध्यानः कल्याणचित्तोऽग्निः । को भवति । उच्यते । **होता** च **हव्यवाट्** च सर्वयजमानानाम् ।। १ ।।

**वेङ्कटमाधव–** काष्ठेषु जायमानः **मर्तेषु** सखा **वृणीते** क्षिप्रकारिणं यजमानम् राजेव अजरं मित्रम् । **क्षेमः** इव **साधुः**, कर्मेव भजनीयः भवति सुकर्मा **होता हव्यवाट्** ।। १,२ ।।

**मुद्गल–** 'वनेषु' इति द्वैपदं दशर्चम् । अध्ययनतः पञ्चर्चं तृतीयं सूक्तम् । पराशर ऋषिः । विराट् छन्दः । अग्निर्देवता ।।

**वनेषु जायुः** अरण्येषु जायमानः । **मर्तेषु** मनुष्येषु **मित्रः** सखा सोऽयमग्निः **श्रुष्टिम्** शु आशु अश्नुते कर्माणि व्याप्नोतीति श्रुष्टिर्यजमानः । क्षिप्रेण कर्मणामनुष्ठातेत्यर्थः । एवम्भूतं यजमानम्, **वृणीते** सम्भजते । अनेन प्रत्तं हविः स्वीकृत्य रक्षतीति भावः । दृष्टान्तः- **राजेव अजुर्यम्** अजुर्यं जरारहितं दृढाङ्गं सर्वकार्येषु शक्तमित्यर्थः । एवम्भूतं पुरुषं यथा राजा वृणीते तद्वत् । **क्षेमः न** रक्षक इव **साधुः** साधयिता **क्रतुर्न** क्रतुः कर्मणां कर्ता स इव **भद्रः** भजनीयः **होता** देवानामाह्वाता **हव्यवाट्** हव्यवाहनो नाम देवानामग्निः । एवम्भूतोऽग्निः **स्वाधीः** शोभन कर्मा **भुवत्** भवतु ।। १,२ ।।

**सायण– वनेषु जायुः** अरण्येषु जायमानः **मर्तेषु** मनुष्येषु **मित्रः** सखा सोऽयमग्निः **श्रुष्टिम्,** शु आशु अश्नुते कर्माणि व्याप्नोतीति श्रुष्टिर्यजमानः। क्षिप्रेण कर्मणामनुष्ठातेत्यर्थः । तथा च यास्कः- 'श्रुष्टीति क्षिप्रनामा शु अष्टीति' (निरु.६.१२) । एवम्भूतं यजमानं **वृणीते** सम्भजते । अनेन प्रत्तं हविः स्वीकृत्य रक्षतीति भावः । तत्र दृष्टान्तः । **राजेव अजुर्यम्** अजुर्यं जरारहितं दृढाङ्गं सर्वकार्येषु शक्तमित्यर्थः । एवम्भूतं पुरुषं यथा राजा वृणीते तद्वत् । **क्षेमो न** रक्षक इव **साधुः** साधयिता **क्रतुर्न** क्रतुः कर्मणां कर्ता । स इव **भद्रः** भजनीयः कल्याणो वा । **होता**

देवानामाह्वाता । **हव्यवाट्** हव्यवाहनो नाम देवानामग्निः । तथा चाम्नायते- 'त्रयो वा अग्नयो हव्यवाहनो देवानां कव्यवाहनः पितॄणां सहरक्षा असुराणाम् । (तै.सं.२.५.८.६) इति । एवम्भूतोऽग्निः **स्वाधीः** शोभनकर्मा शोभनाध्यानः वा **भुवत्** भवतु । **जायुः** । 'जि जये' । 'कृवापाजि' इति उण् । **अजुर्यम्** । 'जॄष् वयोहानौ' । भावे ण्यत् । वृद्धौ कृतायाम् आकारस्य व्यत्ययेन उकारः । जुर्यं जरा नास्त्यस्येति बहुव्रीहौ 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । **भुवत्** । भवतेर्लेटि अडागमः । 'बहुलं छन्दसि' इति विकरणस्य लुक् । 'भूसुवोस्तिङि' इति गुणप्रतिषेधः ।। १,२ ।।

**सिद्धाञ्जनम्–** 'वनेषु' इति द्वैपदं दशर्चं अध्ययनतः पञ्चर्चं तृतीयं सूक्तं पराशरस्यार्षमाग्नेयम् । 'वनेषु' इत्यनुक्रान्तम् । विनियोगो लैङ्गिकः ।।

**वनेषु जायुः** जेता । **मर्तेषु** मनुष्येषु **मित्रः** सुहृत् । **राजा इव** यथा नृपतिः, **अजुर्यम्** जरावर्जितं सचिवं **वृणीते** सम्भजते मन्त्राय, तथाऽयम् अग्निः **श्रुष्टिम्** श्रवणं दिव्यं आवेशलभ्यं अन्तर्वा श्रवणं वृणीते । **साधुः** साधयिता सिद्धं वा **क्षेमो न** कल्याणमिव भवति । **स्वाधीः** शोभनाध्यानपरः **भद्रः क्रतुर्न** शुभः क्रियाध्यवसाय इव भवति । **होता** आह्वाता देवानाम् । **हव्यवाट्** हव्यानाम् अस्माभिरर्प्यमाणानां वोढा **भुवत्** लडर्थे लेट् । **जायुः**- 'कृवापाजी' इत्युण् । **अजुर्यम्**-'जॄष् वयोहानौ' जरा नास्त्यस्येति बहुव्रीहिः । **भुवत्**- भवतेर्लेट् ।। १,२ ।।

## ऋक्संहिता पदपाठसहिता

**हस्ते दधानो नृम्णा विश्वान्यमे देवान्धाद्गुहा निषीदन् ।**
**विदन्तीमत्र नरो धियंधा हृदा यत्तष्टान्मन्त्राँ अशंसन् ।। ३,४ ।।**
हस्ते । दधानः । नृम्णा । विश्वानि । अमे । देवान् । धात् । गुहा । निऽसीदन् । विदन्ति । ईम् । अत्र । नरः । धियम्ऽधाः । हृदा । यत् । तष्टान् । मन्त्रान् । अशंसन् ।।

**स्कन्द– हस्ते दधानः नृम्णा** 'नृम्णम्' (निघ.२,१०) इति धननाम । हविर्लक्षणानि धनानि **विश्वानि** । गृहीतसर्वहविष्कस्सन्नित्यर्थः । **अमे** भये **देवान् धात्** निदधाति । अदृश्यमानत्वाद् भयं देवानामुत्पादयतीत्यर्थः । किं कुर्वन् । उच्यते । रक्षोऽसुरपचनार्थम् **गुहा** गूढं प्रच्छन्नम् **निषीदन्** सदिरत्र गत्यर्थः । नियमेन गच्छन् । **विदन्ति ईम् अत्र नरः** ईम्शब्दः

एनमित्यस्यार्थे । मनुष्यास्तु विदन्त्येनमत्राव्यवस्थया वर्तमानम् । कीदृशाः । **धियन्धाः** यागकर्मणः प्रज्ञाया वा धारयितारः । यष्टारः प्रज्ञावन्तो वेत्यर्थः । कतमे । उच्यते । **हृदा यत्** ये **तष्टान्** कृतान् । मनसा सङ्कल्पितानित्यर्थः । **मन्त्रान्** अग्निस्तुतिरूपान् **अशंसन्** शंसतिरत्र सामर्थ्या-दुच्चारणार्थः । अथवा शंसतिः स्तुत्यर्थ एव । **तष्टान् मन्त्रानिति** तृतीयास्थाने द्वितीया । ये हृदयेन सङ्कल्पितैः मन्त्रैः स्तुवन्तीत्यर्थः ।। ३,४ ।।

**वेङ्कटमाधव– हस्ते** धारयन् सर्वाण्येव धनानि देवैर्निहितानि भये **देवान् धात्** गुहायाम् **निषीदन् । विदन्ति** एनम् **अत्र** देवाः कर्मणो धातारः, हृदयेन यदा कृतान् मन्त्रान् अशंसन् ।।

**मुद्गल– विश्वानि** सर्वाणि **नृम्णा** नृम्णानि हविर्लक्षणानि धनानि **हस्ते** स्वकीये बाहौ **दधानः** धारयन् अयम् अग्निः । **गुहा** गुहायाम् अप्सु मध्ये **निषीदन्** निगूढो वर्तमानः सन् **अमे** भये **देवान्, धात्** अस्थापयत् । अग्नौ हविर्भिः सह पलायिते सति सर्वे देवा अभैषुरित्यर्थः । **नरः** नेतारः **धियंधाः** कर्मणां धारयितारो देवाः । **अत्र** अस्मिन् काले **ईम्** एनम् अग्निम् **विदन्ति** जानन्ति । **यत्** यदा **हृदा** हृदयावस्थितया बुद्ध्या **तष्टान्** निर्मितान् अग्निस्तुतिपरान् **मन्त्रान्, अशंसन्** अस्तुवन्, अवोचन्नित्यर्थः ।। ३,४ ।।

**सायण– विश्वानि** सर्वाणि **नृम्णा** नृम्णानि हविर्लक्षणानि धनानि **हस्ते** स्वकीये बाहौ **दधानः** धारयन्नयमग्निः **गुहा** गुहायाम्, अप्सु मध्ये, अश्वत्थादौ वा संवृतप्रदेशे **निषीदन्** निगूढो वर्तमानः सन् **अमे** भये **देवान्, धात्** अस्थापयत् । अग्नौ हविर्भिः सह पलायिते सति सर्वे देवा अभैषुरित्यर्थः । **नरः** नेतारः **धियन्धाः** कर्मणां बुद्धीनां वा धारयितारो देवाः **अत्र** अस्मिन् काले **ईम्** एनमग्निं **विदन्ति** जानन्ति । **यत्** यदा **हृदा** हृदयावस्थितया बुद्ध्या **तष्टान्** निर्मितान् अग्निस्तुतिपरान् मन्त्रान् **अशंसन्** अस्तुवन् अवोचन्नित्यर्थः ।। **निषीदन्** । 'सदिरप्रतेः' इति षत्वम् । **विदन्ति** । 'विद ज्ञाने' । अदादित्वाच्छपो लुक् । प्रत्ययस्वरः । **धियन्धाः** । 'आतोऽनुपसर्गे कः' इति कः । 'तत्पुरुषे कृति बहुलम्' इति बहुलवचनात् द्वितीयाया अपि अलुक् । **तष्टान्** । 'तक्षू त्वक्षु तनूकरणे' । निष्ठा । 'यस्य विभाषा' इति इट्प्रतिषेधः । 'स्कोः संयोगाद्योः' इति कलोपः ।। ३,४ ।।

**सिद्धाञ्जनम्– विश्वानि** सर्वाणि **नृम्णा** बलानि **हस्ते** स्वकीये बाहौ **दधानः** धारयमाणः **गुहा** गुहायां अन्तरे गूढे स्थाने **निषीदन्** निषण्णः उपविष्टः अग्निः **अमे** स्वीये बले **देवान्,**

**धात्** सर्वान् देवान् धत्ते धारयति । अन्तर्गुहायां निविष्टस्य सर्वदेवबलभृतोऽग्नेर्बलं सर्वदेवधारकमित्युक्तम् । तथाभूतेऽस्मिन्नग्नौ मनुष्यः हार्दवाग्भिर्मन्त्राख्याभिः व्याहृते स्तुते सति, अयं विदितो लब्धो भवति नृणामित्युत्तरार्धेनाह । **अत्र** गुहायां **धियन्धाः** धीवृत्तीनां धारयितारः **नरः** नेतारो मनुष्याः **ईम्** एनम् अग्निं **विदन्ति** जानन्ति, अधिगच्छन्ति । **यत्** यदा **हृदा** हृदयेन **तष्टान्** तक्षकर्मणा निष्पादितान् **मन्त्रान्** नित्यवाक्परिणामान् वेदमन्त्रवर्णान् **अशंसन्** अवोचन् । अत्र मन्त्रदृष्टिरहस्यं सूचितं अवधेयम्, तथा अग्नेरस्मदन्तर्निगूढवासः सर्वदेववलभर्तृत्वं च ।। **धियन्धाः** द्वितीयाया अलुक् । तत्पुरुषे कृति बहुलवचनात्, 'आतोऽनुपसर्गे' इति कः । **तष्टान्** 'तक्षु त्वक्षू तनूकरणे, निष्ठा ।। ३,४ ।।

## ऋक्संहिता पदपाठसहिता

**अजो न क्षां दाधार पृथिवीं तस्तम्भ द्यां मन्त्रेभिः सत्यैः ।**
**प्रिया पदानि पश्वो नि पाहि विश्वायुरग्ने गुहा गुहं गाः ।। ५,६ ।।**
**अजः । न । क्षाम् । दाधार । पृथिवीम् । तस्तम्भ । द्याम् । मन्त्रेभिः । सत्यैः । प्रिया । पदानि । पश्वः । नि पाहि । विश्वऽआयुः । अग्ने । गुहा । गुहम् । गाः ।। ५,६ ।।**

**स्कन्द–** अजातत्वात् **अजः** प्रजापतिः । स यथा तद्वदग्निः **क्षाम्** पृथिवीम् **दाधार** धारयति । न च केवलाम् । किं तर्हि **पृथिवीम्** अपि । अन्तरिक्षनामैतत् (तु.निघ.१,३) । अन्तरिक्षञ्च । **तस्तम्भ द्याम्** स्तभ्नातिः प्रतिबन्धार्थः । दिवञ्च प्रतिबध्नाति । केन । उच्यते । **मन्त्रेभिः सत्यैः** । होतृत्वादग्निः सत्यैर्मन्त्रैः यागाख्ये धर्मे देवताः स्तुवन् धर्मायत्तस्थितीन् त्रीनपि लोकान् प्रजापतिरिव धारयतीत्यर्थः । परोऽर्धर्चः प्रत्यक्षकृतत्वाद्भिन्नं वाक्यम् । इह परत्र च लोके प्रियाणि **पदानि** स्थानानि **पश्वः** पशुसदृशस्य मम **नि पाहि** नियमेन रक्ष । अथवा **पश्वः** इति दृशेरिदं रूपं द्वितीयाबहुवचनान्तम् । यानि तव प्रियाणि पदानि तानि पश्यतो जानत अस्मान् रक्षेत्यर्थः । किञ्च **विश्वायुः** सर्वान्नः, गृहीतास्मदीयहविष्कः सन्नित्यर्थः । **गुहा गुहम् गाः** रक्षोऽसुरपचनार्थं गूढात् गूढतरं गच्छ । अत्यन्तगूढं गच्छेत्यर्थः ।। ५,६ ।।

**वेङ्कटमाधव–** सूर्य इव भूमिम् अन्तरिक्षञ्च धारयति, द्याम् च **तस्तम्भ** मन्त्रैः **सत्यैः** स्तूयमानः । स त्वम् अग्ने! अस्माकं पशोः प्रियाणि **पदानि** नितरां रक्ष । सर्वान्नस्त्वम् अग्ने! गुहाया अपि गूढप्रदेशं गतवानसि ।। ५,६ ।।

**मुद्गल– अजो न** । अजति गच्छतीति अजः सूर्यः । स इव **क्षाम्** भूमिम् **दाधार** अयमग्निः प्रकाशकत्वेन धारयति । **पृथिवीम्** अन्तरिक्षञ्च धारयति । **द्याम्** द्युलोकम् **सत्यैः** अवितथार्थैः मन्त्रैः **तस्तम्भ** स्तभ्नाति । यथाऽधो न पतति उपर्येव तिष्ठति तथा करोतीत्यर्थः । हे अग्ने! **विश्वायुः** विश्वं सर्वम् आयुरन्नं यस्य स त्वम्, **पश्वः** पशोः **प्रिया** प्रियाणि **पदानि** शोभन-तृणोदकोपेतानि स्थानानि **नि पाहि** नितरां पालय । मा धाक्षीरित्यर्थः । तर्हि कुत्र निवसामीति चेत्, तत्राह– **गुहा** गुहाया अपि **गुहम्** गवां सञ्चारायोग्यस्थानं **गाः** गच्छ । तत्रैव निवसेत्यर्थः ।।

**सायण– अजो न** । अजति गच्छतीत्यजः सूर्यः । यद्वा । न जायते इत्यजः । जन्मरहित इत्यर्थः। स इव । क्षा इति पृथिवीनाम । **क्षाम्** भूमिं **दाधार** अयमग्निः प्रकाशकत्वेन धारयति । पृथिवीत्यन्तरिक्षनाम । **पृथिवीम्** अन्तरिक्षं च धारयतीत्येव । **द्यां** द्युलोकं **सत्यैः** अवितथार्थैः **मन्त्रेभिः** मन्त्रैः **तस्तम्भ** स्तभ्नाति । यथाऽधो न पतति उपर्येव तिष्ठति तथा करोतीत्यर्थः । मन्त्रैर्दिवो धारणं तैत्तिरीये समाम्नातं- 'देवा वा आदित्यस्य सुवर्गस्य लोकस्य पराचोऽतिपादा-दबिभयुः । तं छन्दोभिरदृंहन्धृत्यै (तै.ब्रा.१,२.४.२) इति । यद्वा । सत्यैर्मन्त्रैः स्तूयमानोऽग्निर्द्यां तस्तम्भेति । हे अग्ने! **विश्वायुः** विश्वं सर्वमायुरन्नं यस्य स त्वं **पश्वः** पशोः **प्रिया** प्रियाणि **पदानि** शोभनतृणोदकोपेतानि स्थानानि **नि पाहि** नितरां पालय मा धाक्षीरित्यर्थः । तर्हि कुत्र निवसामीति चेत् तत्राह– **गुहा** गुहाया अपि **गुहं** गुहां गवां संचारायोग्यस्थानं **गाः** गच्छ तत्रैव निवसेत्यर्थः ।। **पश्वः** । 'जसादिषु च्छन्दसि वा वचनम्' इति 'घेर्ङिति' इति गुणाभावे यणादेशः । 'उदात्तयणः' इति विभक्तेरुदात्तत्वम् । **गुहा** । 'सुपां सुलुक्' इति पञ्चम्या आजा-देशः । चित्त्वादन्तोदात्तत्वम् । **गुहम्** । व्यत्ययेन ह्रस्वत्वम् । **गाः** । छान्दसो लुङ् । 'इणो गा लुङि' इति गादेशः ।। ५,६ ।।

**सिद्धाञ्जनम्– अजो न** जन्मरहितः स्वयम्भूरिव, सः **पृथिवीम्** पृथुलां विस्तीर्णां **क्षाम्** भूमिं **दाधार** धारयति, **सत्यैः** सत्यसम्बन्धिभिः सत्यपूर्णैः सत्याविष्कारकैरिति यावत् **मन्त्रेभिः** नित्यवाग्भेदैः **द्याम्** द्युलोकं **तस्तम्भ** उत्तम्भितवान् । स्तम्भनेन दृढं बिभर्ति । अत्र द्यावापृथिव्योः स्तम्भनधारणे अग्निना निरूढे । ब्रह्माण्डे पिण्डाण्डे वा रोदस्योः पूर्वमेव वर्तमानयोरपि, तल्लक्षित-चित्कक्ष्याद्वयस्य स्तम्भनं धारणं च रहोयागरते मनुष्ये साधयितव्ये । इदमेवेह अग्निकृत्यमुक्तम् । अथ ऋषिरग्निं प्रार्थयते- हे भगवन्! **पश्वः** दर्शनात्मकपशुपद वेदनीयाया गोः **प्रिया** प्रियाणि

अस्माभिर्लालितानि पदानि पादन्यासलक्ष्माणि **नि पाहि** नितरां रक्ष । पदेषु रक्षितेषु तैर्मार्गसूचकैर्लक्षणैरन्तर्दृष्टिं लब्ध्वा **गुहा** अग्निवासभूः सुप्रवेशा भवतीति इयं प्रार्थना । 'पश्वा न तायुम्' इति प्रथमसूक्तर्चि यद्रहस्यं कथितं तदपेक्षया इदं च स्पष्टतरं भवति । हे अग्ने, त्वं **विश्वायुः** सर्वमप्यायुः, विश्वस्य एकमायुस्त्वमसीति वा । **गुहा** गुहायां **गुहम्** यद्रहस्यं वर्तते तद् **गाः** गच्छ प्रविश ।। **पश्वः**-'जसादिषु छन्दसि 'घेर्ङिति' इति गुणाभावे यणादेशः । **गाः**- छान्दसो लुङ् ।। ५,६ ।।

## ऋक्संहिता पदपाठसहिता

**य ईं चिकेत गुहा भवन्तमा यः ससाद धारामृतस्य ।**
**वि ये चृतन्त्यृता सपन्त आदिद्वसूनि प्र ववाचास्मै ।। ७,८ ।।**
**यः । ईम् । चिकेत । गुहा । भवन्तम् । आ । यः । ससाद । धाराम् । ऋतस्य ।**
**वि । ये । चृतन्ति । ऋता । सपन्तः । आत् । इत् । वसूनि । प्र । ववाच । अस्मै ।।**

**स्कन्द– यः** एनम् अग्निम् **चिकेत** जानाति **गुहा भवन्तम्** हविर्गृहीत्वा गूढं भवन्तम् । **यः** च **आ ससाद** आसीदति, करोतीत्यर्थः । **धाराम्** स्तुतिलक्षणां वाचम् । **ऋतस्य** गतस्य सतः । परोक्षस्यापीत्यर्थः । **ये वि चृतन्ति–** 'चृती हिंसाग्रन्थनयोः' विविधं सूक्ताध्यायादिलक्षणान् स्तुतिग्रन्थानेव कुर्वन्ति । **ऋता** ऋतं सत्यं गतवन्तम् अग्निम् । **सपन्त** सपतिरर्चतिकर्मा (तु.निघ.३१४) । स्तुवन्तः । आत् इत् उभावप्येतौ पदपूरणौ । **वसूनि प्र ववाच** युष्मभ्यमेतानि धनानीत्येवं प्रकर्षेण ब्रवीति । ददातीत्यर्थः । **अस्मै** बहुवचनस्य स्थाने इदमेकवचनम् । एभ्यः सर्वेभ्यो निर्दिष्टेभ्यः ।। ७,८ ।।

**वेङ्कटमाधव–** य एनं जानाति गुहायां भवन्तम् । यश्च **आ ससाद** सत्यभूतस्याग्नेः मार्गम् । **ये च वि चृतन्ति** मार्गस्थितानि तिरोधानानि सत्यानि स्पृशन्तः । अनन्तरमेव अस्मै हस्तस्यानि वसूनि अग्निः प्र उवाच इति ।। ७,८ ।।

**मुद्गल– यः** पुमान् **ईम्** एनम् । **गुहा भवन्तम्** गुहायां सन्तम् अग्निम् । **चिकेत** जानाति । **यः** च **ऋतस्य** सत्यस्य **धाराम्** धारयितारमेनम् अग्निम् । **आ ससाद** आसीदति । उपास्त इत्यर्थः । ये च **ऋता** ऋतानि सत्यानि **सपन्तः** समवयन्तः पुरुषाः एतम् अग्निम् **वि चृतन्ति**

अग्निमुद्दिश्य स्तुतिं कुर्वन्तीत्यर्थः । **आत् इत्** स्तुत्यनन्तरमेव **अस्मै** सर्वस्मै स्तोतृजनाय **वसूनि** धनानि **प्र ववाच** प्रकथयति ।। ७,८ ।।

**सायण– यः** पुमान् **ईम्** एनं **गुहा भवन्तं** गुहायां सन्तम् अग्निं **चिकेत** जानाति । **यः** च **ऋतस्य** सत्यस्य यज्ञस्य वा **धारां** धारयितारमेनम् अग्निम् । **आ ससाद** आसीदति उपास्ते इत्यर्थः । **ये** च **ऋता** ऋतानि सत्यानि यज्ञान् वा **सपन्तः** समवयन्तः स्पृशन्तो वा पुरुषा एतम् अग्निं **वि चृतन्ति** अग्निमुद्दिश्य स्तुतीर्ग्रथ्नन्ति, कुर्वन्तीत्यर्थः । **आदित्** स्तुत्यनन्तरमेव **अस्मै** सर्वस्मै स्तोतृजनाय **वसूनि** धनानि **प्र ववाच** प्रकथयति ।। **चिकेत** । 'कित ज्ञाने' लिटि णलि लित्स्वरः । **चृतन्ति** । 'चुती हिंसाग्रन्थनयोः' । तौदादिकः । लसार्वधातुकानुदात्तत्वे विकरणस्वरः शिष्यते । **ववाच** । लिटि 'ब्रुवो वचिः' । 'लिट्यभ्यासस्योभयेषाम्' (पा.सू.६.१. १७) इति अभ्यासस्य संप्रसारणम् । 'संप्रसारणाच्च' इति परपूर्वत्वस्य 'वा छन्दसि' (पा.सू.६.१. १०६) इति विकल्पनाद् यणादेशः ।। ७,८ ।।

**सिद्धाञ्जनम्– यः** यः पुरुषः । **ईम्** एनं **गुहा** गुहायां **भवन्तम्** वर्तमानं **चिकेत** जानाति, साक्षात् पश्यति, **यः** यश्च **ऋतस्य** सत्यस्य **धाराम्** प्रवहन्तीं प्रवृत्तिं **आ ससाद** प्राप्तवान् भवति, **ये** ये च पुरुषाः **ऋता** सत्यानि **सपन्तः** स्पृशन्तः, **वि चृतन्ति** तम् अग्निम् इद्धं कुर्वन्ति, **आत् इत्** अनन्तरमेव **अस्मै** तादृशे जनाय **वसूनि** रहस्यानि **धनानि** दिव्यसम्पद्धरां वाचमित्यर्थः **प्रववाच** प्रब्रवीति, प्रकाशयतीत्यर्थः । भगवतोऽग्नेः भक्तस्यान्तर्यामिनश्च आत्यन्तिकसम्बन्धसम्पादनसाधनं रहस्यमुपदिष्टम् ।। **चृतन्ति** 'चृती हिंसाग्रथनयोः' तुदादिः, दीप्त्यर्थेऽपि वर्तते, अन्तर्भावितण्यर्थः सामर्थ्यात् । **ववाच**-छान्दसः, उवाच ।। ७,८ ।।

## ऋक्संहिता पदपाठसहिता

**वि यो वीरुत्सु रोधन्महित्वोत प्रजा उत प्रसूष्वन्तः ।**
**चित्तिरपां दमे विश्वायुः सद्मेव धीराः । संमाय चक्रुः ।। ९,१० ।।**
वि । यः । वीरुत्ऽसु । रोधत् । महिऽत्वा । उत । प्रऽजाः । उत । प्रऽसूषु । अन्तरिति ।
चित्तिः । अपाम् । दमे । विश्वऽआयुः । सद्मऽइव । धीराः । सम्ऽमाय चक्रुः ।।९,१०।।

**स्कन्द– यः** अग्निः **वीरुत्सु** वीरुधः ओषधयः तासु । **वि रोधत्** रुहेरयं हकारस्य छान्दसो

धकारः । विविधमारोहति । **महित्वा** स्वेन महिम्ना । **उत प्रजाः** प्रजायन्त इति प्रजाः । सप्तम्यर्थे चैषा प्रथमा । प्रजायमानासु । **उत प्रसूषु** प्रसूतासु । क प्रदेशे आरोहति । उच्यते । **अन्तः** मध्येऽपि, न बहिरेव केवलम् । यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः । सः **चित्तिः** ज्ञाता **अपाम्** वृष्टिलक्षणानाम् । अथवा 'आपः' (निघ.१,३) इत्यन्तरिक्षनाम । साहचर्यात् त्रयोऽपि लोकाः अप्शब्देनोच्यन्ते । त्रयाणामपि लोकानामित्यर्थः । **दमे** यज्ञगृहे । साकाङ्क्षत्वाद्धोतृत्वेन निषीदति स्तूयते वेति वाक्यशेषः । **विश्वायुः** सर्वान्नः । यत् कीदृशं यज्ञगृहम् । उच्यते । **सद्मेव** गृहनामैतत् । एकवाक्यताप्रसिद्ध्यर्थश्च यत्तच्छब्दावध्याहर्तव्यौ । यल्लौकिकमिव गृहं **धीराः** प्रज्ञावन्तः **सम्माय** सम्यक् मित्वा **चक्रुः** कृतवन्तस्तत्र ।। ९,१० ।।

**वेङ्कटमाधव– यः** अग्निः **वीरुत्सु** अन्तः माहात्म्येन रसम् अरुणत्, अपि च प्रजाः पुष्पफलादिरूपाः ओषधीषु अन्तः । एक उतशब्दः पादपूरणः । सोऽयमन्तरिक्षे **अपाम्** चेतयिता गृहे च सर्वान्नः । तमिमं निलीनमानीय गृहमिवोत्तरवेदिं **सम्यक्** मित्वा तत्र चक्रुः इति ।।९,१०।।

**मुद्गल– यः** अग्निः **वीरुत्सु** ओषधीषु **महित्वा** यानि महत्वानि सन्ति तानि **वि रोधत्** विरुणद्धि विशेषेण विवृणोति नावशेषयति । **उत** अपि च प्रजाः प्रकर्षेणोत्पन्नाः पुष्पफलादिलक्षणाः **प्रसूषु** उत्पादयित्रीषु मातृस्थानीयास्वोषधीषु **अन्तः** मध्ये विरुणद्धीत्येव । द्वितीय उतशब्दः पादपूरणः । तथा **चित्तिः** चेतयिता **अपां दमे** जलानां मध्यभूते गृहे **विश्वायुः** सर्वान्नो, योऽग्निर्वर्तत इति शेषः । तमग्निं **धीराः** मेधाविनः **सम्माय** सम्माननं पूजनं कृत्वा । स्तुतिभिः स्तुत्वेत्यर्थः । **चक्रुः** कर्माणि कुर्वन्ति । दृष्टान्तः । **सद्म इव** यथा सदनं गृहं प्रथमतः सम्पूज्य पश्चात्तत्र कर्माण्याचरन्ति तद्वत् ।। ९,१० ।।

**सायण– यः** अग्निः **वीरुत्सु** ओषधीषु **महित्वा** यानि महत्त्वानि सन्ति तानि **वि रोधत्** विरुणद्धि, विशेषणावृणोति नावशेषयति । **उत** अपि **च प्रजाः** प्रकर्षेणोत्पन्नाः पुष्पफलादिलक्षणाः **प्रसूषु** उत्पादयित्रीषु मातृस्थानीयास्वोषधीषु **अन्तः** मध्ये विरुणद्धीत्येव । द्वितीयः उतशब्दः पादपूरणः । तथा **चित्तिः** चेतयिता ज्ञापयिता **अपां दमे** जलानां मध्यभूते गृहे **विश्वायुः** सर्वान्नो योऽग्निर्वर्तते इति शेषः । तमग्निं **धीराः** मेधाविनः **सम्माय** सम्माननं पूजनं कृत्वा । स्तुतिभिः स्तुत्वेत्यर्थः । **चक्रुः** कर्माणि कुर्वन्ति । तत्र दृष्टान्तः । **सद्मेव** । यथा सदनं गृहं प्रथमतः सम्पूज्य पश्चात्तत्र कर्माण्याचरन्ति तद्वत् ।। **वीरुत्सु** । विपूर्वात् रोहतेः क्विप् । न्यङ्क्वादिषु

'वीरुध्' (पा.सू.७.३.५३. ग.) इति पठितत्वादुपसर्गस्य दीर्घो धकारश्चान्तादेशः । उक्तं च– 'वीरुध ओषधयो भवन्ति' (निरु.६.३) । **रोधत्** । 'रुधिर् आवरणे' । लेटि अडागमः । 'इतश्च लोपः' इति इकारलोपः । **सम्माय** । 'माङ् माने शब्दे च'। 'समासेऽनञ्पूर्वे क्त्वो ल्यप्' (पा.सू.७.१.३७) । 'न ल्यपि' (पा.सू.६.४.६९) इति ईत्वप्रतिषेधः ।। ९,१० ।।

**सिद्धाञ्जनम्–** यः अग्निः **वीरुत्सु** महीरुहेषु वनतरुलतादिषु **महित्वा** स्वीयानि महत्त्वानि **वि रोधत्** विशेषेण रुणद्धि, नावशेषयति, पुरस्तादाविष्काराय बिभर्तीत्यर्थः, **उत** अपि च **प्रजाः** जातानि **प्रसूषु** प्रसवित्रीषु **अन्तः** अन्तरे या निवर्तन्ते तान्यपि बिभर्तीति शेषः । पूर्वं 'यमो ह जातः' इत्यत्र स एव 'जातः जनित्वं च' इत्युक्तम् । अधुना 'जातं जनित्वं' च स स्वमहिम्ना बिभर्तीत्युच्यते । द्वितीय उतशब्दः पदपूरणः । सः **अपाम्** (सङ्केतः) **दमे** गृहे **चित्तिः** चित् प्रज्ञा भवति । स **विश्वायुः** विश्वस्यैकमायुः विश्वमायुः, स एव वा । तं **धीराः** मेधाविनः ऋषयः **सद्मेव** गृहमिव **सम्माय** सम्यङ्मात्वा यथायोग्यपरिच्छेदानुरोधेन **चक्रुः** कुर्वन्ति, निर्मान्ति । यथा गृहनिर्माणे यथास्थानं मानेन परिच्छेदान् निर्णीय गृहं निर्मिमते, तथा अग्निं आत्मनि निर्मान्ति धीराः ।। **वीरुत्सु**-विपूर्वाद्रोहतेः क्विप्, उपसर्गस्य दीर्घः, धकारश्चान्तादेशः । **रोधत्**-'रुधिर् आवरणे' लेट् । **सम्माय**-'माङ् माने' ल्यप् ।। ९,१० ।।

।। इति प्रथमाष्टके पञ्चमाध्याये एकादशो वर्गः ।।

## ।। अथ द्वादशो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

(सूक्तम् ६८)

१० पराशरः । शाक्त्यः । अग्निः । द्विपदा विराट् ।

**श्रीणन्नुप॑ स्थाद्दिवं॑ भुर॒ण्युः स्था॒तुश्च॒रथ॑म॒क्तून्व्यू॑र्णोत् ।**
**परि॒ यदे॑षा॒मेको॒ विश्वे॑षां॒ भुव॑द्दे॒वो दे॒वानां॑ महि॒त्वा ।। १,२ ।।**

श्री॒णन् । उप॑ । स्था॒त् । दिव॑म् । भु॒र॒ण्युः । स्था॒तुः । च॒रथ॑म् । अ॒क्तून् । वि । ऊ॒र्णो॒त् । परि॑ । यत् । ए॒षा॒म् । एकः॑ । विश्वे॑षाम् । भुव॑त् । दे॒वः । दे॒वाना॑म् । म॒हि॒ऽत्वा ।।१,२।।

**स्कन्द– श्रीणन्** 'श्रीञ् पाके' अन्यत्र । इह सामर्थ्याद्दाहार्थः । दावरूपोऽग्निः

तृणौषधिवनस्पतीन् दहन् **उप स्थाद्दिवम्** दिवमुपतिष्ठति । दिवं स्पृशतीत्यर्थः । **भुरण्युः** भुरण्यतेर्गतिकर्मण इदं क्षिप्रनाम (तु.निघ.२,१५) । क्षिप्रगामी । किञ्च **स्थातुः** स्थातृ, **चरथम्** गन्तृ च । स्थावरं जङ्गमं चेत्यर्थः । **अक्तून्** रात्रिनामैतत् (तु.निघ.१,७) । रात्रीश्च । **वि ऊर्णोत्** प्रकाशयति । कृत्स्नं स्थावरं जङ्गमञ्च प्रकाशयत्यग्निः, रात्रीश्च तमोरूपास्सतीः स्वेन ज्योतिषा प्रकाशरूपाः करोतीत्यर्थः । अथवा अक्तूनिति सप्तम्यर्थे द्वितीया । स्थावरं जङ्गमं रात्रिषु प्रकशायतीत्यर्थः । कीदृशः । उच्यते । **परि यत्** परीत्युपसर्गश्रुतेर्योग्यक्रियापदाध्याहारः । यदिति व्यत्ययेन नपुंसकता । हविर्नयनादिना परिग्रहीता यः **एकः एषाम् विश्वेषाम् भुवत्** भवति **देवः देवानां महित्वा** स्वेन माहात्म्येन । अथवा परीत्ययं भुवदित्येतेनैव सम्बध्यते । परिपूर्वश्च भवतिः परिग्रहे । 'एषाम्' इत्यादिषु तु द्वितीयार्थे षष्ठी । परिगृह्णाति य एतानिति ।।

**वेङ्कटमाधव–** हविर्भिर्मिश्रयन् उपतिष्ठति द्युलोकं हविषः भर्ता । स्थावरं जङ्गमं च तेजसा तमसः प्रकाशयति रात्रीश्च । परिभवति यदा सर्वान् इमान् देवान् एक एव महत्त्वेन ।।१,२।।

**मुद्गल–** 'श्रीणन्' इति द्वैपदं दशर्चं चतुर्थं सूक्तम् । अध्ययनतः पञ्चर्चम् । पराशर ऋषिः । विराट् छन्दः । अग्निर्देवता ।।

**भुरण्युः** हविषां भर्ता धारयिता पयःप्रभृतिना श्रयणद्रव्येण सोममिव तैः हविर्भिः **श्रीणन्** मिश्रयन् **दिवम् उपस्थात्** उपतिष्ठति, प्राप्नोतीत्यर्थः । **स्थातुः** स्थावराणाम् **चरथम्** जङ्गमं तदुभयात्मकं जगत् **अक्तून्** सर्वा रात्रीश्च **वि ऊर्णोत्** स्वतेजसा विशेषेणाच्छादयति । हविर्वहनं कुर्वन् सर्वमपि जगत् स्वभासा प्रकाशयति स्मेति भावः । **विश्वेषाम् देवानाम्** दानादि-गुणयुक्तानामिन्द्रादीनां मध्ये **देवः** द्योतमानः एकः एवायमग्निः **एषाम्** पूर्वोक्तानां स्थावरादीनाम् **महित्वा** माहात्म्यानि **यत्** यस्मात् **परि भुवत्** परिभवति परितो व्याप्य वर्तते । परिपूर्वो भवतिः परिग्रहार्थः ।। १,२ ।।

**सायण–** **भुरण्युः** हविषां भर्ता धारयिता पयःप्रभृतिना श्रयणद्रव्येण सोममिव तैर्हविर्भिः **श्रीणन्** मिश्रयन् **दिवम् उप स्थात्** उपतिष्ठति प्राप्नोतीत्यर्थः । **स्थातुः** स्थावरं **चरथं** जङ्गमं तदुभयात्मकं जगत्, **अक्तून्** सर्वा रात्रीश्च **व्यूर्णोत्** स्वतेजसा विशेषेणाच्छादयति । हविर्वहनं कुर्वन् सर्वमपि जगत् स्वभासा प्रकाशयति स्मेति भावः । **विश्वेषां** सर्वेषां देवानां दानादिगुणयुक्तानां

इन्द्रादीनां मध्ये **देवः** द्योतमानः **एकः** एव अयम् अग्निः **एषां** पूर्वोक्तानां स्थावरादीनां **महित्वा** महत्त्वानि माहात्म्यानि **यत्** यस्मात् **परि भुवत्** परिभवति परिगृह्णाति परितो व्याप्य वर्तते । परिपूर्वो भवतिः परिग्रहार्थः । यद्वा । एषां विश्वेषां स्थावरादीनां मध्ये वर्तमानोऽयं देवोऽग्निर्देवानां महत्त्वानि यत् यदा परि भुवत् परितो व्याप्नोति, तदानीमिति पूर्वत्रान्वयः ।। **ऊर्णोत्** 'उर्णुञ् आच्छादने' । 'ऊर्णोतेर्विभाषा' (पा.सू.७.२.६) इति वृद्धेर्विकल्पः ।। १,२ ।।

**सिद्धाञ्जनम्–** 'श्रीणन्' इति द्वैपदं दशर्चं चतुर्थं सूक्तम् । तत्राध्ययनतः' पञ्चर्चम् । ऋष्याद्याः पूर्ववत् । विनियोगो लैङ्गिकः ।।

सः **भुरण्युः** भर्ता, यजमानैरर्प्यमाणस्य सर्वस्य वोढा अग्निः, **श्रीणन्** ज्वलन्, **दिवम्** द्युलोकं **उप स्थात्** उपतिष्ठति, प्राप्नोति । **स्थातुः** अचरं **चरथम्** जङ्गमं च **व्यूर्णोत्** विविच्य निराच्छादनानि करोति, तथा **अक्तून्** रात्रीश्च तमोवृताः (अन्तरे अन्धकारदशोपलक्षणमिदम्) निरावरणाः करोति । **यत्** यतः अयम्, **एको देवः एषाम् विश्वेषाम् देवानां, महित्वा** महत्त्वानि **परि भुवत्** परितो व्याप्य वर्तते, आत्मना सर्वदेवमहत्त्वानि आवृणन् ज्वलत्यग्निः ।। **श्रीणन्**– 'श्रीञ् पाके' इति धातोः शतरि रूपं, क्र्यादिः, पकोऽग्निर्ज्वलन् भवति । **ऊर्णोत्**- 'ऊर्णुञ्' आच्छादने, 'ऊर्णोतेर्विभाषा' इति वृद्धेर्विकल्पः ।। १,२ ।।

## ऋक्संहिता पदपाठसहिता

**आदित्ते विश्वे क्रतुं जुषन्त शुष्काद्यद्देव जीवो जनिष्ठाः ।**
**भजन्त विश्वे देवत्वं नाम ऋतं सपन्तो अमृतमेवैः ।। ३,४ ।।**
**आत् । इत् । ते । विश्वे । क्रतुम् । जुषन्त । शुष्कात् । यत् । देव । जीवः । जनिष्ठाः ।**
**भजन्त । विश्वे । देवऽत्वम् । नाम । ऋतम् । सपन्तः । अमृतम् । एवैः ।। ३,४ ।।**

**स्कन्द– आत् इत्** इति पदपूरणौ, अपि चेत्यनयोर्वार्थे । अपि च **ते** तव **विश्वे** सर्वे मनुष्याः देवा वा **क्रतुम्** हविर्नयनादिकर्म प्रज्ञां वा **जुषन्त** सेवन्ते । योऽहं कीदृशः । उच्यते । **शुष्कात्** अपि काष्ठात् **यत्** यः, हे देव! **जीवः जनिष्ठाः** जायसे । सर्वत्र हि कारणधर्मानुविधायि कार्यम् । त्वं तु निर्जीवादपि काष्ठात् स्वमाहात्म्येन जीव एव जायस इत्यर्थः । किञ्च **भजन्त विश्वे** बहवो मनुष्याः । किम् । उच्यते । यदेतद् देवत्वं नाम प्रख्यातम् । बहवो मनुष्याः

देवत्वं प्राप्ता इत्यर्थः । किं कुर्वन्तः । उच्यते । **ऋतं सपन्तः** सत्यं सर्वगतं वा स्तुवन्तः । **अमृतम् एवैः** तैस्तैर्देवत्वप्राप्त्यादिकामैर्युक्ताः ॥ २ ॥

**वेङ्कटमाधव–** अनन्तरमेव तुभ्यं सर्वे कर्म अजुषन्त । **शुष्कात्** काष्ठात् यदा जातस्त्वम् **जीवः** तदा सर्वे च तेन कर्मणा कामानां नामकं देवत्वं च अभजन्त । **ऋतम्** सत्यम् अमृतम् च त्वां गमनैः स्पृशन्तः ॥ ३,४ ॥

**मुद्गल–** हे **देव** द्योतमानाग्ने! **जीवः** जीवन् प्रज्वलन् **शुष्कात्** नीरसात् अरणिरूपात् काष्ठात् **यत्** यदा **जनिष्ठाः** प्रादुर्भवसि मन्थनेनोत्पद्यते । **आत् इत्** अनन्तरमेव **विश्वे** सर्वे यजमानाः **ते** तुभ्यम् **क्रतुम्** कर्म **जुषन्त** सेवन्ते अनुतिष्ठन्ति । तथा अनुष्ठाय च **विश्वे** ते सर्वे **नाम** नामकम् **ऋतम्** अवितथम् **देवत्वं** देवतात्वम् **भजन्त** भजन्ते प्राप्नुवन्ति । किं कुर्वन्तः । **अमृतम्** अमरणं त्वाम्, **एवैः** गन्तृभिः स्तोत्रैः **सपन्तः** समवयन्तः प्राप्नुवन्तः इत्यर्थः॥

**सायण–** हे **देव** द्योतमानाग्ने! **जीवः** जीवन् प्रज्वलन् **शुष्कात्** नीरसात् अरणिरूपात् काष्ठात् **यत्** यदा **जनिष्ठाः** प्रादुर्भवसि मथनेनोत्पद्यसे **आदित्** अनन्तरमेव **विश्वे** सर्वे यजमानाः **ते** तुभ्यं **क्रतुं** कर्म **जुषन्त** सेवन्ते अनुतिष्ठन्ति । तथा अनुष्ठाय च विश्वे ते सर्वे **नाम** नामकम् **ऋतम्** अवितथं **देवत्वं** देवतात्वं **भजन्त** भजन्ते प्राप्नुवन्ति । किं कुर्वन्तः । **अमृतम्** अमरणं त्वाम् **एवैः** त्वां गन्तृभिः स्तोत्रैः **सपन्तः** समवयन्तः प्राप्नुवन्तः इत्यर्थः । जुषन्तेत्यादीनि त्रीण्याख्यातानि 'छन्दसि लुङ्लङ्लिटः' इति वर्तमानार्थानि । **एवैः–** यन्ति स्तोतव्याभिमुख्येन गच्छन्ति इति एवानि स्तोत्राणि । 'इण्शीङ्भ्यां वन्' (उ.सू.१.१५०) ॥ ३,४ ॥

**सिद्धाञ्जनम्– आदित्** अनन्तरमेव तदैवेत्यर्थः । यदेति उत्तरत्र यच्छब्दश्रुतेः । **ते विश्वे** ते सर्वेऽपि पुरुषाः **क्रतुम्** त्वदीयमिच्छाबलात्मकम् अध्यवसायं **जुषन्त** सेवन्ते, **यत्** यदा हे देव, त्वं **शुष्कात्** नीरसाद्वस्तुनः **जीवः** जीवनरसयुक्तः जीवभूतः सन् **जनिष्ठाः** जायसे, नीरसप्राये जडे शरीरे त्वं रसवान् यदा प्रादुर्भवसि, तत्परमेव तवेच्छाम् अनुवर्तन्ते मनुष्याः । अन्यथा स्वेच्छामेवेत्यनुक्तसिद्धम् । तदा **विश्वे** सर्वेऽपि **देवत्वम्** देवभावात्मकं **नाम** नमनसाधनं दिव्यं नामधेयं **भजन्त** प्रीत्या सेवन्ते, तव **एवैः** गमनैः **ऋतम्** सत्यं **अमृतम्** च **सपन्तः** स्पृशन्ति, शत्रन्तोऽपि वर्तमानार्थः ॥ **जुषन्त जनिष्ठाः भजन्त** इत्येतानि वर्तमाने । **एवैः**-'इण्शीङ्भ्यां वन्, यन्ति गच्छन्तीति एवानि, तैः ॥ ३,४ ॥

## ऋक्संहिता पदपाठसहिता

**ऋतस्य प्रेषा ऋतस्य धीतिर्विश्वायुर्विश्वे अपांसि चक्रुः ।**
**यस्तुभ्यं दाशाद्यो वा ते शिक्षात्तस्मै चिकित्वान्रयिं दयस्व ॥ ५,६ ॥**
**ऋतस्य । प्रेषाः । ऋतस्य । धीतिः । विश्वऽआयुः । विश्वे । अपांसि । चक्रुः । यः । तुभ्यम् । दाशात् । यः । वा । ते । शिक्षात् । तस्मै । चिकित्वान् । रयिम् । दयस्व ॥**

**स्कन्द– ऋतस्य** सत्यस्य सर्वगतस्य वा भवतः **प्रेषाः** पाशुकाः सौमिकाश्च प्रैषाः । यावन्तः केचन प्रैषाः ते होतृत्वात् सर्वे तवेत्यर्थः । **ऋतस्य धीतिः** कर्म वा प्रज्ञा वा स्तुतिर्वा धीतिरुच्यते साप्यृतस्य तवैव । कीदृशस्य । उच्यते । **विश्वायुः** षष्ठ्यर्थे प्रथमैषा । विश्वायुषः सर्वान्नस्य । **विश्वे अपांसि चक्रुः** । एकवाक्यताप्रसिद्ध्यर्थं यत्तच्छब्दावध्याहर्तव्यौ । यान्यपि सर्वे मनुष्याः यागादिकर्माणि कुर्वन्ति तान्यपि तवैव । ईदृशाय **यः तुभ्यम् दाशात्** हविर्ददाति **यः वा ते शिक्षात्** दानकर्माऽयं सन्नन्तस्य चार्थे द्रष्टव्यः । **तस्मै चिकित्वान् जानन्** भक्त्या **रयिं दयस्व** धनं देहि ॥ ५,६ ॥

**वेङ्कटमाधव–** अग्नेरेव 'होता यक्षत्' (खि.५,७,१, १-१२) इत्यादिकाः प्रेषाः । **ऋतस्य** एव कर्म स सर्वहविष्कः । **विश्वे** च तस्मै कर्माणि कुर्वन्ति । **यः तुभ्यम्** प्रयच्छति **यो वा** तुभ्यम् आत्मानं नियच्छति । तस्मै जानन् धनं देहि ॥ ५,६ ॥

**मुद्गल– ऋतस्य** गतस्य देवयजनं प्राप्तस्य यद्वा सत्यभूतस्याग्नेः **प्रेषाः** प्रकर्षेण इष्यमाण स्तुतयः क्रियन्ते । **धीतिः** धीयते सोमः पीयतेऽस्मिन्निति धीतिर्यागः । सोऽपि **ऋतस्य** देवयजनदेशं प्राप्तस्याग्नेरेव क्रियते । अतः सोऽग्निः **विश्वायुः** विश्वं सर्वम् आयुरन्नं यस्य तथाविधो भवति । अपि चास्मै **विश्वे सर्वे** यजमानाः **अपांसि** दर्शपूर्णमासादीनि कर्माणि **चक्रुः** कुर्वन्ति । हे अग्ने! **तुभ्यम् यः दाशात्** चरुपुरोडाशादीनि हवींषि ददाति । **यः वा** अन्योऽपि यो यजमानः **ते शिक्षात्** त्वदीयं कर्म कर्तुं शक्तो भूयासम् इति इच्छति । उभयविधाय तस्मै यजमानाय **चिकित्वान्** तत्कृतमनुष्ठानं जानन्नेव **रयिम् दयस्व** धनं देहि ॥ ५,६ ॥

**सायण– ऋतस्य** गतस्य देवयजनं प्राप्तस्याग्नेः **प्रेषाः** प्रकर्षेणेष्यमाणाः स्तुतयः क्रियन्ते । **धीतिः** धीयते सोमः पीयतेऽस्मिन्निति धीतिर्यागः । सोऽपि **ऋतस्य** देवयजनदेशं प्राप्तस्याग्नेरेव क्रियते । अतः सोऽग्निः **विश्वायुः** । विश्वं सर्वमायुरन्नं यस्य स तथाविधो भवति। अपि चास्मै

**विश्वे** सर्वे यजमानाः **अपांसि** दर्शपूर्णमासादीनि कर्माणि **चक्रुः** कुर्वन्ति । हे अग्ने **तुभ्यं यः दाशात्** चरुपुरोडाशादीनि हवींषि ददाति । **यो वा** अन्योऽपि यो यजमानः **ते शिक्षात्** त्वदीयं कर्म कर्तुं शक्तो भूयासम् इति इच्छति । उभयविधाय तस्मै यजमानाय **चिकित्वान्** तत्कृतमनुष्ठानं जानंस्त्वं **रयिं दयस्व** धनं देहि ।। **दाशात्** । 'दाश दाने' लेटि आडागमः । **शिक्षात्** । 'शक्लृ शक्तौ' । इच्छार्थे सन् । 'सनि मीमाघुरभलभशक' (पा.सू.७.४.५४) इति अकारस्य इसादेशः । 'अत्र लोपोऽभ्यासस्य' इति अभ्यासलोपः । 'स्कोः संयोगाद्योः' इति सकारलोपः । पूर्ववत् लेटि आडागमः । **चिकित्वान्** । 'कित ज्ञाने' । लिटः क्वसुः । **दयस्व** 'दय दानगति-रक्षणहिंसादानेषु' ।। ५,६ ।।

**सिद्धाञ्जनम्–** अयम् अग्निः **ऋतस्य** सत्यस्य **प्रेषाः** प्रकर्षेणेष्यमाणाः प्रेरणाः सत्यप्रेरणात्मका इत्यर्थः। **ऋतस्य धीतिः** सत्यस्य धारणात्मिका बुद्धिः, सत्यसम्बद्धबुद्ध्यात्मकः । स **विश्वायुः** विश्वगतं आयुश्च । येन **विश्वे** सर्वेऽपि **अपांसि** कर्माणि **चक्रुः** कुर्वन्ति । आयुः प्राणबलं, तदन्तरा न किमपि कर्तुं शक्यम् । हे अग्ने, **यः** पुरुषः **तुभ्यम् दाशात्** ददाति, **यो वा** पुरुषः **ते** त्वत्तः **शिक्षात्** विद्यां लभते, सर्वथा लाभवान् भवति वा **तस्मै** त्वदीयशिक्षायुक्ताय पुरुषाय **रयिम्** धनं **दयस्व** देहि, **चिकित्वान्** त्वं ज्ञातवान् दातव्यं वेत्सि ।। **दाशात्**-'दाशृ दाने' लेट् । **शिक्षात्** 'शिक्ष विद्योपादाने' लेट् । **चिकित्वान्** 'कित ज्ञाने' लिटः क्वसुः । **दयस्व**-दयतिर्दानार्थः ।। ५,६ ।।

## ऋक्संहिता पदपाठसहिता

**होता निषत्तो मनोरपत्ये स चिन्न्वासां पती रयीणाम् ।**
**इच्छन्त रेतो मिथस्तनूषु सं जानत स्वैर्दक्षैरमूराः ।। ७,८ ।।**
होता । निऽसत्तः । मनोः । अपत्ये । सः । चित् । नु । आसाम् । पतिः । रयीणाम् ।
इच्छन्त । रेतः । मिथः । तनूषु । सम् । जानत । स्वैः । दक्षैः । अमूराः ।। ७,८ ।।

**स्कन्द–** 'स चिन्न्वासाम्' इति तच्छब्दाद्यच्छब्दोऽध्याहार्यः । योऽग्निः **होता निषत्तः** निषण्णः निषीदति वा । **मनोः अपत्ये** जात्यपेक्षमेकवचनम् । मनोरपत्यभूतायां जातौ । मनुष्येष्वित्यर्थः । **सः चित् नु** इति पदपूरणः । **आसाम्** हविर्लक्षणानाम् **पतिः** स्वामी **रयीणाम्** । कस्य स्वभूतानाम् । उच्यते, **इच्छन्त रेतः** एकवाक्यताप्रसिद्ध्यर्थं यत्तच्छब्दा-

वध्याहर्तव्यौ । ये इच्छन्ति रेतः मिथः सहभूतायाम् अपि । न केवलाया एव । **तनूषु** आत्मीयेषु शरीरेषु । स्वशरीरं वा रेतः । इच्छया चात्र तत्कारणकौरसप्रजेच्छा प्रतिपाद्यते । ये अग्निपरिचर्यया समुदिता अपि सन्तः स्वशरीररेतःकारणिकामौरसीं प्रजामिच्छन्ति तेषां स्वभूतानां हविषां नान्येषामित्यर्थः । ये च **सम् जानत** सम्यग्जानन्त्यग्निम् **स्वैः दक्षैः** दक्षशब्दः– 'चित्तिं दक्षस्य सुभगत्वम्' (ऋ.२,२१,६), 'श्रेयांसं दक्षम्' (ऋ.१०,३१,२) इत्यादिषु मनस्यात्मनि च प्रसिद्धः । इह तु सोऽयमित्यभिसम्बन्धात् तत्प्रभवे ज्ञाने वर्तते । आत्मीयैर्मनः प्रभवैरात्मप्रभवैर्वा ज्ञानैरित्यर्थः । **अमूराः** अमूढाः विविक्तप्रज्ञावन्तः ।। ७,८ ।।

**वेङ्कटमाधव– होता** निषण्णः मनुष्येषु । सः खलु **आसाम् रयीणाम्** स्वामी । तस्मिन्ने- तस्मिन् अन्तःस्थिते **मिथः** संसर्गात् स्वेषु अवयवेषु पुत्रम् ऐच्छन्त समजानत चेतरे स्वैः इन्द्रियैः अमूढाः ।। ७,८ ।।

**मुद्गल–** हे अग्ने! त्वम् **मनोः अपत्ये** यजमानरूपायां प्रजायाम् **होता** देवानामाह्वाता सन् **निषत्तः** निषण्णः । **स चित् नु** स एव त्वम् **आसाम्** प्रजानाम् **रयीणाम्** गवादीनां धनानामपि **पतिः** स्वामी । अतस्ताः प्रजाः **तनूषु** आत्मीयेषु शरीरेषु **मिथः** संसृष्टमेकीभूतं पुत्ररूपेण परिणतम् **रेतः** वीर्यम् **इच्छन्त** ऐच्छन् । त्वदनुग्रहात् पुत्रमलभन्तेति यावत् । लब्धपुत्राश्च ताः प्रजाः **अमूराः** अमूढाः सत्यः **स्वैः** स्वकीयैः **दक्षैः** समर्थैः पुत्रैः सह **सम् जानत** सम्यगवगच्छन्ति । चिरकालं जीवन्तीत्यर्थः ।। ७,८ ।।

**सायण–** हे अग्ने त्वं **मनोरपत्ये** यजमानस्वरूपायां प्रजायां **होता** देवानामाह्वाता सन् **निषत्तः** निषण्णः । 'मानव्यो हि प्रजाः' (तै.सं.५.१.५.६) इति हि ब्राह्मणम् । **स चिन्नु** स एव त्वम् **आसां** प्रजानां **रयीणां** गवादीनां धनानामपि **पतिः** स्वामी । अतस्ताः प्रजाः **तनूषु** आत्मीयेषु शरीरेषु **मिथः** संसृष्टमेकीभूतं पुत्ररूपेण परिणतं **रेतः** वीर्यम् **इच्छन्त** ऐच्छन् । त्वदनुग्रहेण पुत्रमलभन्तेति यावत् । लब्धपुत्राश्च ताः प्रजाः **अमूराः** अमूढाः सत्यः **स्वैः** स्वकीयैः **दक्षैः** समर्थैः पुत्रैः सह **सं जानत** सम्यगवगच्छन्ति चिरकालं जीवन्तीत्यर्थः । यद्वा । दक्षशब्दः प्राणवाची । 'प्राणो वै दक्षोऽपानः क्रतुः' (तै.सं.२.५.२.४) इति श्रुतेः । **स्वैर्दक्षैः** स्वकीयैः प्राणैः **अमूराः** सञ्जातास्त्वयैव सर्वं जानन्ति ।। **इच्छन्त** । व्यत्ययेनात्मनेपदम् । **जानत** । छान्दसो लङ् । झस्य अदादेशे 'श्नाभ्यस्तयोरातः' इति आकारलोपः । **अमूराः** । मूरा अमूरेत्यत्र

यास्क एवं व्याचख्यौ- 'मूढा वयं स्मोऽमूढस्त्वमसि' (निरु.६.८) इति । अतोऽत्रापि अमूरशब्देन अमूढत्वमुच्यते । वर्णव्यापत्या ढकारस्य रेफः । यद्वा । 'मुर्छा मोहसमुच्छ्राययोः' । अस्मात् सम्पदादिलक्षणो भावे क्विप् । 'राल्लोपः' इति छलोपः । न मूरा अमूराः । अथवा । 'अम गत्यादिषु' । अस्मादौणादिक ऊरन्प्रत्ययः ।। ७,८ ।।

**सिद्धाञ्जनम्–** सः **मनोः अपत्ये** मानवे जने यजमाने **निषत्तः** निषण्णः अन्तर्निहितः **होता** आह्वाता ऋत्विक् । **स चिन्नु** स एव हि **आसाम् रयीणां** सर्वेषामेषां धनानां **पतिः** पालकः स्वामी । **तनूषु** स्वकीयशरीरेषु **मिथः** परस्परं **रेतः** बीजं तैजसं **इच्छन्त** इच्छन्ति । अत्र इच्छतिक्रियायाः कर्तृपदं मूले नास्ति । तस्मात् स्वस्वपक्षानुसारेण व्याख्यातारो विभिद्यन्ते । 'अमूराः' इति कर्तृपदं भवति । **अमूराः** अमूढाः मेधाविनः **स्वैः दक्षैः** स्वकीयैः विवेचनकुशलज्ञानैः **सम् जानत** सम्यक् तमग्निं अवबुध्यन्ते । त एवामूराः स्वशरीरेषु परस्परं आग्नेयं 'रेतः' बीजं इच्छन्ति इत्युक्तिरुपपद्यते । कथम् ? अत्रेदं तत्त्वम् । अन्तर्यागरतानां एकैकस्मिन्नपि रेतः आग्नेयं बीजं उप्तं भवति । तादृशां एकैकस्यापि अग्निसम्बन्धः स्थिर इत्यसंशयम् । सर्वेषु तेषु प्रत्येकं तुल्यं च प्रादुर्भूतेन अग्निना द्वारेण तेषां आन्तरं परस्परमिलनं तेषु प्रत्येकमग्नेर्वर्धनाय, अत एव तेषामपि दिव्याभ्युदयाय कल्पते । अत एव परस्परं आग्नेयं बीजं दिव्यं तेज इच्छन्तो मेधाविनः अग्निं सम्यग् जानते । **इच्छन्त**-व्यत्ययेनात्मनेपदम् । **जानत**-लङ् छान्दसः । **अमूराः**-ढकारस्य रेफः ।। ७,८ ।।

## ऋक्संहिता पदपाठसहिता

**पितुर्न पुत्राः क्रतुं जुषन्त श्रोषन्ये अस्य शासं तुरासः ।**
**वि राय और्णोद्दुरः पुरुक्षुः पिपेश नाकं स्तृभिर्दमूनाः ।। ९,१० ।।**
**पितुः । न । पुत्राः । क्रतुम् । जुषन्त । श्रोषन् । ये । अस्य । शासम् । तुरासः ।**
**वि । रायः । और्णोत् । दुरः । पुरुऽक्षुः । पिपेश । नाकम् । स्तृऽभिः । दमूनाः ।।९,१०।।**

**स्कन्द–** यथा पितुः पुत्राः, एवमग्नेः **क्रतुम्** प्रज्ञानम् **जुषन्त** सेवन्ते । अग्नेः स्वभूतां प्रज्ञां प्राप्नुवन्तीत्यर्थः । **श्रोषन्** शृण्वन्ति **ये अस्य** अग्नेः **शासम्** शासनम् । येऽस्यानुशासने वर्तन्त इत्यर्थः । **तुरासः** त्वरिताः । सादरा इत्यर्थः । अथवा तुरासः इति तूर्वतेर्हिंसार्थस्य रूपम् । अग्निप्रसादादेव शत्रूणां हिंसितार इत्यर्थः । किञ्च **वि रायः और्णोत् दुरः** धनस्य

च यानि द्वाराणि । यैर्धनं प्राप्यते तानि तेषां व्यौर्णोत् विविधं प्रकाशयति उद्घाटयति । धनं ददातीत्यर्थः । **पुरुक्षुः** क्षुशब्दोऽत्र कीर्तिवचनः । 'कृधि क्षुमन्तं' (ऋ.२,९,५) इति यथा । बहुकीर्तिरग्निः । किञ्च **पिपेश** पिश अवयवे पठितः । इह तु सामर्थ्यात् रूपवत्करणे द्रष्टव्यः । रूपवतीं चकार **नाकम्** दिवम् **स्तृभिः** नक्षत्रैः **दमूनाः** दान्तः । उपशमात्मक इत्यर्थः । धर्ममूलत्वात् सर्वस्य, धर्मस्य चाग्निमूलत्वादिदमुच्यते – पिपेश नाकम् इति ।। ९,१० ।।

**वेङ्कटमाधव– पितुः न पुत्राः** कर्म अजुषन्त । अश्रौषन् ये अस्य शासनम् वेदे त्वरमाणाः । सोऽयम् धनस्य द्वाराणि विवृणोति यजमानेभ्यः बहुशब्दः । आश्लेषयति दिवम् आच्छादकैर्हविर्भिः दममना इति । याज्ञिकस्याग्नेः स्तुतिः ।। ९,१० ।।

**मुद्गल– अस्य** अग्नेः **शासम्** शासनम् **तुरासः** त्वरमाणाः सन्तः ये यजमानाः **श्रोषन्** शृण्वन्ति ते सर्वे तेनानुशिष्टं क्रतुम् कर्म **जुषन्त** सेवन्ते । तत्र दृष्टान्तः । **पितुः न पुत्राः** यथा पुत्राः पुरु बहुलं त्रायकाः तनयाः पितुराज्ञां कुर्वन्ति तद्वत् । **पुरुक्षुः** 'क्षु' (निघ.२,७) इति अन्ननाम । बह्वयः । सोऽग्निरेषां यजमानानाम् **दुरः** द्वाराणि यज्ञस्य द्वारभूतानि **रायः** धनानि **वि और्णोत्** विवृणोति प्रकाशयति, ददातीति यावत् । अपि च **दमूनाः** दमे यज्ञगृहे मनो यस्य सोऽग्निः **नाकम्** द्युलोकम् **स्तृभिः** नक्षत्रैः **पिपेश** अवयवीचकार । नक्षत्रैर्युक्त-मकरोदित्यर्थः ।। ९,१० ।।

**सायण– अस्य** अग्नेः **शासं** शासनं **तुरासः** त्वरमाणाः सन्तः ये यजमानाः **श्रोषन्** शृण्वन्ति ते सर्वे तेनानुशिष्टं **क्रतुं** कर्म **जुषन्त** सेवन्ते । तत्र दृष्टान्तः । **पितुर्न पुत्राः** । यथा पुत्राः पुरु बहुलं त्रायकाः पुन्नाम्नो नरकाद्वा रक्षकास्तनयाः पितुराज्ञां कुर्वन्ति तद्वत् । 'पुत्रः पुरु त्रायते निषरणाद्वा पुनरकं ततस्त्रायत इति वा' (निरु.२.११) इति यास्कः । 'पुरुक्षुः । क्षु इत्यन्न नाम । बह्वन्नः सोऽग्निरेषां यजमानानां **दुरः** द्वाराणि यज्ञस्य द्वारभूतानि **रायः** धनानि **वि और्णोत्** विवृणोति प्रकाशयति । ददातीति यावत् । अपि च **दमूनाः** दमे यज्ञगृहे मनो यस्य सोऽग्निः । न अकं दुःखमस्तीति नाको द्युलोकः । तम् । **स्तृभिरिति** नक्षत्रनाम । **स्तृभिः** नक्षत्रैः **पिपेश** अवयवीचकार नक्षत्रैर्युक्तमकरोदित्यर्थः ।। **श्रोषन्** । 'श्रु श्रवणे' । लेटि अडागमः । 'सिब्बहुलं लेटि' इति सिप् । 'बहुलं छन्दसि' इति विकरणस्य लुक् । 'इतश्च लोपः' इति इकारलोपः । संयोगान्तस्य लोपः । **पिपेश** । 'पिश अवयवे' ।। ९,१० ।।

**सिद्धाञ्जनम्–** ये जनाः **अस्य** अग्नेः **शासम्** शासनं शिक्षा उपदेशमिति यावत् **श्रोषन्** शृण्वन्ति ये च **तुरासः** दिव्याध्वनि यागाय त्वरमाणाः भवन्ति, ते पुत्राः **पितुः क्रतुम् न** पितुरिच्छां यथा पुत्राः कुर्वन्ति तथाऽस्य क्रतुं **जुषन्त** प्रीत्या सेवन्ते । तेषां पुण्यवतां लभ्यं विभवं ध्वनयत्युत्तरार्धम् । सः **पुरुक्षुः** बहुनिधिनिलयभूतः **रायः** सम्पन्निधेः **दुरः** द्वाराणि **व्यौर्णोत्** विवृणोति । सः **दमूनाः** अन्तर्गृहवासी **स्तृभिः** नक्षत्रैः विस्तीर्णः शोभावहस्तेजोविशेषः **नाकम्** द्युलोकं **पिपेश** रूपसंपन्नं करोति ।। **श्रोषन्**-श्रु श्रवणे, लेट् । **पिपेश**-पिश अवयवे ।। ९,१० ।।

।। इति प्रथमाष्टके पञ्चमाध्याये द्वादशो वर्गः ।।

## ।। अथ त्रयोदशो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

(सूक्तम् ६९)

१० पराशरः । शाक्त्यः । अग्निः । द्विपदा विराट् ।

**शुक्रः शुशुक्वाँ उषो न जारः पप्रा समीची दिवो न ज्योतिः ।**
**परि प्रजातः क्रत्वा बभूथ भुवो देवानां पिता पुत्रः सन् ।। १,२ ।।**

शुक्रः । शुशुक्वान् । उषः । न । जारः । पप्रा । समीची इति सम्ऽईची । दिवः । न । ज्योतिः । परि । प्रऽजातः । क्रत्वा । बभूथ । भुवः । देवानाम् । पिता । पुत्रः । सन् ।।

**स्कन्द–** **शुक्रः** शुक्लवर्णोऽग्निः **शुशुक्वान्** दीप्तश्च **उषो न जारः** उष इति षष्ठ्यर्थे प्रथमा । उषस इव जरयिता आदित्यः । **पप्रा** पूरयति च **समीची** सङ्गते । उभे अपीत्यर्थः । के । सामर्थ्यात् द्यावापृथिव्यौ । केन । सामर्थ्यात् ज्योतिषा । कथमिव । **दिवः न ज्योतिः** दिव इव सम्बन्धि ज्योतिरादित्याख्यम् । आदित्य इवेत्यर्थः । परोऽर्धर्चः प्रत्यक्षकृतत्वाद् भिन्नं वाक्यम् । **प्रजातः** जातमात्र एव **सन्** त्वम् **क्रत्वा** कर्मणा हविर्नयनादिना प्रज्ञया वा **परिबभूथ** परिपूर्वो भवतिः परिग्रहे । परिगृह्णासि सर्वम् । **भुवः** भवसि च । **देवानाम्** दीव्यतेः स्तुत्यर्थत्वात् स्तोतारोऽत्र देवा उच्यन्ते । स्तोतॄणां यजमानानाम् **पिता** पितृस्थानीयः पालयिता वा **पुत्रः** सन् । अग्निर्हि यजमानैर्जन्यते, अत एवमुच्यते– **पुत्रः सन्** इति ।। १,२ ।।

**वेङ्कटमाधव–** शुक्रवर्णः शोचनशीलः उषस इव जरयिता आदित्यः । पूरयिता द्यावापृथिवी

दिवि भवम् इव **ज्योतिः** । **प्रजातः** स्वकर्मणा सर्वम् **परि बभूथ** । **भुवः देवानाम्** कर्मतः **पिता पुत्रः** अपि **सन्** ॥ १,२ ॥

**मुद्गल–** 'शुक्र' इति द्वैपदं दशर्चम् अध्ययनतः पञ्चर्च पञ्चमं सूक्तम् । पराशर ऋषिः । विराट् छन्दः । अग्निर्देवता ॥ १,२ ॥

**शुक्रः** शुभ्रवर्णोऽयम् अग्निः, **उषः न जारः** उषसो जरयिता सूर्य इव । **शुशुक्वान्** शोचयिता सर्वस्य प्रकाशयिता भवति । तथा **समीची** सङ्गते द्यावापृथिव्यौ **दिवः न ज्योतिः** द्योतमानस्य सूर्यस्य ज्योतिरिव **पप्रा** स्वतेजसा पूरयिता । हे अग्ने! अतस्त्वम् **प्रजातः** प्रादुर्भूतः सन् **क्रत्वा** कर्मणा उक्तप्रकारेण सर्वं जगत् **परि बभूथ** परितो व्याप्नोषि । **देवानाम्** ऋत्विजाम् **पुत्रः सन् पिता भुवः** पालयिता भवसि ॥ १,२ ॥

**सायण– शुक्रः** शुभ्रवर्णोऽयम् अग्निः **उषो न जारः** उषसो जरयिता सूर्य इव **शुशुक्वान्** शोचयिता सर्वस्य प्रकाशयिता भवति । तथा **समीची** सङ्गते द्यावापृथिव्यौ **दिवो न ज्योतिः** द्योतमानस्य सूर्यस्य ज्योतिरिव **पप्रा** स्वतेजसा पूरयिता । हे अग्ने! अतस्त्वं **प्रजातः** प्रादुर्भूतः सन् **क्रत्वा कर्मणा** । यद्वा ज्ञानहेतुना प्रकाशेनोक्तप्रकारेण सर्वं जगत् **परि बभूथ** परितो व्याप्नोषि । दीव्यन्तीति देवा ऋत्विजः । **तेषां** पुत्रः सन् पुन्नाम्नो नरकात् त्रायकः सन् **पिता भुवः** पालयिता भवसि । यद्वा । देवानाम् इन्द्रादीनामेव पुत्रः सन् पुत्र इव दूतो भूत्वा पिता हविर्भिः पालयिता भवसि ॥ **शुशुक्वान्** । 'शुच दीप्तौ' । लिटः क्वसुः । व्यत्ययेन कुत्वम् । **पप्रा** । 'पॄ पालनपूरणयोः' इत्यस्मात् 'आदृगमहनजनः' इति किप्रत्ययः । 'सुपां सुलुक्' इति सोः डादेशः । **समीची** । सम् पूर्वादञ्चतेः 'ऋत्विक्' इत्यादिना किन् । 'समः समि' (पा.सू.६.३.९३) इति सम्यादेशः । 'अञ्चतेश्चेति वक्तव्यम्' इति ङीप् । 'अचः' इति अकारलोपे 'चौ' इति दीर्घत्वम् । उदात्तनिवृत्तिस्वरेण ङीप उदात्तत्वम् । 'वा छन्दसि' इति पूर्वसवर्णदीर्घत्वम् । यदि तु समृऽईची इति पदविभागः क्रियते तर्हि 'उद ईत्' (पा.सू.६.४.१३९) इति विधीयमानमीत्वं सम उत्तरस्यापि दृष्टव्यम् । **बभूथ** । 'बभूथा ततन्थ' (पा.सू.७.२.६४) इति निपातनात् इडभावः ॥ १,२ ॥

**सिद्धाञ्जनम्–** 'शुक्रः' इति द्वैपदं दशर्चम् अध्ययनतः पञ्चर्चं पञ्चमं सूक्तं पराशरस्यार्षमाग्नेयम् । 'शुक्रः' इत्यनुक्रान्तम् । विनियोगो लैङ्गिकः ॥

**उषो न जारः** उषसो जरयिता कामयिता प्रियः इव **शुक्रः** शुभ्रवर्णः **शुशुक्वान्** दीप्ततरं प्रज्वलन्, **दिवो न ज्योतिः** द्युलोकस्य दीपभूतः सूर्य इव **समीची** सङ्गते समाने वा द्यावापृथिव्यौ **पप्रा** पूरयिता स्वतेजसेति शेषः, त्वं **क्रत्वा** अस्माकमध्यवसायेन **प्रजातः** प्रकर्षेण प्रादुर्भूतः **परि बभूथ** अस्मान् परितः वर्तसे । त्वं **पुत्रः सन् भुवो** भवन्नपि **देवानां पिता** पालको **भुवः** भवसि ।। सर्वदेवप्रतिनिधिर्भगवान् अग्निः यजमाने जातः देवपुत्र इत्युपपद्यते । स एव सर्वदेवाधिकारपरिपालकश्च भवति । तस्मात् पिता ।। **शुशुक्वान्**-शुच दीप्तौ, लिटः क्वसुः । **पप्रा**-'पृ पालनपूरणयोः', किप्रत्ययः, सोडादेशः । **समीची**-सम् पूर्वात् अञ्चतेः क्विन् । **बभूथ**-बभूथ ततन्थ इति निपातनात् इडभावः ।। १,२ ।।

## ऋक्संहिता पदपाठसहिता

**वेधा अदृप्तो अग्निर्विजानन्नूधर्न गोनां स्वाद्मा पितूनाम् ।**
**जने न शेव आहूर्यः सन्मध्ये निषत्तो रण्वो दुरोणे ।। ३,४ ।।**

**वेधाः । अदृप्तः । अग्निः । विऽजानन् । ऊधः । न । गोनाम् । स्वाद्म । पितूनाम् ।**
**जनेः । न । शेवः । आऽहूर्यः । सन् । मध्ये । निऽसत्तः । रण्वः । दुरोणे ।। ३,४ ।।**

**स्कन्द– वेधाः** मेधावी । **अदृप्तः** 'दृप हर्षमोहनयोः' अमूढः, **अग्निः, विजानन्** । किम् । सामर्थ्याद् भक्ततां यजमानानाम् । **ऊधः न गोनाम्** यथा गवाम् अवयवभूतमूधः पयआदिना स्वादुतामन्नानां करोति तद्वत् पाकेन **स्वाद्म** स्वादुतां करोतीति वाक्यशेषः । कस्य । **पितूनाम्** अन्नानां हविर्लक्षणानां सर्वेषां वा । किञ्च **जने न शेवः** जनयितृत्वात् 'जनः' पिताऽभिप्रेतः । प्रथमार्थे चैषा सप्तमी । पितेव सुखकरोऽग्निः सर्वयजमानानाम् **आहूर्यः** सन् 'हृ कौटिल्ये' चञ्चलत्वाज्ज्वालानां कुटिलस्सन् । किञ्च **मध्ये निषत्तः** वेद्या मध्ये निषण्णः **रण्वः** रमणीयोऽपि **दुरोणे** यज्ञगृहे । अथवा जनशब्दो लोकवचनः । स्वार्थ एव सप्तमी । दुरोण इत्येतस्य सप्तम्यन्तस्येदमुपमानम् । यथा लोके सुखः तद्वदाहूर्यस्सन् वेद्या मध्ये निषण्णः रमणीयोऽग्निः गृहेऽपि सुख इत्यर्थः ।। ३,४ ।।

**वेङ्कटमाधव–** विधाता अदृप्यन् अग्निः **विजानन्** गवाम् ऊध इव पयसा अन्नानि पचन् स्वादूकर्ता भवति । सार्थे इव सुखकरं मित्रं आह्वातव्यः सन् मध्ये निषण्णः रमयिता गृहे ।।३,४।।

**मुद्गल– वेधाः** मेधावी **अदृप्तः** दर्परहितः **विजानन्** कर्तव्याकर्तव्यविभागम् जानन् **अग्निः गोनाम्** गवाम् **ऊधः न** गोसम्बन्धि पयसः आश्रयभूतं स्थानमिव **पितूनाम्** अन्नानाम् **स्वाद्म** स्वादयिता रसयिता । यथा गोरूधः पयःप्रदानेन सर्वाण्यन्नानि स्वादूनि करोति, तद्वदग्निरपि सम्यक् पाकेन सर्वाण्यन्नानि स्वादूनि करोतीत्यर्थः । अपि चैवम्भूतोऽग्निः **जने न शेवः** जनपदे लोकसुखकरः पुरुष इव **मध्ये** यज्ञेषु मध्ये **आहूर्यः** आह्वातव्यः सन् **दुरोणे** यज्ञगृहे **निषत्तः** निषण्णः **रण्वः** रमयिता स्तुत्यो वा भवति ।। ३,४ ।।

**सायण– वेधाः** । मेधाविनामैतत् । मेधावी । यद्वा । विधाता सर्वस्य कर्ता । **अदृप्तः** दर्परहितः । **विजानन्** कर्तव्याकर्तव्यविभागं जानन् **अग्निः, गोनां** गवाम् **ऊधर्न** गोसम्बन्धि पयस आश्रयभूतं स्थानमिव **पितूनाम्** अन्नानां **स्वाद्म** स्वादयिता रसयिता । यथा गोरूधः पयःप्रदानेन सर्वाण्यन्नानि स्वादूनि करोति तद्वदग्निरपि सम्यक् पाकेन सर्वाण्यन्नानि स्वादूनि करोतीत्यर्थः । अपि चैवम्भूतोऽग्निः **जने न शेवः** जनपदे लोकसुखकरः पुरुष इव **मध्ये** यज्ञेषु मध्ये **आहूर्यः** आह्वातव्यः **सन्, दुरोणे** यज्ञगृहे **निषत्तः** निषण्णः **रण्वः** रमयिता स्तुत्यो वा भवति ।। **गोनाम्**, 'गोः पादान्ते' (पा.सू.७.१.५७) इत्यपदान्तेऽपि नुट् । **स्वाद्म** । 'स्वाद आस्वादने '। अन्तर्भावितण्यर्थात् 'अन्येभ्योऽपि दृश्यन्ते' इति मनिन् । 'सुपां सुलुक्' इति सोर्लुक् । **पितूनाम्** । 'नामन्यतरस्याम्' इति नाम उदात्तत्वम् । **आहूर्यः**- आङ्पूर्वात् ह्वयतेः 'अचो यत्' इति यत् । 'बहुलं छन्दसिं' इति सम्प्रसारणम् । 'हलः' इति दीर्घः । रेफोपजनश्छान्दसः । 'यतोऽनावः' इत्याद्युदात्तत्वम् ।। ३,४ ।।

**सिद्धाञ्जनम्– विजानन्** विशेषेण ज्ञानवान् **अग्निः, अदृप्तः** दर्परहितो **वेधाः** विधाता स्रष्टा भवति । अग्निर्जानाति यथाकालं कर्तव्यं, यजमाने यद् व्यवस्थाप्यं स्रष्टव्यं वा, तस्मात् न साहसी, दर्पश्च साहसोपलक्षणं बोध्यम् । सः **गोनाम्** गवां **ऊधर्न** आपीनमिव, भवति **पितूनाम्** सोमानाम् **स्वाद्म** स्वादुङ्कारः, आस्वादयिता वा । **जने** मानुषे **शेवो न** सुखमय इव वर्तते । **आहूर्यः** अस्माभिराह्वातव्यः **दुरोणे** गृहे **मध्ये** मुख्यस्थाने **रण्वः सन्** रमणीयो भवन्, रममाणो वा निषत्तः निषण्णो भवति ।। **गोनाम्** अपादान्तेऽपि नुट् । **स्वाद्म**-'स्वाद आस्वादने, अन्तर्भावितण्यर्थः, मनिन्, सोर्लुक् । **आहूर्यः**-आङ्पूर्वात् ह्वयतेः सम्प्रसारणं, रेफोपजनश्छान्दसः ।।

## ऋक्संहिता पदपाठसहिता

**पुत्रो न जातो रण्वो दुरोणे वाजी न प्रीतो विशो वि तारीत् ।**
**विशो यदह्वे नृभिः सनीळा अग्निर्देवत्वा विश्वान्यश्याः ।। ५,६ ।।**
**पुत्रः । न । जातः । रण्वः । दुरोणे । वाजी । न । प्रीतः । विशः । वि । तारीत् ।**
**विशः । यत् । अह्वे । नृऽभिः । सऽनीळाः । अग्निः । देवऽत्वा । विश्वानि । अश्याः ।।**

**स्कन्द– पुत्रः न** यथा पुत्रो जातः तद्वत् **रण्वः** रमणीयः प्रीतिकरोऽग्निः **दुरोणे** यज्ञगृहे । किञ्च **वाजी न** यथा सङ्ग्रामाश्वः सङ्ग्रामजयद्वारेण वर्धयति तद्वत् प्रीतः सन्नग्निः **विशः** स्तोतॄन् यष्टॄंश्च मनुष्यान् **वि तारीत्** विपूर्वस्तरतिः सर्वत्र वृद्ध्यर्थः । विविधं वर्धयति । किञ्च **विशः** देवविशः । देवानित्यर्थः । **यत्** यः यदा वा **अह्वे** आह्वयति । **नृभिः** मनुष्यैः ऋत्विगाख्यैः **सनीळाः** समानं नीळं स्थानं यासां देवविशां ताः सनीळाः । एकस्वर्गाख्यस्थानाः । यच्छब्द श्रुतेस्तच्छब्दोऽध्याहर्तव्यः । स तदा वा **अग्निः देवत्वा विश्वानि** स्वार्थिकोऽत्र भावप्रत्ययो द्रष्टव्यः । चातुर्वर्ण्यं चातुराश्रम्यम् इति यथा । देवान् सर्वानस्मदर्थम् **अश्या** व्यत्ययेनायं मध्यमः । अश्यात् व्याप्नुयादित्याशास्महे ।। ५,६ ।।

**वेङ्कटमाधव– पुत्र इव जातः** रमयिता गृहे वर्तमानः, अश्व इव सुहितः मनुष्यांस्तारयति । यदाहं यज्ञार्थं देवैः समानस्थानान् ऋत्विजो मनुष्यान् आह्वयामि, तदानीम् अग्निः स्वयमेव इन्द्रत्वं वरुणस्य देवतान्तरत्वञ्च प्राप्नोति ।। ५,६ ।।

**मुद्गल– पुत्रो न** पुत्र इव **जातः** प्रादुर्भूतोऽग्निः **दुरोणे** गृहे **रण्वः** रमयिता भवति । **वाजी न** अश्व इव **प्रीतः** हर्षयुक्तः सन् **विशः** सङ्ग्रामे वर्तमानाः शत्रुभूताः प्रजाः **वि तारीत्** विशेषेण तरति अतिक्रामति । अपि च **नृभिः** ऋत्विग्लक्षणैर्मनुष्यैः सहितोऽहम् **सनीळाः** समान-निवासस्थानाः **विशः** देवप्रजाः **यत्** यदा **अह्वे** आह्वयामि, तदानीमयम् अग्निः **विश्वानि** सर्वाणि **देवत्वा** देवत्वानि **अश्याः** अश्नुते प्राप्नोति । स्वयमेव देवतारूपो भवतीत्यर्थः ।। ५.६ ।।

**सायण– पुत्रो न** पुत्र इव **जातः** प्रादुर्भूतोऽग्निः **दुरोणे** गृहे **रण्वः** रमयिता भवति । **वाजी न** अश्व इव, **प्रीतः** हर्षयुक्तः सन् **विशः** संग्रामे वर्तमानाः शत्रुभूताः प्रजाः **वि तारीत्** विशेषेण तरति अतिक्रामति । अपि च **नृभिः** ऋत्विग्लक्षणैर्मनुष्यैः सहितोऽहं **सनीळाः** समाननिवासस्थानाः

**विशः** दैवीः प्रजाः **यत्** यदा **अह्वे** आह्वयामि तदानीमयम् **अग्निः विश्वानि** सर्वाणि **देवत्वा** देवत्वानि **अश्याः** अश्नुते प्राप्नोति । स्वयमेव तत्तद्देवतारूपो भवतीत्यर्थः । तथा च मन्त्रान्तरमाम्नायते 'त्वमग्ने वरुणो जायसे यत्त्वं मित्रो भवसि यत्समिन्द्रः' (ऋ.सं.५.३.१) इत्यादि ।। **अश्याः** । 'अशु व्याप्तौ' । लिङि व्यत्ययेन परस्मैपदमध्यमौ । 'बहुलं छन्दसि' इति विकरणस्य लुक् ।। ५,६ ।।

**सिद्धाञ्जनम्– दुरोणे** गृहे **रण्वः** रममाणः **पुत्रो न** अस्माकं पुत्र इव **जातः** अजायत । **प्रीतः** सन्तुष्टः **वाजी न** जवनः अश्व इव **विशः** जनान् **वितारीत्** सुरक्षितान् तारयति सङ्ग्रामेषु । **यत्** यदा **नृभिः** देवैः **सनीळाः** समानवासस्थानाः **विशः** प्रजाः, दिव्यान् जनान् इत्यर्थः, मानुषान् वा **अह्वे** आह्वयामि, तदा अग्निः **विश्वानि** सर्वाणि **देवत्वा** देवत्वानि **अश्याः** प्राप्नोति । अग्नेः सर्वदेवात्मकत्वाद् देवतासहवासिनि वृन्दे आहूते अग्निः सर्वदेवमयत्वं प्रकटयति ।। **अश्याः**- 'अशू व्याप्तौ, लिङ्, व्यत्ययेन परस्मैपदं मध्यमपुरुषश्च ।। ५,६ ।।

## ऋक्संहिता पदपाठसहिता

**नकिंष्ट एता व्रता मिंनन्ति नृभ्यो यदेभ्यः श्रुष्टिं चकर्थ ।**
**तत्तु ते दंसो यदहंन्त्समानैर्नृभिर्यद्युक्तो विवे रपांसि ।। ७,८ ।।**
**नकिः । ते । एता । व्रता । मिनन्ति । नृऽभ्यः । यत् । एभ्यः । श्रुष्टिम् । चकर्थ । तत् । तु । ते । दंसः । यत् । अहंन् । समानैः । नृऽभिः । यत् । युक्तः । विवेः । रपांसि ।। ७,८ ।।**

**स्कन्द– नकिः** इति निपातः प्रतिषेधेन समानार्थः । न केचित् **ते** तव **एता व्रता** एतानि दहनपचनादीनि कर्माणि **मिनन्ति** 'मीञ् हिंसायाम्' इत्यस्यैतद्रूपम् । हिंसन्ति हिंसितुं शक्नुवन्तीत्यर्थः । न च केवलानि दहनादीनि किन्तु **नृभ्यः यत् एभ्यः** यच्च एभ्यः स्तोतृभ्य यष्टृभ्यश्च मनुष्येभ्यः । **श्रुष्टिम्** अपठितमपि सुखनामैतद् द्रष्टव्यम् । सुखम् **चकर्थ** करोषि, तदपि न कश्चिद्धिंसितुं शक्नोति । एवम् अतिशयवदनेककर्मयुक्तस्यापि **तत् तु ते दंसः** तदेव तव कर्म । अत्यन्तप्रकृष्टमित्यर्थः । यत् कतमत् । उच्यते । **यत् अहन्** हिंसितवान् । किम् । सामर्थ्यात् तमो वा रक्षांसि वा । **समानैः नृभिः यत् युक्तः** यच्च समानैरात्मनो योग्यैः ऋत्विगाख्यैर्मनुष्यैर्युक्तः यागकरणद्वारेण **विवेः** वेतेरन्तर्णीतण्यर्थस्य रूपम् । गमयसि । नाशयसीत्यर्थः । **रपांसि** 'रपो रिप्रमिति पापनामनी' (या.४.२१) । पापानि यजमानानाम् ।।

**वेङ्कटमाधव–** न केचन तव एतानि कर्माणि हिंसन्ति । यस्मात् त्वं नेतृभ्यः मनुष्येभ्यः आशु प्राप्तिं करोषि सन्निधानं करोषि । तत् तव कर्म, यत् **समानैः** मनुष्यैर्युक्तः सन् तेषां पापानि हंसि यत् च जानासि तानि इति । ऐकमत्यं गताः समानाः, तैनिर्युक्त इति ।।७,८।।

**मुद्गल–** हे अग्ने ! **ते** तव सम्बन्धीनि **एता व्रता** एतानि व्रतानि परिदृश्यमानानि दर्शपूर्णमासादीनि कर्माणि **नकिः मिनन्ति** राक्षसादयो बाधका न हिंसन्ति । **यत्** यस्मात् त्वम् **एभ्यः** कर्मसु वर्तमानेभ्यः **नृभ्यः** यज्ञस्य नेतृभ्यो यजमानेभ्यः **श्रुष्टिम्** शु आशु अश्नुते व्याप्नोतीति श्रुष्टिर्यज्ञफलरूपं सुखम् । तत् **चकर्थ** कृतवानसि । सति हि तव व्रतानां बाधके एतन्नोपपद्यते । अतोऽवगम्यते तव व्रतानां हिंसका न सन्तीति । हे अग्ने! **ते** त्वदीयम् **तत् तु दंसः** तदेव कर्म **यत्** यदि राक्षसादिः **अहन्** हन्ति विनाशयति तदानीम् **समानैः** सप्तगणरूपेण सदृशैः **नृभिः** नेतृभिर्मरुद्भिः युक्तः त्वम् **रपांसि** बाधकानि राक्षसादीनि **यत्** यस्मात् **विवेः** गमयसि पलायनं प्रापयसि, तस्मात् तव व्रतानि न हिंसन्तीति योज्यम् ।। ७,८ ।।

**सायण–** हे अग्ने! **ते** तव सम्बन्धीनि **एता व्रता** एतानि परिदृश्यमानानि दर्शपूर्णमासादीनि कर्माणि **नकिः मिनन्ति** राक्षसादयो बाधका न हिंसन्ति । **यत्** यस्मात् त्वम् **एभ्यः** कर्मसु वर्तमानेभ्यः **नृभ्यः** यज्ञस्य नेतृभ्यो यजमानेभ्यः **श्रुष्टिम्** शु आशु अश्नुते व्याप्नोतीति श्रुष्टिर्यज्ञफलरूपं सुखम् । तत् **चकर्थ** कृतवानसि । सति हि तव व्रतानां बाधके एतन्नोपपद्यते । अतोऽवगम्यते तव व्रतानां हिंसका न सन्तीति । हे अग्ने! **ते** त्वदीयं **तत्तु दंसः** तदेव कर्म **यत्** यदि राक्षसादि **अहन्** हन्ति नाशयति तदानीं **समानैः** सप्तगणरूपेण सदृशैः **नृभिः** नेतृभिर्मरुद्भिः युक्तः त्वं, **रपांसि** बाधकानि राक्षसादीनि **यत्** यस्मात् त्वम् **विवेः** गमयसि पलायनं प्रापयसि । तस्मात् तव व्रतानि न हिंसन्तीति योज्यम् ।। **मिनन्ति** । 'मीञ् हिंसायाम्' । क्रैयादिकः । 'प्वादीनां ह्रस्वः' इति ह्रस्वत्वम् । **विवेः** । 'छन्दसि लुङ्लङ्लिटः' इति वर्तमाने लङ् 'वी गत्यादिषु' सिपि अदादित्वात् शपो लुकि प्राप्ते 'बहुलं छन्दसि' इति शपः श्लुः ।।

**सिद्धाञ्जनम्– यत्** यदा **एभ्यः** पूर्वोक्तेभ्यः **नृभ्यः** देवेभ्यः, मनुष्येभ्यो वा **श्रुष्टिम्** श्रुतिं, दिव्यश्रवणजन्यं ज्ञानं **चकर्थ** करोषि, तदा **नकिः** न कोऽपि ते तव सम्बन्धीनि **एता व्रता** इमानि कर्माणि **मिनन्ति** बाधन्ते, वचनव्यत्ययः, बाधते, नकिरिति कर्तृपदं एकवचनम् । अग्निविहितकर्मविशेषाणां न कुतश्चिद्राक्षसादिभ्यो विघातः सम्भवति । हे अग्ने! **तत्तु** तदेव **ते**

तव **दंसः** कर्म यत्, **समानैः** त्वत्समैः **नृभिः** देवैः **युक्तः** संयुक्तः सन् त्वं **अहन्** हंसि, यत्, **रपांसि** बाधकानि रक्षांसि पापानि वा **विवेः** विक्षिपसि अपसारयसीत्यर्थः । अत्र यच्छब्दद्वयं वर्तते, 'अहन्' इति यत्, 'विवेः' इति यत्, तत् ते दंसः इति सम्बन्धः ।। **मिनन्ति**-मीञ् हिसायाम्, क्र्यादिः । **विवेः**-'वी गत्यादिषु' छन्दसि वर्तमाने लङ् ।। ७,८ ।।

## ऋक्संहिता पदपाठसहिता

**उषो न जारो विभावोस्रः संज्ञातरूपश्चिकैतदस्मै ।**
**त्मना वहन्तो दुरो व्यृण्वन्नवन्त विश्वे स्व१र्दृशीके ।। ९,१० ।।**
**उषः । न । जारः । विभाऽवा । उस्रः । संज्ञातऽरूपः । चिकैतत् । अस्मै । त्मना । वहन्तः । दुरः । वि । ऋण्वन् । नवन्त । विश्वे । स्वः । दृशीके ।। ९,१० ।।**

**स्कन्द– उषः न जारः** उषस इव जरयिता आदित्यः **विभावा** दीप्तिमानग्निः । **उस्रः** 'उस्रा' (निघ.२,११) इति गोनाम । तत्सादृश्यादिहाग्नौ प्रयुक्तम् । वृषभसदृशश्चेत्यर्थः । **संज्ञात-रूपः** प्रख्यातरूपश्च । **चिकेतत् अस्मै** 'कित ज्ञाने' । व्यत्ययेन चेदं बहुवचनस्य स्थाने एकवचनम् । 'अस्मै' इत्यपि द्वितीयार्थे चतुर्थी । तादर्थ्यचतुर्थीश्रुतेर्वा स्तुतिं हवींषि वा कर्तुमिति वाक्यशेषः । एकवाक्यताप्रसिद्ध्यर्थं यत्तच्छब्दावध्याहर्तव्यौ । ये जानन्त्येतम् अग्निम् अस्य वाऽग्नेरर्थाय स्तुतिं हवींषि वा कर्तुं ते **त्मना** आत्मना **वहन्तः** अग्निं प्रति स्तुतिं हवींषि वा प्रापयन्तः । **दुरः** द्वाराणि । कस्य । धनस्य । कुत एतत् । 'वि राय और्णोत् दुरः' (ऋ.१,३८,१०) इति मन्त्रान्तरे दर्शनात् । **वि ऋण्वन्** विविधं गच्छन्ति प्राप्नुवन्ति । धनं लभन्त इत्यर्थः । किञ्च **नवन्त** स्तुवन्त्यग्निम् **विश्वे** सर्वे मनुष्याः **स्वः** सर्वस्मिन् **दृशीके** दर्शनीये वेद्यादौ स्थाने । अथवा दृशीकेशब्दोऽत्र द्रष्टुमित्यस्यार्थे । सर्वम् अग्निप्रकाशितं द्रष्टुम् । द्युनाम वा 'स्वः' शब्दः । दिवं द्रष्टुम्, स्वर्गं प्राप्तुमित्यर्थः ।। ९,१० ।।

**वेङ्कटमाधव–** उषसः इव उरयिता आदित्यः दीप्तिमान् उत्सरणशीलः पुरुषेण **संज्ञातरूपः** सन् जानाति तम् । स्वयमेव अस्मै हविः **वहन्तः** अभ्युदयानां द्वाराणि विवृण्वन्ति । सर्वेऽभ्युदयार्थिनः अस्मिन् सर्वस्य दर्शनीये संश्लिष्टा भवन्तीति ।। ९,१० ।।

**मुद्गल– उषः न जारः** उषसो जरयिता आदित्य इव **विभावा** विशिष्टप्रकाशयुक्तः **उस्रः** निवासयिता **संज्ञातरूपः** सर्वैः प्राणिभिरवगतस्वरूपः । देवतान्तरवदप्रत्यक्षो न भवतीत्यर्थः ।

एवम्भूतोऽग्निः **अस्मै** यजमानाय **चिकेतत्** जानातु । अभिमतफलं ददात्वित्यर्थः । तथा अस्य रश्मयः **त्मना** आत्मनैव स्वयमेव **वहन्तः** हविर्वहनं कुर्वन्तः **दुरः** यज्ञगृहद्वाराणि **वि ऋण्वन्** विशेषेण गच्छन्ति व्याप्नुवन्तीत्यर्थः । तदनन्तरम् **दृशीके** दर्शनीये **स्वः** नभसि **विश्वे** सर्वे ते रश्मयः **नवन्त** गच्छन्ति । देवान् प्राप्नुवन्तीत्यर्थः ।। ९,१० ।।

**सायण– उषो न जारः** उषसो जरयिता आदित्य इव **विभावा** विशिष्टप्रकाशयुक्तः **उस्रः** निवासयिता **संज्ञातरूपः** सर्वैः प्राणिभिरवगतस्वरूपः । देवतान्तरवदप्रत्यक्षो न भवतीत्यर्थः । एवम्भूतोऽग्निः **अस्मै** यजमानाय **चिकेतत्** जानातु । अभिमतफलं ददात्वित्यर्थः । यद्वा । विभक्तिव्यत्ययः । **अस्मै** इदं सूक्तरूपं स्तोत्रं **चिकेतत्** जानातु । तथा अस्य रश्मयः **त्मना** आत्मनैव स्वयमेव **वहन्तः** हविर्वहनं कुर्वन्तः । **दुरः** यज्ञगृहद्वाराणि **वि ऋण्वन्** विशेषेण गच्छन्ति, व्याप्नुवन्तीत्यर्थः । तदनन्तरं **दृशीके** दर्शनीये **स्वः** नभसि **विश्वे** सर्वे ते रश्मयः **नवन्त** गच्छन्ति । नवतिर्गतिकर्मा । देवान् प्राप्नुवन्तीत्यर्थः ।। **उस्रः** । 'वस निवासे'। 'स्फायितञ्चि' इत्यादिना रक् । यजादित्वात् सम्प्रसारणम् । **चिकेतत्** । 'कित ज्ञाने'। जौहोत्यादिकः । लेटि अडागमः । 'बहुलं छन्दसीति वक्तव्यम्' (का.७.३.८७.१) इति वचनात् 'नाभ्यस्तस्याचि पिति' इति लघूपधगुणप्रतिषेधाभावः । 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम् । **ऋण्वन्** । 'इवि रिवि रवि धवि गत्यर्थाः' । इदित्त्वात् नुम् । छान्दसो लङ् । व्यत्ययेन रेफस्य सम्प्रसारणम् । यद्वा । 'ऋणु गतौ' । तनोत्यादिः ।। ९,१० ।।

**सिद्धाञ्जनम्– उषो न जारः** उपसो जरयिता प्रिय इव, सोऽग्निः **विभावा** विशिष्टप्रभायुक्तः **उस्रः** कान्तिमान् । **अस्मै** जनाय **संज्ञातरूपः** संज्ञातं सम्यग्विदितं रूपं यस्यासौ, तथाभूतो भवतु । **चिकेतत्** जानातु । उपासकाय जनाय प्रदर्शितस्वरूपः अग्निः स्वयं तस्य ज्ञाने प्रादुर्भवत्वित्याशयः । **विश्वे** सर्वेऽपि **त्मना** स्वयमेव **वहन्तः** तमग्निं बिभ्रतः सन्तः **दुरः** द्वाराणि **व्यृण्वन्** विवृत्य गच्छन्तु, गत्वा च **स्वः** स्वर्लोकस्य ज्योतिरात्मनः सूर्यस्य **दृशीके** दर्शने **नवन्त** चलन्तु ।। 'विश्वे' के ? रश्मय इति सायणः । सर्वे देवा इति वयं, पूर्वप्रकृतापेक्षया । स्वर्गद्वारापावरणेन ज्योतिर्दर्शने गतिः सम्भवति । **ऋण्वन्**-रवेर्गत्यर्थात् लुङ्, छान्दसः, व्यत्ययेन रेफस्य सम्प्रसारणम् इति सायणः, अथवा 'ऋणु गतौ' इत्यस्मात् ।। ९.१० ।।

।। इति प्रथमाष्टके पञ्चमाध्याये त्रयोदशो वर्गः ।।

## ।। अथ चतुर्दशो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

(सूक्तम् ७०)

११ पराशरः । शाक्त्यः । अग्निः । द्विपदा विराट् ।

**वनेम॑ पू॒र्वीर॒र्यो म॑नी॒षा अ॒ग्निः सु॒शोको॒ विश्वा॒न्यश्याः ।**
**आ दैव्या॑नि व्र॒ता चि॑कि॒त्वाना मानु॑षस्य॒ जन॑स्य॒ जन्म॑ ।। १,२ ।।**
व॒नेम॑ । पू॒र्वीः । अ॒र्यः । म॒नी॒षा । अ॒ग्निः । सु॒ऽशोकः॑ । विश्वा॑नि । अ॒श्याः॒ । आ ।
दैव्या॑नि । व्र॒ता । चि॒कि॒त्वान् । आ । मानु॑षस्य । जन॑स्य । जन्म॑ ।। १,२ ।।

**स्कन्द– वनेम** 'वयं ताः सम्भजेमहि' इत्येतदाशास्महे । किम् । **पूर्वीः** चिरन्तनीः । काः । सामर्थ्यात्समृद्धीराशिषो वा । अयम् अपि **अर्यः** ईश्वरः । **मनीषा** स्तुतिरत्र मनीषोच्यते । सहयोगलक्षणा चैषा तृतीया । मनीषया स्तुत्या सह **अग्निः सुशोकः** सुदीप्तिः । **विश्वानि** सर्वाणि अस्मदीयानि हवींषि **अश्याः** व्याप्नुयादित्याशास्महे । कीदृशो योऽग्निः । उच्यते । **दैव्यानि व्रता** देवानां स्वभूतानि हविर्नयनादिकर्माणि **आ चिकित्वान्** मर्यादया यो ज्ञातवान् । **आ मानुषस्य जनस्य** मनुष्यस्य च कृत्स्नस्य जनस्य **जन्म** आचिकित्वान् । हविर्नयनादिकर्मणां मनुष्याणां च जन्मनो ज्ञातेत्यर्थः ।। १ ।।

**वेङ्कटमाधव–** भजेमहि बहून्यन्नान्यग्निदग्धारण्याज्जातानि । स हि प्रज्ञायुक्तः प्रदाता भवति । सोऽयम् अग्निः सुदीप्तिः **विश्वानि** हवींषि व्याप्नोति । **दैव्यानि** कर्माणि आभिमुख्येन जानन् आजानंश्चैव मानुषस्य जनस्य उत्पत्तिमिति ।। १,२ ।।

**मुद्गल–** 'वनेम' इति द्वैपदमेकादशर्चम् अध्ययनतः षडृचं षष्ठं सूक्तम् । पराशर ऋषिः । विराट् छन्दः । अग्निर्देवता ।

**पूर्वीः** प्रभूता इषः अन्नानि **वनेम** सम्भजेमहि । अग्निस्तादृशान्यन्नानि ददात्वित्यर्थः । **मनीषा** मनीषया बुद्ध्या **अर्यः** गन्तव्यः प्राप्तव्य **सुशोकः** शोभनदीप्तिः । एवम्भूतः अग्निः **विश्वानि** सर्वाणि कर्माणि **अश्याः** अश्नुते व्याप्नोति । किं कुर्वन् । **दैव्यानि** देवेषु भवानि **व्रता** व्रतानि कर्माणि **चिकित्वान् आ** समन्तात् जानन् तथा **मानुषस्य जनस्य** मनुष्यजातस्य **जन्म**

उत्पत्तिरूपं कर्म **आचिकित्वान्** आभिमुख्येन जानन्, द्यावापृथिव्योः सम्बन्धीनि यानि कर्माणि तानि सर्वाण्यवगच्छन् । अवगत्य व्याप्नोतीत्यर्थः ॥ १,२ ॥

**सायण– पूर्वीः** प्रभूता इषोऽन्नानि **वनेम** सम्भजेमहि । अग्निस्तादृशान्यन्नानि ददात्वित्यर्थः । **मनीषा** मनीषया बुद्ध्या **अर्यः** गन्तव्यः प्राप्तव्यः । यद्वा । मनीषया अर्यः स्वामी । **सुशोकः** शोभनदीप्तिः । एवम्भूतः **अग्निः विश्वानि** सर्वाणि कर्माणि **अश्याः** अश्नुते व्याप्नोति । किं कुर्वन् । **दैव्यानि** देवेषु भवानि **व्रता** व्रतानि कर्माणि **चिकित्वान् आ** समन्तात् जानन् । तथा **मानुषस्य जनस्य** मनुष्यजातस्य **जन्म** उत्पत्तिरूपं कर्म **चिकित्वान्** आभिमुख्येन जानन् द्यावापृथिव्योः सम्बन्धीनि यानि कर्माणि तानि सर्वाण्यवगच्छन् । अवगत्य व्याप्नोतीत्यर्थः ॥ **वनेम** । 'वन षण सम्भक्तौ' । शपि प्राप्ते व्यत्ययेन शः । अदुपदेशात् लसार्वधातुकानुदात्तत्वे विकरणस्वरः शिष्यते । **पूर्वीः**- पुरुशब्दात् 'वोतो गुणवचनात्' इति ङीष् । 'हलि च' इति दीर्घः । **मनीषा** । ईषाअक्षादित्वात्प्रकृतिभावः (पा.सू.६.१.१२७.२)। **सुशोकः** । 'शुच दीप्तौ' भावे घञ् । 'चजोः कु घिण्ण्यतोः' इति कुत्वम् । शोभनः शोको यस्य । 'आद्युदात्तं द्व्यच्छन्दसि' इत्युत्तरपदाद्युदात्तत्वम् । **अश्याः** । 'देवत्वा विश्वान्यश्याः' (ऋ.सं.१.६९.६) इतिवत् । **चिकित्वान्** । 'कित ज्ञाने' लिटः क्वसुः ॥ १,२ ॥

**सिद्धाञ्जनम्–** वनेम' इति द्वैपदमेकादशर्चम् अध्ययनतः षडृचं षष्ठं सूक्तम् । ऋष्याद्याः पूर्ववत् । अनुक्रान्तं च- 'वनेमैकादश' इति । विनियोगो लैङ्गिकः ।

वयं **पूर्वीः** बह्वीः सम्पदः **वनेम** सम्भजेमहि, प्राप्नुयाम । **मनीषा** मनीषया बुद्ध्या **अर्यः** स्वामी, बुद्धिसम्पन्नत्वात् स्वामित्वमग्नेः, मनीषया अर्यः प्राप्तव्य इत्येके । **सुशोकः** सुतरामुज्ज्वलन् अग्निः, **विश्वानि** सर्वाणि सन्ति वस्तूनि **अश्याः** प्राप्नुयात् । स्वामी सर्वस्यापि स्वाम्यं लभताम्, सर्वं स्वाधीनं करोतु । सः **दैव्यानि** देवसम्बन्धीनि **व्रता** व्रतानि कर्मविधानानि **आ चिकित्वान्** समन्तात् सार्वात्म्येनेत्यर्थः ज्ञातवान् । तथा सः **मानुषस्य जनस्य** मनुष्यस्य **जन्म** उत्पत्तिं **आ चिकित्वान्** मानुषस्योत्पत्त्यादिरहस्यं च जानाति ॥ **पूर्वीः**-पुरुशब्दात् ङीष् । **मनीषा**- ईषा-अक्षादित्वात् प्रकृतिभावः । **सुशोकः**- 'शुच दीप्तौ, भावे घञ् । **अश्याः**- 'अशू व्याप्तौ, व्यत्ययेन परस्मैपदम् । **चिकित्वान्**- 'कित ज्ञाने' क्वसुः ॥ १,२ ॥

## ऋक्संहिता पदपाठसहिता

**गर्भो यो अपां गर्भो वनानां गर्भश्च स्थातां गर्भश्चरथाम् ।**
**अद्रौ चिदस्मा अन्तर्दुरोणे विशां न विश्वो अमृतः स्वाधीः ।। ३,४ ।।**
**गर्भः । यः । अपाम् । गर्भः । वनानाम् । गर्भः । च । स्थाताम् । गर्भः । चरथाम् ।**
**अद्रौ । चित् । अस्मै । अन्तः । दुरोणे । विशाम् । न । विश्वः । अमृतः । सुऽआधीः ।।**

**स्कन्द– यः** अग्निः **अपाम् गर्भः** । वैद्युतात्मना ह्यग्निः अद्भ्य उत्पद्यते । अतोऽपां गर्भ उच्यते । यश्च **गर्भः वनानाम्** वृक्षाणाम् । ततोऽप्यग्नेरुत्पत्तिदर्शनात् । **गर्भश्च, स्थाताम्** स्थावराणां च । यो गर्भस्तृणौषध्यादीनाम् । ततोऽप्यग्नेरुत्पत्तिदर्शनात् । **गर्भश्चरथाम्** चरतिर्गत्यर्थः । जङ्गमानां च मनुष्यादीनां यो गर्भः, तदुदरेषु जाठरात्मना विद्यमानत्वात् अग्न्यादिभ्यो वा लोकोत्पत्तिदर्शनात् । यस्य च **अद्रौ चित्** षष्ठ्यर्थे चात्र सप्तमी । 'अन्तः' इत्येतेन चास्य सम्बन्धः । अद्रेरपि **अन्तः** पर्वतस्यापि मध्ये । **अस्मै** इयमपि षष्ठ्यर्थे चतुर्थी । अस्याग्नेः । **दुरोणे** प्रथमार्थे एषा सप्तमी । दुरोणं गृहम् । यस्याग्नेः गृहाणामपि मध्ये स्थानमित्यर्थः । यश्च **विशाम्** यष्टॄणां स्तोतॄणां च मनुष्याणाम् **विश्वः** सर्वः । सर्वकार्यकरत्वाच्च सर्व इति व्यपदेशः । 'न'शब्दस्तु उपरिष्टादुपचार उपमार्थीयत्वात् 'अस्त्युपमार्थीयस्य सम्प्रत्यर्थे प्रयोगः' (तु.या.७,३१) इति पदपूरणः । कीदृशः । **अमृतः** मरणवर्जितः । **स्वाधीः** कल्याणचित्तः । य ईदृशस्तस्य किमित्युत्तरयर्चैकवाक्यता ।। ३,४ ।।

**वेङ्कटमाधव–** पुत्रः यः **अपाम्,** पुत्रः वृक्षाणाम्, **गर्भश्च** स्थावराणाम्, **गर्भः** जङ्गमानाम् अग्निः । तस्मै एव **अद्रौ** इव **अन्तः** गृहे च परिचरन्ति । सोऽयम् **विशाम्** च निवेशको भवति **अमृतः** सुकर्मा । समुच्चये नकारः ।। ३,४ ।।

**मुद्गल– यः** अग्निः **अपाम् गर्भः** गर्भवदन्तर्वर्ती अपानपात्संज्ञः । यश्च **वनानाम्** अरण्यानाम् **गर्भः** दावाग्निरूपेण तन्मध्ये वर्तते । यश्च **स्थातां** स्थावरणां काष्ठादीनाम् **गर्भः** अन्तरवस्थाता । **चरथां** चरणवतां जङ्गमानाम् **गर्भः** जाठररूपेण देहमध्येऽवतिष्ठते । एवम्भूताय **अस्मै** अग्नये **दुरोणे** दुस्तर्यगृहे **अद्रौ चित्** पर्वतेऽपि **अन्तः** मध्ये । हविः प्रयच्छतीति शेषः । सोऽयम् **अमृतः** अमरणधर्माऽग्निः **स्वाधीः** शोभनकर्मयुक्तः । अस्माकं भवत्विति शेषः । दृष्टान्तः– **विश्वः** विवेशयिता राजा **विशां न** प्रजानां यथा रक्षणरूपशोभनकर्मयुक्तो भवति तद्वत् ।। ३,४ ।।

**सायण– यः** अग्निः **अपां गर्भः** गर्भवदन्तर्वर्ती अपानपात्संज्ञः । यश्च **वनानाम्** अरण्यानां **गर्भः** दावाग्निरूपेण तन्मध्ये वर्तते । यश्च **स्थातां** स्थावराणां काष्ठादीनां **गर्भः** अन्तरवस्थाता । **चरथां** चरणवतां जङ्गमानां **गर्भः** जाठररूपेण देहमध्येऽवतिष्ठते । एवम्भूताय **अस्मै** अग्नये **दुरोणे** दुस्तर्यगृहे **अद्रौ चित्** पर्वतेऽपि **अन्तः** मध्ये हविः प्रयच्छन्तीति शेषः । सोऽयम् **अमृतः** अमरणधर्माऽग्निः **स्वाधीः** शोभनकर्मयुक्तः शोभनाध्यानः वा अस्माकं भवत्विति शेषः । तत्र दृष्टान्तः– **विश्वः** निवेशयिता सुखेनावस्थापयिता राजा **विशां न** प्रजानां यथा रक्षणरूप शोभनकर्मयुक्तो भवति तद्वत् ।। **स्थाताम्** । तिष्ठतेः क्विपि छान्दसः तुक् । यद्वा औणादिकः तुप्रत्ययः । आमि अन्त्यलोपश्छान्दसः । **चरथाम्** । 'शीङ्शपिरुगमि' (उ.सू.३.३९३) इति विधीयमानः अथप्रत्ययो बहुलवचनात् चरेरपि द्रष्टव्यः । आगमानुशासनस्यानित्यत्वात् आमो नुडभावे सवर्णदीर्घः । **विश्वः** । 'विश प्रवेशने' । अस्मात् अन्तर्भावितण्यर्थात् 'अशिप्रुषि' इत्यादिना क्वन्प्रत्ययः । नित्त्वादाद्युदात्तत्वम् ।। ३,४ ।।

**सिद्धाञ्जनम्– यः** योऽसावग्निः **अपाम् गर्भः** अपां शिशुः, अप्सु जातत्वात् । **वनानाम् गर्भः** भूतनूरुहाणां शिशुः, यद्यपि 'आपः वनम्' इति सङ्केतशब्दौ क्रमशः 'शक्तीनां पुत्रः, आनन्दानां पुत्रः' इति च प्रतिपादयतः, तथापि सर्वान्तर्यामी भगवानग्निः चराचरात्मकाज्जगतः यथाकालं यथाविधि यथास्वीयदैवरहस्यं प्रादुर्भवतीति बोध्यम् । तदेव स्पष्टीक्रियते । **स्थाताम् च गर्भः** स्थावराणां च शिशुः, **चरथां गर्भः** तथा जङ्गमानां शिशुः । **अद्रौ चित्** अश्मन्यपि **अस्मै** मानुषाय वर्तते, **दुरोणे** गृहे **अन्तः** मध्ये, गृहमध्ये वर्तते । **विशाम्** जनानां सर्वेषां **विश्वो** न समष्टिभूत एको विश्वात्मेव भवति । **सः अमृतः** मरणरहितः नित्यः, **स्वाधीः** सुष्टु आध्याता साधिष्ठो ध्यानी ।। **स्थाताम्**- 'तिष्ठतेः क्विप्, छान्दसस्तुक्, आमि अन्त्यलोपश्छान्दसः । **चरथाम्**-चरतेरथप्रत्ययः, आमो नुडभावः । **विश्वः**- 'विश प्रवेशने', अस्मादन्तर्भावितण्यर्थात् क्वन्प्रत्ययः ।। ३,४ ।।

## ऋक्संहिता पदपाठसहिता

**स हि क्षपावाँ अग्नी रयीणां दाशद्यो अस्मा अरं सूक्तैः ।**
**एता चिकित्वो भूमा नि पाहि देवानां जन्म मर्तांश्च विद्वान् ।। ५,६ ।।**

## ऋक्संहिता पदपाठसहिता

**गर्भो यो अपां गर्भो वनानां गर्भश्च स्थातां गर्भश्चरथाम् ।**
**अद्रौ चिदस्मा अन्तर्दुरोणे विशां न विश्वो अमृतः स्वाधीः ।। ३,४ ।।**
**गर्भः । यः । अपाम् । गर्भः । वनानाम् । गर्भः । च । स्थाताम् । गर्भः । चरथाम् । अद्रौ । चित् । अस्मै । अन्तः । दुरोणे । विशाम् । न । विश्वः । अमृतः । सुऽआधीः ।।**

**स्कन्द– यः** अग्निः **अपाम् गर्भः** । वैद्युतात्मना ह्यग्निः अभ्द्य उत्पद्यते । अतोऽपां गर्भ उच्यते । यश्च **गर्भः वनानाम्** वृक्षाणाम् । ततोऽप्यग्नेरुत्पत्तिदर्शनात् । **गर्भश्च, स्थाताम्** स्थावराणां च । यो गर्भस्तृणौषध्यादीनाम् । ततोऽप्यग्नेरुत्पत्तिदर्शनात् । **गर्भश्चरथाम्** चरतिर्गत्यर्थः । जङ्गमानां च मनुष्यादीनां यो गर्भः, तदुदरेषु जाठरात्मना विद्यमानत्वात् अग्न्यादिभ्यो वा लोकोत्पत्तिदर्शनात् । यस्य च **अद्रौ चित्** षष्ठ्यर्थे चात्र सप्तमी । 'अन्तः' इत्येतेन चास्य सम्बन्धः । अद्रेरपि **अन्तः** पर्वतस्यापि मध्ये । **अस्मै** इयमपि षष्ठ्यर्थे चतुर्थी । अस्याग्नेः । **दुरोणे** प्रथमार्थे एषा सप्तमी । दुरोणं गृहम् । यस्याग्नेः गृहाणामपि मध्ये स्थानमित्यर्थः । यश्च **विशाम्** यष्टॄणां स्तोतॄणां च मनुष्याणाम् **विश्वः** सर्वः । सर्वकार्यकरत्वाच्च सर्व इति व्यपदेशः । 'न'शब्दस्तु उपरिष्टादुपचार उपमार्थीयत्वात् 'अस्त्युपमार्थीयस्य सम्प्रत्यर्थे प्रयोगः' (तु.या.७,३१) इति पदपूरणः । कीदृशः । **अमृतः** मरणवर्जितः । **स्वाधीः** कल्याणचित्तः । य ईदृशस्तस्य किमित्युत्तरयर्चैकवाक्यता ।। ३,४ ।।

**वेङ्कटमाधव–** पुत्रः यः **अपाम्,** पुत्रः वृक्षाणाम्, **गर्भश्च** स्थावराणाम्, **गर्भः** जङ्गमानाम् अग्निः । तस्मै एव **अद्रौ** इव **अन्तः** गृहे च परिचरन्ति । सोऽयम् **विशाम्** च निवेशको भवति **अमृतः** सुकर्मा । समुच्चये नकारः ।। ३,४ ।।

**मुद्गल– यः** अग्निः **अपाम् गर्भः** गर्भवदन्तर्वर्ती अपानपात्संज्ञः । यश्च **वनानाम्** अरण्यानाम् **गर्भः** दावाग्निरूपेण तन्मध्ये वर्तते । यश्च **स्थातां** स्थावरणां काष्ठादीनाम् **गर्भः** अन्तरवस्थाता । **चरथां** चरणवतां जङ्गमानाम् **गर्भः** जाठररूपेण देहमध्येऽवतिष्ठते । एवम्भूताय **अस्मै** अग्नये **दुरोणे** दुस्तर्यगृहे **अद्रौ चित्** पर्वतेऽपि **अन्तः** मध्ये । हविः प्रयच्छतीति शेषः । सोऽयम् **अमृतः** अमरणधर्माऽग्निः **स्वाधीः** शोभनकर्मयुक्तः । अस्माकं भवत्विति शेषः । दृष्टान्तः– **विश्वः** विवेशयिता राजा **विशां न** प्रजानां यथा रक्षणरूपशोभनकर्मयुक्तो भवति तद्वत् ।। ३,४ ।।

**सायण–** **यः** अग्निः **अपां गर्भः** गर्भवदन्तर्वर्ती अपानपात्संज्ञः । यश्च **वनानाम्** अरण्यानां **गर्भः** दावाग्निरूपेण तन्मध्ये वर्तते । यश्च **स्थातां** स्थावराणां काष्ठादीनां **गर्भः** अन्तरवस्थाता । **चरथां** चरणवतां जङ्गमानां **गर्भः** जाठररूपेण देहमध्येऽवतिष्ठते । एवम्भूताय **अस्मै** अग्नये **दुरोणे** दुस्तर्यगृहे **अद्रौ चित्** पर्वतेऽपि **अन्तः** मध्ये हविः प्रयच्छन्तीति शेषः । सोऽयम् **अमृतः** अमरणधर्माऽग्निः **स्वाधीः** शोभनकर्मयुक्तः शोभनाध्यानः वा अस्माकं भवत्विति शेषः । तत्र दृष्टान्तः– **विश्वः** निवेशयिता सुखेनावस्थापयिता राजा **विशां न** प्रजानां यथा रक्षणरूप शोभनकर्मयुक्तो भवति तद्वत् ।। **स्थाताम्** । तिष्ठतेः क्विपि छान्दसः तुक् । यद्वा औणादिकः तुप्रत्ययः । आमि अन्त्यलोपश्छान्दसः । **चरथाम्** । 'शीङ्शपिरुगमि' (उ.सू.३.३९३) इति विधीयमानः अथप्रत्ययो बहुलवचनात् चरेरपि द्रष्टव्यः । आगमानुशासनस्यानित्यत्वात् आमो नुडभावे सवर्णदीर्घः । **विश्वः** । 'विश प्रवेशने' । अस्मात् अन्तर्भावितण्यर्थात् 'अशिप्रुषि' इत्यादिना क्वन्प्रत्ययः । नित्त्वादाद्युदात्तत्वम् ।। ३,४ ।।

**सिद्धाञ्जनम्–** **यः** योऽसावग्निः **अपाम् गर्भः** अपां शिशुः, अप्सु जातत्वात् । **वनानाम् गर्भः** भूतनूरुहाणां शिशुः, यद्यपि 'आपः वनम्' इति सङ्केतशब्दौ क्रमशः 'शक्तीनां पुत्रः, आनन्दानां पुत्रः' इति च प्रतिपादयतः, तथापि सर्वान्तर्यामी भगवानग्निः चराचरात्मकाज्जगतः यथाकालं यथाविधि यथास्वीयदैवरहस्यं प्रादुर्भवतीति बोध्यम् । तदेव स्पष्टीक्रियते । **स्थाताम् च गर्भः** स्थावराणां च शिशुः, **चरथां गर्भः** तथा जङ्गमानां शिशुः । **अद्रौ चित्** अश्मन्यपि **अस्मै** मानुषाय वर्तते, **दुरोणे** गृहे **अन्तः** मध्ये, गृहमध्ये वर्तते । **विशाम्** जनानां सर्वेषां **विश्वो** न समष्टिभूत एको विश्वात्मेव भवति । **सः अमृतः** मरणरहितः नित्यः, **स्वाधीः** सुष्ठु आध्याता साधिष्ठो ध्यानी ।। **स्थाताम्**- 'तिष्ठतेः क्विप्, छान्दसस्तुक्, आमि अन्त्यलोपश्छान्दसः । **चरथाम्**-चरतेरथप्रत्ययः, आमो नुडभावः । **विश्वः**- 'विश प्रवेशने', अस्मादन्तर्भावितण्यर्थात् क्वन्प्रत्ययः ।। ३,४ ।।

## ऋक्संहिता पदपाठसहिता

**स हि क्षपावाँ अग्नी रयीणां दाशद्यो अस्मा अरं सूक्तैः ।**
**एता चिकित्वो भूमा नि पाहि देवानां जन्म मर्ताँश्च विद्वान् ।। ५,६ ।।**

**सः । हि । क्षपाऽवान् । अग्निः । रयीणाम् । दाशत् । यः । अस्मै । अरम् । सुऽउक्तैः । एता । चिकित्वः । भूम । नि । पाहि । देवानाम् । जन्म । मर्तान् । च । विद्वान् ।।**

**स्कन्द–** हिशब्दः पदपूरणः । **सः क्षपावान्** 'क्षप' (निघ.१,७) इति रात्रिनाम । रात्रिमान् । यद्यपि चोभाभ्याम् अहोरात्राभ्याम् अग्निः सम्बद्धः, तथापि रात्रावतिशयेन दीप्तियोगादयं तद्व्यपदेशः । अथवा क्षपयन्ति निर्वीर्यतामिति क्षपाः स्तुतय इहोच्यन्ते । स्तुतयो हि वीर्य वृद्धिकरत्वाद् देवतानां निर्वीर्यतां क्षपयन्ति । तद्वान् **अग्निः, रयीणाम्** द्वितीयार्थे षष्ठ्येषा । धनानि **दाशत्** ददाति । कस्मै । उच्यते । **यः अस्मै** अग्नये **अरम्** समर्थः ऋक्समुदायलक्षणैः **सूक्तैः** । तृतीयानिर्देशात् स्तोतुमिति वाक्यशेषः । **यः** एनम् अग्निं सूक्तैः शक्नोति स्तोतुमित्यर्थः । परोऽर्धर्चः प्रत्यक्षकृतत्वाद् भिन्नं वाक्यम् । **एता** एतानि हे **चिकित्वः** ज्ञातः! **भूम** भूतान्यस्मदीयानि **नि पाहि** नियमेन रक्ष । **देवानाम् जन्म मर्तान् च विद्वान्** । यावत् किञ्चित् सर्वं जानन्नित्यर्थः ।। ५,६ ।।

**वेङ्कटमाधव–** स हि रात्रिमान् **अग्निः** धनानि ददातु, **य अस्मै** पर्याप्तौ भवति **सूक्तैः** एभिः । एतानि प्राज्ञ! भूतानि **निपाहि** देवानां मनुष्याणां **च** उत्पत्तिस्थानं जानन् ।। ५,६ ।।

**मुद्गल– स हि अग्निः, क्षपावान्** रात्रिमान् । एवम्भूतोऽग्निः, स्तोत्रे यजमानाय **रयीणाम्** धनानि **दाशत्** दाशति प्रयच्छति । **यः** यजमानः **अस्मै** अग्नये **सूक्तैः** यथाशास्त्रप्रयुक्तैर्मन्त्रैः **अरम्** अलं पर्याप्तं स्तोत्रं करोति, तस्मै इत्यर्थः । हे **चिकित्वः** ! सर्वज्ञ! अग्ने । त्वम् **देवानाम्** इन्द्रादीनाम् **जन्म** जन्मानि **मर्तान्** मनुष्यान् **विद्वान्** जानन् **एता** एतानि **भूम** भूम्युपलक्षितानि भूतजातानि **नि पाहि** नितरां पालय । यतस्त्वं देवमनुष्यादीन् सर्वान् जानासि अत एवम् उच्यत इत्यर्थः ।। ५,६ ।।

**सायण– स हि अग्निः क्षपावान्** । क्षपा इति रात्रिनाम। रात्रिमान् । 'आग्नेयी वै रात्रिः' (तै.ब्रा.२.१.२.७) इति श्रुतेः । रात्रेरग्निसम्बन्धोऽपि 'अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा' (तै.आ. ४.१०.५) इति हूयमानत्वात् । यद्वा । राक्षसादीनां क्षपणेन नाशनेन युक्तः । एवम्भूतोऽग्निः, स्तोत्रे यजमानाय **रयीणां** धनानि **दाशत्** दाशति प्रयच्छति । **यः** यजमानः **अस्मै** अग्नये **सूक्तैः** सुष्टूक्तैर्यथाशास्त्रं प्रयुक्तैर्मन्त्रैः **अरम्** अलं पर्याप्तं स्तोत्रं करोति तस्मै इत्यर्थः । हे **चिकित्वः!**

'चिकित्वांश्चेतनावान्' (निरु.२.११) इति यास्कः । हे चेतनावन् सर्वज्ञाग्ने! त्वं, **देवानाम्** इन्द्रादीनां **जन्म** जन्मानि **मर्तान्** मनुष्यान् च **विद्वान्** जानन् **एता** एतानि **भूम** भूम्युपलक्षितानि भूतजातानि **नि पाहि** नितरां पालय । यतस्त्वं देवमनुष्यादीन् सर्वान् जानासि अत एवमुच्यसे इत्यर्थः ।। **रयीणाम्** । 'क्रियाग्रहणं कर्तव्यम्' इति कर्मणः सम्प्रदानत्वात् चतुर्थ्यर्थे षष्ठी । **दाशत्** । 'दाशृ दाने' । लेटि अडागमः । **अरम्** । 'वालमूल' इत्यादिना लत्वविकल्पः । **सूक्तैः** । 'सूपमानात् कः' (पा.सू.६.२.१४५) इत्युत्तरपदान्तोदात्तत्वम् । **चिकित्वः** । 'मतुवसो रुः' इति नकारस्य रुत्वम् । **भूम** । 'सुपां सुलुक्' इति भूमिशब्दादुत्तरस्या द्वितीयाया डादेशः । पदकाले ह्रस्वश्छान्दसः ।। ५,६ ।।

## ऋक्संहिता पदपाठसहिता

**वर्धान्यं पूर्वीः क्षपो विरूपाः स्थातुश्च रथमृतप्रवीतम् ।**
**अराधि होता स्व१र्निषत्तः कृण्वन्विश्वान्यपांसि सत्या ।। ७,८ ।।**
**वर्धान् । यम् । पूर्वीः । क्षपः । विऽरूपाः । स्थातुः । च । रथम् । ऋतऽप्रवीतम् । अराधि । होता । स्वः । निऽसत्तः । कृण्वन् । विश्वानि । अपांसि । सत्या ।। ७,८ ।।**

**स्कन्द–** **वर्धान्** वर्धयन् **यम्** अग्निम् **पूर्वीः** क्षपः क्षपा रात्रय स्तुतयो वा । **विरूपाः** नानारूपाः । **स्थातुश्च** स्थावरस्य च । चशब्दात् जङ्गमस्येति वाक्यशेषः । ओषधीहविषः पशुहविषश्चेत्यर्थः । **रथम्** रथस्थानीयम् । वोढारमित्यर्थः । **ऋतप्रवीतम्** ऋतो यज्ञः, तत्र प्रजातं प्रगतं वा । यज्ञार्थमुत्पन्नं यज्ञे वा व्यवस्थितं सन्तम् इत्यर्थः । यच्छब्दश्रुतेस्तच्छब्दोऽध्याहर्तव्यः । स **अराधि** आराधयति देवान् **होता स्वः** सर्वत्र यज्ञे **निषत्तः** निषण्णः । **कृण्वन् विश्वानि अपांसि** हविर्भवनादानि स्वकर्माणि यागकर्माणि वा **सत्या** अविसवादीनि ।। ७,८ ।।

**वेङ्कटमाधव–** वर्धयन्ति यम् बह्व्यः रात्र्यः नानारूपाः **स्थातुः** ओषध्यादेः अपि स्वर्गप्रापकं सत्येन परिवीतम्, अपि वा यज्ञेन निषिक्तम् । ऋद्धोऽभवद् होता अग्निः सर्वत्र यज्ञेषु **निषण्णः कृण्वन्** सर्वाणि कर्माणि सत्यानि ।। ७,८ ।।

**मुद्गल–** **पूर्वीः** बह्व्यः उषसः **क्षपः** निशाश्च **विरूपाः** शुक्लकृष्णतया विविधरूपाः सत्यः **यम्** अग्निम् **वर्धान्** वर्धयन्ति, तथा **स्थातुः** स्थावरं वृक्षादिकम् **रथम्** रममाणं जङ्गमं

मनुष्यादिकञ्च **ऋतप्रवीतम्** ऋतेनोदकेन प्रकर्षेण वेष्टितं यम् अग्निं वर्धयन्ति । सोऽग्निः **स्वः** सुष्टु अरणीये देवयजने **निषत्तः** निषण्ण उपविष्टः सन् **होता** देवानामाह्वाता **अराधि** संसिद्धोऽभूत् । किं कुर्वन् । **विश्वानि** सर्वाणि **सत्या** सत्सु यजमानेषु भवानि **अपांसि** कर्माणि **कृण्वन्** कुर्वन् ।।

**सायण– पूर्वीः** बह्व्यः उषसः **क्षपः** निशाः च **विरूपाः** शुक्लकृष्णतया विविधरूपाः संत्यः **यम्** अग्निं **वर्धान्** वर्धयन्ति । तथा **स्थातुः** स्थावरं वृक्षादिकं **रथं** रममाणं जङ्गमं मनुष्यादिकं च **ऋतप्रवीतम्** ऋतेनोदकेन सत्येन यज्ञेन वा प्रकर्षेण वेष्टितं यमग्निं वर्धयन्ति सोऽग्निः **स्वः** सुष्टु अरणीये देवयजने **निषत्तः** निषण्ण उपविष्टः सन् **होता** देवानामाह्वाता **अराधि** संसिद्धोऽभूत् । यद्वा । ऋत्विग्भिरराधि आराधित इत्यर्थः । किं कुर्वन् । **विश्वानि** सर्वाणि **सत्या** सत्सु यजमानेषु भवानि यद्वा सत्यफलानि **अपांसि** कर्माणि **कृण्वन्** कुर्वन् ।। **वर्धान्** । वृधेर्ण्यन्तात् लेटि आडागमः । 'छन्दस्युभयथा' इति शप आर्धधातुकत्वात् णिलोपः । 'इतश्च लोपः' इति इकारलोपे संयोगान्तलोपः । **ऋतप्रवीतम्** । 'व्येञ् संवरणे' अस्मात् कर्मणि निष्ठा । 'वचिस्वपि' इत्यादिना सम्प्रसारणम् । कृद्ग्रहणे गतिकारकपूर्वस्य ग्रहणात् 'तृतीया कर्मणि' इति पूर्वपदप्रकृति-स्वरत्वम् । **अराधि** । 'राध साध संसिद्धौ' । कर्तरि लुङि व्यत्ययेन च्लेः चिण् ।।७,८।।

**सिद्धाञ्जनम्– पूर्वीः** बह्व्यः **विरूपाः** विविधाकाराः **क्षपः** रात्रयः **यम्** यमग्निं, **वर्धान्** वर्धयन्ति, अप्रकाशदशासु रात्रिपदवेदनीयासु अग्नेर्वर्धनं भवत्येव, न तस्य तमोवृतत्वम्, एकैकापि तादृशी दशा अन्यादृशी । एवं स्वस्ववैलक्षण्यं द्योतयितुं रात्रीणां बहुवचनम् । **स्थातुः** स्थावरं **रथं च** रंहणशीलं जङ्गमं च, चराचरात्मकमित्यर्थः । **ऋतप्रवीतम्** ऋतेन सत्येन प्रवीतं प्रकर्षेण आविर्भावितं, सत्यात् प्रादुर्भूयागतमित्यर्थः । एवम्भूतं यम् अग्निं वर्धयन्ति **होता** आह्वाता सोऽग्निः **अराधि** असाधि अस्मदर्थ साधितः निष्पादितो भवतीत्यर्थः । कथम्भूतः? **स्वः** ज्योतिर्मये स्वर्लोके **निषत्तः** निषण्णः आसीनः, **विश्वानि** सर्वाणि **अपांसि** कर्माणि अस्मदीयानि **सत्या** सत्यानि **कृण्वन्** कुर्वन्, एवम्भूतः अराधि ।। **वर्धान्**-वृधेर्ण्यन्ताल्लेट्, णिलोपः। **अराधि**- 'राध साध संसिद्धौ' लुङ् ।। ७,८ ।।

## ऋक्संहिता पदपाठसहिता

**गोषु प्रशस्तिं वनेषु धिषे भरन्त विश्वे बलिं स्वर्णः ।**
**वि त्वा नरः पुरुत्रा संपर्यन्पितुर्न जिव्रेर्वि वेदो भरन्तः ।। ९,१० ।।**

**गोषु । प्रऽशस्तिम् । वनेषु । धिषे । भरन्त । विश्वे । बलिम् । स्वः । नः ।
वि । त्वा । नरः । पुरुऽत्रा । सपर्यन् । पितुः । न । जिव्रेः । वि । वेदः । भरन्त ॥**

**स्कन्द– गोषु, प्रशस्तिम्** प्रशंसाम् । **वनेषु** वननीयेषु चाश्वादिषु । उदकनाम वा वनशब्दः (तु.निघ.१,१२) । उदकेषु । **धिषे** धारयसि त्वम् । गा वननीयांश्चाश्वादीन् उदकानि वा प्रशस्तानि त्वं करोषीत्यर्थः । किञ्च **भरन्त** हरन्ति त्वां प्रति प्रापयन्ति । तुभ्यं ददतीत्यर्थः । **विश्वे, बलिम्** हविर्लक्षणम् **स्वः** सर्वम् । यावत् दातुं योग्यं तत् समस्तमित्यर्थः । **नः** अस्माकं स्वभूताः ऋत्विजः पुत्रादयो वा । किञ्च **त्वा नरः, पुरुत्रा** बहुषु स्थानेषु **वि सपर्यन्** विविधं परिचरन्ति । **पितुर्न जिव्रेः** यथा च पितुः जीर्णस्य स्वभूतम् वेदः धनं निवृत्तरजसि मातरि पित्राऽनुज्ञाताः पुत्राः विभजन्ते एवं देवास्त्वदीयं धनम् **वि भरन्त** विविधं हरन्ति आत्मानं प्रति प्रापयन्ति । विभजन्तीत्यर्थः । अथवा **वेदः** अत्र हविर्लक्षणं धनम् अभिप्रेतम् । यथा पितुर्जीर्णस्य पुत्राः आदरेण विविधम् अन्नमुपहरन्ति एवं भवतो हविरित्यर्थः ।। ९,१० ।।

**वेङ्कटमाधव– गोषु** प्रशस्तं पयः धारयसि, या गावः वनेषु चरन्ति, **भरन्त** च । **विश्वे बलिम्** शोभनम् अस्मभ्यम् । त्रिविधं त्वाम् **नरः** पूजयन्ति । अनेकेषु गृहेषु, **पितुः** इव जीर्णात् धनं त्वदीयं हरन्ति ।। ९,१० ।।

**मुद्गल–** हे अग्ने! त्वम्, **वनेषु** वननीयेषु सम्भजनीयेषु पशुषु । **प्रशस्तिम्** प्रशंसाम् । **धिषे** दधिषे स्थापयसि । अस्माकं प्रशस्ता गवादिपशवो भवन्त्वित्यर्थः । **विश्वे** सर्वे जनाः **नः** अस्मभ्यम् । **स्वः** सुष्ठु अरणीयम् । **बलिम्** उपायनरूपं धनम् । **भरन्त** आहरन्तु । हे अग्ने! **त्वा** त्वाम् **नरः** मनुष्याः । **पुरुत्रा** बहुषु देवयजनदेशेषु । **वि सपर्यन्** विविधं पूजयन्ति । पूजयित्वा, **वेदः** धनम् । **वि भरन्त** त्वत्तो विशेषेण हरन्ति । गृह्णन्तीत्यर्थः । दृष्टान्तः । **जिव्रेः** जीर्णाद् वृद्धात् **पितुः न** पितुरिव । यथा पुत्राः वृद्धात् पितुः सकाशाद् धनं हरन्ति तद्वत् ।। ९,१० ।।

**सायण–** हे अग्ने! त्वं **वनेषु** वननीयेषु सम्भजनीयेषु **गोषु** अस्मदीयेषु पशुषु **प्रशस्तिं** प्रशंसां **धिषे** दधिषे स्थापयसि । अस्माकं प्रशस्ता गवादिपशवो भवन्त्वित्यर्थः । **विश्वे** सर्वे जनाः **नः** अस्मभ्यं **स्वः** सुष्टु अरणीयं **बलिम्** उपायनरूपं धनं **भरन्त** आहरन्तु । हे अग्ने!

**त्वा** त्वां **नरः** मनुष्याः **पुरुत्रा** बहुषु देवयजनदेशेषु **वि सपर्यन्** विविधं पूजयन्ति । पूजयित्वा च **वेदः** धनं **वि भरन्त** त्वत्तो विशेषेण हरन्ति, गृह्णन्तीत्यर्थः । तत्र दृष्टान्तः । **जिव्रेः** जीर्णाद् वृद्धात् **पितुर्न** पितुरिव । यथा पुत्रा वृद्धात् पितुः सकाशाद्धनं हरन्ति तद्वत् ।। **धिषे** । छान्दसो वर्तमाने लिट् । 'द्विर्वचनप्रकरणे छन्दसि वेति वक्तव्यम्' (का.६.१.४.१) इति द्विर्वचनाभावः । **भरन्त** । 'हृञ् हरणे' । केवलोऽपि सोपसर्गार्थो द्रष्टव्यः । छान्दसो लङ् । 'हृग्रहोर्भः' इति भत्वम् । **पुरुत्रा** ।' देवमनुष्यपुरुषपुरुमर्त्य' इत्यादिना सप्तम्यर्थे त्राप्रत्ययः । **जिव्रेः** । 'जॄष् वयोहानौ' । 'जॄशॄस्तॄजागृभ्यः क्विन्' (उ.सू.४.४९४) । 'ॠत इद्धातोः' इति इत्वम् । 'उणादयोऽव्युत्पन्नानि प्रातिपदिकानीति जिव्रिः किर्योर्गिर्योरित्येवमादिषु दीर्घो न भवति' (का.८.२.७८) इत्युक्तत्वात् 'हलि च' इति दीर्घस्याभावः । रेफवकारयोर्विपर्ययः । उक्तं च- 'वर्णागमो वर्णविपर्ययश्च' (का.६.३.१०९) इति । नित्त्वादाद्युदात्तत्वम् । वेद इति धननाम । विद्यते लभ्यते इति वेदः । 'विद्लृ लाभे' । कर्मणि असुन् ।। ९,१० ।।

**सिद्धाञ्जनम्–** हे अग्ने! त्वं **गोषु** गवात्मना वर्ण्यमानेषु सौरेषु रश्मिषु चिन्मयेषु, तथा **वनेषु** वननीयेषु सुखमयेषु भूजातेषु पार्थिवतनुसम्भूतेषु च । **प्रशस्तिं** प्रशंसां त्वदीयां उक्तिं **धिषे** धारयसि, प्रतिष्ठापयसि । यजमानस्य ऋषेः ज्ञानप्रकाशवृत्तिषु सुखानुभूतिपु च अग्निप्रशंसा प्रतिष्ठिता भवतीत्यर्थः । **विश्वे** सर्वेऽपि देवाः । **नः** अस्मदर्थं **स्वः** स्वर्लोकं **बलिम्** उपहारं **भरन्त** आहरन्ति । यस्यान्तर्याजिनः पुण्यपुरुषस्य भगवानग्निः 'स्वर्निषत्तः' इत्याद्युक्तलक्षणसम्पन्नः 'अराधि', तस्मै विश्वेऽपि देवाः स्वः उपायनं आहरन्ति । अस्य वाक्यस्य प्रतिध्वनिः तैत्तिरीयश्रुतौ श्रूयते 'सर्वेऽस्मै देवा बलिमावहन्ति' इति । हे अग्ने! **त्वा** त्वां **नरः** मनुष्याः **पुरुत्रा** बहुषु स्थानेषु **वि सपर्यन्** विशेषेण पूजयन्ति, तया सपर्यया **जिव्रेः** वृद्धात् **पितुर्न** पितुः सकाशादिव **वेदो** ज्ञानं धनं वा **वि भरन्त** विशिष्य आहरन्ति । पितुर्धनम् इव अग्नेर्ज्ञानं इति बोध्यम् ।। **धिषे** छान्दसो वर्तमाने लिट् । **भरन्त-** 'हृञ् हरणे' केवलोऽपि सोपसर्गार्थः । **पुरुत्रा** सप्तम्यर्थे त्राप्रत्ययः । **जिव्रेः** 'जॄष् वयोहानौ' अस्मात् क्विन्, 'ॠत इद्धातोः' इति इत्वं, रेफवकारयोविपर्ययः, एवं जिव्रिः ।। ९,१० ।।

**नीतिमञ्जरी–** द्विपदास्वयुक्सङ्ख्यासु या अन्त्या अतिरिच्यते सा तथैव पठितव्येत्युक्तम् । उत्तरा तादृशी द्विपदा ।। ९,१० ।।

## ऋक्संहिता पदपाठसहिता

**साधुर्न गृध्नुरस्तेव शूरो यातेव भीमस्त्वेषः समत्सु ।। ११ ।।**

**साधुः । न । गृध्नुः । अस्ताऽइव । शूरः । याताऽइव । भीमः । त्वेषः । समत्ऽसु ।।**

**स्कन्द– साधुः न गृध्नुः** साधुरिव गृध्नुः अभिकाङ्क्षिता । यथा साधुः पुरुषः न्यायेनैवार्थान् अभिकाङ्क्षति एवम् अग्निः स्तुतीर्हवींषि चेत्यर्थः । **अस्ता इव शूरः** यथा आयुधक्षेपणशीलः पुरुषस्तद्वदग्निः शूरः । **याता इव भीमः** यातिरत्र वधार्थः । 'अहेर्यातारम्' (ऋ.१,३२,१४) इति यथा । हन्तेव भयानकः । **त्वेषः समत्सु** दीप्तश्च सङ्ग्रामस्थानीयेषु यज्ञेषु सङ्ग्रामेष्वेव वा ।। ११ ।।

**वेङ्कटमाधव–** साधयिता इव शत्रूणाम् अभिकाङ्क्षिता, आयुधानाम् क्षेप्तेव शूरः, प्रहर्तेव च भीमः, दीप्तः सङ्ग्रामेष्वग्निरिति । धनमाशास्ते सूक्तेनेति ।। ११ ।।

**मुद्गल–** अयम् अग्निः, **साधुः न** साधक इव **गृध्नुः** परिग्रहीता । यथा साधकः साध्यफलमाशु गृह्णाति तद्वद् अग्निरपि सर्वं स्वीकरोतीत्यर्थः । तथाऽयम् अग्निः **अस्ता इव** शूरो यथा इषूणां क्षेप्ता धानुष्कः शत्रून् प्रेरयति तद्वदग्निरपि दहन् सर्वं प्राणिजातं प्रेरयति । तथा **याता इव भीमः** यथा याता यातयिता हिंसको भीमः सर्वेषां भयङ्करो भवति तद्वदग्निरपि सर्वेषां भय-मुत्पादयति । अत एवंविधोऽग्निः **समत्सु** सङ्ग्रामेषु **त्वेषः** दीप्तः सन् अस्माकं सहायो भवत्वित्यर्थः ।। ११ ।।

**सायण–** अयम् अग्निः, **साधुर्न** साधक इव **गृध्नुः** गृहीता । यथा साधकः साध्यफलमाशु गृह्णाति तद्वदग्निरपि सर्वं स्वीकरोतीत्यर्थः । तथाऽयम् अग्निः, **अस्तेव शूरः** यथा इषूणां क्षेप्ता धानुष्कः शत्रून् प्रेरयति तद्वदग्निरपि दहन् सर्वं प्राणिजातं प्रेरयति । तथा **यातेव भीमः** । **याता** यातयिता हिंसको **भीमः** सर्वेषां भयङ्करो भवति तद्वदग्निरपि दृष्टमात्रेण सर्वेषां भयमुत्पाद-यति । अत एवंविधोऽग्निः **समत्सु** सङ्ग्रामेषु **त्वेषः** दीप्तः सन् अस्माकं सहायो भवत्वित्यर्थः ।। **गृध्नुः** । 'गृधु अभिकांक्षायाम्' । 'त्रसिगृधिधृषिक्षिपेः क्नुः'। **शूरः** । 'शु गतौ' । अन्तर्भावितण्यर्थात् अस्मात् 'शुषिचिमीनां दीर्घश्च' (उ.सू.२.१८३) इति कन् ।। ११ ।।

**सिद्धाञ्जनम्**– सः **साधुर्न** साधयिता इव, कर्मणामिति शेषः, **गृध्नुः** अत्यन्तस्पृहयालुः अभिमतं ग्रहीतुमिति शेषः । **अस्तेव** इष्वस्त्रक्षेप्ता इव **शूरः** शौर्योपेतः । **यातेव** समरे अभियोद्धेव **भीमः** भयङ्करः । **समत्सु** सङ्ग्रामेषु **त्वेषः** जाज्वल्यमाना प्रभा च भवति ।। **गृध्नुः**-गृधु अभिकाङ्क्षायाम्, अस्मात् क्नुः ।। **शूरः**-'शु गतौ, अन्तर्भावितण्यर्थादस्मात् कन् ।। ११ ।।

।। इति प्रथमाष्टके पञ्चमाध्याये चतुर्दशो वर्गः ।।

## ।। अथ पञ्चदशो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

(सूक्तम् ७१)

१० पराशरः । शाक्त्यः । अग्निः । त्रिष्टुप् ।

**उप प्र जिन्वन्नुशतीरुशन्तं पतिं न नित्यं जनयः सनीळाः ।**
**स्वसारः श्यावीमरुषीमजुष्रञ्चित्रमुच्छन्तीमुषसं न गावः ।। १ ।।**

**उप । प्र । जिन्वन् । उशतीः । उशन्तम् । पतिम् । न । नित्यम् । जनयः । सऽनीळाः । स्वसारः । श्यावीम् । अरुषीम् । अजुषून् । चित्रम् । उच्छन्तीम् । उषसम् । न । गावः ।।**

**स्कन्द**– उप इत्युपसर्गश्रुतेर्योग्यक्रियापदाध्याहारः । उपगम्य **प्र जिन्वन्** 'जिन्वतिः प्रीतिकर्मा' (या.६,२२) प्रीणयन्ति प्रीणितवत्यो वाऽग्निम् । काः । सामर्थ्यादाहुतयः । कथम् । **उशतीः उशन्तम् पतिम् न नित्यम्** कौमारम् **जनयः** जायाः **सनीळाः** समानगृहाः । यथैक-गृहवासिन्यो भार्याः परस्परस्पर्धया तैस्तैरुपचारविशेषैः कौमारं भर्तारं कामयमानाः कामयमानं प्रीणयेयुः तद्वदित्यर्थः । **स्वसारः** लुप्तोपममेतद् द्रष्टव्यम् । स्वसार इव । यथा च भगिन्यः भ्रातरं प्रीणयेयुः तद्वदित्यर्थः । अथवा **सनीळाः स्वसारः** इत्येताभ्याम् आहुतयः प्रतिनिर्दिश्यन्ते । समानम् अग्न्याख्यं स्थानं यासां ताः सनीळा आहुतयः । अग्नेरेवैकस्य योग्याः नान्यस्य कस्यचिदित्यर्थः । ता एव एकयजमानप्रभवत्वात् स्वसारः । स्वयंसारित्वाद्वा । किञ्च **अजुषून् चित्रम्** सेवन्ते सेवितवत्यो वा विचित्रं पूजनीयं वाऽग्निम् । कथम् । **श्यावीम् अरुषीम् उच्छन्तीम् उषसम् न** अरुषतिर्गत्यर्थः (तु.निघ.२,१४) । यथा श्याववर्णाङ्गां गमनस्वभाविकां च तमांसि विवासयन्तीम् उषसं सेवेरन् तद्वत् । का अजुषून् । उच्यते । **गावः** स्तुतयोऽत्र गाव उच्यन्ते ।

'गोभिर्यदीमन्ये अस्मत्' (ऋ.८,२,६), इति यथा । यथा आहुतयोऽग्निं प्रीणयन्ति प्रीणितवत्यो वा एवं स्तुतयोऽपि स्तुवन्ति स्तुतवत्यो वेत्यर्थः ।। १ ।।

**वेङ्कटमाधव–** उपाचरन् कामयमानाः कामयमानम् पतिम् इव असाधारणं जायाः एकपतिकाः अङ्गुलय एकस्मात्पाणेरुत्पन्नाः, अञ्जलिकरणात् श्यामवर्णाम् आरोचनशीलाम् अग्नेर्दीप्तिम् चित्रम् **अजुषून्** सेवन्ते **चित्रम् उच्छ्वसन्तीम् उषसम्** इव रश्मयः ।। १ ।।

**मुद्गल–** 'उप प्र' इति दशर्चं सप्तमं सूक्तम् । शक्तिपुत्रः पराशर ऋषिः । त्रिष्टुप् छन्दः । अग्निर्देवता ।। **उशतीः** उशत्यः कामयमानाः । **सनीळाः** समाननिवासस्थाना एकपाण्यवस्थानात् । **स्वसारः** अङ्गुलयः **उशन्तम्** कामयमानम् अग्निम् । **जनयः** जायाः **नित्यम्** असाधारणम् । **पतिं न** भर्तारमिव **उप प्रजिन्वन्** उपेत्य हविष्प्रदानादिकर्मणा प्रीणयित्वा च **चित्रम्** चायनीयं पूजनीयं तमग्निम् अञ्जलिबन्धनेन **अजुषून्** असेवन्त । दृष्टान्तः- **श्यावीम्** श्यामवर्णां रात्रिसम्बन्धात् कृष्णां ततः **उच्छन्तीम्** सूर्यकिरणसम्बन्धात् तमो वर्जयन्तीम्, अत एव **अरुषीम्** आरोचमानाम् **उषसं न** उषोदेवताम् **गावः** रश्मयो यथा सेवन्ते तद्वत् । यथा रश्मय उषसा नित्यसम्बद्धा एवं सर्वेषु यज्ञेषु अग्निपरिचरणेन अङ्गुलयः नित्यसम्बद्धा इति तात्पर्यार्थः ।।१।।

**सायण–** **उशतीः** उशत्यः कामयमानाः । **सनीळाः** । नीळो निवासस्थानम् । समाननिवासस्थानाः एकपाण्यवस्थानात् । **स्वसारः** इत्यङ्गुलिनाम । एवम्भूता अङ्गुलयः । **उशन्तं** कामयमानम् अग्निं **जनयः** जायाः **नित्यम्** असाधारणं **पतिं न** भर्तारमिव **उप प्र जिन्वन्** उपेत्य हविष्प्रदानादिकर्मणा प्रीणयन्ति । प्रीणयित्वा च **चित्रं** चायनीयं पूजनीयं तम् अग्निम् अञ्जलिबन्धनेन **अजुषून्** असेवन्त । तत्र दृष्टान्तः- **श्यावीम्** श्यामवर्णां रात्रिसम्बन्धात् कृष्णां ततः **उच्छन्तीं** सूर्यकिरणसम्बन्धात् तमो वर्जयन्तीम् । अत एव **अरुषीं** आरोचमानां यद्वा शुभ्ररूपयुक्ताम् **उषसं न** उषोदेवतां **गावः** रश्मयो यथा सेवन्ते तद्वत् । यथा रश्मय उषसा नित्यसम्बद्धा एवं सर्वेषु यज्ञेष्वग्निपरिचरणेनाङ्गुलयो नित्यसम्बद्धा इति तात्पर्यार्थः ।। **जिन्वन्** । जिविः प्रीणनार्थः । इदित्त्वात् नुम् । लेटि अडागमः । **उशतीः** । 'वा छन्दसि' इति पूर्वसवर्णदीर्घत्वम् । 'शतुरनुमः' इति नद्या उदात्तत्वम् । **स्वसारः** । 'असु क्षेपणे' इत्यस्मात् 'सुज्यसेर्ऋन्' (उ.सू.२.२५३) इति ऋन् । 'न षट्स्वस्रादिभ्यः' (पा.सू.४.१.१०) इति ङीप्प्रतिषेधः ।

नित्त्वादाद्युदात्तत्वम् । **अरुषीम्** । अरुषमिति रूपनाम । 'ऋ गतौ । 'ऋहनिभ्यामुषच्' (उ.सू.४.५१३)। 'छन्दसीवनिपौ' इति मत्वर्थीय ईकारः । व्यत्ययेनाद्युदात्तत्वम् । **अजुषून्** । 'जुषी प्रीतिसेवनयोः' । तौदादिकः । लङि व्यत्ययेन परस्मैपदम् । 'रुट्' इत्यनुवृत्तौ 'बहुलं छन्दसि' इत्यन्तादेशस्य रुडागमः ।। १ ।।

**सिद्धाञ्जनम्–** 'उप प्र' इति दशर्चं सप्तमं सूक्तम् । अत्रानुक्रम्यते- 'उप प्र दश' इति । 'ऋषिश्चान्यस्मात्' इति परिभाषया शक्तिपुत्रः पराशर ऋषिः । अनादेशपरिभाषया त्रिष्टुप् । 'परमाग्नेयमैन्द्रात्' इति परिभाषितत्वादग्निर्देवता । प्रातरनुवाकस्याग्नेये क्रतौ त्रैष्टुभे छन्दसि इदमादीनि त्रीणि सूक्तानि । 'अथैतस्याः' इति खण्डे तथैव सूत्रितम्-'उप प्र जिन्वन्निति त्रीणि का त उपेतिरिति सूक्ते' (आश्व.श्रौ.४.१३) इति । आश्विनशस्त्रेऽपि प्रातरनुवाकाति देशादिदमादीनि त्रीणि सूक्तानि । तथैव सूत्र्यते- 'एतयाग्नेयं गायत्रमुपसन्तनुयात् प्रातरनुवाक न्यायेन' (आश्व.श्रौ. ६.५) इति ।

**सनीळाः** समानवासस्थानाः । **जनयः** मातरः । **उशन्तम्** कामयमानं (अग्निम्) **उशतीः** कामयमानाः सत्यः **नित्यम् पतिम् न** शाश्वतं भर्तारमिव **उप** उपेत्य **प्र जिन्वन्** प्रकर्षेण अतोषयन् । **उषसम् गावः न** उषःकाले रश्मयः यथा प्रीत्या सेवन्ते, उषसि यथा रताः सन्तुष्टा भवन्तीत्यर्थः, तथा **स्वसारः** सहोदर्यः तमग्निं **अजुषून्** असेवन्त, तस्मिन्नग्नौ तुष्टा अभवन् । अत्र 'उषसं गावो न' इति नेदमुपमामात्रम् । अत्र सङ्केतार्थो बोध्यः । ऋतज्योतिःप्रादुर्भावात् प्राक् प्रज्ञाप्रभाते उषःशब्दप्रतिपादिते 'गावः' चिद्रश्मयः यथा तुष्टा भवन्ति तथा 'मातरः' अग्निं प्रीणयन्ति, 'स्वसारस्तं जुषन्ते' ।। सङ्केतशब्दाः आपः सिन्धवः धेनवो वा मातरो भवन्ति । पोषकत्वान्मातरः, साहचर्यात् स्वसारः इति बोध्यम् । भूमिकायां वैश्वामित्रस्य आग्नेयसूक्तस्योदाहरणे रहस्यार्थः प्रत्यपादि (पृ.७६-७७)। अथ कीदृशं उषसम्? **श्यावीम्** श्याववर्णां सान्ध्यं तेजो बिभ्रतीं **अरुषीम्** आरोचमानां **चित्रं उच्छन्तीम्** विविधवर्णसम्पदा प्रकाशमानाम्, उषसं इति सम्बन्धः ।। अत्रेदमवधार्यम् । उषःकाले यथा क्रमशः प्रथमं रात्रिसम्बन्धात् श्यावो वर्णः, ततः अरुणः, ततः चित्रोज्ज्वलश्च भवति, तथा उषसि चित्प्रभातेऽपि अनुक्षणं विविधं प्रकाशवैशिष्ट्यं लक्षणीयम् ।। **जिन्वन्**- 'जिवि प्रीणने' लेट् । **उशतीः**- वष्टेः शतरि ङीप् । **श्यावीम्**-'शु गतौ' अस्मद्धन्, शार्ङ्गरवादित्वात् ङीन् । **अजुषून्**-जुषतेः लङ्, व्यत्ययेन परस्मैपदम्, अन्तादेशस्य रुडागमः ।। १ ।।

## ऋक्संहिता पदपाठसहिता

**वीळु चिद्दृळ्हा पितरो न उक्थैरद्रिं रुजन्नङ्गिरसो रवेण ।**
**चक्रुर्दिवो बृहतो गातुमस्मे अहः स्वर्विविदुः केतुमुस्राः ॥ २ ॥**

**वीळु । चित् । दृळ्हा । पितरः । नः । उक्थैः । अद्रिम् । रुजन् । अङ्गिरसः । रवेण । चक्रुः । दिवः । बृहतः । गातुम् । अस्मे इति । अहरिति । स्वः । विविदुः । केतुम् । उस्राः ॥ २ ॥**

**स्कन्द–** **वीळु चित्** वीळयतिः संस्तम्भनकर्मा (तु.या.५,१६) । संस्तब्धमपि । अत्यन्ताप्रणतमप्यसुरवर्गमित्यर्थः । **दृळ्हा** दृढानि चासुरपुराणि । **पितरः, नः** अस्माकम् । **उक्थैः** तृतीयानिर्देशाद् योग्यक्रियाध्याहारः । उक्थाख्यैः शस्त्रविशेषैः स्तुवन्तः । कम् । प्रकरणसामर्थ्याद् अग्निम् । **अद्रिम्** दुर्गं पर्वतं चासुराणां स्वभूतम् **रुजन्** भग्नवन्तः **अङ्गिरसः रवेण** शब्देनैव महता । कथं पुनरेतदुच्यतेऽग्निं स्तुवन्तो रुजन्निति । यावता इन्द्रेण सह अङ्गिरसोऽसुरबलादीनि अरुजन् नाग्निना । उच्यते । इन्द्रसाहित्यम् अङ्गिरसां सखित्वात् । इन्द्रसखित्वं च प्रकृष्टाद्धर्मात् । प्रकृष्टश्च धर्मो यागादिरग्न्यायत्तः । अत एतदुच्यते उक्थैः स्तुवन्तो रुजन्निति । एवं चास्या ऋचः आग्नेयत्वमुपपद्यते । किञ्च **चक्रुः दिवः बृहतः गातुम् अस्मे** अस्मानपि सम्यगनुशासनद्वारेण स्वर्गगमनयोग्यान् अङ्गिरसोऽग्निप्रसादेनैव चक्रुरित्यर्थः । किञ्च **अहः** अहश्शब्दोऽग्रकालमात्रोपलक्षणार्थः । कालम्, **स्वः** आदित्यं च **विविदुः** अग्निप्रसादेनैव अङ्गिरसो ज्ञातवन्तः । कीदृशः स्वः । उच्यते । **केतुम्** प्रज्ञानसत्त्वम् । कीदृशाः अङ्गिरसः । उच्यते । **उस्राः** उत्स्राविणः, दातार इत्यर्थः । कस्य । सामर्थ्यात् भोगानां वृष्टेर्वा । अथवा उस्रा इति गोसदृशाः, अत्यन्तजवाः सन्त इत्यर्थः । अथवैवम् अन्यथा उत्तरस्यार्धर्चस्यार्थयोजना । चक्रुरिति सामर्थ्याद्देवानां प्रतिनिर्देशः । कृतवन्तो देवाः । दिवो बृहतो गातुं हवींषि गृहीत्वा महान्तं द्युलोकं प्रति गन्तारम् । कम् । सामर्थ्यादग्निम् । **अस्मे** अस्माकं मनुष्याणाम् अर्थाय । किञ्च **अहः स्वर्विविदुः केतुमुस्राः** । विविदुरिति विन्दतेर्लाभार्थस्येदं रूपम् । 'उस्रा' (निघ.१,५) इति रश्मिनाम । अहश्चादित्यश्च रश्मयश्च, अग्निप्रसादेन केतुं प्रज्ञानं प्रकाशरूपतां लब्धवन्त इत्यर्थः ॥

**वेङ्कटमाधव–** महान्तम् अपि **पितरः** अस्माकं स्तोत्रैः शिलोच्चयम् अरुजन् महता शब्देन । **चक्रुः** । द्युलोकान् महतः गमनम् अस्माकं पितरः, तमसो विनाशेन शोभनम् **अहः** प्रज्ञां रश्मींश्च **विविदुः** ॥ २ ॥

**मुद्गल– नः** अस्माकम् **पितरः अङ्गिरसः** एतत्सञ्ज्ञा ऋषयः । **उक्थैः** शस्त्रैरग्निं स्तुत्वा **वीळु चिद् दृळ्हा** बलवन्तं दृढाङ्गमपि **अद्रिम्** अत्तारं पणिनामानम् असुरम् । **रवेण** स्तुतिशब्दमात्रेण **रुजन्** अभञ्जन् । तैः स्तुतोऽग्निस्तम् असुरं हतवानित्यर्थः । किञ्च **बृहतः** महतः **दिवः** द्युलोकस्य **गातुम्** मार्गम् **अस्मे** अस्माकम् **चक्रुः** कृतवन्तः । आवरकस्यासुरस्याग्निना हतत्वात् । मार्गं कृत्वा **स्वः** सुष्ठु अरणीयम् असुरराहित्येन सुखेन प्राप्यम् **अहः** दिवसम् **विविदुः** अजानन् । तथा **केतुम्** अह्नां केतयितारं ज्ञापयितारम् आदित्यम् **उस्राः** पणिनापहृता गाश्च विविदुरित्यनुषङ्गः ।। २ ।।

**सायण– नः** अस्माकं **पितरः अङ्गिरसः** एतत्सञ्ज्ञा ऋषयः । **उक्थैः** शस्त्रैः अग्निं स्तुत्वा **वीळु चिद्दृळ्हा** । वीळु इति बलनाम । बलवन्तं दृढाङ्गमपि । **अद्रिम्** अत्तारं पणिनामानम् असुरं, **रवेण** स्तुतिशब्दमात्रेणैव **रुजन्** अभञ्जन् । तैः स्तुतोऽग्निस्तम् असुरं हतवानित्यर्थः । किञ्च **बृहतः** महतः **दिवः** द्युलोकस्य **गातुं** मार्गम् **अस्मे** अस्माकं **चक्रुः** कृतवन्तः । आवरकस्यासुरस्याग्निना हतत्वात् । मार्गं कृत्वा च **स्वः** सुष्ठु अरणीयम् असुरराहित्येन सुखेन प्राप्यम् **अहः** दिवसं **विविदुः** अजानन् लब्धवन्तो वा । तथा **केतुम्** अह्नां केतयितारं ज्ञापयितारम् आदित्यम् **उस्राः** पणिनाऽपहृताः गाश्च विविदुरित्यनुषङ्गः ।। **वीळु** । 'सुपां सुलुक्' इति विभक्तेर्लुक् । **दृळ्हा** । 'दृढः स्थूलबलयोः' (पा.सू.७.२.२०) इति निपातितः । 'सुपां सुलुक्' इति ढादेशः । **रुजन्** । 'रुजो भङ्गे' तौदादिकः । 'बहुलं छन्दस्यमाङ्योगेऽपि' इति अडभावः । **विविदुः** । 'विद ज्ञाने' 'विदृ लाभे' इति वा । लिटि उसि रूपम् ।। २ ।।

**सिद्धाञ्जनम्– नः** अस्माकं **पितरः** ऋषयः पूर्वे(पूर्वैः) **उक्थैः** शस्त्रशब्दवाच्यैः मन्त्रवचनैः **वीळु चित्** वीळूनि बलवन्ति अपि **दृळ्हा** दृढानि स्थानानि **रुजन्** अरुजन्, अभञ्जन् । ते अङ्गिरसः पूर्वोक्ता ऋषयः । **रवेण** मन्त्रध्वनिना, हुङ्कारमात्रेण वा **अद्रिम्** दुर्भिदं शिलोच्चयं अरुजन् । अथ च ते **अस्मे** अस्मदर्थं अस्मासु **बृहतः** महतः **दिवः** द्युलोकस्य **गातुम्** मार्गं **चक्रुः** अकुर्वन् । अपि च, **अहः** नित्यप्रकाशोपलक्षणं दिवसं **स्वः** स्वर्लोकं **केतुम्** केतयितारं प्रज्ञापयितारं चिद्रश्मिविशेषं **उस्राः** भ्राजमानाः गोपदवेदनीयाः भासः **विविदुः** अजानन् । ज्ञात्वा लेभिर इत्यर्थः ।। **अङ्गिरसः** सरमापुरःसरेण सह पणीनां पर्वतं गत्वा भित्त्वा च तं अलभन्त गाः इति आङ्गिरसतत्त्वविचारे रहस्यं प्रतिपादितम् । इदमत्र विशेषतोऽवधेयम् । तेन कर्मणा

नः पूर्वे 'सत्यं ऋतं बृहत्' इति वेदोद्घोषितस्य तुरीयस्य धाम्नः मार्गं प्रथमं दृष्ट्वा मानुषाय तं आवेद्य प्रकाशयामासुः । 'स्वः' इति तृतीयव्याहृतेः परस्तात् तुरीयेयं व्याहृतिः 'महः' इति प्रथिता । अस्याः मार्गमात्रं चक्रुः, स्वर्लोकादिकं तु विविदुः, अयं विशेषो बोद्धव्यः ।। **वीळु**-विभक्तेर्लुक् । **दृळ्हा**-दृढः स्थूले बले च, 'सुपां सुलुक्' इति डादेशः । **रुजन्**-'रुज भङ्गे' लङ् । **विविदुः**-'विद ज्ञाने, 'विद्लृ लाभे' वा, लिट् ।। २ ।।

## ऋक्संहिता पदपाठसहिता

**दध॑न्नृ॒तं ध॒नय॑न्नस्य धी॒तिमादिद॒र्यो दि॑धि॒ष्वो॒३॒॑ विभृ॑त्राः ।**
**अतृ॑ष्यन्तीर॒पसो॑ य॒न्त्यच्छा॑ दे॒वाञ्जन्म॒ प्रय॑सा व॒र्धय॑न्तीः ।। ३ ।।**
**दध॑न् । ऋ॒तम् । ध॒नय॑न् । अ॒स्य॒ । धी॒तिम् । आत् । इत् । अ॒र्यः । दि॒धि॒ष्वः॑ । विऽभृ॑त्राः ।**
**अतृ॑ष्यन्तीः । अ॒पसः॑ । य॒न्ति॒ । अच्छ॑ । दे॒वान् । जन्म॑ । प्रय॑सा । व॒र्धय॑न्तीः ।। ३ ।।**

**स्कन्द–** कृत्स्नस्य जगतो धर्ममूलत्वात् तस्य च अग्निमुखत्वात् **दधन्** धारयन्ति अस्मदीयाः स्तुतयः **ऋतम्** सर्वगतम् अग्निम् । गुणधारणाच्चैतदग्नेर्धारणमुच्यते । अग्नेर्गुणान् कीर्तयन्त्यः तेषामपि स्मरणं लोके कुर्वन्तीत्यर्थः । **धनयन्** धन धान्ये पठितः । इह तु सामर्थ्यात् प्रीणनार्थः । धिनोतेर्वा प्रीणनार्थस्येदं रूपम् । प्रीणयन्ति च । **अस्य** अग्नेः **धीतिम्** अपठितमपि प्रज्ञाना-मैतत् । प्रज्ञाम् मनश्चास्याग्नेः प्रीणयन्तीत्यर्थः । **आत् इत्** इति पदपूरणौ । कीदृशश्चास्य स्तुतयः । **अर्यः** अरिः ईश्वर उच्यत । ईश्वराः । अप्रतिहताग्निगुणप्रकाशनसामर्थ्या इत्यर्थः । **दिधिष्वः** सर्वेषाम् अग्निगुणानां धारयित्र्यः । सर्वैरग्निगुणैर्युक्ताः इत्यर्थः । **विभृत्राः** विभृता, अत्यन्त-विभिन्नरूपा इत्यर्थः । प्रीणयित्वा चाग्नेर्मन **अतृष्यन्तीः** तृषाऽत्र कारणभूतः श्रमो लक्ष्यते । अश्राम्यन्त्य इत्यर्थः । **अपसः** । कर्मनामैतत् (तु.निघ.२,१) साहचर्यात् स्तुतिषु प्रयुक्तम् । आहुत्यादिकर्मसहचरिताः । सहाहुत्यादिभिरित्यर्थः । **अच्छ यन्ति** गच्छन्ति आप्तुमन्यानपि **देवान्** । **जन्म** जननात् जन्म भूतजातमुच्यते । कृत्स्नं भूतजातम् । **प्रयसा** वृष्टिद्वारेणान्नेन **वर्धयन्तीः** ।। ३ ।।

**वेङ्कटमाधव–** धारयन्ति अग्निं पूरयन्ति च अस्य कर्म । अनन्तरमेवाग्निः उदारः धारयति **विभृत्राः** । ताः प्रजाः अग्निप्रसादेन पूर्णकामाः कर्माणि अभिगच्छन्ति । **देवान्** जायमाने हविषा वर्धयन्त्यः ।। ३ ।।

**मुद्गल– ऋतम्** देवयजनदेशं प्राप्तम् अग्निम् अङ्गिरसो महर्षयः **दधन्** गार्हपत्यादिरूपेणाऽधारयन् । धारयित्वा च **अस्य** अग्नेः **धीतिम्** कर्म अग्निहोत्रादिलक्षणम् **धनयन्** धनम् अकुर्वन् । यथा पुरुषाः धनं सम्पादयन्ति तद्वदग्निदेवत्यं कर्म अन्वतिष्ठन्नित्यर्थः । **आत् इत्** अङ्गिरसाम् अनुष्ठानानन्तरमेव **अर्यः** अर्याः धनस्वामिन्यः **दिधिष्वः** तेन धनेन दिधिष्वोऽग्नीनां धारणं कुर्वत्यः । कृताग्न्याधाना इत्यर्थः । **विभृत्राः** आहिताग्नीन् अग्निहोत्रादिकर्मणि विहरन्त्यः, **अतृष्यन्तीः** विषयान्तरतृष्णारहिताः, अत एव **अपसः** अपसा कर्मणा युक्ताः । एवम्भूता यजमानलक्षणाः प्रजा **प्रयसा** हविर्लक्षणेनान्नेन **देवान्** इन्द्रादीन् **जन्म** जातान् मनुष्यांश्च **वर्धयन्तीः** वर्धयन्त्यः सत्यः एनम् अग्निम् **अच्छ** आभिमुख्येन **यन्ति** प्राप्नुवन्ति । परिचरन्तीति यावत् ।। ३ ।।

**सायण– ऋतम्** देवयजनदेशं प्राप्तम् अग्निम् अङ्गिरसो महर्षयः **दधन्** गार्हपत्यादिरूपेणाऽधारयन् । धारयित्वा च **अस्य** अग्नेः **धीतिम्** कर्म अग्निहोत्रादिलक्षणम् **धनयन्** धनम् अकुर्वन् । यथा पुरुषाः धनं सम्पादयन्ति तद्वदग्निदेवत्यं कर्म अन्वतिष्ठन्नित्यर्थः । **आत् इत्** अङ्गिरसाम् अनुष्ठानानन्तरमेव **अर्यः** अर्याः धनस्य स्वामिन्यः **दिधिष्वः** तेन धनेन दिधिष्वोऽग्नीनां धारणं कुर्वत्यः । कृताग्न्याधाना इत्यर्थः । **विभृत्राः** आहितान् अग्नीन् अग्निहोत्रादिकर्मणि विहरन्त्यः, **अतृष्यन्तीः** विषयान्तरतृष्णारहिताः, अत एव **अपसः** अपसा कर्मणा युक्ताः । एवम्भूताः यजमानलक्षणाः प्रजा **प्रयसा** हविर्लक्षणेनान्नेन **देवान्** इन्द्रादीन् **जन्म** जातान् मनुष्यांश्च **वर्धयन्तीः** वर्धयन्त्यः सत्यः एनम् अग्निम् **अच्छ** आभिमुख्येन **यन्ति** प्राप्नुवन्ति । परिचरन्तीति यावत् ।।

**दधन्** । 'दध धारणे' लङि व्यत्ययेन परस्मैपदम् । 'बहुलं छन्दस्यमाङ्योगेऽपि' इति अडभावः । **धनयन्** । धनशब्दात् 'तत्करोति' इति णिच् । 'इष्ठवण्णौ प्रातिपदिकस्य' इति इष्ठवद्भावात् टिलोपः । लङि पूर्ववत् । **अर्यः** । 'अर्यः स्वामिवैश्ययोः' (पा.सू.३.१.१०३) इति निपातितः । लिङ्गवचनव्यत्ययौ । 'अर्यः स्वाम्याख्या चेत्' (फि.सू.१७) इत्यन्तोदात्तत्वम् । **विधिष्वः** । 'डु धाञ् धारणपोषणयोः', 'पो अन्तकर्मणि' इत्याभ्याम् 'अन्दूदृम्भूजम्बूकफेलूकर्कन्धूदिधिषूः' (उ.सू.१.९३) इति कूप्रत्ययान्तो निपातितः । प्रत्ययस्वरः । 'उदात्तस्वरितयोर्यणः' इति जसः स्वरितत्वम् । **विभृत्राः** 'हृञ् हरणे'। विपूर्वादस्मादौणादिकः क्त्रप्रत्ययः । 'हृग्रहोर्भः' इति भत्वम् । **अतृष्यन्तीः** ' ञि तृषा पिपासायाम्' । जसि 'वा

छन्दसि' इति पूर्वसवर्णदीर्घस्य विकल्पितत्वात् पूर्वसवर्णदीर्घः । अव्ययपूर्वपदप्रकृतिस्वरत्वम् । **अपसः** । 'अपस्' शब्दादुत्पन्नस्य मत्वर्थीयस्य विनो 'बहुलं छन्दसि' (पा.सू.५.२.१२२) इति बहुलवंचनात् लुक् । विनन्तस्य त्रिलिङ्गत्वेन नब्विषयत्वाभावात् प्रातिपदिकस्वरेणान्तोदात्तत्वम् । **जन्म** । जायन्ते इति जन्मानो मनुष्याः । 'अन्येभ्योऽपि दृश्यन्ते' इति मनिन् । 'सुपां सुलुक्' इति शसो लुक् ।। ३ ।।

**सिद्धाञ्जनम्–** ते अङ्गिरसः **ऋतम्** सत्यं **दधन्** अधारयन् । **अस्य** मनुष्यस्य **धीतिम्** धियं ध्यानशक्तिं वा **धनयन्** समृद्धाम् अकुर्वन् । **आत् इत्** अनन्तरमेव **अर्यः** स्वामिनः, स्वाम्यं प्राप्ताः **दिधिष्वः** धारणधीसम्पन्नाः **विभृत्राः** विशालं यथा तथा अग्निं भर्तुं समर्थाश्च अभवन् । **अतृष्यन्तीः** विषयान्तरतृष्णारहिताः **अपसः** क्रियापराः शक्तयः **देवान्** देवान् प्रति **अच्छा** अभिमुखीभूय **जन्म** नव्यं दिव्यं जननं **प्रयसा** प्रियेण आनन्देन **वर्धयन्तीः** वर्धयन्त्यः सत्यः **यन्ति** गच्छन्ति ।। यदा अङ्गिरसः सत्यं दधानाः मानुषीं धियं च समर्थयन्ति, तदैव ते अग्निं विशिष्य विततं वा भर्तुं स्वामिनो भवन्ति । तस्य फलं तु-शक्तयः क्रियापराः देवान् प्रति गच्छन्ति, येन नव्यस्य दिव्यस्य जन्मन आनन्देन वर्धनं भवति ।। **दिधिष्वः**-दधातिः स्यतिरिति धातुभ्यां द्वाभ्यां कुप्रत्ययान्तो निपातितः । **विभृत्राः**- औणादिकः त्रन्प्रत्ययः । **अतृष्यन्तीः** 'ञि तृषा पिपासायाम्' शतरि, विभक्तिव्यत्ययः । **अपसः**- 'अपस्' शब्दान्मत्वर्थीयस्य विनः लुक् ।।

## ऋक्संहिता पदपाठसहिता

**मथीद्यदीं विभृतो मातरिश्वा गृहेगृहे श्येतो जेन्यो भूत् ।**
**आदीं राज्ञे न सहीयसे सचा सन्ना दूत्यं१ भृगवाणो विवाय ।। ४ ।।**
**मथीत् । यत् । ईम् । विऽभृतः । मातरिश्वा । गृहेऽगृहे । श्येतः । जेन्यः । भूत् । आत् । ईम् । राज्ञे । न । सहीयसे । सचा । सन् । आ । दूत्यम् । भृगवाणः । विवाय ।।**

**स्कन्द–** अत्रेतिहासमाचक्षते– 'सर्वमिदमन्धं तम आसीत् । अथ मातरिश्वाऽऽकाशे सूक्ष्मम् अग्निम् अपश्यत् । तममथ्नात् । मथित्वा चाऽऽनयत्' इति । तदेतदुच्यते **मथीत्** मथितवान् **यत्** यदा **ईम्** एनम् अग्निं **मातरिश्वा** मथित्वा चाऽऽनयत् । कुत एतत्– 'आ दूतो अग्निमभरद्विवस्वतः (ऋ.६,८,४) इति मन्त्रान्तरे दर्शनात् । यदेति वचनात् 'ततः प्रभृति' इत्यध्याहार्यम् । ततः प्रभृति **विभृतः** विहृतः **गृहे गृहे श्येतः** श्वेतवर्णोऽग्निः **जेन्यः** जेता तमसां शत्रूणां वा

**भूत्** अभवत् । तत एव च प्रभृति **आत् ईम् राज्ञे न सहीयसे** आत् ईम् इति पदपूरणौ । यथा कश्चित् राज्ञो बलवतोऽर्थाय सर्वाभिप्रेतार्थसिद्धिं कुर्वन् दौत्यं गच्छेदेवम् **सचा** सह । केन । स्वैर्भ्रातृभिः । कुत एतत् । 'अग्ने पूर्वे भ्रातरो अर्थमेतम्' (ऋ.१०,५१,६) इत्यादिषु भ्रातृणाम् अप्यग्नेः दूत्यस्य दर्शनात् । प्रशस्तोऽग्निः **दूत्यम्** दूतकर्म **भृगवाणः** 'भ्रस्ज पाके' इत्यस्य रूपं प्रथमान्तं षष्ठ्यन्तं वा । हविषां पक्ता पचतो यजमानस्य हवींषि वा **आ विवाय** आजगाम । तत एव प्रभृति करोति स्मेत्यर्थः ।। ४ ।।

**वेङ्कटमाधव–** बलेनाजहार यदा एनं, धारकः **मातरिश्वा** द्युलोकात्, यदा च श्वेतवर्णः जेताऽग्निः अनुगृहम् अभवत् । अनन्तरमेव एनम् राज्ञे इव बलवते सखा सन् **आ विवाय ।** वेतिर्गतिकर्मा (तु.निघ.२,१४) आनयत् **दूत्यम् भृगवाणः** दीप्तवाणो वायुर्दूतं चाकरोत् इति ।।

**मुद्गल– मातरिश्वा** व्यानवृत्तिरूपेणावस्थितो मुख्यप्राणः **ईम्** एनम् अग्निम् **यत्** यदा **मथीत्** अमथ्नात् । अग्नेर्मन्थनस्य व्यानवायुसाध्यत्वम् । तदा मातरिश्वा **विभृतः** प्राणिषु प्राणापानादि-पञ्चवृत्तिरूपेणावस्थितो विभज्य स्थितः । मन्थनेनोत्पन्नोऽयम् अग्निः **श्येतः** शुभ्रवर्णो भूत्वा **गृहे गृहे** सर्वस्मिन् यज्ञगृहे यदा **जेन्यः** प्रादुर्भूतः **भूत्** अभूत् । **आत्** यज्ञगृहे प्रादुर्भावानन्तरम् **ईम्** एनम् अग्निम् **भृगवाणः** भृगुर्ऋषिः स इवाचरन् यजमानः, **दूत्यम्** दूतस्य कर्म **आ विवाय** शास्त्रमर्यादया प्रापयामास । दृष्टान्तः- **सचा सन्** सखा भवन्नन्यो राजा **सहीयसे** अभिभवित्रे प्रबलाय **राज्ञे न** यथा राज्ञे स्वपुरुषं दूतकर्म प्रापयति तद्वत् ।। ४ ।।

**सायण–** मातरिश्वा व्यानवृत्तिरूपेणावस्थितो मुख्यप्राणः **ईम्** एनम् अग्निं **यत्** यदा **मथीत्** अमथ्नात् । अग्नेर्मन्थनस्य व्यानवायुसाध्यत्वम् 'अथ यः प्राणापानयोः सन्धिः स व्यानः' इत्युपक्रम्य छन्दोगैराम्नातम् 'अतो यान्यन्यानि वीर्यवन्ति कर्माणि यथाग्नेर्मन्थनमाजेः सरणं दृढस्य धनुष आयमनमप्राणन्ननपानंस्तानि करोति' (छा.उ.१.३.३,५) इति । मन्त्रान्तरं च भवति- 'आन्यं दिवो मातरिश्वा जभारामथ्नादन्यं परि श्येनो अद्रेः' (ऋ.सं.१.९३.६) इति । कीदृशो मातरिश्वा । **विभृतः** प्राणिपु प्राणापानादिपञ्चवृत्तिरूपेण विहृतो विभज्य स्थितः । तदपि प्राणसंवादे तैरेवाम्नातं- 'तान्वरिष्ठः प्राण उवाच । मा मोहमापद्यथाहमेवैतत् पञ्चधाऽऽत्मानं प्रविभज्यैतद्बाणम् अवष्टभ्य विधारयामि' इति (प्र.उ.२.३) । मन्थनेनोत्पन्नोऽयमग्निः **श्येतः** शुभ्रवर्णो भूत्वा **गृहेगृहे** सर्वस्मिन् यज्ञगृहे यदा **जेन्यः** प्रादुर्भूतः **भूत्** । यद्वा । रक्षसां जेन्यो

जेताऽभिभविता भूत् । तथा च तैत्तिरीयकं- 'देवासुराः संयत्ता आसन् ते देवा बिभ्यतोऽग्निं प्राविशन् । तस्मादाहुरग्निः । सर्वा देवता इति तेऽग्निमेव वरूथं कृत्वासुरानभ्यभवन्' (तै. सं. ६.२.२.६-७) इति । ऐतरेयिणोऽप्यामनन्ति- 'ते देवाः प्रतिबुध्याग्निं पुरस्तात्प्रातःसवने पर्यौहंस्तेऽग्निनैव पुरस्तात्प्रातःसवनेऽसुररक्षांस्यपानतः' (ऐ.ब्रा.६.४) इति । **आत्** यज्ञगृहे प्रादुर्भावानन्तरम् **ईम्** एनम् अग्निं **भृगवाणः** । भृगुर्ऋषिः । स इवाचरन् यजमानः **दूत्यं** दूतस्य कर्म **आ विवाय** शास्त्रमर्यादया प्रापयामास । तत्र दृष्टान्तः । **सचा सन्** सखा भवन्नन्यो राजा **सहीयसे** अभिभवित्रे प्रबलाय **राज्ञे न** यथा राज्ञे स्वपुरुषं दूतकर्म प्रापयति तद्वत् **मथीत्** । 'मथि विलोडने' लुङि 'ह्म्यन्तक्षण' इति वृद्धिप्रतिषेधः । **जेन्यः** । 'जनी प्रादुर्भावे' अस्मादौणादिक एन्यप्रत्ययः टिलोपश्च इति भट्टभास्करमिश्रः । यद्वा । 'जि जये' इत्यस्मात् 'कृत्यल्युटो बहुलम्' इति बहुलवचनात् कर्तरि 'अचो यत्' इति यत्, तस्य नुडागमश्च । 'यतोऽनावः' इत्याद्युदात्तत्वम् । **दूत्यम्** । दूतस्य कर्म दूत्यम् । 'दूतस्य भागकर्मणी' इति यत् । 'तित्स्वरितम्' इति स्वरितत्वम् । 'यतोऽनावः' इत्याद्युदात्तत्वं तु अनित्यमिति 'वीरवीर्यौ च' इत्यत्र ज्ञापितम् । **भृगवाणः** भृगुरिवाचरन् । 'सर्वप्रातिपदिकेभ्यः क्विब्वक्तव्यः' (पा.म. ३.१.११.३) इति वचनात् विप् । तदन्तात् लटो व्यत्ययेन शानच् । अदुपदेशात् लसार्वधातुकानुदात्तत्वे प्रत्ययान्तधातोरन्तोदात्तत्वे प्राप्ते वृषादेराकृतिगणत्वादाद्युदात्तत्वम् । **विवाय** । 'वी गत्यादिषु' । अस्मात् अन्तर्भावितण्यर्थात् लिट् ॥ ४ ॥

**सिद्धाञ्जनम्– यत्** यदा **गृहे गहे** प्रतिगृहं प्रतिशरीरं **विभृतः** व्याप्य अन्तर्धारितः **मातरिश्वा** वायुः मुख्यः प्राणः **ईम्** एनं अग्निं **मथीत्** अमथ्नात् मथनेनोत्पादितवान् भवति, तदा सः अग्निः **श्येतः** श्वेतः शुभ्रः **जेन्यः** जेता **भूत्** भवति । **आत्** अनन्तरं **भृगवाणः** भृगुरिवाचरन् जाज्वल्यमानो द्रष्टा भूत्वेत्यर्थः **सचा सन्** अस्माकं सखा भवन् **सहीयसे** बलीयसे **राज्ञे न** नृपायेव **ईम्** एनत् **दूत्यम्** दूतकर्म **आ विवाय** प्राप्नोति, दूत्यमनुतिष्ठति- सत्यज्योतिष इत्यर्थः ॥ अत्रेदम् अवधेयम् । अन्तर्धारितः पूरितो व्याप्तः प्राणः योगाग्निं मथित्वा प्रकटयतीत्यधुनातनयोगविद्यातत्त्वं चिरन्तनार्षरहस्यैकदेशभूतमिति बोध्यम् । प्रतिशरीरं इत्यत्र बहूनां शरीराणि ग्राह्याणि सामाजिकश्रेय्योगः, अन्यथा एकस्यैवान्तर्याजिनः नैकानि स्थूलादीनि शरीराणीति ग्राह्यम् । अग्निः श्वेतः स्वच्छ इति वृद्धिं सत्त्वसमृद्धिं द्योतयति । अत एव जेता तमःप्रभवाणां अरातीनाम् ।

स 'भृगवाणः' भृगुर्ज्वलन् द्रष्टा, सौरो रश्मिः, **अग्नेः** यजमानाश्रयस्य यदा सौरांशरूपत्वं सम्पद्यते तदा तस्य महते **राज्ञे** सूर्याय सत्यज्योतिषे सर्वदेवात्मने दूत्याधिकारः सिध्यति । 'भृगवे मातरिश्वा राति भरत् अग्निं दूतम्' इत्यन्यत्र मातरिश्वकृत्यमुक्तं स्मार्यम् (१.६०.१)। भृगूणां सौरांशुत्व-प्रतिपादको मन्त्रवर्णोऽन्यत्र भवति ।। 'यदी भृगुभ्यः परि मातरिश्वा गुहा सन्तं हव्यवाहं समीधे' (३.५.१०) 'भृगुभ्यः आदित्यरश्मिभ्यः' इति सायणः ।। **मथीत्**- 'मथि विलोडने' लुङ् । **जेन्यः** 'जि जये' अस्मात् कृत्यल्युटः यत् नुडागमश्च । **विवाय** 'वी गत्यादिषु' लिट् ।।

## ऋक्संहिता पदपाठसहिता

**महे यत्पित्र ईं रसं दिवे करव त्सरत्पृशन्यश्चिकित्वान् ।**
**सृजदस्ता धृषता दिद्युमस्मै स्वायां देवो दुहितरि त्विषिं धात् ।। ५ ।।**
**महे । यत् । पित्रे । ईम् । रसम् । दिवे । करः । अव । त्सरत् । पृशन्यः । चिकित्वान् । सृजत् । अस्ता । धृषता । दिद्युम् । अस्मै । स्वायाम् । देवः । दुहितरि । त्विषिम् । धात् ।। ५ ।।**

**स्कन्द– महे यत्** महते यदा सर्वलोकस्य पितृभूताय **रसम्** अन्ननामैतत् (तु.निघ.२,७) । हविर्लक्षणमन्नम् **दिवे, कः** करोति अग्निः । द्युलोकेन चात्राधारेणाधेयास्तन्निवासिनो देवा लक्ष्यन्ते । 'मञ्चाः क्रोशन्ति' इति यथा । महति सर्वलोकस्य पितृभूते लोके निवसतां देवानाम् अर्थाय यदा हविरग्निः करोतीत्यर्थः । कृत्वा च **अव त्सरत्** त्सरतिर्गतिकर्मा (तु.निघ.२,१४) । हविर्गृहीत्वा गच्छति । **पृशन्यः** 'ता अस्य पृशनायुवः' (ऋ.१,८४,११) इति प्रयोगदर्शनात् पृशनाशब्दोऽमृतरूपरसवचनः । तत्र साधुः पृशन्यः । अमृतरसरूपाणामपि हविषाम् । अमृत-रूपरसकारीत्यर्थः । **चिकित्वान्** ज्ञातवान् स्वमधिकारं, यष्टॄणां वा भक्तताम् । यदेति वचनात् तदेत्यध्याहार्यम् । तदा **सृजत्** सृजति । क्षिपतीत्यर्थः । **अस्ता** क्षेपणशील इन्द्रः । **धृषता** प्रगल्भमनसा । निश्शङ्कः सन्नित्यर्थः । **दिद्युम्** वज्रम् **अस्मै** अग्नेरयमन्वादेशः । अस्याग्नेरर्थाय । ये रक्ष आदयोऽग्नेर्हविःपरिवन्थिनः तान् हन्तुमित्यर्थः । तदैव च **स्वायाम्** देव इन्द्रः **दुहितरि** वृष्ट्या सस्यरूपेण जन्यमानत्वाद् दुहिता क्षितिरत्राभिप्रेता । तस्यां **त्विषिम्** सस्यसम्पत्तिलक्षणां दीप्तिम् **धात्** दधाति । यस्मिन् संवत्सरेऽग्निर्देवानामर्थाय हवींषि करोति, तस्मिन्नेवेन्द्रोऽपि सस्यसम्पत्तिं करोति, नान्यत्रेत्यर्थः । अथवा जन्यमानत्वाद् दुहिता स्तुतिरत्राभिप्रेता । स्वस्यां

स्तुतौ देवोऽग्निः ओजस्वित्वलक्षणां दीप्तिम् आधत्ते । यया स्तुत्या होतृत्वेनावस्थितः स्वयं स्तौति तामोजस्विनीं करोतीत्यर्थः ।। ५ ।।

**वेङ्कटमाधव–** महते **पित्रे** द्युलोकाय देवेभ्यः यदा हविष्ट्वमापन्नम् **रसम्** अग्निः करोति तदा गच्छन्तम् एनं दृष्ट्वा हविःपरिमोक्षणाय स्पर्शने साधुर्दस्युर्जानन् गच्छन्तम् अग्निम् **अव त्सरति** मार्गपार्श्वाद् कुटिलमपगच्छति । तं दृष्ट्वा अग्निश्च तस्मै धृष्टेन मनसा वज्रं सृजति असनशीलः । सोऽयम् **स्वायाम् दुहितरि** ज्वालायां दीप्तिं दधाति ।। ५ ।।

**मुद्गल– महे** महते **पित्रे** पालयित्रे **दिवे** द्योतमानाय देवगणाय **ईम्** इमम् **रसम्** पृथिव्याः सारभूतं हविः **यत्** यदा यजमानः **कः** करोति तदानीम् **पृशन्यः** स्पर्शनकुशलो राक्षसादिः **चिकित्वान्** हवींषि वहन्तं हे अग्ने! त्वां जानन् **अव त्सरत्** त्वद्भयात् पलायते । **अस्ता** इषुक्षेपणशीलोऽग्निः **धृषता** धर्षकेण धनुषा **अस्मै** पलायमानाय राक्षसादये **दिद्युम्** दीप्यमानं बाणम् **सृजत्** विसृजति । **देवः** दीप्यमानः उषःकालं प्राप्तोऽग्निः **स्वायाम्** स्वकीयायाम् **दुहितरि** दुहितृवत् समनन्तरभाविन्याम् उषसि **त्विषिम्** स्वकीयां दीप्तिम् **धात्** स्थापयति । उषःकाले हि सूर्यकिरणाः प्रादुर्भवन्ति, तैः स्वकीयं प्रकाशमेकीकरोति ।। ५ ।।

**सायण– महे** महते **पित्रे** पालयित्रे **दिवे** द्योतमानाय देवगणाय **ईम्** इमम् **रसम्** पृथिव्याः सारभूतं हविः **यत्** यदा यजमानः **कः** करोति तदानीम् **पृशन्यः** स्पर्शनकुशलो राक्षसादिः **चिकित्वान्** हवींषि वहन्तं हे अग्ने! त्वां जानन् **अव त्सरत्** त्वद्भयात् पलायते । **अस्ता** इषुक्षेपणशीलोऽग्निः **धृषता** धर्षकेण धनुषा **अस्मै** पलायमानाय राक्षसादये **दिद्युम्** दीप्यमानं बाणम् **सृजत्** विसृजति । **देवः** दीप्यमानः उषःकालं प्राप्तोऽग्निः **स्वायाम्** स्वकीयायाम् **दुहितरि** दुहितृवत् समनन्तरभाविन्याम् उषसि **त्विषिम्** स्वकीयां दीप्तिम् **धात्** स्थापयति । उषःकाले हि सूर्यकिरणाः प्रादुर्भवन्ति, तैः स्वकीयं प्रकाशमेकीकरोति ।। तथा च तैत्तिरीयकम्– उद्यन्तं वावादित्यम् अग्निरनुसमारोहति तस्माद्धूम एवाग्नेर्दिवा ददृशे' (तै.पा.२.१.२.१०) इति । अत उषसि दीप्तिं निदधातीत्युच्यते ।। **कः** । करोतेर्लुङि 'मन्त्रे घस' इत्यादिना च्लेर्लुक् । **त्सरत्** । 'त्सर छद्मगतौ' । लेटि अडागमः । 'इनश्च' इति इकारलोपः । **पृशन्यः** । 'स्पृश संस्पर्शने' । 'कृपृवृजि' (उ.सू.२.२३९) इति विधीयमानः क्युप्रत्ययो बहुलवचनादस्मादपि भवति । स्पृशनं

स्पर्शः । 'तत्र साधुः' इति यत् । सलोपश्छान्दसः । 'तित्स्वरितम्' इति स्वरितत्वम् । **दिद्युम्** । दिद्युदिति वज्रनाम । अन्त्यलोपश्छान्दसः । **धात्** । छान्दसो वर्तमाने लुङ् ।। ५ ।।

**सिद्धाञ्जनम्– महे** महते **पित्रे दिवे** पितृभूताय द्युलोकाय **ईम्** एनम् **रसम्** सारभूतं द्रव्यं **यत्** यदा **कः** अकरोत् तदा **पृशन्यः** संस्पृष्टवान् **चिकित्वान्** ज्ञानवांश्च सः **अव त्सरत्** अधस्तात् च्यवमान आगतः । **अस्ता** क्षेप्ता बाणस्य, धानुष्कः **अस्मै** एनं लक्ष्यीकृत्य **धृषता** धाष्र्ट्येन, प्रचण्डं यथा तथेत्यर्थः । **दिद्युम्** विद्युद्रूपं बाणं **सृजत्** असृजत् अक्षिपत् । **देवः** स देवस्तु **स्वायाम्** आत्मीयायां **दुहितरि** समनन्तरभाविन्यामुषसि **त्विषिम्** दीप्तां प्रभां **धात्** अधात् स्थापयामास ।। दुर्बोधं ऋचोऽस्यास्तात्पर्यम् । कः रसम् अकरोत् ? किं यजमानाय अग्निः, उत यजमान एव महते पित्रे रसम् अकरोत् ? यजमानकृत्वनिर्वाही अग्निरेव रसं यजमानान्निष्पाद्य महते पित्रेऽर्पयति । कः स्पर्शवान् ज्ञानवांश्च, अधश्च्यवमान आगतः ? तथा रसार्पणे कृते अग्निरेव महतः पितुः स्वर्लोकस्य स्पर्शवान् ज्ञानवांश्च सम्पद्यते । तदा द्युलोकादुत्तमचिद्भूमेः अधश्च्युतो भवति यजमानाय । मार्गे मध्यमस्थाने दैव्यकर्मविघातको राक्षसादिकः दूरादेवास्त्रं क्षिपति अग्निमभिलक्ष्य, स्वयम् अलक्षितः । तत्रान्तरे भगवान् अग्निः पित्र्यं बलं तेजो ज्ञानं च लब्धवान् पृथिवी प्राप्नोत्येव । यजमाने चित्प्रभाताय ज्वलितां वीर्यवतीं शक्तिं स्थापयति । अत एव 'दुहितरि त्विषिं धात्' इत्युक्तम् । उषा हि दुहिता दिवः, अग्नेः प्रादुर्भावः चिद्विभाताय कल्पते ।। **कः**-करोतेर्लुङ, मन्त्रे घ्लेर्लुक् । **त्सरत्**-'त्सर छद्मगतौ, लेट्यडागमः । **पृशन्यः**-'स्पृश संस्पर्शने' सलोपश्छान्दसः । **दिद्युम्**-दिद्युत् वज्रनाम, अन्त्यलोपश्छान्दसः । **धात्**-छान्दसो वर्तमाने लुङ् ।। ५ ।।

।। इति प्रथमाष्टके पञ्चमाध्याये पञ्चदशो वर्गः ।।

## ।। अथ षोडशो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

**स्व आ यस्तुभ्यं दम आ विभाति नमो वा दाशादुशतो अनु द्यून् ।**
**वर्धो अग्ने वयो अस्य द्विबर्हा यासद्राया सरथं यं जुनासि ।। ६ ।।**

स्वे । आ । यः । तुभ्यम् । दमे । आ । विऽभाति । नमः । वा । दाशात् । उशतः ।

**अनु । द्यून् । वर्धो इति । अग्ने । वयः । अस्य । द्विऽबर्हाः । यासत् । राया । सऽरथम् । यम् । जुनासि ।। ६ ।।**

**स्कन्द–** आकारोऽत्र मर्यादायाम् । 'तुभ्यम्' इत्यपि द्वितीयार्थे चतुर्थी । **यः** त्वाम् **स्वे दमे** गृहे मर्यादया **आ विभाति** भा दीप्तौ । अन्तर्णीतण्यर्थश्चात्र द्रष्टव्यः । आदीपयति । **नमः वा दाशात्** अन्नं वा हविर्लक्षणं ददाति । **उशतः** उशते कामयमानाय **तुभ्यम् अनु द्यून्** अनु अत्र वीप्सायां कर्मप्रवचनीयः । 'द्युः' (निघ.१,९) इत्यहर्नाम । दिवसं दिवसम् अनु प्रतिदिवसमित्यर्थः । **वर्धो** वर्ध उ वर्धो । वृधिश्चात्रान्तर्णीतण्यर्थो द्रष्टव्यः । उकारस्तु पदपूरणः । वर्धय हे अग्ने! **वयः** अन्नम् **अस्य द्विबर्हाः** बृहिर्वृद्ध्यर्थः । हविर्नयनद्वारेण द्वयोरपि देवमनुष्यलोकयोर्वर्धयिता । प्रत्यक्षकृतत्वाच्चास्य मन्त्रस्यानामन्त्रितमेतत् । अतो यत्तच्छब्दा-वध्याहृत्यैकवाक्यता नेया । यस्त्वं द्विबर्हाः अग्ने! स त्वं वर्धय वयः अस्येति । किञ्च **यासत्** लिङर्थे लेट् । मध्यमपुरुषस्य स्थाने च प्रथमपुरुषः । यायास्त्वम् **राया** धनेन सह । केन । रथेन । कं प्रति । उच्यते । **यम्** स्तोतारं यष्टारं प्रति **जुनासि** जुनातिर्गतिकर्मा । गच्छसि । तस्मै दातुम् । यस्मिन्नेव रथे स्वयमारोहसि धनान्यपि तत्रैवारोप्य गच्छेरित्यर्थः ।। ६ ।।

**वेङ्कटमाधव–** **स्वे** गृहे वः त्वां काष्ठैः प्रज्वलयति, यो वा अन्नम् **उशतः** कामयमानस्य तव ददाति दिवसेषु । वर्धय अग्ने! अन्नम् **अस्य** द्वयोः स्थानयोर्मध्यमोत्तमयोः परिवृढः । **यम्** त्वम् अग्ने! रथसहितं युद्धे प्रेरयसि, स धनेन सह युद्धात् आगच्छतीति ।। ६ ।।

**मुद्गल–** हे अग्ने! **तुभ्यम्** त्वाम् **स्वे दमे** स्वकीये यज्ञगृहे **यः** यजमानः । एक आकारो मर्यादायाम् । यथाशास्त्रम् **आ विभाति** आ समन्तात् समिदादिभिः काष्ठैः प्रज्वलयति । **अनु द्यून्** अनुदिवसम् **उशतः** कामयमानाय तुभ्यम् **नमः वा दाशात्** हविर्लक्षणमन्नं वा दद्यात् । **अस्य** यजमानस्य । हे अग्ने! **द्विबर्हाः** द्वयोर्मध्यमोत्तमस्थानयोर्बृंहितो वर्धितस्त्वम् **वयः** अन्नम् **वर्धो** वर्धयैव । **सरथम्** रथेन सहितं युयुत्सुम् **यम्** पुरुषम् **जुनासि** युद्धे प्रेरयसि स पुरुषः **राया** धनेन **यासत्** सङ्गच्छते ।। ६ ।।

**सायण–** हे अग्ने! **तुभ्यम्** त्वाम् **स्वे दमे** स्वकीये यज्ञगृहे **यः** यजमानः । एक आकारो मर्यादायाम् । यथाशास्त्रम् **आ विभाति** आ समन्तात् समिदादिभिः काष्ठैः प्रज्वलयति । **अनु द्यून्** अनुदिवसम् उशतः कामयमानाय तुभ्यम् **नमः वा दाशात्** हविर्लक्षणमन्नं वा दद्यात् ।

**अस्य** यजमानस्य । हे अग्ने! **द्विबर्हाः** द्वयोर्मध्यमोत्तमस्थानयोर्बृंहितो वर्धितस्त्वम् **वयः** अन्नम् **वर्धो** वर्धयैव । **सरथम्** रथेन सहितं युयुत्सुम् **यम्** पुरुषम् **जुनासि** युद्धे प्रेरयसि स पुरुषः **राया** धनेन **यासत्** सङ्गच्छते ।। तुभ्यम् । 'क्रियाग्रहणं कर्तव्यम्' इति कर्मणः सम्प्रदानत्वात् चतुर्थी । **दाशात्** । 'दाशृ दाने' लेटि आडागमः । **उशतः** । 'शतुरनुमः' इति विभक्ते-रुदात्तत्वम् । 'चतुर्थ्यर्थे बहुलं छन्दसि' इति षष्ठी । **अनुद्यून्** । द्युरित्यहर्नाम । लक्षणेऽनोः कर्मप्रवचनीयत्वम् । 'कर्मप्रवचनीययुक्ते' इति द्वितीया । **वर्धो** । वर्ध उ । वृधेर्ण्यन्तात् लोटि 'छन्दस्युभयथा' इति शप आर्धधातुकत्वात् 'णेरनिटि' इति णिलोपः । शपः पित्वादनुदात्तत्वे धातुस्वरः शिष्यते । उञा सहैकादेशे 'उञः' (पा.स.१.१.१७) इति प्रगृह्यत्वम् । **यासत्** । 'या प्रापणे' 'सिब्बहुलं लेटि' इति सिप् । 'लेटोऽडाटौ' इति अडागमः । **जुनासि** । जु इति गत्यर्थः सौत्रो धातुः । शपि प्राप्ते व्यत्ययेन श्ना ।। ६ ।।

**सिद्धाञ्जनम्**– यः यजमानः **तुभ्यम्** त्वामुद्दिश्य **स्वे दमे** तव स्वकीये गृहे **आ विभाति** प्रज्वलयति । अत्र 'आ' द्वयं वर्तते, एक आकारो मर्यादायामिति सायणः । **उशतः** यं च जनं कामयमानाय ते, विभक्तिव्यत्ययः, **अनु द्यून्** अनुदिनं **नमो वा** शरणागतिलक्षणं नमस्कारं वा **दाशात्** ददाति । **अस्य** तादृशस्य यजमानस्य **वयः** वर्धनं **द्विबर्हाः** द्वयोः स्थानयोः, इह मानुषे परत्र दैव्ये च पदे, बृंहितः वर्धितस्त्वं **वर्धः** पोषय, तं सुतरामभिवर्धय, उभयत्रेत्यर्थः । हे अग्ने! **यम्** यादृशं जनं त्वं **सरथम्** समानरथं, त्वया सहैकरथं स्थापयित्वा **जुनासि** सत्वरं प्रेरयसि, सः **राया** सम्पदा युक्तः सन् **यासत्** प्रयाणं करोतु ।। **दाशात्**- 'दाशृ दाने' लेट् । **उशतः**-वष्टेः शतृ । **अनुद्यून्**-द्युरित्यहर्नाम, 'लक्षणे अनोः कर्मप्रवचनीयत्वं' तद्युक्ते द्वितीया । **वर्धः**-वृधेर्ण्यन्ताल्लोट्, णिलोपः । **यासत्** 'या प्रापणे' लेट् । **जुनासि**-सौत्रो धातुः, व्यत्ययेन श्ना ।। ६ ।।

## ऋक्संहिता पदपाठसहिता

**अ॒ग्निं विश्वा॑ अ॒भि पृक्षः॑ सचन्ते समु॒द्रं न स्र॒वतः॑ स॒प्त य॒ह्वीः ।**
**न जा॒मिभि॒र्वि चि॑कि॒ते वयो॑ नो वि॒दा दे॒वेषु॒ प्रम॑तिं चिकि॒त्वान् ।। ७ ।।**
अ॒ग्निम् । विश्वाः॑ । अ॒भि । पृक्षः॑ । स॒च॒न्ते॒ । स॒मु॒द्रम् । न । स्र॒वतः॑ । स॒प्त । य॒ह्वीः ।
न । जा॒मिऽभिः॑ । वि । चि॒कि॒ते॒ । वयः॑ । नः॒ । वि॒दाः । दे॒वेषु॑ । प्र॒ऽम॑तिम् । चि॒कि॒त्वान् ।।

**स्कन्द– अग्निम्** त्वाम् **विश्वाः** सर्वाः **पृक्षः** सर्वाण्यन्यदेवत्यान्यपि हविर्लक्षणानि अन्नानि **अभि सचन्ते** सचतिर्गतिकर्मा (तु.निघ.२,१४) । हूयमानान्यभिगच्छन्ति । कथम् । **समुद्रम् न स्रवतः** व्यत्ययेनात्र पुल्लिङ्गता । समुद्रमिव स्रवन्त्यो नद्यः । **सप्त** गङ्गाद्याः । **यह्वीः** महत्यः । किञ्च **न जामिभिः** सजातीयैः **वि चिकिते** विज्ञायते । **वयः** अन्नम् **नः** अस्माकम् । अल्पत्वादप्रख्यातमन्नम् अस्माकम्, तत् बहु ददत् प्रख्यातं कुर्वित्यर्थः । किञ्च **विदाः** विद्धि जानीहि । शृण्वित्यर्थः । **देवेषु** निर्धारण एषा सप्तमी । देवानां मध्ये । **प्रमतिम्** मन्यतिरर्चतिकर्मा (तु.निघ.३,१४) । प्रकृष्टां स्तुतिम् । **चिकित्वान्** शत्रर्थे क्वसुः । जानन्, अस्मत्प्रभृतीनां भक्तताम् ।। ७ ।।

**वेङ्कटमाधव– अग्निम्** विश्वानि हवींषि **अभि सचन्ते** समुद्रम् इव महत्यः **सप्त** नद्यः । न बन्धुभिः विज्ञायते अन्नम् अल्पत्वात् अस्माकम् । तथा सति अग्ने! प्रज्ञापय **देवेषु** अस्माकं बह्वर्थाभिलाषिणीं बुद्धिं जानन्निति ।। ७ ।।

**मुद्गल– विश्वाः पृक्षः** चरुपुरोडाशादीनि सर्वाण्यन्नानि **अग्निम्** अङ्गनादिगुणयुक्तम् एनम् **अभि सचन्ते** आभिमुख्येन समवयन्ति प्राप्नुवन्ति । दृष्टान्तः– **स्रवतः समुद्रम् न** यथा स्रवन्त्यो नद्यः समुद्रमभिगच्छन्ति तद्वत् । कीदृश्यो नद्यः । **सप्त** सप्तसङ्ख्याकाः 'इमं मे गङ्गे' (ऋ.१०,७५,५) इत्यादयः । **यह्वीः** महत्यः । **जामिभिः** जमन्ति एकस्मिन् पात्रे सह भुञ्जत इति जामयो देवास्तैः । **नः** अस्मदीयम् **वयः** अन्नम् **न वि चिकिते** न ज्ञायते । तेभ्यो दातुमस्माकम् अन्नं प्रभूतं नास्तीति भावः । अतो हे अग्ने! त्वम् **देवेषु** धनपतिषु **प्रमतिम्** प्रकर्षेण मननीयं धनम् **चिकित्वान्** अवगच्छन् **विदाः** अस्मभ्यं लम्भय ।। ७ ।।

**सायण– विश्वाः पृक्षः** चरुपुरोडाशादीनि सर्वाण्यन्नानि **अग्निम्** अङ्गनादिगुणयुक्तमेनम् **अभि सचन्ते** आभिमुख्येन समवयन्ति प्राप्नुवन्ति । तत्र दृष्टान्तः– **स्रवतः समुद्रं न** यथा स्रवन्त्यो नद्यः समुद्रम् अभिगच्छन्ति तद्वत् । कीदृश्यो नद्यः । **सप्त** सप्तसङ्ख्याकाः । 'इमं मे गङ्गे' इत्यस्यामृचि सप्त हि नद्यः प्राधान्येन श्रूयन्ते । **यह्वीः** महन्नामैतत्, महत्यः । **जामिभिः** जमन्त्येकस्मिन् पात्रे सह भुञ्जते इति जामयो ज्ञातयः तैः, **नः** अस्मदीयं **वयः** अन्नं **न वि चिकिते** न ज्ञायते । तेभ्यो दातुमस्माकम् अन्नं प्रभूतं नास्तीति भावः । अतो हे अग्ने! त्वं **देवेषु** । दीव्यन्तीति देवाः धनपतयः । तेषु । **प्रमतिं** प्रकर्षेण मननीयं **धनं** **चिकित्वान्**

अवगच्छन् **विदाः** अस्मभ्यं लम्भय । यद्वा । प्रमतिं प्रकृष्टं स्तोत्रं देवेषु विदाः वेदय ज्ञापय ॥ **पृक्षः** । अन्ननामैतत् । 'पृची सम्पर्के' इत्यस्मात् औणादिकः कर्मणि क्विप्, धातोः पुगागमश्च । यद्वा । असुनि 'सुपां सुलुक्' इति जसो लुक् । **स्रवतः** । 'स्रु गतौ' । स्रवणं स्रवः । तत्कुर्वन्ति । 'सर्वप्रातिपदिकेभ्यः क्विब्वक्तव्यः' इति क्विप् । एतदन्तात् धातोः 'क्विप् च' इति क्विप् । 'ह्रस्वस्य पिति' इति तुक् । क्विबन्तात् धातोः सतिशिष्टत्वात् धातुस्वरेणान्तोदात्तत्वम् । **यह्वीः** । 'पिप्पल्यादिभ्यश्च' (पा.सू.४.१.४१ ग.) इति गौरादिषु पठितत्वात् तस्य च आकृतिगणत्वादत्रापि ङीष् । 'वा छन्दसि' इति पूर्वसवर्णदीर्घत्वम् । **चिकिते** । छान्दसो वर्तमाने कर्मणि लिट् । **विदाः** । 'विद्लृ लाभे' अन्तर्भावितण्यर्थात् लेटि आडागमः । तुदादित्वात् शः । आगमानुशासनस्यानित्यत्वात् नुमभावः । विकरणस्वरः शिष्यते । यद्वा । विदेर्ज्ञानार्थस्य लेटि व्यत्ययेन शः ॥ ७ ॥

**सिद्धाञ्जनम्– विश्वाः** सर्वाः **पृक्षः** प्रीणयित्र्यः, प्रीतयः, **अग्निम्, अभि सचन्ते** अभिमुखीभूय सज्जन्ते, तस्मिन् सक्ता भवन्ति । तत्र दृष्टान्तः- **यह्वीः** बलेन महत्यः **सप्त** सप्तसङ्ख्याकाः **स्रवतः** स्रवन्त्यः नद्यः **समुद्रम् न** समुद्रं यथा गच्छन्ति तद्वत् । **नः** अस्माकं **वयः** अभिवृद्धिः, **जामिभिः** तव ज्ञातिभिः सखिभिः **न विचिकिते** न ज्ञायते, देवैर्नालक्षि । **चिकित्वान्** ज्ञातवान् त्वं **देवेषु** मध्ये सञ्चच्छत तत् प्रकृष्टं ज्ञानं **विदाः** लम्भय, ज्ञापय वा । अस्मदीयाभिवृद्धिर्देवैर्न लक्षिता, तव तु विदिता । तस्मात् देवसदसि ज्ञापय, अथवा देवेषु विषये अंस्माकं ज्ञानं सम्पादय इति वा ॥ **पृक्षः**- पृणक्तेः औणादिकः क्विप्, धातोः पुगागमः, । यद्वा असुनि जसो लुक् । अन्ये गताः ॥ ७ ॥

## ऋक्संहिता पदपाठसहिता

**आ यदिषे नृपतिं तेज आनट्छुचि रेतो निषिक्तं द्यौरभीके ।**
**अग्निः शर्धमनवद्यं युवानं स्वाध्यं जनयत्सूदयच्च ॥ ८ ॥**

आ । यत् । इषे । नृऽपतिम् । तेजः । आनट् । शुचि । रेतः । निऽसिक्तम् । द्यौः । अभीके । अग्निः । शर्धम् । अनवद्यम् । युवानम् । सुऽआध्यम् । जनयत् । सूदयत् । च ॥ ८ ॥

**स्कन्द–** **यत्** इति व्यत्ययेन नपुंसकता, यम्, **इषे** हविर्लक्षणायान्नाय **नृपतिम्** मनुष्याणां स्वामिनम् **तेजः** दीप्तिलक्षणम् **आ आनट्** मर्यादया व्याप्नोति । यो हविरर्थं मर्यादया दीप्यत इत्यर्थः । यच्छब्दात्तच्छब्दोऽध्याहार्यः । सः, **शुचि रेतः** उदकम् । कतमत् । उच्यते । **निषिक्तं द्यौः अभीके** द्यौरिति षष्ठ्यर्थे प्रथमा । 'अभीके' (निघ.३,२९) इत्यासन्ननाम । यदादित्यरश्मिभिराहृत्य दिवः समीपे निषिक्तं स्थापितम् । आगामिवृष्टिलक्षणमित्यर्थः । न च तदेव केवलम् । किं तर्हि । **अग्निः, शर्धम्** बलमुत्साहं वा । कीदृशम् । **अनवद्यम्** अगर्ह्यम् । **युवानम्** तरुणश्च पुत्रम् । **स्वाध्यम्** कल्याणचित्तम् । **जनयत्** जनयत्वस्माकम् । **सूदयत्** च सूदयतिरत्र संस्कारार्थम् । संस्करोतु च ।। ८ ।।

**वेङ्कटमाधव–** आभिमुख्येन अश्नोति **यत् तेजः नृपतिम्** अन्नाय अन्नं जेतुम् । तादृशम् **शुचि रेतः** मया स्त्रीषु **निषिक्तम्** निषिञ्चतश्च मम द्योतमानोऽग्निः समीप आसीत् । अथ **अग्निः** वेगवन्तम् अवद्यरहितं तरुणं सुकर्माणं पुत्रं जनयतु, सूदयतु च शत्रून् तन्मुखेनेति ।। ८ ।।

**मुद्गल–** अग्ने! **यत् तेजः नृपतिम्** नृणामृत्विजां पालकं यजमानम् । **आ आनट्** जाठररूपेण समन्तात् व्याप्नोति । किमर्थम् । **इषे** अन्नाय । कीदृशम् । **शुचि** शुद्धम् **द्यौः** दीप्तम् । तेन तेजसा परिपक्वम् अन्नरसरूपम् **रेतः** वीर्यम् **अभीके** अभ्यक्ते अभिगतेऽभिप्राप्ते गर्भस्थाने **निषिक्तिम्** नितरां सिक्तम् **अग्निः** वक्ष्यमाणगुणविशिष्टपुत्ररूपेण **जनयत्** जनयतु । **शर्धम्** बलवन्तम् । **अनवद्यम्** अवद्यरहितम् **युवानम्** तरुणम् । जरारहितमित्यर्थः । **स्वाध्यम्** शोभनकर्माणम् । उत्पन्नं पुत्रम् **सूदयत्** च यागादिकर्मसु प्रेरयतु च ।। ८ ।।

**सायण–** अग्ने! **यत् तेजः नृपतिम्** नृणामृत्विजां पालकं यजमानम् । **आनट्** जाठररूपेण **आ** समन्तात् व्याप्नोत् । किमर्थम् । इषे अन्नाय । कीदृशम् । **शुचि** शुद्धम् **द्यौः** दीप्तम् । तेन तेजसा परिपक्वम् अन्नं रसरूपम् **रेतः** वीर्यम् **अभीके** अभ्यक्ते अभिगतेऽभिप्राप्ते गर्भस्थाने **निषिक्तिम्** नितरां सिक्तम् **अग्निः** वक्ष्यमाणगुणविशिष्टपुत्ररूपेण **जनयत्** जनयतु । **शर्धम्** बलवन्तम् । **अनवद्यम्** अवद्यरहितम् **युवानम्** तरुणम्, जरारहितमित्यर्थः । **स्वाध्यम्** शोभनकर्माणम् शोभनप्रज्ञं वोत्पन्नं पुत्रम् **सूदयत्** च यागादिकर्मसु प्रेरयतु च । यद्वा । **रेत** इत्युदकनाम । **निषिक्तं** मेघेन वृष्टमुदकम् इषेऽन्नाय सस्यादिनिष्पत्तयेऽग्नेर्यत्तेज **आनट्** न्याप्नोत् वृष्ट्युदकेन । भौमाग्नेः संयोगे सति हि सस्यान्युत्पद्यन्ते । कीदृशं तेजः । **नृपतिं** नृणां रक्षकं

**शुचि** दीप्तम् । तादृशेन तेजसा युक्तो **द्यौः** दीप्तोऽग्निः **अभीके** आसन्नकाले एव शर्धादिगुणविशिष्टं पुत्रं जनयतु तं च प्रेरयतु यज्ञादौ ।। ८ ।।

**इषे** । 'सावेकाचः' इति विभक्तेरुदात्तत्वम् । **नृपतिम्** । 'परादिश्छन्दसि बहुलम्' इत्युत्तर-पदाद्युदात्तत्वम् । **आनट्** । 'अशू व्याप्तौ' लङि व्यत्ययेन परस्मैपदश्नमौ । आडागमः । व्रश्चादि-परत्वे टुत्वम् । **निषिक्तम्** । 'षिचिर् क्षरणे' । कर्मणि निष्ठा । 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् । 'उपसर्गात्सुनोति' इति षत्वम् । **अभीके** । अभिपूर्वादश्वतेः पचाद्यचि पृषोदरादित्वाद् रूपसिद्धिः । यद्वा । 'इण् गतौ' इत्यस्मात् औणादिकः कक्प्रत्ययः । उभयथापि दासीभारादित्वात् पूर्वपदप्रकृतिस्वरत्वम् । **स्वाध्यम्** । 'एरनेकाचः' इति यणादेशः । 'उदात्त-स्वरितयोर्यणः' इति स्वरितत्वम् । **जनयत्** । जनेर्ण्यन्तात् लेटि अडागमः । **सूदयत्** । 'षूद क्षरणे'। पूर्ववत् लेटि अडागमः ।। ८ ।।

**सिद्धाञ्जनम्– यत्** यदा **नृपतिम्** मनुष्याणां पतिं एनमग्निं **आ** समन्तात् **इषे** प्रेरणाशक्तये **तेजः** दीप्तिबलविशेषः **आनट्** व्याप्नोत् । यदा च **अभीके** आभिमुख्येन समागमे, सामर्थ्याद् दिवः अग्नेश्च समागमे, **द्यौः** द्युलोकः स्वर्लोक एव **शुचि** शुभ्रं **रेतः** बीजभूतं तेजः **निषिक्तम्** तस्मिन्नग्नौ आहितं अभूत्, तदा अयं **अग्निः, शर्धम्** महद्बलं, मारुतं गणं वा, **जनयत्** अजनयत् **सूदयच्च** प्रैरयच्च । कीदृशम् ? **शर्धम् अनवद्यम्** दोषरहितं, **युवानम्** यौवनसम्पन्नं, इदं यद्बलोप-लक्षणं **स्वाध्यम्** साधिष्ठतम्-आध्यानपरम् ।। **आनट्**- 'अशू व्याप्तौ' लङ्, व्यत्ययेन परस्मैपदं श्नम् च, आडागमः । **निषिक्तम्**- 'षिचिर् क्षरणे' कर्मणि निष्ठा । **अभीके**-अभिपूर्वात् अञ्चतेः पृषोदरादित्वाद्रूपसिद्धिः, अथवा 'इण् गतौ' इत्यस्मात् कक्प्रत्ययः । **जनयत्, सूदयत्**-'जनी प्रादुर्भावे, 'षूद क्षरणे' लेट् ।। ८ ।।

## ऋक्संहिता पदपाठसहिता

**मनो न योऽध्वनः सद्य एत्येकः सत्रा सूरो वस्व ईशे ।**
**राजाना मित्रावरुणा सुपाणी गोषु प्रियममृतं रक्षमाणा ।। ९ ।।**

**मनः । न । यः । अध्वनः । सद्यः । एति । एकः । सत्रा । सूरः । वस्वः । ईशे । राजाना । मित्रावरुणा । सुपाणी इति सुऽपाणी । गोषु । प्रियम् । अमृतम् । रक्षमाणा ।।**

**स्कन्द– मनः** इव **यः** अग्निः **अध्वनः** देवलोकमार्गान् **सद्य एति** शीघ्रं गच्छतीत्यर्थः । **एकः** च **सत्रा** सदा **सूरः** सूर्यसदृशः **वस्वः** धनस्य **ईशे** ईष्टे । यच्छब्दात् तच्छब्दोऽध्याहार्यः । स **राजाना** दीप्तौ **मित्रावरुणा सुपाणी गोषु** सर्वलोकप्रियं पय आख्यम् **अमृतम्** वृष्टिद्वारेण **रक्षमाणा** साकाङ्क्षत्वादस्मदर्थं यजत्विति वाक्यशेषः । प्रदर्शनार्थश्चात्र मित्रावरुणयोर्ग्रहणम् । सर्वदेवता यजत्वित्यर्थः ।। ९ ।।

**वेङ्कटमाधव–** शीघ्रगमन इव य दिव्यान् मार्गान् शीघ्रं गच्छति **स एकः** स्वयमेव सूर्यः धनस्य सत्यम् ईश्वरो भवति । तथा राजानौ **मित्रावरुणौ सुपाणी गोषु प्रियम्** पयः रक्षमाणौ भवतः प्रीणितावग्निनेति ।। ९ ।।

**मुद्गल– यः सूरः** सूर्य **एकः** एकाकी असहायः सन् **अध्वनः** दिव्यान् मार्गान् **सद्य एति** आशु गच्छति । दृष्टान्तः । **मनः न** यथा मनः शीघ्रं गच्छति तद्वत् । स च सूरः **वस्वः** धनस्य **सत्रा** सहैव युगपदेन **ईशे** ईष्टे । यो हि शीघ्रं गच्छति स बुहदेशेष्ववस्थितानि धनानि प्राप्नोति । तथा **राजाना** राजमानौ **सुपाणी** शोभनबाहू **मित्रावरुणा** मित्रावरुणौ अस्मदीयासु **गोषु प्रियम्** सर्वेषां प्रीतिकरम् **अमृतम्** अमृतवत् स्वादुभूतं पयः **रक्षमाणा** रक्षन्तौ वर्तेते । हे अग्ने! तत्तद्रूपेण त्वमेवैवं वर्तस इति भावः ।। ९ ।।

**सायण– यः सूरः** सूर्य **एकः** एकाकी असहायः सन् **अध्वनः** दिव्यान् मार्गान् **सद्य एति** आशु गच्छति । असहायत्वं च श्रूयते- 'सूर्य एकाकी चरतीत्याह । असौ वा आदित्य एकाकी चरति' (तै.ब्रा.३.९.५.४) इति । शीघ्रगमनं च स्मर्यते- 'योजनानां सहस्रे द्वे द्वे शते द्वे च योजने । एकेन निमिषार्धेन क्रममाण नमोऽस्तु ते' इति । शीघ्रगमने दृष्टान्तः । **मनो न** यथा मनः शीघ्रं गच्छति तद्वत् । स च सूरः **वस्वः** धनस्य **सत्रा** सहैव युगपदेव **ईशे** ईष्टे । यो हि शीघ्रं गच्छति स बुहदेशेष्ववस्थितानि धनानि प्राप्नोति । तथा **राजाना** राजमानौ **सुपाणी** शोभनबाहू **मित्रावरुणा** मित्रावरुणौ अस्मदीयासु **गोषु प्रियम्** सर्वेषां प्रीतिकरम् **अमृतम्** अमृतवत् स्वादुभूतं पयः **रक्षमाणा** रक्षन्तौ वर्तेते । हे अग्ने! तत्तद्रूपेण त्वमेवैवं वर्तस इति भावः ।। **वस्वः**-लिङ्गव्यत्ययः । 'जसादिषु च्छन्दसि वा वचनम्' इति 'घेर्ङिति' इति गुणाभावे यणादेशः । **ईशे** । 'ईश ऐश्वर्ये । 'लोपस्त आत्मनेपदेषु' इति तलोपः । **मित्रावरुणा** । 'देवताद्वन्द्वे च' इति पूर्वपदस्य आनङादेशः । 'देवताद्वन्द्वे च' इति उभयपदप्रकृतिस्वरत्वम् ।।

**सिद्धाञ्जनम्– यः एकः** असहायः सन् एकाकी **मनो न** मन इव **सद्यः** क्षणात् युगपद् वा **अध्वनः** मार्गान् सर्वान् **एति** गच्छति, सः **सूरः** सूर्यः **वस्वः** सर्वस्यापि सत्त्वात्मकस्य धनस्य **सत्रा** सहैव **ईशे** ईश्वरो भवति । **मित्रावरुणा** मित्रो वरुणश्च उभौ **राजाना सुपाणी** चारुहस्तौ **गोषु** गोशब्दवाच्येषु सौरेषु चिन्मयेषु रश्मिषु **प्रियम्** आनन्दं **अमृतम्** मरणरहितं नित्यं वस्तु च **रक्षमाणा** रक्षन्तौ भवतः । यजमानस्य सर्वज्ञानशक्तिसम्पन्नेनाग्निना नीयमानस्य यजनं यात्रा वा उत्तमे सौरे पदे पर्यवस्यति, तस्मात्सूर्यो वर्णितः ।। **ईशे** 'ईश ऐश्वर्ये' 'लोपस्त आत्मनेपदेषु' इति तलोपः ।। ९ ।।

## ऋक्संहिता पदपाठसहिता

**मा नो अग्ने सख्या पित्र्याणि प्र मर्षिष्ठा अभि विदुष्कविः सन् ।**
**नभो न रूपं जरिमा मिनाति पुरा तस्या अभिशस्तेरधीहि ।। १० ।।**
**मा । नः । अग्ने । सख्या । पित्र्याणि । प्र । मर्षिष्ठाः । अभि । विदुः । कविः । सन् । नभः । न । रूपम् । जरिमा । मिनाति । पुरा । तस्याः । अभिऽशस्तेः । अधि । इहि ।।**

**स्कन्द– 'मा'** शब्दः **'प्रमर्षिष्ठा'** इत्येतेन सम्बन्धयितव्यः । **नः** अस्माकम् । हे अग्ने! **सख्या पित्र्याणि** पितुरागतानि पितुरारभ्य प्रवृत्तानीत्यर्थः । **मा प्र मर्षिष्ठाः अभि** मृषिरत्र सामर्थ्यात् विस्मरणार्थः । अभिशब्दोऽत्र धात्वर्थानुवादी । लम्बते प्रलम्बत इति यथा । मा विस्मार्षीः । अथवा मृजेरिदं रूपम् । मा प्रमार्जीः । मापनैषीरित्यर्थः । **विदुः** वेदिता अस्मद्भक्ततायाः । **कविः** मेधावी च **सन्** । किम् अप्रमृष्यन् करवाणि । उच्यते । **नभः न** आदित्य इव तमांसि **रूपम्** अस्माकम् । **जरिमा** जरत्वम् **मिनाति** हिनस्ति । एतत् ज्ञात्वा **पुरा तस्या** जराया **अभिशस्तेः** हिंसातः **अधि इहि** अधिगच्छ प्राप्नुहि अस्मान् । यावत्सर्वरूपापहारिण्या जरया न हिंस्यामहे तावत् प्राप्यास्माञ्जरातो रक्षेत्यर्थः ।। १० ।।

**वेङ्कटमाधव– मा** अस्माकम् अग्ने! सख्यानि वसिष्ठमुपक्रम्यागतानि अभिप्रमार्जीः वेत्ता क्रान्तः **सन्** । आदित्य इव कालात्मा **रूपम् जरिमा** हिनस्ति । **पुरा** तस्मादुपद्रवाद् अस्मान् रक्षितुम् अधिगच्छ ।। १० ।।

**मुद्गल–** हे अग्ने! **पित्र्याणि** पितरं वसिष्ठम् उपक्रम्यागतानि **नः सख्या** अस्मत्सखित्वानि

**मा प्र मर्षिष्ठाः** मा विनाशय । यतस्त्वम् **कविः** क्रान्तदर्शी **सन् अभि** आभिमुख्येन **विदुः** सर्वं विद्वान् । **नभः न रूपम्** यथाऽन्तरिक्षं रूपवन्तः सूर्यरश्मयः आच्छादयन्ति तद्वत् **जरिमा** जरा **मिनाति** मां सूक्तद्रष्टारं हिनस्ति । **अभिशस्तेः** हिंसाहेतोः **तस्याः** जरायाः **पुरा अधीहि** मां बुध्यस्व । सा यथा न प्राप्नोति तथा कुरु । अमृतत्वं प्रयच्छेति यावत् ।। १० ।।

**सायण–** हे अग्ने! **पित्र्याणि** पितरं वसिष्ठम् उपक्रम्यागतानि **सख्या** सखित्वानि **मा प्र मर्षिष्ठा** मा विनाशय । अत्र मृष्यतेरुपसर्गवशादर्थान्तरे वृत्तिः । यतस्त्वम् **कविः** क्रान्तदर्शी **सन् अभि** आभिमुख्येन **विदुः** सर्वं विद्वान् । **नभः न रूपम्** यथाऽन्तरिक्षं रूपवन्तः सूर्यरश्मयः तद्वदाच्छादयन्ति **जरिमा** जरा **मिनाति** मां सूक्तद्रष्टारं हिनस्ति । **अभिशस्तेः** हिंसाहेतोः **तस्याः** जरायाः **पुरा अधीहि** मां बुध्यस्व । सा यथा न प्राप्नोति तथा कुरु । अमृतत्वं प्रयच्छेति यावत् ।। **सख्या** । सख्युर्भावः सख्यम् । 'सख्युर्यः' इति यः । **पित्र्याणि** । पितृभ्य आगतानि । 'पितुर्यच्च' (पा.सू.४.३.७९) इति यत्प्रत्ययः । 'रीङृतः' (पा.सू.७.४.२७ ) इति रीङादेशः । 'यस्येति च' इति ईकारलोपः । 'यतोऽनावः' इत्याद्युदात्तत्वम् । **मर्षिष्ठाः** । 'मृष तितिक्षायाम्'। प्रार्थनायां छान्दसो लुङ् । 'न माङ्योगे' इति अडभावः । **विदुः** 'विद ज्ञाने'। 'बहुलमन्यत्रापि' इति उसिप्रत्ययः । अत एव बहुलवचनाद्गुणाभावः । 'छन्दसि वाप्राम्रेडितयोः' (पा.स.४.३.४९) इति विसर्जनीयस्य षत्वम् । **नभः** । 'नहेर्दिवि भश्च' (उ.सू:४.६५०) इति असुन् । **जरिमा** । 'जॄष् वयोहानौ' । औणादिको भावे इमनिच्प्रत्ययः । **मिनाति** । 'मीञ् हिंसायाम्' । 'प्वादीनां ह्रस्वः' इति ह्रस्वत्वम् । **अभिशस्तेः** । अभिशस्यते हिंस्यतेऽनयेत्यभिशास्तिः । करणे क्तिन् । 'तादौ च' इति गतेः प्रकृतिस्वरत्वम् । **अधीहि** । 'इक् स्मरणे' लोटि अदादित्वात् शपो लुक् । हेरपित्त्वेन ङित्वाद्गुणाभावः ।। १० ।।

**सिद्धाञ्जनम्–** हे अग्ने, **पित्र्याणि** पितृपरम्परागतानि पूर्व्याणि **नः** अस्माकं **सख्या** सख्यानि **मा प्रमर्षिष्ठाः** मा विस्मार्षीः, मा तिरस्कार्षीः, मा निर्घाषितानि कुरु त्वं **विदुः** विद्वान् **कविः** द्रष्टा च **सन् अभि** अस्मान् अभिमुखीभूय वर्तसे । **नभः** तुषारावृतं नभः अन्तरिक्षं **रूपं न** दृश्यं वस्तु यथा **मिनाति** हिनस्ति मन्दायमानं करोति, तथा **जरिमा** जरा अस्मान् मिनाति क्षपयति । **तस्याः** जराया **अभिशस्तेः** अभिघातात् **पुरा** प्रागेव **अधीहि** अधिगच्छ एहि बुध्यस्व. जरागतेः पूर्वमेव प्रसन्नो भूत्वा कर्तव्यं कुरु । अनेन ऋषीणामाद्यानां अतिचिरन्तनम् अविच्छिन्नं

किमपि अग्निसम्बन्धि रहस्यं सख्यमासीदिति स्पष्टम् । नेदं भौतिकाग्निसम्बन्धीति किमु वक्तव्यम् । **मर्षिष्ठाः**- 'मृष तितिक्षायां' छान्दसो लुङ् । **विदुः**- 'विद् ज्ञाने' 'बहुलमन्यत्रापि' इति उसिप्रत्ययः । **जरिमा**- 'जॄष् वयोहानौ' औणादिको भावे इमनिच्प्रत्ययः । **अधीहि**- 'इक् स्मरणे' अधिपूर्वो धातुः ॥ १० ॥

**॥ इति प्रथमाष्टके पञ्चमाध्याये षोडशो वर्गः ॥**

## ॥ अथ सप्तदशो वर्गः ॥

## ऋक्संहिता पदपाठसहिता

**(सूक्तम् ७२)**

१० पराशरः । शाक्त्यः । अग्निः । त्रिष्टुप् ।

**नि काव्या वेधसः शश्वतस्कर्हस्ते दधानो नर्या पुरूणि ।**
**अग्निर्भुवद्रयिपती रयीणां सत्रा चक्राणो अमृतानि विश्वा ॥ १ ॥**
**नि । काव्या । वेधसः । शश्वतः । कः । हस्ते । दधानः । नर्या । पुरूणि ।**
**अग्निः । भुवत् । रयिऽपतिः । रयीणाम् । सत्रा । चक्राणः । अमृतानि । विश्वा ॥१॥**

**स्कन्द– काव्या** कविर्मेधाव्यग्निः, तस्य कर्माणि हविर्नयनादीनि काव्यानि । **वेधसः** मेधाविनः । **शश्वतः** बहुनामैतत् (तु.निघ.३,१) । बहोः यजमानस्य **नि कः** नियमेन करोत्यग्निः । **हस्ते, दधानः** दधत् । अयत्नेनैवेत्यर्थः । किम् । उच्यते । **नर्या** नरेषु भवानि नृभ्यो वा हितानि यज्ञफलानि । **पुरूणि** बहूनि । किञ्च **अग्निः भुवत्** भवति **रयिपतिः** यद्यपि रयीणां पतिः रयिपतिः इत्येवान्वाख्यायते तथापि प्रवीणशब्दादिवत् स्वामिमात्रवचन इह द्रष्टव्यः । स्वामी । कस्य । **रयीणाम्** हविर्लक्षणानां सर्वेषां वा यजमानधनानाम् । कस्मात् । उच्यते । **सत्रा चक्राणः** 'सत्रा' (निघ.३,१०) इति सत्यनाम । सदाशब्दपर्यायो वा । चक्राण इति शानजर्थेऽयं कानच् द्रष्टव्यः । शानच्येव वा छान्दसत्वात् श्लुः । हेतुश्चात्र शानजर्थः । 'शयाना वर्धत दूर्वा' (पाम. ३,२,१२६) इति यथा । यस्मात् सत्यानि सदा वा करोतीत्यर्थः । कानि । उच्यते । **अमृतानि** नित्यानि हविर्नयनादीनि । **विश्वा** सर्वाणि । यद्धविर्नयनादीनि सर्वाणि करोति तस्माद्धविषां यजमानधनानां स्वामी भवतीत्यर्थः ॥ १ ॥

**वेङ्कटमाधव–** अभिमुखानि करोति स्तोतुः बह्वोः स्तोत्राणि **हस्ते** प्रयच्छन् गृहीतानि बहूनि धनानि अग्निः । अभवद् **रयिपतिः** सत्यमेव कुर्वाणः अन्नानि सर्वाणि पृथूनि वा कुर्वन्निति ।।

**मुद्गल–** 'नि काव्या' इति दशर्चम् अष्टमं सूक्तम् । पराशर ऋषिः । अनुष्टुप् छन्दः । अग्निर्देवता ।। **शश्वतः** शाश्वतस्य नित्यस्य **वेधसः** धातुर्ब्रह्मणः सम्बन्धीनि **काव्या** काव्यानि मन्त्ररूपाणि स्तोत्राणि अयम् अग्निः **नि कः** नियमेन स्वात्माभिमुखं करोति । किं कुर्वन् । **नर्या** नृभ्यो हितानि **पुरूणि** बहुधनानि **हस्ते दधानः** धारयन् । ईदृग्भूतम् अग्निम् अवलोक्य सर्वे जनाः स्तुवन्तीति भावः । स्तोतृभ्यो धनेषु दत्तेष्वप्यग्नेर्धनं न क्षीयत इत्याह– अयम् **अग्निः रयीणाम् रयिपतिः भुवत्** धनानां मध्ये यानि धनान्युत्कृष्टानि तेषां स्वामी भवति । किं कुर्वन् । **विश्वा** सर्वाणि **अमृतानि** हिरण्यानि स्तोतृभ्यः **सत्रा** सहैव **चक्राणः** कुर्वन् । युगपत्प्रयच्छन्नित्यर्थः ।। १ ।।

**सायण– शश्वतः** शाश्वतस्य नित्यस्य **वेधसः** धातुर्ब्रह्मणः सम्बन्धीनि **काव्या** काव्यानि मन्त्ररूपाणि स्तोत्राणि अयम् अग्निः **नि कः** नियमेन स्वात्माभिमुखं करोति । किं कुर्वन् । **नर्या** नृभ्यो हितानि नृषु साधूनि वा **पुरूणि** बहुधनानि **हस्ते दधानः** धारयन् । ईदृग्भूतम् अग्निम् अवलोक्य सर्वे जनाः स्तुवन्तीति भावः । स्तोतृभ्यो धनेषु दत्तेष्वप्यग्नेर्धनं न क्षीयत इत्याह– अयम् **अग्निः रयीणाम् रयिपतिः भुवत्** धनानाँ मध्ये यानि धनान्युत्कृष्टानि तेषां स्वामी भवति । किं कुर्वन् । **विश्वा** सर्वाणि **अमृतानि** हिरण्यनामैतत् 'अमृतं हिरण्यम्' (ऋ.सं. ५.२८.११.) इति श्रुतेः । सर्वाणि हिरण्यानि स्तोतृभ्यः **सत्रा** सहैव **चक्राणः** कुर्वन् । युगपत्प्रयच्छन्नित्यर्थः ।। **कः** । करोतेः छान्दसो लुङ् । 'मन्त्रे घस' इति च्लेर्लुक् । 'हल्ङ्याभ्यः' इति तकारलोपः । **नर्या** । नरशब्दात् हितार्थे गवादिलक्षणो यत्प्रत्ययो द्रष्टव्यः (पा.सू.५.१.२) । यद्वा, 'तत्र साधुः' इति यत् । **चक्राणः** । करोतेर्लटः शानच् । 'बहुलं छन्दसि' इति विकरणस्य श्लुः । नन्वेवं सति 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वं प्राप्नोति । एवं तर्हि लिटः कानजस्तु, तस्यार्धधातुकत्वेन अभ्यस्ताद्युदात्तत्वाभावे चित्स्वर एव शिष्यते ।। १ ।।

**सिद्धाञ्जनम्–** 'नि काव्या' इति दशर्चमष्टमं सूक्तं त्रैष्टुभमाग्नेयं पराशरस्यार्षम् । अनुक्रान्तं च– 'नि काव्या' इति । प्रातरनुवाकाश्विनशस्त्रयोरुक्तो विनियोगः ।।

सोऽग्निः **शश्वतः** शाश्वतस्य, नित्यस्य **वेधसः** विधातुः, स्रष्टुः **पुरूणि** बहूनि **नर्या** नर्याणि नृषु देवेषु साधूनि बलानि, देवतावैभवानीति यावत् **हस्ते** स्वीये हस्ते **दधानः** धारयमाणः सन् **काव्या** काव्यानि कविकर्माणि द्रष्टप्रज्ञात्मकानि मन्त्ररूपस्तोत्राणि **नि कः** नितरां अस्मास्वन्तः करोति, प्रादुर्भावयति । सोऽयं **अग्निः रयीणाम्** धनानां **रयिपतिः** निधिपतिः, वीणायां प्रवीण इतिवत् बोध्यम् । **विश्वा** सर्वाणि **अमृतानि** अमृतसम्बन्धीनि वस्तूनि **सत्रा** युगपत् **चक्राणः** रूपयन् सुनिष्पन्नरूपाणि कुर्वन्, अथवा सर्वाण्यमृतानि एकत्र निष्पन्नरूपाणि कुर्वन्, **भुवत्** भवतु ।। **कः**-करोतेश्छान्दसो लुङ् । **नर्या**-नरशब्दात् 'तत्र साधुः' इति यत् । **चक्राणः**-करोतेर्लटः शानच्, विकरणस्य श्लुः ।। १ ।।

## ऋक्संहिता पदपाठसहिता

**अस्मे वत्सं परि षन्तं न विन्दन्निच्छन्तो विश्वे अमृता अमूराः ।**
**श्रमयुवः पदव्यो धियंधास्तस्थुः पदे परमे चार्वग्नेः ।। २ ।।**
**अस्मे इति । वत्सम् । परि । सन्तम् । न । विन्दन् । इच्छन्तः । विश्वे । अमृताः । अमूराः । श्रमऽयुवः । पदव्यः । धियम्ऽधाः । तस्थुः । पदे । परमे । चारु । अग्नेः ।।**

**स्कन्द– 'अस्मे'** इति तादर्थ्ये चतुर्थी । अस्मदर्थम् । अस्माकं हविर्नयनार्थम् इत्यर्थः । **वत्सम् परि षन्तं न** नशब्दोऽयमुपमार्थीयो व्यवहितेनापि 'वत्सम्' इत्येतेन सम्बन्धयितव्यः । वत्समिव सर्वतो भवन्तम् । हविर्वहनभयेन इतश्चेतश्च वत्समिव नश्यन्तमित्यर्थः । **विन्दन्** लब्धवन्तः । सौचीकमग्निम् **इच्छन्तः** कामयमानाः । **विश्वे** सर्वे । **अमृताः** मरणवर्जिताः देवाः । **अमूरा** अमूढचेतसः । **श्रमयुवः** युशब्दोऽत्र मत्वर्थे । 'अश्वयुर्गव्यू रथयुः' (ऋ.१.५१.१४.) इति यथा । श्रमवन्तः । अग्न्यन्वेषणाद् उपजातश्रमाः सन्त इत्यर्थः । **पदव्यः** पदशब्देनात्र कृत्स्नस्य जगतः आश्रयत्वात् कारणात्मनो ज्ञातार इत्यर्थः । **धियन्धाः** स्वस्य कर्मणो धारयितारः । कर्मणाम् अत्यक्तार इत्यर्थः । कस्माद् अविन्दन् । उच्यते । यस्मात् **तस्थुः पदे परमे चारु** चारुणि । क्रियाविशेषणं वा चारुशब्दः । चारु तस्थुरिति । कस्य पदम् । उच्यते । **अग्नेः** । यस्माद्यतो यतो नष्टस्याग्नेः पदानि दृश्यन्ते ततस्ततोऽन्वैषन्तेत्यर्थः । अथवा **पदव्य** इति पदज्ञत्वस्येहोपादनात् । तस्य च 'येना नः पूर्वे पितरः पदज्ञाः' (ऋ.१,६२,२,– ९,९७,३९) इत्यादिषु अङ्गिरस्सु प्रसिद्धत्वाद् 'विश्वे अमृता अमूराः' इत्यादिभिरङ्गिरसः उच्यन्ते,

न देवाः । पितरो हि सौचीम् अग्निम् अनुसृत्य स्वं स्वं तेजोऽस्मिन्न्यदधुरित्येतत् सौचीकसूक्ते दर्शयिष्यामः । एतस्मिंश्च पक्षेऽग्निप्रसादाच्चाग्निसालोक्यं प्रत्यपद्यन्तेत्यर्थः ।। २ ।।

**वेङ्कटमाधव–** अस्माकम् **वत्सम् अग्निम्** परितः **सन्तम् इच्छन्तः विश्वे** देवा **अमूरा** अपि न अविन्दन् । श्रमवन्तः अग्नेः स्थानम् अन्वेषमाणाः कर्मणो धातारः **तस्थुः पदे परमे** चारुणि । यत्राग्निर्निलीनस्तत्र तस्थुर्निलीनं दृष्ट्वेति ।। २ ।।

**मुद्गल– अस्मे** अस्माकम् **वत्सम्** वत्सवदत्यन्तं प्रियम् **परि सन्तम्** परितः सर्वत्र वर्तमानम् । देवेभ्यो निर्गत्याऽश्वत्थवेण्वादिषु निलीनं सन्तमित्यर्थः । एवंविधम् अग्निम् **इच्छन्तः विश्वे अमृताः** सर्वेऽमरणधर्माणो देवा **अमूरा** अमूढा मरुतश्च **न विन्दन्** तमग्निं नालभन्त । अलभमानाश्च ते **श्रमयुवः** हव्यवाहनस्याभावेन हविषाम् अभावात्तज्जन्येन श्रमेण क्लेशेनैकीभूतास्तस्य अग्नेः अन्वेषणाय **पदव्यः** पादैर्गच्छन्तः **धियन्धाः** धियाम् अग्नेः शयनासनस्थानादिलक्षणानां कर्मणां धारयितारः । एवंविधाः सन्तः, **चारु** चारुणि शोभने अग्नेः **परमे** उत्तमे अन्त्ये **पदे** । यत्र ह्यग्निर्निलीनो वर्तते तत्रेत्यर्थः । तस्मिन् पदे **तस्थुः** स्थितवन्तः । बहुविधेन प्रयासेनाग्निं ददृशुरित्यर्थः ।। २ ।।

**सायण– अस्मे** अस्माकं **वत्सं** वत्सवदत्यन्तं प्रियम् । यद्वा । वत्सः पुत्रः पश्चा-दुत्पन्नत्वात् । तद्वदग्निरप्यस्माकं पुत्रः । तथा चाम्नायते- 'ममैव सन्वह हव्यान्यग्ने पुत्रः पित्रे लोककृज्जातवेदः' (तै.ब्रा.३.७.७.१०) इति । **परि षन्तं** परितः सर्वत्र वर्तमानम् । देवेभ्यो निर्गत्याऽश्वत्थवेण्वादिषु निलीनं सन्तमित्यर्थः । एवंविधम् अग्निम् **इच्छन्तः विश्वे अमृताः** सर्वेऽमरणधर्माणो देवा **अमूरा** अमूढा मरुतश्च **न विन्दन्** तमग्निं नालभन्त । अलभमानाश्च ते **श्रमयुवः** हव्यवाहनस्याभावेन हविषाम् अभावात्तज्जन्येन श्रमेण क्लेशेनैकी भूतास्तस्य अग्नेः अन्वेषणाय **पदव्यः** पादैर्गच्छन्तः **धियन्धाः** धियाम् अग्नेः शयनासन स्थानादिलक्षणानां कर्मणां धारयितारः । एवंविधाः सन्तः, **चारु** चारुणि शोभने अग्नेः **परमे** उत्तमे अन्त्ये **पदे** । यत्र ह्यग्निर्निलीनो वर्तते तत्रेत्यर्थः । तस्मिन् पदे **तस्थुः** स्थितवन्तः । बहुविधेन प्रयासेनाग्निं ददृशुरित्यर्थः ।। **परि षन्तम्** । 'उपसर्गप्रादुर्भ्यामस्तिर्यच्परः' (पा.सू.८.३.८७) इति षत्वम् । श्रमयुवः । 'यु मिश्रणे' । श्रमेण यूयन्ते इति श्रमयुवः । 'क्विब्वचिप्रच्छि' (उ.सू.२.२१९)

इत्यादिना विधीयमानौ क्विबूदीर्घावस्मादपि धातोर्भवतः । तन्वादित्वात् उवङ् । **पदव्यः** । 'वी गत्यादिषु' । पादेन वियन्ति गच्छन्तीति पदव्यः । 'क्विप् च' इति क्विप् । **धियन्धाः** । 'आतोऽनुपसर्गे कः' इति कः । 'तत्पुरुषे कृति बहुलम्' इति बहुलवचनात् द्वितीयाया अपि अलुक् । **तस्थुः** । पादादित्वात् निघाताभावः । **चारु** । 'सुपां सुलुक्' इति सप्तम्या लुक् ।।

**सिद्धाञ्जनम्– अमूराः** अमूढाः मोहरहिताः प्राज्ञाः । **विश्वे अमृताः** सर्वे देवाः **परि** परितः सर्वतः **सन्तम्** विद्यमानं **वत्सम्** शिशुं जातं एनम् अग्निम्, **इच्छन्तः** कामयमानाः **अस्मे** अस्मासु **न विन्दन्** नालभन्त । तथा अग्नेरलाभात् **श्रमयुवः** श्रमेण यूयन्ते इति श्रमयुवः तदन्वेषण-परिश्रमयुक्ताः **पदव्यः** पदैः तद्गमनपदलक्ष्मभिः वियन्तः गच्छन्तः । **धियन्धाः** तदेकबुद्धिं धारयन्तः । एवम्भूताः सन्तः **परमे पदे** उत्तमे स्थाने, उत्कृष्टे परस्मिन् धामनि **तस्थुः** स्थिताः । तत्र अग्नेः **चारु** रमणीयं रूपं, चारुतां रामणीयकं वा 'अधिजग्मुः' इति शेषः ।। **श्रमयुवः**-'यु मिश्रणे' अस्मात् क्विप्, तन्वादित्वात् उवङ् । **पदव्यः** 'वी गत्यादिषु' क्विप् । **चारु**- अत्र सायणः 'अग्नेः चारुणि परमे पदे तस्थुः' इति मत्वा 'चारुणि सप्तम्या लुक्' इति व्याचष्टे । अत्र व्याख्यायां चारु विशेषणं, विशेष्यं अध्याहृतम् । यद्वा भावतलो लोपः ।। २ ।।

## ऋक्संहिता पदपाठसहिता

**तिस्रो यदंग्ने शरदस्त्वामिच्छुचिं घृतेन शुचयः सपर्यान् ।**
**नामानि चिद्दधिरे यज्ञियान्यसूदयन्त तन्वः सुजाताः ।। ३ ।।**
**तिस्रः । यत् । अग्ने । शरदः । त्वाम् । इत् । शुचिम् । घृतेन । शुचयः । सपर्यान् ।**
**नामानि । चित् । दधिरे । यज्ञियानि । असूदयन्त । तन्वः । सुऽजाताः ।। ३ ।।**

**स्कन्द– यत्** इति प्रथमाबहुवचनान्तं द्रष्टव्यम् । ये, हे अग्ने! **तिस्रः शरदः** त्रीणि वर्षाणि । **त्वाम् इत्** त्वामेव **शुचिम्** दीप्तम् **घृतेन** आज्येन **शुचयः** शुद्धात्मानः **सपर्यान्** परिचरन्ति, यजन्त इत्यर्थः । ये च **नामानि चित् दधिरे** नामान्यपि धारयन्ति । दारिद्र्याद् यष्टुम् अशक्नुवन्तः । भक्त्या नामान्येव केवलानि तव कीर्तयन्तीत्यर्थः । कीदृशानि । **यज्ञियानि** यज्ञसम्बन्धीनि (सम्पदादीनि) । यच्छब्दात्तच्छब्दोऽध्याहार्यः । ते सर्वे **असूदयन्त** सूदयतिः संस्कारार्थः । विद्यैश्वर्यादिभिः संस्कारैः संस्कुर्वन्ति आत्मीयाः **तन्वः सुजाताः** सम्पूर्णाः । अव्यङ्गशरीराः विद्यैश्वर्यादीनि प्राप्नुवन्तीत्यर्थः ।। ३ ।।

**वेङ्कटमाधव– तिस्रः** यदा **अग्ने! शरदः त्वाम्** एव **शुचिम् घृतेन शुचयः** पर्यचरन् । अथ ते **नामानि चित् दधिरे** यज्ञार्हाणीन्द्रो विष्णुर्वरुणो मित्रोऽर्यमेति । तथा शोभनजननाः तनूश्च बह्वीर्यज्ञभागार्थम् प्रैरयन् ॥ ३ ॥

**मुद्गल– शुचयः** शोधयितारो मरुतः । हे **अग्ने! शुचिम्** शुद्धम् **त्वाम्** इत् देवेभ्यो निर्गतं त्वामेवोद्दिश्य **तिस्रः शरदः** त्रीन् संवत्सरान् **घृतेन** आज्येन **यत्** यदा **सपर्यान्** पूजां कुर्युः तदानीं त्वमाविरभूः । तदनन्तरं ते मरुतस्त्वयाऽनुगृहीताः सन्तः **यज्ञियानि** यज्ञार्हाणि यज्ञे प्रयोक्तुं योग्यानि **नामानि चित्** नामान्यपि **दधिरे** अधारयन् । नामानि तैत्तिरीयके समाम्नायन्ते– 'ईदृङ् चान्यादृङ् चैतादृङ् च प्रतिदृङ् च मितश्च संमितश्च सभराः' (तै.४,६,५,५) इत्यादीनि । धारयित्वा च **सुजाताः** पूर्वजातं रूपं परित्यज्य शोभनम् अमृतत्वं प्राप्ताः सन्तः **तन्वः** स्वकीयानि शरीराणि **असूदयन्त** स्वर्गं प्रापितवन्तः ॥ ३ ॥

**सायण– शुचयः** शोधयितारो मरुतः । हे **अग्ने! शुचिम्** शुद्धम् दीप्यमानं वा, **त्वाम् इत्** देवेभ्यो निर्गतं त्वामेवोद्दिश्य **तिस्रः शरदः** त्रीन् संवत्सरान् **घृतेन** आज्येन **यत्** यदा **सपर्यान्** पूजां कुर्युः तदानीं त्वमाविरभूः । तदनन्तरं ते मरुतस्त्वयाऽनुगृहीताः सन्तः **यज्ञियानि** यज्ञार्हाणि यज्ञे प्रयोक्तुं योग्यानि **नामानि चित्** नामान्यपि **दधिरे** अधारयन् । नामानि तैत्तिरीयके समाम्नायन्ते– 'ईदृङ् चान्यादृङ् चैतादृङ् च प्रतिदृङ् च मितश्च संमितश्च सभराः' (तै.सं.४.६.५.५) इत्यादीनि । एतैश्चाग्निचयने मारुताः सप्तकपाला हयन्ते । नामानि धारयित्वा च **सुजाताः** पूर्वं रूपं परित्यज्य शोभनम् अमृतत्वं प्राप्ताः सन्तः **तन्वः** स्वकीयानि शरीराणि **असूदयन्त** स्वर्गं प्रापितवन्तः ॥ **तिस्रः** । शसि 'त्रिचतुरोः स्त्रियां तिसृचतसृ' इति पूर्वसवर्णदीर्घत्वे प्राप्ते 'अचि र ऋतः' इति रेफादेशः । त्रिशब्दः 'फिषः' (फि.सू.१) इत्यन्तोदात्तः । तिस्रादेशस्यापि स्थानिवद्भावेनान्तोदात्तत्वे 'उदात्तयणो हल्पूर्वात्' इति शस उदात्तत्वम् । **शरदः** । 'शॄ हिंसायाम्' । शीर्यन्तेऽस्याम् ओषधयः इति शरत् संवत्सरः । 'शृदभसोऽदिः' (उ.सू.१.१२७) इति अदिप्रत्ययः । उभयत्र 'कालाध्वनोरत्यन्तसंयोगे' (पा.सू.२.३.५) इति द्वितीया । **सपर्यान्** 'सपर पूजायाम्' कण्ड्वादिः । लेटि आडागमः । 'इतश्च लोपः' इति इकारलोपः । **यज्ञियानि** । 'यज्ञर्त्विग्भ्यां घखञौ' इत्यर्हार्थे घप्रत्ययः ॥ ३ ॥

**सिद्धाञ्जनम्–** हे अग्ने! **यत्** यदा **शुचयः** शुद्धास्ते **अमृताः** पूर्वप्रकृताः मरुत्प्रभृतयो वा (सायणस्तु ब्राह्मणाधारेण मरुत इत्याह) **शुचिम्** शुद्धं **त्वाम् इत्** त्वामेव **तिस्रः शरदः** त्रीन् वत्सरान् **घृतेन** प्रसन्नेन तेजसा **सपर्यान्** अपूजयन्, तदा **यज्ञियानि** यज्ञयोग्यानि **नामानि चित्** नमनसाधनानि, रहस्यानि स्तोत्राणि वा **दधिरे** धृतवन्तः आसन् । तेन तेषां **तन्वः** शरीराणि **सुजाताः** साधुनिष्पन्नजन्मानि अभवन् । तानि शरीराणि **असूदयन्त** मार्गे त्वरयितुं प्रैरयन् ।। यजमाने? अग्नेः सुष्ठु निष्पादनात्परं तद्बलादेव इतरेषां देवानां जन्म सम्भवति । तदर्थं देवानां स्वशरीरनिष्पत्तिः अग्निसपर्यया साध्या भवति । यज्ञियनामधारणं तु तेषां अग्निपर-ध्यानलक्षणम् । संवत्सरत्रयं, त्रैलोक्यापेक्षया त्रित्वं, संवत्सरस्तु परिपाकस्य आवश्यकः कश्चन कालावधिः । नेह मानुषसंवत्सरमानं विवक्षितम् । **सपर्यान्**-'सपर पूजायाम्' कण्ड्वादिः, लेट् । **यज्ञियानि** अर्हार्थे घप्रत्ययः ।। ३ ।।

## ऋक्संहिता पदपाठसहिता

**आ रोद॑सी बृह॒ती वेवि॑दानाः प्र रु॒द्रिया॑ जभ्रिरे य॒ज्ञिया॑सः ।**
**वि॒दन्मर्तो॒ नेमधि॑ता चिकि॒त्वान॒ग्निं प॒दे प॑र॒मे त॑स्थि॒वांस॑म् ।। ४ ।।**
**आ । रोद॑सी इति॑ । बृ॒हती इति॑ । वेवि॑दानाः । प्र । रु॒द्रिया॑ । ज॒भ्रि॒रे । य॒ज्ञिया॑सः ।**
**वि॒दत् । मर्तः॑ । ने॒मऽधि॑ता । चि॒कि॒त्वान् । अ॒ग्निम् । प॒दे । प॒र॒मे । त॒स्थि॒ऽवांस॑म् ।।**

**स्कन्द– रोदसी बृहती आ वेविदानाः** जानन्तः । प्रदर्शनार्थश्चैतत् रोदसीग्रहणं तत्स्थाशेष-ज्ञेयोपलक्षणार्थं वा । अशेषं ज्ञेयं जानन्त इत्यर्थः । **रुद्रिया** 'रुद्रः' (निघ.३,१६) इति स्तोतृ-नाम । तस्य स्वभूता, तस्मिन् वा भवा रुद्रिया स्तुतिः । सहयोगलक्षणतृतीयान्तश्चेदं द्रष्टव्यम् । स्तुत्या सह हवींषि **प्र जभ्रिरे** प्रहरन्ति अग्निं प्रति प्रापयन्ति । **यज्ञियासः** यज्ञसम्पादिनो मनुष्याः । ज्ञाताशेषज्ञेया यष्टारोऽग्निं स्तुवन्ति यजन्ति चेत्यर्थः । किञ्च **विदत्** तत्त्वतो वेत्ति । **मर्तः** तत्त्ववेदी मनुष्यः । **नेमधिता** सङ्ग्रामसदृशे यज्ञे संसारे वा वर्तमानः । **चिकित्वान्** ज्ञानी । यष्टारः स्तुवन्ति च यजन्ति च, सम्यग्ज्ञानिनोऽपि सम्यक् जानन्तीत्यर्थः । कम् । **अग्निम्** । क्व स्थितम् । उच्यते । **पदे परमे तस्थिवांसम्** वेद्याख्ये परमात्मनि वा ।। ४ ।।

**वेङ्कटमाधव– प्र आ जभ्रिरे** द्यावापृथिवी महती विन्दमानाः यज्ञार्हाः देवाः अस्मा अग्नये स्तोत्राणि । तथा उत्तमे स्थाने **तस्थिवांसम् अग्निम्** सङ्ग्रामार्थं प्राज्ञः मनुष्य आश्रयति ।।

**मुद्गल– बृहती** महत्यौ **रोदसी** द्यावापृथिव्यौ **आ वेविदानाः** अत्यर्थं ज्ञापयन्तः । कुत्राग्निर्वर्तत इति परस्परं वदन्तो द्यावापृथिव्योर्मध्ये वर्तमाना इत्यर्थः । यद्वा **आ वेविदानाः** अग्निमुपलभमानाः । एवम्भूता **यज्ञियासः** यज्ञार्हा देवा **रुद्रिया** रुद्रोऽग्निः । देवानामसुरैः सह युद्धसमये तैर्देवैः स्थापितं धनम् अपहृत्य गतवन्तम् अग्निं देवा आगत्य अग्निसकाशाद्बलेन तद्धनम् अगृह्णन् । तदानीं सोऽग्निररोदीत्, तस्माद् रुद्र इत्याख्यायते (तु.तै.१,५,१,१) । तस्य रुद्रस्याऽर्हाणि स्तोत्राणि **प्र जभ्रिरे** प्रजहिरे, चक्रुरित्यर्थः । **नेमधिता** नेमशब्दोऽर्धवचनः । सर्वेषां देवानाम् अर्धभागेन धीयते धार्यत इति नेमधित इन्द्रः । सर्वे देवा एकोऽर्धः । इन्द्र एक एवापरोऽर्ध इति यावत् । तेनेन्द्रेण सहितः **मर्तः** मरुद्गणः **परमे** उत्तमे **पदे** स्थानेऽश्वत्थादौ **तस्थिवांसम्** स्थितवन्तम् **अग्निम् चिकित्वान्** जानन् **विदत्** अलभत ।। ४ ।।

**सायण– बृहती** महत्यौ **रोदसी** द्यावापृथिव्यौ **आ वेविदानाः** अत्यर्थं ज्ञापयन्तः । कुत्राग्निर्वर्तत इति परस्परं वदन्तो द्यावापृथिव्योर्मध्ये वर्तमाना इत्यर्थः । यद्वा **आ वेविदानाः** अग्निमुपलभमानाः । एवम्भूता **यज्ञियासः** यज्ञार्हा देवा **रुद्रिया** रुद्रोऽग्निः । देवानामसुरैः सह युद्धसमये तैर्देवैः स्थापितं धनम् अपहृत्य गतवन्तम् अग्निं देवा आगत्य अग्निसकाशाद्बलेन तद्धनम् अगृह्णन् । तदानीं सोऽग्निररोदीत्, तस्माद् रुद्र इत्याख्यायते । तथा च तैत्तिरीयकम्– 'तदग्निर्न्यकामयत तेनापाक्रमत् तद्देवाविदित्यावरुरुत्समाना अन्वायन्' तदस्य सहसादित्सन्त सोऽरोदीद्यदरोदीत्तद्रुद्रस्य रुद्रत्वम्' (तै.सं.१.५.१.१.) तस्य रुद्रस्याऽर्हाणि स्तोत्राणि **प्र जभ्रिरे** प्रजहिरे, चक्रुरित्यर्थः । **नेमधिता** नेमशब्दोऽर्धवचनः । तथा च यास्कः– 'त्वो नेम इत्यर्धस्य' (निरु. ३.२०) इति । सर्वेषां देवानाम् अर्धभागेन धीयते धार्यत इति नेमधित इन्द्रः । सर्वे देवा एकोऽर्धः । इन्द्र एक एवापरोऽर्ध इति यावत् । तथा च तैत्तिरीयकम्– 'यत्सर्वेषामर्धमिन्द्रः प्रति तस्मादिन्द्रो देवतानां भूयिष्ठभाक्तमः' (तै.सं.५.४.८.३) तेनेन्द्रेण सहितः **मर्तः** मरुद्गणः **परमे** उत्तमेऽन्त्ये **पदे** स्थानेऽश्वत्थादौ **तस्थिवांसम्** स्थितवन्तम् **अग्निम् चिकित्वान्** जानन् **विदत्** अलभत ।।

**वेविदानाः** । विदेर्ज्ञानार्थात् लाभार्थाद्वा यङन्तात् लटः शानच् । 'बहुलं छन्दसि' इति शपो लुक् । 'छन्दस्युभयथा' इति शानच आर्धधातुकत्वात् अतोलोपयलोपौ । 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम् । **विदत्** 'विदॢ लाभे' । लुङि ऌदित्त्वात् च्लेः अङादेशः । **नेमधिता** ।

दधातेः कर्मणि निष्ठा । 'सुधित वसुधित नेमधित' (पा. सू.७.४.४५) इति धिभावो निपात्यते । 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरत्वम् । 'सुपां सुलुक्' इति तृतीयाया आकारः । **तस्थिवांसम्**- तिष्ठतेर्लिटः क्वसुः । 'वस्वेकाजाद्धसाम्' इति इडागमः ।। ४ ।।

**सिद्धाञ्जनम्– यज्ञियासः** यज्ञार्हाः, यज्ञस्य पतयः, अमृताः **बृहती** बृहत्यौ **रोदसी** द्यावापृथिव्यौ **आ वेविदानाः** अत्यर्थम् अधिगम्य विदितवन्तः **रुद्रियाः** उग्रबलाः **प्रजभ्रिरे** प्रकर्षेण बभ्रुः, ते उभे अपि दिवं पृथिवीं च धारयामासुः । ततः परं **मर्तः** मनुष्यः **विदत्** अजानात्, यज्ञियैर्धारिते द्यावापृथिव्यौ उभयकक्ष्यागते चिद्भूमी ज्ञातवान् मनुष्य इत्यर्थः । अथ **नेमधिता** नेमशब्द अर्धवाची, तस्य धारणेन । इदं च अर्धम्, सामर्थ्यात् परमं परार्धं बोध्यम् । अवमं अर्धं तु अपरार्धं त्रैलोक्यम् । पूर्वोक्तो विद्वान् मनुष्यः परार्धधारणसमर्थो भवति, तथा धारणेन **अग्निम्, परमे** सर्वोत्कृष्टे **पदे** धामनि **तस्थिवांसम्** स्थितं **चिकित्वान्** साक्षात्कृतवान् ।। **वेविदानाः**-ज्ञानार्थाद् विदेर्लाभार्थाद्वा यङन्ताल्लटः शानच् । **विदत्**- 'विद ज्ञाने' लुङ्, छान्दसः । **नेमधिता**-दधातेः भावे क्तः, 'धितं सुधित' इत्यादिना धिभावो निपातितः, नेमस्य धितं धारणं, तेन नेमधितेन, तृतीयाया आकारः । **तस्थिवांसम्**-तिष्ठतेर्लिटः क्वसुः ।। ४ ।।

## ऋक्संहिता पदपाठसहिता

**संजानाना उप सीदन्नभिज्ञु पत्नीवन्तो नमस्यं नमस्यन् ।**
**रिरिक्वांसस्तन्वः कृण्वत स्वाः सखा सख्युर्निमिषि रक्षमाणाः ।। ५ ।।**
**सम्ऽजानानाः । उप । सीदन् । अभिऽज्ञु । पत्नीऽवन्तः । नमस्यम् । नमस्यन्निति नमस्यन् । रिरिक्वांसः । तन्वः । कृण्वत । स्वाः । सखा । सख्युः । निऽमिषि । रक्षमाणाः ।। ५ ।।**

**स्कन्द– सञ्जानाना** सम्यक् जानन्तः **उप सीदन्** उपसीदन्ति अग्निं मनुष्याः । **अभिज्ञु** क्रियाविशेषणमेतत् । अभिगते जानुनी यस्मिन् उपसदने तत् अभिज्ञु । भूमौ जानुनी निपात्योप सीदन्तीत्यर्थः । न च केवला, किं तर्हि । **पत्नीवन्तः** पत्नीभिः संयुक्ताः । उपसद्य च **नमस्यम्** पूज्यम् अग्निम् **नमस्यन्** पूजयन्तश्चाग्निप्रसादेन **रिरिक्वांसः** शुद्धोऽप्ययमतिपूर्वार्थो द्रष्टव्यः । अन्यतोऽतिरिच्यमानाः । प्रकृष्टीभवन्त इत्यर्थः । **तन्वः कृण्वतः स्वाः** करोतिः शुद्धोऽपि सम्पूर्वार्थो द्रष्टव्यः । विद्यैश्वर्यादिभिः संस्कारैः संस्कुर्वन्ति । विद्यैश्वर्यादीनि प्राप्नुवन्तीत्यर्थः । **सखा** बहुवचनस्य स्थाने इदमेकवचनम् । सखायः । **सख्युः** अग्नेः । **निमिषि** निमेषे दर्शने । सप्तमीनिर्देशाद्

वर्तमाना इति शेषः । अग्निनाऽनुग्राह्यदर्शनेन दृश्यमाना इत्यर्थः । तत्प्रसादादेव सर्वापद्भ्यः आत्मानम् **रक्षमाणाः** । अथवा निमिषि इति तृतीयार्थे सप्तमी । रक्षमाणा इत्यपि व्यत्ययेन कर्मणि कर्तृप्रत्ययः । अग्नेरनुग्राह्यदर्शनेन सर्वापद्भ्यो रक्ष्यमाणा इत्यर्थः ।। ५ ।।

**वेङ्कटमाधव–** ऐकमत्यं गता उपासीदन्, अभिगतजानुकं पत्नीसहिताः नमस्कार्यम् अग्निं नमस्यन्ति । तथा रिक्ता भवन्तोऽग्नये स्वानि शरीराणि विधेयीकुर्वन्ति सखायः **सख्युः** अनुग्रहोन्मुखे निमेषेऽग्निं हविर्भिः **रक्षमाणाः** ।। ५ ।।

**मुद्गल–** हे अग्ने! त्वाम् **सञ्जानानाः** सम्यग् देवाः **उप सीदन्** उपसीदन्ति प्राप्नुवन्ति । उपसत्तिं कृत्वा च **पत्नीवन्तः** सपत्नीकाः सन्तः **नमस्यम्** नमस्कारार्हम् **अभिज्ञु** आभिमुख्ये-नावस्थितजानुयुक्तं त्वाम् **नमस्यन्** अपूजयन् । पूजयित्वा च **सख्युः** मित्रस्य तव **निमिषि** दर्शने निमित्तभूते सति **रक्षमाणाः** त्वया परिरक्ष्यमाणाः **सखा** सखायो देवाः **स्वाः तन्वः** स्वकीयानि शरीराणि **रिरिकांसः** अनशनादिरूपेण दीक्षानियमेन रिक्तीकुर्वन्तः शोषयन्तः **कृण्वतः** यागान् अकुर्वन् ।। ५ ।।

**सायण–** हे अग्ने! त्वाम् **सञ्जानानाः** सम्यग् देवाः **उप सीदन्** उपसीदन्ति प्राप्नुवन्ति । उपसत्तिं कृत्वा च **पत्नीवन्तः** सपत्नीकाः सन्तः **नमस्यम्** नमस्कारार्हम् **अभिज्ञु** आभिमुख्ये-नावस्थितजानुयुक्तं त्वाम् **नमस्यन्** अपूजयन् । पूजयित्वा च **सख्युः** मित्रस्य तव **निमिषि** दर्शने निमित्तभूते सति **रक्षमाणाः** त्वया परिरक्ष्यमाणाः **सखा** सखायो देवाः **स्वाः तन्वः** स्वकीयानि शरीराणि **रिरिकांसः** अनशनादिरूपेण दीक्षानियमेन रिक्तीकुर्वन्तः शोषयन्तः **कृण्वतः** यागान् अकुर्वन् । 'देवा वै यज्ञमतन्वत' (ऐ.ब्रा.२.११) इति श्रुतेः ।। **नमस्यन्** । 'नमोवरिव-श्चित्रङः' इति पूजार्थे क्यच् । लङि 'बहुलं छन्दस्यमाङ्योगेऽपि' इति अडभावः । **रिरिकांसः** । 'रिचिर् विरेचने' । लिटः क्वसुः । **निमिषि** । 'मिष स्पर्धायाम्' । अत्रोपसर्गवशाद्दर्शनार्थः । सम्पदादिलक्षणो भावे क्विप् । **रक्षमाणाः** । कर्मणि लटः शानच् । यकि प्राप्ते व्यत्ययेन शप् ।।

**सिद्धाञ्जनम्– सञ्जानानाः** तम् अग्निं सम्यग् जानन्तः ते देवाः, **पत्नीवन्तः** सपत्नीकाः सन्तः **उप सीदन्** उपागमन् । उपगम्य च **अभिज्ञु** अभिमुखं जान्वोरवस्थानं कृत्वा **नमस्यम्** नमस्कारार्हं पूज्यं तं **नमस्यन्** नमस्कारेण अपूजयन् । अथ **रिरिकांसः** स्वात्मानं रिक्तीकुर्वन्तः

**स्वाः तन्वः** स्वशरीराणि **कृण्वतः** सुनिष्पन्नान्यकुर्वन् । नव्यशरीरनिष्पत्तेः प्राक् रिक्तीकरणम् अवश्यमिति रहस्यमत्र बोध्यम् । कीदृशास्ते? **सखा सख्युर्निमिषि रक्षमाणाः सखा** देवानामेकैकोऽपि **सख्युः** सखिभूतस्याग्नेः **निमिषि** दृष्टौ रक्ष्यमाण इत्यर्थः । एवं सर्वेऽपि **रक्षमाणाः** रक्ष्यमाणाः **नमस्यन्** इति पूर्वेणान्वयः । देवाः सर्वेऽपि प्रत्येकम् अग्नेः सखाय एव । एकैकोऽपि अग्नेः सख्युदृष्टौ स्थितो रक्षितः ।। **नमस्यन्**- 'नमोवरिवश्चित्रङः' इति पूजार्थे क्यच्, लङ्, अडभावः । **रिरिक्वांसः** 'रिचिर् विरेचने' लिटः क्वसुः । **निमिषि**-निपूर्वात् मिषेः सम्पदादिलक्षणः क्विप् । **रक्षमाणाः**-कर्मणि लटः शानच्, यकि प्राप्ते व्यत्ययेन शप् ।। ५ ।।

**नीतिमञ्जरी–** धर्माभिष्टवे 'सञ्जानानाः' इत्येषा । 'अथोत्तरम्' इति खण्डे सूत्रितं- 'सञ्जानाना उप सीदन्नभिज्ञ्वा दशभिर्विवस्वतः' (आश्व.श्रौ.४.७) इति ।। ५ ।।

।। इति प्रथमाष्टके पञ्चमाध्याये सप्तदशो वर्गः ।।

## ।। अथ अष्टादशो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

**त्रिः स॒प्त यद्गुह्या॑नि॒ त्वे इत्प॒दावि॑द॒न्निहि॑ता य॒ज्ञिया॑सः ।**
**तेभी॑ रक्षन्ते अ॒मृतं॑ स॒जोषा॑ः प॒शूञ्च॑ स्था॒तृञ्च॒रथं॑ च पाहि ।। ६ ।।**

**त्रिः । स॒प्त । यत् । गुह्या॑नि । त्वे इति॑ । इत् । प॒दा अ॒वि॒द॒न् । निऽहि॑ता । य॒ज्ञिया॑सः ।**
**तेभिः॑ । र॒क्ष॒न्ते॒ । अ॒मृत॑म् । स॒ऽजोषा॑ः । प॒शून् । च॒ । स्था॒तॄन् । च॒रथ॑म् । च॒ । पा॒हि॒ ।।**

**स्कन्द–** अत्रेतिहासमाचक्षते– अग्नौ किल एकविंशतिरपि छन्दांसि **गुह्यानि** देवैर्निहितान्यासन् । तान्यग्निमाराध्याङ्गिरसोऽजानन् इति । तदेतदिहोच्यते– **त्रिः सप्त** इति । त्रिरावृत्तानि सप्त । एकविंशतिमित्यर्थः । कानि । इतिहासस्मृतेः छन्दांसि । कथं पुनश्छन्दसामेकविंशतित्वम् । उच्यते । 'गायत्र्युष्णिगनुष्टब्बृहतीपङ्क्तिस्त्रिष्टुब्जगती' इत्येतानि चतुरुत्तराणि सप्त छन्दांसि । तेषामेकैकं 'ब्राह्म-दैव-आर्ष' भेदेन त्रिधा भिद्यते । 'ऊनत्व-पूर्णत्व-आधिक्य' भेदेन वा । एकेन द्वाभ्यां वाऽक्षराभ्यां न्यूनं गायत्र्यादिच्छन्दो 'निचृत् विराट्' इति वा विशेषाख्यां लभते, न तु स्वामाख्यां जहाति । तथाऽतिरेके 'भुरिक् स्वराळ्' इति चोच्यते, न तु स्वामाख्यां न प्रपद्यते । तथा च श्रुतावप्युक्तम्– 'न वा एकेनाक्षरेण छन्दांसि वियन्ति न द्वाभ्याम्' (आ.ब्रा.१,१) इति । यानि यानि तु

गायत्र्यादिभ्योऽन्यानि तानि कानिचिद् अतिच्छन्दांसि कानिचित्तेषां विकार इति नात्र सङ्ख्यायन्ते । तदेवं गायत्र्यादीनां सप्तानामेकैकस्याः त्रिधा भेदेन तदन्येषां छन्दसाम् अपरिसङ्ख्यानाद् अस्ति छन्दसामेकविंशतित्वम् । तच्चैतदुच्यते– **त्रिः सप्त इति** । **यत्** यानि **गुह्यानि** गूहनार्हाणि । **त्वे** त्वयि । 'इत्' शब्दस्तु पदपूरणः । **निहिता** देवैर्निहितानि । **पदा** पदेन, स्वेन ज्ञानेनेत्यर्थः । **अविदन्** त्वामाराध्य ज्ञातवन्तः । **यज्ञियासः** यज्ञसम्पादिनोऽङ्गिरसः । **तेभिः रक्षन्ते अमृतम्** भवन्तम् । अग्निगुणरक्षणाच्चायं तद्वत्यग्नावेव रक्षणव्यपदेशः । अकीर्त्यमाना हि छन्दोभिरग्नेर्गुणा विस्मरणात् प्रलयं गच्छेयुः । तान् छन्दोभिः रक्षन्तः अग्निमेव रक्षन्तीत्युच्यते । **सजोषाः** सम्प्रीयमाणाः । अङ्गिरस एव वा, प्रकृतत्वात् सर्वे वा स्तोतारः । य ईदृशो महात्माऽसि तं ब्रूमः । **पशून् च स्थातॄन्** स्थावराणि च **चरथम् च** जङ्गमश्च पशुव्यतिरिक्तमपि **पाहि** रक्ष त्वम् ।। ६ ।।

**वेङ्कटमाधव– त्रिः सप्त यत्** गुहायां निहितानि त्वयि पदानि निवासस्थानानि धनानि **अविदन्** निहितानि देवाः । त्वया पुनः प्रत्तानि धनानि अलभन्त । तैर्लब्धैः **अमृतम्** अग्निं त्वामेव **रक्षन्ते** सङ्गताः । स त्वम् **पशून्** स्थावराणि जङ्गमम् च **पाहि** इति ।। ६ ।।

**मुद्गल– त्रिः सप्त** एकविंशतिसङ्ख्याकानि **गुह्यानि** रहस्यानि वेदैकसमधिगम्यानि **यत्** यानि **पदा** पदानि । पद्यते गम्यते स्वर्गः एभिरिति व्युत्पत्त्या पदशब्देनात्र यज्ञा उच्यन्ते । ते च एकविंशतिसङ्ख्याकाः । औपासन-होम-वैश्वदेवादयः सप्त पाकयज्ञाः । अग्न्याधेयदर्शपूर्णमासादयः सप्त हविर्यज्ञाः । अग्निष्टोमात्यग्निष्टोमादयः सप्त सोमयज्ञाः । एकविंशतिसङ्ख्याकानि यज्ञलक्षणानि पदानि, हे अग्ने! **त्वे इत्** त्वय्येव **निहिता** स्थापितानि । तेषां सर्वेषां त्वत्प्रधानत्वात् । न ह्यग्निम् अन्तरेण यागा अनुष्ठातुं शक्यन्ते । **यज्ञियासः** यज्ञार्हा अर्थित्वसामर्थ्यवैदुष्यादिभिः अधिकारहेतुभिर्युक्ताः । एवंविधलक्षणोपेता यजमानास्तानि पदानि **अविदन्** अलभन्त लब्धवन्तः । **तेभिः** यज्ञलक्षणैः पदैः **अमृतम्** अमरणधर्माणं त्वाम् **रक्षन्ते** पालयन्ति । पूजयन्तीत्यर्थः । **सजोषाः** तैर्यजमानैः समानप्रीतिस्त्वम् **पशून्** गवाश्वादिपशून् **च स्थातॄन्** व्रीह्यादिस्थावराणि **चरथम्** पशुव्यतिरिक्तम् अन्यद् यत्प्राणिजातम् अस्ति तत् **च पाहि** रक्ष । तेषु हि रक्षितेषु त्वदीया यागाः कर्तुं शक्यन्ते नान्यथा । अतस्त्वमेवमुच्यसे इत्यर्थः ।। ६ ।।

**सायण– त्रिः सप्त** एकविंशतिसङ्ख्याकानि **गुह्यानि** रहस्यानि वेदैकसमधिगम्यानि **यत्** यानि **पदा** पदानि । पद्यते गम्यते स्वर्गः एभिरिति व्युत्पत्त्या पदशब्देनात्र यज्ञा उच्यन्ते ।

ते च एकविंशतिसङ्ख्याकाः । औपासन-होम-वैश्वदेवादयः सप्त पाकयज्ञाः । अग्न्याधेयदर्शपूर्णमासादयः सप्त हविर्यज्ञाः । अग्निष्टोमात्यग्निष्टोमादयः सप्त सोमयज्ञाः । एकविंशतिसङ्ख्याकानि यज्ञलक्षणानि पदानि, हे अग्ने! **त्वे इत्** त्वय्येव **निहिता** स्थापितानि । तेषां सर्वेषां त्वत्प्रधानत्वात् । न ह्यग्निम् अन्तरेण यागा अनुष्ठातुं शक्यन्ते । **यज्ञियासः** यज्ञार्हा अर्थित्वसामर्थ्यवैदुष्यादिभिः अधिकारहेतुभिर्युक्ताः । तथा चोक्तम्– 'अर्थी समर्थो विद्वान् शास्त्रेणापर्युदस्तः कर्मण्यधिकारी' इति । एवंविधलक्षणोपेता यजमानास्तानि पदानि **अविदन्** अलभन्त लब्धवन्तः । **तेभिः** यज्ञलक्षणैः पदैः **अमृतम्** अमरणधर्माणं त्वाम् **रक्षन्ते** पालयन्ति, पूजयन्तीत्यर्थः । **सजोषाः** तैर्यजमानैः समानप्रीतिस्त्वम् **पशून्** गवाश्वादिपशून् **च स्थातॄन्** व्रीह्यादिस्थावराणि **चरथम्** पशुव्यतिरिक्तम् अन्यद् यत्प्राणिजातम् अस्ति तत् **च पाहि** रक्ष । तेषु हि रक्षितेषु त्वदीया यागाः कर्तुं शक्यन्ते नान्यथा । अतस्त्वमेवमुच्यसे इत्यर्थः । **यत्** 'सुपां सुलुक्' इति विभक्तेर्लुक् । **गुह्यानि** गुहायां भवानि । 'भवे छन्दसि' इति यत् । 'यतोऽनावः' इत्याद्युदात्तत्वम् । **त्वे** 'सुपां सुलुक्' इति सप्तम्याः शेआदेशः । **अविदन्** 'विद्लृ लाभे' लुङि लृदित्वात् अङ् । **पशून् स्थातॄन्** उभयत्र 'उभयथर्क्षु' (पा.सू.८.३.८) इत्युभयथाभावात् नकारस्य रुत्वभावः ।। ६ ।।

**सिद्धाञ्जनम्– यत्** यदा **यज्ञियासः** यज्ञार्हाः देवाः **गुह्यानि** रहस्यानि **त्रिः सप्त** त्रिधा सप्त **पदा** पदानि स्थानानि, त्रिगुणितं चिद्भूमिकासप्तकमित्यर्थः । **त्वे इत्** त्वय्येव **निहिता अविदन्** त्वयि निगूढं भूमिकानां त्रिसप्तकम् अविन्दन्, अजानन्वा । तदा ते देवाः **सजोषाः** समनस्काः समानप्रीतयः सन्तः **तेभिः** त्रिगणितैः सप्तभिः त्वयि निहितैः पदैः **अमृतम्** मरणरहितं नित्यं त्वां **रक्षन्ते** रक्षन्ति । हे अग्ने, **पशून् च** पश्यन्तीर्गाश्च दृष्टिरश्मीन् **स्थातॄन्** स्थावराणि **चरथम् च** जङ्गमं च **पाहि** रक्ष ।। **गुह्यानि**-गुहायां भवानि, भवे यत् । **त्वे**-त्वयि, सप्तम्याः शे आदेशः ।। ६ ।।

## ऋक्संहिता पदपाठसहिता

**विद्वाँ अग्ने वयुनानि क्षितीनां व्यानुषक्छुरुधो जीवसे धाः ।**
**अन्तर्विद्वाँ अध्वनो देवयानानतन्द्रो दूतो अभवो हविर्वाट् ।। ७ ।।**

विद्वान् । अग्ने । वयुनानि । क्षितीनाम् । वि । आनुषक् । शुरुधः । जीवसे । धाः । अन्तःऽविद्वान् । अध्वनः । देवऽयानान् । अतन्द्रः । दूतः । अभवः । हविःऽवाट् ॥७॥

**स्कन्द– विद्वान्** हे अग्ने! **वयुनानि** त्वद्भक्तिरूपाणि प्रज्ञानानि । **क्षितीनाम्** क्षितयः इति मनुष्यनाम । मनुष्याणाम् । **आनुषक्** आनुपूर्व्येण । यथायोग्यमित्यर्थः । **शुरुधः** शुरुध आप उच्यन्ते (तु.या.६.१६) वृष्टिलक्षणा अपः **जीवसे** जीवितुम् **वि धाः** हविर्नयनद्वारेण विविधं देहि । किञ्च **अन्तर्विद्वान्** अन्तरिति वेदिमध्यम् अभिप्रेतम् । विद्वानिति 'लक्षणहेत्वोः क्रियायाः' (पा.३,९,१६) इत्येवं हेतौ शता । 'अजर्यन् वसति' इति यथा । वेदिमध्यव्यवस्थित ज्ञानेन हेतुना । यस्माद्वेदिमध्य एव व्यवस्थितो जानासीत्यर्थः । किम् । **अध्वनः** मार्गान् । **देवयानान्** यैर्देवाः प्रतिगम्यन्ते तान् **अध्वनः** । **अतन्द्रः** अनलसः । उत्साहीत्यर्थः । देवताह्वानार्थं सर्वयजमानानाम् **दूतः अभवः** अभूः भवसि वा **हविर्वाट्** हविषां वोढा च ॥ ७ ॥

**वेङ्कटमाधव–** प्रज्ञानानि मनुष्याणां विधेहि । तथा शुचो रोधयित्रीरपश्च जीवनाय अनुषक्तं कुरु । देवयानान् मार्गान् अन्तर्जानन् यत्र यत्र रक्षांसि चरन्ति तं तं देशं जानन् अनलसः **दूतः** अभवः हविषां वोढा ॥ ७ ॥

**मुद्गल–** हे **अग्ने! वयुनानि** सर्वाणि ज्ञातव्यानि **विद्वान्** जानंस्त्वम् **क्षितीनाम्** यजमान-लक्षणानां प्रजानाम् जीवसे **जीवितुम् शुरुधः** क्षुद्रूपकस्य शोकस्य रोधयित्रीरिषोऽन्नानि **आनुषक्** अनुषक्तं सन्ततं यथा भवति तथा **वि धाः** विधेहि कुर्वित्यर्थः । एवं यजमानान् अन्नसमृद्धान् कृत्वाऽनन्तरम् **हविर्वाट्** तैर्देवेभ्यः प्रत्तं हविर्वहन् दूतः **अभवः** देवानां दूतो भवसि । कीदृशस्त्वम् । **अन्तविद्वान्** द्यावापृथिव्योर्मध्ये जानन् । किं जानन् । **अध्वनः** मार्गान् । कीदृशान् । **देवयानान्** देवा यैर्मार्गैर्यान्ति गच्छन्ति ताञ्जानन्नित्यर्थः । **अतन्द्रः** पुनःपुनर्हविर्वहनेऽप्यनलसः ॥ ७ ॥

**सायण–** हे **अग्ने! वयुनानि** । ज्ञाननामैतत् । इह तु ज्ञातव्ये वर्तते । सर्वाणि ज्ञातव्यानि **विद्वान्** जानंस्त्वम् **क्षितीनाम्** यजमानलक्षणानां प्रजानाम् जीवसे **जीवितुम् शुरुधः** क्षुद्रूपकस्य शोकस्य रोधयित्रीरिषोऽन्नानि **आनुषक्** अनुषक्तं सन्ततं यथा भवति तथा **वि धाः** विधेहि कुर्वित्यर्थः । एवं यजमानान् अन्नसमृद्धान् कृत्वाऽनन्तरम् **हविर्वाट्** तैर्देवेभ्यः प्रत्तं हविर्वहन् **दूतः अभवः** देवानां दूतो भवसि । कीदृशस्त्वम् । **अन्तविद्वान्** द्यावापृथिव्योर्मध्ये जानन् ।

किं जानन् । **अध्वनः** मार्गान् । कीदृशान् । **देवयानान्** देवा यैर्मार्गैर्यान्ति गच्छन्ति तांश्चान-न्नित्यर्थः । **अतन्द्रः** पुनःपुनर्हविर्वहनेऽप्यनलसः ॥ **वयुनानि** । 'अज गतिक्षेपणयोः' । 'अजिय-मिशीङ्भ्यश्च' (उ.सू.३.३४१) इति कर्मणि उनन्प्रत्ययः । 'अजेर्व्यघञपोः' (पा.सू.२.४.५६) इति वीभावः । **क्षितीनाम्** । क्षियन्ति निवसन्तीति क्षितयो मनुष्याः । 'क्तिच्क्तौ च सञ्ज्ञायाम्' इति कर्तरि क्तिच् । अन्तोदात्तात् ह्रस्वान्तात् क्षितिशब्दादुत्तरस्य नामः 'नामन्यतरस्याम् ' इत्युदात्तत्वम् । **शुरुधः** । शुचं रुधन्तीति शुरुधः । 'क्विप् च' इति क्विप् । पूर्वपदस्यान्त्यलोपः पृषोदरादित्वात् ॥ ७ ॥

**सिद्धाञ्जनम्–** हे **अग्ने!** त्वं **वयुनानि** अस्मदीयानि ज्ञानानि **विद्वान्** अवगतवानसि । **क्षितीनाम्** विशां **जीवसे** जीवनाय **आनुषक्** अनुषक्तानि, अविच्छिन्नपारम्पर्याणि यथा भवन्ति तथा **शुरुधः** बलानि **वि धाः** विधेहि । **देवयानान्** देवानां यानं गमनं यैर्मार्गैः भवति, तान् **अध्वनः** मार्गान् **अन्तर्विद्वान्** अन्तरेव गूढं वर्तमानस्त्वं जानन्नसि । **हविर्वाट्** हव्यानां अस्माभिरर्प्यमाणानां वोढाऽसि । **अतन्द्रः** अनलसः **दूतः, अभवः** भवसि ॥ **शुरुधः**-शुचं रुन्धन्तीति शुरुधः, 'क्विप् च' इति क्विप्, पूर्वपदस्य अन्त्यलोपः पृषोदरादित्वात् ॥ ७ ॥

## ऋक्संहिता पदपाठसहिता

**स्वाध्यो॒ दिव॒ आ स॒प्त य॒ह्वी रा॒यो दुरो॒ व्यृ॑त॒ज्ञा अ॑जानन् ।**
**वि॒दद्गव्यं॑ स॒रमा॑ दृ॒ळ्हमू॒र्वं येना॒ नु कं॒ मानु॑षी भोज॑ते॒ विट् ॥ ८ ॥**
सु॒ऽआ॒ध्यः॑ । दि॒वः । आ । स॒प्त । य॒ह्वीः । रा॒यः । दुरः॑ । वि । ऋ॒त॒ऽज्ञाः । अ॒जा॒न॒न् ।
वि॒दत् । गव्य॑म् । स॒रमा॑ । दृ॒ळ्हम् । ऊ॒र्वम् । येन॑ । नु । क॒म् । मानु॑षी । भोज॑ते । विट् ॥ ८ ॥

**स्कन्द– स्वाध्यः** शोभनम् आध्यानं येषां ते स्वाध्यः कल्याणचित्ताः । के ते । अङ्गिरसः । कुत एतत् । उत्तरस्यार्धर्चस्य भिन्नवाक्यत्वेनाग्नेयत्वप्रसङ्गात् । अङ्गिरसश्च मुक्त्वाऽन्येन सह एकवाक्यताया असम्भवात् । **दिवः आ सप्त यह्वीः** द्युशब्दोऽत्र तत्प्रभृत्युपलक्षणार्थो द्रष्टव्यः । आकारो मर्यादायाम् । 'यह्वः' (निघ.३,३) इति महन्नाम । मर्यादया द्युप्रभृतीन् सप्त लोकान् । **रायः दुरः** धनस्य द्वाराणि । यैर्धनं लभ्यते तानि । **ऋतज्ञाः** ऋतस्य यज्ञस्य ज्ञातारः । **वि अजानन्** अग्निप्रसादादेव विज्ञातवन्तः । प्राप्तवन्त इत्यर्थः । मरणोत्तरकालं द्युप्रभृतीन् सप्त लोकान्

प्राप्तवन्तः । जीवन्तोऽपि धनं लब्धवन्त इत्यर्थः । कतमे । उच्यते । **विदत् गव्यम्** इत्यादि । अत्रैकवाक्यताप्रसिद्ध्यर्थं 'यैः प्रेषिता' इत्यध्याहार्यम् । यैः प्रेषिता पणिभिरपहृतं विदत् ज्ञातवती लब्धवती वा । गव्यं गोसमूहम् । **सरमा** नाम देवशुनी । **दृळ्हम्** दृढम् । 'ऊर्वान् दयन्तः गोनाम्' (ऋ.७,१६,७), 'त एतमूर्वं वि भजन्त गोनाम्' (ऋ.१०,१०८,८) इत्यादौ दर्शनाद् ऊर्वशब्दः समूहवचनः । समूहं, बहुविस्तीर्णं वेत्यर्थः । **येन** हेतुना । नु इति पदपूरणः । **कम्** सुखम् । **मानुषी** मनुष्येषु भवा । **भोजते** उपभुङ्क्ते । **विट्** मनुष्यजातिः । देवगवीनां हि प्रसादेन मनुष्यजातिः सुखम् अनुभुङ्क्ते । मनुष्यगवीनां देवगवीप्रभवत्वात् कामदुघत्वाद्वा देवगवीनां सर्वसुखानां तत्प्रभवत्वात् ।। ८ ।।

**वेङ्कटमाधव–** सुकर्माणः **दिवः** सकाशाद् असुरपुरं प्रत्यागताः **सप्त** महतीः गोधनस्य **दुरः** अङ्गिरसः **वि अजानन्** । पणिभिरपहृतानां गवामानयनाय सप्त मार्गान् अजानन् । तथा लब्धवती **सरमा** नाम देवशुनी दृढं महान्तं गोसङ्घम् । **येन** सङ्घेन सुखम् **मानुषी विट्** उपभुङ्क्ते, अग्नेः कर्मणा तथा अकुर्वन्निति ।। ८ ।।

**मुद्गल– स्वाध्यः** शोभनकर्मयुक्ताः **यह्वीः** महत्यः **सप्त** गङ्गाद्याः सप्त नद्यः **दिवः** द्युलोकात् **आ** आगत्य भूम्यां प्रवहन्तीति शेषः । हे अग्ने! ईदृग्विधा नद्यस्त्वया स्थापिताः । अग्नौ होमे सति हि तेन तृप्तः सूर्यो वृष्टिं करोति । तथा **ऋतज्ञाः** ऋतं यज्ञं जानन्तोऽङ्गिरसः, **रायः** बल-नाम्नाऽसुरेणापहृतस्य गोरूपस्य धनस्य **दुरः** द्वाराणि गमनमार्गान् **अजानन्** (त्वया ज्ञातवन्तः) । त्वत्साध्येन यागेन प्रीत इन्द्रो गवाम् अन्वेषणाय सरमां देवशुनीं प्रेषितवान् । सा च सरमा गवां स्थानम् अवगत्येन्द्रस्य न्यवेदयत् । इन्द्रश्च तान् अङ्गिरसो गाः प्रापयत् । अत एतत्सर्वं त्वमेव कृतवान् । अङ्गिरोभ्यः सकाशात् **गव्यम्** गवि भवम् **दृळ्हम्** स्थूलम् । बहुलमित्यर्थः । एवंविधं पयोलक्षणम् **ऊर्वम्** अन्नम् **सरमा** देवशुनी **विदत्** अलभत । **कम्** इत्येतत्पादपूरणम् । **येन नु** येन हि गव्येन **मानुषी विट्** मनोः सम्बन्धिनी प्रजा **भोजते** इदानीं भुङ्क्ते, तद्गव्यमपि परम्परयाऽग्निरेव करोति ।। ८ ।।

**सायण– स्वाध्यः** शोभनकर्मयुक्ताः **यह्वीः** यह्व्यः महत्यः **सप्त** गङ्गाद्याः सप्त नद्यः **दिवः** द्युलोकात् आगत्य भूम्यां प्रवहन्तीति शेषः । हे अग्ने! ईदृग्विधा नद्यस्त्वया स्थापिताः । अग्नौ होमे सति हि तेन तृप्तः सूर्यो वृष्टिं करोति । तस्मिन्नर्थे स्मृतिः पूर्वमुदाहृता । अतो

वृष्टिद्वाराऽग्निरेव नदीः करोतीत्युच्यते । तथा **ऋतज्ञाः** ऋतं यज्ञं जानन्तोऽङ्गिरसः, **रायः** बलनाम्नाऽसुरेणापहृतस्य गोरूपस्य धनस्य **दुरः** द्वाराणि गमनमार्गान् **अजानन्** (त्वया ज्ञातवन्तः) । त्वत्साध्येन यागेन प्रीत इन्द्रो गवाम् अन्वेषणाय सरमां देवशुनीं प्रेषितवान् । सा च सरमा गवां स्थानम् अवगत्येन्द्रस्य न्यवेदयत् । इन्द्रश्च तान् अङ्गिरसो गाः प्रापयत् । अत एतत्सर्वं त्वमेव कृतवान् । अङ्गिरोभ्यः सकाशात् **गव्यम्** गवि भवम् **दृळ्हम्** स्थूलं बहुलमित्यर्थः । एवंविधं पयोलक्षणम् **ऊर्वम्** अन्नम् **सरमा** देवशुनी **विदत्** अलभत । **कम्** इत्येतत्पादपूरणम् । **येन नु** येन हि गव्येन **मानुषी विट्** मनोः सम्बन्धिनी प्रजा **भोजते** इदानीं भुङ्क्ते, तद्गव्यमपि परम्परयाऽग्निरेव करोति ।। **स्वाध्यः** । सुआङ्पूर्वात् धीशब्दात् जसि 'एरनेकाचः' इति यणादेशः । **यह्वीः** । 'वा छन्दसि' इति पूर्वसवर्णदीर्घत्वम् । **गव्यम्** । सर्वत्र 'गोरजादिप्रत्ययप्रसङ्गे यद्वक्तव्यम्' इति भावार्थे यत् । **ऊर्वम्** । उर्वी हिंसार्थः । उर्वति क्षुधं हिनस्तीत्यूर्वम् अन्नम् । पचाद्यच् । **भोजते** । 'भुज पालनाभ्यवहारयोः' । श्नमि प्राप्ते व्यत्ययेन शप् ।। ८ ।।

**सिद्धाञ्जनम्– स्वाध्यः** सुदूरालोचनपराः गाढाध्यानपरा वा, **ऋतज्ञाः** सत्यस्य वेदितारः, **दिवः** द्युलोकात् स्यन्दमानान् **सप्त यह्वीः** सप्तसङ्ख्याकान् महाबलान् सिन्धून् अद्भिर्लक्षिताः तेजोवाहिनीः, **रायः** सम्पन्निधेः **दुरः** द्वाराणि वा **आ** समन्तात् **व्यजानन्** विशेषेण अवागमन् । **सरमा** देवशुनी सहजावबोधरूपिणी अन्तर्दृष्टिः **गव्यम्** गोसमूहम् सौरचिद्रश्मिजालमित्यर्थः **दृढम्** बलिष्ठं **ऊर्वम्** विस्तीर्णं च स्थानं **विदत्** अवेदीत् । **येन नु** सरमासाधितगोसमूह गूढदृढस्थानाधिगमेन हेतुना अद्य **मानुषी विट्** मानुषी जन्मी **कम्** सुखम् **भोजते** भुङ्क्ते । सरमातत्त्वं प्रागुक्तम् ।। **स्वाध्यः** सु-आङ्पूर्वाद्धीशब्दात् जसि यणादेशः । **गव्यम्**-भवार्थे यत् । **ऊर्वम्**-उरुशब्दानुषङ्गी, 'ऊर्वे समुद्रे', 'ऊर्वं गव्यम्' इत्यादौ द्रष्टव्यः । **भोजते**-'भुज परिपालनाभ्यवहरणयोः' व्यत्ययेन शप् ।। ८ ।।

## ऋक्संहिता पदपाठसहिता

**आ ये विश्वा॑ स्वप॒त्यानि॑ त॒स्थुः कृ॑ण्वा॒नासो॑ अमृत॒त्वाय॑ गा॒तुम् ।**
**म॒ह्ना म॒हद्भिः॑ पृथि॒वी वि त॑स्थे मा॒ता पु॒त्रैरदि॑ति॒र्धाय॑से वेः ।। ९ ।।**

आ । ये । विश्वा॑ । सु॒ऽअ॒प॒त्यानि॑ । त॒स्थुः । कृ॒ण्वा॒नासः॑ । अ॒मृ॒त॒ऽत्वाय॑ । गा॒तुम् । म॒ह्ना । म॒हत्ऽभिः॑ । पृ॒थि॒वी । वि । त॒स्थे॒ । मा॒ता । पु॒त्रैः । अदि॑तिः । धाय॑से । वे॒रिति॑ वेः ।। ९ ।।

**स्कन्द–** **ये** अङ्गिरसः **विश्वा** बहूनि धनानि **स्वपत्यानि** शोभनैरपत्यैः सहितानि **आ तस्थुः** आस्थिताः । सम्प्राप्तवन्त इत्यर्थः । **कृण्वानासः** कुर्वन्तः । **अमृतत्वाय** अविद्यमानं मृतत्वं यस्य सोऽमृतत्वोऽग्निः तदर्थम् । **गातुम्** गायतिरर्चतिकर्मा (तु.निघ.३,१४) । गानं गातुः स्तुतिः, ताम् । येऽङ्गिरसोऽग्निम् आ स्तुवन्तो बहूनि धनानि शोभनानि चापत्यानि लब्धवन्त इत्यर्थः । यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः । तेषाम् **मह्ना** माहात्म्येन । तत्प्रसादेनेत्यर्थः । **महद्भिः** सस्यजननादिभिरुपकारैर्मनुष्याणाम् । **पृथिवी वि तस्थे** विविधं स्थिता । अङ्गिरसां प्रसादेन पृथिवी मनुष्याणां महद्भिः सस्यजननादिभिरुपकारैरुपकरोतीत्यर्थः । अङ्गिरसो हि इन्द्रसखत्वात् वृष्टेः कर्तारः । तदायत्ताश्च सस्यजननादयः । न केवला पृथिवी, किं तर्हि **माता पुत्रैः अदितिः** देवमाता चादितिः पुत्रैः सर्वैर्देवैः सह । देवा अपि हि यत् मनुष्याणामुपकुर्वन्ति तदङ्गिरसामेव प्रसादेन । देवोपकारस्य धर्मायत्तत्वाद् धर्मस्य च वृष्ट्यायत्तत्वाद् वृष्टेश्चाङ्गिरसां कर्तृत्वात् । किमर्थं पुनर्महद्भिः उपकारैर्वितस्थे । उच्यते । **धायसे** धेट् पाने । आज्यपय आद्याहुतिपानाय । **वेः** देवान् प्रति गन्तुः ज्ञातुर्वाऽग्नेः । सस्यजननाद्युपकाराभावे हि यागो न शक्यते कर्तुम् । यागाभावे च नाग्निराहुतीः पिबेत् । अत एवमुच्यते– 'धायसे वेः' इति ॥ ९ ॥

**वेङ्कटमाधव–** **आ तस्थुः ये** विश्वानि स्वापतननिमित्तानि कर्माणि कुर्वन्तः अमृतत्वसिद्ध्यर्थं मार्गम् । अत्यन्तम् महद्भिः तैरियम् पृथिवी ध्रियमाणा वितिष्ठते, **माता पुत्रैः** मनुष्यैः अदीना गमनशीलस्याग्नेः पानाय तं सोमं पाययितुमिति ॥ ९ ॥

**मुद्गल–** **ये** आदित्याः **अमृतत्वाय** अमरणत्वसिद्धये **गातुम्** मार्गमुपायम् **कृण्वानासः** कुर्वाणाः सन्तः । **विश्वा** सर्वाणि **स्वपत्यानि** शोभनान्यपतनहेतुभूतानि चतुर्दशरात्र षट्त्रिंश-द्रात्रादित्यानाम् अयनादीनि कर्माणि **आ तस्थुः** आस्थितवन्तः कृतवन्त इत्यर्थः । 'त एतँ षट्त्रिंशद्रात्रम् अपश्यन् तमाहरन् तेनायजन्त' (तै.सं.७,४,६,१) इति । **महद्भिः** अनुष्ठानेन महानुभावैस्तैः **पुत्रैः** सहिता **माता** जनयित्री **अदितिः** अदीना पृथिवी **धायसे** सर्वस्य जगतो धारणाय **मह्ना** स्वकीयेन महत्त्वेन **वि तस्थे** विशेषेण तिष्ठति । हे अग्ने! यतस्त्वम् **वेः** आदित्यैरनुष्ठितेषु यागेषु चरुपुरोडाशादीनि हवींष्यभक्षयः । अत एतत्सर्वं जातमित्यर्थः ॥ ९ ॥

**सायण–** **ये** आदित्याः **अमृतत्वाय** अमरणत्वसिद्धये **गातुम्** मार्गमुपायम् **कृण्वानासः** कुर्वाणाः सन्तः । **विश्वा** विश्वानि सर्वाणि **स्वपत्यानि** शोभनान्यपतनहेतुभूतानि चतुर्दशरात्र

षट्त्रिंशद्रात्रादित्यानाम् अयनादीनि कर्माणि **आ तस्थुः** आस्थितवन्तः कृतवन्त इत्यर्थः । तथा च तैत्तिरीयकम्– 'आदित्या अकामयन्त सुवर्गं लोकमियामेति' इति, 'त एतँ षट्त्रिंशद्रात्रम् अपश्यन् तमाहरन् तेनायजन्त' (तै.सं.७,४,६,१) इति च । **महद्भिः** अनुष्ठानेन महानुभावैस्तैः **पुत्रैः** सहिता **माता** जनयित्री **अदितिः** अदीना पृथिवी **धायसे** सर्वस्य जगतो धारणाय **मह्ना** स्वकीयेन महत्त्वेन **वि तस्थे** विशेषेण तिष्ठति । हे अग्ने! यतस्त्वम् **वेः** आदित्यैरनुष्ठितेषु यागेषु चरुपुरोडाशादीनि हवींष्यभक्षयः । अत एतत्सर्वं जातमित्यर्थः ।। **कृण्वानासः** । 'कृवि हिंसाकरणयोश्च'। व्यत्ययेनात्मनेपदम् । 'धिन्विकृण्व्योर च' इति उप्रत्ययः । तत्सन्नियोगेन अकारान्तादेशश्च । तस्यातो लोपे सति स्थानिवद्भावाद्गुणाभावः । शानचश्चित्त्वादन्तोदात्तत्वम् । 'आजसेरसुक्'। **मह्ना** । महिम्नेत्यस्य वर्णलोपश्छान्दसः । **धायसे** । 'वहिहाधाञ्भ्यश्छन्दसि' इति दधातेर्भावे असुन् । 'णित्' इत्यनुवृत्तेः 'आतो युक् चिण्कृतोः' इति युक् । **वेः** 'वी गतिप्रजनकान्त्यशनखादनेषु'। लङि सिपि अदादित्वात् शपो लुक् । 'बहुलं छन्दस्यमाङ्योगेऽपि' इति अडभावः । 'धायसे' इत्यस्य वाक्यान्तरगतत्वाद् अस्य निघाताभावः ।। ९ ।।

**सिद्धाञ्जनम्– ये, अमृतत्वाय** अमरणधर्माय **गातुम्** मागर्म् **कृण्वानासः** कुर्वन्तः **विश्वा** सर्वाणि **स्वपत्यानि** शोभनसन्ततियुक्तानि **आ तस्थुः** अध्यक्षयामासुः अधिष्ठितवन्त इत्यर्थः । तैः **महद्भिः** माहात्म्यवद्भिर्देवैः तेषां प्रभावेणेत्यर्थः **पृथिवी** भूमिः **मह्ना** महिम्ना **वि तस्थे** वितत्य स्थिता, महत्त्वेन विस्तृता विशालाऽतिष्ठदित्यर्थः । **माता** जननी देवानां, **अदितिः** अखण्ड-स्वरूपिणी पुत्रैरमृतैरादित्यैः सह **धायसे** धारणाय धातुं, तां पृथिवी भर्तुं **वेः** आगच्छत् ।। **मह्ना**-महिम्ना, वर्णलोपश्छान्दसः । **धायसे**–'दधातेः भावेऽसुन्, आतो युक् । **वेः**-वेतेः गत्यर्थात् लङ्, पुरुषव्यत्ययः ।। ९ ।।

## ऋक्संहिता पदपाठसहिता

**अधि श्रियं नि दधुश्चारुमस्मिन्दिवो यदक्षी अमृता अकृण्वन् ।**
**अध क्षरन्ति सिन्धवो न सृष्टाः प्र नीचीरग्ने अरुषीरजानन् ।। १० ।।**

अधि । श्रियम् । नि । दधुः । चारुम् । अस्मिन् । दिवः । यत् । अक्षी इति । अमृताः । अकृण्वन् । अध । क्षरन्ति । सिन्धवः । न । सृष्टाः । प्र । नीचीः । अग्ने । अरुषीः । अजानन् ।। १० ।।

**स्कन्द–** दीप्तिलक्षणां **श्रियम् अधि नि दधुः** निहितवन्तो देवाः । **चारुम्** शोभनाम् **अस्मिन्** त्वय्यग्नौ । कदा । उच्यते । **दिवः यत्** यदा **अक्षी** द्वित्वसामान्यात् सूर्याचन्द्रमसावत्राक्षी उच्येते । अक्षिस्थानीयौ सूर्याचन्द्रमसौ **अमृताः** देवाः **अकृण्वन्** कृतवन्तः । अहोरात्रविभागार्थं यदैव सूर्याचन्द्रमसौ देवौ उदपीपदन् तदैव त्वाम् अग्निं दीप्तिमन्तम् अकार्षुरित्यर्थः । **अध क्षरन्ति** अधशब्दोऽत्र ततः प्रभृतीत्यस्यार्थे । तत एव च प्रभृति क्षरन्ति त्वयि । काः । सामर्थ्यादाहुतयः । कथम् । **सिन्धवः न** नदीनामैतत् (तु.निघ.१,३) । नद्य इव । **सृष्टाः** यष्टृभिः विसृष्टाः सत्यः **नीचीः** अधोमुखाः । स्रुक्तो ह्याहुतयः क्षरन्त्य अधोमुखाः क्षरन्ति । कीदृश्यः । उच्यते । हे अग्ने! **अरुषीः** अरुषतिर्गतिकर्मा (तु.निघ.२,१४) । त्वां प्रति गमनशीलाः । नित्यमेव यास्त्वयि हूयन्त इत्यर्थः । किञ्च **प्र अजानन्** प्रशब्दः प्रारम्भे । तत एव प्रभृति ज्ञानिनोऽपि त्वां ज्ञातुं प्रारब्धवन्त इत्यर्थः ।। १० ।।

**वेङ्कटमाधव– अधि नि दधुः** प्रज्वलनेन शोभां कल्याणीम् अग्नौ **दिवः** यदा चक्षुषी हविर्जिघृक्षया देवाः **अकृण्वन्** । प्रज्वलितेऽग्नौ पृथिव्याम् **क्षरन्ति सिन्धवः** इव उद्युक्ता देवास्ततो ज्वलित्वोपशान्तस्य अग्ने तव न्यग्भूता लेलायमानाः ज्वालाः जानन्ति निरूपणीयं सूक्तं प्राज्ञैः ।।

**मुद्गल– अस्मिन्** अग्नौ शोभनाम् **श्रियम्** परिस्तरणपरिषेचनादिरूपां यज्ञसम्पदम् **अधि नि दधुः** यजमानाः स्थापितवन्तः । निधाय च **यत्** यदा **अक्षी** यज्ञस्याज्यभागलक्षणे चक्षुषी **अकृण्वन्** कुर्वन्ति । तदानीम् **दिवः** द्युलोकात् **अमृताः** अमरणधर्माणो देवा यागसमयो जात इत्यवगम्याऽगच्छन्तीति शेषः । **अध** आज्यभागाऽनन्तरम् **सृष्टाः** अग्नेरुत्पन्नाः **सिन्धवः न** शीघ्रं गच्छन्त्यो नद्य इव **नीचीः** नितरां सर्वासु दिक्षु गच्छन्तीः **अरुषीः** रोचमानाः । हे **अग्ने!** एवम्भूतास्त्वदीया ज्वाला उत्पन्नाः **क्षरन्ति** प्रचलन्ति । सर्वासु दिक्षु गच्छन्तीत्यर्थः । आगता देवाश्च **प्र अजानन्** अस्माकं होमायेदृश्यो ज्वाला उत्पन्ना इति हृष्टाः सन्तः प्रकर्षेण जानन्ति ।।

**सायण– अस्मिन्** अग्नौ शोभनाम् **श्रियम्** परिस्तरणपरिषेचनादिरूपां यज्ञसम्पदम् **अधि नि दधुः** यजमानाः स्थापितवन्तः । निधाय च **यत्** यदा **अक्षी** यज्ञस्याज्यभागलक्षणे चक्षुषी **अकृण्वन्** कुर्वन्ति । 'चक्षुषी वा एते यज्ञस्य यदाज्यभागौ' (तै.सं.२.६.२.१) इति श्रुतेः । तदानीम् **दिवः** द्युलोकात् **अमृताः** अमरणधर्माणो देवा यागसमयो जात इत्यवगम्याऽगच्छन्तीति शेषः । **अध** आज्यभागाऽनन्तरम् **सृष्टाः** अग्नेरुत्पन्नाः **सिन्धवः न** शीघ्रं गच्छन्त्यो नद्य इव

**नीचीः** नितरां सर्वासु दिक्षु गच्छन्तीः **अरुषीः** आरोचमानाः । यद्वा निर्मलरूपाः । हे **अग्ने!** एवम्भूतास्त्वदीया ज्वाला उत्पन्नाः **क्षरन्ति** सञ्चलन्ति । सर्वासु दिक्षु गच्छन्तीत्यर्थः । आगता देवाश्च **प्र अजानन्** अस्माकं होमायेदृश्यो ज्वाला उत्पन्ना इति हृष्टाः सन्तः प्रकर्षेण जानन्ति ।। **अक्षी** । परत्वात् नुमं बाधित्वा 'ई च द्विवचने' (पा.सू.७.१.७७) इति अक्षिशब्दस्य ईकारान्तादेशः । स चोदात्तः । ईत्वे कृते सकृद्गतपरिभाषया (परिभा.४०) पुनर्नुम् न भवति । सवर्णदीर्घः । **नीचीः**– निपूर्वादञ्चतेः 'ऋत्विक्' इत्यादिना किन् । 'अनिदिताम्' इति नलोपः । 'अञ्चतेश्चोपसङ्ख्यानम्' इति ङीप् । 'अचः' इति अकारलोपे 'चौ' इति दीर्घत्वम् । 'न्यधी च' (पा.सू.६.२.५३) इति गतेः प्रकृतिस्वरत्वम् । **अरुषीः** । अरुषमिति रूपनाम । 'ऋहनिभ्यामुषच्' इति अर्तेः उषच् । 'छन्दसीवनिपौ' इति मत्वर्थीय ईकारः ।। १० ।।

**सिद्धाञ्जनम्– यत्** यदा **अमृताः** अमरणधर्माणो देवाः **दिवः** द्युलोकस्य **अक्षी** नेत्रद्वयं **अकृण्वन्** अकुर्वन्, तदा **अस्मिन्** अग्नौ **अधि श्रियम्** शोभां प्रभां **चारुम्** सौन्दर्यं च **नि दधुः** निचिक्षिपुः । तेजः सौन्दर्यं च दिव्यम् अक्षिद्वयम् अग्नौ देवैः स्थापितमित्युक्तम् । **अध** अथ **क्षरन्ति** प्रवहन्ति, कर्तृपदं चारुश्रिय इति अध्याहार्यम् । अथवा **अरुषीः** आरोचमानाः शक्तयः प्रवहन्ति । तत्र दृष्टान्तः- **सृष्टाः** संप्रेर्य विसृष्टाः **सिन्धवो न** नद्य इव, सिन्धूनां प्रवाह इव चारूणां श्रियां प्रवाह इत्यर्थः । **प्र नीचीः** नीचैः प्रवहन्त्यः ताः **अरुषीः** आरोचमानाः रक्तवर्णाः प्राणबलोद्रेकलक्षणाः अश्वाः भोगार्थाः क्रियापराः शक्तय इति बोध्यम् । ताः **अजानन्** कर्मपदं अग्निं त्वां इत्यध्याहार्य, हे अग्ने! उक्तलक्षणम् अक्षिद्वयम् अग्नौ निक्षिप्तम् । ततः सिन्धवः नीचैः प्रवहन्त्य इव अश्वाः महत्यः भोगसमर्थाः क्रियाशक्तयः क्षरन्त्यः अग्निं जानन्त्य उपासत इति सारांशः ।। **नीचीः**-निपूर्वादञ्चतेः । सर्वे गताः ।। १० ।।

।। इति प्रथमाष्टके पञ्चमाध्याये अष्टादशो वर्गः ।।

## ।। अथ एकोनविंशतिः वर्गः ।।

## ऋक्संहिता पदपाठसहिता

(सूक्तम् ७३)

१० पराशरः । शाक्त्यः । अग्निः । त्रिष्टुप् ।

**रयिर्न यः पितृवित्तो वयोधाः सुप्रणीतिश्चिकितुषो न शासुः ।**
**स्योनशीरतिथिर्न प्रीणानो होतेव सद्म विधतो वि तारीत् ।। १ ।।**

रयिः । न । यः । पितृऽवित्तः । वयःधाः । सुऽप्रनीतिः । चिकितुषः । न । शासुः ।
स्योनऽशीः । अतिथिः । न । प्रीणानः । होताऽइव । सद्म । विधतः । वि । तारीत् ।।

**स्कन्द–** **पितृवित्तः** इत्येतदुपमानभूतस्य रयेः विशेषणम् । **यः** अग्निर्धनमिव पितृलब्धम् **वयोधा** अन्नादाता । यथा पित्र्यं धनं क्रमेण नियमेन प्रभूतस्यान्नस्य दायकं तद्वन्नियमेन प्रभूत-दायक इत्यर्थः । यश्च **सुप्रणीतिः** प्रणीतिः कार्येषूपदेशः, सा शोभना यस्य स सुप्रणीतिः । कथम् । **चिकितुषः न शासुः** विदुषः इवानुशासनम् । यश्च **स्योनशीः** शेतिरिह स्थानार्थः । 'तासामहिः पत्सुतःशीर्बभूव' (ऋ.१.३२.८) इति यथा । सामर्थ्याचान्तर्णीतण्यर्थः । सुखस्य स्थापयिता । सुखकर इत्यर्थः । कथम् । **अतिथिः न प्रीणानः** अतिथिरिव तृप्यन् । **होता इव** यज्ञसाधनद्वारेण **सद्म** गृहम् **विधतः** परिचरतो यजमानस्य **वि तारीत्** । तिसृष्वप्यास्वृक्षु । यच्छब्दस्य तच्छब्दसाकाङ्क्षत्वात् 'तं त्वा नरः' (ऋ.१.७३.४) इति चतुर्थ्यामृचि श्रुतेन तच्छब्देनैकवाक्यता ।। १ ।।

**वेङ्कटमाधव–** धनम् इव यः पितृतो लब्धम् अन्नस्य दाता सुप्रणयः च भवति विदुषः इव शासनम्, स सुखेषु शाययति **अतिथिः** इव तृप्यन् । **होता इव** यजमानस्य यज्ञगृहम् वितरति हविर्वहनेन ।। १ ।।

**मुद्गल–** 'रयिर्न' इति दशर्चम् नवमं सूक्तम् । पराशर ऋषिः । त्रिष्टुप् छन्दः । अग्निः देवता ।।

**पितृवित्तः** पितुः सकाशाल्लब्धः **रयिः न** धनमिव **यः** अग्निः **वयोधाः** अन्नस्य दाता । यथा पैतृकं धनं विस्रम्भेण व्यवह्रियमाणं सदन्नप्रदं भवति तद्वदग्निरपि सर्वेषु यज्ञेषु विस्रम्भेण

व्यवहृतः सन् अन्नप्रदो भवतीत्यर्थः । **चिकितुषः** यज्ञशास्त्राभिज्ञस्य **शासुः न** शासनमिव **सुप्रणीतिः** सुखेन प्रणेतव्यः । यथा विद्वच्छासनं सर्वेष्वनुष्ठेयेषु तत्तसंशयनिर्णयाय नीयते तद्वदग्निरपि सर्वेषु यज्ञेषु प्रणीयते । यश्च **स्योनशीः** सुखप्रदे गार्हपत्यायतनादौ शयानः **अतिथिः न** सुखासन उपवेशितोऽर्घ्यपाद्यादिभिः सत्कृतोऽतिथिरिव **प्रीणानः** हविर्भिस्तर्पणीयः सोऽग्निः **विधतः** परिचरतो यजमानस्य **सद्म** **गृहं** **वि तारीत्** प्रवर्धयति । दृष्टान्तः– **होता इव** होता होमकर्ताऽध्वर्युस्तत्तत्कर्मकरणेन फलैर्यजमानस्य गृहं यथा वर्धयति तद्वत् ।। १ ।।

**सायण– पितृवित्तः** पितुः सकाशाल्लब्धः **रयिः न** धनमिव **यः** अग्निः **वयोधाः** अन्नस्य दाता । यथा पैतृकं धनं विश्रम्भेण व्यवह्रियमाणं सदन्नप्रदं भवति तद्वदग्निरपि सर्वेषु यज्ञेषु विश्रम्भेण व्यवहृतः सन् अन्नप्रदो भवतीत्यर्थः । **चिकितुषः** विदुषः यज्ञशास्त्राभिज्ञस्य **शासुः न** शासनमिव **सुप्रणीतिः** सुखेन प्रणेतव्यः । यथा विद्वच्छासनं सर्वेष्वनुष्ठेयेषु तत्तसंशयनिर्णयाय नीयते तद्वदग्निरपि सर्वेषु यज्ञेषु प्रणीयते । यश्च **स्योनशीः** सुखप्रदे गार्हपत्यायतनादौ शयानः **अतिथिः न** सुखासन उपवेशितोऽर्घ्यपाद्यादिभिः सत्कृतोऽतिथिरिव **प्रीणानः** हविर्भिस्तर्पणीयः सोऽग्निः **विधतः** परिचरतो यजमानस्य **सद्म** गृहम् **वि तारीत्** प्रवर्धयति ददाति वा । तत्र दृष्टान्तः– **होता इव** होता होमकर्ताऽध्वर्युस्तत्तत्कर्मकरणेन फलैर्यजमानस्य गृहं यथा वर्धयति तद्वत् ।।

**पितृवित्तः** । 'विदॢ लाभे' । कर्मणि निष्ठा । 'यस्य विभाषा' इति इट्प्रतिषेधः । 'विभाषा गमहनविदविशाम्' इति क्वसौ अस्य धातोः इटः विकल्पितत्वात् तत्रापि विशिसाहचर्यात्तौदादिक एव विदिर्गृह्यते इत्युक्तम् (का.७.२.६८)। 'वित्तो भोगप्रत्यययोः' (पा.सू. ८.२.५८) इति निष्ठानत्वाभावो निपातितः । **वयोधाः** । 'डु धाञ् धारणपोषणयोः' । 'आतो मनिन्' इति विच् । **सुप्रणीतिः** । प्रणीयत इति प्रणीतिः । कर्मणि क्तिन् । 'तादौ च' इति गतेः प्रकृतिस्वरत्वम् । पुनः सुशब्देन समासे कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणात् कृदुत्तरपद-प्रकृतिस्वरत्वम् । **चिकितुषः** । लिटः क्वसुः । षष्ठ्येकवचने 'वसोः संप्रसारणम्' इति संप्रसारणम् । 'शासिवसिघसीनां च' इति षत्वम् । **शासुः** । 'शासु अनुशिष्टौ' । 'श्रृसृस्निहि' इत्यादिना विधीयमान उप्रत्ययो बहुलवचनादस्मादपि द्रष्टव्यः । तत्र 'नित्' इत्यनुवृत्तेराद्युदात्तत्वम् । **स्योनशीः** । स्योनमिति सुखनाम । स्योने सुखकरे गार्हपत्यादिस्थाने शेते इति स्योनशीः । 'क्विप् च' इति

क्विप् । **प्रीणानः** । 'प्रीञ् तर्पणे' । कर्मणि शानचि व्यत्ययेन श्ना । **विधतः** 'विध विधाने'। 'विधतिः परिचरणकर्मा' इति नैरुक्ताः । तुदादित्वात् शप्रत्ययः । 'शतुरनुमः' इति विभक्ते-रुदात्तत्वम् ।। १ ।।

**सिद्धाञ्जनम्–** 'रयिर्न' इति दशर्चं नवमं सूक्तं पराशरस्यार्षं त्रैष्टुभमाग्नेयम् । अनुक्रान्तं च- 'रयिर्न' इति । प्रातरनुवाकाश्विनशस्त्रयोरुक्तो विनियोगः ।।

प्रथमां ऋचमाह– **यः** योऽसावग्निः **वयोधाः** बलस्य धारकः, अस्मदीयबलप्रतिष्ठापकः **पितृवित्तः** पितुः सकाशाल्लब्धः **रयिर्न** रा इव **धनमिव** भवति । **चिकितुषः** विदुषः **शासुः न** शासनं आज्ञेव, शिक्षणमिव वा । **सुप्रणीतिः** साधिष्ठप्रणयनः । अग्नेः प्रकृष्टं नेतृत्वं विदुषः शासनमिव साधिष्ठमित्यर्थः । **स्योनशीः** स्योनं सुखनाम, सुखं शयानः **प्रीणानः** सुप्रीतः **अतिथिर्न** भोज्य उपचारार्होऽतिथिरिव भवति । **होता इव** आह्वाता पुरोहित इव **विधतः** परिचर्यापरस्य पूजकस्य **सद्म** गृहं **वितारीत्** प्रवर्धयति । 'ददाति वेति' सायणः ।। **पितृवित्तः**- 'विद्लृ लाभे' कर्मणि निष्ठा । निष्ठानत्वाभावो निपातितः । **वयोधाः** दधातेः विच् । **शासुः**- 'शासु अनुशिष्टौ' अस्मादुप्रत्ययः । **स्योनशीः**- स्योने सुखकरे स्थाने शेते, क्विप् । **प्रीणानः**- शानचि व्यत्ययेन श्ना । **विधतः**-'विध विधाने' विधतिः परिचरणकर्मा, शतरि षष्ठ्येकवचनम् ।। १ ।।

## ऋक्संहिता पदपाठसहिता

**देवो न यः स॑वि॒ता स॒त्यम॑न्मा॒ क्रत्वा॑ नि॒पाति॑ वृ॒जना॑नि॒ विश्वा॑ ।**
**पु॒रु॒प्र॒श॒स्तो अ॒मति॒र्न स॒त्य आ॒त्मेव॒ शेवो॑ दिधि॒षाय्यो॑ भूत् ।। २ ।।**
दे॒वः । न । यः । स॒वि॒ता । स॒त्यऽम॑न्मा । क्रत्वा॑ । नि॒ऽपाति॑ । वृ॒जना॑नि । विश्वा॑ ।
पु॒रु॒ऽप्र॒श॒स्तः । अ॒मतिः॑ । न । स॒त्यः । आ॒त्माऽइ॑व । शेवः॑ । दि॒धि॒षाय्यः॑ । भू॒त् ।। २ ।।

**स्कन्द– यः** च **देवः** इव **सविता सत्यमन्मा** सत्यज्ञानः **क्रत्वा** कर्मणा यागादिना प्रज्ञया वा **निपाति** नियमेन रक्षति । **वृजनानि विश्वा** 'वृजनम्' (निघ.२.९) इति बलनामान्यत्र । इह तु वर्जनीयत्वाद् वृजनं पापम् उच्यते । सर्वाणि पापानि । यश्च **पुरुप्रशस्तः** बहुभिः स्तुतः **अमतिः न सत्य** 'अमतिः' (निघ.३.७) इति रूपनामाऽन्यत्र, इह तु आत्ममतिः अमति-रुच्यते । तद्वत् सत्यः । अथवा 'अम गत्यादिषु' इत्यस्मादयम् अतिप्रत्ययः कर्तरि । गमन-

शीलोऽमतिरादित्यः । तद्वत् सत्यः । यश्च **आत्मेव शेवः** सुखः सर्वस्य **दिधिषाय्यः** धारयिता च **भूत्** भवति ।। २ ।।

**वेङ्कटमाधव– देव** इव **सविता** सत्यमनाः कर्मणा निरक्षति विश्वानि उपद्रवाणि । बहुभिः प्रशस्तः रूपम् इव सत्यम् । तद्धि चक्षुर्ग्राह्यं श्रद्धेयं सत्यं भवति । शरीरमिव भरणीयः भवति सुखकरः हि ।। २ ।।

**मुद्गल– देवः न सविता** द्योतमानः सर्वस्य प्रेरकः सूर्य इव **यः** अग्निः, **सत्यमन्मा** सत्यज्ञानी यथार्थदर्शी सोऽग्निः । **क्रत्वा** आत्मीयेन कर्मणा **विश्वा वृजनानि** सर्वेभ्यः सङ्ग्रामेभ्यः **निपाति** नितरां पालयति । अपि च **पुरुषप्रशस्तः** पुरुभिर्यजमानैः स्तुतोऽग्निः **अमतिः न** रूपमिव **सत्यः** बाधरहितः । यथा पृथिव्यादेः स्वरूपमागमापायिषु विशेषेषु सत्स्वपि स्वयमैकरूप्येण नित्यं भवति तद्वद् अग्निरुच्चावचेषु सर्वेषु कर्मसु स्वयमेक एव व्याप्य वर्तते । सोऽग्निः **शेवः** सुखकरः । दृष्टान्तः– **आत्मेव** परमप्रेमास्पदतया निरतिशयानन्दस्वरूप आत्मा सर्वान् यथा सुखयति तद्वद् अग्निरपि स्वर्गादिफलहेतुतया सुखयति । एवम्भूतोऽग्निः **दिधिषाय्यः भूत्** सर्वैर्यजमानैर्धारणीयो भवति । परित्यागे हि वीरहत्यालक्षणो दोषो भवति ।। २ ।।

**सायण– देवः न सविता** द्योतमानः सर्वस्य प्रेरकः सूर्य इव **यः** अग्निः, **सत्यमन्मा** सत्यज्ञानी यथार्थदर्शी सोऽग्निः । **क्रत्वा** आत्मीयेन कर्मणा **विश्वा वृजनानि,** वचनव्यत्ययः । सर्वेभ्यः सङ्ग्रामेभ्यः **निपाति** नितरां पालयति । वर्ज्यन्ते हिंस्यन्तेऽस्मिन्निति वृजनं सङ्ग्रामः । अपि च **पुरुषप्रशस्तः** पुरुभिर्यजमानैः स्तुतोऽग्निः **अमतिः न** रूपनामैतत् । रूपमिव **सत्यः** बाधरहितः । रूप्यते इति रूपं स्वरूपम् । यथा पृथिव्यादेः स्वरूपमागमापायिषु विशेषेषु सत्स्वपि स्वयमैकरूप्येण नित्यं भवति तद्वद् अग्निरुच्चावचेषु सर्वेषु कर्मसु स्वयमेक एव व्याप्य वर्तते । सोऽग्निः **शेवः** सुखकरः । तत्र दृष्टान्तः– **आत्मेव** परमप्रेमास्पदतया निरतिशयानन्दस्वरूप आत्मा सर्वान् यथा सुखयति 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति' (बृ.उ.४-३-३२) 'एष ह्येवानन्दयति' (तै.आ.८-७) इति च श्रवणात् । तद्वद् अग्निरपि स्वर्गादिफलहेतुतया सुखयति । एवम्भूतोऽग्निः **दिधिषाय्यः भूत्** सर्वैर्यजमानैर्धारणीयो भवति । परित्यागे हि वीरहत्यालक्षणो दोषो भवति । तथा च तैत्तिरीयकम्- 'वीरहा वा एष देवानां योऽग्निमुद्वासयते' (तै.सं.१.५.२.१) इति ।।

**सत्यमन्मा** । मननं मन्म । 'मन ज्ञाने'। 'अन्ये-भ्योऽपि दृश्यन्ते' इति मनिन् । सत्यम् अवितथं मन्म यस्य । बहुव्रीहिस्वरः । **वृजनानि** । 'वृजी वर्जने' । 'कृपृवृजि' इत्यादिना क्युप्रत्ययः । **पुरुप्रशस्तः** । 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरत्वे प्राप्ते 'प्रवृद्धादीनां च' (पा.सू.६.२.१४७) इत्युत्तरपदान्तोदात्तत्वम् । स ह्याकृतिगण इत्युक्तम् । **अमतिः** । 'अम गत्यादिषु'। 'अमेरतिः' । **दिधिषाय्यः**। दधातेः 'दिधिषाय्यः' (उ.सू.३.३७७) इति साय्यप्रत्ययान्तो निपात्यते ।। २ ।।

**सिद्धाञ्जनम्–** द्वितीयां ऋचमाह– स **देवः सविता न** दिव्यः सर्वप्रेरकः सूर्य इव **यः** योऽग्निः **सत्यमन्मा** सत्यमतिः । सत्यानि मननानि अस्येत्यर्थः । **क्रत्वा** क्रतुना अध्यवसायबलेन इच्छामात्रेण **विश्वा** सर्वाणि **वृजनानि** अस्माकं दृढानि स्थानानि **नि पाति** नितरां रक्षति । **पुरुप्रशस्तः** बहुधा प्रोक्तः, आविष्कृतः **अमतिर्न** तेज इव उज्ज्वलभा इत्यर्थः **सत्यः** सत्य-स्वरूपः । **आत्मेव** स्वात्मा यथा **शेवः** सुखमयः तथाभूतः सन् **दिधिषाय्यः भूत्** अस्माकं आधारो भवति, ध्येयो, धिया धारणीयो वा भवति ।। **अमतिः**-'अम गत्यादिषु' अमेः अतिः । **दिधिषाय्यः**-दधातेः षाय्यप्रत्ययान्तो निपात्यते ।। २ ।।

## ऋक्संहिता पदपाठसहिता

**देवो न यः पृथिवीं विश्वधाया उपक्षेति हितमित्रो न राजा ।**
**पुरःसदः शर्मसदो न वीरा अनवद्या पतिजुष्टेव नारी ।। ३ ।।**
देवः । न । यः । पृथिवीम् । विश्वऽधायाः । उपऽक्षेति । हितऽमित्रः । न । राजा ।
पुरःऽसदः । शर्मऽसदः । न । वीराः । अनवद्या । पतिजुष्टाऽइव । नारी ।। ३ ।।

**स्कन्द–** 'देवः' इति पूर्वस्यामृचि सम्बन्धदर्शनात् दीप्तत्वाच्च सवितैवाभिप्रेतः । **यः** च **देव** इव सविता **पृथिवीम् विश्वधायाः** 'धेट् पाने' । सर्वाहुतिलक्षणम् आज्यादिपेयं यस्य स विश्व-धायाः । सर्वासामाहुतीनां पातेत्यर्थः । **उपक्षेति** उपगम्य निवसति । यथा देवः सविता पृथिवीं रश्मिभिर्व्याप्य निवसति तद्वद् व्याप्य निवसतीत्यर्थः । **हितमित्रः न राजा** पूर्वस्यैवेयं द्वितीयोपमा । हितानि मित्राणि यस्य भवन्ति स हितमित्रः । यथा च हितैर्मित्रैरुपेतो राजा पृथिवीं सम्यक् पालयन्नुपभुञ्जानश्च निवसति तद्वत्सम्यक् पालयन्नुपभुञ्जानश्च निवसतीत्यर्थः । यश्च **पुरःसदः शर्मसदः न वीराः** पुरः सीदन्तीति पुरःसदः । सेनाया अग्रतो व्यवस्थातारः । **शर्म**

शीलोऽमतिरादित्यः । तद्वत् सत्यः । यश्च **आत्मेव शेवः** सुखः सर्वस्य **दिधिषाय्यः** धारयिता च **भूत्** भवति ।। २ ।।

**वेङ्कटमाधव– देव** इव **सविता** सत्यमनाः कर्मणा निरक्षति विश्वानि उपद्रवाणि । बहुभिः प्रशस्तः रूपम् इव सत्यम् । तद्धि चक्षुर्ग्राह्यं श्रद्धेयं सत्यं भवति । शरीरमिव भरणीयः भवति सुखकरः हि ।। २ ।।

**मुद्गल– देवः न सविता** द्योतमानः सर्वस्य प्रेरकः सूर्य इव **यः** अग्निः, **सत्यमन्मा** सत्यज्ञानी यथार्थदर्शी सोऽग्निः । **क्रत्वा** आत्मीयेन कर्मणा **विश्वा वृजनानि** सर्वेभ्यः सङ्ग्रामेभ्यः **निपाति** नितरां पालयति । अपि च **पुरुषप्रशस्तः** पुरुभिर्यजमानैः स्तुतोऽग्निः **अमतिः न** रूपमिव **सत्यः** बाधरहितः । यथा पृथिव्यादेः स्वरूपमागमापायिषु विशेषेषु सत्स्वपि स्वयमैक-रूप्येण नित्यं भवति तद्वद् अग्निरुच्चावचेषु सर्वेषु कर्मसु स्वयमेक एव व्याप्य वर्तते । सोऽग्निः **शेवः** सुखकरः । दृष्टान्तः– **आत्मेव** परमप्रेमास्पदतया निरतिशयानन्दस्वरूप आत्मा सर्वान् यथा सुखयति तद्वद् अग्निरपि स्वर्गादिफलहेतुतया सुखयति । एवम्भूतोऽग्निः **दिधिषाय्यः भूत्** सर्वैर्यजमानैर्धारणीयो भवति । परित्यागे हि वीरहत्यालक्षणो दोषो भवति ।। २ ।।

**सायण– देवः न सविता** द्योतमानः सर्वस्य प्रेरकः सूर्य इव **यः** अग्निः, **सत्यमन्मा** सत्यज्ञानी यथार्थदर्शी सोऽग्निः । **क्रत्वा** आत्मीयेन कर्मणा **विश्वा वृजनानि,** वचनव्यत्ययः । सर्वेभ्यः सङ्ग्रामेभ्यः **निपाति** नितरां पालयति । वर्ज्यन्ते हिंस्यन्तेऽस्मिन्निति वृजनं सङ्ग्रामः । अपि च **पुरुषप्रशस्तः** पुरुभिर्यजमानैः स्तुतोऽग्निः **अमतिः न** रूपनामैतत् । रूपमिव **सत्यः** बाधरहितः । रूप्यते इति रूपं स्वरूपम् । यथा पृथिव्यादेः स्वरूपमागमापायिषु विशेषेषु सत्स्वपि स्वयमैकरूप्येण नित्यं भवति तद्वद् अग्निरुच्चावचेषु सर्वेषु कर्मसु स्वयमेक एव व्याप्य वर्तते । सोऽग्निः **शेवः** सुखकरः । तत्र दृष्टान्तः– **आत्मेव** परमप्रेमास्पदतया निरतिशयानन्दस्वरूप आत्मा सर्वान् यथा सुखयति 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति' (बृ.उ.४-३-३२) 'एष ह्येवानन्दयति' (तै.आ.८-७) इति च श्रवणात् । तद्वद् अग्निरपि स्वर्गादिफलहेतुतया सुखयति । एवम्भूतोऽग्निः **दिधिषाय्यः भूत्** सर्वैर्यजमानैर्धारणीयो भवति । परित्यागे हि वीरहत्यालक्षणो दोषो भवति । तथा च तैत्तिरीयकम्- 'वीरहा वा एष देवानां योऽग्निमुद्वासयते' (तै.सं.१.५.२.१) इति ।।

**सत्यमन्मा** । मननं मन्म । 'मन ज्ञाने'। 'अन्ये-भ्योऽपि दृश्यन्ते' इति मनिन् । सत्यम् अवितथं मन्म यस्य । बहुव्रीहिस्वरः । **वृजनानि** । 'वृजी वर्जने' । 'कृपृवृजि' इत्यादिना क्युप्रत्ययः । **पुरुप्रशस्तः** । 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरत्वे प्राप्ते 'प्रवृद्धादीनां च' (पा.सू.६.२.१४७) इत्युत्तरपदान्तोदात्तत्वम् । स ह्याकृतिगण इत्युक्तम् । **अमतिः** । 'अम गत्यादिषु'। 'अमेरतिः' । **दिधिषाय्यः**। दधातेः 'दिधिषाय्यः' (उ.सू.३.३७७) इति साय्यप्रत्ययान्तो निपात्यते ।। २ ।।

**सिद्धाञ्जनम्**– द्वितीयां ऋचमाह– **स देवः सविता न** दिव्यः सर्वप्रेरकः सूर्य इव **यः** योऽग्निः **सत्यमन्मा** सत्यमतिः । सत्यानि मननानि अस्येत्यर्थः । **क्रत्वा** क्रतुना अध्यवसायबलेन इच्छामात्रेण **विश्वा** सर्वाणि **वृजनानि** अस्माकं दृढानि स्थानानि **नि पाति** नितरां रक्षति । **पुरुप्रशस्तः** बहुधा प्रोक्तः, आविष्कृतः **अमतिर्न** तेज इव उज्ज्वलभा इत्यर्थः **सत्यः** सत्य-स्वरूपः । **आत्मेव** स्वात्मा यथा **शेवः** सुखमयः तथाभूतः सन् **दिधिषाय्यः भूत्** अस्माकं आधारो भवति, ध्येयो, धिया धारणीयो वा भवति ।। **अमतिः**-'अम गत्यादिषु' अमेः अतिः । **दिधिषाय्यः**-दधातेः षाय्यप्रत्ययान्तो निपात्यते ।। २ ।।

## ऋक्संहिता पदपाठसहिता

**देवो न यः पृथिवीं विश्वधाया उपक्षेति हितमित्रो न राजा ।**
**पुरःसदः शर्मसदो न वीरा अनवद्या पतिजुष्टेव नारी ।। ३ ।।**
देवः । न । यः । पृथिवीम् । विश्वऽधायाः । उपऽक्षेति । हितऽमित्रः । न । राजा । पुरःऽसदः । शर्मऽसदः । न । वीराः । अनवद्या । पतिजुष्टाऽइव । नारी ।। ३ ।।

**स्कन्द**– 'देवः' इति पूर्वस्यामृचि सम्बन्धदर्शनात् दीप्तत्वाच्च सवितैवाभिप्रेतः । **यः** च देव इव सविता **पृथिवीम् विश्वधायाः** 'धेट् पाने' । सर्वाहुतिलक्षणम् आज्यादिपेयं यस्य स विश्व-धायाः । सर्वासामाहुतीनां पातेत्यर्थः । **उपक्षेति** उपगम्य निवसति । यथा देवः सविता पृथिवीं रश्मिभिर्व्याप्य निवसति तद्वद् व्याप्य निवसतीत्यर्थः । **हितमित्रः न राजा** पूर्वस्यैवेयं द्वितीयोपमा । हितानि मित्राणि यस्य भवन्ति स हितमित्रः । यथा च हितैर्मित्रैरुपेतो राजा पृथिवीं सम्यक् पालयन्नुपभुञ्जानश्च निवसति तद्वत्सम्यक् पालयन्नुपभुञ्जानश्च निवसतीत्यर्थः । यश्च **पुरःसदः शर्मसदः न वीराः** पुरः सीदन्तीति पुरःसदः । सेनाया अग्रतो व्यवस्थातारः । **शर्म**

सङ्ग्रामयज्ञसुखम्, तदर्थं सीदन्तीति शर्मसदः । उपमानश्रुतेश्च साकाङ्क्षत्वादत्र योग्योपमेय कर्माध्याहारः । यथा च पुरस्सदः शर्मसदो **वीरा** शत्रूणामभिभवितारः तद्वदभिभवितेत्यर्थः । यश्च **अनवद्या पतिजुष्टेव नारी** अत्रापि पूर्ववदुपमेयकर्माध्याहारः । यथाऽनवद्या रूपवती पतिजुष्टा भर्तृसेविता नारी शोभते नित्यप्रीतियुक्ता वा तद्वच्छोभते नित्यप्रीतियुक्तो वेत्यर्थः ।। ३ ।।

**वेङ्कटमाधव–** देव इव सविता **पृथिवीम्** विश्वस्य धर्ता उपेत्य वसति अनुकूलमित्र इव **राजा** । स यथा सर्वां पृथिवीमधितिष्ठति । यस्य चाग्नेः पुरः सीदन्तः दुर्गगृहस्थिताः **वीराः** अप्रधृष्या भवन्ति, अवद्यरहिता रूपिणी पत्या सेविता स्त्रीवेति ।। ३ ।।

**मुद्गल– देवः न** द्योतमानः सूर्य इव **यः** अग्निः **विश्वधाया** सर्वस्य जगतो धर्ता । यथा सूर्यो वृष्ट्यादिप्रदानेन सर्वं जगद्धत्त एवम् अग्निरपि यज्ञादिसाधनेन कृत्स्नस्य जगतो धारयिता । सोऽग्निः **पृथिवीम् उपक्षेति** सर्वेषां प्रियः सन् यज्ञगृहादौ निवसति । दृष्टान्तः । **हितमित्रः न राजा** हितान्यनुकूलानि मित्राणि यस्य तादृशो राजा यथा सुखेन निवसति तद्वत् । यथा सर्वजनमित्रो राजा एवम् अग्निरपि सर्वजनमित्र इत्यर्थः । न ह्यग्निं कश्चन द्वेष्टि । यस्याग्नेः **पुरःसदः** पुरस्तात् सीदन्तः उपविशन्तः पुरुषाः **शर्मसदः न वीराः** पितृगृहे वर्तमाना पुत्रा इव वर्तन्ते । पिता पुत्रानिवाग्निः स्वस्य परिचारकान् रक्षतीति भावः । सोऽयम् अग्निरतिशयेन शुद्धः कर्मयोग्यो भवति । दृष्टान्तः । **अनवद्या** अनिन्दिता **पतिजुष्टेव नारी** स्वपतिना सेविता स्वीकृता योषिदिव । सा यथा पातिव्रत्येन शुद्धा सती सर्वकर्मयोग्या भवति, एवम् अग्निरपि ।। ३ ।।

**सायण– देवः न** द्योतमानः सूर्य इव **यः** अग्निः **विश्वधाया** सर्वस्य जगतो धर्ता । यथा सूर्यो वृष्ट्यादिप्रदानेन सर्वं जगत् धत्ते एवम् अग्निरपि यज्ञादिसाधनेन कृत्स्नस्य जगतो धारयिता । सोऽग्निः **पृथिवीम्** पृथिव्याम् **उपक्षेति** सर्वेषां प्रियः सन् यज्ञगृहादौ निवसति । तत्र दृष्टान्तः । **हितमित्रो न राजा** हितान्यनुकूलानि मित्राणि यस्य तादृशो राजा यथा सुखेन निवसति तद्वत् । यथा सर्वजनमित्रो राजा एवम् अग्निरपि सर्वजनमित्र इत्यर्थः । न ह्यग्निं कश्चन द्विष्टे । यस्याग्नेः **पुरःसदः** पुरस्तात् सीदन्तः उपविशन्तः पुरुषाः **शर्मसदः न वीराः** पितृगृहे वर्तमाना पुत्रा इव वर्तन्ते । पिता पुत्रानिवाग्निः स्वस्य परिचारकान् रक्षतीति भावः । सोऽयम् अग्निरतिशयेन शुद्धः कर्मयोग्यो भवति । तत्र दृष्टान्तः । **अनवद्या** अनिन्दिता **पतिजुष्टेव नारी** स्वपतिना सेविता स्वीकृता योषिदिव । सा यथा पातिव्रत्येन शुद्धा सती सर्वकर्मयोग्या भवति, एवम् अग्निरपि ।।

**विश्वधायाः** । 'गतिकारकयोरपि पूर्वपदप्रकृतिस्वरत्वं च' इति वचनात् कारकपूर्वादपि दधातेः 'वहिहाधाञ्भ्यश्छन्दसि' इति असुन् । 'णित्' इत्यनुवृत्तेः 'आतो युक् चिण्कृतोः' इति युक् । मरुद्वृधादित्वात् पूर्वपदान्तोदात्तत्वम् । **उपक्षेति** । 'क्षि निवासगत्योः' । 'बहुलं छन्दसि' इति विकरणस्य लुक् । **अनवद्या** । बहुव्रीहौ 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । **पतिजुष्टेव** । 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरत्वम् । **नारी** । 'नृनरयोवृद्धिश्च' (पा.सू.४.१.७३ ग.) इति शार्ङ्गरवादिषु पाठात् ङीबन्त आद्युदात्तः ।। ३ ।।

**सिद्धाञ्जनम्–** **यः** योऽसावग्निः **विश्वधायाः** विश्वस्य धारकः **देवो न** देव इव, **हितमित्रः** अनुकूलः सुहृत् **राजा न** राजा इव **पृथिवीम् उपक्षेति** पृथिव्यां वसति, सः **पुरःसदः** अग्रे निषण्णाः **शर्मसदः** गृहवासिनः **वीराः न** वीरपुरुषा इव, एकोऽपि भगवान् अग्निर्वीरगण इव लक्ष्यते । किञ्च **अनवद्या** निर्दुष्टा **पतिजुष्टा** इव पतिप्रिया यथा **नारी** पत्नी तथाऽयं वर्तते ।। **विश्वधायाः**-दधातेरसुन्, आतो युक् । **उपक्षेति**-'क्षि निवासगत्योः' विकरणस्य लुक् ।।३।।

## ऋक्संहिता पदपाठसहिता

**तं त्वा नरो दम आ नित्यमिद्धमग्ने सचन्त क्षितिषु ध्रुवासु ।**
**अधि द्युम्नं नि दधुर्भूर्यस्मिन्भवा विश्वायुर्धरुणो रयीणाम् ।। ४ ।।**
तम् । त्वा । नरः । दमे । आ । नित्यम् । इद्धम् । अग्ने । सचन्त । क्षितिषु । ध्रुवासु ।
अधि । द्युम्नम् । नि । दधुः । भूरि । अस्मिन् । भव । विश्वऽआयुः । धरुणः । रयीणाम् ।।

**स्कन्द–** **तम् त्वा, नरः** मनुष्याः । **दमे** यज्ञगृहे **नित्यम् इद्धम्** सन्तं हे अग्ने! **आ सचन्त** स्तुतिभिर्हविर्भिश्च आसेवन्ते । **क्षितिषु ध्रुवासु** 'क्षितिः' (निघ.१,१) इति पृथिवीनाम । इह च 'अथाप्यस्यां ताद्धितेन कृत्स्नवन्निगमा भवन्ति' (या.२.५) इत्येवं तदवयवेषु प्रयुक्तम् । पृथिव्यवयवेषु वेद्याख्येषु ध्रुवेषु । किञ्च **द्युम्नम्** हविर्लक्षणम् अन्नम् **अधि नि दधुः** उपरि निदधति । जुह्वतीत्यर्थः । **भूरि** बहु । **अस्मिन्** त्वय्यग्नौ । य ईदृशोऽसि तं ब्रूमः । **भव विश्वायुः** सर्वान्नसम्बद्धः । सर्वेषाम् अन्नानां दाता हविर्भोक्ता वेत्यर्थः । **धरुणः** 'धृ धारणे' अन्यत्र, इह तु सामर्थ्याद्दानवचनः । दाता च **रयीणाम्** धनानाम् ।। ४ ।।

**वेङ्कटमाधव–** **तम् त्वाम् नरः** गृहे नित्यं समिद्धम् । अग्ने! सेवन्ते अग्निनिधानयोग्यासु

दृढासु भूमिषु । तथा **अस्मिन् अधि नि दधुः** च अन्नं बहु । स त्वम् **भव** सर्वान्नः धनानां धारकः ।। ४ ।।

**मुद्गल–** हे अग्ने! **तम् त्वा** पूर्वोक्तगुणविशिष्टं त्वाम् । **नरः** यज्ञस्य नेतारो यजमानाः **ध्रुवासु क्षितिषु** चलनरहितासु भूमिषु । निरुपद्रवेषु ग्रामेष्वित्यर्थः । **दमे** स्वकीये यज्ञगृहे **नित्यं इद्धम्** अनवरतं समिद्भिः प्रज्वलितं कृत्वा **आ सचन्त** आभिमुख्येन सेवन्ते । किञ्च **अस्मिन्** अग्नौ **द्युम्नम्** हविर्लक्षणमन्नम् **भूरि** चरुपुरोडाशादिरूपेण बहुविधम् । **अधि नि दधुः** स्थापितवन्तः । एवंगुणविशिष्टो योऽग्निः स त्वम् **विश्वायुः** उक्तप्रकारेण सर्वान्नो भूत्वा **रयीणाम्** धनानाम् **धरुणः** धारयिता **भव** । अस्मभ्यं दातुं धनानि धारयेत्यर्थः ।। ४ ।।

**सायण–** हे अग्ने! **तम् त्वा** पूर्वोक्तगुणविशिष्टं त्वाम् । **नरः** यज्ञस्य नेतारो यजमानाः **ध्रुवासु क्षितिषु** निश्चलासु चलनरहितासु भूमिषु । निरुपद्रवेषु ग्रामेष्वित्यर्थः । **दमे** स्वकीये यज्ञगृहे **नित्यं इद्धम्** अनवरतं समिद्भिः प्रज्वलितं कृत्वा **आ सचन्त** आभिमुख्येन सेवन्ते । किञ्च **अस्मिन्** अग्नौ **द्युम्नम्** हविर्लक्षणमन्नम् **भूरि** चरुपुरोडाशादिरूपेण बहुविधम् । **अधि नि दधुः** स्थापितवन्तः । एवंगुणविशिष्टो योऽग्निः स त्वम् **विश्वायुः** उक्तप्रकारेण सर्वान्नो भूत्वा **रयीणाम्** धनानाम् **धरुणः** धारयिता **भव** । अस्मभ्यं दातुं धनानि धारयेत्यर्थः ।। **सचन्त** । 'षच समवाये' छान्दसो वर्तमाने लङ् । 'बहुलं छन्दस्यमाङ्योगेऽपि' इति अडभावः । **भव** 'द्व्यचोऽतस्तिङः' इति संहितायां दीर्घः । **धरुणः** 'धारेर्णिलुक् च' इति उनप्रत्ययः ।।४।।

**सिद्धाञ्जनम्– तम्** तथाभूतं **त्वा,** हे अग्ने! **ध्रुवासु** स्थैर्येण ध्रियमाणासु चलनरहितासु **क्षितिषु** तवावासभूतेषु लोकेषु **दमे** गृहे **नित्यम्** अनवरतं शाश्वतं वा **इद्धम्** ज्वलितं, नित्यप्रज्वलितमित्यर्थः । एवम्भूतं **नरः** मनुष्याः **आ सचन्त** आश्रित्य समवेता भवन्ति, त्वयि सक्ता इत्यर्थः । **अस्मिन्** त्वयि **भूरि** प्रभूतं **द्युम्नम्** ज्योतिः **अधि नि दधुः** प्रतिष्ठापयामासुः । त्वं **रयीणाम्** धननिधीनां **धरुणः** धारयिता, **विश्वायुः** विश्वस्यैकमायुः **भवा** भव । यजमानव्यष्टौ समष्टिभूतस्त्वं एक विश्वमायुर्भवेत्यभ्यर्थना ।। **धरुणः** 'धारेः णिलुक् च' इति उनप्रत्ययः ।।

## ऋक्संहिता पदपाठसहिता

**वि पृक्षो अग्ने मघवानो अश्युर्वि सूरयो ददतो विश्वमायुः ।**
**सनेम वाजं समिथेष्वर्यो भागं देवेषु श्रवसे दधानाः ॥ ५ ॥**
**वि । पृक्षः । अग्ने । मघऽवानः । अश्युः । वि । सूरयः । ददतः । विश्वम् । आयुः ।**
**सनेम । वाजम् । सम्ऽइथेषु । अर्यः । भागम् । देवेषु । श्रवसे । दधानाः ॥ ५ ॥**

**स्कन्द–** **पृक्षः** अन्नम् । हे अग्ने! **मघवानः** धनवन्तः । प्रभूतहविष्करणयोग्या इत्यर्थः । **वि अश्युः** विविधं प्राप्नुयुः । त्वत्प्रसादेन लभेरन्नित्यर्थः । न च मघवान एव केवलाः । किं तर्हि । **सूरयः** स्तोतारश्च वि अश्युः । **ददतः** तुभ्यं हवींषि । ये च धनवन्तः प्रभूतानि हवींषि कुर्वन्ति, ये च दारिद्र्यात् प्रायेण स्तुवन्त्येव न प्रभूतानि हवींषि कर्तुं शक्नुवन्ति, त उभयेऽपि तुभ्यं हविर्ददतोऽन्नानि प्राप्नुयुरित्यर्थः । न च केवलान्यन्नानि, किं तर्हि । **विश्वम् आयुः** सर्वमायुश्च वर्षशतलक्षणम् । वयमपि **सनेम वाजम्** अन्नम् । **समिथेषु** सङ्ग्रामेषु **अर्यः** अरेः **स्वभूतम् भागम्** हविर्लक्षणम् । **देवेषु** सम्प्रदानस्येयमधिकरणत्वेन विवक्षा । 'सममब्राह्मणे दानम्' (म.स्मृ.७,८५) इति यथा । देवेभ्यः **श्रवसे** 'श्रव:' (निघ.२,७) इत्यन्ननाम । अन्नार्थम् । **दधानाः** ददतः । देवान्यजन्त इत्यर्थः ॥ ५ ॥

**वेङ्कटमाधव–** **वि अश्युः अग्ने!** अन्नं धनवन्तः, वि अश्युः प्राज्ञाः, ददतः **विश्वम्** अन्नं दरिद्रेभ्यः । वयश्च लभेमहि अन्नं सङ्ग्रामेषु शत्रोः **भागम्** देवेषु अन्नार्थं निदधानाः ॥ ५ ॥

**मुद्गल–** हे अग्ने! **मघवानः** हविर्लक्षणेन धनेन युक्ता यजमानाः **पृक्षः** अन्नानि **वि अश्युः** व्याप्नुवन्तु । त्वयाऽनुगृहीताः सर्वाण्यन्नानि लभन्ताम् । ये **च सूरयः** विद्वांसस्त्वां स्तुवन्ति, **ददतः** ये च तुभ्यं हवींषि ददतः प्रयच्छन्तो वर्तन्ते ते सर्वे **विश्वम् आयुः** सर्वं जीवितम् **वि अश्युः** प्राप्नुवन्तु । वयश्च **समिथेषु** सङ्ग्रामेषु **अर्यः** अरेः शत्रोः सम्बन्धिनम् **वाजम्** अन्नम् **सनेम** त्वदनुग्रहात् सम्भजेमहि । तदनन्तरम् **देवेषु** त्वत्प्रमुखेष्विन्द्रादिषु **श्रवसे** यशसे तदर्थम् **भागं** हविर्भागम् **दधानाः** स्थापयन्तो भूयास्मेति शेषः ॥ ५ ॥

**सायण–** हे अग्ने! **मघवानः** हविर्लक्षणेन धनेन युक्ता यजमानाः **पृक्षः** अन्नानि **वि अश्युः** व्याप्नुवन्तु । त्वयाऽनुगृहीताः सर्वाण्यन्नानि लभन्ताम् । ये च **सूरयः** विद्वांसस्त्वां स्तुवन्ति,

**ददतः** ये च तुभ्यं हवींषि ददतः प्रयच्छन्तो वर्तन्ते ते सर्वे **विश्वम् आयुः** सर्वं जीवितम् **वि अश्युः** प्राप्नुवन्तु । वयञ्च **समिथेषु** सङ्ग्रामेषु **अर्यः** अरेः शत्रोः सम्बन्धिनम् **वाजम्** अन्नम् **सनेम** त्वदनुग्रहात् सम्भजेमहि । तदनन्तरम् **देवेषु** त्वत्प्रमुखेष्विन्द्रादिषु **श्रवसे** यशसे तदर्थम् **भागं** हविर्भागम् **दधानाः** स्थापयन्तो भूयास्मेति शेषः ।। **अश्युः** । 'अशू व्याप्तौ' । व्यत्ययेन परस्मैपदम् । 'बहुलं छन्दसि' इति विकरणस्य लुक् । **ददतः** । 'नाभ्यस्ताच्छतुः' इति नुमागम-प्रतिषेधः । 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम् । **सनेम** । 'वन षण सम्भक्तौ' । व्यत्ययेन शः । **अर्यः** । अरिशब्दात् षष्ठ्येकवचने 'जसादिषु च्छन्दसि वा वचनम्' इति 'घेर्ङिति' इति गुणाभावे यणादेशः । अरिशब्दः 'अच इः' इति इप्रत्ययान्तः अन्तोदात्तः । 'उदात्तयणः' इति विभक्तेरुदात्तत्वम् । **भागम्** । 'कर्षात्वतः' इत्यन्तोदात्तत्वम् ।। ५ ।।

**सिद्धाञ्जनम्**– हे अग्ने! **मघवानः** धनेश्वराः **पृक्षः** तव प्रीतीः, सन्तृप्तीः **व्यश्युः** प्राप्नुयुः उपभुञ्जतामित्यर्थः । कीदृशा मघवानः ? **विश्वम्** सम्पूर्णं निरवशेषं **आयुः** जीवितं **ददतः** देवेभ्यो अर्पयन्तः **सूरयः** विपश्चितः **वि अश्युः** प्राप्नुवन्ति तादृशाः सूरयो मघवानः अग्निसन्तर्पणपराः अग्निप्रीतिभुजो भवन्तीत्यर्थः । वयं तु **श्रवसे** श्रवणाय, दिव्यश्रुतिजन्यज्ञानाय देवेषु मध्ये **भागम्** भजनीयम् अस्मदीयम् अंशं **दधानाः** धारयमाणाः, **समिथेषु** सङ्ग्रामेषु **अर्यः** शत्रोः सकाशात् **वाजम्** समृद्धिं **सनेम** लभेमहि । शत्रुभिः असुरादिभिरपहृतं धनं दिव्यं भवति तज्जयाय देवेषु भागः धारयितव्यः श्रुतिजन्यं ज्ञानं चावश्यम् ।। अश्युरित्यादयो गताः । **अर्यः**-अरेः पञ्चम्येकवचने 'जसादिषु छन्दसि वा वचनम्' इति गुणाभावे यणादेशः ।। ५ ।।

।। इति प्रथमाष्टके पञ्चमाध्याये एकोनविंशो वर्गः ।।

## ।। अथ विंशतिः वर्गः ।।

## ऋक्संहिता पदपाठसहिता

**ऋतस्य हि धेनवो वावशानाः स्मदूध्नीः पीपयन्त द्युभक्ताः ।**
**परावतः सुमतिं भिक्षमाणा वि सिन्धवः समया सस्रुरद्रिम् ।। ६ ।।**

ऋतस्य । हि । धेनवः । वावशानाः । स्मत्ऽऊध्नीः । पीपयन्त । द्युऽभक्ताः ।
पराऽवतः । सुऽमतिम् । भिक्षमाणाः । वि । सिन्धवः । समया । सस्रुः । अद्रिम् ।।

**स्कन्द–** हिशब्दः पदपूरणः । **ऋतस्य** सर्वत्र गतस्याग्नेः स्वभूताः **धेनवः** गावः **वावशानाः** 'वाशृ शब्दे' । पुनःपुनर्वाश्यमानाः । **स्मदूध्नीः** स्मच्छब्दः प्रशस्तवचनः अमृतवचनत्वात् । प्रशस्तमूधो यासां ताः स्मदूध्न्यः । **पीपयन्त** अमृतेनाप्याययन्ति अग्निम् । **द्युभक्ताः** दिवं या भजन्ते ता द्युभक्ताः । द्युनिवासिन्य इत्यर्थः । किञ्च **परावतः** दूरनामैतत् (तु.निघ.३,२६) । **सुमतिम्** कल्याणचित्तम् अग्निम् **भिक्षमाणाः** याचमानाः । अन्वेषमाणा इत्यर्थः । **सिन्धवः** स्यन्दनाः अमृतस्राविण्यः **वि सस्रुः** विविधम् अभिगच्छन्त्यग्निम् । **समया अद्रिम्** समयाशब्दः सामीप्ये । अद्रिर्मेरुनामा पर्वतः । मेरोः समीपेनेत्यर्थः । अग्नेः स्वभूता गावो गव्यूतितो मेरुबुध्नेन प्रत्यागत्य विविधम् अग्निम् अभिगच्छन्ति । अभिगम्य च स्वेनामृतरूपेण पयसा अग्निमाप्याय-यन्ति इति समस्तार्थः । अथवैवमन्यथाऽस्या ऋचोऽर्थयोजना– **'धेनवः'** इति धिनोतेः प्रीणनार्थस्य रूपम् । **ऋतस्य** अग्नेः प्रीणयित्र्यः आहुतयः । **वावशानाः** अत्यर्थं कामयमानाः । **स्मदूध्नीः** । यद्रसस्थानमाहुतीनां तदूध उच्यते । अमृतरसयुक्ता इत्यर्थः । **पीपयन्त द्युभक्ताः** द्युगामिन्य इत्यर्थः । **परावतः** दूरात् । पृथिवीत इत्यर्थः । शिष्टपदयोजना तु सदृशी ।। ६ ।।

**वेङ्कटमाधव–** अग्नेः हि धेनवः कामयमानाः प्रशस्तोध्न्यः अवृद्धवयस्का आसन् सम्भक्त-स्वर्गाः । तदेवाह दूरात् **सुमतिम्** अग्निमवेक्षितम् **भिक्षमाणाः वि सस्रुः सिन्धवः अद्रिम्** अग्निम् **समया** अग्निसमीपे । अद्रिरादृणात्यमित्रान् इति । स्वर्गस्था आपोऽग्निं प्रत्यागच्छन्ति ।।

**मुद्गल–** **ऋतस्य** हि ऋतं देवयजनदेशं प्राप्तम् अग्निमेव **धेनवः** अग्निहोत्रादिहविषां दोग्ध्र्यो गावः **पीपयन्त** क्षीरादिलक्षणं गव्यम् अपाययन् । कीदृश्यो गावः । **वावशानाः** अग्निं पुनःपुनः कामयमानाः । **स्मदूध्नीः** नित्यमूधसा युक्ताः । सदा पयसः प्रदात्र्य इत्यर्थः । **द्युभक्ताः** दिवा प्रकाशेन सम्भक्ताः संश्लिष्टाः । तेजस्विन्य इत्यर्थः । अपि च **सिन्धवः** स्यन्दनशीलाः नद्यः **सुमतिम्** अस्याग्नेः शोभमानाम् अनुग्रहात्मिकां बुद्धिम् **भिक्षमाणाः** याचमानाः सत्यः **अद्रिम् समया** अद्रेः पर्वतस्य समीपे **परावतः** दूरदेशात् **वि सस्रुः** विशेषेण गच्छन्ति प्रवहन्ति । अग्नये दातव्यानां हविषां निष्पत्तये प्रवहन्तीत्यर्थः ।। ६ ।।

**सायण–** **ऋतस्य** हि ऋतं देवयजनदेशं प्राप्तम् अग्निमेव **धेनवः** अग्निहोत्रादिहविषां दोग्ध्र्यो गावः **पीपयन्त** क्षीरादिलक्षणं गव्यम् अपाययन् । कीदृश्यो गावः । **वावशानाः** अग्निं पुनःपुनः कामयमानाः । **स्मदूध्नीः** स्मच्छब्दो नित्यशब्दसमानार्थः । नित्यमूधसा युक्ताः । सदा पयसः

प्रदात्र्य इत्यर्थः । **द्युभक्ताः** दिवा प्रकाशेन सम्भक्ताः संश्लिष्टाः । तेजस्विन्य इत्यर्थः । अपि च **सिन्धवः स्यन्दनशीलाः** नद्यः **सुमतिम्** अस्याग्नेः शोभमानाम् अनुग्रहात्मिकां बुद्धिम् **भिक्षमाणाः** याचमानाः सत्यः **अद्रिम् समया** अद्रेः पर्वतस्य समीपे **परावतः** दूरदेशात् **वि सस्रुः** विशेषेण गच्छन्ति प्रवहन्ति । अग्नये दातव्यानां हविषां निष्पत्तये प्रवहन्तीत्यर्थः ।। **ऋतस्य** । 'क्रियाग्रहणं कर्तव्यम्' इति कर्मणः सम्प्रदानत्वात् चतुर्थ्यर्थे षष्ठी । **वावशानाः** । 'वश कान्तौ' । यङन्तात् शानच् । 'न वशः' (पा.सू.६.१.२०) इति सम्प्रसारणप्रतिषेधः । 'बहुलं छन्दसि' इति शपो लुक् । 'छन्दस्युभयथा' इति शानच आर्धधातुकत्वात् अतोलोपय-लोपौ । अत एव लसार्वधातुकानुदात्तत्वाभावे चित्स्वर एव शिष्यते । **स्मदूध्नीः** । स्मत् नित्यान्यूधांसि यासाम् । 'अधसोऽनङ्' (पा.सू.५.४.१३१) इति अनङादेशः समासान्तः । 'संख्याव्ययादेर्ङीप्' (पा.सू.४.१.२६) इति ङीप् । भसंज्ञायाम् 'अल्लोपोऽनः' इति अलोपः । ङीपः पित्त्वादनुदात्तत्वे बहुव्रीहिस्वर एव शिष्यते । **पीपयन्त** । 'पा पाने' । अस्मात् हेतुमति णिच् । 'शाच्छासाह्वा' इति युक् । ण्यन्तात् लुङि च्लेः चङादेशादि । 'चङ्यन्यतरस्याम्' इति चङः पूर्वस्योदात्तत्वम् । 'हि च' इति निघातप्रतिषेधः । **परावतः** परागतात् । दूरं हि परागतं भवति । अस्मिन् धात्वर्थे गम्यमाने 'उपसर्गाच्छन्दसि धात्वर्थे' (पा.सू.५.१.११८) इति वतिः ।। ६ ।।

**सिद्धाञ्जनम्– ऋतस्य** सत्यस्य **धेनवः** दोग्ध्र्यः **द्युभक्ताः** द्युलोके सम्भक्ताः प्रीत्या उपभुक्ता इत्यर्थः । यद्वा द्युलोकेन भक्ता आत्तभागाः द्युलोकभागहरा इमाः इत्यर्थः । हिः पदपूरणः । **स्मदूध्नीः** स्मत् नित्यवचनः । नित्यानि ऊधांसि यासां ताः नित्यपयस्विन्यः पूर्णोध्न्यो वा । **वावशानाः** अस्मान् कामयमानाः **पीपयन्त** अपाययन् स्वीयं दुग्धम् अमृतम् । ऋतस्य दोग्ध्र्यो हि ता उक्ताः । **परावतः** सर्वस्मादपि परस्तात् बृहद्दिवः स्थानात् **सिन्धवः** स्यन्दमाना आपः **सुमतिम्** साध्वीं चिन्तनां **भिक्षमाणाः** प्रार्थयमानाः **अद्रिम् समया** पर्वतस्य समीपे **वि सस्रुः** विततं यथा तथा प्रावहन् ।। अद्रिः पर्वतः विश्वसत्तोपलक्षणम्, यजमानीयां अन्नमयादिकां सर्वां भूमिम् अभितः प्रावहन् 'आपः' तेजोवाहिन्यः दिव्या शक्तयः । ऋतस्य धेनवस्तु मातरः पोषयित्र्यः । अन्यत् प्रागुक्तमनुसन्धेयम् ।। **वावशानाः**- 'वश कान्तौ' यङन्तात् शानच् । **स्मदूध्नीः**- 'ऊधसोऽनङ्' इत्यनङादेशः समासान्तः । **पीपयन्त**- 'पा पाने' हेतुमण्णिच् । लुङि व्यत्ययेन आत्मनेपदम् ।। ६ ।।

## ऋक्संहिता पदपाठसहिता

**त्वे अ॑ग्ने सुम॒तिं भिक्ष॑माणा दि॒वि श्रवो॑ दधिरे य॒ज्ञिया॑सः ।**
**नक्ता॑ च च॒क्रुरु॒षसा॒ विरू॑पे कृ॒ष्णं च॒ वर्ण॑मरु॒णं च॒ सं धुः ॥ ७ ॥**
त्वे इति॑ । अ॒ग्ने॒ । सु॒ऽम॒तिम् । भिक्ष॑माणाः । दि॒वि । श्रवः॑ । द॒धि॒रे॒ । य॒ज्ञिया॑सः । नक्ता॑ । च॒ । च॒क्रुः॒ । उ॒षसा॑ । विरू॑पे॒ इति॒ विऽरू॑पे । कृ॒ष्णम् । च॒ । वर्ण॑म् । अ॒रु॒णम् । च॒ । सम् । धु॒रिति॑ धुः ॥ ७ ॥

**स्कन्द–** त्वे इति द्वितीयैकवचनस्य शे आदेशः । त्वां, हे अग्ने! **सुमतिम् भिक्षमाणाः** धनानि याचमानाः **दिवि श्रवः** हविर्लक्षणमन्नं **दधिरे** स्थापयन्ति । देवेभ्यो हवींषि ददतीत्यर्थः । अथवा दिवीति सप्तमीनिर्देशात् व्यवस्थितायेति वाक्यशेषः । दिवि व्यवस्थिताय तुभ्यं **श्रवः दधिरे** ददति । **यज्ञियासः** यष्टारः । न च केवलम्, न च कदाचिदेव । किं तर्हि, **नक्तं च चक्रुः** 'नक्ता' (निघ.१,७) इति रात्रिनाम । सप्तम्याश्चाकारः । रात्रौ चैतत् कुर्वन्ति । **उषसा** उषसि च । उषसा चात्रानन्तर्यादहर्लक्ष्यते । अहनि चेत्यर्थः । कीदृशयोरहोरात्रयोः **विरूपे** सप्तमीद्विवचनस्यायं शे आदेशः । विभिन्नरूपयोः । किञ्च **कृष्णम् च वर्णम् अरुणम् च** अरुण आरक्तो वर्णः । सुसमिद्धस्याग्नेर्ज्वालाया उपरि कृष्णो वर्णो भवति शिष्टेऽरुणः । तौ **सम् धुः** सन्दधति । तथा त्वां यष्टारः समिन्धते यथा तत्र कृष्णारुणौ वर्णावपि भिन्नौ भवत इत्यर्थः । अथवैवम् अन्यथा उत्तरस्यार्धर्चस्यार्थयोजना– **नक्ता च चक्रुरुषसा विरूपे** इति द्वितीयान्तान्येतानि, न च सप्तम्यन्तानि । दिवि श्रवो दधिरे ये यज्ञियासः ते नक्तोषसौ विभिन्नरूपे कुर्वन्तीत्यर्थः । नक्तोषसोरेव कृष्णं च वर्णमरुणं च सन्धुः । कथं पुनः यष्टार एतत् कुर्वन्ति । उच्यते । यागकारित्वात्, यागस्य च धर्मत्वात्, कृत्स्नस्य जगतो धर्ममूलत्वात् ॥

**वेङ्कटमाधव–** त्वयि अग्ने! **सुमतिम्** त्वदीयाम् **भिक्षमाणाः** दीप्ते हविः निदधिरे यजमानाः । यद्वा देवेभ्योऽन्नं कुर्वन्ति तथा यज्ञकरणात् । अहोरात्रे विरूपे चक्रुः । कृष्णम् अरुणं **च वर्णम्** अहोरात्रयोः **सम् दधुः** ॥ ७ ॥

**मुद्गल–** हे **अग्ने! सुमतिम्** शोभनाम् अनुग्रहात्मिकां **बुद्धिम् भिक्षमाणाः** याचमानाः **यज्ञियासः** यज्ञार्हाः सर्वे देवाः **दिवि** द्योतमाने **त्वे** त्वयि **श्रवः** हविर्लक्षणमन्नम् **दधिरे** अस्थापयन् । तदनन्तरं तादृशे हविर्युक्तायानुष्ठानाय **विरूपे** विविधरूपे **उषसा** उषःकालोपलक्षितमहः, **नक्ता**

च नक्तं रात्रिश्च **चक्रुः** अकुर्वन् । एतदेव स्पष्टयति । **कृष्णम् च वर्णम्** रात्र्यां श्यामलवर्णम् अन्धकारम् अह्नि **अरुणम्** आरोचमानं श्वेतवर्णं तेजः **च सम् धुः** सम्यक् स्थापितवन्तः ।।७।।

**सायण–** हे **अग्ने! सुमतिम्** शोभनाम् अनुग्रहात्मिकां बुद्धिम् **भिक्षमाणाः** याचमानाः **यज्ञियासः** यज्ञार्हाः सर्वे देवाः **दिवि** द्योतमाने **त्वे** त्वयि **श्रवः** हविर्लक्षणमन्नम् **दधिरे** अस्थापयन् । 'अग्निर्देवानामन्नादः' (तै. ब्रा.३.१.४.१.) इति श्रुतेः । तदनन्तरं तादृशे हविर्युक्तायानुष्ठानाय **विरूपे** विविधरूपे **उषसा** उषःकालोपलक्षितमहः, **नक्ता च** नक्तं रात्रिश्च **चक्रुः** अकुर्वन् । एतदेव स्पष्टयति । **कृष्णम् च वर्णम्** रात्र्यां श्यामलवर्णम् अन्धकारम् अह्नि **अरुणम्** आरोचमानं श्वेतवर्णं तेजः **च सम् धुः** सम्यक् स्थापितवन्तः ।। **त्वे** । 'सुपां सुलुक्' इति सप्तम्याः शेआदेशः । **नक्ता** । तेनैव द्वितीयाया डादेशः । **उषसा** । तेनैव विभक्तेः आकारः । **धुः** 'डु धाञ् धारणपोषणयोः' । लुङि 'गातिस्था' इति सिचो लुक् । 'आतः' इति झेः जुसादेशः । 'बहुलं छन्दस्यमाङ्योगेऽपि' इति अडभावः ।। ७ ।।

**सिद्धाञ्जनम्–** हे **अग्ने त्वे** त्वयि **सुमतिम्** साध्वीं चिन्तनां **भिक्षमाणाः** प्रार्थयमानाः **यज्ञियासः** यज्ञार्हा देवाः **दिवि** द्युलोके **श्रवः** श्रुतिजन्यं ज्ञानं **दधिरे** स्थापितवन्तः । अथ **नक्ता च** नक्तं रात्रिं च **उषसा** उषःशब्दलक्षितं अहश्च **विरूपे** विभिन्नरूपे **चक्रुः** । तदेव स्पष्टयति– **कृष्णं च वर्णम्** श्यामलं रात्रेः वर्णम् **अरुणम् च** अहर्मुखवर्णं च **सन्धुः** संयोजयामासुः ।। प्रकाशाप्रकाशदशाप्रतिपादके अहोरात्रे । अरुणवर्णं उषसम् अधिकृत्य । रात्रौ उषसि च अग्निकृत्यं विविधं वर्तते । तच्च दिव्येन श्रवसा साधनेन निरूह्यते भगवताऽग्निनेति बोध्यम् ।। **त्वे**-सप्तम्याः शे आदेशः । **नक्ता**-द्वितीयाया डादेशः । **उषसा**-विभक्तेराकारः ।। ७ ।।

## ऋक्संहिता पदपाठसहिता

**याव्राये मर्तान्त्सुषूदो अग्ने ते स्याम मघवानो वयं च ।**
**छायेव विश्वं भुवनं सिसक्ष्यापप्रिवान्रोदसी अन्तरिक्षम् ।। ८ ।।**

यान् । राये । मर्तान् । सुसूदः । अग्ने । ते । स्याम । मघऽवानः । वयम् । च ।
छायाऽइव । विश्वम् । भुवनम् । सिसक्षि । आपप्रिऽवान् । रोदसी इति । अन्तरिक्षम् ।।

**स्कन्द– यान्,** राये धनाय **मर्तान् सुसूदः** संस्करोषि हे अग्ने! यान् धनप्राप्तियोग्यान्

करोषीत्यर्थः । **ते स्याम, मघवानः** धनेन हविर्लक्षणेन धनवन्तः **वयम् च** चशब्द एवार्थे, वयमेव । अस्मानेव धनप्राप्तियोग्यान् कुर्वित्यर्थः । चशब्दश्रुतिसामर्थ्याद्वा मघवानश्च वयञ्च स्यामेत्येवं व्याख्यातव्यम् । ये चान्ये हविर्लक्षणेन धनेन धनवन्तो वयञ्चेत्यर्थः । किञ्च **छायेव** यथा छाया नित्यसन्निहिता एवं त्वम् **भुवनम्** भूतजातम् **सिसक्षि** दहनपचनादिना सेवसे । **आपप्रिवान्** स्वेन ज्योतिषा पूरयन् **रोदसी अन्तरिक्षम्** च ।। ८ ।।

**वेङ्कटमाधव–** हे अग्ने! त्वम्, धनाय **यान् मर्तान्** मनुष्यान् अस्मान् प्रैरयः, **ते वयं स्याम** । तदेवाह– धनवन्तः **वयम् च** इति । **छायेव विश्वम्** भूतजातं सेवसे पूरयन् त्रीन् लोकान् ।। ८ ।।

**मुद्गल–** हे अग्ने! **यान् मर्तान्** मनुष्यान् अस्मान् **राये** धनाय **सुसूदः** अग्निहोत्रादिकर्मसु प्रेरयसि, **ते** तादृशाः **वयम् च मघवानः** धनिनः **स्याम** भवेम । **रोदसी** द्यावापृथिव्यौ **अन्तरिक्षम्** च **आप्रपिवान्** स्वतेजसा आपूरितवान् । त्वञ्च **विश्वम् भुवनम्** सर्वं जगत् **सिसक्षि** सेवसे । अनुगृह्य सर्वं रक्षसीत्यर्थः । दृष्टान्तः । **छायेव** यथा छत्रादेश्छाया आतपादिजनितक्लेशं निवार्य रक्षति तद्वत् ।। ८ ।।

**सायण– यान् मर्तान्** मनुष्यान् अस्मान् **राये** धनाय **सुषूदः** अग्निहोत्रादिकर्मसु प्रेरयसि, **ते** तादृशाः **वयम् च मघवानः** धनिनः **स्याम** भवेम । **रोदसी** द्यावापृथिव्यौ **अन्तरिक्षम्** च **आप्रपिवान्** स्वतेजसा वृष्ट्युदकेन वा आपूरितवान् । त्वञ्च **विश्वम् भुवनम्** सर्वं जगत् **सिसक्षि** सेवसे । अनुगृह्य सर्वं रक्षसीत्यर्थः । तत्र दृष्टान्तः । **छायेव** यथा छत्रादेश्छाया आतपादिजनितं क्लेशं निवार्य रक्षति तद्वत् ।। **राये** । ऊडिदम्' इति विभक्तेरुदात्तत्वम् । **सुषूदः** । 'षूद प्रेरणे'। लेटि अडागमः । 'बहुलं छन्दसि' इति शपः श्लुः । 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम् । 'यद्वृत्तावनिघातः' इति निघातप्रतिषेधः । **सिसक्षि** । 'षच समवाये' । 'बहुलं छन्दसि' इति शपः श्लुः । 'इत्' इत्यनुवृत्तौ 'बहुलं छन्दसि' इति अभ्यासस्य इत्वम् । **आपप्रिवान्** । 'प्रा पूरणे'। लिटः क्वसुः । 'वस्वेकाजाद्घसाम्' इति इडागमः । 'आतो लोप इटि च' इति आकारलोपः । 'द्विर्वचनेऽचि' इति स्थानिवद्भावात् द्विर्भावादि ।। ८ ।।

**सिद्धाञ्जनम्–** हे अग्ने! **यान् मर्तान्** मनुष्यान् । **राये** निधिसम्पदे **सुषूदः** सुतरां सूदयसि,

त्वरयसि । **वयम् च** वयमपि **ते मघवानः स्याम** भवेम । सम्पदे यान् त्वं त्वरयसि, ते सम्पन्ना भवन्ति । तेषु मध्ये वयमपि स्याम सम्पन्नाः । **रोदसी** द्यावापृथिव्यौ **अन्तरिक्षम्** मध्यमं लोकं, एवं त्रैलोक्यं च **आपप्रिवान्** आपूरितवान् । त्वं **विश्वम् भुवनम्** समस्तं जगत् **छाया इव सिसक्षि** छाया यथा अवियोज्यतया सचते, तथा सचसे । विश्वस्मिन् भुवने छायेव सक्तो भवसि ।। **सुषूदः**-'षूद प्रेरणे' लेट् । **सिसक्षि**-'षच समवाये' शपः श्लुः । **आपप्रिवान्**-'प्रा पूरणे' लिटः क्वसुः ।। ८ ।।

## ऋक्संहिता पदपाठसहिता

**अर्वद्भिरग्ने अर्वतो नृभिर्नॄन्वीरैर्वीरान्वनुयामा त्वोताः ।**
**ईशानासः पितृवित्तस्य रायो वि सूरयः शतहिमा नो अश्युः ।। ९ ।।**
अर्वत्ऽभिः । अग्ने । अर्वतः । नृऽभिः । नॄन् । वीरैः । वीरान् । वनुयाम । त्वाऽऊताः ।
ईशानासः । पितृऽवित्तस्य । रायः । वि । सूरयः । शतऽहिमाः । नः । अश्युः ।। ९ ।।

**स्कन्द– अर्वद्भिः** आत्मीयैरश्वैः । अग्ने! शत्रूणां स्वभूतान् **अर्वतः** अश्वान्, **नृभिः नॄन्** मनुष्यैः मनुष्यान्, पुत्रैः पुत्रान् **वनुयामा** 'वनुष्यतिर्हन्तिकर्मा' (या.५,२) । हन्यामेत्येतदाशास्महे । **त्वोताः** त्वया रक्षिताः सन्तः । किञ्च **ईशानासः पितृवित्तस्य** पित्रा लब्धस्य **रायः** धनस्य । **सूरयः** तव स्तोतारः सन्तः । **शतहिमा** शतं हिमाः । वर्षशतमित्यर्थः । **नः** अत्र षष्ठीनिर्देशात् पितृवित्तस्येति वचनात् पुत्रा इति वाक्यशेषः । अस्माकं पुत्राः **वि अश्युः** विविधं प्राप्नुयुरित्याशास्महे । त्वत्प्रसादेनास्मत्पुत्राः पित्र्येण धनेनोपेता वर्षशतं जीव्यासुरित्यर्थः ।।

**वेङ्कटमाधव–** अग्ने! त्वया रक्षितास्सन्तो वयम् अश्वादिभिः सहानुस्यूतान् अश्वादीन् भजेमहि । ईश्वराः पितृलब्धस्य धनस्य अस्माकं पुत्राः शतं संवत्सरान् **वि** अश्नुवीरन् पितृलब्धं धनमिति ।। ९ ।।

**मुद्गल–** हे अग्ने! **त्वोताः** त्वया रक्षिताः सन्तो वयम् । **अर्वद्भिः** अस्मदीयैरश्वैः । **अर्वतः** शत्रुसम्बन्धिनोऽश्वान् । **नृभिः वीरैः** अस्मदीयैर्भटैः **नॄन्** शत्रोर्भटान् **वीरैः** स्वपुत्रैः **वीरान्** शत्रुपुत्रांश्च **वनुयाम** हन्याम । **पितृवित्तस्य** पित्रादिपरम्परया लब्धस्य **रायः** धनस्य **ईशानासः** स्वामिनः **सूरयः** विद्वांसः, **नः** अस्माकं पुत्राः **शतहिमाः** शतं संवत्सरान् जीवन्तः सन्तः **वि अश्युः** विशेषेण भुञ्जताम् । अस्मदीयानां पुत्राणामारोग्यं दीर्घमायुश्च भवत्वित्यर्थः ।। ९ ।।

**सायण–** हे अग्ने! **त्वोताः** त्वया रक्षिताः सन्तो वयम् । **अर्वद्भिः** अस्मदीयैरश्वैः । **अर्वतः** शत्रुसम्बन्धिनः अश्वान् । **नृभिः** अस्मदीयैर्भटैः **नॄन्** शत्रोर्भटान् । वीर्याज्जायन्ते इति वीराः पुत्राः । तैः । **वीरान्** शत्रुपुत्रांश्च **वनुयाम** हन्याम । 'वनुष्यतिर्हन्तिकर्मानवगतसंस्कारो भवति' (निरु.५.२) इति यास्कः । **पितृवित्तस्य** पित्रादिपरम्परया लब्धस्य **रायः** धनस्य **ईशानासः** स्वामिनः **सूरयः** विद्वांसः । **नः** अस्माकं पुत्राः **शतहिमाः** शतं संवत्सरान् जीवन्तः सन्तः **वि अश्युः** विशेषेण भुञ्जताम् । अस्मदीयानां पुत्राणामारोग्यं दीर्घमायुश्च भवत्वित्यर्थः ।। **त्वोताः** त्वयोताः। 'प्रत्ययोत्तरपदयोश्च' इति मपर्यन्तस्य त्वादेशः । व्यत्ययेन आत्वम् । 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरत्वम् । **शतहिमाः** । अत्र हिमशब्देन तद्वान् हेमन्तो लक्ष्यते । ब्राह्मणं च भवति-'शतं हिमा इत्याह शतं त्वा हेमन्तानिन्धिषीयेति वावैतदाह' (तै.सं.१ ५.८.५) इति । शतं हिमाः शतं हेमन्तर्तवो येषां ते शतसंवत्सरजीविन इत्यर्थः । **अश्युः** । 'अश भोजने' । 'बहुलं छन्दसि' इति विकरणस्य लुक् ।। ९ ।।

**सिद्धाञ्जनम्–** हे अग्ने! **त्वोताः** त्वा ऊताः त्वया रक्षिताः वयम् । **अर्वद्भिः** अस्माकं युद्धाश्वैः **अर्वतः** युद्धाश्वान् **वनुयाम** जयेम । तथा **नृभिः** बलिभिर्मनुष्यैः । **नॄन्** बलिनो मनुष्यान् । **वीरैः** वीरपुरुषैः **वीरान्** वीरपुरुषांश्च **वनुयाम** । **नः** अस्मत्सम्बन्धिनः **सूरयः** विपश्चितः **पितृवित्तस्य** पितृभ्यः पूर्वेभ्यः सकाशाल्लब्धस्य **रायः** निधेः **ईशानासः** ईश्वराः स्वामिनो भूत्वा **शतहिमाः** शतवर्षजीविताः **व्यश्युः** विशेषेण भुञ्जताम् ।। **त्वोताः**-त्वया ऊताः, मपर्यन्तस्य त्वादेशः, व्यत्ययेन आत्वम् । **शतहिमाः** शतं हिमाः हिमशब्दलक्षिता हेमन्ताः येषां ते ।।

## ऋक्संहिता पदपाठसहिता

**एता ते अग्न उचथानि वेधो जुष्टानि सन्तु मनसे हृदे च ।**
**शकेम रायः सुधुरो यमं तेऽधि श्रवो देवभक्तं दधानाः ।। १० ।।**
एता । ते । अग्ने । उचथानि । वेधः । जुष्टानि । सन्तु । मनसे । हृदे । च । शकेम । रायः । सुऽधुरः । यमम् । ते । अधि । श्रवः । देवऽभक्तम् । दधानाः ।। १० ।।

**स्कन्द–** एतानि ते हे **अग्ने! उचथानि** अस्मदीयानि स्तुतिवचनानि । हे **वेधः**! मेधाविन्! **जुष्टानि** प्रियाणि **सन्तु** । **मनसे हृदे च** मनोऽन्तःकरणम् । हृदयं तदधिष्ठानम् तयोरुभयोरपि । किञ्च **शकेम** शक्नोतेः कर्मभूतधात्वन्तरसापेक्षत्वात् कर्तुमिति वाक्यशेषः । शक्नुयाम कर्तुमित्य-

तदाशास्महे । किमर्थम् । **रायः** धनस्यार्थाय । किम् । उच्यते । **सुधुरः यमं ते** शोभना धूर्यस्य स सुधू रथः, तस्य । **यमं** बन्धनम् । स्ववेद्यां धारणमित्यर्थः । **ते** तव स्वभूतस्य । अधिशब्दः 'अधिपरी अनर्थकौ' (पा.१,४,९३) इत्येवं कर्मप्रवचनीयः पदपूरणः । **श्रवः** हविर्लक्षणमन्नम् । **देवभक्तम्** देवैः सेवितं देवानां वा आहारभूतम् । **दधानाः** ददतः । यजन्त इत्यर्थः ॥

अत्रान्तरे सौपर्णानि शौनकेनानुक्रान्तानि । तानि विशिष्टव्रतकाध्ययनत्वात् दुरध्येयानि इति प्रायेण लोको नाधीते इति अतिप्रसङ्गभावान्नेहास्माभिः व्याख्यायन्ते । खिलव्याख्याने तु व्याख्यास्यन्ते ॥ १० ॥

**वेङ्कटमाधव–** एतानि **ते अग्ने!** वचनानि सूक्तानि विधातः! पर्याप्तानि भवन्तु । **मनसे** हृदयाय च । तव धनस्य यमनं कर्तुम् **सुधुरः** वयम् **शकेम,** त्वया दत्तां लक्ष्मीं नियन्तुं समर्था भवेम । देवैर्दत्तम् अन्नं हविरग्नौ अधि **दधानाः** ॥ १० ॥

**मुद्गल–** हे **वेधः!** मेधाविन् **अग्ने! एता उचथानि** एतानीदानीमस्माभिः प्रयुक्तानि स्तोत्राणि **ते** तव **मनसे** मनोवृत्तये **हृदे** तद्वृत्तिमते अन्तःकणाय च **जुष्टानि सन्तु** प्रियाणि भवन्तु । **ते** तव सम्बन्धिनः **सुधुरः** सुष्टु निर्वाहकस्य **रायः** धनस्य **यमं** नियमनं कर्तुम् **शकेम** शक्ता भूयास्म । किं कुर्वन्तः । **देवभक्तम्** देवैः सम्भजनीयम् । **श्रवः** हविर्लक्षणम् अन्नम् **अधि दधानाः** अग्नेरुपरि धारयन्तः । अग्नौ हविर्भिर्होमं कुर्वन्त इत्यर्थः ॥ १० ॥

**सायण–** हे **वेधः!** मेधाविनामैतत् । मेधाविन् **अग्ने! एता उचथानि** एतानि इदानीम् अस्माभिः प्रयुक्तानि स्तोत्राणि **ते** तव **मनसे** मनोवृत्तये **हृदे** तद्वृत्तिमते अन्तःकरणाय च **जुष्टानि सन्तु** प्रियाणि भवन्तु । **ते** तव सम्बन्धिनः **सुधुरः** सुष्ठु निर्वाहकस्य । यद्वा । शोभनं धूर्वति दारिद्र्यं हिनस्तीति सुधूः । तादृशस्य **रायः** धनस्य **यमं** नियमनं कर्तुं **शकेम** शक्ता भूयास्म । किं कुर्वन्तः । **देवभक्तं** देवैः सम्भजनीयं **श्रवः** हविर्लक्षणम् अन्नम् **अधि दधानाः** अग्नेरुपरि धारयन्तः । अग्नौ हविर्भिर्होमं कुर्वन्तः इत्यर्थः ॥

**उचथानि** । 'वच परिभाषणे'। 'रुविदिभ्यां कित्' (उ.सू.३.३९५) इति विधीयमानः अथ-प्रत्ययः कित्त्वं च बहुलवचनादस्मादपि भवति । वच्यादिना सम्प्रसारणम् । **जुष्टानि** । जुष्टार्पिते

च च्छन्दसि, नित्यं मन्त्रे' (पा.सू.६.१.२०९-२१०) इत्याद्युदात्तत्वम् । **हृदे** । 'पद्दन्' इत्यादिना हृदयशब्दस्य हृदादेशः । **शकेम** । 'शक्लृ शक्तौ'। 'लिङ्याशिष्यङ्' । **सुधुरः** । धुर्वी हिंसार्थः । 'क्विप् च' इति क्विप् । 'राल्लोपः' इति वकारलोपः । 'न पूजनात्' इति समासान्तप्रतिषेधः । देवैर्भक्तं **देवभक्तम्** । 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरत्वम् ।।१०।।

**सिद्धाञ्जनम्– वेधः**, विधातः! वस्तूनाम् । हे **अग्ने! एता उचथानि** एतानि सूक्तानि **ते** तुभ्यं तवात्मने **मनसे** चित्ताय **हृदे** हृदयाय च **जुष्टानि** सन्तुष्टिकराणि **सन्तु** भवन्तु । **देवभक्तम्** देवैरुपभुक्तं, विभक्तं वा **श्रवः** श्रवणजन्यं ज्ञानम् । **अधि** आधारभूतेऽग्नौ त्वयि **दधानाः** धारयन्तः वयं **ते** तव **सुधुरः** शोभना दृढा धूः योक्त्रं यस्य तस्य **रायः** धनस्य **यमं** नियमनं स्ववशीकर्तुमित्यर्थः, **शकेम** शक्ताः स्याम, त्वदीयसम्पद्धुरं वोढुं शक्नुयाम । उचथान्यादयः सर्वे गताः ।। १० ।।

।। इति प्रथमाष्टके प्रथमाध्याये विंशो वर्गः ।।
।। इति प्रथमे मण्डले द्वादशोऽनुवाकः ।।

## ।। अथ एकविंशो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

### (सूक्तम् ७४)

९ गोतमो राहूगणः । अग्निः गायत्री ।

**उपप्रयन्तो अध्वरं मन्त्रं वोचेमाग्नये । आरे अस्मे च शृण्वते ।। १ ।।**
उपऽप्रयन्तः । अध्वरम् । मन्त्रम् । वोचेम । अग्नये । आरे । अस्मे इति । च । शृण्वते ।।

**स्कन्द–** उपप्रयन्तो गोतमो राहूगण ऋषिः स्मृतः । 'उपप्रयन्तः' इत्येवमादि गोतमो नाम रहूगणपुत्रोऽपश्यत् । उपगच्छन्तः **अध्वरम्** स्तुतिलक्षणम् **मन्त्रम्** नित्यम् **वोचेम अग्नये** इत्येतन्नित्यमाशास्महे । **आरे** सन्निकृष्टे व्यवस्थितायेति वाक्यशेषः । **अस्मे** अस्माकं च **शृण्वते** अस्मदीयस्तुतिश्रवणं प्रति सादराय, न निरादरायेत्यर्थः ।। १ ।।

**वेङ्कटमाधव–** गोतमो राहूगणः । उपप्रगच्छन्तः यज्ञम् । **मन्त्रम् वोचेम** अन्वहम् **अग्नये** दूरेऽपि स्थित्वा अस्माकं वचनम् **शृण्वते** । अपेक्षिते धने दूरे स्थितेऽपि स्तोतुर्वचनं शृणोतीति वाजसनेयके उक्तम् इति ।। १ ।।

**मुद्गल–** त्रयोदशे अनुवाके एकादश सूक्तानि । तत्र 'उपप्रयन्तः' इति नवर्चं प्रथमं सूक्तम् । राहूगण ऋषिः । गायत्री छन्दः । अग्निर्देवता ।।

**अध्वरम्** हिंसाप्रत्यवायरहितम् अग्निष्टोमादियज्ञम् **उपप्रयन्तः** उपेत्य प्रकर्षेण यन्तो गच्छन्तः । प्राप्याविच्छेदेन सम्यगनुतिष्ठन्तः इत्यर्थः । तादृशा वयम् **अग्नये** अङ्गनादिगुणयुक्ताय देवाय **मन्त्रम्** मननसाधनमेतत्सूक्तरूपं स्तोत्रम् **वोचेम** वक्तारो भूयास्मेत्याशास्यते । कीदृशायाग्नये । **आरे अस्मे च** आरे च दूरेऽपि स्थित्वाऽस्माकं स्तुतीः **शृण्वते** । अस्मासु प्रीत्यतिशयेन सर्वत्र वर्तमानोऽग्निरस्मदीयमेव स्तोत्रं शृणोतीति भावः ।। १ ।।

**सायण– अध्वरं** हिंसाप्रत्यवायरहितम् अग्निष्टोमादियज्ञम् **उपप्रयन्तः** उपेत्य प्रकर्षेण यन्तो गच्छन्तः प्राप्याविच्छेदेन सम्यगनुतिष्ठन्तः इत्यर्थः । तादृशा वयम् **अग्नये** अङ्गनादिगुणयुक्ताय देवाय **मन्त्रं** मननसाधनमेतत्सूक्तरूपं स्तोत्रं **वोचेम** वक्तारो भूयास्मेत्याशास्यते । कीदृशायाग्नये । **आरे अस्मे च शृण्वते** । चशब्दः अप्यर्थे आरेशब्दात्परो द्रष्टव्यः । **आरे च** दूरेऽपि स्थित्वाऽस्माकं स्तुतीः शृण्वते । अस्मासु प्रीत्यतिशयेन सर्वत्र प्रवर्तमानोऽग्निः अस्मदीयमेव स्तोत्रं शृणोतीति भावः ।। **वोचेम** । 'ब्रुवो वचिः' । 'लिङ्याशिष्यङ्'। 'वच उम्' इति उमागमः । **शृण्वते** । 'शतुरनुमः' इति विभक्तेरुदात्तत्वम् ।। १ ।।

**सिद्धाञ्जनम्–** त्रयोदशानुवाके एकादश सूक्तानि । तत्र 'उपप्रयन्तः' इति नवर्चं प्रथमं सूक्तम् । अत्रानुकम्यते 'उपप्रयन्तो नव गोतमो राहूगणो गायत्रं तु' इति । अस्यायमर्थः । रहूगणनामा कश्चिद् ऋषिः । तस्य पुत्रो गोतमोऽस्य सूक्तस्य ऋषिः । 'गायत्रं तु' इत्युक्तत्वादिदमुत्तरं च गायत्रीच्छन्दस्कम् । 'परमाग्नेयमैन्द्रात्' इति परिभाषितत्वादग्निर्देवता । प्रातरनुवाकस्याग्नेये क्रतौ गायत्रे छन्दस्येतदादिके द्वे सूक्ते । सूत्रितं च- 'आपो रेवतीः क्षयथा हि वस्व उपप्रयन्त इति सूक्ते' (आश्व.श्रौ. ४.१३) इति । आश्विनशस्त्रेऽप्येते सूक्ते 'प्रातरनुवाकन्यायेन' (आश्व.श्रौ.६.५) इत्यतिदेशात् । पृष्ठ्यषडहस्य प्रथमेऽहनि एतदेव सूक्तम् आज्यशस्त्रम् । सूत्रितं च- 'उपप्रयन्त इति तु प्रथमेऽहन्याज्यम्' (आश्व.श्रौ.७.१०) इति ।।

तत्र प्रथमां ऋचमाह– **अध्वरम्** यजनं **उप प्रयन्तः** उपेत्य प्रकर्षेण गच्छन्तः द्युलोकाध्वगमनशीलम् अध्वरपदवेदनीयं यज्ञम् उपगम्य तत्र विच्छेदराहित्येन यान्त इत्यर्थः । तथाभूता

वयम्, **अग्नये** भगवते **मन्त्रम्** नित्यवाक्परिणामभूतं स्तोत्रं **वोचेम** उच्यास्म वक्तारो भूयास्म । कीदृशायाग्नये? **अस्मे** अस्मत्सम्बन्धिनि स्तोत्रे निमित्ते **आरे** च दूरेऽपि **शृण्वते** आकर्णयते । अस्मदीयस्तोत्रवाचं दूरादपि शृणोत्यग्निः भक्तानुग्रहदक्षः ।। **वोचेम** 'ब्रुवो वचिः' 'लिङ्याशिष्यङ्' 'वच उम्' इत्युमागमः ।। १ ।।

## ऋक्संहिता पदपाठसहिता

**यः स्नीहितीषु पूर्व्यः संजग्मानासु कृष्टिषु । अरक्षद्दाशुषे गयम् ।। २ ।।**

**यः । स्नीहितीषु । पूर्व्यः । सम्ऽजग्मानासु । कृष्टिषु । अरक्षत् । दाशुषे । गयम् ।।२।।**

**स्कन्द–** किं करोत्यग्निः । उच्यते । **यः** अग्निः **पूर्व्यः** पूर्वः । सर्वत उत्कृष्ट इत्यर्थः । **स्नीहितीषु** स्नेहयतिर्वधकर्मा (तु.निघ.२,१९) । हन्त्रीषु । **सञ्जग्मानासु कृष्टिषु** शत्रुमनुष्यजातिषु । **अरक्षत्** रक्षति । **दाशुषे** षष्ठ्यर्थे चतुर्थी । हवींषि दत्तवतो यजमानस्य । **गयम्** गृहम् । तस्मै मन्त्रं वोचेमेति यच्छब्दश्रुतेः पूर्वयर्चैकवाक्यता ।। २ ।।

**वेङ्कटमाधव–** **यः** हन्त्रीषु सङ्गच्छमानासु शत्रुभूतासु प्रजासु पुराणः **अरक्षत्** यजमानाय गृहं मह्यम्, तस्मै मन्त्रं वोचेम ।। २ ।।

**मुद्गल–** **पूर्व्यः** चिरन्तनः **यः** अग्निः । **स्नीहितीषु** वधकारिणीषु **कृष्टिषु** शत्रुभूतासु प्रजासु **सञ्जग्मानासु** सङ्गतासु सतीषु **दाशुषे** हवींषि दत्तवते यजमानाय **गयम्** धनम् **अरक्षत्** रक्षति । तस्मै मन्त्रं वोचेम इति पूर्वेण सम्बन्धः ।। २ ।।

**सायण–** **पूर्व्यः** चिरन्तनः **यः** अग्निः । **स्नीहितीषु** वधकारिणीषु **कृष्टिषु** शत्रुभूतासु प्रजासु **सञ्जग्मानासु** सङ्गतासु सतीषु **दाशुषे** हवींषि दत्तवते यजमानाय **गयम्** धनम् **अरक्षत्** रक्षति । तस्मै मन्त्रं वोचेम इति पूर्वेण सम्बन्धः ।। **स्नीहितीषु** । 'ष्णिह स्नेहने' । चुरादिः । 'स्नेहयति' (नि.२.१९.३) इति वधकर्मसु पठितः । स्नेह्यन्ते हिंस्यन्ते प्रजा आभिरिति स्नेहितयः । करणे क्तिन् । 'तितुत्रेष्वग्रहादीनामिति वक्तव्यम्' (पा. म.७.२.९.१) इति वचनात् निगृहीतिर्निपठितिरीतिवत् इडागमः । व्यत्ययेन एकारस्य ईकारादेशः क्तिनो दीर्घश्च । नित्त्वादाद्युदात्तत्वम् । **सञ्जग्मानासु** । 'समो गम्यृच्छि..' इति आत्मनेपदम् । लिटः कानच् । 'गमहन' इत्यादिना उपधालोपः । **अरक्षत्** । 'छन्दसि लुङ्लङ्लिटः' इति वर्तमाने लङ् ।। ३ ।।

**सिद्धाञ्जनम्–** द्वितीयां ऋचमाह– यः **पूर्व्यः** पुरातनः अग्निः । **स्रीहितीषु** हिंसिकासु **कृष्टिषु** प्रजासु **सञ्जग्मानासु** सङ्गतासु सतीषु **दाशुषे** हविर्दत्तवते यजमानाय **गयम्** गृहम् । **अरक्षत्** रक्षति तस्मै मन्त्रं वोचेमेति पूर्वेण सम्बन्धः । शत्रुभूतासु प्रजासु सङ्गतासु सतीषु यजमानाय 'गयं' धनं रक्षतीति सायणीयम्, अन्तर्यागे वधकारिण्यः कृष्टयः यज्ञविपातकाः रक्षःप्रभृतय इति बोध्यम् । गयं गमनं गमनमार्गं वा यजमानाय रक्षत्यग्निः । गयो गृहेऽपि वर्तते, तर्हि यजमानस्य गृहं शरीरं रक्षतीति ज्ञेयम् ।। **स्रीहितीषु**-स्नेहयतिर्बन्धकर्मा, स्नेह्यन्ते हिंस्यन्ते आभिः प्रजाः इति स्नेहितयः, एकारस्य ईकारादेशः, क्तिनो दीर्घश्च ।। ३ ।।

## ऋक्संहिता पदपाठसहिता

**उत ब्रुवन्तु जन्तव उदग्निर्वृत्रहाजनि । धनंजयो रणेरणे ।। ३ ।।**

**उत । ब्रुवन्तु । जन्तवः । उत् । अग्निः । वृत्रऽहा । अजनि । धनम्ऽजयः । रणेऽरणे ।।**

**स्कन्द–** उतशब्दोऽप्यर्थे । अपि अस्मदीयाः **ब्रुवन्तु** मन्त्रम् अग्नये । **जन्तवः** जायमानत्वाज्जन्तवः पुत्रा इहाभिप्रेताः । अस्मदीयाः पुत्रा अपि ब्रुवन्तु इत्येतदाशास्महे इत्यर्थः । **अग्निः** अपि **वृत्रहा** अस्मच्छत्रूणां हन्ता **उत् अजनि** ऊर्ध्वो जायताम् । अस्मद्यज्ञेषु दीप्यतामित्यर्थः । **धनञ्जयः** धनानां जेता **रणेरणे** सर्वसङ्ग्रामेषु ।। ३ ।।

**वेङ्कटमाधव–** काममेनं स्तुवन्तु मनुष्याः । **उत् अजनि** अरण्योः **अग्निः वृत्रहा,** **युद्धे युद्धे** धनस्य जेता ।। ३ ।।

**मुद्गल– अग्निः उत् अजनि** अरण्योः सकाशादुत्पन्नः । **उत** अनन्तरम् **जन्तवः** जनाः सर्वे ऋत्विजः **ब्रुवन्तु** तमग्निं स्तुवन्तु । कीदृशोऽग्निः । **वृत्रहा** वृत्राणामावरकाणां शत्रूणां हन्ता । **रणेरणे** सर्वेषु सङ्ग्रामेषु । **धनञ्जयः** शत्रुधनानां जेता ।। ३ ।।

**सायण–** अग्निमन्थने 'जातायानुब्रूहि' इत्युक्ते 'उत ब्रुवन्तु' इत्येषाऽनुवचनीया । 'प्रातर्वैश्वदेव्याम्' इति खण्डे सूत्रितम्- 'शिष्टेनोत्तरामुत ब्रुवन्तु जन्तवः' (आश्व.श्रौ.२.१६) इति । तथा साकमेधेषु मरुद्भ्यः क्रीडिभ्यः पुरोडाशम् इत्यस्यामिष्टौ एषैव प्रथमाज्यभागानुवाक्या । सूत्रितं च- 'मरुद्भ्यः क्रीडिभ्य उत्तरोत ब्रुवन्तु जन्तवः' (आश्व.श्रौ.२.१८) इति । **अग्निः उत् अजनि** अरण्योः सकाशादुत्पन्नः । उत अनन्तरं **जन्तवः** जाताः सर्वे ऋत्विजः **ब्रुवन्तु** तमग्निं स्तुवन्तु ।

कीदृशोऽग्निः । **वृत्रहा** वृत्राणामावरकाणां शत्रूणां हन्ता **रणेरणे** सर्वेषु सङ्ग्रामेषु **धनञ्जयः** शत्रुधनानां जेता ।। **धनञ्जयः** । 'संज्ञायां भृतृवृजि...' (पा. सू.३.२.४६) इति खन् । 'अरुषिदजन्तस्य' (पा.सू.६.३.६७) इति मुम् । चित्स्वरेणान्तो-दात्तत्वम् । **रणेरणे** । रणशब्दार्थः । रणन्ति दुन्दुभयोऽस्मिन्निति रणः सङ्ग्रामः । 'वशिरण्योरुपसंख्यानम्' (पा.सू. ३.३.५८.३) इति अप् । 'नित्यवीप्सयोः' इति द्विर्वचनम् । आम्रेडितानुदात्तत्वम् ।। ३ ।।

**सिद्धाञ्जनम्**– तृतीयामृचमाह– अग्निः देवः अजनि उद्भूतः अन्तर्निर्मथितस्तपसा हृदयादुद्गतः प्रादुर्भूत इति यावत् । कीदृशः? **वृत्रहा** वृत्राणां आवरकाणां ज्योतिरादिदिव्यप्रवाहप्रतिरोधकानां हन्ता । पुनः कीदृशः? **रणेरणे** सर्वत्र सङ्ग्रामे देवशत्रुभिः सह **धनञ्जयः** जेता धनस्य, शत्रुभिः रक्षः प्रभृतिभिरपहृतस्य दिव्यस्य धनस्य पुनराहर्ता । एवम्भूतोऽग्निरुद्गतः । **उत** अथ **जन्तवः** जन्मिनः ब्रुवन्तु तमिदानीं स्तुवन्तु । बाह्ये कर्मणि अरण्योर्निर्मथितोऽग्निरिति स्पष्टम् । रणेरणे– रथन्ति दुन्दुभयोऽस्मिन्निति रणः सङ्ग्रामः ।। ३ ।।

## ऋक्संहिता पदपाठसहिता

**यस्य॑ दू॒तो असि॒ क्षये॒ वेषि॑ ह॒व्यानि॑ वी॒तये॑ । द॒स्मत्कृ॒ण्णोष्य॑ध्व॒रम् ।। ४ ।।**
**यस्य॑ । दू॒तः । असि॑ । क्षये॑ । वेषि॑ । ह॒व्यानि॑ । वी॒तये॑ । द॒स्मत् । कृ॒णोषि॑ । अ॒ध्व॒रम् ।।**

**स्कन्द– यस्य** यजमानस्य दूतः **असि** भवसि । **क्षये** गृहे च **वेषि** वेतिः कान्त्यर्थः । कामयसे । **हव्यानि वीतये** भक्षणाय । भक्षयितुमिच्छसीत्यर्थः । **दस्मत्** दसि दर्शनदंशनयोः इत्यस्यैतद्रूपम् । दर्शनीयं च **कृणोषि अध्वरम्** ।। ४ ।।

**वेङ्कटमाधव– यस्य दूतः** भवसि । गृहे कामयसे च **हव्यानि** अशनाय । यस्य च यज्ञं दर्शनीये करोषि ।। ४ ।।

**मुद्गल**– हे अग्ने! **यस्य** यजमानस्य **क्षये** देवयजनलक्षणे गृहे देवानाम् दूतः त्वम् **असि** भवसि । यस्य च **हव्यानि** चरुपुरोडाशादीनि हवींषि **वीतये** देवानां भक्षणाय **वेषि** गमयसि । यस्य च **अध्वरम्** यज्ञम् **दस्मत्** सर्वैर्दर्शनीयम् **कृणोषि** करोषि । 'तमित् सुहव्यम्' इति उत्तरया सम्बन्धः ।। ४ ।।

**सायण–** हे अग्ने! **यस्य** यजमानस्य **क्षये** देवयजनलक्षणे गृहे देवानां **दूतः** त्वम् **असि** भवसि । यस्य च **हव्यानि** चरुपुरोडाशादीनि हवींषि **वीतये** देवानां भक्षणाय **वेषि** गमयसि । यस्य च **अध्वरं** यज्ञं **दस्मत्** सर्वैर्दर्शनीयं **कृणोषि** करोषि । 'तमित्सुहव्यम्' इत्युत्तरया सम्बन्धः ।।

**वेषि** । वी गत्यादिषु । अन्तर्भावितण्यर्थात् लट् । अदादित्वात् शपो लुक् । पादादित्वात् निघाताभावः । **दस्मत्** । 'दसि दंसनदर्शनयोः' । 'इषियुधीन्धि' इत्यादिना मक् । दस्मम् इत्यत्र मकारस्य वर्णव्यापत्त्या तकारः । **कृणोषि** । 'कृवि हिंसाकरणयोश्च'। 'धिन्विकृण्व्योर च' इति उप्रत्ययः, तत्सन्नियोगेन वकारस्य अकारः । तस्य अतो लोपे सति स्थानिवद्भावात् लघूपधगुणाभावः । यस्य इत्यनुषङ्गात् निघाताभावः ।। ४ ।।

**सिद्धाञ्जनम्– यस्य** अन्तर्याजिनः **क्षये** गृहे वासस्थाने शरीर इति यावत् **दूतः** देवान् प्रति दौत्यं कुर्वन् देवस्त्वं **असि** भवसि । वासं करोषीत्यर्थः । **वीतये** देवानामागतये **हव्यानि** यस्य यजमानस्य हवींषि समर्पणीयद्रव्याणि **वेषि** देवान् गमयसि । यस्य **अध्वरम्** दिव्याध्वगमनशीलं यज्ञं **दस्मत्** क्रियानिष्पादकं **कृणोषि** करोषि 'तम् इत्' इत्युत्तरयर्चा सम्बन्धः । दलदंसादिपदार्थविवरणे दस्मशब्दो व्याख्यातः (१.३.३.) दस्मत् दर्शनीयमिति सायणीयम् ।। **वेषि**-वी गत्यादिषु, अन्तर्भावितण्यर्थः ।। ४ ।।

## ऋक्संहिता पदपाठसहिता

**तमित्सु॑ह॒व्यम॑ङ्गिरः सु॒दे॒वं स॑हसो यहो । जना॑ आहुः सुब॒र्हिष॑म् ।। ५ ।।**
**तम् । इत् । सु॒ऽह॒व्यम् । अ॒ङ्गि॒रः॒ । सु॒ऽदे॒वम् । स॒ह॒सः॒ । य॒हो॒ इति॑ । जना॑ः । आ॒हुः॒ । सु॒ऽब॒र्हिष॑म् ।। ५ ।।**

**स्कन्द–** इत्शब्दोऽत्र एवार्थे । अङ्गिरःशब्दोऽपि कार्यशब्दः सोऽयमित्यभिसम्बन्धात् कारणे प्रयुक्तः । अग्निर्ह्यङ्गिरसः कारणभूतः । एवं ह्यैतिहासिकाः स्मरन्ति– 'ततोऽर्चिषि भृगुर्जज्ञे अङ्गारेष्वङ्गिराः ऋषिः' (तु.बृदे ५.९९) इति । अथवाऽङ्गानि शरीरावयवाः । तद्वदङ्गि शरीरम् । तस्य स्थितिहेतुरशितपीतरसोऽङ्गिरसः । तस्य कर्ता अग्निः अङ्गिराः । जाठरात्मना ह्यग्निरशितपीतं शरीरस्थितिहेतुभूतरसतामापादयति । तस्याग्नेः सम्बोधनमिदम् अङ्गिरः ! इति । **तम् एव**

**सुहव्यम्, सुदेवम्** शोभना देवा यस्य स सुदेवस्तं सुदेवम् । देवानाञ्चानुग्राह्यमित्यर्थः । हे **सहसः यहो!** बलस्य पुत्र! बलेन मथ्यमानोऽग्निर्जायते । तेन बलस्य पुत्र उच्यते । **जनाः आहुः** । न च केवलं सुहव्यं सुदेवञ्च । किं तर्हि । **सुबर्हिषम् च** ।। ५ ।।

**वेङ्कटमाधव–** **तम् एव** शोभनहविष्क **अङ्गिरः** । **जनाः आहुः सुदेवम् च सहसः** पुत्र! शोभनयज्ञञ्च ।। ५ ।।

**मुद्गल–** हे **सहसः यहो!** बलस्य पुत्र! **अङ्गिरः!** अङ्गनादिगुणयुक्ताग्ने ! यो यजमानः पूर्वमुक्तः **तम् इत्** तमेव यजमानम् **सुहव्यम्** शोभनहविष्कम् । **सुदेवम्** शोभनदैवतम् । **सुबर्हिषम्** शोभनयज्ञञ्च । **जनाः** सर्वे मनुष्याः **आहुः** कथयन्ति ।। ५ ।।

**सायण–** हे **सहसो यहो** बलस्य पुत्र! **अङ्गिरः** अङ्गनादिगुणयुक्ताग्ने! यो यजमानः पूर्वमुक्तः **तमित्** तमेव यजमानं **सुहव्यं** शोभनहविष्कं **सुदेवं** शोभनदैवतं **सुबर्हिषम्** बर्हिरिति यज्ञनाम । शोभनयज्ञं च । **जनाः** सर्वे मनुष्याः **आहुः** कथयन्ति । **सुहव्यम्** इत्यादिषु 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । **सहसो यहो** 'सुबामन्त्रिते' इति पराङ्गवद्भावात् षष्ठ्यामन्त्रित-समुदायस्य आष्टमिकमामन्त्रितानुदात्तत्वम् ।। ५ ।।

**सिद्धाञ्जनम्–** पञ्चमीम् ऋचमाह– हे **सहसो यहो** बलस्य पुत्र, **अङ्गिरः!** अङ्गिरश्शब्दवाच्य अग्ने! **तमित्** तमेव यजमानं पूर्वोक्तविधम् । **सुहव्यम्** शोभनहव्ययुक्तम् । **सुदेवम्** शोभनदैवतसम्पन्नम् । **सुबर्हिषम्** शोभनयज्ञम् । **जनाः आहुः** सर्वे कथयन्ति ।। **बर्हिः** अन्तर्यागे देवानामागमनस्थानसन्नहनम् । बर्हिर्यागे तु दर्भाणां आस्तरणम् । बर्हिर्यज्ञेऽपि वर्तते । तथा व्याख्यानम् अन्तरर्थस्य न बाधकं भवति ।। ५ ।।

।। इति प्रथमाष्टके पञ्चमाध्याये एकविंशो वर्गः ।।

## ।। अथ द्वाविंशो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

**आ च वहा॑सि ताँ इ॒ह दे॒वाँ उप॒ प्रश॑स्तये । ह॒व्या सु॑श्चन्द्र वी॒तये॑ ।। ६ ।।**

आ । च॒ । वहा॑सि । तान् । इ॒ह । दे॒वान् । उप॑ । प्रऽश॑स्तये । ह॒व्या । सु॒ऽच॒न्द्र॒ । वी॒तये॑ ।।

**स्कन्द–** उपशब्दोऽप्यपकृष्य 'आ च वहासि' इत्येतेन सम्बन्धयितव्यः । उपावह च । चशब्दश्रुतेर्यज चेति वाक्यशेषः । पदपूरणो वा चशब्दः । **तान्** तच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽध्याहार्यः । ये आवोढुं योग्याः **तान् इह** अस्मदीये यज्ञे **देवान्** । किमर्थम् । **प्रशस्तये हव्या** । षष्ठ्यर्थे तृतीयैषा । हविषां च । हे **सुश्चन्द्र!** 'चन्द्रः चन्दतेः कान्तिकर्मणः (या. ११,५) । सुकान्त! **वीतये** भक्षणाय ।। ६ ।।

**वेङ्कटमाधव– उप आ** वहसि च **तान् इह देवान्** प्रशंसनाय इमानि हव्यानि सुकान्त! देवानामशनाय भवेयुः ।। ६ ।।

**मुद्गल–** हे सुश्चन्द्र! शोभनाह्लादनाग्ने! **तान् देवान् इह** अस्मिन् कर्मणि **उप** अस्मत्समीपम् प्रशस्तये स्तुतये **आ वहासि** च आवह प्रापय च । आगतेभ्यः हव्या हव्यानि चरुपुरोडाशादीनि हवींषि वीतये भक्षणाय प्रापयेत्यर्थः ।। ६ ।।

**सायण–** हे **सुश्चन्द्र** शोभनाह्लादनाग्ने! **तान् देवान्, इह** अस्मिन् कर्मणि **उप** अस्मत्समीपं **प्रशस्तये** स्तुतये **आ वहासि च** आवह प्रापय च । आगतेभ्यस्तेभ्यः **हव्या** हव्यानि चरुपुरोडाशादीनि हवींषि **वीतये** भक्षणाय प्रापयेत्यर्थः ।। **वहासि** । 'वह प्रापणे' लेटि आडागमः । **प्रशस्तये** । 'शंसु स्तुतौ' भावे क्तिन् । 'तितुत्र' इति इट्प्रतिषेधः । 'अनिदिताम्' इति नलोपः । 'तादौ च' इति गतेः प्रकृतिस्वरत्वम् । **सुश्चन्द्र** 'ह्रस्वाच्चन्द्रोत्तरपदे मन्त्रे' इति सुट् ।। ६ ।।

**सिद्धाञ्जनम्–** हे **सुश्चन्द्र** सुचन्द्र शोभनाह्लादन अग्ने! **तान् देवान्** इन्द्रादीन् **इह** अस्मिन् यजने **उप** अस्मत्समीपं **प्रशस्तये** प्रकृष्टस्तुतये **आवहासि च** आगमय च । **वीतये** तेषां आगतये **हव्या** हव्यानि अस्मदीयार्पणद्रव्याणि प्रापय च ।। **वहासि**-लेटि आडागमः । **प्रशस्तये**-शंसु स्तुतौ, भावे क्तिन् । **सुश्चन्द्र**- 'ह्रस्वाच्चन्द्रोत्तरपदे मन्त्रे' इति सुट् ।। ६ ।।

## ऋक्संहिता पदपाठसहिता

**न योरुपब्दिरश्व्यः शृण्वे रथस्य कच्चन । यदग्ने यासि दूत्यम् ।। ७ ।।**

न । योः । उपब्दिः । अश्व्यः । शृण्वे । रथस्य । कत् । चन । यत् । अग्ने । यासि । दूत्यम् ।। ७ ।।

**स्कन्द–** **न** तव **योः** यातीति युः तस्य योः । देवलोकं गच्छत इत्यर्थः । **उपब्दिः** वाङ्-नामैतत् (तु.निघ.१,११) । **अश्व्यः** अश्वेषु भवः । हेषितशब्दः शफशब्दो वेत्यर्थः । **भृण्वे** श्रूयते । नापि **रथस्य कत् चन** कदाचिदपि । कदा गच्छतः । **यत्** यदा हे अग्ने! **यासि, दूत्यं** दूतकर्म । यजमानानां दूततां प्रतिपद्य देवलोकं गच्छसीत्यर्थः ॥ ७ ॥

**वेङ्कटमाधव–** **न** गच्छतः शब्दः अश्वेषु भवः श्रूयते कदाचिदपि **रथस्य,** यदा **अग्ने!** गच्छसि **दूत्यम्** । रक्षसामनन्ववचाराय निःशब्दं गच्छसीति ॥ ७ ॥

**मुद्गल–** हे **अग्ने! यत्** यदा **दूत्यम्** देवानां दूतत्वम् **यासि** प्राप्नोषि । **कत् चन** कदाचन तदानीं सर्वदाऽपि **योः** गच्छतस्तव **रथस्य अश्व्यः** अश्वैरुत्पादितः **उपब्दिः** श्रवणार्हः शब्दः **न भृण्वे** न श्रूयते । रथस्य शीघ्रगमनेनास्माभिः शब्दो नोपलभ्यत इत्यर्थः ॥ ७ ॥

**सायण–** हे अग्ने! **यत्** यदा **दूत्यं** देवानां दूतत्वं **यासि** प्राप्नोषि । **कत् चन** कदाचन तदानीं सर्वदापि **योः** गच्छतस्तव **रथस्य अश्व्यः** अश्वैरुत्पादितः **उपब्दिः** श्रवणार्हः शब्दः **न शृण्वे** न श्रूयते । रथस्य शीघ्रगमनेनास्माभिः शब्दो नोपलभ्यते इत्यर्थः ॥ **योः** 'या प्रापणे' इत्यस्मात् 'यो द्वे च' (उ.सू.१.२१) इति औणादिकः कुप्रत्ययः । बहुलवचनाद् द्विर्भावाभावः । 'उपब्दिः' इत्येतत् श्रोतुमर्हस्य शब्दस्याख्या । तथा च तैत्तिरीयाणां प्रातिशाख्यं 'सशब्दमुपब्दिमत्' (तै.प्रा.२३.९) इति । **शृण्वे** । 'श्रु श्रवणे' कर्मणि लटि 'श्रुवः शृ च' इति व्यत्ययेन श्रुः शृभावश्च । 'लोपस्त आत्मनेपदेषु' इति तलोपः । 'हुश्नुवोः सार्वधातुके' इति यणादेशः ॥ ७ ॥

**सिद्धाञ्जनम्–** हे **अग्ने! यत्** यदा । **दूत्यम्** दूतत्वं **यासि** गच्छसि । देवानां दूतकर्मणि प्रवृत्तो भवसि तदा **कच्चन** कदाचन सर्वदा **योः** गच्छतः तव **रथस्य अश्व्यः** रथाश्वैर्जनितः **उपब्दिः** शब्दः श्रवणयोग्यः **न शृण्वे** न श्रूयते । अत्यन्तशीघ्रगमनात् श्रवणगोचरो न भवति शब्दः ॥ **उपब्दिः**-श्रोतुमर्हः शब्दः 'सशब्दमुपब्दिमत्' इति तैत्तिरीयप्रातिशाख्यम् । **शृण्वे**-'श्रु श्रवणे' कर्मणि लट्, व्यत्ययेन श्रुः ॥ ७ ॥

## ऋक्संहिता पदपाठसहिता

**त्वोतो॑ वा॒ज्यह्र॑योऽभि पूर्व॑स्मा॒दप॑रः । प्र दा॒श्वाँ अ॑ग्ने अस्थात् ॥ ८ ॥**

**त्वाऽऊ॑तः । वा॒जी । अह्र॑यः । अ॒भि । पूर्व॑स्मात् । अप॑रः । प्र । दा॒श्वान् । अ॒ग्ने॒ । अ॒स्था॒त् ॥ ८ ॥**

**स्कन्द– त्वोतः** त्वया ऊतः । सर्वकालं त्वया रक्षितः । **वाजी** हविर्लक्षणेनान्नेनान्नवान् । उपकल्पितहविष्क इत्यर्थः । **अह्रयः** 'ह्री लज्जायाम्' । शोभनत्वाद्धविषाम् अलज्जितः । **पूर्वस्मात् अपरः** अर्वाग्देशवर्ती । नातिदूरचर इत्यर्थः । **दाश्वान्** यजमानः । हे **अग्ने! अभि प्र अस्थात्** प्रपूर्वस्तिष्ठतिर्गत्यर्थः । अभिप्रतिष्ठत । हविर्भिः स्तुतिभिर्भवन्तम् अभिगच्छतीत्यर्थः । अथवैव-मन्यथाऽस्या ऋचोऽर्थयोजना । त्वद्रक्षितो हविष्मान् अलज्जितः पूर्वस्माद् अपरः । पूर्वप्रस्थिता-दनन्तर एवेत्यर्थः । **दाश्वान्** हे **अग्ने! अभि प्र अस्थात्** स्वर्गलोकम् अभिगच्छति । मरणोत्तरकालं स्वर्गलोकं प्राप्नोतीत्यर्थः ॥ ८ ॥

**वेङ्कटमाधव–** त्वया रक्षित अन्नवान् अलज्जमानः **पूर्वस्मात् अपरः** यादृशाकारः पूर्वम् अतादृशाकारः **अभि प्र** तिष्ठति उच्छ्रिते पदे यजमानः ॥ ८ ॥

**मुद्गल–** यः पुरुषः **पूर्वस्मात्** स्वस्मादधिकारात् **अपरः** निकृष्टो भवति । हे **अग्ने!** स इदानीम् **दाश्वान्** तुभ्यं हवींषि दाता सन् **त्वोतः** त्वया ऊतो रक्षितः **वाजी** अन्नवान् **अह्रयः** लज्जारहित एवम्भूतः सन् **अभि प्र अस्थात्** ऐश्वर्यम् अभिप्राप्य प्रतितिष्ठति । सर्वोत्कृष्टो भवतीत्यर्थः ॥ ८ ॥

**सायण–** यः पुरुषः **पूर्वस्मात्** स्वस्मादधिकारात् **अपरः** निकृष्टो भवति । हे **अग्ने!** स इदानीम् **दाश्वान्** तुभ्यं हवींषि दाता सन् **त्वोतः** त्वया ऊतो रक्षितः **वाजी** अन्नवान् **अह्रयः** लज्जारहित एवम्भूतः सन् **अभि प्र अस्थात्** ऐश्वर्यम् अभिप्राप्य प्रतितिष्ठति । सर्वोत्कृष्टो भवतीत्यर्थः ॥ **अह्रयः** । 'ह्री लज्जायाम्' । जिह्रेतीति ह्रयः । न ह्रयोऽह्रयः । अव्ययपूर्वपद-प्रकृतिस्वरत्वम् । **दाश्वान्** । 'दाशृ दाने' । 'दाश्वान् साह्वान्' इति क्वसुप्रत्ययान्तो निपातितः ॥

**सिद्धाञ्जनम्–** अष्टमीमृचमाह– हे **अग्ने!** यः **दाश्वान्** तुभ्यं दत्तवान् स पुरुषः **त्वोतः** त्वया ऊतो रक्षितः **वाजी** समृद्धिमान् **अह्रयः** लज्जाशून्यः सङ्कोचरहितः निर्भय इति यावत्, तथाविधो भूत्वा **पूर्वस्मात् अपरः** पूर्वं यादृशोऽभूत् तादृशादन्यः सन् **अभि प्रास्थात्** अभिमुखं

यथा तथा प्रतिष्ठते गन्तव्यं दिव्यं धाम प्रति ।। अग्नये स्वीयं सर्वम् अर्पितवान् पुरुषः समृद्धिमान् निस्सङ्कोचश्च भूत्वा पूर्वावस्थामुज्झित्वा अपरावस्थां गतः । अत एव अन्यादृशो लक्ष्यते । तथा स प्रस्थानं कुरुते गन्तव्यमुद्दिश्य । 'पूर्वस्मात् अपरः' इत्यत्र सायणः– ''पूर्वस्मादधिकारात् निकृष्टः पुरुषः अग्नये हविर्दानेन ऐश्वर्यं प्राप्य प्रतितिष्ठति'' इत्यादि व्याचष्टे ।। **अह्रयः**-जिह्रेतीति ह्रयः, न ह्रयः अह्रयः । **दाश्वान्**- 'दाशृ दाने' कसुप्रत्ययान्तो निपातितः ।। ८ ।।

## ऋक्संहिता पदपाठसहिता

**उ॒त द्यु॒मत्सु॒वीर्यं॑ बृ॒हद॑ग्ने॒ विवा॑ससि । दे॒वेभ्यो॑ देव दा॒शुषे॑ ।। ९ ।।**
उ॒त । द्यु॒ऽमत् । सु॒ऽवीर्य॑म् । बृ॒हत् । अ॒ग्ने॒ । वि॒वा॒स॒सि॒ । दे॒वेभ्यः॑ । दे॒व॒ । दा॒शुषे॑ ।।९।।

**स्कन्द–** पूर्वस्यामृचि यद्यग्निरभिगम्यमानः, ततोऽत्र उतशब्दः पदपूरणः । अथ स्वर्गः, ततः फलसमुच्चयादुतशब्दोऽप्यर्थे । मरणोत्तरकालं स्वर्गं प्राप्नोति । अपि अस्मै जीवते **द्युमत्** दीप्तिमदन्नं धनं वा । **सुवीर्यम्** शोभनेन वीर्येण सहितम् **बृहत्** महत् । हे **अग्ने! विवाससि** विवासतिः परिचर्यायामन्यत्र, इह तु 'दाशुषे' इति सम्प्रदानचतुर्थीश्रुतेर्दानार्थः । ददासि । **देवेभ्यः** देव! **दाशुषे** हवींषि दत्तवते । यष्ट्रे इत्यर्थः ।। ९ ।।

**वेङ्कटमाधव–** अपि च दीप्तिमत् शोभनवीर्यम् **बृहद्** अन्नं गमय प्रयच्छ **देवेभ्यः** देव । **दाशुषे** ।। ९ ।।

**मुद्गल–** उत अपि च हे **देव!** द्योतमान! **अग्ने! देवेभ्यः दाशुषे** चरुपुरोडाशादीनि हवींषि दत्तवते तस्मै यजमानाय **बृहत्** प्रौढं धनम् **विवाससि** गमयितुमिच्छसि प्रापयसीति यावत् । कीदृशम् । **द्युमत्** अतिशयेन दीप्तम् । **सुवीर्यम्** शोभनवीर्योपेतम् ।। ९ ।।

**सायण–** उत अपि च हे **देव!** द्योतमान! **अग्ने! देवेभ्यः दाशुषे** चरुपुरोडाशादीनि हवींषि दत्तवते तस्मै यजमानाय **बृहत्** प्रौढं धनम् **विवाससि** गमयितुमिच्छसि प्रापयसीति यावत् । कीदृशम् । **द्युमत्** अतिशयेन दीप्तम् । **सुवीर्यम्** शोभनवीर्योपेतम् ।। **सुवीर्यम्** । 'वीरवीर्यौ च' इत्युत्तरपदाद्युदात्तत्वम् । **विवाससि** 'वा गतिगन्धनयोः' । सनि द्विर्भावे 'सन्यतः' इति इत्वम् । **दाशुषे** । चतुर्थ्येकवचने 'वसोः सम्प्रसारणम्' इति सम्प्रसारणम् । 'शासिवसिघसीनां च' इति षत्वम् ।। ९ ।।

## ऋक्संहिता पदपाठसहिता

**त्वोतो॑ वा॒ज्यह्र॑यो॒ऽभि पूर्व॑स्मा॒दप॑रः । प्र दा॒श्वाँ अ॑ग्ने अस्थात् ॥ ८ ॥**

**त्वाऽऊ॑तः । वा॒जी । अह्र॑यः । अ॒भि । पूर्व॑स्मात् । अप॑रः । प्र । दा॒श्वान् । अ॒ग्ने । अ॒स्था॒त् ॥ ८ ॥**

**स्कन्द–** **त्वोतः** त्वया ऊतः । सर्वकालं त्वया रक्षितः । **वाजी** हविर्लक्षणेनान्नेनान्नवान् । उपकल्पितहविष्क इत्यर्थः । **अह्रयः** 'ह्री लज्जायाम्' । शोभनत्वाद्धविषाम् अलज्जितः । **पूर्वस्मात् अपरः** अर्वाग्देशवर्ती । नातिदूरचर इत्यर्थः । **दाश्वान्** यजमानः । हे **अग्ने! अभि प्र अस्थात्** प्रपूर्वस्तिष्ठतिर्गत्यर्थः । अभिप्रतिष्ठत । हविर्भिः स्तुतिभिर्भवन्तम् अभिगच्छतीत्यर्थः । अथवैव-मन्यथाऽस्या ऋचोऽर्थयोजना । त्वद्रक्षितो हविष्मान् अलज्जितः पूर्वस्माद् अपरः । पूर्वप्रस्थिता-दनन्तर एवेत्यर्थः । **दाश्वान्** हे **अग्ने! अभि प्र अस्थात्** स्वर्गलोकम् अभिगच्छति । मरणोत्तरकालं स्वर्गलोकं प्राप्नोतीत्यर्थः ॥ ८ ॥

**वेङ्कटमाधव–** त्वया रक्षित अन्नवान् अलज्जमानः **पूर्वस्मात् अपरः** यादृशाकारः पूर्वम् अतादृशाकारः **अभि प्र** तिष्ठति उच्छ्रिते पदे यजमानः ॥ ८ ॥

**मुद्गल–** यः पुरुषः **पूर्वस्मात्** स्वस्मादधिकारात् **अपरः** निकृष्टो भवति । हे **अग्ने!** स इदानीम् **दाश्वान्** तुभ्यं हवींषि दाता सन् **त्वोतः** त्वया ऊतो रक्षितः **वाजी** अन्नवान् **अह्रयः** लज्जारहित एवम्भूतः सन् **अभि प्र अस्थात्** ऐश्वर्यम् अभिप्राप्य प्रतितिष्ठति । सर्वोत्कृष्टो भवतीत्यर्थः ॥ ८ ॥

**सायण–** यः पुरुषः **पूर्वस्मात्** स्वस्मादधिकारात् **अपरः** निकृष्टो भवति । हे **अग्ने!** स इदानीम् **दाश्वान्** तुभ्यं हवींषि दाता सन् **त्वोतः** त्वया ऊतो रक्षितः **वाजी** अन्नवान् **अह्रयः** लज्जारहित एवम्भूतः सन् **अभि प्र अस्थात्** ऐश्वर्यम् अभिप्राप्य प्रतितिष्ठति । सर्वोत्कृष्टो भवतीत्यर्थः ॥ **अह्रयः** । 'ह्री लज्जायाम्' । जिह्रेतीति ह्रयः । न ह्रयोऽह्रयः । अव्ययपूर्वपद-प्रकृतिस्वरत्वम् । **दाश्वान्** । 'दाशृ दाने' । 'दाश्वान् साह्वान्' इति क्वसुप्रत्ययान्तो निपातितः ॥

**सिद्धाञ्जनम्–** अष्टमीमृचमाह– हे **अग्ने!** यः **दाश्वान्** तुभ्यं दत्तवान् स पुरुषः **त्वोतः** त्वया ऊतो रक्षितः **वाजी** समृद्धिमान् **अह्रयः** लज्जाशून्यः सङ्कोचरहितः निर्भय इति यावत्, तथाविधो भूत्वा **पूर्वस्मात् अपरः** पूर्वं यादृशोऽभूत् तादृशादन्यः सन् **अभि प्रास्थात्** अभिमुखं

यथा तथा प्रतिष्ठते गन्तव्यं दिव्यं धाम प्रति ।। अग्नये स्वीयं सर्वम् अर्पितवान् पुरुषः समृद्धिमान् निस्सङ्कोचश्च भूत्वा पूर्वावस्थामुज्झित्वा अपरावस्थां गतः । अत एव अन्यादृशो लक्ष्यते । तथा स प्रस्थानं कुरुते गन्तव्यमुद्दिश्य । 'पूर्वस्मात् अपरः' इत्यत्र सायणः– ''पूर्वस्मादधिकारात् निकृष्टः पुरुषः अग्नये हविर्दानेन ऐश्वर्यं प्राप्य प्रतितिष्ठति'' इत्यादि व्याचष्टे ।। **अह्रयः**-जिहेतीति ह्रयः, न ह्रयः अह्रयः । **दाश्वान्**- 'दाशृ दाने' कसुप्रत्ययान्तो निपातितः ।। ८ ।।

## ऋक्संहिता पदपाठसहिता

**उत द्युमत्सुवीर्यं बृहदग्ने विवाससि । देवेभ्यो देव दाशुषे ।। ९ ।।**

उत । द्युऽमत् । सुऽवीर्यम् । बृहत् । अग्ने । विवाससि । देवेभ्यः । देव । दाशुषे ।।९।।

**स्कन्द–** पूर्वस्यामृचि यद्यग्निरभिगम्यमानः, ततोऽत्र उतशब्दः पदपूरणः । अथ स्वर्गः, ततः फलसमुच्चयादुतशब्दोऽप्यर्थे । मरणोत्तरकालं स्वर्गं प्राप्नोति । अपि अस्मै जीवते **द्युमत्** दीप्तिमदन्नं धनं वा । **सुवीर्यम्** शोभनेन वीर्येण सहितम् **बृहत्** महत् । हे **अग्ने! विवाससि** विवासतिः परिचर्यायामन्यत्र, इह तु 'दाशुषे' इति सम्प्रदानचतुर्थीश्रुतेर्दानार्थः । ददासि । **देवेभ्यः** देव! **दाशुषे** हवींषि दत्तवते । यष्ट्रे इत्यर्थः ।। ९ ।।

**वेङ्कटमाधव–** अपि च दीप्तिमत् शोभनवीर्यम् बृहद् अन्नं गमय प्रयच्छ **देवेभ्यः** देव । **दाशुषे** ।। ९ ।।

**मुद्गल–** **उत** अपि च हे **देव!** द्योतमान! **अग्ने! देवेभ्यः दाशुषे** चरुपुरोडाशादीनि हवींषि दत्तवते तस्मै यजमानाय **बृहत्** प्रौढं धनम् **विवाससि** गमयितुमिच्छसि प्रापयसीति यावत् । कीदृशम् । **द्युमत्** अतिशयेन दीप्तम् । **सुवीर्यम्** शोभनवीर्योपेतम् ।। ९ ।।

**सायण–** **उत** अपि च हे **देव!** द्योतमान! **अग्ने! देवेभ्यः दाशुषे** चरुपुरोडाशादीनि हवींषि दत्तवते तस्मै यजमानाय **बृहत्** प्रौढं धनम् **विवाससि** गमयितुमिच्छसि प्रापयसीति यावत् । कीदृशम् । **द्युमत्** अतिशयेन दीप्तम् । **सुवीर्यम्** शोभनवीर्योपेतम् ।। **सुवीर्यम्** । 'वीरवीर्यौ च' इत्युत्तरपदाद्युदात्तत्वम् । **विवाससि** 'वा गतिगन्धनयोः' । सनि द्विर्भावे 'सन्यतः' इति इत्वम् । **दाशुषे** । चतुर्थ्येकवचने 'वसोः सम्प्रसारणम्' इति सम्प्रसारणम् । 'शासिवसिघसीनां च' इति षत्वम् ।। ९ ।।

**सिद्धाञ्जनम्–** नवमीमृचमाह– हे **अग्ने!** देव! **उत** अपि च **देवेभ्यः** इन्द्रादिभ्यः **दाशुषे** दत्तवते यजमानाय **द्युमत्** दीप्तिमत् । **सुवीर्यम्** शोभनवीर्ययुक्तं **बृहत्** प्रभूतं ऋतसत्यज्योतिरादिपदवेदनीयं वस्तु **विवाससि** प्रकाशयसि । उत्तमं ज्योतिरेव महद्धनं, तत् ज्ञापयसि विवृणोषीत्यर्थः । 'बृहत् प्रौढं धनं प्रापयसि' इति सायणीयम् ।। **विवाससि**-विवासतिः प्रकाशने परिचरणकर्मणि वा, गतम् (१.३१.५)। अत्र सायणस्तु 'वा गतिगन्धनयोः' सनि द्विर्भावो 'सन्यतः' इतीत्वम्' इति गत्यर्थकं मन्यते स्म ।। ९ ।।

**।। इति प्रथमाष्टके पञ्चमाध्याये द्वाविंशो वर्गः ।।**

## ।। अथ त्रयोविंशो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

**(सूक्तम् ७५)**

**५ गोतमो राहूगणः । अग्निः गायत्री ।**

**जुषस्व॑ स॒प्रथ॑स्तमं॒ वचो॑ दे॒वप्स॑रस्तमम् । ह॒व्या जुह्वा॑न आ॒सनि॑ ।। १ ।।**
**जु॒षस्व॑ । स॒प्रथः॑ऽतमम् । वचः॑ । दे॒वप्स॑रःऽतमम् । ह॒व्या । जु॒ह्वा॑नः । आ॒सनि॑ ।। १ ।।**

**स्कन्द– जुषस्व सप्रथस्तमम्** सर्वतः पृथुतमम् अत्यन्तविस्तीर्णम् अस्मदीयं स्तुतिलक्षणम् । **वचः** । **देवप्सरस्तमम्** प्सरः इति रूपनाम । देवस्याग्नेः रूपैः अतिशयेन युक्तम् । अशेषाग्निरूपप्रकाशनमित्यर्थः । **हव्या जुह्वानः** प्रक्षिपन् । **आसनि** आत्मीय आस्ये । हवींषि भक्षयन्नित्यर्थः ।। १ ।।

**वेङ्कटमाधव–** सेवस्व सर्वतः पृथुतमम् । **वचः** अतिशयेन दीप्तरूपम् । प्स इति रूपनाम । रो मत्वर्थीयः । हव्यानि आस्ये प्रक्षिपन् ।। १ ।।

**मुद्गल–** 'जुषस्व' इति पञ्चर्चं द्वितीयं सूक्तम् । राहूगण ऋषिः । गायत्री छन्दः । अग्निर्देवता ।।

हे अग्ने! **सप्रथस्तमम्** अतिशयेन विस्तीर्णम् । **वचः** स्तोत्रलक्षणम् अस्मदीयं वचनम् **जुषस्व** सेवस्व । कीदृशम् । **देवप्सरस्तमम्** देवानां प्रीणयितृतमम् । किं कुर्वन् । **आसनि** तवास्ये **हव्या** हव्यानि स्तोकलक्षणानि हवींषि **जुह्वानः** प्रक्षिपन् । इमानि स्तोकलक्षणानि हवींषि वृथा मा भूवन्, तत्सर्वं त्वदीयेन मुखेन स्वीकुर्वित्यर्थः ।। १ ।।

**सायण–** हे अग्ने! **सप्रथस्तमम्** अतिशयेन विस्तीर्णम् । **वचः** स्तोत्रलक्षणम् अस्मदीयं वचनं **जुषस्व** सेवस्व । कीदृशम् । **देवप्सरस्तमम्** देवानां प्रीणयितृतमम् । किं कुर्वन् । **आसनि** तवास्ये **हव्या** हव्यानि स्तोकलक्षणानि हवींषि **जुह्वानः** प्रक्षिपन् । इमानि स्तोकलक्षणानि हवींषि वृथा मा भूवन्, तत्सर्वं त्वदीयेन मुखेन स्वीकुर्वित्यर्थः । **देवप्सरस्तमम्** । 'स्पृ प्रीतिबलयोः' । देवान् स्पृणोति प्रीणयतीति देवप्सराः । 'गतिकारकयोरपि पूर्वपदप्रकृतिस्वरत्वं च' इति असुन्, पूर्वपदप्रकृतिस्वरत्वं च । सकारपकारयोः स्थानविपर्ययः। अतिशयेन देवप्सरा देवप्सरस्तमः । **जुह्वानः** । जुहोतेर्व्यत्ययेन शानच् । 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम् । **आसनि** । 'पद्दन्' इत्यादिना आस्यशब्दस्य आसन्नादेशः ।।

**सिद्धाञ्जनम्–** 'जुषस्व' इति पञ्चर्चं द्वितीयं सूक्तम् । अनुक्रान्तं च 'जुषस्व पञ्च' इति । ऋष्याद्याः पूर्ववत् । प्रातरनुवाकाश्विनशस्त्रयोः पूर्वसूक्तेन सहोक्तः सूक्तविनियोगः । पशौ स्तोकानुवचने आद्या विनियुक्ता । सूत्रितं च- 'प्रेषितः स्तोकेभ्योऽन्वाह जुषस्व सप्रथस्तमम्' (आश्व.श्रौ.३.४) इति ।।

तत्र प्रथमामृचमाह– हे अग्ने! **सप्रथस्तमम्** अतिशयेन पृथुलं अतिविस्तीर्णं **वचः** वचनं स्तोत्ररूपं अस्मदीयं **जुषस्व** सेवस्व । कीदृशं वचनम् ? **देवप्सरस्तमम्** देवानां प्रीणयितृतमम् । कि कुर्वन् ? **आसनि** आस्ये । **हव्या** हव्यानि **जुह्वानः** प्रक्षिपन् । स्तोत्रं हि देवान् पोषयति, स्तोत्रेण पोषिता देवता यजमाने पुष्टिमती वर्धते । देवानां भोजनेन प्रीणनं भवति । तथा देवानां प्रीणयिता अग्निः । यजमानेनार्प्यमाणं भोज्यं (बाह्यपक्षे) भोग्यं (आन्तरपक्षे) स्वमुखे धारयमाणोऽग्निर्देवान् प्रापय्य प्रीणयति ।। **देवप्सरस्तमम्** प्सरशब्दो व्याख्यातः 'महि प्सरो वरुणस्य' (१.४१.७) इत्यत्र । **जुह्वानः** जुहोतेर्व्यत्ययेन शानच् । **आसनि**-आस्यशब्दस्य आसन्नादेशः ।।

## ऋक्संहिता पदपाठसहिता

**अथा ते अङ्गिरस्तमाग्ने वेधस्तम प्रियम् । वोचेम ब्रह्म सानसि ।। २ ।।**

अथ । ते । अङ्गिरःऽतम । अग्ने । वेधःऽतम । प्रियम् । वोचेम । ब्रह्म । सानसि ।।२।।

**स्कन्द–** अथशब्दः आनन्तर्ये । अतोऽप्यनन्तरम् । अतः परमित्यर्थः । **ते** तव हे **अङ्गिरस्तम** अङ्गिरस ऋषेरतिशयेन कारणभूत! शरीरस्थितिहेतोर्वा अशितपीतस्य रसस्यातिशयेन

कर्तः हे **अग्ने! वेधस्तम!** मेधावित्तम । **प्रियम् वोचेम** स्तुतिलक्षणं **ब्रह्म** इत्याशास्महे । चिरं सम्भजनीयं वा ॥ २ ॥

**वेङ्कटमाधव–** अथ ते अङ्गिरसां वरिष्ठ अग्ने! प्राज्ञतम । **प्रियम् वोचेम** । स्तोत्रं भजनीयम् ॥ २ ॥

**मुद्गल–** हे **अङ्गिरस्तम**, अतिशयेनाङ्गनादिगुणयुक्त, **वेधस्तम** अतिशयेन मेधाविन्, **अग्ने! अथ** अनन्तरम् । **ते** तुभ्यम् । **सानसि** सम्भजनीयम् । **प्रियं** प्रीतिकरं, **ब्रह्म** स्तोत्रम् । **वोचेम** वक्तारो भूयास्म ॥ २ ॥

**सायण–** हे **अङ्गिरस्तम** अतिशयेनाङ्गनादिगुणयुक्त । यद्वा । अङ्गिरसां वरिष्ठ । **वेधस्तम** । वेधा इति मेधाविनाम । अतिशयेन मेधाविन् **अग्ने! अथ** अनन्तरम् । **ते** तुभ्यम् । **सानसि** सम्भजनीयं, **प्रियं** प्रीतिकरं **ब्रह्म** स्तोत्रं **वोचेम** वक्तारो भूयास्म । **वोचेम** 'लिङ्याशिष्यङ्' । 'वच उम्' इति उमागमः । **सानसि** । 'वन षण सम्भक्तौ' । 'सानसिर्धर्णसि' इत्यादौ असिच्प्रत्ययान्तो निपात्यते ॥ २ ॥

**सिद्धाञ्जनम्–** द्वितीयामृचमाह– हे **अग्ने! अङ्गिरस्तम** अतिशयेन अङ्गिरः, अङ्गिरःश्रेष्ठ, **वेधस्तम** विधातृश्रेष्ठ! **अथ** अनन्तरम् । **ते** तुभ्यम् । **सानसि** सम्भजनीयम् । **प्रियम्** प्रीतिप्रदं **ब्रह्म** मन्त्रलक्षणं स्तोत्रं **वोचेम** उच्यास्म । पूर्वर्चि स्तोत्रलक्षणं वचः अग्नेः सेवनीयत्वेनोक्तम् । अस्यामृचि ततः परं मन्त्रलक्षणं विशिष्टं स्तोत्रम् अग्नेः स्वीकारायोच्यते ॥ **वोचेम**- 'लिङि आशिष्यङ्' । **सानसि**- 'वन षण सम्भक्तौ' 'सानसिर्वर्णसिः' इत्यादौ असिच्प्रत्ययनिपातः ॥

## ऋक्संहिता पदपाठसहिता

**कस्ते॑ जा॒मिर्जना॑नाम॒ग्ने को दा॒श्व॑ध्वरः । को ह॒ कस्मि॑न्नसि॒ श्रि॒तः ॥ ३ ॥**
**कः । ते॒ । जा॒मिः । जना॑नाम् । अग्ने॑ । कः । दा॒शुऽअ॑ध्वरः । कः । ह॒ । कस्मि॑न् । अ॒सि॒ । श्रि॒तः ॥ ३ ॥**

**स्कन्द– कः ते** तव **जामिः** ज्ञातिः **जनानाम्** यजमानानां मध्ये । हे **अग्ने! को दाश्वध्वरः** दत्ताध्वरः । पूर्वमपि कृतयाग इत्यर्थः । **कः ह** हशब्दोऽत्र वाऽर्थे । को वा साकाङ्क्षत्वात्

प्रिय इति वाक्यशेषः । **कस्मिन्** वा यजमाने **असि श्रितः** आश्रितोऽसि । कस्तव ज्ञातिः कृतोपकारः प्रियो वा आश्रितः, येन निरुद्धोऽस्मद्यज्ञं नागच्छसीति आगमनविलम्बनादुपालम्भोऽयम् ।। ३ ।।

**वेङ्कटमाधव–** **कः** ते बन्धुः जनेषु । कीदृशो वा तव दत्तयज्ञः । कीदृशशीलस्त्वम् **असि** । कीदृशशीले वा आश्रितो भवसि ।। ३ ।।

**मुद्गल–** हे **अग्ने! जनानाम्** मनुष्याणां मध्ये । **ते** तव । **कः जामिः** को बन्धुः । त्वं सर्वैर्गुणैरधिकोऽसि । तवानुरूपो बन्धुर्नास्तीति भावः । **को दाश्वध्वरः** दाशु दत्तोऽध्वरो यज्ञो येन स तथोक्तः । त्वां यष्टुमपि समर्थः कोऽपि नास्तीत्यर्थः । **कः ह** त्वं कथम्भूतः । त्वम् ईदृग्रूप इति सर्वैर्न ज्ञायस इत्यर्थः । **कस्मिन्** स्थाने **श्रितः** आश्रित **असि** वर्तसे । तत्स्थानमपि न केनचिद् ज्ञायते । अतस्त्वम् अस्माभिः मांसदृष्टिभिः कथमुपलब्धव्य इत्यग्निः प्रशस्यते ।।

**सायण–** हे **अग्ने! जनानाम्** मनुष्याणां मध्ये । **ते** तव । **कः जामिः** को बन्धुः । त्वं सर्वैर्गुणैरधिकोऽसि । तवानुरूपो बन्धुर्नास्तीति भावः । **को दाश्वध्वरः** दाशु दत्तोऽध्वरो यज्ञो येन स तथोक्तः । त्वां यष्टुमपि समर्थः कोऽपि नास्तीत्यर्थः । **कः ह** त्वं कथम्भूतः । त्वम् ईदृग्रूप इति सर्वैर्न ज्ञायस इत्यर्थः । **कस्मिन्** स्थाने **श्रितः** आश्रित **असि** वर्तसे । तत्स्थानमपि न केनचिद् ज्ञायते । अतस्त्वम् अस्माभिः मांसदृष्टिभिः कथमुपलब्धव्य इत्यग्निः प्रशस्यते ।। **दाश्वध्वरः** । 'दाशृ दाने'। 'उणादयो बहुलम्' (पा.सू.३.३.१) इति बहुलवचनात् कर्मणि उण् प्रत्ययः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । यणादेशे 'उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य' इति स्वरितत्वम् ।। ३ ।।

**सिद्धाञ्जनम्–** तृतीयामृचमाह– हे **अग्ने! जनानां** मनुष्याणां मध्ये । **ते** तव । **कः जामिः** को बन्धुः । **कः दाश्वध्वरः** दाशुर्दत्तः अध्वरः यज्ञः येन सः, त्वां यष्टुं कः समर्थः ? **कः ह** को वा भवसि त्वम् ? **कस्मिन् श्रितः असि** ? किं तव आश्रयस्थानं भवति? एवं चतुर्भिः प्रश्नैरिदं क्रमश उक्तं भवति । अग्निबन्धुत्वं न सुलभम्, अग्निं यष्टुं न सर्वोऽपि समर्थः, अग्निस्वरूपं चर्मचक्षुषां मर्त्यानां दुर्विज्ञेयम् । अग्नेराश्रयस्थानमपि बहिर्मुखमनसां न विदितं भवति । यद्यग्नेः जामित्वस्वरूपाश्रयस्थानादि यजमानयज्ञशालादि चेत्, ईदृशस्य प्रश्नजालस्य नैव स्यात् प्रयोजनम् ।

अन्तर्मुख ऋषिरेवं सूचयति अग्नेर्यथार्थस्वरूपादिकम् ।। **दाश्वध्वरः**-दाशुः, 'उणादयो बहुलम्' इति बहुलवचनात् कर्मणि उणुप्रत्ययः ।। ३ ।।

## ऋक्संहिता पदपाठसहिता

**त्वं जामिर्जनानामग्ने मित्रो असि प्रियः । सखा सखिभ्य ईड्यः ।। ४ ।।**

त्वम् । जामिः । जनानाम् । अग्ने । मित्रः । असि । प्रियः । सखा । सखिऽभ्यः । ईड्यः ।। ४ ।।

**स्कन्द– त्वं जामिः जनानाम्** ज्ञातिः सर्वयजमानानाम् । हे **अग्ने! मित्र असि** मित्रश्च असि । **प्रियः** च **सखा** च । 'सखिभ्यः' षष्ठ्यर्थे चतुर्थ्येषा । सखीनाञ्च । **ईड्यः** स्तुत्यः ।।

**वेङ्कटमाधव– त्वम्** बन्धुः । **जनानाम् अग्ने!** प्रियम् मित्रश्च भवसि । **सखा सखिभ्यः** स्तोतव्यः ।। ४ ।।

**मुद्गल–** हे **अग्ने! त्वम्** उक्तप्रकारेणाऽचिन्त्यरूपोऽप्यनुग्रहीतृतया सर्वेषां **जनानाम् जामिः** बन्धुः **असि** । तथा **प्रियः** प्रीणयिता त्वं यजमानानाम् **मित्रः** प्रमीतेस्त्रायकोऽसि । **ईड्यः** स्तुतिभिः स्तुत्यस्त्वम्, **सखिभ्यः** समानाख्यानेभ्यः ऋत्विग्भ्यः **सखा** सखिवदत्यन्तं प्रियोऽसि ।।

**सायण–** हे **अग्ने! त्वम्** उक्तप्रकारेणाऽचिन्त्यरूपोऽप्यनुग्रहीतृतया सर्वेषां **जनानाम् जामिः** बन्धुः **असि** । तथा **प्रियः** प्रीणयिता त्वं यजमानानाम् **मित्रः** प्रमीतेस्त्रायकोऽसि । **ईड्यः** स्तुतिभिः स्तुत्यस्त्वम्, **सखिभ्यः** समानख्यानेभ्यः ऋत्विग्भ्यः **सखा** सखिवदत्यन्तं प्रियोऽसि । **जामिः** । 'जमु अदने' । जमन्ति सहैकस्मिन्पात्रे अदन्तीति जामयो बन्धवः । 'जनिघसिभ्यामिण्' (उ.सू. ४-५६९ ) इति विधीयमानः इण् बहुलवचनाद् अस्मादपि द्रष्टव्यः । **ईड्यः** । 'ईड स्तुतौ'। 'ईडवन्दवृशंसदुहां ण्यतः' इत्याद्युदात्तत्वम् ।। ४ ।।

**सिद्धाञ्जनम्–** चतुर्थीमृचमाह– यद्यपि पूर्वोक्तप्रकारेण दुर्बोधस्वरूपादिको भवत्यग्निः, तथापि प्रियो बन्धुरेव भवति युक्तस्य मनुष्यस्येत्याह । हे **अग्ने! जनानाम्** मनुष्याणां **जामिः** बन्धुः **असि** भवसि, तथा **प्रियः** प्रीणयिता **मित्रः** सुहृत् असि । **ईड्यः** अध्येषणीयः त्वं **सखिभ्यः** समानाख्यानेभ्यः देवकामेभ्यः **सखा** सखा भवसि ।। ४ ।।

## ऋक्संहिता पदपाठसहिता

**यजा नो मित्रावरुणा यजा देवाँ ऋतं बृहत् । अग्ने यक्षि स्वं दमम् ॥ ५ ॥**
यज । नः । मित्रावरुणा । यज । देवान् । ऋतम् । बृहत् । अग्ने । यक्षि । स्वम् । दमम् ॥ ५ ॥

**स्कन्द–** **यज नः** अस्माकम् अर्थाय मित्रावरुणौ । **यज** अन्यानपि **देवान्** । **ऋतम्** सत्यम् । **बृहत्** महत् । सुष्ठु इत्यर्थः । **अग्ने! यक्षि स्वम् दमम्** उपशमं गृहं वा । दमशब्देन तद्वतोऽग्नेरेव याग उच्यते । उपशमवन्तमात्मानं यज्ञगृहादिगृहवन्तं वा यजेत्यर्थः ॥ ५ ॥

**वेङ्कटमाधव–** **यज** अस्माकं मित्रादीन् **बृहत् ऋतम्** आदित्यम् । स्वो दमः स्वशरीरम् । तं च यज । 'अग्निमग्न आवह' (तै.२,५,९,४) इति मन्त्रः । सूक्ते मित्रादीनां यागमाशास्ते ॥

**मुद्गल–** हे **अग्ने! नः** अस्मदर्थम् **मित्रावरुणा** एतत्सञ्ज्ञौ देवौ । **यज** हविषा पूजय । तथा **देवान्** इन्द्रादीन् **यज** पूजय । **ऋतम्** सत्यं यथार्थफलं यज्ञं च यजेत्येव । तदर्थम् **बृहत्** प्रौढम् **स्वम्** स्वकीयम् **दमम्** यज्ञगृहम् **यक्षि** यज सङ्गच्छस्व । त्वय्यन्तर्विद्यमाने सति हि यज्ञगृहं पूज्यते ॥ ५ ॥

**सायण–** हे **अग्ने! नः** अस्मदर्थम् **मित्रावरुणा** एतत्सञ्ज्ञौ देवौ । **यज** हविषा पूजय । तथा **देवान्** इन्द्रादीन् **यज** पूजय । **ऋतम्** सत्यं यथार्थफलं यज्ञं च यजेत्येव । तदर्थम् **बृहत्** प्रौढम् **स्वम्** स्वकीयम् **दमम्** यज्ञगृहम् **यक्षि** यज सङ्गच्छस्व । त्वय्यन्तर्विद्यमाने सति हि यज्ञगृहं पूज्यते । **यजा** । 'द्व्यचोऽतस्तिङः' इति संहितायां दीर्घत्वम् । **देवान्** । 'दीर्घादटि समानपादे' इति संहितायां नकारस्य रुत्वम् । 'आतोऽटि नित्यम्' इति अनुनासिकः आकारः । यत्वलोपौ । **यक्षि** । यजेः 'बहुलं छन्दसि' इति शपो लुक् ॥ ५ ॥

**सिद्धाञ्जनम्–** पञ्चमीमृचमाह– हे **अग्ने! नः** अस्मदर्थम् । **मित्रावरुणा** मित्रं वरुणं च देवौ । **यज** पूजय । तथा **देवान्** इन्द्रादीन् **यज** पूजय । तथा **ऋतम्** सत्यं **बृहत्** महत् प्रौढं **स्वम् दमम्** च तव स्वीयं गृहं, सहजसिद्धम् आवासस्थानं उत्तमं धाम 'सत्यं ऋतं बृहत्' इति श्रुत्यन्तरे गीतं च, **यक्षि** यज पूजय । 'गोपामृतस्य दीदिविम्' (१.१.८) इत्यत्र व्याख्यातम् अवधेयम् ॥ **'यजा-संहितायां'** दीर्घः । **यक्षि**-यजेः 'बहुलं छन्दसि' इति शपो लुक् ॥ ५ ॥

॥ इति प्रथमाष्टके पञ्चमाध्याये त्रयोविंशो वर्गः ॥

## ।। अथ चतुर्विंशो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

(सूक्तम् ७६)

५ गोतमो राहूगणः । अग्निः । त्रिष्टुप् ।

**का त उपेतिर्मनसो वराय भुवदग्ने शंतमा का मनीषा ।**
**को वा यज्ञैः परि दक्षं त आप केन वा ते मनसा दाशेम ।। १ ।।**
**का । ते । उपऽइतिः । मनसः । वराय । भुवत् । अग्ने । शम्ऽतमा । का । मनीषा ।**
**कः । वा । यज्ञैः । परि । दक्षम् । ते । आप । केन । वा । ते । मनसा दाशेम ।।**

**स्कन्द– का, ते** तव **उपेतिः** उपगतिः । **मनसः वराय** वरशब्दः श्रेष्ठवचनः । षष्ठ्यर्थे चैषा चतुर्थी । श्रेष्ठस्य **भुवत्** भवति । हे **अग्ने! शन्तमा** सुखतमा । **का** वा **मनीषा** स्तुतिः । कयोपगत्योपगम्यमानः स्तुत्या वा स्तूयमानस्त्वं मनसा प्रीयस इत्यर्थः । **कः वा यजमानः यज्ञैः दक्षम् ते** दक्षशब्दोऽत्रात्मवचनः । 'श्रेयांसं दक्षं मनसा जगृभ्यात्' (ऋ.१०,३१,२) इति यथा । मनोवचनो वा । 'चित्तिं दक्षस्य सुभगत्वमस्मे' (ऋ.२,२१,६) इति यथा । तवात्मानं मनो वा । **परि आप** सर्वतो व्याप्नोति । **केन वा ते मनसा दाशेम** हवींषि ददाम । एतत्सर्वं कथय । सुखं वयम् ज्ञात्वा कुर्म इत्यर्थः ।। १ ।।

**वेङ्कटमाधव–** कीदृशम् तव उपगमनम् । **मनसः** वरणाय **का** वा भवति सुखतमा तव स्तुतिः । **कः वा यज्ञैः** त्वत्तः वृद्धिम् आप । कीदृशेन वा मनसा युक्ता तुभ्यं ददाम ।।१।।

**मुद्गल–** 'का' इति पञ्चर्चं तृतीयं सूक्तम् । राहूगणो गोतम ऋषिः । त्रिष्टुप् छन्दः । अग्निर्देवता । हे **अग्ने! ते** तव **मनसः वराय** निवारणाय अस्मास्ववस्थापनाय **का उपेतिः भुवत्** कीदृशम् उपगमनं भवेत् । न काप्यस्ति । तवोचितमुपगमनं वयं कर्तुं न शक्नुमः इति भावः । **मनीषा** स्तुतिः । **शन्तमा** तवातिशयेन सुखकरी वा कीदृशी भवेत् । तवोचिता स्तुतिरपि नास्तीत्यर्थः । **कः वा** यजमानः **यज्ञैः ते** तव सम्बन्धिभिर्यागैः **दक्षम्** वृद्धिम् **परि आप** पर्याप्नोत् । न कोऽपीत्यर्थः । तवोचितान् यागान् अनुष्ठाय तैः फलं प्राप्यते इत्येतदपि दुर्घटमेवेति भावः । उपगमनादिकं तावदास्तां तस्य सर्वस्य साधनभूतं मन एवास्माकं दुर्लभमित्याह

**केनेति** । हे **अग्ने! ते** तुभ्यं **केन मनसा** कीदृश्या बुद्ध्या **दाशेम** हवींषि प्रयच्छाम । तवोपगमनाद्यनुरूपं मनोऽस्माकं नोत्पद्यते इत्यर्थः ।। १ ।।

**सायण–** हे **अग्ने! ते** तव **मनसो वराय** निवारणाय अस्मास्ववस्थापनाय **का उपेतिः भुवत्** कीदृशमुपगमनं भवेत् । न काप्यस्ति । तवोचितमुपगमनं वयं कर्तुं न शक्नुमः इति भावः । **मनीषा** स्तुतिः **शन्तमा** तवातिशयेन सुखकरी **का** कीदृशी भवेत् । तवोचिता स्तुतिरपि नास्तीत्यर्थः । **को वा** यजमानः **यज्ञैः** तव सम्बन्धिभिर्यागैः **दक्षं** वृद्धिं बलं वा **परि आप** पर्याप्नोत् । न कोऽपीत्यर्थः । तवोचितान् यागाननुष्ठाय तैः फलं प्राप्यते इत्येतदपि दुर्घटमेवेति भावः । उपगमनादिकं तावदास्तां तस्य सर्वस्य साधनभूतं मन एवास्माकं दुर्लभमित्याह– **केनेति** । हे अग्ने! **ते** तुभ्यं **केन मनसा** कीदृश्या बुद्ध्या **दाशेम** हवींषि प्रयच्छाम । तवोपगमनाद्यनुरूपं मनोऽस्माकं नोत्पद्यते इत्यर्थः ।।

**उपेतिः–** 'तादौ च' इति गतेः प्रकृतिस्वरत्वम् । **वराय–** 'वृञ् वरणे' अस्मादन्तर्भावितण्यर्थात् 'ग्रहवृदृनिश्चिगमश्च' (पा.सू.३.३.५८) इति अप् । तस्य पित्त्वादनुदात्तत्वे धातुस्वरः । **भवत्** । लेटि अडागमः । 'बहुलं छन्दसि' इति शपो लुक् । 'भूसुवोस्तिङि' इति गुणप्रतिषेधः । **दक्षम्** । 'दक्ष वृद्धौ' भावे करणे वा घञ् । ञित्त्वादाद्युदात्तत्वम् ।। १ ।।

**सिद्धाञ्जनम्–** 'का ते' इति पञ्चर्चं तृतीयं सूक्तम् । 'का ते' इत्यनुक्रान्तम् । राहूगणो गोतम ऋषिः । त्रिष्टुप् छन्दः । अग्निर्देवता । प्रातरनुवाकस्याग्नेये क्रतौ त्रैष्टुभे छन्दसि इदमादिके द्वे सूक्ते । सूत्रितं च 'उप प्र जिन्वन्' इति त्रीणि 'का त उपेतिरिति सूक्ते' (आश्व.श्रौ.४.१३) इति । आश्विनशस्त्रेऽप्येते प्रातरनुवाकातिदेशात् ।।

तत्र प्रथमामृचमाह– हे अग्ने! **ते** तव **मनसः** कर्मणि षष्ठी, **वराय** वरणाय वरीतुं, तव मनः समावर्जयितुमित्यर्थः । **का उपेतिः**? कीदृशं उपगमनं, **भुवत्** भवेत् ? कथं त्वामुपगच्छेम तव मनस्समावर्जनाय? अस्मद्विषये तव मनस्समाकृष्टये क उपाय इति भावः । सायणस्तु– ''वराय निवारणाय अस्मास्ववस्थापनाय 'का उपेतिर्भुवत्' कीदृशमुपगमनं भवेत्, न काप्यस्ति । तवोचितमुपगमनं वयं कर्तुं न शक्नुम इति भावः'' इत्याचष्टे । **का मनीषा** कीदृशी बुद्धिः तदुपलक्षिता स्तुतिः **शन्तमा** तवातिशयेन सुखकरी भवेत्? तादृशीं स्तुतिम् अस्मान् कारयेति

भावः । 'तवोचिता स्तुतिरपि नास्तीत्यर्थः' इति सायणः । **कः** को **वा** यजमानः **यज्ञैः** यजनैः **ते** तव **दक्षम्** विवेचनात्मकधीकौशलरूपं बलं **पर्याप** पर्याप्नोति । कीदृशः योग्यताविशिष्टः यजमानः त्वदीयं दक्षं लभत इति प्रश्नेन तादृशं योग्यतावैशिष्ट्यम् अस्मासु धेहि इति प्रार्थना । सायणस्तु 'न कोऽपि यजमानः तवोचितान्यागाननुष्ठाय तैः फलं प्राप्यते' इत्याह । **केन वा मनसा** कीदृशेन मनसा **ते** तुभ्यं **दाशेम** अर्पणीयं सर्वं प्रयच्छाम? तवोपगमनाद्यनुरूपं मनश्च अस्मासु धेहि । येन युक्तेन वयं 'दाशेम' इति भावः । तादृशं मनोऽपि नोत्पद्यते इति सायणीयं तात्पर्यम् ।। **वराय**- 'वृञ् वरणे', तुमुन्नर्थे चतुर्थी । **भुवत्**-लेटि अडागमः, शपो लुक् । **दक्षम्**-दक्षशब्दो विचारितः (१.२.७,६) ।। १ ।।

## ऋक्संहिता पदपाठसहिता

**एह्यग्न इह होता नि षीदादब्धः सु पुरएता भवा नः ।**
**अवतां त्वा रोदसी विश्वमिन्वे यजा महे सौमनसाय देवान् ।। २ ।।**

**आ । इहि । अग्ने । इह । होता । नि । सीद । अदब्धः । सु । पुरःऽएता । भव । नः । अवताम् । त्वा । रोदसी इति । विश्वमिन्वे इति विश्वम्ऽइन्वे । यज । महे । सौमनसाय । देवान् ।। २ ।।**

**स्कन्द–** एहि हे **अग्ने**! आगत्य च **इह** अस्मद्यज्ञे **होता निषीद** । निषद्य च **अदब्धः** अहिंसितः केनचित् । सुष्ठु **पुर एता** सर्वकर्मस्वग्रतोगामी **भव नः** । पुर एतारं च भवन्तम् **अवताम् त्वा रोदसी विश्वमिन्वे** सर्वव्यापिन्यौ **यज** च **महे सौमनसाय** सौमनस्यायास्माकम् **देवान्** ।। २ ।।

**वेङ्कटमाधव–** आगच्छ अग्ने! अत्र **होता** सन् । **निषीद** अहिंसितस्त्वम् । सुष्ठु अस्माकम् अग्रतो गन्ता भव । हौत्रं कुर्वाणं त्वां सर्वव्यापिन्यौ द्यावापृथिव्यौ रक्षताम् । महते **सौमनसाय यज देवान्** इति ।। २ ।।

**मुद्गल–** हे **अग्ने**! **एहि** आगच्छ । **इह** अस्मिन् यज्ञे **होता** देवानामाह्वाता सन् **नि षीद** उपविश । उपविश्य **नः** अस्माकम् **पुरएता** पुरतो गन्ता **सु भव** सुष्ठु भव । यस्मात् त्वम् **अदब्धः** राक्षसादिभिरहिंस्योऽसि । तादृशम् **त्वा** त्वाम् **विश्वमिन्वे** सर्वं व्याप्नुवत्यौ **रोदसी**

द्यावापृथिव्यौ **अवताम्** रक्षताम् । आगत्योपविश्य च द्यावापृथिवीभ्यां रक्षितश्च सन् **महे** महते **सौमनसाय** सौमनस्याय **देवान्** दानादिगुणयुक्तान् इन्द्रादीन् **यज** हविर्भिः पूजय ।। २ ।।

**सायण–** हे **अग्ने! एहि** आगच्छ । **इह** अस्मिन् यज्ञे **होता** देवानामाह्वाता सन् **नि षीद** उपविश । उपविश्य **नः** अस्माकम् **पुरएता** पुरतो गन्ता **सु भव** सुष्ठु भव । यस्मात् त्वम् **अदब्धः** राक्षसादिभिरहिंस्योऽसि । तादृशम् **त्वा** त्वाम् **विश्वमिन्वे** सर्वं व्याप्नुवत्यौ **रोदसी** द्यावापृथिव्यौ **अवताम्** रक्षताम् । आगत्योपविश्य च द्यावापृथिवीभ्यां रक्षितश्च सन् **महे** महते **सौमनसाय** सौमनस्याय **देवान्** दानादिगुणयुक्तान् इन्द्रादीन् **यज** हविर्भिः पूजय ।। **नि षीद** । 'सदिरप्रतेः' इति षत्वम् । **सौमनसाय** । सुमनसो भावः सौमनसम् । 'तस्येदम्' इति सम्बन्धसामान्ये अण्प्रत्ययः । स चात्र भावलक्षणे सम्बन्धविशेषे पर्यवस्यति । यद्वा । 'हायनान्तयुवादिभ्योऽण्' (पा.सू.५.१.१३०) इति भावे अण् । युवादिष्वस्य पाठो द्रष्टव्यः ।।

**सिद्धाञ्जनम्–** द्वितीयामृचमाह– हे **अग्ने! एहि** आगच्छ । **इह** अस्मिन् यजने । **होता** आह्वाता सन् **नि षीद** उपविश । **अदब्धः** अहिंसितः यज्ञविरोधिभिः दब्धुं दमयितुम् अशक्यस्त्वं, **नः** अस्माकं **पुरएता** पुरस्तात् गन्ता **सु भव** सुष्ठु भव । **विश्वमिन्वे** विश्वं व्याप्नुवत्यौ सर्वव्यापिन्यौ **रोदसी** द्यावापृथिव्यौ **त्वा** त्वाम् । **अवताम्** रक्षताम् । ऊर्ध्वा द्युस्थाना चितिः अधरा पृथिवीस्थाना चितिः इति उभाभ्यां विश्वव्यापिनीभ्यां यज्ञविघातकेभ्यः राक्षसादिभ्यः रक्षितः सन् **देवान्** इन्द्रादीन् **महे** महते **सौमनसाय** सौमनस्याय अस्माकं देवानां प्रसादनाय **यज** पूजय ।। **सौमनसाय**-'युवादिभ्योऽण्' इति भावे अण् ।। २ ।।

## ऋक्संहिता पदपाठसहिता

**प्र सु विश्वा॑न्र॒क्षसो॒ धक्ष्य॑ग्ने॒ भवा॑ य॒ज्ञाना॑मभिश॒स्तिपावा॑ ।**
**अथा व॑ह॒ सोम॑पतिं॒ हरि॑भ्यामाति॒थ्यम॑स्मै चकृमा सु॒दाव्ने॑ ।। ३ ।।**

प्र । सु । विश्वा॑न् । र॒क्षस॑ः । धक्षि॑ । अ॒ग्ने॒ । भव॑ । य॒ज्ञाना॑म् । अ॒भि॒श॒स्ति॒ऽपावा॑ ।
अथ॑ । आ । व॒ह॒ । सोम॑ऽपतिम् । हरि॑ऽभ्याम् । आ॒ति॒थ्यम् । अ॒स्मै॒ । च॒कृ॒म॒ । सु॒ऽदाव्ने॑ ।।

**स्कन्द–** सुष्ठु **विश्वान् रक्षसः प्र धक्षि** प्रदह हे **अग्ने! भव** चास्माकं **यज्ञानाम् अभिशस्तिपावा** हिंसितुः हिंसातो वा रक्षिता । **अथ** अनन्तरञ्च **आ वह, सोमपतिम्** इन्द्रम् ।

**हरिभ्याम्** । किं कारणम् । उच्यते । वयम् **आतिथ्यम् अस्मै, चकृम** कुर्मः । **सुदाव्ने** शोभनदात्रे ।। ३ ।।

**वेङ्कटमाधव– प्र** दह सुष्ठु **विश्वान्** राक्षसान् । अग्ने! **भव** त्वम् यज्ञानाम् उपद्रवस्य रक्षकः । तत इन्द्रं तदीयाभ्याम् अश्वाभ्यां सह **आ वह** । **आतिथ्यम् अस्मै**, इन्द्राय वयं कुर्मः शोभनदानाय ।। ३ ।।

**मुद्गल–** हे अग्ने! **विश्वान्** सर्वान् । **रक्षसः** राक्षसान् । **प्र सु धक्षि** प्रकर्षेण दह । दग्ध्वा च **यज्ञानाम्** अस्माभिरनुष्ठेयानां यज्ञानाम् । **अभिशस्तिपावा** अभिशस्तेर्हिंसायाः पाता रक्षिता **भव** । अनन्तरम् **सोमपतिम्** सर्वेषां सोमानां पालकमिन्द्रम् । **हरिभ्याम्** तदीयाश्वाभ्याम् । **आ वह** अस्मद्यज्ञं प्रापय । आगताय अस्मै **सुदाव्ने** शोभनफलस्य दात्रे इन्द्राय । **आतिथ्यम्** अतिथ्यर्हं सत्कारम् । **चकृम** कुर्मः ।। ३ ।।

**सायण–** हे अग्ने! **विश्वान्** सर्वान् । **रक्षसः** राक्षसान् । **प्र सु धक्षि** प्रकर्षेण दह । दग्ध्वा च **यज्ञानाम्** अस्माभिरनुष्ठेयानां यागानाम् । **अभिशस्तिपावा** अभिशस्तेर्हिंसाया पाता रक्षिता **भव** । अनन्तरम् **सोमपतिम्** सर्वेषां सोमानां पालकमिन्द्रम् । **हरिभ्याम्** तदीयाश्वाभ्याम्। **आ वह** अस्मद्यज्ञं प्रापय । आगताय अस्मै **सुदाव्ने** शोभनस्य फलस्य दात्रे इन्द्राय । **आतिथ्यम्** अतिथ्यर्हं सत्कारम् । **चकृम** कुर्मः ।।

**धक्षि** । 'दह भस्मीकरणे' । 'बहुलं छन्दसि' इति शपो लुक् । ढत्वभष्भावकत्वषत्वानि । **अभिशस्तिपावा** 'शसु हिंसायाम्' अस्मादभिपूर्वात् भावे क्तिन् । अभिशस्तेः पातीति अभिशस्तिपावा । 'पा रक्षणे'। 'आतो मनिन्' इति वनिप् । **सोमपतिम्** 'पत्यावैश्वर्ये' इति पूर्वपदप्रकृतिस्वरत्वम् । **सुदाव्ने** पूर्ववद्ददातेर्वनिप् । 'अल्लोपोऽनः' इति अकारलोपः ।। ३ ।।

**सिद्धाञ्जनम्–** तृतीयामृचमाह– हे अग्ने! **विश्वान् रक्षसः** सर्वान् राक्षसान् । **प्र सु धक्षि** प्रकर्षेण सुष्ठु दह । **यज्ञानाम्** अस्माभिरनुष्ठीयमानानां यजनानाम् । **अभिशस्तिपावा** हिंसायाः पाता, विघाताद् रक्षिता **भव** । **अथ** अनन्तरं **सोमपतिम्** सोमानां राजानं इन्द्रं **हरिभ्यां** तदश्वाभ्यां **आ वह** अस्मद्यज्ञं प्रापय । **सुदाव्ने** शोभनदात्रे अस्मै आगतायेन्द्राय **आतिथ्यम्** अतिथिसत्कारं **चकृम** कुर्मः ।। **धक्षि**-'दह भस्मीकरणे' 'बहुलं-छन्दसि' इति शपो लुक् ।

**अभिशस्तिपावा**-'शसु हिंसायाम्' इति धातोः अभिपूर्वकाद् भावे क्तिन् । अभिशस्तेः पातीत्यभिशस्तिपावा । 'पा रक्षणे' 'आतो मनिन्' इति वनिप् । **सुदाव्ने**-पूर्ववद्ददातेर्वनिप् ।।३।।

## ऋक्संहिता पदपाठसहिता

**प्रजावता वचसा वह्निरासा च हुवे नि च सत्सीह देवैः ।**
**वेषि होत्रमुत पोत्रं यजत्र बोधि प्रयन्तर्जनितर्वसूनाम् ।। ४ ।।**

**प्रजाऽवता । वचसा । वह्निः । आसा । आ । च । हुवे । नि । च । सत्सि । इह । देवैः । वेषि । होत्रम् । उत । पोत्रम् । यजत्र । बोधि । प्रऽयन्तः । जनितः । वसूनाम् ।।**

**स्कन्द–** प्रजननं प्रजाः, तद्वता अतिशयवद्देवतागुणोत्पादनशक्तियुक्तेनेत्यर्थः । **वचसा** आह्वानवाक्येन । **आसा** तात्स्थ्यात् ताच्छब्द्यम् । 'मञ्चाः क्रोशन्ति' इति यथा । आस्यस्थेन । स्वयमेवोच्चारितेन इत्यर्थः । **वह्निः** प्रत्यक्षकृतोऽयं मन्त्रः । न चेदमामन्त्रेणम् । अतो यत्तच्छब्दा-वध्याहृत्यैकवाक्यता नेया । यस्त्वं वह्निर्वोढा हविषां बलवान् वा सः, **आ च हुवे** व्यत्ययेनायं मध्यमस्य स्थाने उत्तमपुरुषः । आह्वय च देवान् । **नि च सत्सि** निषीद च **इह** अस्मदीयायां वेद्याम् । आहूतैः देवैः सह । निषद्य च **वेषि होत्रम्** वेतिर्गत्यर्थः । शुद्धोऽपि चात्र सोपसर्गार्थे द्रष्टव्यः । उपगच्छ होत्रताम् । हौत्रं कुर्वित्यर्थः । **उत पोत्रम्** पोत्रतां पोत्रकर्माणि वा । सर्वकर्माणीत्यर्थः । हे **यजत्र!** यष्टः, यष्टव्यः वा । **बोधि** बुध्यस्व चास्मदीया स्तुतीरित्यर्थः । हे **प्रयन्तः** दातः! **जनितः!** उपायान्तरैश्चोत्पादयितः । **वसूनाम्** धनानाम् ।। ४ ।।

**वेङ्कटमाधव–** प्रजननवता प्रादुर्भवता **वचसा** वोढाऽहम् आस्येन **आ च हुवे** त्वाम् । त्वञ्च निषीद यज्ञे **देवैः** सह । कामयसे होतृकर्म पोतृकर्म च । यष्टव्य । बुध्यस्व **प्रदातः!** जनयितः!, धनानां दाता भवामीति ।। ४ ।।

**मुद्गल– प्रजावता** यजमानेभ्यो दातव्यापत्यादिफलोपेतेन । **वचसा** स्तोत्रेण स्तुतः सन् योऽग्निः, **आसा** आस्यस्थानीयया ज्वालया । **वह्निः** देवेभ्यो हविषां वोढा, तमग्निम् **आ च हुवे** आह्वयामि । आहूतः सन् त्वम्, इह अस्मिन् कर्मणि **देवैः** अन्यैः सह **नि सत्सि च** निषीद च । निषद्य च हे **यजत्र!** यजनीयाग्ने! **होत्रम्** होत्रा क्रियमाणं कर्म, **उत** अपि च **पोत्रम्** पोत्रा कृतं कर्म च **वेषि** कामयस्व । **वसूनां** धनानाम् । **प्रयन्तः!** प्रकर्षेण नियन्तः! वसून्यस्मदायत्तानि कुर्वन्, **जनितः!** आहुतिद्वारा सर्वस्य जनयितः अग्ने! **बोधि** अस्मान् बोधय ।।

**सायण– प्रजावता** यजमानेभ्यो दातव्यापत्यादिफलोपेतेन । **वचसा** स्तोत्रेण स्तुतः सन् योऽग्निः, **आसा** आस्यस्थानीयया ज्वालया । **वह्निः** देवेभ्यो हविषां वोढा, तमग्निम् **आ च हुवे** आह्वयामि । आहूतः सन् त्वम्, **इह** अस्मिन् कर्मणि **देवैः** अन्यैः सह **नि सत्सि च** निषीद च । निषद्य च हे **यजत्र!** यजनीयाग्ने! **होत्रम्** होत्रा क्रियमाणं कर्म, **उत** अपि च **पोत्रम्** पोत्रा कृतं कर्म च **वेषि** कामयस्व । **वसूनां** धनानाम् । **प्रयन्तः!** प्रकर्षेण नियन्तः! वसून्यस्मदायत्तानि कुर्वन्, **जनितः!** आहुतिद्वारा सर्वस्य जनयितः अग्ने! **बोधि** अस्मान् बोधय ।।

**आसा** । 'पद्दन्' इत्यादिना आस्यशब्दस्य आसन्नादेशः । 'सुपां सुलुक्' इति तृतीयाया डादेशः । टिलोपे उदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वम् । **हुवे** ह्वेञो लटि 'बहुलं छन्दसि' इति सम्प्रसारणम् । 'बहुलं छन्दसि' इति शपो लुक् । 'चवायोगे प्रथमा' इति निघातप्रतिषेधः । **बोधि** 'बुध अवगमने' अस्मात् ण्यन्तात् 'छन्दस्युभयथा' इति हेः आर्धधातुकत्वात् 'णेरनिटि' इति णिलोपः । 'हुझल्भ्यो हेर्धिः' । धातोः अन्त्यलोपश्छान्दसः । हेरपित्त्वात्तस्यैव स्वरः शिष्यते ।। ४ ।।

**सिद्धाञ्जनम्–** चतुर्थीमृचमाह– **प्रजावता** तेजोबलादिसन्तानफलोपेतेन । **वचसा** स्तोत्रेण स्तुतः यः, **आसा** आस्येन ज्वालात्मकेन । **वह्निः** वोढा, देवेभ्यो हव्यानि प्रापयिता भवति तमग्निं त्वां **आ च हुवे** आह्वयामि । आहूतस्त्वं, **देवैः** इन्द्रादिभिः सह, **इह** अस्मिन्यजने **नि सत्सि च** निषीदसि च । निषण्णो भवेति लोडर्थः । तथा निषण्णः त्वं हे **यजत्र** यजनीय! **होत्रम्** होतृकर्म आह्वानकर्म **उत** अपि च **पोत्रम्** पोतृकर्म शोधनकर्म च **वेषि** कामयस्व । स्वयमेव कुरु इत्यर्थः । **वसूनां** धनानां दिव्यानां **प्रयन्तः** प्रकर्षेण यन्तः नियामकः! तथा **जनितः** उत्पादयितः! वसूनि अस्मासु आधातः अग्ने! **बोधि** बोधय, अस्मान् दिव्यवसुविषये प्रबोधवतः कुर्विति भावः ।। **आसा**-आस्यशब्दस्य आसन्नादेशः, तृतीयाया डादेशः । **हुवे**-ह्वेञो लटि छन्दसि सम्प्रसारणम् । **बोधि**- 'बुध अवगमने' अस्मात् ण्यन्तात् 'छन्दस्युभयथा' इति हेरार्धधातुकत्वात् 'णेरनिटि' इति णिलोपः ।। ४ ।।

## ऋक्संहिता पदपाठसहिता

**यथा विप्रस्य मनुषो हविर्भिर्देवाँ अयजः कविभिः कविः सन् ।**
**एवा होतः सत्यतर त्वमद्याग्ने मन्द्रया जुह्वा यजस्व ।। ५ ।।**
**यथा । विप्रस्य । मनुषः । हविःऽभिः । देवान् । अयजः । कविऽभिः । कविः । सन् ।**
**एव । होतः । सत्यऽतर । त्वम् । अद्य । अग्ने । मन्द्रया । जुह्वा । यजस्व ।।५।।**

**स्कन्द–** **यथा विप्रस्य मनुषः** मेधाविनो मनुष्यस्य । **हविर्भिः देवान् अयजः** । **कविभिः** **मेधाविभिः** ऋत्विग्भिः सह **कविः सन्**, एवमेव ममापि हे **होतः**! अतिशयेन सत्य! **त्वम्** **अद्य** हे **अग्ने**! **मन्द्रया** 'मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु' मोदयित्र्या **जुह्वा** हूयमानत्वात् जुहूराहुतिरभिप्रेता । तया **यजस्व** देवान् ।। ५ ।।

**वेङ्कटमाधव–** **यथा** मेधाविनः मनोः प्रजापतेः **हविर्भिः** देवान् **अयजः** कविभ्योऽपि **कविः** **सन्**, एवम् **होतः**! अतिशयेन सत्य! **अद्य त्वम् अग्ने! मन्द्रया** ज्वालया देवान् **यजस्व** इति ।। ५ ।।

**मुद्गल–** **कविः** क्रान्तदर्शी सन् **कविभिः** मेधाविभिर्ऋत्विग्भिः सह **विप्रस्य** मेधाविनः **मनुषः** मनोर्यज्ञे **हविर्भिः** चरुपुरोडाशादिभिः हे **अग्ने! देवान् अयजः** । एवमेव **होतः** होमनिष्पादक! **सत्यतर**! अतिशयेन सत्सु साधो! अग्ने! **त्वम् अद्य** अस्मिन् यज्ञे **मन्द्रया** हर्षयित्र्या **जुह्वा** होमसाधनभूतया स्रुचा **यजस्व** देवान् हविर्भिः पूजय ।। ५ ।।

**सायण–** एकादशिनस्याग्नेयस्य पशोः 'यथा विप्रस्य' इत्येषा पशुपुरोडाशस्य याज्या । सूत्रितं च 'प्रदानानाम्' इति खण्डे 'यथा विप्रस्य मनुषो हविर्भिः प्रकारवो मनना वच्यमानाः' (आश्व.श्रौ. ३.७.) इति ।। **कविः** क्रान्तदर्शी सन् **कविभिः** मेधाविभिर्ऋत्विग्भिः सह **विप्रस्य** मेधाविनः **मनुषः** मनोर्यज्ञे **हविर्भिः** चरुपुरोडाशादिभिः हे **अग्ने! देवान् अयजः** । एवमेव **होतः** होमनिष्पादक! **सत्यतर**! अतिशयेन सत्सु साधो! अग्ने! **त्वम् अद्य** अस्मिन् यज्ञे **मन्द्रया** हर्षयित्र्या **जुह्वा** होमसाधनभूतया स्रुचा **यजस्व** देवान् हविर्भिः पूजय ।। ५ ।। **मनुषः** 'मन ज्ञाने 'बहुलमन्यत्रापि' इति मनेः उसिन्प्रत्ययः ।। ५ ।।

**सिद्धाञ्जनम्–** **कविः सन्** स्वयं क्रान्तदर्शी सन् । **कविभिः** द्रष्टृभिः सह **विप्रस्य** विपश्चितः

**मनुषः** मनोः मनुष्याणां प्रथमस्य मनोमयस्य पितुः, **हविर्भिः** हव्यैः आह्वानसाधनभूतैरर्पणैः **देवान्** इन्द्रादीन् **यथा** येन प्रकारेण **अयजः** पूजितवानसि, **एव** तथैव हे **अग्ने! होतः** आह्वातः, **सत्यतर** अतिशयेन सत्य, सत्यस्वरूपेत्यर्थः, **त्वम्, अद्य** इदानीं **मन्द्रया** मादयित्र्या हर्षयित्र्या **जुह्वा** जिह्वया ज्वालया, होमसाधनभूतया स्रुचा इति बाह्यार्थः । **यजस्व** पूजय । **मनुषः**- 'मन ज्ञाने' मनेरुसिन् ।। ५ ।।

।। इति प्रथमाष्टके पञ्चमाध्याये चतुर्विंशो वर्गः ।।

## ।। अथ पञ्चविंशो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

(सूक्तम् ७७)

५ गोतमो राहूगणः । अग्निः त्रिष्टुप् ।

**कथा दाशेमाग्नये कास्मै देवजुष्टोच्यते भामिने गीः ।**
**यो मर्त्येष्वमृत ऋतावा होता यजिष्ठ इत्कृणोति देवान् ।। १ ।।**
**कथा । दाशेम । अग्नये । का । अस्मै । देवऽजुष्टा । उच्यते । भामिने । गीः ।**
**यः । मर्त्येषु । अमृतः । ऋतऽवा । होता । यजिष्ठः । इत् । कृणोति । देवान् ।।१।।**

**स्कन्द– कथा** केन प्रकारेण । हवींषि, **दाशेम** ददाम **अग्नये** । **का** वा **अस्मै** एतदर्था **देवजुष्टा** अस्य देवस्य प्रिया अन्यैः स्तोतृभिः **उच्यते** । **भामिने** 'भाम' (निघ.२,१३) इति क्रोधनाम । स्तोतॄणामुपरि क्रोधवते दीप्तिमते वा **गीः** स्तुतिः । कथयत भो स्तोतारः ऋषयः वा, सुखं ज्ञात्वा वयमपि तथा कुर्म इत्यर्थः । किं करोत्यग्निः । उच्यते । **यः मर्त्येषु अमृत ऋतावा** सत्यवान् यज्ञवान् वा । **होता यजिष्ठ** यष्टृतमः । 'इत्' शब्दः पदपूरणः । **कृणोति** देवान् । यो मनुष्यलोके देवानाह्वयतीत्यर्थः ।। १ ।।

**वेङ्कटमाधव–** कथम् अग्नये हविं **दाशेम** । **का** वा **अस्मै** देवैः जुष्टा कल्याणी, उच्यते शत्रुषु क्रोधवते स्तुतिः । **यः अमृत,** मनुष्येषु **देवान् कृणोति** । सत्यवान् ह्वाता यष्टृतमः ।।

**मुद्गल–** 'कथा' इति पञ्चर्चं चतुर्थं सूक्तम्, गोतम ऋषिः, अनुष्टुप् छन्दः, अग्निर्देवता ।।

**अस्मै** अग्नये **कथा दाशेम** कथं हवींषि ददाम । अग्नेरनुरूपं यज्ञं कर्तुमशक्ता वयमित्यर्थः । अथ च तस्मै **भामिने** तेजस्विनेऽग्नये **देवजुष्टा** सर्वैः देवैः सेवितव्या, **गीः** स्तुतिरपि **का** कीदृशी **उच्यते**, तादृशीं स्तुतिमपि कर्तुं न शक्ता इत्यर्थः । **अमृत** मरणरहित **ऋतावा** ऋतवान् सत्यवान् **होता** देवानामाह्वाता **यजिष्ठ** अतिशयेन यष्टा, एवम्भूतः **यः** अग्निः, **मर्त्येषु** मरणधर्मसु अस्मासु वर्तमानः सन् **देवान् इत् कृणोति** हविर्भिर्युक्तान् करोत्येव । तादृशायाग्नये कथा दाशेमेति पूर्वेणान्वयः ।। १ ।।

**सायण– अस्मै** अग्नये **कथा दाशेम** कथं हवींषि ददाम । अग्नेरनुरूपं यज्ञं कर्तुमशक्ता वयमित्यर्थः । अथ च तस्मै **भामिने** तेजस्विनेऽग्नये **देवजुष्टा** सर्वैः देवैः सेवितव्या, **गीः** स्तुतिरपि **का** कीदृशी **उच्यते**, तादृशीं स्तुतिमपि कर्तुं न शक्ता इत्यर्थः । **अमृत** मरणरहित **ऋतावा** ऋतवान् सत्यवान् **होता** देवानामाह्वाता **यजिष्ठ** अतिशयेन यष्टा, एवम्भूतः **यः** अग्निः, **मर्त्येषु** मरणधर्मसु अस्मासु वर्तमानः सन् **देवान् इत् कृणोति** हविर्भिर्युक्तान् करोत्येव । तादृशायाग्नये कथा दाशेमेति पूर्वेणान्वयः । **कथा** । 'था हेतौ च च्छन्दसि' इति थाप्रत्ययः । **भामिने** । 'भा दीप्तौ' । 'अर्तिस्तुसु.' इत्यादिना मन्प्रत्ययः । ततो मत्वर्थीय इनिः । **ऋतावा** । 'छन्दसीवनिपौ.' इति मत्वर्थीयो वनिप् । 'अन्येषामपि दृश्यते' इति दीर्घत्वम् ।। १ ।।

**सिद्धाञ्जनम्–** 'कथा' इति पञ्चर्चं चतुर्थं सूक्तं त्रैष्टुभं गोतमस्यार्षमाग्नेयम् । अनुक्रान्तं च- 'कथा' इति । प्रातरनुवाकाश्विनशस्त्रयोः पूर्वसूक्तेन सहोक्तः सूक्तविनियोगः ।।

तत्र प्रथमामृचमाह– **अस्मै** प्रस्तुताय अग्नये देवाय **कथा** कथं, केन प्रकारेण **दाशेम** यथाभागं दद्याम । यथोचितभागपरिकल्पनापूर्वकं दानं दाशतेर्धातोरर्थः । देवानां मुख्यतमायास्मै कथं भागकल्पना कार्या, युक्तो भागश्च दीयेत? अस्मै **भामिने** तेजस्विने अग्नये **देवजुष्टा** देवैः सेविता, देवानां प्रीतिकरी सेवितव्या **का गीः** कीदृशी स्तुतिरूपा वाक् **उच्यते** कीर्त्यते ? अग्निमुद्दिश्य या वागुच्यते सा इतरेषां देवानां सेवनीया स्यात्, यतस्ते च देवाः प्रीताः यजमानस्यर्षेः यजनमुपेत्य तेन दीयमानान् स्वीयभागान् अङ्गीकृत्य तस्मिन् प्रसन्नाः भवेयुः । तस्मात् अग्निमुपेयुषी वाक् तादृशी भवति यादृशी देवानाम् अग्निना आनेतव्यानां सम्मतिं प्रीतिं च सम्पादयतीत्युक्तं भवति ।

अथ द्रष्टारमृषिं वागाविशति, यदनुग्रहेण अग्नेर्गोप्यं तत्त्वं कृत्यं च उत्तरेणार्धर्चेनाह । **यः**

देवः अग्निः **मर्त्येषु** मरणधर्मसु मनुष्येषु **अमृतः** मरणरहितः नित्यः **ऋतावा** ऋतवान् सत्यवान्, अनृतपरिप्लुतेषु मनुष्येषु नश्वरेषु स्वयम् अनश्वरः सत्योज्वलो भवतीत्यर्थः । एवं स्वरूपमुक्तम् । अथ कृत्यं ब्रूते । **होता** आह्वाता देवानाम्, किं च **यजिष्ठः** अतिशयेन यष्टा, यजमानस्य कार्यं स्वयं निर्वहत्यग्निः, अत एवोत्तमयाजी, न केवलं यजति देवान् आह्वयति च, आहूयानीतान् देवान् यजमाने व्यवस्थापयति च, **देवान् इत् कृणोति** इन्द्रादीन् करोत्येव ।। **कथा**-छन्दसि थाप्रत्ययः । **भामिने**-भा दीप्तौ, मन्प्रत्ययः, ततो मत्वर्थीय इनिः । **ऋतावा**-मत्वर्थीयो वनिप्, 'अन्येषामपि दृश्यते' इति दीर्घत्वम् ।। १ ।।

## ऋक्संहिता पदपाठसहिता

**यो अ॑ध्व॒रेषु॒ शंत॑म ऋ॒तावा॒ होता॒ तमू॒ नमो॑भि॒रा कृ॑णुध्वम् ।**
**अ॒ग्निर्यद्वेर्मर्ता॑य दे॒वान्त्स चा॒ बोधा॑ति॒ मन॑सा यजा॑ति ।। २ ।।**
**यः । अ॒ध्व॒रेषु॑ । शम्ऽत॑मः । ऋ॒तऽवा॑ । होता॑ । तम् । ऊँ इति॑ । नम॑ःऽभिः । आ । कृ॒णु॒ध्व॒म् । अ॒ग्निः । यत् । वेः । मर्ता॑य । दे॒वान् । सः । च । बोधा॑ति । मन॑सा । य॒जा॒ति॒ ।।**

**स्कन्द– यः** अग्निः **अध्वरेषु, शन्तम** सुखतम! **ऋतावा होता** यज्ञेषु हौत्रं करोतीत्यर्थः । **तम्** उ उकारः एवार्थे । तमेव । **नमोभिः** नमस्कारैः अन्नैर्हविर्लक्षणैर्वा । **आ कृणुध्वम्** आत्माभिमुखं कुरुत । हे मत्पुत्राः ऋत्विजः वा । कस्मात् । उच्यते । **अग्निः यत्** यस्मात् **वेः** हवींषि गृहीत्वा गच्छति । **मर्ताय** मनुष्यस्यार्थाय । **देवान्** प्रति । **स च बोधाति** चशब्दो बोधातीत्यस्मात् परो द्रष्टव्यः । यस्माच्च सोऽग्निर्बोधयति च देवान् । किम् । सामर्थ्यात् स्तुतीः । देवान् स्तौतीत्यर्थः । **मनसा यजाति** चित्तेन च यजति सादरश्च देवान् यजतीत्यर्थः ।।२।।

**वेङ्कटमाधव– यः** यज्ञेषु सुखतमः । **ऋतावा होता** भवति । **तमू** यूयं नमस्कारैः आत्माभिमुखं कुरुत । **अग्निः** यस्मात् मनुष्यार्थं **देवान्** जानाति । **सः** चेद् बुध्यते यक्ष्यामीति, ततः बुद्धिपूर्वमेव यजति ।। २ ।।

**मुद्गल– यः** अग्निः **अध्वरेषु** यागेषु **शन्तमः** अतिशयेन सुखकारी । **ऋतावा** सत्यवान् । यथार्थदर्शीत्यर्थः । **होता** देवानामाह्वाता भवति । हे ऋत्विग्यजमानाः! यूयम् **तमु** तमेवाग्निम्

**नमोभिः** स्तोत्रैः **आ कृणुध्वम्** अभिमुखीकुरुत । **यत्** यदा अयम् **अग्निः मर्ताय** मनुष्याय यजमानार्थम् । **देवान्, वेः** वेति गच्छति । तदानीं **सः** अग्निर्यष्टव्यान् सर्वान् देवान् **बोधाति च** जानाति च । ज्ञात्वा च **मनसा** नमसा तान् **यजाति** हविर्भिः पूजयति । अतस्तमेवाग्निम् आ कृणुध्वमिति योज्यम् ।। २ ।।

**सायण– यः** अग्निः **अध्वरेषु** यागेषु **शन्तमः** अतिशयेन सुखकारी । **ऋतावा** सत्यवान् । यथार्थदर्शीत्यर्थः । **होता** देवानामाह्वाता भवति । हे ऋत्विग्यजमानाः! यूयम् **तमु** तमेवाग्निम् **नमोभिः** स्तोत्रैः **आ कृणुध्वम्** अभिमुखीकुरुत । **यत्** यदा अयम् **अग्निः मर्ताय** मनुष्याय यजमानार्थम् । **देवान्, वेः** वेति गच्छति । तदानीं **सः** अग्निर्यष्टव्यान् सर्वान् देवान् **बोधाति च** जानाति च । ज्ञात्वा च **मनसा** नमसा तान् **यजाति** हविर्भिः पूजयति । अतस्तमेवाग्निम् आ कृणुध्वमिति योज्यम् ।। **वेः** । 'वी गत्यादिषु' । 'छन्दसि लुङ्लङ्लिटः' इति वर्तमाने लङ् । 'तिङां तिङो भवन्ति' इति प्रथमपुरुषैकवचनस्य मध्यमपुरुषैकवचनादेशः । **बोधाति** । 'बुध अवगमने' लेटि आडागमः । शपः पित्त्वादनुदात्तत्वे धातुस्वरः शिष्यते । 'चवायोगे प्रथमा' इति निघातप्रतिषेधः । **मनसा** । मकारनकारयोः स्थानविपर्ययः ।। २ ।।

**सिद्धाञ्जनम्–** द्वितीयामृचमाह– **यः** योऽग्निः । **अध्वरेषु** यागेषु दिव्याध्वयात्रात्मकेषु **शन्तमः** सुखकृत्तमः अध्वगमनायासवर्जं सुखकारीत्यर्थः । **ऋतावा** सत्यवान् परमार्थदर्शी अनृतपरिहारक इत्यर्थः । **होता** आह्वाता देवानाम् । **तम् उ** तमेव देवम् । **नमोभिः** नमस्करणैः अन्तर्बहिश्च सर्वैरङ्गैः प्रपदनैः प्रपत्तिभिरित्यर्थः । हे यजमानाः! यूयं **आ कृणुध्वम्** आकृतिमन्तं कुरुत । अग्नेरमृतस्य गुप्तस्य युष्मासु व्यक्तिं निष्पादयतेति यावत् । **यत्** यदा आकृतिनिष्पत्तौ सत्यां **अग्निः मर्ताय** मनुष्याय यजमानकृते **देवान्** इन्द्रादीन् । **वेः** वेति प्रविशति आविष्करोति वा, तदा **सः** अग्निः **बोधाति च** जानाति च । **मनसा** मत्या **यजाति** पूजयति च देवानिति शेषः । मर्त्ये यजमाने अमृतोऽग्निः प्रबुद्धो व्यक्तित्वमापन्नः स्वयं यजननिर्वाही भवति । होता देवानां यजमानस्य जागरितप्रज्ञायां निर्माता च सम्पद्यते । 'मनसा बोधाति यजाति' इत्युक्त्या यजमाने बहिःप्रज्ञो भूत्वा देवबोधकान् देवयाजी च भवतीत्युक्तम् । अत्र 'मनसा नमसा' इति नकार-मकारयोः स्थानविपर्ययं मन्यते सायणः, आर्यस्तु नमसा हविर्भिरित्याह ।। **वेः**- 'वी गत्यादिषु' वर्तमाने लङ्, प्रथमपुरुषैकवचनस्य मध्यमपुरुषैकवचनादेशः । **बोधाति, यजाति**-लेटि आडागमः ।।

## ऋक्संहिता पदपाठसहिता

**स हि क्रतुः स मर्यः स साधुर्मित्रो न भूदद्भुतस्य रथीः ।**
**तं मेधेषु प्रथमं देवयन्तीर्विश उप ब्रुवते दस्ममारीः ।। ३ ।।**
**सः । हि । क्रतुः । सः । मर्यः । सः । साधुः । मित्रः । न । भूत् । अद्भुतस्य । रथीः ।**
**तम् । मेधेषु । प्रथमम् । देवऽयन्तीः । विशः । उप । ब्रुवते । दस्मम् । आरीः ।।३।।**

**स्कन्द–** हिशब्दः पदपूरणः । **सः** अग्निः । **क्रतुः** कर्ता प्रज्ञानरूपो वा । **सः मर्यः** मनुष्याकारः । **सः साधुः** सानुग्रहचित्तः । कथम् । **मित्रः न** मित्र इव देवताविशेषः । अथवा मित्र इति व्यत्ययेन पुल्लिङ्गता । मित्रम् इव । यथा यद्यस्य मित्रं तत्तस्योपरि साधु । एवं सर्वस्योपरीत्यर्थः । **भूत्** भवति । **अद्भुतस्य** महतो यज्ञस्य **रथीः** नेता । **तम्** एव **मेधेषु** यज्ञेषु **प्रथमम्** उत्कृष्टम् । **देवयन्तीः** देवान् कामयमानाः । **विशः** ब्राह्मणादिमनुष्यजातयः **उपब्रुवते** उपगम्य ब्रुवते यद्यद्विवक्षितम् । **दस्मम्** दर्शनीयम् उपक्षपयितारं वा तमसां शत्रूणां वा । कीदृश्यो विशः । उच्यते । **आरीः** अर्तेर्वा गत्यर्थस्य आङ्पूर्वस्य वा रातेर्दानार्थस्येदं रूपम् । अभिगन्त्र्यः दात्र्यो वा हविषामित्यर्थः ।। ३ ।।

**वेङ्कटमाधव– सः हि** कर्ता, **सः** मारकः, **सः** साधयिता सखेवाऽभूत् महतः नेता । **तम्** यज्ञेषु **प्रथमम्** देवयन्त्यः प्रजाः उप स्तुवन्ति दर्शनीयं, गन्त्र्यः ।। ३ ।।

**मुद्गल– सः हि** अग्निः, **क्रतुः** कर्मणां कर्ता । **सः** एव **मर्यः** मर्त्यः मारयिता विश्वस्योपसंहर्ता **साधुः** साधयितोत्पादयिताऽपि । **सः** एव **अद्भुतस्य** अलब्धस्य धनस्य **रथीः** रंहयिता प्रापयिता **भूत्** भवति । दृष्टान्तः । **मित्रः न** । यथा सखा धनानि प्रापयति तद्वत् । एवम्भूतो योऽग्निः **तम्** तमेव **मेधेषु** यज्ञेषु **देवयन्तीः** देवयन्त्यो देवानात्मन इच्छन्त्यः **विशः** प्रजाः **प्रथमम् उपब्रुवते** स्तुतिभिरुपेत्य प्रधानभूत इति कथयन्ति । कीदृश्यो विशः । **दस्मम्** दर्शनीयं **तम्** अग्निम् **आरीः** गच्छन्त्यः । भजन्त्य इत्यर्थः ।। ३ ।।

**सायण– सः हि** अग्निः, **क्रतुः** कर्मणां कर्ता । **सः** एव **मर्यः** मारयिता विश्वस्योपसंहर्ता **साधुः** साधयितोत्पादयिताऽपि । **सः** एव **अद्भुतस्य** अभूतस्यालब्धस्य धनस्य **रथीः** रंहयिता प्रापयिता **भूत्** भवति । दृष्टान्तः । **मित्रः न** । यथा सखा धनानि प्रापयति तद्वत् । एवम्भूतो

योऽग्निः **तम्** तमेव **मेधेषु** यज्ञेषु **देवयन्तीः** देवयन्त्यो देवानात्मन इच्छन्त्यः **विशः** प्रजाः **प्रथमम् उपब्रुवते** स्तुतिभिरुपेत्य प्रधानभूत इति कथयन्ति । कीदृश्यो विशः । **दस्मम्** दर्शनीयं **तम्** अग्निम् **आरीः** गच्छन्त्यः । भजन्त्य इत्यर्थः ।।

**मर्यः** । 'मृङ् प्राणत्यागे' अस्मात् अन्तर्भावितण्यर्थात् 'छन्दसि निष्टर्क्य' इत्यादौ निपातनात् यत् 'कृत्यल्युटो बहुलम्' इति बहुलवचनात् कर्तरि द्रष्टव्यः । 'यतोऽनावः' इत्याद्युदात्तत्वम् । **देवयन्तीः** 'वा छन्दसि' इति पूर्वसवर्णदीर्घत्वम् । **आरीः** 'ऋ गतौ' । 'जनिघसिभ्यामिण्' (उ.सू.४.५६९) इति बहुलग्रहणादस्मादपि इण्प्रत्ययः । 'कृतिकारादक्तिनः' इति ङीष् । 'वा छन्दसि' इति पूर्वसवर्णदीर्घत्वम् । व्यत्ययेनाद्युदात्तत्वम् ।। ३ ।।

**सिद्धाञ्जनम्–** तृतीयामृचमाह– **सः हि** स ह्यग्निः । **क्रतुः** अध्यवसायबलः, अत एव कर्मणां कर्ता । **सः मर्यः** स बलाढयः, **सः साधुः** साधयिता, निष्पादयितापि स एव । **मित्रः न** मित्र इव । सीरविभूतिरादित्यो यथा सुहृत् उपकारी भवति तथा **अद्भुतस्य रथीः** अद्भुतपद-वेदनीयस्य परमस्य ज्योतिषः सारथिः **भूत्** भवति । अद्भुतशब्दः सविस्तरं विचारितो भूमिकायां चतुर्थखण्डे । **तम्** एवम्भूतं अग्निं **मेधेषु** यज्ञेषु **देवयन्तीः** देवयन्त्यः देवानात्मन इच्छन्त्यः देवकामा इत्यर्थः । **विशः** प्रजाः **प्रथमम् उप ब्रुवते** आदौ उपेत्य हृद्गतां मन्त्ररूपां वाचं उच्चारयन्ति । कीदृश्यो विशः ? **दस्मम् आरीः** कर्मणां निष्पादकं तमग्निं प्रति अरणशीलाः उद्योगिनः आर्याः । एवमनवरतमुद्योगिनो भवन्ति ये मर्त्यास्ते प्रथमम् अग्निमेवोपासते । तन्मुखेन देवकामास्ते सफलोद्योगा भवन्ति ।। **मर्यः**- सविस्तरं विचारितः (१.६.३) । **देवयन्तीः** 'वा छन्दसि' इति पूर्वसवर्णदीर्घत्वम् । **आरीः** 'ऋ गतौ' 'जनिघसिभ्यामिण्' इति इण्प्रत्ययः । ततो ङीष् । पूर्ववत् पूर्वसवर्णदीर्घत्वम् ।। ३ ।।

## ऋक्संहिता पदपाठसहिता

**स नो॑ नृ॒णां नृत॑मो रि॒शादा॑ अ॒ग्निर्गिरोऽव॑सा वेतु धी॒तिम् ।**
**तना॑ च॒ ये म॒घवा॑नः॒ शवि॑ष्ठा॒ वाज॑प्रसूता इ॒षय॑न्त॒ मन्म॑ ।। ४ ।।**

**सः । नः॒ । नृ॒णाम् । नृऽत॑मः । रि॒शादा॑ः । अ॒ग्निः । गिर॑ः । अव॑सा । वे॒तु॒ । धी॒तिम् । तना॑ । च॒ । ये । म॒घऽवा॑नः । शवि॑ष्ठाः । वाज॑ऽप्रसूताः । इ॒षय॑न्त । मन्म॑ ।। ४ ।।**

**स्कन्द– सः, नः** अस्माकं स्वभूतानाम् । **नृणाम् नृतमः** मनुष्याणां मध्ये प्रकृष्टो मनुष्यः । देवा अपि हि मनुष्याकारत्वात् मनुष्या उच्यन्ते । **रिशादाः** रिशतामसिता क्षेप्ता । हिंसतां प्रतिहिंसितेत्यर्थः । **अग्निः, गिरः** स्तुतीः । **अवसा** हविर्लक्षणेनान्नेन सह **वेतु** कामयताम् । **धीतिम्** कर्म च यागाख्यम् । न च केवलानाम् अस्माकम् । किं तर्हि । **तना च** 'तना' (निघ.२,१०) इति धननाम । हविर्लक्षणेन धनेन । अन्येऽपि **ये मघवानः** धनवन्तः सन्तः । **शविष्ठाः** 'शवतिर्गतिकर्मा' (या.२,२) । अतिशयेनोपगन्तारः । **वाजप्रसूताः** 'षू प्रेरणे' । लिप्सितेनान्नेन प्रेरिताः । अन्नलाभार्थमित्यर्थः । **इषयन्त** 'इषु गतौ' गमयन्ति । उच्चारयन्तीत्यर्थः । **मन्म** मन्यतेरर्चतिकर्मण इदं रूपम् । मननम् । स्तुतिं ये इषयन्त तेषामपि गिरोऽवसा अग्निः वेतु धीतिं चेत्येवं तच्छब्दमध्याहृत्य यच्छब्दो निराकाङ्क्षीकर्तव्यः ।। ४ ।।

**वेङ्कटमाधव– सः** अस्माकं नेतॄणां वरिष्ठः रिशतामसिता अग्निः । स्तुतीः रक्षणार्थे कामयतां कर्म च । धनेन । ये धनवन्तः अतिशयेन बलिनः प्रेरितहविष्का ऐच्छन् । अग्ने स्तोत्रं तेषाम् अस्माकम् इति ।। ४ ।।

**मुद्गल– नृणाम्** यज्ञस्य नेतॄणां मध्ये **नृतमः** अतिशयेन नेता । **रिशादाः** रिशानां शत्रूणामत्ता भक्षयिता । एवंविधः **सः अग्निः नः** अस्माकम् **गिरः** स्तुतीः **अवसा** हविर्लक्षणेनान्नेन युक्ताम् । **धीतिं** कर्म च **वेतु** कामयताम् । अपि च ये यजमानाः, **तना** विस्तृतेन धनेन **मघवानः** धनवन्तः **शविष्ठाः** अतिशयेन बलिनश्च सन्तः **वाजप्रसूता** प्रसूतं प्रेरितं वाजो हविर्लक्षणमन्नं यैस्तादृशा भूत्वा **मन्म** अग्नेर्मननरूपं स्तोत्रम् । **इषयन्त** एषयन्ति ऋत्विग्भिः कारयितुमिच्छन्ति । तेषामपि स्तुतिमग्निः कामयतामिति भावः ।। ४ ।।

**सायण– नृणाम्** यज्ञस्य नेतॄणां मध्ये **नृतमः** अतिशयेन नेता । **रिशादाः** रिशानां शत्रूणामत्ता भक्षयिता । रिशतां हिंसताम् असिता निरसिता । एवंविधः **सः अग्निः नः** अस्माकम् **गिरः** स्तुतीः **अवसा** हविर्लक्षणेनान्नेन युक्तां **धीतिं** कर्म च **वेतु** कामयताम् । अपि च ये यजमानाः **तना** धननामैतत् । विस्तृतेन धनेन **मघवानः** धनवन्तः **शविष्ठाः** अतिशयेन बलिनश्च सन्तः **वाजप्रसूता** प्रसूतं प्रेरितं वाजो हविर्लक्षणमन्नं यैस्तादृशा भूत्वा **मन्म** अग्नेर्मननरूपं स्तोत्रम् । **इषयन्त** एषयन्ति ऋत्विग्भिः कारयितुमिच्छन्ति । तेषामपि स्तुतिमग्निः कामयतामिति भावः ।।

**नृणाम्** । 'नृ च' इति उभयथाभावाद् दीर्घाभावः । 'नामन्यतरस्याम्' इति नाम उदात्तत्वम् । **तना** । 'तनु विस्तारे' पचाद्यच् । तृतीयैकवचनस्य 'सुपां सुलुक्' इति आकारः । वृषादेराकृतिगणत्वादाद्युदात्तत्वम् । **शविष्ठाः** । शव इति बलनाम । 'अस्मायामेधा' इति मत्वर्थीयो विनिः। ततः आतिशायनिकः इष्ठन् । 'विन्मतोर्लुक्' इति विनो लुक् । 'टेः' इति टिलोपः । इष्ठनो नित्त्वादाद्युदात्तत्वम् । **इषयन्त** 'इषु इच्छायाम्' अस्मात् ण्यन्तात् छान्दसो लङ् । संज्ञापूर्वकस्य विधेरनित्यत्वात् णौ लघूपधगुणाभावः । अदुपदेशात् लसार्वधातुकानुदात्तत्वे णिच एव स्वरः शिष्यते ।। ४ ।।

**सिद्धाञ्जनम्–** चतुर्थीमृचमाह– **नृणां** नेतृणां बलवतां देवानां मध्ये **नृतमः** अतिशयेन बलवान् । **रिशादाः** हिंसकानां अत्ता भक्षयिता **सः अग्निः** उक्तगुणविशिष्ट अग्निः **अवसा** स्वीयेन सान्निध्यात्मना साहाय्येन साधनेन **नः** अस्माकं **गिरः** स्तुतिवाचः । **धीतिम्** धारणावर्ती प्रज्ञां च **वेतु** आविष्करोतु प्रविशतु वा । **ये च** ये पुनरन्ये देवाः इन्द्रादयः **तना** वितत्या स्ववैशाल्येने त्यर्थः । **मघवानः** दिव्यधनाः **शविष्ठाः** दीप्तबलाः सन्ति, तेऽपि **वाजप्रसूताः** वाजैः स्वीयसमृद्धिभिः प्रसूताः प्रेरिताः भूत्वा **मन्म** मननं मतिं **इषयन्त** एषयन्ति, मतेरेषणाबलं अनुगृह्णन्त्वित्यर्थः ।। **तना**- 'तनु विस्तारे, पचाद्यच्, तृतीयैकवचनस्य आकारः । **शविष्ठाः**-शवः दीप्तं बलं, मत्वर्थीयो विनिः, तत आतिशायनिक इष्ठन्, 'विन्मतोर्लुक्' इति विनो लुक् । **इषयन्त**- 'इष इच्छायाम्' अस्माण्ण्यन्तात् छान्दसो लङ् लोडर्थे ।। ४ ।।

## ऋक्संहिता पदपाठसहिता

**एवाग्निर्गोतमेभिर्ऋतावा विप्रेभिरस्तोष्ट जातवेदाः ।**
**स एषु द्युम्नं पीपयत्स वाजं स पुष्टिं याति जोषमा चिकित्वान् ।। ५ ।।**
एव । अग्निः । गोतमेभिः । ऋतऽवा । विप्रेभिः । अस्तोष्ट । जातऽवेदाः ।
सः । एषु । द्युम्नम् । पीपयत् । सः । वाजम् । सः । पुष्टिम् । याति । जोषम् । आ । चिकित्वान् ।। ५ ।।

**स्कन्द–** एवम् अस्माभिः **अग्निः गोतमेभिः ऋतावा विप्रेभिः अस्तोष्ट** स्तुतः **जातवेदाः** जातप्रज्ञानः । **सः एषु द्युम्नम् पीपयत्** एष्विति षष्ठ्यर्थे सप्तमी । 'द्युम्नम्' (निघ.२,१०) इति धननाम । सोऽग्निरेषाम् अस्माकं धनं वर्धयतु । **स एव वाजम्** अन्नम् । **स एव पुष्टिं**

**याति** यातिरत्रान्तर्णीतण्यर्थो द्रष्टव्यः । लोडर्थे च लट् । यातु ददात्वित्यर्थः । **जोषम्** 'जुषते हर्यति' (निघ.२,६) इति कान्तिकर्मसु पाठात् जोषशब्दोऽत्र कामवचनः । कामम् **आ चिकित्वान्** । प्रार्थनां जानन्नित्यर्थः ।। ५ ।।

**वेङ्कटमाधव–** एवम् **अग्निः** गोतमैः सत्यवान् ब्राह्मणैः **अस्तोष्ट** जातप्रज्ञः स गोतमेषु अन्नं बलञ्च वर्धयतु । स जोषं गमयति अभिलषितं जानन् इति ।। ५ ।।

**मुद्गल–** **ऋतावा** यज्ञवान् **जातवेदाः** जातधनोऽयम् । **अग्निः**, **विप्रेभिः** मेधाविभिः **गोतमेभिः** ऋषिभिः **एव** एवमुक्तेन प्रकारेण **अस्तोष्ट** स्तुतोऽभूत् । स्तुतश्च **सः** अग्निः **एषु** गोतमेषु **द्युम्नम्** द्योतमानं सोमम् **पीपयत्** अपिबत् । **सः** एव **वाजं** सोमलक्षणं चरुपुरोडाशादिलक्षणं हविश्च स्वीकरोतु । **सः** अग्निः **जोषम्** अस्माभिः कृतं सेवनम् **आ चिकित्वान्** आ समन्तात् जानन् **पुष्टिम् याति** पोषमाप्नोतु ।। ५ ।।

**सायण–** **ऋतावा** ऋतवान् यज्ञवान् । **जातवेदाः** जातधनो जातप्रज्ञो वा अयम् **अग्निः** **विप्रेभिः** मेधाविभिः **गोतमेभिः** गोतमैर्ऋषिभिः । एवम् उक्तेन प्रकारेण **अस्तोष्ट** स्तुतोऽभूत् । स्तुतश्च **सः** अग्निः **एषु** गोतमेषु **द्युम्नं** द्योतमानं सोमं **पीपयत्** अपिबत् । यद्वा । तानृषीन् अपाययत् । तथा **सः** अग्निः **वाजं** हविर्लक्षणमन्नं पीपयदित्येव । एवं सोमलक्षणं चरुपुरोडाशादि लक्षणं हविश्च स्वीकृत्य **सः** अग्निः **जोषम्** अस्माभिः कृतं सेवनम् **आ चिकित्वान्** आ समन्तात् जानन् **पुष्टिं** याति पोषं प्राप्नोतु । यद्वा । अस्माकं धनानि पोषं प्रापयतु ।। ५ ।।

**गोतमेभिः**- 'ऋष्यन्धकवृष्णिकुरुभ्यश्च' (पा.सू.१.१.११४) इति विहितस्य अणः 'अत्रिभृगुकुत्सवसिष्ठगोतमाङ्गिरोभ्यश्च' (पा.सू.२.४.१५) इति बहुषु लुक् । **अस्तोष्ट** । स्तौतेः कर्मणि लुकि चिणभावः छान्दसः । **पीपयत्** । 'पा पाने' ण्यन्तात् लुङि च्लेश्चङादि । **जोषम्** 'जुषी प्रीतिसेवनयोः' भावे घञ् । ञित्वादाद्युदात्तत्वम् ।। ५ ।।

**सिद्धाञ्जनम्–** पञ्चमीमृचमाह– **ऋतावा** सत्यवान् । **जातवेदाः** जातप्रज्ञः, मनुष्ये प्रबोधलाभात् । अधुना जातवेदस्त्वविशेषणमुपपन्नम् । **अग्निः** देवः **विप्रेभिः** विपश्चिद्भिः **गोतमेभिः** एतन्नामकैर्ऋषिभिः, चित्प्रकाशसम्पन्नैरिति ध्वनितं, गोः किरणवाचित्वात् ज्ञानप्रकाशसङ्केतकत्वाच्च **एव** एवम् **अस्तोष्ट** स्तुतः । **सः** स्तुतश्चासावग्निः **एषु** गोतमेषु **द्युम्नम्** द्योतमानं बलं **पीपयत्**

आप्याययति, पोषयति । पाययतीति सायणः । तर्हि मुख्यार्थस्य बाधात् लक्षणया पोषणमेवाभिप्रेतं ग्राह्यम् । **सः एषु** वाजम् समृद्धिं तथा **सः पुष्टिम्** पुनर्वर्धयति । **आ चिकित्वान्** सर्वतः प्रत्यक्षदर्शी ज्ञानवान् सोऽग्निः **जोषम्** प्रीतिं **याति** प्राप्नोति ॥

**गोतमेभिः** 'ऋष्यन्धकादिभ्यश्च' इति अण्विधेः 'अत्रिभृग्वादिभ्यश्च' इति बहुषु लुक् । **अस्तोष्ट** 'स्तौतेः कर्मणि लुङ्, चिणभावश्छान्दसः । **पीपयत्**- प्यायतेः णिचि छान्दसः पीभावः, एवं सायण एवान्यत्र प्यायतेर्निष्पादयति (१५३.३, १५३.४, १८१.५, ६) । **जोषम्** 'जुषी प्रीतिसेवनयोः' भावे घञ् । अरविन्दश्रीचरणैर्वेदरहस्यार्थप्रतिपादनाय सविस्तरव्याख्यमुदाहृतानां सूक्तानामिदमेकम् । यद्यपि विस्तरभिया नेह तत्सर्वमुक्तम्, तथापि तत्तात्पर्यानुसारेणेदं पञ्चर्चं व्याख्यातम् ॥ ५ ॥

**॥ इति प्रथमाष्टके पञ्चमाध्याये पञ्चविंशो वर्गः ॥**

## ॥ अथ षड्विंशो वर्गः ॥

## ऋक्संहिता पदपाठसहिता

**(सूक्तम् ७८)**

**५ गोतमो राहूगणः । अग्निः गायत्री ।**

**अभि त्वा गोतमा गिरा जातवेदो विचर्षणे । द्युम्नैरभि प्र णोनुमः ॥ १ ॥**
**अभि । त्वा । गोतमाः । गिरा । जातऽवेदः । विऽचर्षणे । द्युम्नैः । अभि । प्र । नोनुमः ॥**

**स्कन्द–** 'अभि' इत्युपसर्गः । **अभि प्रणोनुम** इत्याख्यातेन सम्बध्यते । **त्वा** त्वाम् वयं, **गोतमाः** गोतमनामानः । **गिरा**, हे **जातवेदः** विद्रष्टव्य! **द्युम्नैः** धनैः गोभिरन्नैर्वा हेतुभूतैः । धनादिलाभार्थमित्यर्थः । **अभि अभि प्रणोनुमः** । नौतिरर्चतिकर्मा (तु.निघ.३,१४) । यत्र पौनः पुन्येन उपसर्गाभ्यासः तत्र तत्सम्बन्धिनः क्रियापदस्याप्यभ्यासो द्रष्टव्यः । अभिप्रणोनुमोऽभिप्रणोनुम इति । 'अभ्यासे भूयांसमर्थं मन्यन्ते, यथा 'अहो दर्शनीय! अहो दर्शनीय' (या.१०,४२) इति । सुष्ठु पुनः पुनाभिष्टुम इत्यर्थः ॥ १ ॥

**वेङ्कटमाधव–** आभिमुख्येन प्रकर्षेण स्तुमः । त्वाम् **गोतमाः** वयम् । **गिरा, जातवेद** विद्रष्टः! अन्नार्थम् । अभिः द्वितीयास्मारकः ॥ १ ॥

**मुद्गल–** 'अभि त्वा' इति पञ्चर्चं पञ्चमं सूक्तम् । गोतम ऋषिः । गायत्री छन्दः । अग्निर्देवता ।। हे **जातवेदः!** जातानां वेदितः । **विचर्षणे!** विशेषेण सर्वस्य द्रष्टः! एवम्भूताग्ने! **त्वा** त्वाम् । **गोतमाः** अस्य सूक्तस्य द्रष्टा गोतम ऋषिः । ऋषेरेकत्वेऽपि पूजार्थं बहुवचनम् । **गिरा** स्तोत्रलक्षणया वाचा । **अभि** आभिमुख्येन,अस्तौदिति शेषः । तद्वत् वयमपि त्वाम् **द्युम्नैः** त्वदीयगुणप्रकाशकैर्मन्त्रैः **अभि प्रणोनुमः** आभिमुख्येन पुनः पुनः स्तुमः ।। १ ।।

**सायण–** हे **जातवेदः!** जातानां वेदितः! **विचर्षणे** विशेषेण सर्वस्य द्रष्टः! एवम्भूताग्ने! **त्वा** त्वाम् । **गोतमाः** अस्य सूक्तस्य द्रष्टा गोतम ऋषिः । ऋषेरेकत्वेऽपि पूजार्थं बहुवचनम् । **गिरा** स्तोत्रलक्षणया वाचा । **अभि** आभिमुख्येन । अस्तौदिति शेषः । तद्वद्वयमपि त्वां **द्युम्नैः** त्वदीयगुणप्रकाशकैर्मन्त्रैः **अभि प्र णोनुमः** आभिमुख्येन पुनःपुनः स्तुमः ।। **नोनुमः** । 'णु स्तुतौ' अस्मात् यङ्लुङन्तात् लट् । 'उपसर्गादसमासेऽपि' इति णत्वम् ।। १ ।।

**सिद्धाञ्जनम्–** 'अभि त्वा' इति पञ्चर्चं पञ्चमं सूक्तं गोतमस्यार्षमाग्नेयं गायत्रम् । तथा चानुक्रान्तम्- 'अभि त्वा गायत्रं तु' इति । विनियोगो लैङ्गिकः ।।

तत्र प्रथमामृचमाह– हे **जातवेदः** जातानां वेदितः! **विचर्षणे** विशेषेण सर्वस्य द्रष्टः, अग्ने! **गोतमाः** एतदाख्या वयं ऋषयः । **त्वा** त्वाम् **गिरा** स्तुत्या **अभि** आभिमुख्येन स्तुमः । न केवलं गिरा वाचा स्तुमः, किन्तु **द्युम्नैः** द्योतमानः बलः त्वत्प्रसादाल्लब्धः तुभ्यमेवाधुना समर्प्यमाणः अभिं प्रणोनुमः । पूर्वसूक्तस्य अन्तिमर्चि 'जातवेदाः आ चिकित्वान् एषु द्युम्नं वाजं पीपयत्' इति पठितं अनावधेयम् । तान्येव पदानि तदर्थानि वा प्रयुक्तान्यत्र । तत्र आचिकित्वान् अत्र विचर्षण इति। अग्निना आप्यायितं द्युम्नं अग्नये समर्प्य बहुशः स्तौति मन्त्रद्रष्टा । 'बाज पीपयत्' इति पूर्वमुक्तम् । अत्र तृतीयर्चि 'वाजसातमम्' इति विशेषणं साकूतं बोध्यम् ।। **नोनुमः**- णु स्तुतौ अस्माद् यङ्लुगन्ताल्लट् ।। १ ।।

## ऋक्संहिता पदपाठसहिता

**तमु॑ त्वा॒ गोत॑मो गि॒रा रा॒यस्का॑मो दुव॒स्यति । द्यु॒म्नैर॒भि प्र णो॑नुमः ।। २ ।।**

तम् । ऊँ इति॑ । त्वा॒ । गोत॑मः । गि॒रा । रा॒यःऽका॑मः । दु॒व॒स्य॒ति॒ । द्यु॒म्नैः । अ॒भि । प्र । नो॒नु॒मः॒ ।। २ ।।

**स्कन्द–** उकारः पदपूरणः । य उक्तगुणोऽसि, **तम् त्वा, गोतमः, गिरा रायस्कामः** धनकामः **दुवस्यति** परिचरति । स्तौतीत्यर्थः । परस्तु पाद आध्यात्मिकत्वात् बहुवचनयोगाच्च भिन्नं वाक्यम् । तेन तुल्यार्थत्वेऽप्यपुनरुक्तता ।। २ ।।

**वेङ्कटमाधव– तम् त्वाम्, गोतमः** स्तुत्या धनकामः परिचरति । वचनयोरुक्ता सद्गतिः ।।

**मुद्गल– रायस्कामः** धनकामः । **गोतमः** यम् अग्निं, **गिरा** स्तुत्या **दुवस्यति** परिचरति, **तमु** तमेव **त्वा** त्वाम् **द्युम्नैः** द्योतमानैः स्तोत्रैः **अभि प्र णोनुमः** आभिमुख्येन पुनःपुनः स्तुमः ।।

**सायण– रायस्कामः** धनकामः । **गोतमः** यम् अग्निं, **गिरा** स्तुत्या **दुवस्यति** परिचरति, **तमु** तमेव **त्वा** त्वाम् **द्युम्नैः** द्योतमानैः स्तोत्रैः **अभि प्र णोनुमः** आभिमुख्येन पुनःपुनः स्तुमः ।। **रायस्कामः** । रायो धनानि कामयते इति रायस्कामः । 'कर्मण्यण्' । 'तत्पुरुषे कृति बहुलम्' इति बहुलवचनात् अलुक् । 'ऊडिदम्' इत्यादिना पूर्वपदस्य विभक्तेरुदात्तत्वम् । दासीभारादित्वात् पूर्वपदप्रकृतिस्वरत्वम् । 'अतः कृकमिकंसकुम्भ..' (पा.सू.८.३.४६) इति विसर्जनीयस्य सत्वम् । **दुवस्यति** 'दुवस उपतापे परिचरणे च' । कण्ड्वादिः ।। २ ।।

**सिद्धाञ्जनम्–** द्वितीयामृचमाह– **रायस्कामः** धनकामः दिव्यसम्पत्काम इति रहस्यार्थः । **गोतमः** ऋषिरयं, **तम् त्वा** तथाभूतं पूर्वोक्तविधानुग्रहकारिणं त्वां **गिरा दुवस्यति** परिचरति । शिष्टं गतम् ।। **रायस्कामः**- रायो धनानि कामयते, 'तत्पुरुषे कृति बहुलम्' इति लुक्, विसर्जनीयस्य सत्वम् । **दुवस्यति**-परिचरणार्थकः कण्ड्वादिः ।। २ ।।

## ऋक्संहिता पदपाठसहिता

**तमु॑ त्वा वाज॒सात॑म॒मङ्गि॑रस्वद्धवामहे । द्यु॒म्नैर॒भि प्र णो॑नुमः ।। ३ ।।**

**तम् । ऊँ इति॑ । त्वा॒ । वा॒ज॒ऽसात॑मम् । अ॒ङ्गि॒र॒स्वत् । ह॒वा॒म॒हे॒ । द्यु॒म्नैः । अ॒भि । प्र । नो॒नु॒मः॒ ।। ३ ।।**

**स्कन्द– तम् त्वा वाजसातमम्,** 'षणु दाने' अन्नानां दातृतमं सम्भक्तृतमं वा हविर्लक्षणानाम् अन्नानाम् । **अङ्गिरस्वत् हवामहे** । आहूय च **द्युम्नैः अभि प्र णोनुमः** ।। ३ ।।

**वेङ्कटमाधव– तम्** त्वामतिशयेनान्नानां दातारम् । **अङ्गिरस्वत् हवामहे** ।। ३ ।।

**मुद्गल–** हे अग्ने! **वाजसातमम्** वाजानाम् अन्नानाम् अतिशयेन सनितारं दातारम् **तमु** तमेव **त्वा** त्वाम् **अङ्गिरस्वत्** अङ्गिरस इव **हवामहे** आह्वयामः । **द्युम्नैः** । 'शिष्टं पूर्ववत्' ।।

**सायण–** हे अग्ने! **वाजसातमम्** वाजानाम् अन्नानाम् अतिशयेन सनितारं दातारम् **तमु** तमेव **त्वा** त्वाम् **अङ्गिरस्वत्** अङ्गिरस इव **हवामहे** आह्वयामः । शिष्टं गतम् ।। **वाजसातमम्** 'षणु दाने' 'जनसनखनक्रमगमो विट्' । 'विड्वनोरनुनासिकस्यात्' इति आत्वम् । अतिशयेन वाजसा वाजसातमः । तमपः पित्त्वादनुदात्तत्वे कृदुत्तरपदप्रकृतिस्वर एव शिष्यते । अङ्गिरस्वत् । 'तेन तुल्यम्' इति वतिः । 'नमोऽङ्गिरोमनुषां वत्युपसंख्यानम्' (पा.सू.१.४.१८.३) इति भत्वेन पदत्वाभावाद् रुत्वाद्यभावः ।। २ ।।

**सिद्धाञ्जनम्–** तृतीयामृचमाह– हे अग्ने! **वाजसातमम्** वाजानां समृद्धीनां अतिशयेन सनितारं दातारं, **तमु त्वा** तमेव त्वां, **अङ्गिरस्वत्** अङ्गिरसः पूर्वे पितरः प्रसिद्धा ऋषय इव **हवामहे** आह्वयामः । शिष्टं गतम् ।। **अङ्गिरस्वत्**- 'तेन तुल्यं क्रिया चेत्' इति वतिः ।।

## ऋक्संहिता पदपाठसहिता

**तमु त्वा वृत्रहन्तमं यो दस्यूँरवधूनुषे । द्युम्नैरभि प्र णोनुमः ।। ४ ।।**

**तम् । ऊँ इति । त्वा । वृत्रहन्ऽतमम् । यः । दस्यून् । अवऽदूनुषे । द्युम्नैः । अभि । प्र । नोनुमः ।। ४ ।।**

**स्कन्द–** **यः दस्यून्** अनार्यान् **अवधूनुषे** 'धूञ् कम्पने' भयेन कम्पयसि, **तमु त्वा वृत्रहन्तमम्** शत्रूणां हन्तृतमम् । **द्युम्नैः** ।। ४ ।।

**वेङ्कटमाधव–** **तम्** एव **त्वाम्** अतिशयेनोपद्रवाणां हन्तारम् । यः त्वं राक्षसान् अवधुनोषि ।।

**मुद्गल–** हे अग्ने! **दस्यून्** उपक्षपयितॄन् राक्षसादीन्, **यः** त्वम् **अवधूनुषे** अवचालयसि स्थानात्प्रच्यावयसि । **वृत्रहन्तमम्** वृत्राणां पाप्मनाम् अतिशयेन हन्तारम् **तमु त्वा** तमेव त्वाम् । **द्युम्नैः** । शिष्टं पूर्ववत् ।। ४ ।।

**सायण–** हे अग्ने! **दस्यून्** उपक्षपयितॄन् राक्षसादीन्, **यः** त्वम् **अवधूनुषे** अवचालयसि स्थानात्प्रच्यावयसि । **वृत्रहन्तमम्** वृत्राणां पाप्मनाम् अतिशयेन हन्तारम् **तमु त्वा** तमेव त्वाम् ।

**द्युम्नैः** इत्यादि पूर्ववत् ।। **वृत्रहन्तमम्** । अतिशयेन वृत्रहा वृत्रहन्तमः । पदसंज्ञायां नलोपे 'नाद्धस्य' (पा.सू.८.२.१७) इति तमपो नुट् । **दस्यून्** । 'दीर्घादटि समानपादे' इति नकारस्य रुत्वम् । 'अत्रानुनासिकः पूर्वस्य तु वा' इति उकारः सानुनासिकः ।। ४ ।।

**सिद्धाञ्जनम्–** चतुर्थीमृचमाह– हे अग्ने! **दस्यून्** उपक्षपयितॄन् राक्षसादीन् **यः** यस्त्वम् **अवधूनुषे** अवचालयसि अधः पातयसि, **वृत्रहन्तमम्** अतिशयेन वृत्राणां तमसां पाप्मनां हन्तारं **तमु त्वा** तमेव त्वां **नोनुम** इति सम्बन्धः । शिष्टं गतम् ।। ४ ।।

## ऋक्संहिता पदपाठसहिता

**अवो॑चाम॒ रहू॑गणा अ॒ग्नये॒ मधु॑म॒द्वचः॑ । द्यु॒म्नैर॒भि प्र णो॑नुमः ।। ५ ।।**

अवो॑चाम । रहू॑गणाः । अ॒ग्नये॑ । मधु॑ऽमत् । वचः॑ । द्यु॒म्नैः । अ॒भि । प्र । नो॒नु॒मः॒ ।।५।।

**स्कन्द–** पूर्वं तावत् **अवोचाम** उक्तवन्तो वयम् **रहूगणाः** रहूगणस्य पुत्राः **अग्नये** मधुरं **मधुमत्** प्रीतिकरं स्तुतिलक्षणम् **वचः** । इदानीमपि **द्युम्नैः अभि प्र णोनुमः** ।। ५ ।।

**वेङ्कटमाधव–** उक्तवन्तः रहूगणपुत्राः **अग्नये** रसवत् स्तोत्रम् । **द्युम्नैः** च **अभि** प्रणोनुमः ।।

**मुद्गल–** ऋषिः कृतं स्तोत्रमनयोपसंहरति । **रहूगणाः** रहूगणस्य पुत्रा वयं गोतमाः **अग्नये** अन्नादिगुणयुक्ताय देवाय **मधुमत् वचः** माधुर्योपेतं वचनम् अवोचाम प्रावादिष्म । तद्वचनरूपैः **द्युम्नैः** द्योतमानैः स्तोत्रैः पुनःपुनरग्निं वयम् **अभि प्रणोनुमः** आभिमुख्येन प्रकर्षेण स्तुमः ।। ५ ।।

**सायण–** ऋषिः कृतं स्तोत्रमनयोपसंहरति । **रहूगणाः** रहूगणस्य पुत्रा वयं गोतमाः **अग्नये** अङ्गनादिगुणयुक्ताय देवाय **मधुमद्वचः** माधुर्योपेतं वचनम् **अवोचाम** प्रावादिष्म । तद्वचनरूपैः **द्युम्नैः** द्योतमानैः स्तोत्रैः पुनःपुनरग्निं वयम् **अभि प्र णोनुमः** आभिमुख्येन प्रकर्षेण स्तुमः ।।

**सिद्धाञ्जनम्–** पञ्चमीमृचमाह– **रहूगणाः** रहूगणस्य पुत्राः वयं गोतमाः **अग्नये** देवाय **मधुमत्** माधुर्ययुक्तं **वचः** स्तोत्रं **अवोचाम** अवादिष्म । शिष्टं गतम् ।। ५ ।।

।। इति प्रथमाष्टके पञ्चमाध्याये षड्विंशो वर्गः ।।

## ।। अथ सप्तविंशो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

(सूक्तम् ७९)

१२ गोतमो राहूगणः । १-३ अग्निः मध्यमोऽग्निर्वा; ४-१२ अग्निः ।
१-३ त्रिष्टुप्; ४-६ उष्णिक्; ७-१२ गायत्री ।

**हिरण्यकेशो रजसो विसारेऽहिर्धुनिर्वातइव ध्रजीमान् ।**
**शुचिभ्राजा उषसो नवेदा यशस्वतीरपस्युवो न सत्याः ।। १ ।।**
**हिरण्यऽकेशः । रजसः । विऽसारे । अहिः । धुनिः । वातःऽइव । ध्रजीमान् ।**
**शुचिऽभ्राजाः । उषसः । नवेदाः । यशस्वतीः । अपस्युवः । न । सत्याः ।। १ ।।**

**स्कन्द–** 'तृचो हिरण्यकेशादिरग्नये मध्यमाय वा' । अयं तृचो हिरण्यकेशादिः मध्यमाय वा वैद्युताग्नये पार्थिवायैव वा पूर्वप्रकृताय । उज्ज्वलवर्णतया हिरण्यसदृशी दीप्तिर्यस्य सः **हिरण्यकेशः** अग्निः । **रजसः** उदकस्य **विसारे** विगमनकाले । वृष्टिकाले इत्यर्थः । **अहिः धुनिः** 'अहिः' (निघ.१,१०) इति मेघनाम । षष्ठ्यर्थे चैषा प्रथमा । मेघस्य धूनयिता कम्पयिता । वृष्टिकाले वैद्युतोऽग्निर्वर्षितेत्यर्थः । कीदृशः । उच्यते । **वात इव ध्रजीमान्** ध्रजिर्गतिकर्मा (तु.निघ. २,१४) । गतिमान् । अत्यन्तशीघ्रगतिरित्यर्थः । **शुचिभ्राजाः** शुद्धदीप्तिः । क इव । **उषसः नवेदाः यशस्वतीः अपस्युवः न सत्याः** 'अपस्युवो न' इति नशब्द उपमायाम् । शिष्टानि तूपमानभूतानाम् उषसां विशेषणानि । यथोषसः नवेदाः मेधाविनामैतत् (तु.निघ.३,१५) । व्यत्ययेन चात्रैकवचनम् । मेधाविन्यः ।

**यशस्वतीः** कीर्तिमत्यः हविर्लक्षणेन च धनेन धनवत्यो वा । **अपस्युवो** यागकर्मकामाः । सत्याः अविसंवादिन्यः शुचिभ्राजसः तद्वत् । अथवा नवेदा इत्येकवचननिर्देशाद् उपमेयस्याग्नेः विशेषणम् । यशस्वतीरित्यादिगुणाः यथोषसः शुचिभ्राजसः तद्वन्मेधावी अग्निः शुचिभ्राजाः इत्येवं मध्यमेऽग्नौ योजना । पार्थिवे तु उदकं विसार्यते येन स रजसो विसारः यज्ञः । अहिरिति आङ्पूर्वस्य हि गतावित्यस्य रूपम् । वृष्टिहेतौ यज्ञे पार्थिवोऽग्निराहवनीयात्मनाङ्गभावं गन्तेत्यर्थः । **धुनिः** कम्पिता स्वयं भयेन वा कम्पयिता शत्रूणाम् । शिष्टपदयोजना तु सदृशी ।। १ ।।

**वेङ्कटमाधव–** हिरण्यसदृशरश्मिः उदकस्य **विसारे** अन्तरिक्षे आहन्ता कम्पयिता **वात इव**

गमनवान् निर्मलदीप्तिः **उषसः** अजानन् अन्नवतीः । **कर्मेच्छव** इव सत्यभूताः । यथा कर्मणः कर्तार फलेन युज्यन्ते ।। १ ।।

**मुद्गल–** 'हिरण्यकेश' इति द्वादशर्चं षष्ठं सूक्तम् । रहूगणपुत्रस्य गोतमस्यार्षम् । पूर्वत्र 'गायत्रं तु' इत्युक्तत्वादिदमपि गायत्रं सूक्तम् । एतावांस्तु विशेषः । आद्यस्तृचस्त्रैष्टुभः, द्वितीयस्त्वौष्णिहः । प्रथमतृचस्य मध्यमस्थानो वैद्युतोऽग्निः शुद्धाग्निर्वा देवता । शिष्टा नवर्चः केवलाग्निदेवताकाः ।।

**हिरण्यकेशः** हितरमणीया केशस्थानीया ज्वाला यस्य स तथोक्तः । सुवर्णवद्रोचमानज्वालो वा । **अहिः** आगत्य हन्ता मेघानाम् **धुनिः** तेषां कम्पयिता **वात** इव वायुरिव **ध्रजीमान्** शीघ्रगतियुक्तः । एवम्भूतो वैद्युतोऽग्निः **रजसः** उदकस्य **विसारे** विसरणे मेघान्निर्गमने निमित्तभूते सति **शुचिभ्राजाः** शोभनदीप्तिः सन् मेघाज्जलानि निर्गमयितुं जानाति । **उषसः** उषोदेवता **नवेदाः** न विदन्ति इति नवेदाः । मेघादुदकस्य निस्सारणम् अग्निरेव जानाति, उषसस्तु न जानन्तीत्यर्थः । अज्ञाने दृष्टान्तः । **यशस्वतीः** अन्नयुक्ता अन्नवत्यः **अपस्युवः** अपः कर्म आत्मन इच्छन्त्यः **सत्याः** अवितथारम्भा न एवम्भूता प्रजा इव । अत्र उषसाम् अज्ञानेनाग्निः प्रशस्यते न तु ता निन्द्यन्ते । 'न हि निन्दा निन्द्यं निन्दितुम् अपि तु स्तुत्यं स्तोतुम्' इति न्यायात् ।। १ ।।

**सायण–** 'हिरण्यकेशः' इति द्वादशर्चं षष्ठं सूक्तम् । रहूगणपुत्रस्य गोतमस्यार्षम् । अत्रानुक्रम्यते 'हिरण्यकेशो द्वादशाद्यौ तृचौ त्रैष्टुभौष्णिहौ पूर्वोऽग्नये वा मध्यमाय' इति । पूर्वत्र 'गायत्रं तु' इत्युक्तत्वादिदमपि गायत्रं सूक्तम् । एतावांस्तु विशेषः । आद्यस्तृचस्त्रैष्टुभः । द्वितीयस्त्वौष्णिहः । प्रथमतृचस्य मध्यमस्थानो वैद्युतोऽग्निः शुद्धाग्निर्वा देवता । शिष्टा नवर्चः केवलाग्निदेवताकाः । प्रातरनुवाकस्याग्नेये क्रतौ त्रैष्टुभे छन्दस्याश्विनशस्त्रे चाद्यस्तृचः । सूत्रितं च- 'हिरण्यकेश इति तिस्रोऽपश्यमस्य महत इति सूक्ते' (आश्व.श्रौ.४.१३) इति । कारीर्यामग्नेर्धामच्छदो हिरण्यकेश इति द्वे ऋचौ याज्यानुवाक्ये । सूत्रितं च-'हिरण्यकेशो रजसो विसार इति द्वे त्वं त्या चिदच्युता धामन्ते विश्वं भुवनमधि श्रितमिति वा' (आश्व.श्रौ.२.१३) इति ।।

**हिरण्यकेशः** हितरमणीया केशस्थानीया ज्वाला यस्य स तथोक्तः । सुवर्णवद्रोचमानज्वालो वा । **अहिः** आगत्य हन्ता मेघानाम् **धुनिः** तेषां कम्पयिता **वात** इव वायुरिव **ध्रजीमान्**

शीघ्रगतियुक्तः । एवम्भूतो वैद्युतोऽग्निः **रजसः** उदकस्य **विसारे** विसरणे मेघान्निर्गमने निमित्तभूते सति **शुचिभ्राजाः** शोभनदीप्तिः सन् मेघाज्जलानि निर्गमयितुं जानाति । **उषसः** उषोदेवता **नवेदाः** न विदन्ति इति नवेदाः । मेघादुदकस्य निस्सारणम् अग्निरेव जानाति, उषसस्तु न जानन्तीत्यर्थः । अज्ञाने दृष्टान्तः । **यशस्वतीः** अन्नयुक्ता अन्नवत्यः **अपस्युवः** अपः कर्म आत्मन इच्छन्त्यः **सत्याः** अवितथारम्भा न एवम्भूता प्रजा इव । अत्र उषसाम् अज्ञानेनाग्निः प्रशस्यते न तु ता निन्द्यन्ते । 'न हि निन्दा निन्द्यं निन्दितुम् अपि तु स्तुत्यं स्तोतुम्' इति न्यायात् ॥

**ध्रजीमान्** 'ध्रज गतौ' 'इन्सर्वधातुभ्यः' इति भावे इन्प्रत्ययः । ततो मतुप् । तस्य पित्त्वादनुदात्तत्वे इनो नित्त्वात् प्रातिपदिकस्याद्युदात्तत्वम् । **नवेदाः** । नपूर्वाद् वेत्तेः पचाद्यच् । 'नभ्राण्नपात्' इत्यादिना नञः प्रकृतिभावः । **अपस्युवः** । अपशब्दात् 'सुप आत्मनः क्यच्' 'क्याच्छन्दसि' इति उप्रत्ययः । 'तन्वादीनां छन्दसि बहुलमुपसंख्यानम्' (वार्तिकम्) (पा.सू. ६.५.७७.१) इति उवङ् ॥ १ ॥

**सिद्धाञ्जनम्–** 'हिरण्यकेश' इति द्वादशर्चं षष्ठं सूक्तम् । प्रथमतृचस्त्रैष्टुभः, द्वितीय औष्णिहः, शिष्टानां षण्णामृचां गायत्रीछन्दः । अग्निर्देवता । प्रथमतृचस्य शुद्धाग्निर्मध्यमस्थानो वैद्युताग्निर्वा देवतेति पूर्वे । शुद्धाग्निरिति चेदलम् अस्माकं, स न केवलं भौतिकः वैद्युतो वा, तस्य सर्वदेवात्मकत्वात् । अमृतस्य तस्य मर्त्ये प्रथमं ऋतुरूपेणाविर्भावात्, आद्ये तृचे भुवि दिवि मध्यमेऽन्तरिक्षे च तस्य त्रिधा वर्णनात् ॥

तत्र प्रथमामृचमाह– **रजसः** अन्तरिक्षस्य **विसारे** विस्तारे नभोविताने । **हिरण्यकेशः** हिरण्यवर्णाः सुवर्णवद्रोचमानाः केशाः केशस्थानीयाः ज्वालाः यस्य सः । अग्नेर्ज्वालानां आदित्यवर्णत्ववर्णनेन तस्य तृतीयस्थानगतं दिव्यं वैभवं द्योतितम् । अथ मध्यमस्थाने स कीदृशः ? **अहिः** मेघः तदुपलक्षितसर्पाकारविद्युद्रूपः **धुनिः** कम्पयिता मेघानामिति शेषः **वात इव** वायुरिव **ध्रजीमान्** शीघ्रगतियुक्तः । उत्तरार्धेन प्रथमस्थानसम्बन्धिनमाह । **शुचिभ्राजाः** शोभनदीप्तियुक्तः **उषसः** उषोवेलाः **नवेदाः** ज्ञाता । कविमनीषीत्यादिषु पठितः, विचारितश्च (१.३४.१) उषसो वेदिता प्रभातसमयज्ञानवान् । कीदृशीरुषसः ? **यशस्वतीः** ख्यातिमतीः **अपस्युवः न** अपः कर्म आत्मन इच्छन्तीः कर्मकारिणीरिव **सत्याः** सत्यधर्मानुसारिणीः 'ऋतस्य पत्यामन्वेति साधु' इत्युक्तविधया ऋतपथम् अप्रमादेन अनुवर्तमानाः हि उषसः । अत एव तथा ख्यातिमत्यः

यथोचितकालं कर्मकारिण्य इव प्रभान्ति उषसः । ऊर्ध्वगतो हिरण्यज्वालोऽपि मध्यस्थितौ **वात इव ध्रजीमान् धुनिरपि** प्रथमस्थाने भुवि **शुचिभ्राजाः** उषसां प्रादुर्भावसमयं जानाति **नवेदाः** अग्निः ।। अयं बाह्यपक्षानुसारेणार्थः प्रोक्तः । अथेदमस्य रहस्यं भवति । मर्त्ये क्रतुरग्निरमृतो यदा प्रबुद्धो ज्वलन्नूर्ध्वं गच्छति तदा तस्य ज्वाला दिवं शुद्धमानसचैतन्यभुवं स्पृशन्ती आदित्यवर्णा भवति, सत्यस्य ज्योतिषो विसारं स्वीकृत्य भ्राजते । प्राणलोकविभवभूयिष्ठे मध्यमस्थाने सोऽग्निरन्तर्ज्वलन्नेव ज्योतिर्बलादीनामावरकं वृत्रं मेघं वर्षणाय कम्पयन् क्रिमावेगवान् विद्योतते । अथ जागरितस्थानेऽत्र बहिःप्रज्ञे पुरुषे चिन्मयारुणोदयसमयानां ज्ञाता जागरूको जागर्ति । एवंविधावर्तनमग्नेः प्रकाशितमस्यामृचि । अस्य तृचस्य द्वितीय-तृतीयऋग्भ्यां अयमर्थः सङ्गच्छते ।। स्थूलार्थोऽपि अस्माभिरेव प्रथममुक्तः ।

तत्र सायणव्याख्यानस्य दुर्घटत्वात् चिन्तकानां निरीक्षणायेह सायणभाष्यपङ्क्तीरुदाहरिष्यामः । ''हिरण्यकेशः...अहिः आगत्य हन्ता मेघानां धुनिः...वात इव ध्रजीमान् ...एवम्भूतो वैद्युतोऽग्निः रजस उदकस्य विसारे विसरणे मेघानिस्सरणे निमित्तभूते सति शुचिभ्राजाः...सन् मेघाज्जलानि निर्गमयितुं जानाति । उषसः उषोदेवताः नवेदाः न विदन्तीति नवेदाः । मेघादुदकस्य निस्सरणं अग्निरेव जानाति उषसस्तु न जानन्तीत्यर्थः । अज्ञाने दृष्टान्तः- यशस्वतीः अन्नयुक्ताः अन्नवत्यः अपस्युवः...सत्याः अवितथारम्भाः न एवंभूताः प्रजा इव । अत्रोषसामज्ञानेनाग्निः प्रशस्यते न तु ता निन्द्यन्ते, न हि निन्दा निन्द्यं निन्दितुं अपि तु स्तुत्यं स्तोतुमिति न्यायात्'' । प्रसङ्ग-वशादिदमत्र वक्तव्यं यदस्मत्पूर्वाचार्यैर्वासिष्ठपादैरभिहितम् 'अयं मन्त्रो व्याख्यानस्यागम्य-गोचरोऽभूत्, यथा कथञ्चित् अध्याहारैरपार्थैश्च वाक्यं पूरितम् (सायणीये)' इति ।। **ध्रजीमान्-** 'ध्रज गतौ' 'इन् सर्वधातुभ्यः' इति भावे इन्प्रत्ययः । **नवेदाः-** गतम् । **अपस्युवः-** अपस्शब्दात् 'सुप आत्मनः क्यच्' 'क्याच्छन्दसि' इति उप्रत्ययः । 'तन्वादीनां छन्दसि बहुलमुपसंख्यानम्' इति उवङ् ।। १ ।।

## ऋक्संहिता पदपाठसहिता

**आ ते॑ सु॒प॒र्णा अ॑मिनन्तँ ए॒वैः कृ॒ष्णो नो॑नाव वृ॒ष॒भो यदी॒दम् ।**
**शि॒वाभि॒र्न स्मय॑मानाभि॒रागा॒त्पत॑न्ति॒ मिहः॑ स्त॒नय॑न्त्य॒भ्रा ।। २ ।।**
आ । ते॒ । सु॒ऽप॒र्णाः । अ॒मि॒न॒न्त॒ । ए॒वैः । कृ॒ष्णः । नो॒ना॒व॒ । वृ॒ष॒भः । यदि॑ । इ॒दम् ।
शि॒वाभिः॑ । न । स्मय॑मानाभिः । आ । अ॒गा॒त् । पत॑न्ति । मिहः॑ । स्त॒नय॑न्ति । अ॒भ्रा ।।

**स्कन्द–** **ते** इति तादर्थ्ये चतुर्थी षष्ठी वा । तवार्थाय तव वा । स्वभूतान् रसान् । **सुपर्णा** रश्मिनामैतत् (निघ.१,५) । आदित्यरश्मयः । **आ अमिनन्त** 'मीञ् हिंसायाम्' मर्यादया हिंसन्ति । आददत इत्यर्थः । **एवैः** अवनैः । गत्वा भुवं ततो रसानाददत इत्यर्थः । **कृष्णः नोनाव वृषभः** कृष्णवर्णश्च वर्षिता मेघः नोनाव । नौतिरत्र सामर्थ्याच्छाब्दनार्थः । गर्जितलक्षणेन शब्देनात्यर्थं पुनः पुनर्वा शब्दयति । **इदम्** जगत् । **यदि** शब्दस्तु पदपूरणो वा, यदिशब्द-श्रुतिसामर्थ्याद्वा पूर्वस्मिन् पादे 'ततः' इत्यध्याहार्यम् । कृष्णो नोनाव वृषभो यदि ततः सुपर्णा अभिनन्तेति । यदि मेघः वर्षति गर्जति च ततो रसान् रश्मय आददत इत्यर्थः । उत्तरोऽर्धर्चः परोक्षकृतो भिन्नं वाक्यम् । **शिवाभिः न स्मयमानाभिः** शिवम् (निघ.३,६) इति सुखनाम । 'ष्मिङ् ईषद्धसने' । यथा कश्चित्सुखाभिः हसन्तीभिः स्त्रीभिः सहागच्छेत् तद्वत् मध्यमोऽग्निरद्भिः सह क्रीडमानः **आ अगात्** आगच्छति अन्तरिक्षे अस्मान् वा प्रति । **पतन्ति च मिहः** सेक्त्र्यो वृष्टिलक्षणा आपः । स्तनयन्ति चाभ्राणि ।। २ ।।

**वेङ्कटमाधव–** अग्ने! तव रश्मयः मरुद्भिः सह प्रक्षिपन्ति । कृष्णवर्णः मेघश्च शब्दं करोति, यदि भवत्युदकम् । 'इदम्' (निघ.१,१२) इति उदकनाम । कल्याणीभिः **स्मयमानाभिः** इव स्त्रीभिः नदीभिः सहाग्निरस्मानिहागच्छति । **पतन्ति** च सेक्तारो मरुतः **स्तनयन्ति** चाभ्राणि ।।

**मुद्गल–** हे अग्ने! **ते** तव **सुपर्णा** शोभनपतना रश्मयः । **एवैः** गन्तृभिः मरुद्भिः सह **आ अमिनन्त** आ समन्तात् मेघं हिंसन्ति । वर्षणार्थं ताडयन्ति । प्रहृतश्च **कृष्णः** कृष्णवर्णः **वृषभः** वर्षिता मेघः **नोनाव** भृशं शब्दम् अकरोत् । **यदि** यदा **इदम्** ईदृशं कर्म तदानीम् **शिवाभिः न स्मयमानाभिः** सुखकारिणीभिः हसनवतीभिः कान्ताभिरिव शुभ्रवर्णाभिः फेनयुक्ताभिरद्भिः विद्युद्भिर्वा सह **आ अगात्** वैद्युताग्निप्रेरितः पर्जन्य आगच्छति । तदनन्तरम् **मिहः** आपः **पतन्ति** दिवः सकाशात् प्रवृष्टा भवन्ति । **अभ्रा** अभ्राणि अद्भिः पूर्णा मेघाः **स्तनयन्ति** इतस्ततः शब्दं कुर्वन्ति ।। २ ।।

**सायण–** हे अग्ने! **ते** तव **सुपर्णा** शोभनपतना रश्मयः । **एवैः** गन्तृभिः मरुद्भिः सह **आ अमिनन्त** आ समन्तात् मेघं हिंसन्ति । वर्षणार्थं ताडयन्ति । प्रहृतश्च **कृष्णः** कृष्णवर्णः **वृषभः** वर्षिता मेघः **नोनाव** भृशं शब्दम् अकरोत् । **यदि** यदा **इदम्** ईदृशं कर्म तदानीम् **शिवाभिः न स्मयमानाभिः** सुखकारिणीभिः हसनवतीभिः कान्ताभिरिव शुभ्रवर्णाभिः

फेनयुक्ताभिरद्भिः विद्युद्भिर्वा सह **आ अगात्** वैद्युताग्निप्रेरितः पर्जन्य आगच्छति । तदनन्तरम् **मिहः** आपः **पतन्ति** दिवः सकाशात् प्रवृष्टा भवन्ति । **अभ्रा** अभ्राणि अद्भिः पूर्णा मेघाः **स्तनयन्ति** इतस्ततः शब्दं कुर्वन्ति ॥

**अमिनन्त** 'मीञ् हिंसायाम्' क्रैयादिकः । व्यत्ययेन अन्तादेशः । ईषाअक्षादित्वात् प्रकृतिभावः । 'अणोऽप्रगृह्यस्य' (पा.सू.८.४.५७) इति वैकल्पिकम् अवसाने विधीयमानम् अनुनासिकत्वं व्यत्ययेनात्र संहितायामपि द्रष्टव्यम् । **नोनाव** । नौतेर्यङ्लुगन्तात् लिटि 'अमन्त्रे' (पा.सू.३.१.३५) इति निषेधात् आम्प्रत्ययाभावः । **स्मयमानाभिः** 'स्मिङ् ईषद्धसने' । शपः पित्त्वादनुदात्तत्वम् । शानचो लसार्वधातुकस्वरेण धातुस्वरः शिष्यते । **स्तनयन्ति** 'स्तन शब्दे' चुरादिरदन्तः । पतन्ति स्तनयन्तीत्यनयोः पादादित्वाद्वाक्यादित्वाच्च निघाताभावः ॥ २ ॥

**सिद्धाञ्जनम्–** द्वितीयामृचमाह– हे अग्ने! **ते** तव **सुपर्णाः** शोभनपतनाज्वाला रश्मयः **एवैः** गमनवेगप्रकारैः आमिनन्त प्रबला भवन्ति । **कृष्णः** कृष्णवर्णः **वृषभः** वर्षिता **नोनाव** भृशं शब्दम् अकरोत् । **यदि इदम्** यदा इदं कर्म चलति, तदा **शिवाभिः** क्षेमकारिणीभिः **स्मयमानाभिर्न** हसनवतीभिरिव विद्युद्भिः सहेत्यध्याहार्यं विशेष्यं, मूले नास्ति। **आगात्** आगच्छति कर्तृपदं वर्षितेत्यध्याहार्यम् । ततः **मिहः** आपः **पतन्ति** वृष्टा भवन्ति । **अभ्रा** अभ्राणि अद्भिः पूर्णानि, अपामावरका मेघाः **स्तनयन्ति** गर्जितं कुर्वन्ति । अयं स्थूलोऽर्थः । अत्र रहस्यार्थ-कथनात् प्रागिदं वक्तव्यम् । वेदे प्राचीन-आर्यभाषासु च सर्वत्र बलार्थकाः शब्दाः हिंसार्थकधातु-मूलकाः ग्राह्याः । अत एव 'मर्यः' मारयितृत्वात् बलार्थे रूढो वेदे । दस्रदस्मदक्षादयश्च कर्मनिष्पादकबलार्थे प्रयुक्ता लक्ष्यन्ते । अथ 'एवैः' गमनप्रकारैः इत्यस्माभिरुक्तम् । अत्रापि प्राचीन–आर्यभाषा-प्रयोगाः अवधेयाः । धात्वर्थानुगमादेव 'एवैः' गन्तृभिः मरुद्भिरित्यत्र सायणो व्याचष्टे । अन्यत्र 'अश्वैः' इति प्रसक्तिवशादाह । अस्मत्पक्षे केवलगमनार्थ एवेह अलम् ॥

अथेदं पारमार्थिकं तात्पर्यं भवति। क्रतूज्ज्वलोऽग्निरधुना मध्यमस्थाने प्राणधामनि उच्चरति । उत्पतनवेगभङ्ग्या प्रबले भवति सति, चित्प्रकाशबलादीनां अप्सङ्केतितानां वर्षकः इन्द्रविभूतिर्देवः आसन्नवृष्टिं सूचयति स्वीयनादविभवेन । अस्मिन् समये चित्प्रकाशशक्तिविशेषाः ज्वलन्तीभि-र्विद्युद्भिरिव शुभ्राभिः सुखकारिणीभिः ज्योतिर्बलादिभिः सह शरीरक्षेत्रे बिन्दुशः पतितुं आरभन्ते । अनन्तरं वृष्टिरेव भवति । एवं सङ्केतरहस्ये विज्ञाते सर्वोऽपि मन्त्रः स्पष्टो भवति । इदं चावधेयम् ।

'एवैः' कैः? 'स्मयमानाभिः' काभिः? 'आगात्' कः? सूक्ष्मपक्षं स्थूलपक्षं वा अवलम्ब्य व्याख्यातुम् अवकाशदानाय मन्त्रवर्ण एवं व्यवस्थितो भवति ।। **अमिनन्त** 'मीञ् हिंसायाम्' क्रैयादिकः, व्यत्ययेनान्तादेशः । **नोनाव**-नौतेर्यङ्लुगन्तात् लिट् । **स्मयमानाभिः**-'स्मिङ् ईषद्धसने' ततः शानच् । **स्तनयन्ति**-'स्तन शब्दे' चुरादिः ।। २ ।।

## ऋक्संहिता पदपाठसहिता

**यदीमृतस्य पयसा पियानो नयन्नृतस्य पथिभी रजिष्ठैः ।**
**अर्यमा मित्रो वरुणः परिज्मा त्वचं पृञ्चन्त्युपरस्य योनौ ।। ३ ।।**
**यत् । ईम् । ऋतस्य । पयसा । पियानः । नयन् । ऋतस्य । पथिऽभिः । रजिष्ठैः ।**
**अर्यमा । मित्रः । वरुणः । परिऽज्मा । त्वचम् । पृञ्चन्ति । उपरस्य । योनौ ।। ३ ।।**

**स्कन्द–** कदा कस्माद्वा । उच्यते । **यत्** यदा यस्माद्वा । **ईम्** ईशब्दोऽत्रायमित्यस्यार्थे । अयं मध्यमोऽग्निः **ऋतस्य** आदित्यस्य । **पयसा** उदकेन । रश्म्याहृतेनोदकेनेत्यर्थः । **पियानः** वर्धमानः । **नयन्** हेतावयं शतृप्रत्ययः । प्रयोजनस्य च हेतुत्वेन विवक्षा । भुवं प्रति नेतुमित्यर्थः । किम् । 'ऋतस्य' उदकनामैतत् (तु.निघ.१,१२) । द्वितीयार्थे च षष्ठी । वृष्टिलक्षणमुदकम् । **पथिभी रजिष्ठैः** ऋजुतमैः । न च केवलोऽयम् । किं तर्हि । **अर्यमा मित्रः वरुणः परिज्मा** सर्वतोगामी **त्वचम् पृञ्चन्ति** त्वचात्रैकदेशेन कृत्स्नशरीरं लक्ष्यते । पृचिरत्र सामर्थ्याद्वधार्थः । शरीरं घ्नन्तीत्यर्थः । कस्य । **उपरस्य** मेघस्य । **योनौ** अन्तरिक्षैकदेशभूते स्थाने । अथवा योनिरित्युदकनाम (तु.निघ.१,१२) । 'निमित्तात् कर्मसंयोगे' (पा.वा.२,३,३६) इत्येषा सप्तमी, 'चमणि द्वीपिनं हन्ति' इति यथा । उदके निमित्ते । उदकार्थमित्यर्थः । यदा यस्माद्वाऽयं मध्यमोऽग्निर्मित्रादयश्च त्वचं पृञ्चन्त्युपरस्य तदा तस्माद्वा 'शिवाभिर्न स्मयमानाभिरागात्' इत्येवमस्या ऋचः पूर्वस्या उत्तरार्धर्चेनैकवाक्यता । एवम् अनयोर्ऋचोर्मध्यमेऽग्नौ योजना । पार्थिवे तु 'आ ते सुपर्णाः' इति सुपर्णशब्देन रश्मिसादृश्यात् सुपतनाद्वा ज्वाला उच्यन्ते । 'अमिनन्त' इत्यपि भक्षणं हिंसाऽभिप्रेता । 'कृष्णो नोनाव वृषभो यदीदम्' इति च यदिशब्दात् पूर्ववत् तत इत्यध्याहार्यम् । यदि कृष्णवर्णो वर्षिता मेघा नोनाव इदं जगत्, यदि च शिवाभिर्न स्मयमानाभिरागात् मध्यमः, यदि च पतन्ति मिहः स्तनयन्ति अभ्राः, ततस्ते तव स्वभूताः सुपर्णाः **आ अमिनन्त** मर्यादया हिंसन्ति भक्षयन्ति । किम् । सामर्थ्याद् हवींषि । **एवैः** हवींषि प्रति

गमनैः । यदि देवो वर्षति ततो मनुष्येषु यजत्सु तव ज्वालाः सर्वतो व्याप्य हवींषि निस्संशयं दहन्तीति समस्तार्थः ।

योऽहं किं करोमि । उच्यते । **यदीमृतस्य** इत्यादि । यदिति व्यत्ययेन नपुंसकता । यो भवान् **ऋतस्य पयसा** । ऋतशब्दोऽत्र यज्ञवचनः । यज्ञसम्बन्धिना हविर्लक्षणेनान्नेन **पियानः** वर्धमानः, **नयंश्च** हविर्देवान् प्रति **ऋतस्य** यज्ञस्य **पथिभिः रजिष्ठैः अर्यमा मित्रो वरुणश्च परिज्मा** । प्रदर्शनार्थं चात्र अर्यमादिग्रहणम् । सर्वे च देवा इत्यर्थः । **त्वचं पृञ्चन्ति** शरीराणि सम्पर्चयन्ति । भवांश्च गृहीतहविष्को देवाश्च परस्परत सम्पृच्यन्ते इत्यर्थः । क्व । उच्यते । **उपरस्य योनौ** । उपरिवर्तित्वादुपरो देवलोक इहाभिप्रेतः । तस्यैकदेशभूते स्थाने स्वर्गे इत्यर्थः । यो भवान् अर्यमादयश्च त्वचं पृञ्चन्ति उपरस्य योनौ तस्य ते सुपर्णा अमिनन्तेत्येवं यच्छब्दश्रुतेस्तच्छब्दमध्याहृत्य पूर्वयर्चैकवाक्यता योज्या ।। ३ ।।

**वेङ्कटमाधव–** यदि एनम् उदकस्य सारेण प्रत्यक्षोदकेन प्यायमानः **नयन्** उदकस्य **पथिभिः** ऋजुतमैः **अर्यमा मित्रः वरुणः** वायुश्च मेघस्य **योनौ** उदकनिर्गमनमार्गे स्थितामुदकनिरोद्धीं **त्वचं** रश्मिभिः सम्पृञ्चन्ति । अग्निना सहिता वर्षस्येशत एते देवा इति ।। ३ ।।

**मुद्गल– यत् ईम्** यदा अयम् अग्निः, **ऋतस्य** उदकस्य **पयसा** पयोवत्सारभूतेन रसेन **पियानः** जगदाप्यायनं कुर्वन् । आप्यायितश्च जगत् **ऋतस्य** उदकस्य सम्बन्धिभिः **रजिष्ठैः** ऋजुतमैः **पथिभिः** मार्गैः स्नानपानादिभिः **नयन्** प्रापयन् वर्तते तदानीम् **अर्यमा मित्रो वरुणः** च **परिज्मा** परितो गन्ता मरुद्गणश्च **उपरस्य** मेघस्य **योनौ** वृष्ट्युदकोत्पत्तिस्थाने **त्वचं पृञ्चन्ति** वृष्ट्युदकस्याच्छादकं प्रदेशं स्वकीयैरायुधैः संयोजयन्ति, उद्घाटयन्तीति यावत् ।। ३ ।।

**सायण– यत् ईम्** यदा अयम् अग्निः, **ऋतस्य** उदकस्य **पयसा** पयोवत्सारभूतेन रसेन **पियानः** जगदाप्यायनं कुर्वन् । आप्यायितश्च जगत् **ऋतस्य** उदकस्य सम्बन्धिभिः **रजिष्ठैः** ऋजुतमैः **पथिभिः** मार्गैः स्नानपानादिभिः **नयन्** प्रापयन् वर्तते तदानीम् **अर्यमा मित्रः वरुणः** च **परिज्मा** परितो गन्ता मरुद्गणश्च **उपरस्य** मेघस्य **योनौ** वृष्ट्युदकोत्पत्तिस्थाने **त्वचं पृञ्चन्ति** वृष्ट्युदकस्याच्छादकं प्रदेशं स्वकीयैरायुधैः संयोजयन्ति, उद्घाटयन्तीति यावत् ।।

**पियानः** । 'स्फायी ओप्यायी वृद्धौ' । 'बहुलं छन्दसि' इति शपो लुक् । धातोर्व्यत्ययेन

पीभावः । अनुदात्तत्त्वात् लसार्वधातुकानुदात्तत्वे धातुस्वरः शिष्यते । **रजिष्ठैः** । ऋजुशब्दात् इष्ठनि 'विभाषर्जोच्छन्दसि' (पा.सू.६.४.१६२) इति ऋकारस्य रत्वम् । 'टेः' इति टिलोपः । **पृञ्चन्ति** 'पृची सम्पर्के' रौधादिकः ।। ३ ।।

**सिद्धाञ्जनम्–** तृतीयामृचमाह– एवं उक्तविधया मध्यमस्थाने प्राणमयभूमनि चित्प्रकाशादि वर्षारम्भात्परं पुनश्च समुज्ज्वलोऽग्निः ऋतस्य ज्योतिषः सारभूतेन रसेन यजमानं सर्वात्मना आप्याययन् ऋतस्य प्रापकैः ऋजुतममार्गैरूर्ध्वं नयन् प्रवर्तते । ईदृश्यां दशायां आदित्याः मित्रादयः ऋतज्योतिर्विभवाः पूर्वोक्तज्योतिरादिवर्षोत्पत्तिस्थाने आच्छादकवत् गोपनकवचवत् स्थितं दिव्यं प्रदेशं अनेनाग्निनीतेन यजमानात्मना संयोजयन्ति इत्येवमर्थकं वैदिकयोगरहस्यं वर्णयति तृचस्यास्य तृतीयकम् ।।

**यत् ईम्** यदाऽयम् अग्निः **ऋतस्य** सत्यस्य **पयसा** सारेण अमृतरसेन **पियानः** यजमानस्य आप्यायनं कुर्वन्, स्थूलपक्षे जगदाप्यायनं, **ऋतस्य** सत्यस्य सम्बन्धिभिः **रजिष्ठैः** ऋजुतमैः **पथिभिः** मार्गैः **नयन्** प्रापयन् वर्तते, तदा **अर्यमा मित्रः वरुणः** एते देवाः **परिज्मा** परितो गन्ता, इन्द्रश्च 'अतः परिज्मन्नागहि' अत्रेन्द्र एवोक्तः । तस्य त्रैलोक्येश्वरत्वात् अत्रापि स एव बोध्यः उपपत्तेः, मरुद्गण इति सायणीये । **उपरस्य** ऊर्ध्वस्य उत्कृष्टस्य ज्योतिर्बलादिवर्षणस्य **योनौ** मूलस्थाने **त्वचम्** गोपनकवचवत् स्थितां दिव्यप्राकारभुवं **पृञ्चन्ति** संपृक्तां कुर्वन्ति । शरीरिणा यजमानेन संयोजयन्तीत्यर्थः । सायणीये उपरशब्दार्थः नेकविधः, विभिद्यते । तथा तन्निर्वचनं च नोपपद्यते । 'उपरान् उत्कृष्टे स्थाने वर्तमानान्' (२.४.६) इति सायण एव ऋज्वर्थमाह ।। **पियानः**-'स्फायी ओप्यायी वृद्धौ' छन्दसि शपो लुक्, व्यत्ययेन पीभावः । **रजिष्ठैः**-ऋजुशब्दात् इष्ठन्, ऋकारस्य रत्वम् । **पृञ्चन्ति**- 'पृची सम्पर्के' रौधादिकः ।। ३ ।।

## ऋक्संहिता पदपाठसहिता

**अग्ने वाजस्य गोमत ईशानः सहसो यहो । अस्मे धेहि जातवेदो महि श्रवः ।।४।।**
**अग्ने । वाजस्य गोऽमतः । ईशानः । सहसः । यहो इति । अस्मे इति । धेहि । जातऽवेदः । महि । श्रवः ।। ४ ।।**

**स्कन्द–** हे अग्ने! **वाजस्य गोमतः** गोभिः सहितस्य । **ईशानः** हे **सहसः यहो!** बलस्य

पुत्र! बलेन मध्यमानोऽग्निर्जायत इति बलस्य पुत्र उच्यते । **अस्मे** अस्मभ्यम् । **धेहि** देहि । हे **जातवेदः!** जातप्रज्ञान! **महि श्रवः** धनम् अन्नं वा ।। ४ ।।

**वेङ्कटमाधव–** अग्ने! अन्नस्य पशुमत ईश्वरः **सहसः** पुत्र । अस्मासु **धेहि** । **जातवेदः!** महत् अन्नम् ।। ४ ।।

**मुद्गल–** हे **सहसः यहो** बलस्य पुत्र **अग्ने! गोमतः** बहुभिर्गोभिर्युक्तस्य **वाजस्य** अन्नस्य **ईशानः** ईश्वरस्त्वमसि । अत **अस्मे** अस्मासु हे **जातवेदः** जातधन अग्ने! **महि श्रवः** प्रभूतमन्नम् । **धेहि** स्थापय ।। ४ ।।

**सायण–** प्रातरनुवाकस्याग्नेये क्रतौ औष्णिहे छन्दस्याश्विनशस्त्रे च 'अग्ने वाजस्य' इत्याद्यास्तिस्रः ऋचः । सूत्रितं च- 'अग्ने वाजस्येति तिस्रः पुरु त्वा त्वामग्ने' (आश्व.श्रौ.४.१३) इति ।

हे **सहसः यहो** बलस्य पुत्र **अग्ने! गोमतः** बहुभिर्गोभिर्युक्तस्य **वाजस्य** अन्नस्य **ईशानः** ईश्वरस्त्वमसि । अत **अस्मे** अस्मासु हे **जातवेदः** जातधन जातानां वेदितर्वा अग्ने! **महि** प्रभूतं **श्रवः** अन्नम् । **धेहि** स्थापय ।। **सहसो यहो** । पराङ्गवद्भावात् 'आमन्त्रितस्य च' इति षष्ठ्यामन्त्रितसमुदायो निहन्यते । **अस्मे** 'सुपां सुलुक्' इति सप्तम्याः शेआदेशः ।। ४ ।।

**सिद्धाञ्जनम्–** चतुर्थीमृचमाह– हे **सहसो यहो** बलस्य पुत्र **अग्ने!** त्वं **गोमतः** चिद्रूप-रश्मियुक्तस्य **वाजस्य** समृद्धिराशेः **ईशानः** ईश्वरः असि । तस्मात् हे **जातवेदः** जातानां वेदितः! **अस्मे** अस्मासु **महि** महत्, भूरि **श्रवः** दिव्यं श्रवणं **धेहि** धारय स्थापयेत्यर्थः ।। **यहो**-यहुः अपत्यनामसु पठितम् । **अस्मे**-सप्तम्याः शे आदेशः ।। ४ ।।

## ऋक्संहिता पदपाठसहिता

**स इ॒धा॒नो वसु॑ष्क॒विर॒ग्निरी॒ळेऽन्यो॑ गि॒रा । रे॒वद॒स्मभ्यं॑ पुर्वणीक दीदिहि ।। ५ ।।**
**सः । इ॒धा॒नः । वसुः॑ । क॒विः । अ॒ग्निः । ई॒ळेन्यः॑ । गि॒रा । रे॒वत् । अ॒स्मभ्य॑म् । पु॒रु॒ऽअ॒नी॒क॒ । दी॒दि॒हि ।। ५ ।।**

**स्कन्द–** य उक्तगुणोऽसि, स **इधानः** दीप्यमानः । **वसुः** प्रशस्यो धनवान् वा । **कविः**

मेधावी । **अग्निः ईळेन्यः** सर्वैः स्तोतृभिः स्तोतव्यः । **गिरा** स्तुत्या । परस्तु पादः प्रत्यक्षकृतत्वात् भिन्नं वाक्यम् । **रेवत्** धनसंयुक्तम् । धनं च ददिदित्यर्थः । **अस्मभ्यम्** अस्मदर्थम् । हे **पुर्वणीक** 'पुरु' (निघ.३,१) इति बहुनाम । अनीकमिति च लोके खड्गस्य मुखमुच्यते । इह तु तीक्ष्णाग्रत्वादेस्तत्सादृश्यात् ज्वाला उच्यन्ते । बहुखड्गमुखसदृशबहुज्वाला समूह! । **दीदिहि** दीप्यस्व ।।

**वेङ्कटमाधव–** स दीप्यमानः वासयिता **कविः अग्निः** स्तुत्यः, स्तोत्रेण धनयुक्तम् । **अस्मभ्यम्** दीप्यस्व बहुज्वाल! ।। ५ ।।

**मुद्गल– स अग्निः इधानः** दीपनशीलः । **वसुः** निवासयिता सर्वेषाम् । **कविः** क्रान्तदर्शनः । **गिरा** स्तोतृरूपया वाचा । **ईळेन्यः** स्तोतव्यो भवति । हे **पुर्वणीक!** अनीकं मुखम् । पुरुभिर्बह्वीभिः अनीकस्थानीयाभिः ज्वालाभिर्युक्ताग्ने! **अस्मभ्यम् रेवत्** धनयुक्तम् अन्नं यथा भवति तथा **दीदिहि** दीप्यस्व ।। ५ ।।

**सायण–** स **अग्निः इधानः** दीपनशीलः । **वसुः** निवासयिता सर्वेषाम् । **कविः** क्रान्तदर्शनः मेधावी वा । **गिरा** स्तोतृरूपया वाचा । **ईळेन्यः** स्तोतव्यो भवति । हे **पुर्वणीक!** अनीकं मुखम् । पुरुभिर्बह्वीभिः अनीकस्थानीयाभिः ज्वालाभिर्युक्ताग्ने! **अस्मभ्यम् रेवत्** धनयुक्तम् अन्नं यथा भवति तथा **दीदिहि** दीप्यस्व ।। **इधानः** । 'ञिइन्धी दीप्तौ'। ताच्छीलिकः चानश् । 'बहुलं छन्दसि' इति शपो लुक् । **ईळेन्यः** । 'ईड स्तुतौ' । औणादिक एन्यप्रत्ययः । **रेवत्** 'रयेर्मतौ बहुलम्' इति सम्प्रसारणम् । 'छन्दसीरः' इति मतुपो वत्वम् । 'रेशब्दाच्च मतुप उदात्तत्वं वक्तव्यम्' (का.६.१.१७६.१) इति मतुप उदात्तत्वम् । **दीदिहि** दीदेतिश्छान्दसो दीप्तिकर्मा ।।

**सिद्धाञ्जनम्–** पञ्चमीमृचमाह– सः **अग्निः इधानः** दीप्यमानः **वसुः** वस्तुनि वसतीति वसुः, वस्तुनः सर्वस्य वासयिता निवासहेतुः । **कविः** मेधावी, अतीन्द्रियार्थदर्शी । **गिरा** वाचा, स्तुत्या । **ईळेन्यः** अध्येषणीयः भवति । हे **पुर्वणीक** पुरुणि बहूनि अनीकानि मुखानि ज्वालात्मकानि यस्य सः, तथाभूताग्ने! **अस्मभ्यम्** अस्मानुद्दिश्य । **रेवत्** दिव्यधनोपेतं यथा भवति तथा **दीदिहि** दीप्यस्व, ज्वलितो भव ।। **इधानः**- 'ञि-इन्धी दीप्तौ, ताच्छीलिकश्चानश् । **रेवत्**- 'रयेर्मतौ छन्दसि सम्प्रसारणम्, मतुपो वत्वम् । **दीदिहि**-दीदेतिः दीप्तकर्मा छान्दसः ।।

## ऋक्संहिता पदपाठसहिता

**क्षपो राजन्नुत त्मनाग्ने वस्तोरुतोषसः । स तिग्मजम्भ रक्षसो दह प्रति ॥ ६ ॥**
**क्षपः । राजन् । उत । त्मना । अग्ने । वस्तोः । उत । उषसः । सः । तिग्मऽजम्भ । रक्षसः । दह । प्रति ॥ ६ ॥**

**स्कन्द–** **क्षपः** 'क्षपा' (निघ.१,७) इति रात्रिनाम । क्षपायाः । **राजन्** ईश्वर! दीपयितः वा । **त्मना** आत्मनैव । हे **अग्ने! उत वस्तोः** अह्नः राजन्! **उत उषसः** राजन्! य उक्त-गुणोऽसि **सः** हे **तिग्मजम्भ!** जम्भा दंष्ट्रोच्यते । ज्वालाश्चाग्नेर्दंष्ट्रास्थानीयाः । तीक्ष्णदंष्ट्रा-स्थानीयज्वाल! **रक्षसः दह प्रति** प्रतिशब्दस्तूपसर्गो धात्वर्थानुवादी 'लम्बते प्रलम्बते' इति यथा । अथवा प्रतिशब्दो लक्षणे कर्मप्रवचनीयः । क्षपः वस्तोः उषसः इत्येतैः सम्बन्धयितव्यः । सर्वत्र च द्वितीयार्थे विभक्तिः । **क्षपः** रात्रीः प्रति । **उत वस्तोः** अहः प्रति । **उत उषसः** प्रति । रात्रिषु चाहनि च उषउदयवेलासु च रक्षसो दहेत्यर्थः । एवञ्च कृत्वा न आमन्त्रितनिमित्तत्वात् क्षप इत्येतस्य पराङ्गवद्भावेनामन्त्रिताद्युदात्तत्वं प्रवर्तते ॥ ६ ॥

**वेङ्कटमाधव–** क्षपय **राजन्! अग्ने!** त्वमात्मनैव **रक्षसः** अह्नः रात्रेश्च । **सः** त्वम् अग्ने । दीक्ष्णदंष्ट्र रक्षांसि **प्रति दह** । यद्वा क्षपाया उषस अह्नःश्च रक्षांसि प्रति दह इति ॥ ६ ॥

**मुद्गल–** हे **राजन्!** राजनशील **अग्ने! क्षपः** क्षपय । राक्षसादीन् स्वकीयैः पुरुषैर्बाधस्व । **उत** अपि च **त्मना** न केवलमन्यैरेव आत्मना च तान् बाधस्व । कदेति चेत् । उच्यते । **वस्तोः** सर्वाण्यहानि **उत** अपि च **उषसः** उषःकालोपलक्षिता रात्रीः । अत्यन्तसंयोगे द्वितीया । सर्वेष्वहस्सु सर्वासु रात्रिषु चेत्यर्थः । हे **तिग्मजम्भ!** तीक्ष्णमुखाग्ने! **रक्षसः** राक्षसान् उक्तप्रकारेण क्षपयित्वा **सः** एव त्वम् **प्रति दह** प्रत्येकं दह । न किञ्चिद्दग्धव्यमित्युदास्वेत्यर्थः ॥ ६ ॥

**सायण–** हे **राजन्!** राजनशील **अग्ने! क्षपः** क्षपय, राक्षसादीन् स्वकीयैः पुरुषैर्बाधस्व । **उत** अपि च **त्मना** न केवलम् अन्यैरेव आत्मना च तान् बाधस्व । कदेति चेत्, उच्यते । **वस्तोः** सर्वाण्यहानि **उत** अपि च **उषसः** उषःकालोपलक्षिता रात्रीः । अत्यन्तसंयोगे द्वितीया । सर्वेष्वहस्सु सर्वासु रात्रिषु चेत्यर्थः । हे **तिग्मजम्भ** तीक्ष्णमुखाग्ने! **रक्षसः** राक्षसान् उक्तप्रकारेण क्षपयित्वा **सः** एव त्वम् **प्रति दह** प्रत्येकं दह । न किञ्चिद्दग्धव्यमित्युदास्वेत्यर्थः ॥

**क्षपः** । 'क्षप क्षान्त्याम्' लोडर्थे छान्दसो लङ् । 'छन्दस्युभयथा' इति शप आर्धधातुकत्वात् 'णेरनिटि' इति णिलोपः । उदात्तनिवृत्तिस्वरेण शप उदात्तत्वम् । **त्मना** । 'मन्त्रेष्वाङ्याादेरात्मनः' इति आकारलोपः । **रक्षसः** 'रक्ष पालने' रक्षितव्यमस्मादिति रक्षः । भीमादित्वात् (पा.सू.३.४.७४) अपादाने असिप्रत्ययः । क्षरतेर्वा ण्यन्तात् असिप्रत्यये णिलोपो वर्णविपर्ययश्च । अस्य च रक्षःशब्दस्य असिप्रत्ययान्तत्वात् प्रत्ययस्वर एव शिष्यते ।। ६ ।।

**सिद्धाञ्जनम्**– षष्ठीमृचमाह– **उत** अपि च हे **राजन्!** राजनशील **अग्ने! त्मना** आत्मना स्वयमेव **क्षपः** क्षपाः रात्रीः सर्वाः **वस्तोः** सर्वाण्यहानि **उत** अपि च **उषसः** प्रभातवेला च । 'अत्यन्तसंयोगे द्वितीया' सर्वासु रात्रिषु उषस्सु दिवा च **सः** त्वं **तिग्मजम्भ** तीक्ष्णमुख, **रक्षसः** राक्षसान् **प्रति** प्रतिघटय्य **दह** दग्धान् कुरु ।। ६ ।।

।। इति प्रथमाष्टके पञ्चमाध्याये सप्तविंशो वर्गः ।।

## ।। अथ अष्टाविंशो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

**अवा नो अग्न ऊतिभिर्गायत्रस्य प्रभर्मणि । विश्वासु धीषु वन्द्य ।। ७ ।।**

**अव । नः । अग्ने । ऊतिऽभिः । गायत्रस्य । प्रऽभर्मणि । विश्वासु । धीषु । वन्द्य ।।**

**स्कन्द– अव नः** पालयास्मान् । हे **अग्ने! ऊतिभिः** स्वैः पालनैः । क्व । **गायत्रस्य प्रभर्मणि** गायत्रं नाम सामविशेषः, साममात्रं वा, गीयमानत्वात् । बिभर्तिर्धारणार्थः । गायत्रं यत्र धार्यते न त्यज्यते, क्रियत इत्यर्थः । स गायत्रस्य प्रभर्मा सोमयागः, तत्र च । न सोमयागे एव केवले, किं तर्हि, **विश्वासु धीषु** सर्वेषु दर्शपूर्णमासादिषु कर्मसु हे **वन्द्य!** ।। ७ ।।

**वेङ्कटमाधव–** रक्ष अस्मान् **अग्ने! ऊतिभिः** गायत्रसाम्नः । **प्रभर्मणि** सर्वेषु कर्मसु स्तुत्य! ।।

**मुद्गल– विश्वासु धीषु** सर्वेषु कर्मसु **वन्द्य!** स्तुत्य! हे **अग्ने! गायत्रस्य** गायत्रसाम्नः **प्रभर्मणि** प्रभरणे सम्पादने निमित्तभूते सति **नः** अस्मान् **ऊतिभिः** त्वदीयैः पालनैः **अव** रक्ष ।।

**सायण– विश्वासु धीषु** सर्वेषु कर्मसु **वन्द्य!** स्तुत्य! हे **अग्ने! गायत्रस्य** गायत्रसाम्नः गायत्रीच्छन्दस्कस्य सूक्तस्य वा । **प्रभर्मणि** प्रभरणे सम्पादने निमित्तभूते सति **नः** अस्मान् **ऊतिभिः** त्वदीयैः पालनैः **अव** रक्ष ।। **अवा** 'द्व्यचोऽतस्तिङः' इति संहितायां दीर्घत्वम् ।।

**सिद्धाञ्जनम्–** प्रातरनुवाकस्याग्नेये क्रतौ गायत्रे छन्दसि 'अवा नो अग्ने' इत्याद्याः षड्चः । सूत्रितं च- 'अवा नो अग्ने' इति षळग्निमीळेऽग्निं दूतम्' (आश्व.श्रौ.४.१३) इति ।। आश्विनशस्त्रे चैताः शंसनीयाः प्रातरनुवाकातिदेशात् ।।

सप्तमीमृचमाह– **विश्वासु** सर्वासु **धीषु** प्रज्ञावृत्तिषु **वन्द्य** स्तुत्य हे **अग्ने! गायत्रस्य** गायत्रीच्छन्दस्कस्य मन्त्रस्य सूक्तस्य गायत्रस्य साम्नो वा **प्रभर्मणि** प्रभरणे सम्पादने निमित्ते **नः** अस्मान् **ऊतिभिः** त्वत्कर्तृकवर्धनैः **अव** वर्धय ।। अवधातुः प्रायशो वर्धनार्थः अस्मत्पक्षे । क्वचित् पालनार्थ उपपद्येत ।। ७ ।।

## ऋक्संहिता पदपाठसहिता

**आ नो॑ अग्ने र॒यिं भ॑र सत्रा॒साहं॒ वरे॑ण्यम् । विश्वा॑सु पृ॒त्सु दु॒ष्टर॑म् ।। ८ ।।**

**आ । नः॒ । अ॒ग्ने॒ । र॒यिम् । भ॒र॒ । स॒त्रा॒ऽसह॑म् । वरे॑ण्यम् । विश्वा॑सु । पृ॒त्ऽसु । दु॒स्तर॑म् ।।**

**स्कन्द– नः** अस्मदर्थं हे **अग्ने! रयिम् आ भर** । अस्मभ्यं देहीत्यर्थः । **सत्रासाहम्** सदा शत्रूणां अभिभवितारम् । **वरेण्यम्** उत्कृष्टं सर्वेषु सङ्ग्रामेषु **दुष्टरम्** 'अवतिरति' (निघ. २,१९) इति वधकर्मसु पाठात् तिरतिर्वधार्थः । दुर्हिंसम् । शत्रुभिः दुरपरहरमित्यर्थः ।।

**वेङ्कटमाधव– आ भर** अस्मभ्यम् । **अग्ने! रयिं** बहुसहम् वरणीयं सर्वेषु सङ्ग्रामेषु तरितुमशक्यम् ।। ८ ।।

**मुद्गल–** हे **अग्ने! रयिं** धनं, **नः** अस्मभ्यम् । **आ भर** प्रयच्छ । कीदृशम् । **सत्रासाहम्** युगपदेव दारिद्र्यस्य नाशकम् । **वरेण्यं** सर्वैर्वरणीयम् । **विश्वासु पृत्सु** सर्वेषु सङ्ग्रामेषु **दुष्टरम्** शत्रुभिस्तरितुमशक्यम् ।। ८ ।।

**सायण–** हे **अग्ने! रयिं** धनं, **नः** अस्मभ्यम् । **आ भर** प्रयच्छ । कीदृशम् । **सत्रासाहम्** सत्रा सह युगपदेव दारिद्र्यस्य नाशकम् । **वरेण्यं** सर्वैर्वरणीयम् । **विश्वासु पृत्सु** सर्वेषु सङ्ग्रामेषु **दुष्टरम्** शत्रुभिस्तरितुमशक्यम् ।। **सत्रासाहम्** । 'छन्दसि सहः' इति ण्विः । **वरेण्यम्** । 'वृञ एण्यः' । **पृत्सु** 'पदादिषु मांस्पृत्स्नूनामुपसङ्ख्यानम्' इति पृतनाशब्दस्य पृद्भावः । 'सावेकाचः' इति विभक्तेरुदात्तत्वम् ।। ८ ।।

**सिद्धाञ्जनम्**– अष्टमीमृचमाह– हे **अग्ने! नः** अस्मभ्यं **रयिं** धनं दिव्यं **आ भर** आहर । कीदृशं रयिम् ? **सत्रासाहम्** सत्रा सह युगपदेव अभिभवितारं विघ्नानां यज्ञविरोधिनां वा । **वरेण्यं** वरणीयं श्रेष्ठम् । **विश्वासु पृत्सु** सर्वेषु संग्रामेषु **दुस्तरम्** विरोधिभिस्तरीतुमशक्यम् । तादृशं ज्योतिर्बलादिकं दिव्यं धनं देहि ॥ **सत्रासाहम्** - छन्दसि सह इति ण्विः । वरेण्यम्- वृञ एण्यः ॥ ८ ॥

## ऋक्संहिता पदपाठसहिता

**आ नो॑ अग्ने सुचे॒तुना॑ र॒यिं वि॒श्वायु॑पोषसम् । मा॒र्डी॒कं धे॑हि जी॒वसे॑ ॥ ९ ॥**
**आ । नः॒ । अ॒ग्ने॒ । सु॒ऽचे॒तुना॑ । र॒यिम् । वि॒श्वायु॑ऽपोषसम् । मा॒र्डी॒कम् । धे॒हि॒ । जी॒वसे॑ ॥**

**स्कन्द**– अस्मभ्यं हे **अग्ने! सुचेतुना** शोभनेनानुग्रहपरेण चित्तेन **रयिम् विश्वायुपोषसम्** सर्वस्मिन्नायुषि पोषकम् । यावज्जीवं पुष्टिकरमित्यर्थः । **मार्डीकम्** 'मृड सुखने । सुखयितारम् **आ धेहि** आभिमुख्येन देहि । **जीवसे** जीवनायास्माकम् ॥ ९ ॥

**वेङ्कटमाधव**– **आ धेहि** अस्मभ्यम् **अग्ने!** शोभनज्ञानेन मनसा धनम् सर्वमनुष्याणां पोषकम् सुखयितृ जीवनाय ॥ ९ ॥

**मुद्गल**– हे **अग्ने! नः** अस्माकम् **जीवसे** जीवनाय **सुचेतुना** शोभनेन ज्ञानेन युक्तम् **रयिम्** धनम् **आ धेहि** स्थापय । कीदृशम् । **मार्डीकम्** मृडीकं सुखं तद्धेतुभूतम् **विश्वायुपोषसम्** सर्वस्मिन्नायुषि देहादेः पोषकम् । यावज्जीवम् अस्मदुपभोगपर्याप्तमित्यर्थः ॥ ९ ॥

**सायण**– आयुष्कामेष्ट्यां प्रथमस्याज्यभागस्यानुवाक्या 'आ नो अग्ने' इति । सूत्रितं च- 'आयुष्कामेष्ट्यां जीवातुमन्तावा नो अग्ने सुचेतुना' (आश्व.श्रौ.२.१०) इति । महापितृयज्ञेऽप्येषैव प्रथमाज्यभागानुवाक्या । सूत्रितं च- 'जीवातुमन्तौ सच्योत्तर्युपस्थाः' (आश्व.श्रौ.२.१९) इति ॥

हे **अग्ने! नः** अस्माकम् **जीवसे** जीवनाय **सुचेतुना** शोभनेन ज्ञानेन युक्तम् **रयिम्** धनम् **आ धेहि** आस्थापय । कीदृशम् । **मार्डीकम्** मृडीकं सुखं तद्धेतुभूतम् **विश्वायुपोषसम्** सर्वस्मिन्नायुषि देहादेः पोषकम् । यावज्जीवम् अस्मदुपभोगपर्याप्तमित्यर्थः ॥ **सुचेतुना** 'चिती संज्ञाने' । औणादिकः उप्रत्ययः । कृदुत्तरपदप्रकृतिस्वरत्वम् । **विश्वायुपोषसम्** । विश्वमायुर्यस्मिन्

शरीरादौ तद्विश्वायु । 'बहुव्रीहौ विश्वं संज्ञायाम्' इति पूर्वपदान्तोदात्तत्वम् । तत्पुष्णातीति विश्वायुपोषाः । 'गतिकारकयोरपि पूर्वपदप्रकृतिस्वरत्वं च' इति असुन् पूर्वपदप्रकृतिस्वरत्वं च । मकारलोपः छान्दसः 'दीर्घायुत्वाय वर्चसे' इति यथा ।। ९ ।।

**सिद्धाञ्जनम्**– नवमीमृचमाह– रयिर्वसु वा दिव्यं धनं ज्योतिर्बलादिकमिति व्याख्यायतेऽस्माभिः सर्वत्र । अस्यां ऋचि विस्पष्टमुच्यते रयिस्वरूपं तद्विशेषणलक्षणेन । हे **अग्ने! नः** अस्माकं **जीवसे** जीवनाय उत्तमाय दिव्याय वेति शेषः । **सुचेतुना** शोभनज्ञानेन सहितं **रयिम्** धनं **आ धेहि** आस्थापय । कीदृशम् ? **मार्डीकम्** मृडीकं सुखमयम् । **विश्वायुपोषसम्** विश्वस्य सर्वस्य आयोः पुरुषायुषस्य पोषसं पोषकं यावज्जीवं देहादिषु सर्वात्मना पुरुषं पोषयितुं पर्याप्तमित्यर्थः । चिन्मयं सुखमयं बलात्मकं धनं उक्तं भवति ।। **सुचेतुना** 'चिती संज्ञाने' औणादिकः उप्रत्ययः । **विश्वायुपोषसम्**-विश्वायुरित्यत्र सकारलोपश्छान्दसः । विश्वायुः पुष्णातीति विश्वायुपोषाः, असुन् छन्दसि ।। ९ ।।

## ऋक्संहिता पदपाठसहिता

**प्र पूतास्तिग्मशोचिषे वाचो गोतमाग्नये । भरस्व सुम्नयुर्गिरः ।। १० ।।**

**प्र । पूताः । तिग्मऽशोचिषे । वाचः । गोतम । अग्नये । भरस्व । सुम्नऽयुः । गिरः ।।**

**स्कन्द– पूताः** शुद्धाः निर्दोषाः तीक्ष्णदीप्तये । **वाचः** हे **गोतम!** आत्मन एवायम् अन्तरात्मन आमन्त्रणं प्रैषश्च । हे मदीयान्तरात्मन्नित्यर्थः । **अग्नये प्र भरस्व** प्रभर प्रापय । उच्चारयेत्यर्थः । **सुम्नयुः** सुखकामः सन् । **गिरः** स्तुतिरूपाः ।। १० ।।

**वेङ्कटमाधव– प्र भरस्व** उग्रतेजसे शुद्धा वाचः **गोतम! अग्नये** सुम्नमिच्छन् गरणीया वचनीयाः ।। १० ।।

**मुद्गल–** हे **गोतम!** सूक्तद्रष्टः! **सुम्नयुः** सुम्नं धनमात्मन इच्छंस्त्वम् **तिग्मशोचिषे** तीक्ष्णज्वालाय **अग्नये पूताः** शुद्धाः **वाचः** अग्नेर्गुणान् सम्यक् अभिदधतीः **गिरः** स्तुतीः **प्र भरस्व** प्रकर्षेण सम्पादय ।। १० ।।

**सायण–** हे **गोतम!** सूक्तद्रष्टः! **सुम्नयुः** सुम्नं धनमात्मन इच्छंस्त्वम् **तिग्मशोचिषे**

तीक्ष्णज्वालाय **अग्नये पूताः** शुद्धाः **वाचः** अग्नेर्गुणान् सम्यक् अभिदधतीः **गिरः** स्तुतीः **प्र भरस्व** प्रकर्षेण सम्पादय ।। **तिग्मशोचिषे** । 'तिज निशाने '। 'युजिरुचितिजा कुत्वं च' (उ.सू.५.१४३) इति मक् । तिग्मानि शोचींषि यस्य । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । **सुम्नयुः** । सुम्नशब्दात् क्यचि न च्छन्दस्यपुत्रस्य' इति ईत्वदीर्घयोः प्रतिषेधः । 'क्याच्छन्दसि' इति उप्रत्ययः ।। १० ।।

**सिद्धाञ्जनम्–** दशमीमृचमाह– हे **गोतम!** चिन्मयकिरणयुक्ततम! ऋषेरन्तरात्मनः सम्बोधनम् । **सुम्नयुः** सुम्नं सुखं आत्मन इच्छंस्त्वं, **तिग्मशोचिषे** तीव्रज्वालाय **अग्नये पूताः** पवित्राः **गिरः वाचः** स्तोत्रवाचः **प्रभरस्व** प्रकर्षेण सम्पादय ।। **तिग्मशोचिषे**- 'तिज निशाने' तिग्मानि शोचींषि यस्य तस्मै । **सुम्नयुः**- सुम्नशब्दात् क्यच्, क्याच्छन्दसीत्युप्रत्ययः ।।१०।।

## ऋक्संहिता पदपाठसहिता

**यो नो अग्नेऽभिदासत्यन्ति दूरे पदीष्ट सः । अस्माकमिद्वृधे भव ।। ११ ।।**
**यः । नः । अग्ने । अभिऽदासति । अन्ति । दूरे । पदीष्ट । सः । अस्माकम् । इत् । वृधे । भव ।। ११ ।।**

**स्कन्द–** **यः**, अस्मान् हे **अग्ने! अभिदासति** उपक्षपयति **अन्ति** अन्तिके दूरे च । **पदीष्ट सः** पदिरत्र शुद्धोऽपि सोपसर्गार्थो द्रष्टव्यः । विपद्यतां सः । विनश्यतु स इत्यर्थः । अस्माकम् तु **वृधे** वृद्ध्यै भव त्वम् । वृद्धिं कुर्वित्यर्थः ।। ११ ।।

**वेङ्कटमाधव–** **यः** अस्मान् **अग्ने!** अभिहिनस्ति अन्तिके **दूरे** वा, नश्यतु सः । अस्माकम् एव भव वर्धनाय ।। ११ ।।

**मुद्गल–** हे **अग्ने! नः** अस्मान् **अन्ति** अन्तिके समीपे **दूरे** विप्रकृष्टदेशे च स्थितः सन् **यः** शत्रुः **अभिदासति** उपक्षपयति, **सः** शत्रुः **पदीष्ट** पततु नश्यतु । त्वं च **अस्माकम् इत्** अस्माकमेव **वृधे** वर्धनाय **भव** ।। ११ ।।

**सायण–** हे **अग्ने! नः** अस्मान् **अन्ति** अन्तिके समीपे **दूरे** विप्रकृष्टदेशे च अवस्थितः सन् **यः** शत्रुः **अभिदासति** उपक्षपयति, **सः** शत्रुः **पदीष्ट** पततु नश्यतु । त्वं च **अस्माकम् इत्** अस्माकमेव **वृधे** वर्धनाय **भव** ।। **अभिदासति** । 'दसु उपक्षये' अस्मात् ण्यन्तात् लटि

'छन्दस्युभयथा' इति शप आर्धधातुकत्वात् 'णेरनिटि' इति णिलोपः । **अन्ति** । 'कादिलोपो बहुलमिति वक्तव्यम्' इति अन्तिकशब्दस्य ककारलोपः । **वृधे** । 'वृधु वृद्धौ'। सम्पदादिलक्षणो भावे क्विप् । 'सावेकाचः' इति विभक्तेरुदात्तत्वम् ।। ११ ।।

**सिद्धाञ्जनम्**– एकादशीमृचमाह– हे **अग्ने! यः** विरोधी अमानुषो मानुषो वा **नः** अस्मान् **अन्ति** अन्तिके समीपे **दूरे** विप्रकृष्टस्याने वा वर्तमानः सन् **अभिदासति** अभिद्रुत्योपक्षपयति, **सः** शत्रुः **पदिष्ट** पततु नश्यतु । **अस्माकम् इत्** अस्माकमेव **वृधे** वर्धनाय भव ।। **अभिदासति** 'दसु उपक्षये । **अन्ति**-अन्तिकशब्दस्य ककारलोपश्छान्दसः । **वृधे**-'वधु वृद्धौ, सम्पदादिलक्षणो भावे क्विप् ।। ११ ।।

## ऋक्संहिता पदपाठसहिता

**सहस्राक्षो विचर्षणिरग्नी रक्षांसि सेधति । होता गृणीत उक्थ्यः ।। १२ ।।**

**सहस्रऽअक्षः । विऽचर्षणिः । अग्निः । रक्षांसि । सेधति । होता । गृणीते । उक्थ्यः ।।**

**स्कन्द**– **सहस्राक्षः** अक्षिशब्देन अत्राक्षिस्थानीयत्वात् ज्वाला उच्यन्ते । सहस्राक्षिस्थानीय ज्वालः । **विचर्षणिः** विद्रष्टा **अग्निः रक्षांसि सेधति** सेधतिरत्र सामर्थ्याद्धिंसार्थः । हिनस्ति । **होता** च सन् यज्ञेषु **गृणीते** स्तौति देवान् **उक्थ्यः** प्रशस्यः ।। १२ ।।

**वेङ्कटमाधव**– अनेकज्वालः विद्रष्टा **अग्निः रक्षांसि** निरुणद्धि, **होता** स्तौति च देवान् प्रशास्यः ।। १२ ।।

**मुद्गल**– **सहस्राक्षः** असङ्ख्यातज्वालः । **विचर्षणिः** विशेषेण सर्वस्य द्रष्टा अयम् **अग्निः रक्षांसि, सेधति** प्रतिषेधति यज्ञान्निर्गमयति । स चाग्निः **उक्थ्यः** उक्थैः शस्त्रैरस्माभिः स्तूयमानः सन् **होता** देवानामाह्वाता भूत्वा **गृणीते** तान् स्तौति ।। १२ ।।

**सायण**– **सहस्राक्षः** असङ्ख्यातज्वालः । **विचर्षणिः** विशेषेण सर्वस्य द्रष्टा अयम् **अग्निः रक्षांसि, सेधति** प्रतिषेधति यज्ञान्निर्गमयति । स चाग्निः **उक्थ्यः** उक्थैः शस्त्रैरस्माभिः स्तूयमानः सन् **होता** देवानामाह्वाता भूत्वा **गृणीते** तान् स्तौति ।। **सहस्राक्षः** । 'बहुव्रीहौ सक्थ्यक्ष्णोः' इति षच् समासान्तः । सतिशिष्टत्वात्तस्यैव स्वरः शिष्यते । **सेधति** 'षिधु गत्याम्' । अत्र केवलोऽपि सोपसर्गार्थो द्रष्टव्यः । **गृणीते** । 'गॄ शब्दे' । 'प्वादीनां ह्रस्वः' इति ह्रस्वत्वम् ।।

**सिद्धाञ्जनम्–** द्वादशीमृचमाह– **सहस्राक्षः** सहस्रम् अक्षीणि यस्य सः । सर्वतोमुखी सामान्येन दृष्टिरस्येत्यर्थः । **विचर्षणिः** विशेषेण द्रष्टा प्रत्येकं सर्वस्य । **अग्निः, रक्षांसि** राक्षसान् यज्ञविघातकान् **सेधति** प्रतिषेधति । सः **उक्थ्यः** उक्थ्यैः शस्त्रैः स्तोत्रैः स्वयं स्तुत्यः । अस्माभिः स्तुतः सन् **होता** देवानामाह्वाता भूत्वा तान् **गृणीते** स्तौति । यजमानकृत्यं देवानामाराधनं स्वयं निर्वहति यजमानस्वात्मसमर्पणाद्धेतोः ।। **गृणीते**- 'गॄ-शब्दे' 'प्वादीनां ह्रस्वः' इति ह्रस्वत्वम् ।। १२ ।।

।। इति प्रथमाष्टके पञ्चमाध्याये अष्टाविंशो वर्गः ।।

## ।। अथ एकोनत्रिंशो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

(सूक्तम् ८०)

१६ गोतमो राहूगणः । इन्द्रः, १६ इन्द्रः, (अथर्वा, मनुः दध्यङ् च) पङ्क्तिः ।

**इत्था हि सोम इन्मदे ब्रह्मा चकार वर्धनम् ।**
**शविष्ठ वज्रिन्नोजसा पृथिव्या निः शशा अहिमर्चन्ननु स्वराज्यम् ।। १ ।।**
**इत्था । हि । सोमे । इत् । मदे । ब्रह्मा । चकार । वर्धनम् । शविष्ठ । वज्रिन् । ओजसा । पृथिव्याः । निः । शशाः । अहिम् । अर्चन् । अनु । स्वऽराज्यम् ।। १ ।।**

**स्कन्द–** 'ऐन्द्रमुत्तरम्' । उत्तरं सूक्तम् ऐन्द्रम् इन्द्रदैवतम् । हिशब्दो यस्मादर्थे । यस्मात् **इत्था** अमुना वक्ष्यमाणेन प्रकारेण सत्यम् वा । **सोमे इत् मदे** 'यस्य च भावेन' (पा.सू. २,३,३७) इत्येषा सप्तमी । तच्छब्दश्रुतेश्च लक्षणभूतयोग्यक्रियापदाध्याहारः । सोमे मदकरे उपकल्पिते । **ब्रह्मा चकार** ब्रह्मन् शब्दो ब्राह्मणशब्देन समानार्थः । आत्मन एवायम् अपरोक्ष-रूपेण प्रथमपुरुषेण निर्देशः । अयं गोतमो नाम ब्राह्मणः होता वा करोति । **वर्धनम्** वृद्धिकरं स्तोमम् । यस्मादिति वचनात् तच्छब्दोऽध्याहार्यः । तस्मात् हे **शविष्ठ! वज्रिन्!** स्वेन **ओजसा पृथिव्याः** 'पृथिवी' (निघ.१,३) इत्यन्तरिक्षनाम । अन्तरिक्षात् । **निः शशाः** 'शश प्लुतगतौ' । सामर्थ्याच्चात्रान्तर्णीतण्यर्थः । निर्गमय । भूमौ पातयेत्यर्थः । कम् । उच्यते । **अहिं** मेघम् । वृष्टिमित्यर्थः । **अर्चन् अनु** 'अर्च पूजायाम्' । अनुपूजयन् **स्वराज्यम्** आत्मीयं त्रैलोक्याधि-पत्यम् । आश्रितानुग्रहेण ह्याधिपत्यं पूज्यते । कीदृशो हि स प्रभुः यो नानुग्राहकः ।।१।।

**वेङ्कटमाधव–** इत्थम् **हि, सोमे** मदकरे त्वया पीते सति ब्राह्मणस्तत्र **वर्धनम्** स्तोत्रम् **चकार** । बलवत्तम! **वज्रिन्!** बलेन स्तुतिजनितेन **पृथिव्याः** निश्शासितवानसि । **अहिम्** । अत्र यास्कः– 'अर्चन्योऽनूपास्ते स्वाराज्यम् (या.१२,३४) इति ।। १ ।।

**मुद्गल–** 'इत्था' इति षोडशर्चं सप्तम् सूक्तम्' । गोतम ऋषिः । पङ्क्तिः छन्दः । इन्द्रो देवता ।। हे **शविष्ठ!** अतिशयेन बलवन्, **वज्रिन्! इत्था हि** इत्थमेव । अनेन शास्त्रोक्तप्रकारेणैव **मदे** मदकरे हर्षकरे **सोमे** त्वया पीते सति **ब्रह्मा** ब्राह्मणः स्तोता **वर्धनम्** तव वृद्धिकरं स्तोत्रम् **चकार** अनेन सूक्तेन कृतवान् । **इत्** इत्येतत् पादपूरणम् । अतस्त्वम् **ओजसा** बलेन **पृथिव्याः** सकाशात् **अहिम्** आगत्य हन्तारं वृत्रम् **निः शशाः** निःशेषेण अशाः । मा बाधस्वेति शासनं कृत्वा पृथिव्याः सकाशात् निरगमय इत्यर्थः । किं कुर्वन् । **स्वराज्यम्** स्वस्य राज्यं राजत्वम् **अनु** अनुलक्ष्य **अर्चन्** पूजयन् । स्वस्य स्वामित्वं प्रकटयन्नित्यर्थः ।। १ ।।

**सायण–** हे **शविष्ठ!** अतिशयेन बलवन्, **वज्रिन्!** वज्रवन्निन्द्र! **इत्था हि** इत्थमेव । अनेन शास्त्रोक्तप्रकारेणैव **मदे** मदकरे हर्षकरे **सोमे** त्वया पीते सति **ब्रह्मा** ब्राह्मणः स्तोता **वर्धनम्** तव वृद्धिकरं स्तोत्रम् **चकार** अनेन सूक्तेन कृतवान् । **इत्** इत्येतत् पादपूरणम् । अतस्त्वम् **ओजसा** बलेन **पृथिव्याः** सकाशात् **अहिम्** आगत्य हन्तारं वृत्रम् **निः शशाः** निःशेषेण अशाः । मा बाधस्वेति शासनं कृत्वा पृथिव्याः सकाशात् निरगमय इत्यर्थः । किं कुर्वन् । **स्वराज्यम्** स्वस्य राज्यं राजत्वम् **अनु** अनुलक्ष्य **अर्चन्** पूजयन् । स्वस्य स्वामित्वं प्रकटयन्नित्यर्थः ।

**शशाः** 'शासु अनुशिष्टौ' लङि लुकि प्राप्ते 'बहुलं छन्दसि' इति शपः श्लुः । **स्वराज्यम्** राज्ञो भावः कर्म वा राज्यम् । 'पत्यन्तपुरोहितादिभ्यो यक्' इति यक् । तत्र हि 'राजासे' (पा.सू.५.१.१२८ ग.) इति पठ्यते । स्वस्य राज्यं स्वराज्यम् । 'अकर्मधारये राज्यम्' (पा.सू. ६.२.१३०) इत्युत्तरपदाद्युदात्तत्वम् ।। १ ।।

**सिद्धाञ्जनम्–** 'इत्था' इति षोडशर्चं सप्तमं सूक्तं गोतमस्यार्षमैन्द्रं पङ्क्तिच्छन्दस्कम् । अनुक्रान्तं च- 'इत्था षोळशेन्द्रं पाङ्कं हि' । हिशब्दप्रयोगात् तुह्यादिपरिभाषया इदमुत्तरे च द्वे पङ्क्तिच्छन्दस्के । पृष्ठ्यषडहस्य पञ्चमेऽहनि मरुत्वतीये इदं सूक्तम् । सूत्रितं च- 'अवितासीत्था

हीन्द्र पिब तुभ्यमिति मरुत्वतीयम्' (आश्व.श्रौ.७.१२) इति । चतुर्विंशेऽहनि अच्छावाकस्याद्यस्तृचो वैकल्पिकोऽनुरूपः । 'होत्रकाणाम्' इति खण्डे सूत्रितम्- 'इत्था हि सोम इन्मद उभे यदिन्द्र रोदसी' (आश्व.श्रौ.७.४) इति । महावते निष्केवल्यस्य दक्षिणपक्षे 'इत्था हि' इत्येका । तथैव पञ्चमारण्यके सूत्रितम्- 'इत्था हि सोम इन्मद इति पङ्क्तिः' (ऐ.आ.५.२.२) इति ।।

तत्र प्रथमामृचमाह– हे **शविष्ठ** अत्यन्तदीप्तबलोपेत, **वज्रिन्** वज्रवन् इन्द्र, **इत्था हि** साध्वेवेदं (सत्यनामैतत्) यत् त्वया **मदे** मदकरे **सोमे** यजमानार्पितसर्वानुभूतिरसे स्वीकृते सति **ब्रह्म** मन्त्रः **वर्धनम्** यजमानात्मनि तवाभिवर्धनं **चकार** करोति, लडर्थे लिट् । **इत्** पादपूरणे । तस्मात् त्वं **ओजसा** वीर्यवलेन **पृथिव्याः** अन्नमयात् जगतः शरीरात् जागरितस्थानात् **अहिम्** वृत्रं **निः शशाः** निर्गमितवान्, निश्शेषेण शासनं कृतवानसि निर्गमनाय । कि कुर्वन् ? **स्वराज्यम्** स्वस्य राज्यं राजत्वं **अनु** अनुलक्ष्य **अर्चन्** पूजयन्, स्वीयस्वामित्वं प्रकटयन् ।। **शशाः**- 'शासु अनुशिष्टौ, यङ्लुकि शपः श्लुः छन्दसि । **स्वराज्यम्**-राज्ञो भावः कर्म वा, 'पत्यन्तपुरोहितादिभ्यो यक्' ।। १ ।।

## ऋक्संहिता पदपाठसहिता

**स त्वा॑मद॒द्वृषा॒ मद॑ः सोम॑ः श्ये॒नाभृ॑तः सु॒तः ।**
**येना॑ वृ॒त्रं निर॒द्भ्यो ज॒घन्थ॑ वज्रि॒न्नोज॒सार्च॒न्ननु॑ स्व॒राज्य॑म् ।। २ ।।**
**सः । त्वा॒ । अ॒म॒द॒त् । वृषा॑ । मद॑ः । सोम॑ः । श्ये॒नऽआ॑भृतः । सु॒तः । येन॑ । वृ॒त्रम् । निः । अ॒त्ऽभ्यः । ज॒घन्थ॑ । व॒ज्रि॒न् । ओज॑सा । अर्च॑न् । अनु॑ । स्व॒ऽराज्य॑म् ।।**

**स्कन्द– स त्वा अमदत्** 'मद तृप्तौ' । तर्पितवान् । **वृषा** वर्षिता । यत्सोमं पीत्वेन्द्रो वर्षति तदिदं सोम एवोपचर्यते । **मदः** मदकरः **सोमः श्येनाभृतः** । अत्रैतरेयब्राह्मणाधीतम् इतिहासमाचक्षते– 'सोमो वै राजा अमुष्मिन् लोक आसीत् । तं देवाश्च ऋषयश्चाभ्यध्यायन्, कथम् अयमस्मान् सोमो राजा आगच्छेदिति, तेऽब्रुवन् छन्दांसि, यूयं न इमं सोमं राजानमाहरतेति । तानि तथेति प्रतिपद्य सुपर्णरूपाणि भूत्वोदपतन्निति । तेषां जगतो प्रथमोदपतत् । सा अर्धमध्वनो गत्वाऽश्राम्यत् । सा दक्षिणा च तपश्चाहरत् न सोमम् । अथ त्रिष्टुबुदपतत् । सा भूयोऽर्धादध्वनो गत्वाऽश्राम्यत् । सा दक्षिणामाहरत्, न सोमम् । अथ गायत्र्युदपतत् । सा गत्वा सोमपालान् भीषयित्वा पद्भ्यां च मुखेन सोमं परिगृह्याऽऽहरदिति (तु.ऐ.ब्रा.

३,२५,२६) । तदेतदुच्यते– 'श्येनाभृतः' इति । श्येनरूपया गायत्र्या आभृतः श्येनाभृतः । **सुतः** अभिषुतः । यः कीदृशः सोमः । उच्यते । **येन** हेतावियं तृतीया । येन हेतुना । यं पीत्वा पातुं वेत्यर्थः । **वृत्रम्** मेघम् **अद्भ्यः** अपामर्थाय **निर्जघन्थ** निश्चयेन हंसि हतवान् वा । हे **वज्रिन्!** स्वेन **ओजसा** । **अर्चन् अनु स्वराज्यम्** ।। २ ।।

**वेङ्कटमाधव– स त्वा अमदत् वृषा सोमः,** मदकरः श्येनेनाभृतः, **येन वृत्रम्** अन्तरिक्षादपि **निर्जघन्थ वज्रिन्!** बलेन ।। २ ।।

**मुद्गल–** हे इन्द्र! **त्वा** त्वाम्, **सः सोमः अमदत्** अमदयत् हर्षं प्रापयत् । कीदृशः सोमः । **वृषा** सेचनस्वभावः **मदः** मदकरो हर्षकरः । **श्येनाभृतः** श्येनरूपमापन्नया पक्ष्याकारया गायत्र्या दिवः सकाशादाहृतः **सुतः** अभिषुतः । हे **वज्रिन्** वज्रवन्निन्द्र! **येन** पीतेन सोमेन **ओजसा** बलकरेण **अद्भ्यः** अन्तरिक्षसकाशात् **वृत्रम् निर्जघन्थ** हतवानसि । अन्यत् पूर्ववत् ।।२।।

**सायण–** हे इन्द्र! **त्वा** त्वाम्, **सः सोमः अमदत्** अमदयत् हर्षं प्रापयत् । कीदृशः सोमः । **वृषा** सेचनस्वभावः **मदः** मदकरो हर्षकारी । **श्येनाभृतः** श्येनरूपमापन्नया पक्ष्याकारया गायत्र्या दिवः सकाशादाहृतः **सुतः** अभिषुतः । हे **वज्रिन्** वज्रवन्निन्द्र! **येन** पीतेन सोमेन **ओजसा** बलकरेण **अद्भ्यः** अन्तरिक्षसकाशात् **वृत्रम् निर्जघन्थ** हतवानसि । अन्यत्पूर्ववत् ।। **अमदत्** 'मदी हर्षे' अस्मात् णिचि 'मदी हर्षग्लपनयोः' इति घटादिषु पाठात् मित्त्वे सति 'मितां ह्रस्वः' इति ह्रस्वत्वम् । लङि 'छन्दस्युभयथा' इति शप आर्धधातुकत्वात् 'णेरनिटि' इति णिलोपः । **अद्भ्यः** । आप इत्यन्तरिक्षनाम । 'अपो भि' (पा.सू.७.४.४८) इति पकारस्य तत्वम् । **जघन्थ** क्रादिनियमप्राप्तस्य इटः 'उपदेशेऽत्वतः' इति प्रतिषेधः । 'अभ्यासाच्च' इति हकारस्य घत्वम् । 'लिति' इति प्रत्ययात्पूर्वस्योदात्तत्वम् । यद्वृत्तयोगादनिघातः ।। २ ।।

**सिद्धाञ्जनम्–** द्वितीयामृचमाह– हे इन्द्र! **त्वा** त्वां **सः सोमः** त्वया परिगृह्य पीतः सोमरसः **अमदत्** अमदयत्, हर्षितवान् । कीदृशः सोमः? **वृषा** वर्षिता स्वरसस्य, **मदः** मदकारी **श्येनाभृतः** श्येनेन पक्षिणा आभृतः आहृतः आनीतः, यजमानस्य हृदयाद् अन्तरात्मन उद्गता मन्त्रात्मिका वाक् उत्पतनप्रख्यातो वेगवान् पक्षी इति बोध्यम् । तस्मान्मन्त्रवाग्बलेन दिवः उत्तमप्रज्ञाभूमेः सकाशात् सम्पादितः सोम इति आर्षं रहस्यम् । गायत्रीमन्त्रः पक्षिरूपं गृहीत्वा

स्वर्गलोकं गत्वा सोमलतां आनिनायेति कर्मठानां पक्षं तात्पर्यविवेकवर्जितमिति दूरापास्तम् । अत एव मन्त्रेण इन्द्रो वर्धते 'ब्रह्मा चकार वर्धनम्' इति पूर्वस्यामृचि गीतम् । पुनः कीदृशः सोमः? **सुतः** अभिषुतः, संस्कृतः । **वज्रिन्** वज्रवन्निन्द्र! **येन** सोमेन पीतेन **ओजसा** वीर्यबलेन **अद्भ्यः** अद्भिर्लक्षितम् अन्तरिक्षं मध्यमस्थानं स्वस्मिन्नन्तर्हितज्योतिर्बलादिकं प्राणमयप्रज्ञाक्षेत्रं, तस्मात् **वृत्रम्** आवरकं असुरं **निर्जघन्थ** निर्गमय्य हतवानसि ।। पूर्वं पृथिव्याः, अत्र अन्तरिक्षात् इत्युक्तम् अवधेयम् । अन्यद्गतम् ।। **अमदत्**- 'मदी हर्षे' अन्तर्भावितण्यर्थः । **जघन्थ** हन्तेर्लिट् ।। २ ।।

## ऋक्संहिता पदपाठसहिता

**प्रेह्यभीहि धृष्णुहि न ते वज्रो नि यंसते ।**
**इन्द्र नृम्णं हि ते शवो हनो वृत्रं जया अपोऽर्चन्ननु स्वराज्यम् ।। ३ ।।**
**प्र । इहि । अभि । इहि । धृष्णुहि । न । ते । वज्रः । नि । यंसते । इन्द्र । नृम्णम् । हि ते । शवः । हनः । वृत्रम् । जयाः । अपः । अर्चन् । अनु । स्वऽराज्यम् ।।**

**स्कन्द– प्र इहि** प्रगच्छ । प्रगम्य च **अभि इहि** अभिगच्छ । अभिगम्य च **धृष्णुहि** धर्षय अभिभव शत्रून् । किं कारणम् । यस्मात् **ते** तव **वज्रः न नि यंसते** न नियम्यते केनचित् । केनचिन्निरोद्धुं न शक्यत इत्यर्थः । किञ्च हे **इन्द्र! नृम्णम् हि ते शवः** यस्मान्नृम्णं शत्रुभूतानामपि मनुष्याणां नमनकरं तव बलं तस्मात् **हनः** जहि **वृत्रम्** । हत्वा च तदन्तर्भूता **जयाः अपः । अर्चन् अनु स्वराज्यम्** ।। ३ ।।

**वेङ्कटमाधव–** 'समुच्चयेऽन्यतरस्याम्' (पा.३,४,३) इति लोट् । तव **वज्रः** प्रैति अभ्येति धर्षयति च । न क्वचिन्नियम्यते तव वज्रः । इन्द्रस्यैवानुशासनम् । **इन्द्र! नृम्णम् हि** तव बलम् । नॄन् नमयति । जहि **वृत्रम्,** उदकानि च जय ।। ३ ।।

**मुद्गल–** हे **इन्द्र! प्र इहि** प्रकर्षेण गच्छ, **अभि इहि** हन्तव्यान् शत्रूनाभिमुख्येन प्राप्नुहि । प्राप्य च **धृष्णुहि** तान् शत्रून् अभिभव । तथा **ते** तव **वज्रः । न नि यंसते** शत्रुभिर्न नियम्यते । अप्रतिहतगतिरित्यर्थः । तथा **ते शवः** त्वदीयं बलम् **नृम्णम्** नृणां पुरुषाणां नामकम् अभिभावकं **हि** यस्मादेवं तस्माद् **वृत्रम्** असुरम् **हनः** जहि । ततोऽनन्तरं तेन निरुद्धाः **अपः** उदकानि **जयाः** जय । वृत्रं हत्वा तेनावृतमुदकं लभस्वेत्यर्थः । अन्यत् समानम् ।। ३ ।।

**सायण–** हे **इन्द्र! प्र इहि** प्रकर्षेण गच्छ, **अभि इहि** हन्तव्यान् शत्रूनाभिमुख्येन प्राप्नुहि। प्राप्य च **धृष्णुहि** तान् शत्रून् अभिभव। तथा **ते** तव **वज्रः**। **न नि यंसते** शत्रुभिर्न नियम्यते। अप्रतिहतगतिरित्यर्थः। तथा **ते शवः** त्वदीयं बलम् **नृम्णम्** नृणां पुरुषाणां नामकम् अभिभावकं **हि** यस्मादेवं तस्माद् **वृत्रम्** असुरं मेघं वा **हनः** जहि। ततोऽनन्तरं तेन निरुद्धाः **अपः** उदकानि **जयाः** जय। वृत्रं हत्वा तेनावृतमुदकं लभस्वेत्यर्थः। अन्यत् समानम्॥

**यंसते**। यमेः कर्मणि लेटि 'सिब्बहुलम्' इति सिप्। 'लेटोऽडाटौ' इति अडागमः। **हनः**। लोडर्थे छान्दसो लङ्। 'बहुलं छन्दसि' इति शपो लुगभावः। शपः पित्त्वादनुदात्तत्वे धातुस्वरः शिष्यते। पूर्वपदस्यासमानवाक्यस्थत्वात् निघाताभावः। **जयाः**। जयतेर्लेटि आडागमः। पूर्ववत्स्वरः॥ ३॥

**सिद्धाञ्जनम्–** तृतीयामृचमाह– हे **इन्द्र! प्रेहि** प्रकर्षेण गच्छ शत्रूनुद्दिश्य, **अभीहि** आभिमुख्येन गच्छ, **धृष्णुहि** अभिभव तान् शत्रून्। **ते** तव **वज्रः** आयुधं **न नियंसते** न नियम्यते केनापि, अनिरुद्धगतित्वात्। **ते** तव **शवः** दीप्तं बलं **नृम्णम् हि** पौरुषप्रचुरं हि। तस्मात् **वृत्रम्** आवरकं निरोधकं वा असुरं चित्प्रकाशादिविरोधिनं **हनः** जहि। **अपः** वृत्राक्रान्ताः उक्तलक्षणा अपः, **जयाः** जय लभस्व। अन्यत् पूर्ववत्॥ **यंसते**-यमेः कर्मणि लेटि 'सिप् बहुलम्' इति सिप्, लेटः अडागमः। **हनः**-लोडर्थे लङ्। **जयाः** जयतेर्लेट्याडागमः॥३॥

## ऋक्संहिता पदपाठसहिता

**निरि॑न्द्र॒ भूम्या॒ अधि॑ वृ॒त्रं ज॑घन्थ॒ निर्दि॒वः।**
**सृ॒जा म॒रुत्व॑तीरव॑ जी॒वध॑न्या इ॒मा अ॒पोऽर्च॒न्ननु॑ स्व॒राज्य॑म्॥ ४॥**
निः। इ॒न्द्र॒। भूम्याः॑। अधि॑। वृ॒त्रम्। ज॒घ॒न्थ॒। निः। दि॒वः। सृ॒ज। म॒रुत्व॑तीः। अव॑। जी॒वऽध॑न्याः। इ॒माः। अ॒पः। अर्च॑न्। अनु॑। स्व॒ऽराज्य॑म्॥ ४॥

**स्कन्द–** हे **इन्द्र! भूम्याः अधि** अधिशब्दः 'अधिपरी अनर्थकौ' (पा.१,४,९३) इत्येवं कर्मप्रवचनीयः पदपूरणः। षष्ठीनिर्देशाच्चार्थायेति वाक्यशेषः। भूम्या अर्थाय। **वृत्रम् निः जघन्थ** निश्चयेन जहि। न च केवलाय भूम्या अर्थाय। किं तर्हि। **निः दिवः** दिवोऽप्यर्थाय निर्जघन्थ। उभयोरपि देवमनुष्ययोरर्थायेत्यर्थः। अथवा भूम्या अधि इत्यधिशब्दः उपरिभावे। योऽयं भूम्या

दिवश्चोपरि अत्यन्तोच्चो मेघः तं निर्जघन्थेति । निर्हत्य च **सृज मरुत्वतीः अव** अवसृज देहि मरुत्वतीः । दातृत्वेन मरुतो यासां सन्ति ता मरुत्वत्यः । त्वत्सखायो मरुतः या दातुं समर्थाः, नान्यः कश्चिदित्यर्थः । **जीवधन्याः** धनमेव धन्यम् । स्वार्थिको यत्प्रत्ययः । सर्वजीवानां धनभूताः । अथवा धन्या इति धिनोतेः प्रीणनार्थस्य इदं रूपम् । सर्वजीवानां प्रीणयित्रीः । **इमाः अपः** वृष्टिलक्षणाः । **अर्चन् अनु स्वराज्यम्** ।। ४ ।।

**वेङ्कटमाधव–** द्यावापृथिव्योः **वृत्रं निः जघन्थ** । स त्वम् **मरुत्वतीः अपः अव सृज**, याभिः जीवा धन्या भवन्ति ।। ४ ।।

**मुद्गल–** हे **इन्द्र! भूम्या अधि** भूलोकस्योपरि **वृत्रं निः जघन्थ** निःशेषेण हतवानसि । तथा **दिवः** द्युलोकात् **निः** जघन्थ । **हत्वा** च **इमाः अपः** वृष्ट्युदकानि **अव सृज** अधः पातय । कीदृशीरपः । **मरुत्वतीः** मरुद्भिः संयुक्ताः । **जीवधन्याः** जीवाः प्राणिनः धन्याः तृप्ता याभिस्ताः । अन्यत्समानम् ।। ४ ।।

**सायण–** हे **इन्द्र! भूम्या अधि** भूलोकस्योपरि **वृत्रं निः जघन्य** निःशेषेण हतवानसि । तथा **दिवः** द्युलोकात् **निः** जघन्थ । **हत्वा** च **इमाः अपः** वृष्ट्युदकानि **अव सृज** अधः पातय । कीदृशीरपः । **मरुत्वतीः** मरुद्भिः संयुक्ताः । **जीवधन्याः** जीवाः प्राणिनः धन्याः तृप्ता याभिस्ताः । अन्यत्समानम् ।। ४ ।।

**सिद्धाञ्जनम्–** चतुर्थीमृचमाह– हे **इन्द्र! भूम्याः अधि** पृथिव्या उपरि तं आवृतवन्तं **वृत्रम्** उक्तस्वरूपं **निर्जघन्थ** निःशेषेण हतवानसि, तथा **दिवः** अन्तरिक्षात् तं **निः** जघन्थ । अधुना **इमाः** अस्माभिः प्रतीक्ष्यमाणाः प्रत्यासन्नाः **अपः** यथोक्तलक्षणाः **अवसृज** अधोगमय, वर्षय । कीदृशीरपः ? **मरुत्वतीः** मरुद्भिर्युक्ताः, मरुतः प्राणमयान्तरिक्षधाम्न उद्भूताः प्रचण्डवेगाः, शुद्धमनोमयभुवं दिवं प्राप्य धीवृत्तिबलात्मका भूत्वा दिवस्पतेरिन्द्रस्य भ्रातरो भवन्तीति प्रागुक्तमाशयं स्मारयामः । अत एव तादृशमरुत्साहचर्यात् **जीवधन्याः** जीवाः प्राणवन्तः धन्याः भाग्यशालिनः याभिस्ताः । अन्यत् पूर्ववत् ।। ४ ।।

## ऋक्संहिता पदपाठसहिता

**इन्द्रो॑ वृ॒त्रस्य॒ दोध॑तः॒ सानुं॒ वज्रे॑ण ही॒ळि॒तः ।**
**अ॒भि॒क्रम्याव॑ जिघ्नते॒ऽपः सर्मा॑य चो॒दय॒न्नर्च॒न्ननु॑ स्व॒राज्य॑म् ॥ ५ ॥**
इन्द्रः॑ । वृ॒त्रस्य॑ । दोध॑तः । सानु॑म् । वज्रे॑ण । ही॒ळि॒तः । अ॒भि॒ऽक्रम्य॑ । अव॑ । जि॒घ्न॒ते॒ । अ॒पः । सर्मा॑य । चो॒दय॑न् । अर्च॑न् । अनु॑ । स्व॒ऽराज्य॑म् ॥ ५ ॥

**स्कन्द–** **इन्द्रः वृत्रस्य दोधतः** क्रुध्यतिकर्माऽयम् (तु.निघ.२,१२) । क्रुध्यतः **सानुम्** समुच्छ्रितं प्रदेशं **वज्रेण हीळितः** क्रुद्धः सन् **अभिक्रम्य अव, जिघ्नते** हन्ति । वृष्टिलक्षणा **अपः सर्माय** सरणाय भूमिं प्रति गमनाय **चोदयन्** । वृष्टिपातार्थमित्यर्थः । **अर्चन् अनु स्वराज्यम्** ॥ ५ ॥

**वेङ्कटमाधव–** **इन्द्रः वृत्रस्य** धून्वतः समुच्छ्रितं प्रदेशम् **वज्रेण** क्रुद्धः सन् **अभिक्रम्य अव** हन्ति, उदकानि सरणार्थम् **चोदयन्** । वृष्टिपातार्थमित्यर्थः । **अर्चन् अनु स्वराज्यम्** ॥

**मुद्गल–** **हीळितः** क्रुद्धः **इन्द्रः अभिक्रम्य** आभिमुख्येन गत्वा **दोधतः** भृशं कम्पमानस्य **वृत्रस्य सानुं** समुच्छ्रितं हनुप्रदेशं **वज्रेण अव जिघ्नते** प्रहरति । किं कुर्वन् । **अपः** वृष्ट्युदकानि **सर्माय** सरणाय निर्गमनाय **चोदयन्** प्रेरयन् ॥ ५ ॥

**सायण–** **हीळितः** क्रुद्धः **इन्द्रः अभिक्रम्य** आभिमुख्येन गत्वा **दोधतः** भृशं कम्पमानस्य **वृत्रस्य सानुं** समुच्छ्रितं हनुप्रदेशं **वज्रेण अव जिघ्नते** प्रहरति । किं कुर्वन् । **अपः** वृष्ट्युदकानि **सर्माय** सरणाय निर्गमनाय **चोदयन्** प्रेरयन् ॥ **दोधतः** । 'धूञ् कम्पने'। अस्मात् यङ्लुगन्तात् शतरि अन्त्यलोपश्छान्दसः । 'अभ्यस्ता-नामादिः' इत्याद्युदात्तत्वम् । **हीळितः** । 'हेडृ होडृ अनादरे' । 'हेळते' (नि.२.१२.२) इत्येतत् क्रुध्यतिकर्मसु पठितम् । अस्मान्निष्ठायां वर्णव्यापत्त्या ईकारः । **जिघ्नते** हन्तेर्लटि व्यत्ययेन आत्मनेपदं बहुवचनं च । 'बहुलं छन्दसि' इति शपः श्लुः । 'इत्' इत्यनुवृत्तौ 'बहुलं छन्दसि' इति अभ्यासस्य इत्वम् । 'गमहन' इत्यादिना उपधा-लोपः । **सर्माय** 'सृ गतौ' । 'अर्तिस्तुसु' इत्यादिना भावे मन्प्रत्ययः । नित्त्वादाद्युदात्तत्वम् ॥

**सिद्धाञ्जनम्–** पञ्चमीमृचमाह– **हीळितः** अनादृतः वृत्रेण, अत एव क्रुद्धस्तस्मै **इन्द्रः**, **अभिक्रम्य** आभिमुख्येन गत्वा **दोधतः** कम्पयमानस्य **वृत्रस्य** शत्रोः **सानुम्** समुच्छ्रितं प्रदेशं

अन्तरिक्षगतं **वज्रेण अवजिघ्नते** प्रहरति । किं कुर्वन् ? **अपः चोदयन्** अपां प्रेरणं कुर्वन् । किमर्थम् ? **सर्माय** सरणाय निर्गमनाय । अन्यत् समानम् ।। **हीळितः** 'हेडृ होडृ अनादरे' ईकारश्छान्दसः, हेळते क्रुध्यतिकर्मेति पठितम् । **जिघ्नते**-हन्तेर्लिटि व्यत्ययेनात्मनेपदं बहुवचनं च । **सर्माय**-'सृ गतौ' 'अतिस्तुसु' इत्यादिना भावे मन्प्रत्ययः ।। ५ ।।

**।। इति प्रथमाष्टके पञ्चमाध्याये एकोनत्रिंशो वर्गः ।।**

## ।। अथ त्रिंशो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

**अधि सानौ नि जिघ्नते वज्रेण शतपर्वणा ।**
**मन्दान इन्द्रो अन्धसः सखिभ्यो गातुमिच्छत्यर्चन्ननु स्वराज्यम् ।। ६ ।।**
**अधि । सानौ । नि । जिघ्नते । वज्रेण । शतऽपर्वणा । मन्दानः । इन्द्रः । अन्धसः । सखिऽभ्यः । गातुम् । इच्छति । अर्चन् । अनु । स्वऽराज्यम् ।।**

**स्कन्द–** **अधि** इत्युपरिभावे । **सानौ** सानुनः समुच्छ्रितस्य प्रदेशस्य **नि जिघ्नते** नियमेन मेघमत्यर्थं हन्ति । **वज्रेण शतपर्वणा** पर्वशतोपेतेन । अत्यन्तं हन्तेत्यर्थः । **मन्दानः** मोदमानः । तृप्यन्नित्यर्थः । कः । **इन्द्रः** । केन । **अन्धसः** तृतीयार्थे षष्ठी । सोमलक्षणेन अन्नेन । कस्मात् निजिघ्नते । उच्यते । यस्मात् **सखिभ्यः** सखीनाम् अर्थाय **गातुम्** भूमिं प्रति गमनम् **इच्छति** । कस्य । सामर्थ्याद् वृष्टिलक्षणानामपाम् । **अर्चन् अनु स्वराज्यम्** ।। ६ ।।

**वेङ्कटमाधव–** समुच्छ्रितदेशे मेघं निहन्ति । **वज्रेण** पर्वशतोपेतेन **मोदमानः इन्द्रः** सोमेन, **सखिभ्यः** गमनं इच्छति आत्मानं प्रति ।। ६ ।।

**मुद्गल–** **इन्द्रः, शतपर्वणा** शतसङ्ख्याकधाराभिर्युक्तेन **वज्रेण सानौ अधि नि जिघ्नते** अधिः सप्तम्यर्थानुवादी । समुच्छ्रिते वृत्रस्य कपोलादौ स्थाने नितरां हिनस्ति । स च इन्द्रः **मन्दानः** मन्दमानः स्तूयमानः सन् **सखिभ्यः** समानख्यानेभ्यः स्तोतृभ्यः **अन्धसः** अन्नस्य **गातुम्** मार्गमुपायम् **इच्छति** । अन्यत् पूर्ववत् ।। ६ ।।

**सायण–** **इन्द्रः, शतपर्वणा** शतसङ्ख्याकधाराभिर्युक्तेन **वज्रेण सानौ अधि नि जिघ्नते** अधिः सप्तम्यर्थानुवादी । समुच्छ्रिते वृत्रस्य कपोलादौ स्थाने नितरां हिनस्ति । स च इन्द्रः

**मन्दानः** मन्दमानः स्तूयमानः सन् **सखिभ्यः** समानख्यानेभ्यः स्तोतृभ्यः **अन्धसः** अन्नस्य **गातुम्** मार्गमुपायम् **इच्छति** । अन्यत् पूर्ववत् ।। **मन्दानः** । 'मदि स्तुतौ' कर्मणि शानचि यक्, 'छन्दस्युभयथा' इति शानच आर्धधातुक त्वात् अतोलोपयलोपौ । अनुदात्तेतः परत्वात् शानचो लसार्वधातुकानुदात्तत्वे सति यक एवोदात्तत्वम् । अनुदात्ते शानचि तस्य यको लोपे सति उदात्तनिवृत्तिस्वरेण शानच उदात्तत्वं प्राप्नोति । एवं तर्हि शानच आर्धधातुकत्वादेव लसार्वधातुकानुदात्तत्वाभावे चित्स्वर एवावशिष्यते ।। ६ ।।

**सिद्धाञ्जनम्**– षष्ठीमृचमाह– **इन्द्रः शतपर्वणा** बह्वर्थः शतशब्दः बहुपर्वधाराभिर्युक्तेन **वज्रेण** स्वायुधेन **सानौ अधि** सप्तम्यर्थानुवादी अधिः, वृत्रावासस्य समुच्छ्रिते अन्तरिक्षप्रदेशे तं **निजिघ्नते** नितरां प्रहरति । ततश्च सः **अन्धसः** पीतात् सोमाद्धेतोः **मन्दानः** मन्दमानः मोदमानः **सखिभ्यः** यजनाद् देवसख्यं प्राप्नुवद्भ्यः ऋषिभ्यः **गातुम्** मार्गं ऊर्ध्वं स्वसन्निधिं गन्तुं इति शेषः **इच्छति** । अन्यत् समानम् ।। "मन्दानः स्तूयमानः ..... अन्धसो गातुं अन्नस्य मार्गम्" इति सायणः ।। **मन्दानः**-'मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु ।। ६ ।।

## ऋक्संहिता पदपाठसहिता

**इन्द्र तुभ्यमिदद्रिवोऽनुत्तं वज्रिन्वीर्यम् ।**
**यद्ध त्यं मायिनं मृगं तमु त्वं माययावधीरर्चन्ननु स्वराज्यम् ।। ७ ।।**
इन्द्र । तुभ्यम् । इत् । अद्रिऽवः । अनुत्तम् । वज्रिन् । वीर्यम् । यत् । ह । त्यम् । मायिनम् । मृगम् । तम् । ऊँ इति । त्वम् । मायया । अवधीः । अर्चन् । अनु । स्वऽराज्यम् ।।

**स्कन्द**– हे **इन्द्र! तुभ्यम्** षष्ठ्यर्थे चतुर्थ्येषा । तव । हे **अद्रिवः** । अद्रयः सोमाभिषवग्रावाणः, तद्वन्! अथवा अद्रिर्मेघः, तेन हन्तव्येन तद्वन्! मेघानां हन्तरित्यर्थः । **अनुत्तम्** अप्रेरितम् । अनभिभूतपूर्वं केनचिदित्यर्थः । हे **वज्रिन्! वीर्यम्** सामर्थ्यम् । येन किं कृतम् । उच्यते यत् त्यमिति विलिङ्गावपि समानाधिकरणौ । उभयत्र च तृतीयार्थे द्वितीया । हशब्दश्च पदपूरणः । येन तेन । **मायिनं मृगं** मृगनामानम् असुरं मार्गणीयं वा मेघम् । तच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽध्याहार्यः । यम् अन्ये नाशक्नुवन् हन्तुम्, **तम् त्वम्** स्वया मायया **अवधीः** । **अर्चन् अनु स्वराज्यम्** ।। ७ ।।

**वेङ्कटमाधव– इन्द्र!** तव एव केनचिदहिंसितं **वीर्यम्** । **वज्रिन्!** अद्रिरादृणोत्यमित्रानिति वज्र एवोक्तः । **यत्** खलु **तं** मायाविनम् मृगासुरम् अपश्यः **तम् त्वम् मायया** एव हतवान् ।।

**मुद्गल–** हे **अद्रिवः!** वाहनरूपमेघयुक्त, **वज्रिन्!** वज्रवन् **इन्द्र! तुभ्यम् इत्** तवैव **वीर्यं** सामर्थ्यम् **अनुत्तम्** शत्रुभिरतिरस्कृतम् । **यत् ह** यस्मात् खलु **मायिनम्** मायाविनम् **त्यम्** तं प्रसिद्धं वञ्चयितारम् । लोकोपद्रवकारिणमित्यर्थः । **मृगम्** मृगरूपमापन्नम् **तम्** वृत्रम् **त्वम्** अपि **मायया** एव **अवधीः** हतवानसि । अन्यत् पूर्ववत् ।। ७ ।।

**सायण–** अद्रिरिति मेघनाम । हे **अद्रिवः!** वाहनरूपमेघयुक्त, **वज्रिन्!** वज्रवन् **इन्द्र! तुभ्यम् इत्** तवैव **वीर्यं** सामर्थ्यम् **अनुत्तम्** शत्रुभिरतिरस्कृतम् । **यत् ह** यस्मात् खलु **मायिनम्** मायाविनम् **त्यम्** तं प्रसिद्धं वञ्चयितारम् । लोकोपद्रवकारिणमित्यर्थः । **मृगम्** मृगरूपमापन्नम् **तम्** वृत्रम् **त्वम्** अपि **मायया** एव **अवधीः** हतवानसि । **अनुत्तम्** । 'नसत्तनिषत्त' इति निपातनात् निष्ठानत्वाभावः । **अवधीः** हन्तेः 'लुङि च' इति वधादेशः । स चादन्तः । तस्य अतो लोपे सति स्थानिवद्भावात् सिचि वृद्ध्यभावः ।। ७ ।।

**सिद्धाञ्जनम्–** सप्तमीमृचमाह– **अद्रिवः** पर्वतवन् **इन्द्र!** गावः यत्र गूढा आसन् स पर्वत इन्द्रस्य वशं गतः वज्रबलेन, पर्वतो मेघः यत्र आपो निरुद्धाः, तद्वान् इन्द्रः । विचारितः पूर्वम् (१.१०.७) 'कृणुष्व राधो अद्रिवः' इत्यत्र । **वज्रिन्** वज्रवन्**! तुभ्यं इत्** तवैव **वीर्यम्** सामर्थ्यं **अनुत्तम्** अनुन्नम् अप्रेरितं शत्रुभिर्न स्पृष्टम् अभिभूतमिति यावत् । **यत् ह** यस्मात् वीर्यात् खलु **मायिनम्** मायाविनं वञ्चकं **मृगम्** पलायनपटुर्यथा दुर्ग्रहस्तथावस्थितं **त्यम्** तम् प्रसिद्धं वृत्रं **त्वमु** त्वमपि **मायया** कपटयुक्त्यैव **अवधीः** हतवानसि । अन्यत्समानम् ।। **अनुत्तम्**- नुदतेः क्तः, निष्ठानत्वाभावः 'नसत्तनिषत्ते'ति निपातनात् । **अवधीः** हन्तेर्लुङि वधादेशः ।।

## ऋक्संहिता पदपाठसहिता

**वि ते वज्रा॑सो अस्थिरन्नव॒तिं ना॒व्या॒३॒॑ अनु॑ ।**
**म॒हत्त॑ इन्द्र वी॒र्यं॑ बा॒ह्वोस्ते॒ बलं॑ हि॒तमर्च॒न्ननु॑ स्व॒राज्य॑म् ।। ८ ।।**
वि । ते॒ । वज्रा॑सः । अ॒स्थि॒र॒न् । न॒व॒तिम् । ना॒व्याः॑ । अनु॑ । म॒ह॒त् । ते॒ । इ॒न्द्र॒ । वी॒र्य॑म् ।
बा॒ह्वोः । ते॒ । बल॑म् । हि॒तम् । अर्च॑न् । अनु॑ । स्व॒ऽराज्य॑म् ।। ८ ।।

**स्कन्द–** **ते** तव स्वभूताः **वज्रासः** वज्राः **वि अस्थिरन्** विपूर्वस्तिष्ठतिर्गत्यर्थः । अगच्छन् । कं प्रति । उच्यते । **नवतिं नाव्याः अनु** अनुशब्दो 'अनुर्लक्षणे' (पा.१,४,८४) इति कर्मप्रवचनीयः प्रतिशब्देन समानार्थः । नवतिम् असुरपुरः प्रति । कीदृशीः । **नाव्याः** नावा तार्याः । सर्वत उदकेन परिक्षिप्ता इत्यर्थः । किञ्च **महत् ते** हे **इन्द्र! वीर्यम्** । **बाह्वोः** च ते **बलं, हितम्** आहितम् । स्वबाहुबलेनैव चासि बलवान् न सहायबलेनेत्यर्थः । कीदृशस्य । उच्यते । **अर्चन्,** ते इत्येतेन षष्ठ्यन्तेन सामानाधिकरण्यात् षष्ठ्यर्थे प्रथमैषा । अर्चतः **अनु स्वराज्यम्** ।।

**वेङ्कटमाधव–** तव आयुधानि व्यतिष्ठन्त नवतिसङ्ख्याः नदीः **अनु** । **महत् ते इन्द्र वीर्यम् बाह्वोः** च तव **बलम्** निहितम् ।। ८ ।।

**मुद्गल–** हे **इन्द्र! ते** तव **वज्रासः** वज्राः त्वत्सकाशान्निर्गतान्यायुधानि **नाव्याः** नावा तार्याः **नवतिं** नवतिसङ्ख्याका वृत्रेण निरुद्धा नदीः **अनु** उपलक्ष्य **वि अस्थिरन्** विविधम् अस्थिषत । सर्वत्र व्याप्य वर्तमानं वृत्रं हन्तुं तव वज्र एकोऽप्यनेक इवासीदित्यर्थः । किञ्च हे **इन्द्र! ते** तव **वीर्यम् महत्** प्रभूतम् । अन्यैरजेयमित्यर्थः । तथा **ते बाह्वोः** त्वदीययोर्हस्तयोः **बलम् हितम्** निहितम् । त्वदीयौ बाहू अप्यतिशयेन बलिनावित्यर्थः । अन्यत् पूर्ववत् ।। ८ ।।

**सायण–** हे **इन्द्र! ते** तव **वज्रासः** वज्राः त्वत्सकाशान्निर्गतान्यायुधानि **नाव्याः** नावा तार्याः **नवतिं** नवतिसङ्ख्याका वृत्रेण निरुद्धा नदीः **अनु** उपलक्ष्य **वि अस्थिरन्** विविधम् अस्थिषत । सर्वत्र व्याप्य वर्तमानं वृत्रं हन्तुं तव वज्र एकोऽप्यनेक इवासीदित्यर्थः । किञ्च हे **इन्द्र! ते** तव **वीर्यं महत्** प्रभूतम् । अन्यैरजेयमित्यर्थः । तथा **ते बाह्वोः** त्वदीययोः हस्तयोः **बलं हितं** निहितम् । त्वदीयौ बाहू अप्यतिशयेन बलिनावित्यर्थः । अन्यत् पूर्ववत् ।। **अस्थिरन्** । तिष्ठतेर्लुङि 'समवप्रविभ्यः स्थः' इत्यात्मनेपदम् । 'मन्त्रे घस..' इति च्लेर्लुक् । 'स्थाघ्वोरिच्च' (पा.सू.१.२.१७) इति इत्वम् । व्यत्ययेन झस्य रनादेशः । **नाव्याः** । 'नौवयोधर्म' (पा.सू.४.४.९१) इत्यादिना यत् । 'यतोऽनावः' इति पर्युदासात् 'तित्स्वरितम्' इति स्वरितत्वम् । **बाह्वोः** 'उदात्तयणः' इति विभक्त्युदात्तत्वम् ।। ८ ।।

**सिद्धाञ्जनम्–** अष्टमीमृचमाह– हे **इन्द्र! ते** तव **वज्रासः** वज्राः । एकोऽपि वज्रः बहुधा भवति प्रयोगस्थलभेदबाहुल्यात् । **नवतिं** नवतिसंख्याकाः । **नाव्याः** नावा तार्याः नदीः, पूर्वं

निरुद्धा अधुना विसृष्टा विपुलाः प्रवाहिणीः **अनु** अनुलक्ष्य **वि अस्थिरन्** विविधमस्थिषत । हे **इन्द्र!** तथाविधं **ते** तव **वीर्यं, बलं महत्** प्रभूतम् । **ते** तव **बाह्वोः** भुजयोः **बलं हितं** निहितम् । शिष्टं समानम् ।। **अस्थिरन्**- 'तिष्ठतेर्लुङ्, 'समवप्रविभ्यः स्थः' इत्यात्मनेपदम् । व्यत्ययेन झस्य रनादेशः ।। ८ ।।

## ऋक्संहिता पदपाठसहिता

**सहस्रं साकमर्चत परि ष्टोभत विंशतिः ।**
**शतैनमन्वनोनवुरिन्द्राय ब्रह्मोद्यतमर्चन्ननु स्वराज्यम् ।। ९ ।।**
**सहस्रम् । साकम् । अर्चत । परि । स्तोभत । विंशतिः । शता । एनम् । अनु । अनोनवुः । इन्द्राय । ब्रह्म । उत्ऽयतम् । अर्चन् । अनु । स्वऽराज्यम् ।। ९ ।।**

**स्कन्द–** हे मदीयाः पुत्रपौत्राः ऋत्विजो वा! **सहस्रं** सहस्रसङ्ख्याकाः सन्तः **साकम्** सह **अर्चत** स्तुत इन्द्रम् । **परिष्टोभत विंशतिः** स्तोभतिरर्चतिकर्मा (तु.निघ.३,१४) । विंशतिसङ्ख्याकाः सन्तः परिष्टुत । सहस्रविंशतिसङ्ख्याभ्यां चात्र सम्भवी सङ्ख्या लक्ष्यते । यावन्तः सम्भवास्तावन्तः स्तुतेत्यर्थः । कस्मात् । उच्यते । **शता एनम् अनु अनोनवुः** बहूनि स्तोतृशतान्येनमिन्द्रमनु स्तुतवन्तः । यस्माच्च मयापि **इन्द्राय** स्तुतिलक्षणं **ब्रह्म उद्यतम्** उपकल्पितम् । कीदृशाय । **अर्चन्** चतुर्थ्यर्थे प्रथमैषा । अर्चते **अनु स्वराज्यम्** । अथवैवमन्यथाऽस्या ऋचोऽर्थयोजना । सहस्रमिति वसुरोचिषो नाम ऋषय इहाभिप्रेताः । कुत एतत्– 'आ यदिन्द्रश्च उद्वहे सहस्रं वसुरोचिषः' (ऋ.८,३४,२६) इति सहस्रसङ्ख्याकत्वस्य तेषां प्रसिद्धत्वात् इन्द्रस्तुतिकरत्वाच्च । **अर्चत परिष्टोभत** इत्येतदपि लङर्थे लोट् । व्यत्ययेन मध्यमपुरुषः । विंशतिरित्यङ्गिरसोऽभिप्रेताः । यद्यपि दशाङ्गिरस इति ऐतिहासिकाः स्मरन्ति, तथापि बृहस्पत्यादिभ्रात्रपेक्षया विंशतिसङ्ख्यावचनम् । सहस्रसङ्ख्याका वसुरोचिषः विंशतिसङ्ख्याकाश्चाङ्गिरसः सहेन्द्रम् अस्तुवन्नित्यर्थः । **शतैनम्** इत्यपि वैखानसा नाम ऋषयोऽभिप्रेताः । ते हि प्रसिद्धशतत्वाः । तथा च शौनकेन वक्ष्यते– 'पवस्वेत्यृषयः सूक्तं शतं वैखानसा विदुः' इति । शतसङ्ख्याकाश्च वैखानसा एनमस्तुवन्नित्यर्थः । अन्यैरपि स्तोतृभिः **इन्द्राय ब्रह्म उद्यतम्** । **अर्चन्ननु स्वराज्यम्** ।।

**वेङ्कटमाधव–** इन्द्रं सहस्रसङ्ख्याकाः सह स्तुत, **परि** गायत विंशतिसङ्ख्याकाः । शतानि स्तोतॄणामेनमिन्द्रम् अतिशयेन **अनु** अस्तुवन् । **इन्द्राय** सर्वे स्तोत्रं, स्तोतृभिः उद्यतम् ।। ९ ।।

**मुद्गल–** **सहस्रं** सहस्रसङ्ख्याका मनुष्याः **साकम् अर्चत** । एनमिन्द्रं युगपदेवापूजयन् । तथा **विंशतिः** षोडशर्त्विजः, यजमानः, पत्नी च सदस्यः शमिता चेति विंशतिसङ्ख्याकाः । तेषां या विंशतिसङ्ख्या सा **परि स्तोभत** परितः सर्वतोऽस्तौत् । तथा च **शता** शतसङ्ख्याका ऋषयः **एनं** इन्द्रम् **अनु अनोनवुः** पुनःपुनरस्तुवन् । अस्मा एव **इन्द्राय ब्रह्म** हविर्लक्षणमन्नम् **उद्यतम्** दातुमूर्ध्वं धृतम् । अत एवंविध इन्द्रो वृत्रमहन्नित्यर्थः । अन्यत् पूर्ववत् ।। ९ ।।

**सायण–** **सहस्रं** सहस्रसङ्ख्याका मनुष्याः **साकम् अर्चत** । एनमिन्द्रं युगपदेवापूजयन् । तथा **विंशतिः** षोडशर्त्विजः, यजमानः, पत्नी च सदस्यः शमिता चेति विंशतिसङ्ख्याकाः । तेषां या विंशतिसङ्ख्या सा **परि स्तोभत** परितः सर्वतोऽस्तौत् । तथा च **शता** शतसङ्ख्याका ऋषयः **एनं** इन्द्रम् **अनु अनोनवुः** पुनःपुनरस्तुवन् । अस्मा एव **इन्द्राय ब्रह्म** हविर्लक्षणमन्नम् **उद्यतम्** दातुमूर्ध्वं धृतम् । अत एवंविध इन्द्रो वृत्रमहन्नित्यर्थः । अन्यत् पूर्ववत् ।। **परिष्टोभत** स्तोभतिः स्तुतिकर्मा । 'उपसर्गात्सुनोति' इति षत्वम् । **अनोनवुः** । 'णु स्तुतौ' अस्मात् यङ्लुगन्तात् लुङि 'सिजभ्यस्तविदिभ्यश्च' इति झेः उसादेशः । **उद्यतम्** 'यम उपरमे' उत्पूर्वाद् अस्मात् कर्मणि निष्ठा । 'अनुदात्तोपदेश..' इत्यादिना अनुनासिकलोपः । 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् ।। ९ ।।

**सिद्धाञ्जनम्–** नवमीमृचमाह– **सहस्रं** बहुसंख्याकाः मनुष्याः **साकम्** सङ्घीभूय युगपत् **एनम्** इन्द्रं **अर्चत** अपूजयन् । तथा **विंशतिः** अल्पसंख्याकसङ्घः, षोडशर्त्विग्यजमानतत्पत्नीसदस्य शमितार इति बाह्ये कर्मपक्षे, तेषां संख्या **परिष्टोभत** सर्वतोऽस्तौत् । तया **शता** शतसंख्याकाः स्तोतार ऋषयः **इन्द्राय** इन्द्रार्थे **उद्यतं** उद्गतं स्वात्मन इति शेषः, **ब्रह्म** मन्त्रम् उच्चारयन्तः **अनु अनोनवुः** निरन्तरं अस्तुवन् । 'अर्चत' ऋग्भिः, 'स्तोभत' सामभिः. 'अनोनवुः' स्तुतिसामान्येन इति द्योतितमवधेयम् । अन्यत् समानम् ।। **परिष्टोभत**- स्तोभतिः स्तुतिकर्मा. उपसर्गात् षकारः सस्य । अनोनवुः 'णु स्तुतौ' यङ्लुगन्ताल्लङि झेरुसादेशः । **उद्यतम्**-'यम उपरमे' कर्मणि निष्ठा ।। ९ ।।

## ऋक्संहिता पदपाठसहिता

**इन्द्रो॑ वृ॒त्रस्य॒ तवि॑षीं॒ निर॑ह॒न्त्सह॑सा॒ सहः॑ ।**
**म॒हत्तद॑स्य॒ पौंस्यं॑ वृ॒त्रं ज॑घ॒न्वाँ अ॑सृज॒दर्च॑न्ननु॑ स्व॒राज्य॑म् ॥ १० ॥**
इन्द्रः॑ । वृ॒त्रस्य॑ । तवि॑षीम् । निः । अ॒ह॒न् । सह॑सा । सहः॑ । म॒हत् । तत् । अ॒स्य॒ । पौंस्य॑म् । वृ॒त्रम् । ज॒घ॒न्वान् । अ॒सृ॒ज॒त् । अर्च॑न् । अनु॑ । स्व॒ऽराज्य॑म् ॥

**स्कन्द– महत् तत् अस्य** इति तच्छब्दाद्यच्छब्दोऽध्याहार्यः । येन **इन्द्रः वृत्रस्य तविषीम्** सेनालक्षणं बलं, **निः अहन्** । **सहसा** बलेन । **सहः** शरीरबलञ्च । **महत्तदस्य पौंस्यम्** । किञ्च **वृत्रम् जघन्वान्** घ्नन्निन्द्रः **असृजत्** सृजति विसृष्टवान् वा । किम् । सामर्थ्याद् वृष्टिलक्षणा अपः । 'अर्चन्' इत्यादि पूर्ववत् ॥ १० ॥

**वेङ्कटमाधव– इन्द्रः वृत्रस्य** बलं, **निः अहन् सहसा** च **सहः** । येन सहते परं तत् सहः । **महत् तत् अस्य** पुंस्त्वम् **वृत्रम्** घ्नन् प्रकाशितवानिन्द्र इति ॥ १० ॥

**मुद्गल– इन्द्रः वृत्रस्य** असुरस्य **तविषीम्** बलं स्वकीयेन बलेन **निः अहन्** हतवान् । **सहसा** सहनेन अभिभवसाधनेनायुधेन **सहः** अभिभवसाधनं वृत्रायुधं **निरहन्** हतवान् । **अस्य** इन्द्रस्य **तत् पौंस्यम्** बलम् **महत्** अतिप्रौढम् । यस्मादयम् **वृत्रम् जघन्वान्** हतवान् हत्वा च तन्निरुद्धा अपः **असृजत्** । तस्माद् वृत्रान्निरगमयत् । अन्यत्पूर्ववत् ॥ १० ॥

**सायण– इन्द्रः वृत्रस्य** असुरस्य **तविषीम्** बलं स्वकीयेन बलेन **निरहन्** हतवान् । **सहसा** सहनेन अभिभवसाधनेनायुधेन **सहः** अभिभवसाधनं वृत्रायुधं **निरहन्** हतवान् । **अस्य** इन्द्रस्य **तत् पौंस्यम्** बलम् **महत्** अतिप्रौढम् । यस्मादयम् **वृत्रम् जघन्वान्** हतवान् हत्वा च तन्निरुद्धा अपः **असृजत्** । तस्माद् वृत्रान्निरगमयत् । अन्यत्पूर्ववत् ॥ **पौंस्यम्** । 'पुंस अभिवर्धने' चुरादिः । 'अचो यत्' इति यत् । 'यतोऽनावः' इत्याद्युदात्तत्वम् । **जघन्वान्** । हन्तेर्लिटः क्वसुः । 'विभाषा गमहनविद' इति इटः विकल्पाद् 'अ'भावः । 'अभ्यासाच्च' इति अभ्यासा-दुत्तरस्य हन्तेर्हकारस्य घत्वम् ॥ १० ॥

**सिद्धाञ्जनम्–** दशमीमृचमाह– **इन्द्रः वृत्रस्य** तेजोबलादिशत्रोरसुरस्य **तविषीम्** बलं **निरहन्** हतवान् । केनोपायेन? **सहसा** स्वीयेन सहनेन अन्याभिभवसाधनेन । वृत्रस्य बलमपि **सहः**

सहनं अभिभवसमर्थम् । **अस्य** इन्द्रस्य **तत् पौंस्यम्** पुरुषलक्षणं बलं **महत्** भूरि । यस्मादयं **वृत्रम्** असुरं **जघन्वान्** हतवान् भूत्वा **असृजत्** निरगमयत् वृत्रात् तन्निरुद्धाः अपः । अन्यत् समानम् ।। **पौंस्यम्**-'पुंस अभिवर्धने' चुरादिः, 'अचो यत्' इति यत् । **जघन्वान्**- हन्तेर्लिटि क्वसुः ।। १० ।।

।। इति प्रथमाष्टके पञ्चमाध्याये त्रिंशो वर्गः ।।

## ।। अथ एकत्रिंशो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

**इमे चित्तव मन्यवे वेपेते भियसा मही ।**
**यदिन्द्र वज्रिन्नोजसा वृत्रं मरुत्वाँ अवधीरर्चन्ननु स्वराज्यम् ।। ११ ।।**
**इमे इति । चित् । तव । मन्यवे । वेपेते इति । भियसा । मही इति ।**
**यत् । इन्द्र । वज्रिन् । ओजसा । वृत्रम् । मरुत्वान् । अवधीः । अर्चन् । अनु । स्वऽराज्यम् ।।**

**स्कन्द–** **इमे चित्** अपि **तव मन्यवे** 'मन्युः' (निघ.२,१३) इति क्रोधनाम । **भियसा** इत्येतेन चास्य सम्बन्धः । तत्र च 'भीत्रार्थानाम्' (पा.१,४,३५) इत्यपादानत्वात् पञ्चम्यर्थे चतुर्थ्येषा । क्रोधात् भयेन **वेपेते** कम्पेते । **मही** द्यावापृथिवीनामैतत् (तु.निघ.३,३०) । द्यावापृथिव्यौ । इमे अपि द्यावापृथिव्यौ भवतः क्रुद्धात् बिभ्यत्यौ कम्पेते । किं पुनरन्ये प्राणिन इत्यर्थः । कदा । उच्यते । **यत्** यदा हे **इन्द्र! वज्रिन्! ओजसा वृत्रम् मरुत्वान्** मरुद्भिः सहितः **अवधीः** । **अर्चन् अनु स्वराज्यम्** ।। ११ ।।

**वेङ्कटमाधव–** द्यावापृथिव्यौ **तव** क्रोधाय भयेन कम्पेते । **यत्** त्वम् **इन्द्र! वज्रिन्!** बलेन **वृत्रम्** असुरम् मरुद्भिः सह **अवधीः** ।। ११ ।।

**मुद्गल–** **मही चित्** महत्यौ **इमे** द्यावापृथिव्यावपि हे **इन्द्र! तव मन्यवे** त्वदीयकोपात् **भियसा** भीत्या **वेपेते** कम्पेते । हे **वज्रिन्** वज्रवन्! **इन्द्र! मरुत्वान्** मरुद्भिर्युक्तस्त्वम् **ओजसा** बलेन **यत्** यदा **वृत्रम् अवधीः**, तदानीं द्यावापृथिव्यावपि भयेनाकम्पिषातामित्यर्थः ।।११।।

**सायण–** **मही** महत्यौ **इमे** द्यावापृथिव्यावपि हे इन्द्र! **तव मन्यवे** त्वदीयकोपात् **भियसा**

भीत्या **वेपेते** कम्पेते । हे **वज्रिन्** वज्रवन् **इन्द्र! मरुत्वान्** मरुद्भिर्युक्तस्त्वम् **ओजसा** बलेन **यत्** यदा **वृत्रम् अवधीः** तदानीं द्यावापृथिव्यावपि भयेनाकम्पिषातामित्यर्थः ।। **वेपेते** 'टुवेपृ कम्पने'। **भियसा** 'ञिभी भये' औणादिकः कसिप्रत्ययः ।। ११ ।।

**सिद्धाञ्जनम्**– एकादशीमृचमाह– **मही** महत्यौ **इमे चित्** द्यौः पृथिवी चोभे अपि हे इन्द्र! **तव मन्यवे** त्वदीयक्रोधात्, पञ्चम्यर्थे चतुर्थी । **भियसा** भयेन **वेपेते** कम्पेते। हे **वज्रिन्** वज्रवन् **इन्द्र! मरुत्वान्** मरुद्युक्तस्त्वं **ओजसा** बलेन **यत्** यदा **वृत्रम्** असुरम्, **अवधीः** तदा द्यावापृथिव्यावकम्पिषातामिति पूर्वेण योजनीयम् । अन्यत्समानम् । **वेपेते**-'टुवेपृ कम्पने' । **भियसा** 'ञिभी भये' औणादिकः कसिप्रत्ययः ।। ११ ।।

## ऋक्संहिता पदपाठसहिता

**न वेप॑सा॒ न त॑न्य॒तेन्द्रं॑ वृ॒त्रो वि बी॑भयत् ।**
**अ॒भ्ये॑नं॒ वज्र॑ आ॒यसः॑ स॒हस्र॑भृष्टिराय॒तार्च॒न्ननु॑ स्व॒राज्य॑म् ।। १२ ।।**
**न । वेप॑सा । न । त॒न्य॒ता । इन्द्र॑म् । वृ॒त्रः । वि । बी॒भ॒य॒त् । अ॒भि । ए॒न॒म् । वज्रः॑ । आ॒य॒सः । स॒हस्र॑ऽभृष्टिः । आ॒य॒त॒ । अर्च॑न् । अनु॑ । स्व॒ऽराज्य॑म् ।। १२ ।।**

**स्कन्द– न वेपसा** 'वेपः' (निघ.२,१) इति कर्मनाम । प्रत्युद्धरणादिना । **न** अपि **तन्यता** स्तनयित्नुलक्षणेन शब्देन । **इन्द्रं वृत्रः वि बीभयत्** भायितवान्, किं तर्हि अभीते नेन्द्रेण क्षिप्तः **एनम्** वृत्रम् **वज्रः आयसः** लोहमयः गमनशीलो वा । **सहस्रभृष्टिः** भृष्टिरश्रिरुच्यते । सहस्राश्रिः । **आयत** अभिगतः प्राप्तः । अभीत इन्द्रो वज्रं क्षिप्तवानेवेत्यर्थः । **अर्चन् अनु स्वराज्यम्'** इत्येतत्तु वज्रस्य विशेषणम् । यच्चेन्द्रस्य स्वराज्यार्चनं तत् तत्सम्बन्धिनो वज्रस्योपर्चयते । अथवा अर्चन्निति षष्ठ्यर्थे प्रथमा । अर्चतः स्वराज्यमिन्द्रस्य स्वभूतो वज्र इति ।। १२ ।।

**वेङ्कटमाधव– न** वेपेन न च गर्जितशब्देन **इन्द्रं वृत्रः** बिभीतम् अकरोत् । वृत्रं तु **वज्रः** इन्द्रविसृष्टः सहस्रधारः अभ्यगच्छत् अयोमयः ।। १२ ।।

**मुद्गल– वृत्रः** इन्द्रं, **वेपसा** स्वकीयेन वेपनेन कम्पनेन **न वि बीभयत्** भीतं नाकरोत् । तथा **तन्यता** स्वकार्येन घोरेण गर्जनशब्देन **न वि बीभयत्** । अपि च इन्द्रेण विसृष्टः **आयसः**

अयोमयः **सहस्रभृष्टिः** अनेकाभिर्धाराभिर्युक्तः वज्रः **एनम्** वृत्रम् **अभि आयत** हन्तुमाभि मुख्येनागच्छत् । अन्यत् पूर्ववत् ।। १२ ।।

**सायण–** **वृत्रः इन्द्रं, वेपसा** स्वकीयेन वेपनेन कम्पनेन **न वि बीभयत्** भीतं नाकरोत् । तथा **तन्यता** स्वकार्येन घोरेण गर्जनशब्देन **न वि बीभयत्** । अपि च इन्द्रेण विसृष्टः **आयसः** अयोमयः **सहस्रभृष्टिः** अनेकाभिर्धाराभिर्युक्तः वज्रः **एनम्** वृत्रम् **अभि आयत** हन्तुमाभि मुख्येनागच्छत् । अन्यत् पूर्ववत् ।। **तन्यता** 'स्तन शब्दे'। 'ऋतन्यञ्जि' इत्यादिना तनोतेर्विधीयमानो यतुच् बहुलवचनाद् अस्मादपि भवति । अत एव सलोपश्च । 'सुपां सुलुक्' इति तृतीयाया डादेशः । उदात्तनिवृत्ति स्वरेण तस्योदात्तत्त्वम् । **बीभयत्** 'ञिभी भये' हेतुमति णिच् । अत्र वेपस्तन्यतुभ्यां भयं न हेतोर्वृत्रादिति हेतुभयाभावात् 'बिभेतेर्हेतुभये' (पा.सू. ६.१.५६) इति आत्वाभावः। ण्यन्तात् लुङि च्लेश्चङादि । **आयत** 'अय पय गतौ' भौवादिरात्मनेपदी ।। १२ ।।

**सिद्धाञ्जनम्–** द्वादशीमृचमाह– **वृत्रः** असुरः **इन्द्रम्** दिवस्पतिं **वेपसा** कम्पनेन **न विबीभयत्** भीतं नाकरोत्, तथा **न तन्यता** गर्जितेन **न विबीभयत्** किन्तु **आयसः** अयोमयः **सहस्रभृष्टिः** बहुधाराभिर्युक्तः **वज्रः** इन्द्रविसृष्टः एनं वृत्रं **अभ्यायत** आभिमुख्येनागच्छत् हन्तुम् । शिष्टं समानम् । **तन्यता**- 'स्तन शब्दे' सलोपः, तृतीयाया डादेशः । **बीभयत्** बिभेतेः ण्यन्ताल्लुङ् । **आयत**- 'अय पय गतौ' लङ्, आत्मनेपदी ।। १२ ।।

## ऋक्संहिता पदपाठसहिता

**यद्वृत्रं तव॑ चाश॒निं॑ वज्रे॑ण स॒मयो॑धयः ।**
**अहि॑मिन्द्र॒ जिघां॑सतो दि॒वि ते॑ बद्बधे॒ शवोऽर्च॒न्ननु॑ स्व॒राज्य॑म् ।। १३ ।।**
**यत् । वृ॒त्रम् । तव॑ । च॒ । अ॒शनि॑म् । वज्रे॑ण । स॒म्ऽअयो॑धयः । अहि॑म् । इ॒न्द्र॒ । जिघां॑सतः । दि॒वि । ते॒ । ब॒द्ब॒धे॒ । शव॑ः । अर्च॑न् । अनु॑ । स्व॒ऽराज्य॑म् ।। १३ ।।**

**स्कन्द– यद् वृत्रम्** यदा वृत्रम् **तव अशनिम्** । **वज्रेण,** अशनिः शक्तिरिहोच्यते । तवेत्येतेन च व्यवहितोऽपि वज्रो विशेष्यते नाशनिः । कुत एतत् । वज्रेण योधनासम्भवात् इन्द्राशनेः । चशब्दश्च 'अशनिम्' इत्येतस्मात्परो द्रष्टव्यः । वृत्रमशनिश्च तदीयां तव स्वभूतेन

वज्रेण त्वमेव **समयोधयः** सम्यक् योधितवान् । हतवानित्यर्थः । अथवा तवेत्येतेनाशनिरेव विशेष्यते । अशनिमिति तु तृतीयार्थे द्वितीया । यदा वृत्रं स्वभूतया अशन्या वज्रेण च त्वमेव समयोधय इति । यदेति वचनात्तत इत्यध्याहार्यम् । ततः प्रभृति **अहिम्** हे **इन्द्र! जिघांसतः** नित्यमेव हन्तुमिच्छतः **दिवि ते, बद्बधे** 'बध बन्धने' । आबबन्ध । दिवं यावत् प्रख्याततां गतमित्यर्थः । किं तत् । उच्यते । **शवः** बलम् । **अर्चन्** इति तु शवसो विशेषणम् इन्द्रस्य वा । यदि शवसः ततो व्यत्ययेन पुल्लिङ्गत्वम् । 'स्वराज्यम् अर्चच्छवः' इति । अथेन्द्रस्य ततः षष्ठ्यर्थे प्रथमा । **स्वराज्यं** इच्छतस्तव शव इति ।। १३ ।।

**वेङ्कटमाधव– यद् वृत्रम्** वृत्रेण त्वदर्थं विसृष्टाम् **अशनिम् च** तव **वज्रेण** सह **अयोधयः** तदा **अहिम्** हन्तुमिच्छतः तव अन्तरिक्षे बद्धमासीद् बलम् । प्रसिद्धमभूत् इति ।। १३ ।।

**मुद्गल–** हे **इन्द्र! यत्** यदा **वृत्रम्** तव हननार्थं तेन सृष्टाम् **अशनिम्** च त्वम् **वज्रेण समयोधयः** सम्यक् प्राहार्षीः तदानीम् **अहिम्** आगत्य हन्तारं वृत्रम् **जिघांसतः** हन्तुमिच्छतः **ते** तव **शवः** बलम् **दिवि** बद्बधे बद्धम् अनुस्यूतं व्याप्तमासीत् । शिष्टं पूर्ववत् ।। १३ ।।

**सायण–** हे **इन्द्र! यत्** यदा **वृत्रम्** तव हननार्थं तेन सृष्टाम् **अशनिम्** च त्वम् **वज्रेण समयोधयः** सम्यक् प्राहार्षीः तदानीम् **अहिम्** आगत्य हन्तारं वृत्रम् **जिघांसतः** हन्तुमिच्छतः **ते** तव **शवः** बलम् **दिवि** बद्बधे बद्धम् अनुस्यूतं व्याप्तमासीत् ।। जिघांसतः । हन्तेरिच्छार्थे सनि 'अज्झनगमां सनि' (पा.सू.६.४.१६) इति उपधादीर्घत्वम् । **बद्बधे** 'बध बन्धने' कर्मणि लिटि व्यत्ययेन हलादिशेषाभावः ।। १३ ।।

**सिद्धाञ्जनम्–** त्रयोदशीमृचमाह– हे **इन्द्र! यत्** यदा **वृत्रम् अशनिम् च** तदीयं वज्रं च, वज्रोपमं तन्मायया सृष्टमायुधं च **तव** त्वदीयेन **वज्रेण** विश्रुतेनायुधेन **समयोधयः** सम्यक् प्राहार्षीः, तदा **अहिम्** वृत्रं **जिघांसतः** हन्तुमिच्छतः **ते** तव **शवः** ज्वलितं बलं **दिवि** द्युलोके **बद्बधे** बद्धं स्थैर्येणावस्थितं बभूव, निष्प्रकम्पं ध्रुवम् अतिष्ठदित्यर्थः । शिष्टं पूर्ववत् ।। **बद्बधे**- 'बध बन्धने' कर्मणि लिट्, व्यत्ययेन हलादिशेषाभावः ।। १३ ।।

## ऋक्संहिता पदपाठसहिता

**अभिष्टने तें अद्रिवो यत्स्था जगच्च रेजते ।**
**त्वष्टां चित्तव मन्यव इन्द्र वेविज्यतें भियार्चन्ननु स्वराज्यम् ॥ १४ ॥**
**अभिऽस्तने । ते । अद्रिऽवः । यत् । स्थाः । जगत् । च । रेजते । त्वष्टा । चित् । तव मन्यवें । इन्द्र । वेविज्यतें । भिया । अर्चन् । अनु । स्वऽराज्यम् ॥**

**स्कन्द– अभिष्टने** अभिष्टनः स्तनयित्नुशब्दः । सप्तमी चात्र 'यस्य च भावेन' (पा.२,३,३७) इत्येवं द्रष्टव्या । तच्छ्रुतेश्च लक्षणभूतयोग्यक्रियापदाध्याहारः । स्तनयित्नुशब्दे प्रवृत्ते । **ते** तव स्वभूते हे **अद्रिवः!** अद्रिविकारत्वादद्रिर्वज्रः, तद्वन्! **यत् स्थाः** यच्छब्दात् तच्छब्दोऽध्याहार्यः यत् स्थावरं तच्च । **जगत् च** जङ्गमं च । **रेजते** बिभेति भयेन वा कम्पते । न च केवलं स्थावरं जङ्गमं च । किं तर्हि । **त्वष्टा** अपि **तव मन्यवे** मन्योः क्रोधात् हे **इन्द्र! वेविज्यते** 'विजी भयचलनयोः' अत्यर्थं चलति । कम्पत इत्यर्थः । **भिया** भयेन । त्वष्टृग्रहणं चात्र सर्वेषां देवानां प्रदर्शनार्थं द्रष्टव्यम् । देवा अपि तव क्रोधात् भयेनात्यर्थं कम्पन्त इत्यर्थः । **अर्चन्** अर्चतः **अनु स्वराज्यम्** ॥ १४ ॥

**वेङ्कटमाधव–** सिंहनादे ते वज्रिन्! **यत्** स्थावरं तत् **रेजते**, जङ्गमं च कम्पते । **त्वष्टा** च **तव** क्रोधाय कम्पते भयेन अनिन्द्रं सोमम् आहरन् इति ॥ १४ ॥

**मुद्गल–** हे **अद्रिवः** वज्रवन् इन्द्र! **ते** तव **अभिष्टने** सिंहनादे सति **स्थाः** स्थावरम् **जगत्** जङ्गमम् **च यत्** अस्ति तदुभयम् **रेजते** कम्पते । **त्वष्टा चित्** वज्रनिर्माता त्वष्टा च **तव मन्यवे** त्वदीयाय कोपाय **भिया** भीत्या **वेविज्यते** भृशं कम्पते । अन्यत् समानम् ॥१४॥

**सायण–** हे **अद्रिवः** वज्रवन् इन्द्र! **ते** तव **अभिष्टने** सिंहनादे सति **स्थाः** स्थावरम् **जगत्** जङ्गमम् **च यत्** अस्ति तदुभयम् **रेजते** कम्पते । **त्वष्टा चित्** वज्रनिर्माता त्वष्टा **च तव मन्यवे** त्वदीयाय कोपाय **भिया** भीत्या **वेविज्यते** भृशं कम्पते । अन्यत्समानम् ॥ **स्थाः** तिष्ठतेः 'क्विप् च' इति क्विप् । **वेविज्यते** । 'ओविजी भयचलनयोः' अस्मात् क्रियासमभिहारे यङ् । 'सन्यङोः' इति द्विर्भावः । अदुपदेशात् लसार्वधातुकानुदात्तत्वे यङ एव स्वरः शिष्यते । इन्द्रेत्यस्य पादादौ वर्तमानस्य 'आमन्त्रितं पूर्वमविद्यमानवत्' इति अविद्यमानवत्त्वे सति अस्य पादादित्वात् 'अपादादौ' इति पर्युदासात् निघाताभावः ॥ १४ ॥

**सिद्धाञ्जनम्–** चतुर्दशीमृचमाह– हे **अद्रिवः** वज्रवन्! **ते** तव **अभिष्टने** सिंहगर्जितनादे वर्तमाने । **स्थाः** स्थावरं **जगत् च यत्** चराचरमुभयमपि **रेजते** कम्पते । हे **इन्द्र त्वष्टा चित्** विश्वकर्मापि वज्रायुधस्यापि निर्माता सोऽपि **तव मन्यवे** कोपात् **भिया** भीत्या **वेविज्यते** अतितरां कम्पते । शिष्टं पूर्ववत् ।। **स्थाः** तिष्ठतेः क्विप् । **वेविज्यते** 'ओविजी भयचलनयोः' अस्मात् क्रियासमाभिहारे यङ्, 'सन्यङोः' इति द्विर्भावः ।। १४ ।।

## ऋक्संहिता पदपाठसहिता

**नहि नु यादधीमसीन्द्रं को वीर्या परः ।**
**तस्मिन्नृम्णमुत क्रतुं देवा ओजांसि सं दधुरर्चन्ननु स्वराज्यम् ।। १५ ।।**
**नहि । नु । यात् । अधिऽइमसि । इन्द्रम् । कः । वीर्या । परः । तस्मिन् । नृम्णम् । उत । क्रतुम् । देवाः । ओजांसि । सम् । दधुः । अर्चन् । अनु । स्वऽराज्यम् ।।१५।।**

**स्कन्द– नहि** इति निपातो न इत्यनेन समानार्थः । **नु** इति पदपूरणः । न वयम् **यात्** व्यत्ययेनात्र नपुंसकता, द्वितीयायाश्च स्थाने प्रथमा । यान्तम् इन्द्रं कञ्चिच्छत्रुम् **अधीमसि** अधिगच्छामः । सर्वशत्रूणामुपरि इन्द्रः याता । न कश्चिदिन्द्रस्योपरि गन्तुं समर्थ इत्यर्थः । वधार्थो वात्र यातिः । 'अहेर्यातारम्' (ऋ.१,३२,१४) इति यथा । कञ्चिदिन्द्रस्य हन्तारम् अधिगच्छाम इत्यर्थः । कस्मात् । उच्यते । यस्मात् **इन्द्रम्** पञ्चम्यर्थे द्वितीयैषा, इन्द्रात् । कः, **वीर्या** वीर्येण **परः** उत्कृष्टः । यस्माच्च **तस्मिन्** इन्द्रे **नृम्णम्** धनम् **उत क्रतुम्** प्रज्ञाम् **देवाः ओजांसि** मरुदादिसेनालक्षणानि बलानि **सम् दधुः** सम्यक् निहितवन्तः । **अर्चन् अनु स्वराज्यम्** । यस्मात् इन्द्रः सर्वतो वीर्येणोत्कृष्टः धनप्रज्ञासेनाबलैश्चोपेत इत्यर्थः ।। १५ ।।

**वेङ्कटमाधव– नहि** वयम् इतस्ततः यान्तः अधिगच्छामः जानीमः **इन्द्रम् कः वीर्येण** तरतीति । **तस्मिन्** इन्द्रे धनमपि च प्रज्ञानम् **देवाः** बलानि च सह निहितवन्तः ।।१५।।

**मुद्गल– यात्** यान्तं सर्वत्र व्याप्यमानमिन्द्रम् । **नहि नु अधिमसि** वयं न ह्यवगच्छामः । यतो वयमल्पाः । **परः** परस्तात् अतिदूरे मनुष्यैरनवगाह्ये स्थाने **वीर्या** वीर्येण सामर्थ्येन वर्तमानम् **इन्द्रम् कः** मनुष्यो जानीयात् । न कोऽपीत्यर्थः । कस्मादिति चेत् तत्राह– **तस्मिन्** इति । यस्मात् **तस्मिन्** इन्द्रे **देवाः नृम्णम्** धनम् **उत** अपि च **क्रतुम्** वीर्यकर्म **ओजांसि** बलानि च **सम् दधुः** स्थापयाञ्चक्रुः, तस्मादित्यर्थः ।। १५ ।।

**सायण– यात्** यान्तं सर्वत्र व्याप्यमानमिन्द्रम् । **नहि नु अधिमसि** वयं न ह्यवगच्छामः । यतो वयमल्पाः । **परः** इत्येतत्सकारान्तम् अव्ययं वैदूर्यमाचष्टे । 'परो दिवा पर एना' (ऋ.मं.१०.८२.५) इति यथा । **परः** परस्तात् अतिदूरे मनुष्यैरनवगाह्ये स्थाने **वीर्या** वीर्येण सामर्थ्येन वर्तमानम् **इन्द्रम् कः** मनुष्यो जानीयात् । न कोऽपीत्यर्थः । कस्मादिति चेत् तत्राह– **तस्मिन्** इति । यस्मात् **तस्मिन्** इन्द्रे **देवाः नृम्णम्** धनम् **उत** अपि च **क्रतुम्** वीर्यकर्म **ओजांसि** बलानि च **सम् दधुः** स्थापयाञ्चक्रुः, तस्मादित्यर्थः ।।

**यात्** 'या प्रापणे' अस्मान् लटः शतृ । 'सुपां सुलुक्' इति द्वितीयाया लुक् । **अधीमसि** 'इण् गतौ' इदन्तो मसिः । **वीर्या** 'सुपां सुलुक्' इति तृतीयाया आकारः ।। १५ ।।

**सिद्धाञ्जनम्–** पञ्चदशीमृचमाह– **यात्** यान्तं सर्वत्र गच्छन्तं व्यापकं **इन्द्रम् नहि नु अधिमसि** न ह्यवगच्छामः । तत्र हेतुमाह– **वीर्या** वीर्येण पराक्रमेण **परः** परस्ताद् अतिदूरे (परस् इति सकारान्तमव्ययम्) वर्तमानं तं **कः** को वा जानीयात् । अथ च **तस्मिन्** इन्द्रे **देवाः** सर्वेऽपि **नृम्णम्** नेतृत्वबलं **उत क्रतुम्** क्रियादक्षम् अध्यवसायबलं च **ओजांसि** वीर्यबलानि च **सन्दधुः** स्थापयामासुः । शिष्टं समानम् ।। **यात्** 'या प्रापणे' अस्माल्लटः शतृ, द्वितीयाया लुक् । **अधीमसि** 'इण् गतौ' इदन्तो मसिः । **वीर्या** 'सुपां सुलुक्' इति तृतीयाया आकारः ।।

## ऋक्संहिता पदपाठसहिता

**यामथर्वा मनुष्पिता दध्यङ् धियमत्नत ।**
**तस्मिन्ब्रह्माणि पूर्वथेन्द्र उक्था समग्मतार्चन्ननु स्वराज्यम् ।। १६ ।।**
याम् । अथर्वा । मनुः । पिता । दध्यङ् । धियम् । अत्नत । तस्मिन् । ब्रह्माणि । पूर्वऽथा । इन्द्रे । उक्था । सम् । अग्मत । अर्चन् । अनु । स्वऽराज्यम् ।। १६ ।।

**स्कन्द– याम् अथर्वा** नाम ऋषिः **मनुः** च **पिता** । कस्य । सामर्थ्यात् मानवानाम् । **दध्यङ् धियं** यागाख्यं कर्म **अत्नत** ततवन्तः कृतवन्तः इत्यर्थः । **तस्मिन्** स्त्रीलिङ्गधीप्रतिनिर्देशार्थत्वाद् व्यत्ययेनात्र पुल्लिङ्गता, तस्याम् । **ब्रह्माणि** हविर्लक्षणान्यन्नानि । **पूर्वथा** पूर्वकर्मस्विव । **इन्द्रे उक्था** स्तोत्राणि च **समग्मत** सङ्गतान्यभूवन् । कीदृशे इन्द्रे । उच्यते । **अर्चन् अनु स्वराज्यम्** । अथवा अथर्वादीनामपि महर्षीणां यागेषु हवींषि स्तोत्राणि च केवलेन्द्रविषयाण्यासन्, किं पुनरस्मद्विधानामिति समस्तार्थः ।।

वलभीविनिवास्येतामृगर्थागमसंहृतिम् ।
भर्तृध्रुवसुतश्चक्रे स्कन्दस्वामी यथामति ।।

**।। इति भर्तृध्रुवसुतस्य स्कन्दस्वामिनः कृतौ ऋग्वेदभाष्ये पञ्चमोऽध्यायः ।। १६ ।।**

**वेङ्कटमाधव– याम् अथर्वा मनुः** च **पिता** मानवानाम् । **दध्यङ्** च **धियम्** अतनिषत । **तस्मिन्** सर्वस्मिन् कर्मणि पूर्वेषामिव यज्ञेषु **इन्द्रे** स्तोत्रशस्त्राणि समगच्छन्त । **अर्चन्** योऽनूपास्ते **स्वराज्यम्** इति ।।

इति पञ्चममध्यायं व्याकरोत् प्रथमेऽष्टके ।
लोहितस्य कुले जातो माधवो वेङ्कटात्मजः ।। १६ ।।

**।। इति वेङ्कटमाधवाचार्यविरचिते ऋक्संहिताव्याख्याने प्रथमाष्टके पञ्चमोऽध्यायः ।।**

**मुद्गल– अथर्वा** एतत्संज्ञक ऋषिः । **पिता** सर्वासां प्रजानां पितृभूतः **मनुः** च **दध्यङ्** अथर्वणः पुत्रः एतत्संज्ञक ऋषिश्च **याम् धियम्** यत्कर्म **अत्नत** अकुर्वन् **तस्मिन्** कर्मणि यानि **ब्रह्माणि** हविर्लक्षणान्यन्नानि **उक्था** शस्त्ररूपाणि स्तोत्राणि च यानि सन्ति तानि सर्वाणि तस्मिन् इन्द्रे **समग्मत** समागच्छन्त । दृष्टान्तः– **पूर्वथा** पूर्वेषामन्येषां वसिष्ठादीनां यज्ञेषु यथा हवींषि स्तोत्राणि चेन्द्रेण सङ्गच्छन्ते तद्वत् । य इन्द्रः **स्वराज्यम्** स्वस्य राजत्वम् **अनु अर्चन्** अनुपूजयन् । वृत्रवधादिरूपेण कर्मणा स्वकीयम् अधिपतित्वं प्रकटयन्नित्यर्थः ।। १६ ।।

**सायण– अथर्वा** एतत्संज्ञक ऋषिः । **पिता** सर्वासां प्रजानां पितृभूतः **मनुः** च **दध्यङ्** अथर्वणः पुत्रः एतत्संज्ञक ऋषिश्च **याम् धियम् अत्नत** यत्कर्मातन्वत अकुर्वन् **तस्मिन्** कर्मणि यानि **ब्रह्माणि** हविर्लक्षणान्यन्नानि **उक्था** शस्त्ररूपाणि स्तोत्राणि च यानि सन्ति तानि सर्वाणि तस्मिन् इन्द्रे **समग्मत** समागच्छन्त । तत्र दृष्टान्तः– **पूर्वथा** पूर्वेषाम् अन्येषां वसिष्ठादीनां यज्ञेषु यथा हवींषि स्तोत्राणि चेन्द्रेण सङ्गच्छन्ते तद्वत् । य इन्द्रः **स्वराज्यम्** स्वस्य राजत्वम् **अनु अर्चन्** अनुपूजयन् । वृत्रवधादिरूपेण कर्मणा स्वकीयम् अधिपतित्वं प्रकटयन्नित्यर्थः ।।

**अत्नत** 'तनु विस्तारे' 'बहुलं छन्दसि' इति विकरणस्य लुक् । 'तनिपत्योश्छन्दसि' इति उपधालोपः । **पूर्वथा** 'प्रत्नपूर्वविश्वेमात्थाल् छन्दसि' (पा.सू.५.३.१११) इति इवार्थे पूर्वशब्दात्

थाल्प्रत्ययः । लित्स्वरेण प्रत्ययात्पूर्वस्योदात्तत्वम् । **उक्था** । 'शेश्छन्दसि बहुलम्' इति शेर्लोपः । **समग्मत** । 'समो गम्यृच्छिभ्याम्' इति आत्मनेपदम् । लुङि 'मन्त्रे घस' इति च्लेर्लुक् । 'गमहन' इत्यादिना उपधाया लोपः ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ १६ ॥

**॥ इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये प्रथमाष्टके पञ्चमोऽध्यायः समाप्तः ॥**

**सिद्धाञ्जनम्–** षोडशीमृचमाह– **अथर्वा** एतत्संज्ञक आङ्गिरस ऋषिः येनादौ पुष्कराद् अग्निर्निर्मथ्य सम्पादित इत्यन्यो मन्त्रवर्णो वर्णयति । अस्य रहस्यं तत्त्वं पुरस्तादन्यत्र विचार्यते । **पिता** सर्वासां प्रजानां पूर्वः पितृभूतः **मनुः, दध्यङ्** अयमाथर्वणः पूर्वः, अस्यापि तत्त्वं पुरस्ताद्विचार्यते । एते पूर्वे **याम् धियम्** धारणात्मिकां इन्द्राराधनविषयिकां याज्ञिकीं प्रज्ञां **अत्नत** अतन्वत विस्तारितवन्तः । आपन्नविस्ताराम् अकुर्वन्नित्यर्थः । तया धिया, तयेति अध्याहार्यं यत्तदोर्नित्यसम्बन्धात् । **तस्मिन् इन्द्रे** दिवस्पतौ **ब्रह्माणि** अस्माकं मन्त्रात्मकस्तोत्राणि **उक्था** उक्थानि शस्त्ररूपस्तोत्राणि सर्वाणि **पूर्वथा** पूर्वमिव पूर्वेषां ऋषीणां ब्रह्माणीव अधुनापि **समग्मत** समगच्छन्त । इन्द्रेण सर्वाणि ब्रह्माणि उक्थानि च सङ्गच्छन्ते । **अर्चन्ननु स्वराज्यम्** पूर्ववत् ॥ **अत्नत**-'तनु विस्तारे' विकरणस्य लुक्, उपधालोपश्छन्दसि । **पूर्वथा**-इवार्थे पूर्वशब्दात् थाल्प्रत्ययः । **समग्मत**-'समो गम्यृच्छी'त्यात्मनेपदम्, लुङ, 'गमहने'त्यादिना उपधालोपः ॥ १६ ॥

**॥ इति प्रथमाष्टके पञ्चमाध्याये एकत्रिंशो वर्गः ॥**

**॥ इति ऋग्वेदे सभाष्ये प्रथमाष्टके पञ्चमोऽध्यायः समाप्तः ॥**

‘यो हि सात्त्विकप्रकृतिर्लोकप्रवादात् कार्यत्वादिलिङ्गानुसन्धानाद्वा स्वतनुभवनादेः कर्तारं सामान्यतो जानन् स्नेहमाहात्म्यज्ञानाभ्यां तद्विशेषज्ञानार्थमुत्कण्ठितमानसस्तत्संस्कारवशाच्चान्यदगणयन् वर्तते तं प्रत्याप्तो बन्धुरिवायं समस्तो वेदस्तत्स्वरूपं स्वप्राधानमेव प्रतिपादयति । ततो वाक्यार्थज्ञानादवाप्तपरमानन्दस्तत्साक्षात्कारं कामयते । तं प्रति तदुपासना विधीयते । सा च प्रक्षीणान्तःकरणमलस्यैव सम्भवतीति तदर्थं कर्मविधयः । अथवा यः सांसारिकविविधदुःखं जिहासुः परमानन्दं च प्रेप्सुस्तत्साधनं जिज्ञासते, तं प्रति परमेश्वर एव प्रसन्नः परमेष्टसाधनतयोपदिश्यते । ततः कथमसौ प्रतीदतीत्यपेक्षायां तत्साक्षात्कारस्तदङ्गतया कर्माणीत्युभयथा स्वप्रधान एव परमेश्वरो वेदार्थः’ ।

तदेतद्वैदिकं महातात्पर्यं श्रीमदानन्दतीर्थकृतभाष्याधीत्यैव ज्ञायते । भाष्यश्चानन्दतीर्थीयं श्रीमज्जयतीर्थकृतटीकासहायेनैव परिज्ञाततात्पर्यं भवतीति विदितमेव विपश्चिदपश्चिमानाम् ।